# ग्रन्थकर्तृविषये परिचयः.



यदा कर्मसृष्टिप्रारम्भो भवति ततः प्रभृति तीर्थकरोत्पादोपि यथासमयं क्रमतो भवन् तत्कालावसानपर्यन्ते भवति । ते च तीर्थकराः सर्वे चतुर्विंशतिसंख्याका एव भवन्ति । कर्मसृष्टिविगमानन्तरं पुनः कर्मसृष्टिप्रारम्भतस्तदवसानान्ते ते तथैव पुनः प्रादुर्भवन्ति । एवं सार्वकालिकोयं नियमोस्ति । अद्यपर्यन्तमनादितोनन्ताः कर्मसृष्टीना प्रादुर्भावविगमा जाता[1], कालस्यानाद्यनन्तत्वात् । तत एव तीर्थकरा अप्यनादित एव सभवन्ति, ते चानन्ता अद्यपर्यन्तमात्मशुद्धिं विधाय परिनिर्वृत्ता आसन् । अग्रे च सर्वदा तथैवान्येन्ये नवीनास्तीर्थकराः यथासमयं प्रादुर्भविष्यन्ति आत्मशुद्धिं विधाय परिनिर्वास्यन्ति च, कर्मबद्धजीवराशेः कर्मसृष्टिविगमोत्पादाना चाक्षयानन्तप्रमाणत्वात् । एते तीर्थकरा एव सन्मार्गं सत्पदार्थस्वरूपं च केवलज्ञानबलात्स्वय ज्ञात्वा लोकानुपदिशन्ति । वर्तमानकालेपि उक्तक्रमेण तावन्त एव तीर्थकरा आसन् । यथा खलु तीर्थकराः सर्वविषयकमात्मोत्थं प्रत्यक्षं ज्ञानं लब्ध्वा लोकानुपदिशन्ति तत्त्वनिर्धारणं च कुर्वन्ति तथैवाल्पज्ञेषु केचन ये विशिष्टयुक्त्यादिज्ञानवन्तस्तेपि स्वज्ञानकल्पनया तर्कानुसारेण वा तत्त्वनिर्धारणं सन्मार्गप्रकाशनं च कुर्वन्ति । तेषामुभयप्रकारकाणामपि महात्मनां सममेव यथाप्रज्ञं स्वस्वमतप्रकाशनं भवेत्, न तत्र किंचिद्बाधकं सभवति, प्रत्युत एकं किंचिदपूर्वमिव कार्यं कुर्वन्तं दृष्ट्वा तदितरस्य तथा प्रवर्तने लोकस्वभावोनुकूलयति, लोकानां गतानुगतिकत्वात् ।

वर्तमानेपि युगे तथैवासीत् । यदा युगादौ भगवानृषभोऽवतीर्य लोकानुपदिदेश तदैवान्येपि बहवो विशिष्टप्रज्ञावन्त उपदेष्टुं स्वस्वमतं स्थापयितुं चारेभिरे । इति तदैव स्वल्पकालस्य पौर्वापर्येण बहूनां दर्शनाना मतानां च प्रादुर्भावो जातः । तेष्वेव प्रसिद्धानि दर्शनानि आर्हतबौद्धयौगवैशेषिकसांख्यवेदान्तमीमांसादीनि प्रभेदयुतानि सन्तीति तदैव तेषामप्युत्पादोऽभूत् । इत्यन्यदेतत्, यत्, कस्यचिद्दर्शनस्य कदाचिद्ध्रासो जातः कदाचिच्च पुनस्तदुद्धारः । किंतूद्गमस्तु प्रायशो युगपदेवेत्यसन्निश्चयः । अत एव कस्यचिद्दर्शनस्योपलब्धग्रन्थरचनाकालात्तदुत्पत्तिकालनिश्चयकरणमसमञ्जस भाति । नो चेदित्थं तर्हि परस्परविरोधः स्यात् । तथा हि, जैनानां ग्रन्था विक्रमीयप्रथमशताब्दीत[2] प्राचीनतराः प्रायशो नोपलभ्यन्ते तथापि ततोतिप्राचीने वेदान्तसूत्रे जैनदर्शनोल्लेखो[3] दृश्यते, तत्कथम् ?

यदि नाम जैनदर्शनमपि प्राचीनतरं स्यात्कथं न तद्ग्रन्था वेदादिग्रन्थवत्प्राचीनतरकालोत्पन्ना उपलभ्यन्ते ? सत्यं, किंतु यदा जैनाना मतोद्द्योतकः सर्वज्ञ उपदेष्टा प्रभवति तदा सर्वज्ञपरम्परागतानामपि पूर्वधर्मग्रन्थानां क्रमशो विगमो जायते, साक्षात्सर्वज्ञोपदिष्टधर्मादितत्त्वलाभे सति तदितरप्रकाशितग्रन्थोपदेशस्य तथादरासभवात् निरुपयोगित्वात्स्वयमेव तद्विलोपप्रसङ्गात् । सर्वेषामपि तथैव नियमोस्ति,—यदा यस्य दर्शनस्योपदेष्टा प्रवर्तको वा कश्चिज्जनो जायते तदातः पुनस्तस्योपदेशवचनं प्रकाशमागत्य

---

(१) तदासंस्तापसा पूर्वं परिव्राजश्च केचन । पाषण्डितां ते प्रथमे बभूवुर्मोहदूषिता ॥ ६० ॥
मरीचिश्च गुरो ( ऋषभस्य )र्नप्ता परिव्राड्भूयमास्थित । मिथ्यात्ववृद्धिमकरोदपसिद्धान्तभाषितै ॥ ६१ ॥
तदुपज्ञमभूद्योगशास्त्रं तन्त्रं च कापिलम् । येनायं मोहितो लोक सम्यग्ज्ञानपराङ्मुख ॥६२ ॥ ( महापुराणपर्व १७ )
२ विक्रमप्रथमशताब्दीग्रन्थास्तत्त्वार्थसूत्रादय सन्ति । ३ 'नैकस्मिन्नसभवात्' इति व्यासकृत-ब्रह्मसूत्रस्य द्वितीयाध्याये ।

यावदन्यस्तदुन्नेता न जायते तावत्प्रवर्तेत । जाते च तदुत्तरे तदुन्नेतरि पूर्वपरंपरा विनश्यति तिरोभवति वा । यथा खलु देशेत्र शाङ्करविचारप्रचारानन्तरं पूर्ववेदान्तशैली नामशेषतां गता । स्वल्पापि काचिद् या पूर्वतच्छैली दृश्यते तत्र कारणं पूर्वापेक्षया शाङ्करे किंचित्सिद्धान्तव्यत्यय एव स्यात् । यतो जनाः पारस्परिकमन्तरं द्रष्टुकामाः केचन पूर्वतद्ग्रन्थानप्याश्रयन्ति । यत्र तु किंचन स्वल्पमप्यन्तरं न स्यात्किमर्थं तत्र सर्वोपदेशसमर्थे सर्वज्ञसवितरि जाते सति दीपकल्पानां पूर्वागतानां ग्रन्थानामादरं तद्रक्षां च करिष्यति कश्चन जनः ? अत एव पूर्वविलोपो भवत्येवोत्तरे तदुद्गमे । बीजस्येव वाङ्कुरे जाते निरुपयोगित्वं पूर्वग्रन्थानाम् । वेदानां हि बहुप्राचीनानामुपलम्भेपीदमेव निदानं स्याद्यत्, तानुद्धर्तुकामो जनः कश्चन बहुतरकालाद्यावधि नासीत् । जैनदर्शनमपि लोके तावदग्रे इदमेव स्थास्यति यावत्पुनर्नोदेष्यति सर्वज्ञस्तदुपदेष्टा । इत्यस्य दर्शनस्य बहुप्राचीनेषु तत्प्रतिपादकग्रन्थेष्वनुपलभ्यमानेष्वपि न तावतार्वाचीनत्वं सेत्स्यते ।

किंच, पदार्थाः स्वस्वरूपेण सहानादित एव सन्तस्तिष्ठन्ति नतु कस्यचित्कदाचिदेव व्यय उत्पादो वा । अन्यथा 'नासतो विद्यते भावो नाभावो विद्यते सतः' इति सर्वसंमतस्य न्यायबलात्साधितस्य सिद्धान्तस्योच्छेदः स्यात् । तथा च, तत्त्वप्रतिपादकदर्शनस्याप्यनादिता सुतरां स्यात्, प्रतिपाद्यप्रतिपादकभावस्य वाच्यवाचकरूपस्य वाजहद्वृत्त्युपलब्धेः । अत एव यदि जैनदर्शनं तत्त्वस्वरूपप्रतिपादकं स्यात्स्यात् तर्हि तस्यानादिता सुतराम् । तत्त्वस्वरूपप्रतिपादकं च जैनदर्शनमपि नवेति ग्रन्थत एवास्मात्परीक्षणीयं विद्वद्भिः । तदर्थमेवैतद्ग्रन्थावतारो जात इति ध्येयम् । एवं धर्मोपदेष्टॄणां परम्परायां ये ऐदंयुगीनाश्चतुर्विंशतिस्तीर्थंकरा जातास्तेषामन्तिमः श्रीवर्धमानसन्मत्याद्यपराभिधानो महावीर आसीत् । तेन सर्वं चराचरं यथायोग्यं वर्णितम् । तच्छ्रुत्वा तत्प्रधानान्तेवासी श्रीगौतमनामा गणाग्रणी मुनिस्तथैवावधारयामास परानुपदिदेश च । सैव परम्पराद्यापि वर्तते प्रवर्तिष्यते चाग्रे । तेन वर्तमानकर्मसृष्टिविषयकवर्णनमुख्ये महापुराणसंग्रहे किंचित्स्वोत्तरपरम्पराविषये यदुक्तं तदित्थम्,—

अहं सुधर्मो जम्ब्वाख्यो निखिलश्रुतधारिणः । क्रमात्कैवल्यमुत्पाद्य निर्वास्यामस्ततो वयम् ॥ १३९ ॥
त्रयाणामस्मदादीना कालः केवलिनामिह । द्वाषष्टिवर्षपिण्डः स्याद्भगवन्निर्वृतेः परम् ॥ १४० ॥
ततो यथाक्रमं विष्णुर्नन्दिमित्रोऽपराजितः । गोवर्धनो भद्रबाहुरित्याचार्या महाधियः ॥ १४१ ॥
चतुर्दश[1]महाविद्यास्थानानां पारगा इमे । पुराणं द्योतयिष्यन्ति कार्त्स्न्येन शरदः शतम् ॥ १४२ ॥
विशाखः प्रोष्ठिलाचार्यो क्षत्रियो जयसाह्वयः । नागसेनश्च सिद्धार्थो धृतिषेणस्तथैव च ॥ १४३ ॥
विजयो बुद्धिमान् गङ्गदेवो धर्मादिशब्दतः । सेनश्च दशपूर्वाणां धारकाः स्युर्यथाक्रमम् ॥ १४४ ॥
त्र्यशीतिशतमब्दानामेतेषा कालसंग्रहः । तदा च कृत्स्नमेवेदं पुराणं विस्तरिष्यते ॥ १४५ ॥
ततो नक्षत्रनामा च जयपालो महातपाः । पाण्डुश्च ध्रुवसेनश्च कंसाचार्य इति क्रमात् ॥ १४६ ॥
एकादशाङ्गविद्यानां पारगाः स्युर्मुनीश्वराः । विंशं द्विशतमब्दानामेतेषा काल इष्यते ॥ १४७ ॥
तदा पुराणमेतत्तु पादोनं प्रथयिष्यते । भाजनाभावतो भूयो जायेत ज्ञाननिष्ठता ॥ १४८ ॥
सुभद्रश्च यशोभद्रो भद्रबाहुर्महायशाः । लोहार्यश्चेत्यमी ज्ञेयाः प्रथमाङ्गाब्धिपारगाः ॥ १४९ ॥
समाना शतमेषां स्यात्कालोऽष्टादशभिर्युतः । तुर्यो भागः पुराणस्य तदास्य प्रतनिष्यते ॥ १५० ॥

( भगवज्जिनसेनकृतमहापुराण प्र०पर्वणि ).

---

१ सर्वं शास्त्रं द्वादशाङ्गात्मकं मतं, तत्रान्तिमाङ्गस्य चतुर्दश भेदास्तेषा पारगताः सर्वश्रुतज्ञातार इत्यर्थः ।

इति महावीरनिर्वृतेस्त्यशीत्यधिकषट्शतवर्षावधिके काले द्वितीयभद्रबाहुलोहार्यपर्यन्तानां विशिष्टज्ञानधारिणामुद्भम आसीत् तदनन्तरं ये शतश आचार्या आसन्ते बहुज्ञा अपि पूर्वापेक्षयाऽल्पप्रज्ञा जाता इति बहुविषयवर्णनात्मके महापुराणग्रन्थे तदुल्लेखो न कृतो भगवन्महावीरान्तेवासिना श्रीगौतमर्षिणा । तथापि महावीरजिननिर्वृतेः पश्चात्कतिपयशतकेषु गतेषु अर्हद्बलिराचार्यो जातः । ततो भूतबलिपुष्पदन्तौ, ततः पद्मनन्दी, उमास्वामी, तुम्बुलूराचार्यः, समन्तभद्रशिवनन्दिनौ, पूज्यपादो, अकलङ्कदेवो, वीरसेनो, जयसेनो, जिनसेनो, गुणभद्रो, नेमिचन्द्रो, वसुनन्दी, इन्द्रनन्दी, विद्यानन्दी, माणिक्यनन्दी, प्रभाचन्द्रः, सोमदेव, आशाधरो, हस्तिमल्ल इत्यादयो ग्रन्थप्रणेतार आसन् । एषां सर्वेषा ग्रन्था उपलभ्यन्ते । एतत्समयान्तरेऽन्येपि बहवो विशिष्टधिय आचार्याः प्रादुर्भूतास्तथापि यैः प्रधानग्रन्थरचना काचिन्न कृता तेषामुल्लेखो न जातः । एतदन्तराले चैव जैनग्रन्थप्रणयनमासीत् । ततः पूर्वं बहुविशिष्टज्ञानधारिणा हृदये एव सिद्धान्तावकाश आसीत् । यतो हि स्मरणशक्त्यभावे एव लेखनकार्यं क्रियते जनैः । जैनसंप्रदायेऽन्यसंप्रदायापेक्षया बहुज्ञर्पयश्चिरतरातीतकालपर्यन्त विद्यमाना आसन् । अत एव तावच्चैर्लेखप्रचारो नावलम्बित इत्यस्मत्तर्कः ।

जैनसंप्रदाये ग्रन्थरचना द्विधोपलभ्यते, धर्मकर्मग्रन्थाना तत्त्वार्थग्रन्थाना च । धर्मकर्मग्रन्थेषु ससारापन्नजीवाना ततो मोचनविधि., तत्त्वार्थग्रन्थेषु च वस्तुतत्त्वपरीक्षणं तदाप्तस्य तदुपदेशस्य तदुपदिष्टाना च विषयाणा तथ्यातथ्यपरीक्षणं च लभ्यते । तेषु मध्ये विद्यानन्दिमुनिकृतोयमष्टसहस्रीग्रन्थस्तत्त्वार्थपरीक्षाविषयकोस्ति । आप्तं परीक्षितुमुपक्रान्तेऽत्र ग्रन्थे पूर्वमाप्तस्य परीक्षा तदनन्तरं स्वेतरदार्शनिककल्पिततत्त्वविचारस्तदुपदिष्टे पमाणस्वरूपे प्रमेयस्वरूपे मोक्षोपाये च बाधोपस्थितिः, स्वेष्टप्रमाणप्रमेयस्वरूपमोक्षस्वरूपादिषु निर्बाधत्वनिरूपण च कृतम् । एतद्ग्रन्थस्य मूलकारिकाकर्ता श्रीसमन्तभद्रो भगवान्, तद्वृत्तिकर्ता श्रीमदकलङ्कदेवस्तद्विवरणकर्ता श्रीविद्यानन्दस्वामी च । एतेषा प्रशस्तयः खल्वित्थम् ,—

## समन्तभद्रप्रशस्तिः—

काञ्च्यां नग्नाटकोहं मलमलिनतनुर्लाम्बुसे पाण्डुपिण्डः, पुण्ड्रोण्ड्रे शाक्यभिक्षुर्दशपुरनगरे मिष्टभोजी परिव्राट् ।
वाराणस्यामभूवं शशधरधवलः पाण्डुराङ्गस्तपस्वी, राजन् यस्यास्ति शक्तिः स वदतु पुरतो जैननिर्ग्रन्थवादी ॥

वन्द्यो भस्मकभस्मसात्कृतपटुः पद्मावतीदेवतादत्तोदात्तपदः स्वमन्त्रवचनव्याहूतचन्द्रप्रभः ।
आचार्यः स समन्तभद्रयतिभृद् येनेह काले कलौ, जैन वर्त्म समन्तभद्रमभवद्भद्रं समन्तान्मुहुः ॥ २ ॥

पूर्वं पाटलिपुत्रमध्यनगरे भेरी मया ताडिता, पश्चान्मालवसिन्धुठक्कविषये काञ्चीपुरे वैदिशे ।
प्राप्तोहं करहाटकं बहुभटं विद्योत्कटं सकटं, वादार्थी विचराम्यहं नरपते शार्दूलविक्रीडितम् ॥ ३ ॥

अवटुतटमटति झटिति, स्फुटपटुवाचाटधूर्जटेर्जिह्वा ।
वादिनि समन्तभद्रे स्थितवति तव सदसि भूप कास्थान्येषाम् ॥ ४ ॥

( श्रीमल्लिषेणप्रशस्ति )

नमः समन्तभद्राय महते कविवेधसे । यद्वचोवज्रपातेन निर्भिन्नाः कुमताद्रयः ॥ ५ ॥
कवीना गमकाना च वादिना वाग्मिनामपि । यशः सामन्तभद्रीयं मूर्ध्नि चूडामणीयते ॥ ६ ॥

( अमोघवर्षगुरु. श्रीजिनसेन. )

सरस्वतीस्वैरविहारभूमयः समन्तभद्रप्रमुखा मुनीश्वराः ।
जयन्ति वाग्वज्रनिपातपाटितप्रतीपराद्धान्तमहीध्रकोटयः ॥ ७ ॥

( महाकविश्रीवादीभसिंह )

गुणान्विता निर्मलवृत्तमौक्तिका नरोत्तमैः कण्ठविभूषणीकृता ।
न हारयष्टिः परमेव दुर्लभा समन्तभद्रादिभवा च भारती ॥ ८ ॥

( चन्द्रप्रभकर्ता महाकविश्रीवीरनन्दी )

समन्तभद्रादिकवीन्द्रभास्वतां स्फुरन्ति यस्यामलसूक्तिरश्मयः ।
व्रजन्ति खद्योतवदेव हास्यतां न तत्र किं ज्ञानलवोद्धता जनाः ॥ ९ ॥

( ज्ञानार्णवकर्ता श्रीशुभचन्द्र )

लक्ष्मीभृत्परमं निरुक्तिनिरतं निर्वाणसौख्यप्रदं, कुज्ञानातपवारणाय विधृतं छत्रं यथा भासुरम् ।
सज्ज्ञानैर्नययुक्तिमौक्तिकरसैः संशोभमानं परं वन्दे तद्धतकालदोषममलं सामन्तभद्रं मतम् ॥ १० ॥
समन्तभद्रदेवाय परमार्थविकल्पिने । समन्तभद्रदेवाय नमोस्तु परमात्मने ॥ ११ ॥

( श्रीवसुनन्दी सिद्धान्तचक्रवर्ती आप्तमीमांसावृत्तौ )

भगवानयं श्रीसमन्तभद्रो भूमिमिमां भारतीं कदालङ्कारेति विचार्यतेऽधुना । उपरिनिर्दिष्टैर्ग्रन्थकर्तृभिः स्तुतोयं भगवान् ते सर्वेपि विक्रमस्याष्टमशताब्दीपर्यन्तमासन् । येन अकलङ्कदेवेनैतद्ग्रन्थो विवृतः सोप्यष्टमशताब्द्यन्तर्गत एवासीत् । तत एवाष्टमशताब्दीतोय प्राचीन इति तु सुतरां सिध्यति, किन्तु श्रीपूज्यपादेन स्वकृतजैनेन्द्रव्याकरणस्यान्ते 'चतुष्टयं समन्तभद्रस्य' इति वचनेन भगवन्नामोल्लेखः कृत इति हेतोः स भगवान् पूज्यपादादपि प्राचीनतर इति सिध्यति । पूज्यपादस्तु पञ्चाशपञ्चशततमे शकाब्दे जात इति कर्णाटभाषानिबद्धतच्चरित्रतोवधारितम् । अतस्ततोपि प्राचीनतर इत्यवसीयते ।

अयं भगवान् तत्त्वार्थसूत्रकर्तुः श्रीउमास्वामिनस्तत्त्वार्थव्याख्यां गन्धहस्तिमहाभाष्यनाम्नां कर्तुं यदा प्रवृत्तस्तदा मङ्गलाचाररूपेणैताः कारिका आप्तमीमांसानाम्नोपनिबद्धवान् । ततश्च स तदनन्तरलब्धजन्मेति स्फुटीभवति । उमास्वामी तु विक्रमीयप्रथमशताब्द्यां प्रादुर्बभूवेति शिलालेखादिभिः श्रीसतीसचन्द्रविद्याभूषणमहोदयप्रमुखैश्चावधारितमास्ते ।

In the departments of Logic and Metaphysics it attained the very highest development and method. There are not many metaphysicians in India like Umaswami who flourished in the first century A D, or many logicians like Siddha Sena Divakara of the 6th and Akalanka Deva of the 8th century A. D.

Satishchandra Vidyabhushan M A. PH D M B. A. S
T. A S B J. B. S

एतत्संबन्धे शिलालेखश्लोका इत्थमस्माभिरुपलब्धाः—

श्रीगृद्ध्रपिच्छमुनिपस्य बलाकपिच्छः, शिष्योऽजनिष्ट भुवनत्रयवर्तिकीर्तिः ।

१ विक्रमाब्द ख्रिस्तीयाब्दत षट्पञ्चाशद्वर्षैत प्राक्प्रादुर्बभूवेति ज्ञेयम् । अस्माभिः ख्रिस्तीयाब्दं परिहृत्य विक्रमाब्दोल्लेख कृत । २ अभूदुमास्वामिमुनीश्वरोऽसावाचार्यशब्दोत्तरगृद्ध्रपिच्छ । तदन्वये तत्सदृशोस्ति नान्यस्तात्कालिकाशेषपदार्थवेदी ॥ इति 'गृद्ध्रपिच्छ' शब्देनोमास्वामिनो ग्रहणं स्यात् ।

चारित्रचञ्चुरखिलावनिपालमौलि—
मालाशिलीमुखविराजितपादपद्मः ॥ १ ॥
एवं महाचार्यपरम्पराया स्यात्कारमुद्राङ्किततत्त्वदीपः ।
भद्रः समन्ताद्गुणतो गणीशः समन्तभद्रोऽजनि वादिसिंहः ॥ २ ॥
ततः, यो देवनन्दिप्रथमाभिधानो बुद्ध्या महत्या स जिनेन्द्रबुद्धिः ।
श्रीपूज्यपादोऽजनि देवताभिर्यत्पूजितं पादयुगं यदीयम् ॥ ३ ॥
( प्राचीनलेखमाला )

एवं पौर्वापर्यविचारेण षष्ठप्रथमविक्रमीयाब्दशतान्तरालेऽभूदयं भगवान् श्रीसमन्तभद्र इति कल्प्यते । अष्टसहस्रीग्रन्थोपरि यो विषमपदटीकामकरोत्सोपि समन्तभद्रनामैवाचार्य आसीत् किंतु सोऽकलङ्कदेवविद्यानन्दयोस्तदनन्तरजन्मनोर्ग्रन्थटीकाकर्तृत्वादन्य एव मूलकर्तुः श्रीसमन्तभद्रस्वामिनोमुख्यापेक्षया । तस्य कालः खलु अष्टमशताब्दीतोऽनन्तरीयः । प्रथमस्य श्रीसमन्तभद्रस्य गन्धहस्तिमहाभाष्यातिरिक्ता विजयधवलटीका—बृहत्स्वयम्भूस्तोत्रादयोपि सन्ति, उपलभ्यन्ते च प्रायशस्ते । कर्णाटदेशतो लब्धपुस्तके 'इति फणिमण्डलालङ्कारस्योरगपुराधिपसूनुना शान्तिवर्मनाम्ना श्रीसमन्तभद्रेण' इत्याद्युल्लेखो दृश्यते. ततोस्य शान्तिवर्मेति जन्मनाम निश्चीयते, समन्तभद्रस्तु विशेषणनामोल्लेख इति ।

---

इतोऽकलङ्कदेवविद्यानन्दयोः समयादि विवेच्यते । अकलङ्कदेवो विक्रमीयाष्टमशताब्द्यां जात इति तु दर्शितमनन्तरमेव श्रीसतीशचन्द्रमहोदयवचनोल्लेखसमये । विद्यानन्दोपि ततो न प्रागिति तद्वचनविवरणत एव कल्पयितुं शक्यते । यतो विद्यानन्देनाकलङ्ककृताष्टशतीवृत्तिमावृत्त्य अष्टसहस्रीयमारचिता । प्रमेयरत्नमालानाम—न्यायसूत्रवृत्तिप्रारम्भेऽनन्तवीर्याचार्यो माणिक्यनन्दिकृतसूत्राणामास्पदमकलङ्कवचनं जातमित्याख्याति । यथा हि,—
अकलङ्कवचोम्भोधेरुद्दध्रे येन धीमता । न्यायविद्यामृतं तस्मै नमो माणिक्यनन्दिने ॥
अतो माणिक्यनन्दिनः प्रागेव बभूवाकलङ्कदेव इति स्फुटं जातम् । माणिक्यनन्दिकृतसूत्राणि प्रभाचन्द्रेण विवृतानि । स हि,
गुरुः श्रीनन्दिमाणिक्यो नन्दिताशेषसज्जनः । नन्दताद्दुरितैकान्तरजा जैनमतार्णवः ॥
इति ग्रन्थान्तिमपद्येन माणिक्यनन्दिनं स्वगुरुत्वेन प्रतिपाद्य,
सिद्धं सर्वजनप्रबोधजननं सद्योऽकलङ्काश्रयं, विद्यानन्दसमन्तभद्रगुणतो नित्यं मनोनन्दनम् ।
निर्दोषं परमागमार्थविषयं प्रोक्तं प्रमालक्षणं, युक्त्या चेतसि चिन्तयन्तु सुधियः श्रीवर्धमानं जिनम् ॥
इत्यनेन पद्येन जिनेन्द्र विशेषणीकृत्य अकलङ्कविद्यानन्दनामोल्लेखं करोति प्रमेयकमलमार्तण्डप्रथमाध्यायपरिसमाप्तौ । किं च, 'बोधः कोप्यसमः समस्तविषयं प्राप्याकलङ्कं पदं जातस्तेन समस्तवस्तुविषयं व्याख्यायते तत्पदम् ।' इति पद्येन च न्यायकुमुदचन्द्रनिर्माणसमयेऽकलङ्कं स्वगुरुत्वेन स्वीकर्तुमिच्छति प्रभाचन्द्रः । एवं प्रभाचन्द्रस्य माणिक्यनन्दी अकलङ्कदेवश्चेति द्वावपि गुरू आस्तां, विद्यानन्दश्च तस्य दृष्टिपथं श्रोत्रपथं वायासीत् । अतस्त्रयाणामप्यनन्तरजन्मा प्रभाचन्द्र आसीदिति निश्चीयते । माणिक्यनन्दिनस्तु प्रागकलङ्कदेव एव जातो न विद्यानन्दस्तेन तदनुल्लेखादिति संभाव्यते । तथापि विद्यानन्दोल्लेखकस्य प्रभाचन्द्रस्य गुरुत्वात्तौ माणिक्यनन्दी अकलङ्कदेवश्चेति द्वावपि विद्यानन्दात्समधिककालपुरातनाविति निश्चयो नः ।

---

१ षोडशसहस्रानुष्टुम्मितोयं ग्रन्थो निर्णयसागरमुद्रणालयस्वामिना संमुद्र्य प्रकाशितः । ततोपि जैनदर्शनस्य वरिष्ठज्ञानं भवेत् ।

तत्र च सर्वतः प्राच्योऽकलङ्कदेवः । अनन्तवीर्यवचनेन, देवेन स्वयं माणिक्यनन्दिसरणकीर्तनाद्यकरणाच्च ज्ञायते यत् स्वल्पेनान्तरेण ततो माणिक्यनन्दी जातो, माणिक्यनन्दिनस्तु पश्चात्समसमये प्रभाचन्द्रो विद्यानन्दी च जाताविति कल्प्यते ।

महापुराणकर्त्रा श्रीजिनसेनेनाकलङ्कविद्यानन्दौ स्मृतावनन्तरलिखितेन पद्येन । तच्च यथा,—

भट्टाकलङ्कश्रीपालपात्रकेसरिणां गुणाः । विदुषां हृदयारूढा हारायन्तेतिनिर्मलाः ॥

अत्र पात्रकेसरिशब्देन विद्यानन्दो गृह्यते इति निर्विवादपदमस्ति । श्रीजिनसेनेन महापुराणरचना खलु ८९१ तमविक्रमीयशताब्दीतः प्रारभ्य ९०५ तमशताब्दीपर्यन्ते दशवार्षिकावधिके काले कदाचित्कृतेति श्रीनाथूरामलिखितविद्वद्रत्नमालानाम—पुस्तकादवध्रियते । ततश्च ८९१ तमविक्रमशताब्दीतः प्रागकलङ्कदेवविद्यानन्दावुत्पन्नाविति निश्चयकरणं सुगम्यते । स्वोक्तपद्येनाप्यकलङ्कसमयस्तथैव सेत्स्यते । तद्यथा,—

राजन् साहसतुङ्ग सन्ति बहवः श्वेतातपत्रा नृपाः, किन्तु त्वत्सदृशा रणे विजयिनस्त्यागोन्नता दुर्लभाः ।
तद्वत्सन्ति बुधा न सन्ति कवयो वागीश्वरा वाग्मिनो, नानाशास्त्रविचारचातुरधियः काले कलौ मद्विधाः ।

अयं हि साहसतुङ्गो राष्ट्रकूटवंशोद्भूतदान्तिदुर्गाभिधो राजासीत् । प्रोफेसर के. बी. पाठकमहाशयेनापि तथैव शाकटायन—अमोघवर्षसंबन्धिनिबन्धे[1] स्वीकृतम् । एष राजा ८०९ तमविक्रमाब्दतः ८३१ तमाब्दावसाने जात इति डाक्टरश्रीभाण्डारकरनिश्चयनादवधार्यते । अतो देवस्यापि एष एव समयो निश्चेतव्यः ।

अन्यच्च, कुमारिलभट्टस्य मण्डनमिश्रस्य च विद्यानन्देन नाम्नोल्लेखः कृतः । तत्र भट्टसमयः ७५६ तमविक्रमाब्दतः ८१६ तमाब्दपर्यन्तो, मिश्रसमयस्तु ८१६ तमविक्रमाब्दात् ८९४ तमाब्दान्तरालवर्ती प्रथमशङ्कराचार्यसमो निर्धारितोस्ति, शङ्करमिश्रयोः परस्परं संवादप्रसिद्धेर्भट्टमिश्रयोश्चान्योन्यमतखण्डनपरत्वाच्च । ततश्च विद्यानन्दस्य विक्रमनवमशताब्दीमध्यसमयः स्वीकर्तुं युज्यते । भट्टादीनामुल्लेखस्तु यत्र यत्रादिष्टस्तदग्रे निर्देक्ष्यते । अकलङ्कविद्यानन्दयोस्तु नाधिकमन्तरमिति प्रागेव दर्शितम् । एवं जिनसेनेन विद्यानन्दाद्युल्लेखनात्तेन च कुमारिलभट्टाद्युल्लेखनादुभयान्तरालेऽकलङ्कविद्यानन्दौ जाताविति निर्णीतपदमाश्रयते । शकाब्दापेक्षयैतयोः समयः ७६० तमाब्दप्रमितः स्यात् ।

किंच, वीरसेनस्ततो जयसेनश्च जिनसेनात्प्रागास्ताम् । वीरसेनस्य चोल्लेखोन्ते विद्यानन्देन कृत इत्यतोपि उक्तोदन्तः सत्यानुसन्धानं प्रकटयति । कुमारसेनस्याप्युल्लेखो ग्रन्थान्ते वर्ततेऽतः सोपि तत्समकालिक एव । यतोसौ कुमारसेनो विनयसेनशिष्यो जिनसेनसतीर्थश्चासीदिति दर्शनसारतो विज्ञायते ।

## श्रीविद्यानन्दप्रशस्तिः—

कर्णाटदेशस्थशिमोगाप्रान्तान्तर्वर्तिहुमचाग्रामे प्राप्तशिलालेख इत्थम्,—

नञ्जराजपट्टणमहीपतिर्नंजपरिषदि श्रीमद्विद्यानन्दस्वामिना नन्दनमल्लिभट्टाभिधो विदग्धो विहितानवद्यविवादमर्यादया विजिग्ये ।

हृद्यानवद्यपद्यैकप्रभावेण श्रीशतवेन्द्रनरपतिसभायां श्रीविद्यानन्दिविभुना निखिलश्रोतारो विस्मयपदमानीताः ।

शल्वमल्लिभूपतिसंसदि स्वीयामलवचनपाटवपराभूतवादिविदुषः क्षमते स विद्यानन्दिप्रभुः ।

---

[1] अयं निबन्ध सन् १९१४ तमस्य दिसम्बरमासे प्रकाशितायाम् 'इण्डियन् एण्टिक्वेरि' पत्रिकाया प्रकाशमागतः ।

सलूवदेवपृथ्वीपतिपरिषदि नैकविधपरवादिमण्डललपनविनिर्गतसिद्धान्तसंदोहं सिद्धान्ताभासतयानृतीकृत्यार्हतमतं प्रभावितम् ।

विलगीपत्तनमण्डननरपतिनरसिंहसंसदि समुद्बोधितः किल प्रभावो जैनमतस्य श्रीमद्विद्यानन्दिप्रभुणा ।

कारकलनगरस्थभैरवाचार्यराजपरिषदि जैनमतगौरवं प्रदर्श्य तत्प्रभावं विजजृम्भे श्रीविद्यानन्दिप्रभुः ।

विदरीनगरनिवासिभावुकलोकेभ्यः श्रीमद्विद्यानन्दिप्रभुणा स्वधर्मज्ञानप्राकर्ष्येण सम्यक्त्वावाप्तिः कारिता ।

यस्य नरसिंहराजात्मजकृष्णराजस्य संसदि नमति स नरपतिसहस्रकं तस्यां परिषदि हे विद्यानन्दिप्रभो त्वया समुद्दीपितो जैनधर्मः पराभूताश्च मत्तपरवादिनः ।

कोप्पनाद्यनेकतीर्थक्षेत्रेषु कारयित्त्वा द्रव्यवैपुल्यव्ययं हे विद्यानन्दिप्रभो त्वयार्हतधर्मः प्रभावितः भूपितश्च श्रवणवेलगुणनगरस्थजैनसंघः कनकवसनादिप्रदापनतः । विधाय च गैरसप्पानगरासन्नमुनिसंदोहसंघ स्वशिष्यमण्डलं स विभूपितः ।

( श्रवणवेलगुलगत ४६ तम शिलालेख )

श्रीविद्यानन्देनाष्टसहस्र्यां केषां ग्रन्थकृतां वचनान्युद्धृतानीति दृश्यताम् ।—

' उपयोगो लक्षणम् ' पृष्ठे १३२ तमे, उमास्वामिभगवतो वचनमिदं यद्ग्रन्थोपरि परम्पराटीकैवेयमष्टसहस्री ।

'प्यखे' इति जैनेन्द्रस्योल्लेखः पृष्ठे १३२ तमे ।

'सत्ता सप्रतिपक्षा' इति १३२ तमे पृष्ठे कुन्दकुन्दकृतपञ्चास्तिकायस्योल्लेखोस्ति ।

'नयचक्रतः प्रतिपत्तव्याः' इति २८८ तमे पृष्ठे देवसेनकृतनयचक्रस्योल्लेखः ।

समन्तभद्राकलङ्कयोस्तु वचनान्यत्राश्रय एवेति किमन्यत् ? अकलङ्कदेवकृतो न्यायविनिश्चयः १२१ तमे पृष्ठे प्रमाणत्वेनोल्लिखितः । एते सर्वे जैनग्रन्थकर्तारः । इतरे तु यथा,—

ईश्वरकृष्णकृतसांख्यकारिका द्विनवतितमे पृष्ठे दर्शिता 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । पोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः' इति ॥ अयमीश्वरकृष्णः विक्रमीयाब्दे ५०६ तमे डा० तककुशेन ( Takakusa ) साधितः ।

'बुद्ध्यध्यवसितमर्थं पुरुषश्चेतयते' इति सांख्यवचनं ६६ तमे पृष्ठे आगतम् ।

'ज्ञाते त्वर्थेनुमानादवगच्छति बुद्धिम्' इति ५७ तमे पृष्ठे मीमासावचनमागतम् ।

धर्मकीर्तिवचनं ८१ तमेऽकलङ्कदेवेनोद्धृतं, विद्यानन्देन तु तन्नामैवोल्लिखितम् । बौद्धमताभिमानी धर्मकीर्तिरयं विक्रमाष्टमशताब्द्यां जात इति निश्चितिर्वर्तते ।

'वाक्यं प्रति मतिर्भिन्ना बहुधा न्यायवेदिनाम्' इत्येवं २८४ तमे पृष्ठे श्रीभर्तृहरिकृतवाक्यपदीयस्य द्वितीयकाण्डस्थप्रारम्भश्लोकोल्लेखः । अथ भर्तृहरिः ७०६ तमविक्रमाब्दात्प्रागेवासीदिति हुएनसंगाभिधेयचीनदेशस्थप्रवासिवचनादिभिर्निर्णीतमास्ते ।

## ग्रन्थार्थसारः।

अस्य ग्रन्थस्य प्रथमः परिच्छेदः षट्पञ्चाशदधिकशततमे पृष्ठे समाप्तः। द्वितीयः सप्तसप्तत्यधिके शततमे पृष्ठे, तृतीयो द्वादशाधिकद्विशततमे पृष्ठे, चतुर्थस्त्रिंशदधिकद्विशततमे पृष्ठे, पञ्चमस्त्रयस्त्रिंशदधिकद्विशततमे पृष्ठे, षष्ठ एकोनचत्वारिंशदधिकद्विशततमे पृष्ठे, सप्तमः पञ्चपञ्चाशदधिकद्विशततमे पृष्ठे, अष्टमोष्टपञ्चाशदधिकद्विशततमे पृष्ठे, नवमस्तु एकषष्ठ्यधिकद्विशततमे पृष्ठे समाप्तः। शेषे दशमोङ्कः। इति दशाङ्कपरिमितोयं ग्रन्थः। तत्र—

### प्रथमपरिच्छेदे—

प्रथमतः सर्वज्ञसिद्धिः कृतानुमानाद्यैः। ततोर्हन्नेव सर्वज्ञ इति समर्थितम्। ततो दृष्टेष्टाभ्यां परेष्टबाधनम्। ततो भाव एवाभाव एव भावाभावरूपमेव वा तत्त्वमिति मतानि सांख्यादीनि निराकृत्य स्वमतानुसारेणाभावस्वरूपं दार्शितम्। ततो भावाभावाद्यनेकान्ततया तत्त्वस्थितिसमर्थनं, तद्विरोधपरिहारश्च स्याद्वादेनैव कृतः। अर्धग्रन्थोत्र परिच्छेदे समाप्तः।

### द्वितीयपरिच्छेदे—

चतुर्विंशतितमप्रभृतिसप्तविंशतितमान्ताभिश्चतसृभिः कारिकाभिरद्वैतमतं, ततः पञ्चकारिकाभिर्योगस्य बुद्धस्य च सर्वथा पृथक्त्वमतं स्पष्टमाक्षिप्य निरसितम्। तदनन्तरं चतसृभिः कारिकाभिर्द्वैताद्वैतोभयात्मकः सापेक्षोनेकान्तः समर्थितः तत्रतत्र सर्वेषां पूर्वपक्षाश्च विशदीकृत्य दर्शिताः। एवं त्रयोदशकारिकाविवरणरूपेण परिच्छेदोयं समापितः।

### तृतीयपरिच्छेदे—

सांख्येन सर्वथा यन्नित्यत्वं पदार्थमात्रस्य कथितं तत्र विकारासंभवात् कार्यकारणादिव्यवहारस्य परलोकबन्धमोक्षादेश्चासंभवत्वं प्रदर्श्य दोषापादनं कृतम्। बौद्धस्य सर्वथा क्षणिकत्वमते च तथैव दोषापादनं कृतम्। ततो बौद्धान् प्रति स्थितिस्वभावसमर्थनं कृतं, कथंचित्क्षणिकत्वे एव कार्यकारणादिसमन्वयसंभव इति च दर्शितम्। प्रागभावस्य सर्वथाऽभावात्मकत्वं निरस्य उत्पादविनाशयोरेकहेतुकत्वं समर्थितम्। स्वारम्भकावयवक्रियादिप्रक्रिया बौद्धवैशेषिकाभिमता निरस्ता। वस्तुजातस्य सुवर्णगतलौकिकदृष्टान्तेन लोकोत्तरदृष्टान्तेन च भेदाभेदसमर्थनं कृतम्।

### चतुर्थपरिच्छेदे—

प्रथमं वैशेषिकमतसंमतस्य भेदैकान्तस्य प्रतिविधानं कृतम्। तत्र तावत्पूर्वमेकषष्टितम्यां कारिकाया तत्पूर्वपक्षो दर्शितः। तथा हि, कार्यकारणादि गुणगुण्यादि च परस्परं भिन्नं, भिन्नलक्षणत्वाद्भेदेन प्रतिभासनाच्च। सर्वथा तदभेदे कार्यकारणादिस्वरूपं न घटते, कार्यस्य तदुत्तरसमयवर्तित्वात् कारणस्य तत्पू-

र्व्यवहितसमयस्थायित्वाच्च । ययोश्च परस्परं न भेदस्तयोर्देशः कालो वा न भिद्येत, भिद्येते च देश-कालौ कार्यकारणयोः । इत्येवं पूर्वपक्षं समर्थ्य तत्प्रतिविधानं द्विषष्टितमकारिकातः कृतमस्ति । यथा च, अन्यत्वैकान्तेपि एकस्य कार्यस्यानेककारणादौ प्रवृत्तिः स्वीकर्तव्या एव, तदस्वीकारे कार्यकारणभावादि-विरोधात् । तद्वृत्तौ च सर्वात्मनैकदेशेन वा स्वीकारे एकस्यापि बहुत्वसंभवो बहुप्रदेशित्वापत्तिर्वा । न च तथा भेदैकान्ते सम्भवति, तथा सति तदेकान्तविघटनात्, पूर्वं कारणदशायामनेकस्य कार्यरूपत्वे एकत्वसम्भवेन सर्वथान्यत्वाघटनात् । समवायेन वृत्तिश्च न घटते, तस्य प्रागेव निराकरणात् । अदृष्टव-शाद्वृत्तिकल्पने प्रत्यक्षसिद्धः स्याद्भेद एव किमिति नाङ्गीक्रियेत ? इत्यादिप्रकारेण वैशेषिको निराकृतः । ततः सप्तषष्टितमकारिकातो बौद्धः पराजितः । तत एकान्नसप्ततितमकारिकातः सांख्यमतनिषेधः कृतः । सप्ततितमकारिकातः स्याद्वादविधाने सर्वस्य सुघटत्वसमर्थनम् । इत्ययमस्य परिच्छेदस्य निष्कर्षः स्यात् ।

## पञ्चमपरिच्छेदे—

सर्ववस्तूनां तद्गतधर्माणां च सर्वेषां सर्वथा काल्पनिकी सिद्धिरकाल्पनिक्येव वा सिद्धिरिति बौद्धादिम-तानि दूषयित्वा स्यादनापेक्षिकी स्यादापेक्षिकी च तत्सिद्धिरिति दर्शितं,सर्वेषां स्वरूपस्य स्वतः सिद्धत्वादनापेक्षि-कत्वसिद्धेः परस्परं धर्मधर्म्यादीनामविनाभावसमर्थनस्यापेक्षाजन्यत्वादापेक्षिकत्वोपपत्तेश्चेति विषयो वर्णितः ।

## षष्ठपरिच्छेदे—

वस्तुसाधनसमर्थानां प्रत्यक्षानुमानागमानां त्रयाणामपि प्रसङ्गानुसारेणावश्यकता स्यादिति दर्शितम् । केचन प्रत्यक्षमेव वस्तुतत्त्वसाधनसमर्थं मन्यन्ते, केचनानुमानमेव, केचनागममेव च प्रमाणं स्वीकुर्वन्ति, तत्साधितमेव तत्त्वं च सत्यमङ्गीकुर्वते ये तेषां सर्वेषां पक्षं दूषयित्वा आगमप्रमाणवादिष्वन्यतमस्य वेदान्त-वादिनो वेदप्रामाण्ये विशेषतो विचारः कृतो, युक्तयश्च तत्प्रामाण्यस्थापनाय प्रयुक्ता यास्ता निरसिताः । इदमेवास्य परिच्छेदस्य तात्पर्यम् ।

## सप्तमपरिच्छेदे—

बौद्धाभिमतस्य ज्ञानैकान्तस्य निरासो दर्शितः । अथवा हिताहितप्राप्तिपरिहारयोः साधनपूर्वकत्वात् तत्साधनस्य च ज्ञापककारकभेदाद्वैविध्ये, ज्ञापकमुपायतत्त्वमत्र निर्णीतम् । तत्र केचन बौद्धा बहिरुपेय-तत्त्वमनादृत्य केवलमुपायतत्त्वं ज्ञानमेवाङ्गीकुर्वन्ति । तदसमञ्जसं, बहिरुपेयाभावे उपायस्य ज्ञानस्याभाव-प्रसङ्गात् । आत्मनोन्तरङ्गस्योपेयस्य स्वीकारेपि ज्ञानेन तदभेदात्तादात्म्याद्वा तदर्थं ज्ञानरूपसाधनस्वीकारस्य वैयर्थ्यात्, ज्ञानसत्त्वेन तस्य स्वतः सत्त्वसिद्धेरुपायत्वेन तत्र ज्ञानस्य निरुपयोगात् । किंच न बहिर-र्थाभावः सिध्यति, बहिरर्थस्य ज्ञाने सत्यपि भ्रान्तत्वे ज्ञानस्वरूपस्यापि भ्रान्तत्वप्रसङ्गादुभयत्राविशेषात् । स्वप्नगतस्य भ्रान्तत्ववज्जाग्रद्विषयस्याभ्रान्तत्वमपि सिध्येत्, अन्यथा स्वप्नजाग्रद्दशयोरविशेषे स्वप्नविषयस्य दृष्टान्तत्वाघटनात् । किंच परप्रतिपादनं विना, ज्ञानाद्वैतमपि कथं सिध्येत् ? प्रतिपादनस्य च पुद्गलकृत-

शब्दात्मकबहिरर्थरूपत्वान्न तदद्वैतं श्रेयः । बहिरर्थत्वेन शब्दस्य मिथ्यात्वे तेन साधितस्य तदद्वैतस्यापि मिथ्यात्वमस्तु, साधनस्य मिथ्यात्वे साध्यस्यापि मिथ्यात्वाविशेषात् । इत्यादिप्रकारेणात्र ज्ञानाद्वैतता निराकृता ।

## अष्टमपरिच्छेदे—

दैववादिनः पौरुषवादिनश्च मतं दूषयित्वा तदुभयवादः स्याद्वादेन निर्दोषतया प्रसाधितः ।

## नवमपरिच्छेदे—

पुण्यपापकर्मणोः संचये क्षये च यन्निदानं तत् पराभिमतकल्पनानिवृत्तिपूर्वकं निदर्शितम् । तन्निदानं हि रागद्वेषयोः प्रादुर्भावः । तन्निरोधे कर्मबन्धनिरोधोऽप्यत एवार्हदादीनां सुतरां स्यात् । इति निरूपितम् ।

## दशमपरिच्छेदे—

सांख्ययोगबुद्धादिमतानुसारिणी बन्धमोक्षकारणता या सा दूषिता । ततः स्वमतेन बन्धमोक्षौ तत्कारणानि च सयुक्तिकं साधितानि । कर्मणः पौद्गलिकत्वं तत्कारणं च दर्शितम् । ततोऽग्रे सृष्टेरीश्वरकृतत्वं निरसितम् । ततः प्रमाणस्वरूपं वर्णयितुं सन्निकर्षादिखण्डनं कृतं प्रत्यभिज्ञानतर्कयोः पृथक्प्रमाणत्वसिद्धिश्च कृता । ततः प्रमाणफलविप्रतिपत्तिरपास्ता । वाक्यलक्षणं नयस्वरूपं च ततो दर्शितम् । सम्यग्मिथ्यास्वरूपं नयानामेकान्तवादस्य च स्फुटीकृतम् । वस्तुस्वरूपं विधिनिषेधात्मकं तथा च प्रवृत्त्युपयोगिता स्यादित्यादि समर्थितम् ।

# विषयसूची.


| विषयनाम | क पत्रे २ | क पङ्क्तौ २ |
|---|---|---|
| **( अथ प्रथमः परिच्छेदः ).** | | |
| मङ्गलम् . .. .. ... | १ | १ |
| आप्तपरीक्षणद्वारेण ग्रन्थावतार | ३ | ८ |
| नियोग एकादशधा प्रमाणत्वेन वर्णित | ५ | १७ |
| तन्निरास ... .. ... ... | ७ | १ |
| नियोगो भावना विधिर्वा वाक्यार्थ इति वेदार्थविचार .. . ... | १० | १३ |
| भट्टमण्डनमिश्रप्रभाकरादीना परस्परतस्तन्मताना निराकरणम् ... | १२ | १ |
| ततो जैनैर्निराकरणं कृतम् ... | ३१ | ४ |
| चार्वाकमतविचार. .. .. | ३५ | २२ |
| तत्त्वोपप्लववादिमतविचार .. | ३७ | १० |
| तत्त्वोपप्लवपूर्वपक्ष ... . ... | ३७ | २० |
| तन्निराकरणम् .. ... | ४० | २३ |
| सवेदनाद्वैतचित्राद्वैतब्रह्माद्वैतवादिना सुगतादीना चार्वाकाणां च सक्षेपेण प्रमाणखण्डनम् .. .. | ४२ | १७ |
| मीमासकेन सर्वज्ञाभाव आशङ्कित . | ४४ | २१ |
| तन्निरास ... . | ४७ | १३ |
| अनुमानेन सर्वज्ञसिद्धि ... | ५० | २४ |
| दोषावरणहानेर्ध्वंसरूपत्वप्रतिपादनम्... | ५१ | २२ |
| ध्वंसरूपत्वेपि कर्मक्षयो न स्यात्ततो विनाशानुपपत्तेरित्याशङ्कापनोद ... | ५३ | ११ |
| अकलङ्कोप्यात्मा सर्वज्ञ कथं स्यादित्याशङ्का | ५५ | २१ |
| सूक्ष्मान्तरितेत्यादिकारिकया तत्परिहारो मीमांसकशङ्कापनोदश्च .. .. | ५६ | ३ |
| स क' सर्वज्ञ इति प्रश्नस्योत्तरम् . | ६२ | ७ |
| ससारमोक्षादितत्त्वाना 'युक्तिशास्त्राविरोधिवचनत्वादि'ति हेतुना समर्थनम् | ६२ | १९ |
| गर्भादिमरणान्तजीवनाशङ्कापनोद ... | ६३ | ५ |
| कपिलस्यासर्वज्ञत्वसाधनम् ... | ६६ | २० |
| नैयायिकमुक्तेर्निराकरणद्वारा तदसर्वज्ञता | ६७ | १४ |
| वेदान्तिनो मोक्षाघटनात्तदसर्वज्ञता ... | ६९ | ५ |
| बौद्धस्य मोक्षनिरास ... . ... | ६९ | १४ |
| कपिलस्य ज्ञानमात्रे मोक्षकारणे दोषोद्घाटनम् .. .. ... | ६९ | १७ |
| तत्ससारकारणतत्त्वे मिथ्याज्ञानमात्रे दोषनिदर्शनम् ... . ... | ७० | १६ |

| | क पत्रे २ | पङ्क्तौ २ |
|---|---|---|
| सर्वज्ञ क इति न निश्चेतुं शक्यते इति बौद्धमतस्य खण्डनम् . .. ... | ७१ | १ |
| तर्कस्य पृथक्प्रमाणत्वसिद्धि. | ७४ | ७ |
| सर्वथाचित्राद्वैतादिनिराकरणम् .. | ७६ | १२ |
| ततो वहिस्तत्त्वं न केवलं वर्णादिमात्रं स्कन्धमात्रं वेति च प्रतिपादनम् . | ७९ | ७ |
| पक्षादिवचनं निग्रहस्थानमिति बौद्धमतं निराकृतम् .. ... | ८१ | ११ |
| एकान्ते कर्माद्यसभवत्वप्रतिपादनम् . | ८८ | ६ |
| साख्याभिमते भावैकान्ते दूषणम् .. | ९२ | ७ |
| तन्मध्ये च सविदद्वैतमतं सत्ताद्वैतमतं चोल्लिख्य निराकृतम् .. ... | ९३ | ११ |
| प्रागभावप्रध्वंसयोर्वस्तुरूपत्वसमर्थनं, | ९७ | ३ |
| तदस्वीकारे सांख्यस्य दोषदर्शनं, नैयायिकचार्वाकमतं च दूषितम् ... | ९७ | १० |
| प्रध्वंसस्य स्वरूपव्यवस्था ... .. | १०१ | ६ |
| मीमांसकस्य नित्यशब्दस्य निरासस्तत्पौद्गलिकत्वसाधनं च.. | १०१ | २१ |
| अन्योन्यात्यन्ताभावयोर्वस्तुरूपत्वसिद्धि सर्वथान्यापोहस्य खण्डनं च. | १०९ | ६ |
| सत्तास्वरूपसाधनम् . . .. ... | ११२ | ९ |
| साख्यस्यात्यन्ताभावापह्नवे दोष .. | ११४ | ३ |
| भावापह्नववादिनो नैरात्म्यवादिनो बौद्धस्य निरास. .. ... . | ११५ | ८ |
| भाट्टाभिमता भावाभावैकान्तता निराकृता ... .. . ... | ११७ | ४ |
| अनिर्वचनीयस्य खण्डनम् ... ... | ११७ | २१ |
| सप्तभङ्गनयेन स्याद्वादेन सदसत्त्वं साधितम् .. . ... | १२४ | २१ |
| सर्वस्योभयत्ववादी मीमासको निराकृत | १२९ | २० |
| सर्वथाऽवाच्यत्ववादी बौद्धो निराकृत | १२९ | २० |
| तदन्तरे शब्दाद्वैतवादी परास्त . | १३० | १ |
| सप्तभङ्ग्याद्यभङ्गद्वयसमर्थनम् ... | १३१ | ७ |
| तत्र नैयायिकस्यानवस्थादोष परिहृत | १३१ | २१ |
| सदसत्त्वयोरेकत्रासभवत्वशङ्का तत्परिहारश्च ... ... .. .. | १३२ | १९ |
| सदसत्त्ववादिनौ साख्यबौद्धौ निराकृतौ | १३३ | ४ |
| एकत्र सदसत्त्वयोरुपपादनम्... .. | १३४ | ३ |

| | क पत्रे ? | पङ्क्तौ ? |
|---|---|---|
| तृतीयभङ्गसमर्थनम् ... ... ... | १३५ | ९ |
| प्रमाणप्रमेयत्वादिना द्वैतसाधनम् | १३५ | १० |
| चतुर्थभङ्गसमर्थनं प्रत्यर्थं शब्दभेदसिद्धान्तसिद्धिश्च .. ... | १३६ | १२ |
| चरमत्रयभङ्गसमर्थनम् ... ... | १३८ | २० |
| सर्वथा सामान्यस्य वाच्यत्वनिराकरणम् | १३९ | ८ |
| सर्वथा विशेषस्य वाच्यत्वनिराकरणम् | १४० | १४ |
| अस्तित्वस्य नास्तित्वाविनाभावसमर्थनम् | १४२ | ८ |
| केवलान्यापोहस्य निराकरणम्... ... | १४४ | ९ |
| नास्तित्वस्यास्तित्वाविनाभावसमर्थनम् | १४५ | १९ |
| अस्तित्वनास्तित्वयोर्धर्मतासिद्धिस्तदाश्रयस्य धर्मित्वसिद्धिश्च ... ... | १४७ | १ |
| चतुर्थादिभङ्गसमर्थने युक्ति | १४९ | ४ |
| प्रकारान्तरेण सदसत्त्वादिनयसमर्थनम् | १४९ | १८ |
| सत्त्वाद्येकधर्मेण शेषधर्माणा सग्रह स्याद्धर्मिणोऽभेदादिति सर्वे भङ्गा न वाच्या इति मतम् . ... ... | १५१ | १५ |
| तन्निरासाय प्रत्येकधर्मग्राहकनयस्य सार्थक्यसमर्थनम् . ... | १५२ | ११ |
| स्वभावभेदसिद्धिश्च ( बौद्धमतनिषेध ) | १५३ | |
| एकत्वानेकत्वे सप्तभङ्ग्या साधिते .. | १५४ | १७ |
| जीवाजीवादीना नैकत्वमिति जटिलाशङ्का | १५४ | २२ |
| तन्निराकृत्य ... . ... ... | १५५ | १ |
| बौद्धस्य सर्वथा भेदो निराकृत ... ... | १५५ | ६ |
| स्याद्वादेन भेदस्य सिद्धि .. ... | १५५ | १६ |
| एकत्वस्यानेकत्वापेक्षासमर्थनम् ... | १५६ | ३ |
| **( अथ द्वितीयः परिच्छेदः )** | | |
| अद्वैतस्य विवेचनम् ... . | १५७ | १ |
| तत्पूर्वपक्ष . .. . | १५७ | ७ |
| तन्निराकरणम्.. .. ... ... | १५७ | १५ |
| प्रत्यक्षेणाद्वैतबाधा प्रत्यक्षस्य सत्यत्वसाधनं च ... . | १५८ | १४ |
| अद्वैते कर्मतत्फलाद्यसंभव ... | १५९ | १ |
| पुनरद्वैतपूर्वपक्ष ... ... .. | १५९ | १३ |
| तन्निरासो हेतुसाध्ययोर्द्वैतसाधनात् .. | १६० | ७ |
| अद्वैतशब्दस्य द्वैताविनाभावदर्शनम् .. | १६१ | २० |
| वैशेषिकस्य सर्वथा द्वैतं निराकृतम् .. | १६४ | ४ |
| बौद्धस्य पृथक्त्वं निराकृतम् ... | १६५ | ४ |
| शब्दवाच्यस्यासत्यत्वे प्रतिपादनवैयर्थ्यम् | १६८ | ४ |
| द्वैताद्वैतोभयवादिमीमासकस्य निराकरणम् | १७१ | १ |
| सापेक्षतयोभयात्मत्वसाधनम्... ... | १७१ | १२ |
| बौद्धं प्रति जीवे एकानेकत्वसमर्थनम् | १७२ | १५ |
| विवक्षाऽविवक्षयोरसद्विषयत्वनिरास ... | १७४ | ६ |
| भेदाभेदोभयोरपि प्रमाणेन प्रतिपन्नत्वदर्शनम् .. . . ... ... | १७५ | ६ |
| **( तृतीयः परिच्छेदः )** | | |
| सांख्यस्यैकान्तिकनित्यत्वनिरास | १७८ | १ |
| सर्वथा नित्यत्वे विकारासभवप्रदर्शनम् | १८० | ७ |
| ततश्च परलोककार्यकारणाद्यसभवता | १८१ | १ |
| सर्वथा क्षणिकत्वेपि तथैव .. | १८१ | २२ |
| विनाशोऽकारणक इति बौद्धमतपूर्वपक्ष | १८५ | ३ |
| तन्निरासाय स्थितिस्वभावसमर्थनम् . | १८५ | २० |
| सर्वथा क्षणिकत्वे संविन्मात्रत्वे च दोषापत्ति ... ... .. | १८६ | १८ |
| कथंचित्क्षणिकत्वे कार्यादिसभवो युगपदन्वयव्यतिरेकसिद्धिश्च .. ... | १८८ | १ |
| सर्वथा क्षणिकत्वे हेतुफलाद्यभावापत्ति | १९१ | ५ |
| अनन्य इति शब्दादर्थे उपचार इत्याशङ्क्य ततोपि वस्तुनो नित्यत्वं साधितम्... ... ... ... ... | १९२ | १ |
| अवाच्यता तर्हीत्याशङ्क्य तत्परिहारो, बौद्धाभिमतचतुष्कोटे ( सदसदुभयानुभयतया ) रपेक्षाभेदत समर्थनम् ... ... | १९२ | १८ |
| सर्वथा भेदे मोक्षायाष्टाङ्गसमाश्रयादिदूषणमुपदर्शितम् ... ... . | १९८ | ८ |
| क्षणिकैकान्ते परमाणुरूपेण स्कन्धतया वा उत्पत्त्यसभव ... ... ... | २०१ | ४ |
| नित्यानित्योभयैकान्ते तदवाच्यतैकान्ते च दोषदर्शनम् .. ... ... | २०२ | १ |
| एकत्रैव नित्यक्षणिकत्वधर्मद्वयस्य सहेतुका सिद्धि . . . . . | २०२ | ९ |
| प्रत्यभिज्ञानस्य पृथक्प्रमाणतासमर्थनम् | २०३ | १५ |
| व्ययोदयनित्यत्वाना त्रयाणा धर्माणामेकत्र युगपत्समर्थनम् ... ... | २०७ | ९ |
| प्रागभावस्याभावात्मकत्वनिरास ... | २०९ | १ |
| उत्पादविनाशयोरेकहेतुकत्वसमर्थनं बौद्धान् प्रति ... .. .. ... ... | २०९ | ४ |

| | क पत्रे ? | पङ्क्तौ ? |
|---|---|---|
| तत्र च स्वारम्भकावयवादिप्रक्रियाखण्डनम् ... . | २०९ | १० |
| कार्यत्वस्याल्पपरिमाणकारणारब्धत्वमतनिरास . .. | २०९ | १८ |
| तथापि तयोर्नाभेद इति समर्थनम् | २१० | १८ |
| न च सर्वथा भेद एवेति च प्रतिपादनम् . . . . . | २११ | १ |
| लौकिकेन सुवर्णदृष्टान्तेन तथा समर्थनम् | २११ | १८ |
| लोकोत्तरेण दध्यादिव्रतदृष्टान्तेन तथा समर्थनम् . | २१२ | ५ |

( अथ चतुर्थः परिच्छेदः )

| | | |
|---|---|---|
| कार्यकारणादीना वैशेषिकानुसारं सर्वथा नानात्वमाशङ्क्य . . | २१३ | १ |
| दोषं दर्शयन्त्याचार्या | २१४ | ८ |
| सर्वथा भेदे द्रव्यादौ गुणादिवृत्त्यसंभवदर्शनम् . | २१४ | १२ |
| वैशेषिकाभिमतसमवायसवन्धेनापि सवन्धासभव इति समवायं निरस्य सामान्यविशेषात्मकत्वसाधनाय तादात्म्यसिद्धि | २१५ | १ |
| तदन्तरे एवादृष्टकृत स सवन्ध इति मतं निरस्तम् ... . . | २१५ | १६ |
| सर्वस्य सामान्यविशेषात्मकत्वं पुन साधितम् .. . | २१६ | २० |
| द्रव्यगुणादौ कार्यकारणादौ च पृथक्त्वे एकाश्रयत्वासभावना .. | २१७ | ८ |
| यौगाभिमतसामान्यसमवाययो स्वरूपं खण्डन च . | २१८ | ८ |
| परस्परतो भिन्नाः परमाणव सन्ति ते च सर्वथा परित्यक्तरूपा इति बौद्धमतस्य खण्डनम् .. .. | २२२ | १६ |
| कार्यत्वपरिणामास्वीकारेऽण्वादिसभवो नेति प्रतिपादनम् | २२३ | १४ |
| साख्याना कार्यकारणयोरनन्यत्वे दूषणम् | २२४ | ८ |
| कार्यद्रव्यस्यानित्यत्वं परमाण्वादीना तु नित्यत्वमिति वैशेषिकमतनिरास ... | २२५ | १ |
| द्रव्यपर्याययो स्याद्वादाश्रयेण भेदाभेदसमर्थनम् . . | २२५ | ११ |

| | क पत्रे ? | पङ्क्तौ ? |
|---|---|---|

( अथ पञ्चमः परिच्छेदः )

| | | |
|---|---|---|
| कार्यकारणादे स्यादापेक्षिकी सिद्धि स्यादनापेक्षिकीति प्रतिपादनम् . | २३१ | १ |

( अथ षष्ठः परिच्छेदः )

| | | |
|---|---|---|
| युक्तित एव सर्वं साधनीयमागमत एव वेति मतस्य खण्डनम् ... | २३४ | ६ |
| सर्वं युक्त्यागमस्याद्वादेन साधयित्वा आगमलक्षणं चोक्त्वा वेदस्याप्रामाण्य साधितम् . | २३६ | ९ |
| वेदस्यापौरुषेयत्वखण्डनम् | २३७ | ४ |

( अथ सप्तमः परिच्छेदः )

| | | |
|---|---|---|
| अन्तरङ्गार्थबाह्यार्थविचार . . | २४० | १ |
| अन्तरङ्गं ज्ञानमेव तत्त्वमिति पक्ष सस्थाप्य तत्खण्डनम् .. | २४० | ६ |
| ज्ञानस्याद्वैतत्वे तत्साधनाय साध्यसाधनादिभेदासभव . | २४२ | ३ |
| वहिरर्थैकान्ते दोषदर्शनम् . | २४५ | १ |
| स्याद्वादेनान्तर्बहिश्च पदार्थसिद्धि कृता | २४६ | ५ |
| जीवसिद्धि शरीरादिव्यतिरिक्ता कृता सज्ञात्वहेतो . . | २४८ | १४ |
| अत्र चार्वाकबौद्धाशङ्कानामपनोद | २४९ | १ |
| सज्ञामात्रस्य भाववाचकत्वमिति साधितम् . ... | २४९ | ११ |
| सज्ञात्वमसिद्ध विज्ञानातिरिक्तस्याभावादिति विज्ञानवादिमतं निरस्य सज्ञा बाह्यार्थविशिष्टेति साधिता... | २५१ | १६ |
| बाह्यार्थे सत्येव शब्दोच्चारणबुद्धिप्रवृत्त्यादिसभावना दर्शिता | २५२ | १ |
| जीवादिवस्तुजातं क भ्रान्त काभ्रान्त चेति स्याद्वादेन साधितम् . | २५४ | १८ |

( अथ अष्टमः परिच्छेदः )

| | | |
|---|---|---|
| पुण्यपापकर्मबन्धनिदानविचार . | २५९ | १ |
| विशुद्धिसक्लेशाविति समर्थनम् . | २६० | ६ |

( अथ नवमः परिच्छेदः )

| | | |
|---|---|---|
| अज्ञानाद्बन्धो, ज्ञानान्मोक्ष इति साख्यमतं दूषितम् . ... | २६२ | १ |

| | क पत्रे १ | पङ्क्तौ १ |
|---|---|---|
| अत्र यौगमतं दूषितम् | २६३ | २० |
| अविद्यादेर्बन्ध इति बौद्धमतं दूषितम् | २६४ | १० |
| स्वमतेन बन्धमोक्षव्यवस्था दर्शिता | २६५ | १८ |
| कर्मणः पौद्गलिकत्वरूपेण समर्थनम् ... | २६६ | १४ |
| इच्छाकर्मणोरन्योन्यकारणकत्वसमर्थनम् | २६७ | १४ |
| तदन्तरे सर्वस्य परिणामित्वसाधनम् .. | २६८ | ९ |
| सृष्ट्युत्पत्तावीश्वरेच्छाकारणता परिहृता | २६८ | २१ |
| ईश्वरस्य कारणत्वपरिहार ... . | २६९ | २० |
| जीवाना शुद्धाशुद्धत्वसाधनम् | २७४ | १ |
| प्रमाणनयवर्णनप्रकरणम् . . . | २७५ | १६ |
| प्रमाणलक्षणं दर्शनसन्निकर्षयो परिहारश्च | २७५ | १८ |
| तत्त्वज्ञानस्य प्रामाण्ये स्याद्वादविरोधमाशङ्क्य तत्परिहार .. . | २७६ | १५ |
| बौद्धं प्रति सविकल्पानुमानयोः प्रामाण्यस्थापनम् . . | २७७ | ८ |
| स्मृते पृथक्प्रमाणत्वसमर्थनम् | २७९ | ५ |
| प्रत्यभिज्ञानस्य पृथक्प्रमाणत्वस० | २७९ | १९ |
| तर्कस्य पृथक्प्रमाणत्वस० ... . | २८० | ५ |
| सर्वप्रमाणभेदाना प्रत्यक्षपरोक्षयोरन्तर्दर्शनम् .. . | २८१ | १ |
| केवलज्ञानस्य युगपत्सर्वार्थग्राहकत्वं समर्थितम् . ... .. ... | २८१ | ५ |
| शेषज्ञानाना क्रमवर्तित्वसमर्थनम् .. | २८१ | १८ |
| प्रमाणस्य फलं दर्शितम् ... . | २८२ | २१ |
| तत्र केवलज्ञानस्योपेक्षैव फलमिति समर्थनम् ... . . .. | २८३ | २ |
| मतान्तरनिरासपूर्वं वाक्यलक्षणम् | २८४ | १५ |
| अनेकान्तस्य स्वरूपप्रतिपादनम् ... | २८६ | ५ |
| नैगमादिस्वरूपं तत्प्रभेदाश्च ... | २८७ | ७ |
| केवलागमयो समसामर्थ्यप्रतिपादनम् | २८८ | ६ |
| नय एव हेतुस्तस्य स्वरूपं, पक्षधर्मत्वादिहेतुस्वरूपताया दोषदर्शनं च . | २८९ | १ |
| द्रव्यस्वरूपम् ... .. | २९० | ७ |
| मिथ्यासम्यगेकान्तयोर्भेद .. ... | २९० | १७ |
| अनेकान्तत्वे जनाप्रवृत्तिमाशङ्क्य तत्समाधत्ते . . . ... . | २९१ | ३ |
| इतरेषामप्यन्धसर्पबिलप्रवेशन्यायेनानेकान्तस्वीकारता दर्शिता, केवलं... विधिना प्रतिषेधेन च वस्तुतत्त्वे दोष | २९२ | ४ |
| विधेयप्रतिषेधयो सभवप्रकार | २९३ | ९ |
| प्रारब्धनिर्वाहतत्फलयोरुल्लेख ... | २९४ | ७ |


---

## शुद्धिपत्रम् ।

| अशुद्धि | शुद्धि | क पत्रे १ | क पङ्क्तौ १ |
|---|---|---|---|
| प्रतिपादिका- | प्रतिपादका- | १२ | १३ |
| सत्त्वविधानुषङ्गात् | सत्त्वविधानानुषङ्गात् | १४ | ८ |
| सफला- | स फला- | २३ | १५ |
| प्युक्तम् | प्ययुक्तम् | २९ | १५ |
| जानाया- | जानीया- | ४५ | १ |
| निह्नव. । परस्य | निह्नव परस्य । | १०१ | ६ |
| -श्वशब्दस्य | -श्वशब्द. | १६८ | १३ |
| मात्रमाशङ्क्य | माशङ्क्य | २१४ | ७ |
| -सहितातत्त्व- | -सहितात्तत्त्व- | २६३ | १९ |
| चेत्सश्वर | चेश्वरस्य | २७१ | १८ |
| -गप्यागम- | -मप्यागम- | २७५ | ८ |



# श्रीमद्विद्यानन्दिस्वामिविरचिता

# अष्टसहस्री ।



श्रीवर्द्धमानमभिवन्द्य समन्तभद्रमुद्भूतबोधमहिमानमनिन्द्यवाचम् ।
शास्त्रावताररचितस्तुतिगोचराप्तमीमांसितं कृतिरलङ्क्रियते मयास्य ॥ १ ॥

१ ॐ नमः । इह हि खलु पुरा स्वकीयनिरवद्यविद्यासंयमसम्पदा गणधरप्रत्येकबुद्धश्रुतकेवलिदशपूर्वाणां सूत्रकृन्महर्षीणां महिमानमात्मसात् कुर्वद्भिर्भगवद्भिरुमास्वामिपादैराचार्यवर्यैरासूत्रितस्य तत्त्वार्थाधिगमस्य मोक्षशास्त्रस्य गन्धहस्त्याख्यं महाभाष्यमुपनिबध्नन्तः स्याद्वादविद्याग्रगुरव श्रीस्वामिसमन्तभद्राचार्यास्तत्र मङ्गलपुरस्सरस्तवविषयपरमाप्तगुणातिशयपरीक्षामुपक्षिप्तवन्तो देवागमाभिधानस्य प्रवचनतीर्थस्य सृष्टिमापूरयाञ्चक्रिरे । तदनु सकलतार्किकचक्रचूडामणिमरीचिमेचकितचरणनखकिरणो भगवान् भट्टाकलङ्कदेवस्तदेतस्याष्टशत्याख्येन भाष्येणोन्मेषमकार्षीत् । तदेवं महाभागैस्तार्किकार्कैरुपज्ञाता श्रीमता वादीभसिंहेनोपलालितामाप्तमीमांसामलंचिकीर्षव स्याद्वादोद्भासिसत्यवाक्यसारा गिरा चातुरीमाविर्भावयन्तः प्रतिज्ञाश्लोकमाहुः "श्रीवर्धमानमित्यादि" अस्यार्थ ।— अलङ्क्रियते विभूष्यते । केन ? मया विद्यानन्दसूरिणा । अनेनालङ्कारस्य महत्त्वमुद्द्योतितम् । का ? कृतिः सन्दर्भ । किंरूपा ? शास्त्रावताररचितस्तुतिगोचराप्तमीमांसितम् । विशेष्यविशेषणयोराविष्टलिङ्गत्वादयं निर्देशो यथा ।—रमणीरत्नमुर्वशीति । कस्य ? अस्य स्वामिसमन्तभद्राचार्यस्य । माहात्म्यमावेदितम् । श्रीवर्द्धमानः समन्तभद्रः सूरिरनिन्द्यवागित्येतत्त्रितयस्यानन्तरोक्तस्यास्येत्यनेन परिग्रहप्राप्तावपि सूरेरेव परिगृहीतिः कृतेरनेनैव प्रत्यासत्तिप्रकर्षयोगात् । किं कृत्वा ? प्रागभिवन्द्य अभितः समन्तान्मनसा वचसा वपुषा च वन्दित्वा । अनेन नमस्कृतावास्तिक्यस्यास्तित्वमादर्शितम् । कम् ? श्रीवर्द्धमानम् । अव समन्तादृद्धं प्रवृद्ध मानं केवलज्ञानं यस्यासौ तथोक्तः । श्रिया समवसरणादिलक्षणया परमार्हन्त्यलक्ष्म्या लक्षितो वर्द्धमानः श्रीवर्द्धमानः परमजिनेश्वरसमुदयस्तम् ( अर्थसमुदयस्यार्थं कथम् ? अव समन्तादृद्धं परमातिशयप्राप्तं मानं केवलज्ञानं यस्यासौ वर्द्धमानः । अवाप्योरल्लोप इत्यवशब्दस्याकारलोप । श्रिया वहिरङ्गया चान्तरङ्गया समवसरणानन्तचतुष्टयलक्षणया चोपलक्षितो वर्द्धमान श्रीवर्द्धमानोऽर्हत्समुदय इति व्युत्पत्ते ) अनेन परमार्हतां समुदयमिति वृत्तिकारोक्तप्रतिज्ञाश्लोकनमस्कृतौ विशेष्यमुपात्तम् । कथम्भूतम् ? समन्तभद्रम् । समन्ताद्भद्राणि शतमखशताभिवन्दितानि गर्भावतरणमहिमादिकल्याणानि यस्य तम् । अनेनाखिलैरिन्द्रादिभिर्वन्दितमिति विशेषणमुपगृहीतम् । भूय कथम्भूतम् ? २ उद्भूत प्रसिद्धो बोधस्य महिमा वस्तुयाथात्म्यप्रकाशनसामर्थ्यलक्षणो यस्य तम् । अनेनाऽचलज्ज्योतिर्ज्वलत्केवलालोकालोकितलोकालोकमिति विशेषणं स्वीकृतम् । अचलैर्निर्बाधैर्ज्योतिर्भिर्निर्भासैर्ज्वलता दीप्यमानेन केवलालोकेन केवलदर्शनेनालोकितौ लोकालोकौ येन तमिति प्रतिपादनात् । भूयोपि कथम्भूतम् ? अनिन्द्यवाचम् । अनिन्द्यानेकान्तनीतिगङ्गाप्रवाहावगाहिनी वाग् वाणी यस्य तम् । अनेनोद्दीपीकृतधर्मतीर्थमिति विशेषणमात्मीकृतम् । उद्दीपीकृतं धर्मप्रतिपादक तीर्थं शास्त्रं येनेति व्युत्पादनात् । भगवान् श्रीवर्द्धमानः कल्याणसम्पदाशंसिनामभिवन्द्यः सकलकल्याणसम्पदभिरामत्वात् । यथा सकललक्ष्मीसम्पदभिराम सार्वभौमो लक्ष्मीसम्पदाशंसिनामिति स्वभावलिङ्गजनितमनुमानम् । सकलकल्याणसम्पदभिरामोऽयमुद्भूतबोधमहिमत्वादिति कारणसहचरलिङ्गजनितं केवलज्ञानोदयसहभाविनस्तीर्थकरपुण्योदयात् सकलकल्याणाभिरामपरमार्हन्त्यलक्ष्मीसम्पत्सयुतै सर्वत्रोद्भूतमहिमायं तत्र युक्तिशास्त्राविरोधिवाक्त्वात् । यथैवागदङ्कारकर्मणि युक्तिशास्त्राविरोधिवाग्भिषग्वरस्तत्रोद्भूतमहिमेति कार्यलिङ्गजनितं महीयसां वचनातिशयस्य प्रज्ञातिशयनिबन्धनत्वादिति । एवमुत्तरत्र व्याख्याद्वयेपि यथासम्भवं हेतूपन्यास प्रतिपत्तव्यः ।

अथवा अभिवन्द्य । कम् ? समन्तभद्रं समन्तभद्राचार्यम् । कीदृशम् ? श्रीवर्धमानं श्रिया निखिलविद्यालङ्कारनिरवद्यस्याद्वादविद्याविभवाधिपत्यलक्षणया लक्ष्म्या वर्द्धमानमेधमानम् । साक्षात्कृतसकलवाङ्मयत्वेन समस्तविद्याविदा परमैश्वर्यमातिष्ठ-

श्रेयः श्रीवर्द्धमानस्य परमजिनेश्वरसमुदयस्य समन्तभद्रस्य तदमलवाचश्च संस्तवनेमाप्तमीमांसितस्यालङ्करणे तदाश्रयत्वादन्यतमासम्भवे तदघटनात् । तद्वृत्तिकारैरपि तत एवोद्दीपीकृतेत्यादिना तत्संस्तवनविधानात् । देवागमेत्यादिमङ्गलपुरस्सरस्तवविषयपरमाप्तगुणातिशयपरीक्षामुपक्षिपतैव स्वयं श्रद्धागुणज्ञतालक्षणं प्रयोजनमाक्षिप्तं लक्ष्यते । तदन्यतरापायेऽर्थस्यानुपपत्तेः । शास्त्रन्यायानुसारितया तथैवोपन्यासात् । इत्यनेन ग्रन्थकारस्य श्रद्धागुणज्ञतालक्षणे प्रयोजने, शास्त्रारम्भस्तवविषयाप्तगुणातिशयपरीक्षोपक्षेपस्य साधन-

मानस्य स्याद्वादविद्याग्रगुरोर्महामुनेः श्रीवर्द्धमानतायां विवादाभावात् । भूयः कीदृशम् ? उद्भूतबोधमहिमानम् । उद्भूतो बोधस्य महिमा भव्यानां कलिकालेप्यकलङ्कभावाविर्भावाय स्याद्वादतत्त्वसमर्थने पटिमा यस्य तम् । भूयोपि कीदृशम् ? अनिन्द्यवाचम् । अनिन्द्या सप्तभङ्गीसमालिङ्गिता वागाप्तमीमांसास्तुतिर्यस्य तम् । अनेन स्याद्वादविद्याधिपत्यं भव्याकलङ्कभावाविर्भावनावैदग्ध्यं तीर्थप्रभावनाप्रागल्भ्यमिति विशेषणत्रयेण तीर्थमित्येतदादौ कृत्वेत्येतदन्ते वृत्तांशे वाक्यत्रयोपदर्शितं सूरेर्विशेषणत्रयं सबोधितम् । तत्राद्येन विशेषणेन सर्वपदार्थतत्त्वविषयस्याद्वादपुण्योदधेरुद्धृत्यैतद्वाक्यमाश्लिष्टं भगवानयमाचार्यः स्याद्वादविद्याविभवाधिपतिस्तद्विद्यामहोदधेरुद्धृत्य प्रकरणमारचयितृत्वात् । यथा सकलश्रुतविद्यामहोदधेरुद्धृत्योत्तराध्ययनप्रकरणमारचयन् भद्रबाहुस्तद्विद्याविभवाधिपतिरित्युपपादनात् । द्वितीयेन भव्यानामकलङ्कभावकृतये काले कलावित्येतदिष्ट स्पृष्टम् । तृतीयेन तीर्थं प्राभावीत्येतदुपक्षिप्तमिति । विशेष्यं तु प्रसिद्धमेव ।

अथवाभिवन्द्य । कम् ? अनिन्द्यवाचम् । अनिन्द्या प्रमाणाबाधा पूर्वापरविरोधविधुरा वाग्व्याहृतिर्यस्मिन्नसावनिन्द्यवाक् प्रस्तुतत्वात् समन्तभद्राचार्यकृतिराप्तमीमासास्तवस्तम् । अनेन गामिति विशेष्यमालिङ्गितम् । कीदृशम् ? श्रीवर्द्धमानम् । श्रिया नानाभङ्गीभावसुव्यक्तमूर्त्या स्यात्कारलक्ष्म्या वर्द्धमानमभ्युदयमानम् । अनेन सप्तभङ्गीविधिमिति विशेषणमुपगूढम् । भूयः कीदृशम् ? समन्तभद्रं समन्तात्सर्वतो भद्रं सहृदयहृदयाल्हादितत्त्वागमसुधासारनिष्यन्दिसूक्तिरमणीयमिति यावत् । अनेन स्याद्वादामृतगर्भिणीमिति विशेषण परिरब्धम् । अनेकान्ततत्त्वाकलनात्मना पीयूषेण सान्तस्सारमिति गोशब्दस्य धेन्वर्थवृत्तितामभिसमीक्ष्य प्रतिपादनात् । भूयोपि कीदृक्षम् ? उद्भूतबोधमहिमानम् । उद्भूतो बोधस्यानेकान्ततत्त्वप्रकाशस्य महिमा दुरितैकान्तवादतमस्काण्डखण्डने प्रचण्डिमा यस्माद्विनेयानां तम् । अनेन प्रतिहतैकान्तान्धकारोदयामिति विशेषणं परिष्वक्तम् । गोशब्दस्य दीप्त्यर्थविषयतामाकलय्य निवेदनात् । शास्त्रं तत्त्वार्थसूत्रं तस्यावतारः प्रारम्भस्तस्मिन् रचिता यासौ स्तुति "मोक्षमार्गस्य नेतारं कर्मभूभृतां भेत्तारं"मित्यादिस्तस्या गोचरो विषयोसावाप्तस्तस्य मीमांसितं या । अस्मिन् श्लोके पूर्वार्द्धेन भाष्यादिपद्यद्वयार्थः उत्तरार्द्धेन प्रथमभाष्यार्थश्च सङ्गृहीत समस्तुः । **सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुगामिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ।**

१ ननु चेष्टदेवतामभिष्टुत्यैव सर्वेपि शास्त्रकृतः शास्त्रमुपक्रमन्ते न पुन स्तुत्यस्तोतृस्तुतीस्त्रयस्तोत्रमिदं शास्त्रादौ भगवता सूचितं कथं सौन्दर्यमास्कन्दतीत्याशङ्कायामाह श्रेय इत्यादि । २ इदं साध्यम् । अनेन श्लोकवर्त्यभिवन्धशब्द संस्तवनार्थ एव न तु प्रणमनार्थं इति प्रकाशित (तम्) । अनेनोपकारकरणार्थं स्तुत्यादित्रयस्सस्तवनं कृतमिति प्रकाशितं **श्रेयोमार्गस्य संसिद्धिरि**त्यादौ तथैव श्रवणात् । अतएव तदाश्रयत्वात्तदन्यतमासम्भवे तदघटनात् अनेन सम्मितिर्दर्शिता भाष्यादिपद्यद्वयस्याभिप्रायश्च सूचित, भाष्यानुसारेणैवालङ्कारः क्रियते इति च प्रकाशितः (तम्) । ३ पक्षः । ४ ननु चास्यालङ्करणस्य स्तुत्यस्तोतृस्तुतिनिमित्तकत्वेपि तत्र तत्त्रयस्तोत्रेण श्रेयसा भाव्यमिति कोयं नियम इत्याशङ्कायामाह तद्वृत्तिकारैरपीत्यादि । भट्टाकलङ्कदेवैः । ५ नन्वस्य भगवत समन्तभद्रस्य समन्तभद्रादयस्त्रिस एव कृतयः श्रूयन्ते न तु शास्त्रावताररचितस्तुतिगोचराप्तमीमासितं नाम कृतिस्तस्मात्कथमियं प्रतिज्ञा सुघटनामटतीत्युक्ते वक्ति देवागमेत्यादि । मोक्षमार्गस्य नेतारमित्यादि । ६ स्वीकुर्वता समन्तभद्रस्वामिना । ७ स्वस्य समन्तभद्रस्य । ८ प्रेरकत्वं वाऽऽराध्यत्वेन ज्ञानं भक्तिस्तत्रात्यन्तमनुरागः श्रद्धा । ९ कटाक्षितसुसूचितमित्यर्थं । प्रतिज्ञातम् । स्वीकृतम् । सामर्थ्येनोपपन्नम् । सङ्गृहीतम् । १० (यत) प्रयोजनाभावे शास्त्रकरणं न स्यात् । ११ तयोः श्रद्धागुणज्ञतयोर्मध्ये एकस्याभावे । १२ परीक्षालक्षणस्य, देवागमस्तवस्य, । १३ प्रयोजनानुसारेण शास्त्रकरणं घटते । १४ अनुपपत्ति कुत इत्याह पूर्वशास्त्रानुसारितया । १५ ग्रन्थकारस्य तत्त्वार्थशास्त्रप्रसिद्धानुसारित्वेन स्वोपक्रान्तत्वस्वरुचिविरचितत्वपरिहारलक्षणप्रयोजनेन मङ्गलपुरस्सरस्तवविषयेत्यादिप्रकारेणैवोपन्यासात् । अन्यथानुपपत्तिप्रकारेण परीक्षात्वेन वा । १६ वृत्तिग्रन्थेन । १७ ग्रन्थकारः पक्ष । १८ प्रेरकत्वे । १९ मोक्षमार्गस्येत्यादि । २० मोक्षमार्गप्रणेतृत्वादि । २१ विरुद्धनानायुक्तिप्राबल्य (घटमानयोश्च) दौर्बल्यावधारणाय प्रवर्त्तमानो विचारः परीक्षा । सा खल्वेवं चेदेवं स्यादेवं चेदेवं स्यादेवं चेदेवं न स्यादित्येव प्रवर्त्तते । २२ स्वीकारस्य । २३ श्रद्धागुणज्ञतालक्षणं प्रयोजनं पक्ष धर्मित्वं समन्तभद्राचार्यस्यास्ति आप्तगुणातिशयपरीक्षोपक्षेपान्यथानुपपत्तेः ।

त्वसमर्थनात् । शास्त्रावताररचितस्तुतिगोचराप्तमीमांसितमिदं शास्त्रं देवागमाभिधानमिति निर्णयः[1] । मङ्गलपुरस्सरस्तवो[3] हि शास्त्रावताररचितस्तुतिरुच्यते । मङ्गलं पुरस्सरमस्येति मङ्गलपुरस्सरः शास्त्रावतारकालस्तत्र रचितः स्तवो मङ्गलपुरस्सरस्तवः इति व्याख्यानात् । तद्विषयो यः परमाप्तस्तद्गुणातिशयपरीक्षा तद्विषयाप्तमीमांसितमेवोक्तम् । तदेवं निःश्रेयसशास्त्रस्यादौ तन्निबन्धनतया मङ्गलार्थतया च मुनिभिः संस्तुतेन निरतिशयगुणेन भगवताप्तेन श्रेयोमार्गमात्महितमिच्छतां सम्यग्मिथ्योपदेशार्थविशेषप्रतिपत्त्यर्थमाप्तमीमांसां विदधानाः, श्रद्धागुणज्ञताभ्यां प्रयुक्तमनसः, कस्माद् देवागमादिविभूतितोऽहं महान्नाभिष्टुत इति स्फुटं पृष्टा इव स्वामिसमन्तभद्राचार्याः प्राहुः—

**देवागमनभोयानचामरादिविभूतयः। मायाविष्वपि दृश्यन्ते नातस्त्वमसि नो महान्॥१॥ इति**

देवागमादीनामादिशब्देन प्रत्येकमभिसम्बन्धनाद्देवागमादयो नभोयानादयश्चामरादयश्च विभूतयः परिगृह्यन्ते ताश्च भगवतीव मायाविष्वपि मस्करिप्रभृतिषु दृश्यन्ते इति तद्वत्तया भगवन्नोऽस्माकं परीक्षाप्रधानानां महान्न स्तुत्योऽसि । आज्ञाप्रधाना हि त्रिदशादिकं परमेष्ठिनः परमात्मचिन्हं प्रतिपद्येरन् नास्मदादयस्तादृशो मायाविष्वपि भावादित्यागमाश्रयोऽयं स्तवः। श्रेयोमार्गस्य प्रणेता भगवान् स्तुत्यो महान् देवागमनभोयानचामरादिविभूतिमत्त्वाद्यन्यथानुपपत्तेरिति हेतोरप्यागमाश्रयत्वात् । तस्य च प्रतिवादिनः प्रमाणत्वेनासिद्धेः तदागमप्रामाण्यवादिनामपि विपक्षवृत्तितया गमकत्वायोगात् । तदागमादेव हेतोर्विपक्षवृत्तित्वप्रसिद्धेः । परमार्थपथप्रस्थायियथोदितविभूतिमत्त्वस्य हेतोर्मायोपदर्शिततद्विभूतिमद्भिर्मायाविभिर्व्य-

---

१ अर्थस्यानुभवगम्यस्य परीक्षाविशेपस्य गुणातिशयपरीक्षोपक्षिप्तस्यास्यैव तावद्देवागमाभिधानमिति निर्णय'। कथमिति चेदुच्यते । अस्य देवागमत्वान्निर्णये ग्रन्थकारस्य श्रद्धागुणज्ञतालक्षणे प्रयोजने साध्ये साधनमिदं न भवत्येव स्वरूपासिद्धत्वात् । कथमिति चेद्देवागममन्तरेणान्यस्य मोक्षशास्त्रारम्भरचित"मोक्षमार्गस्य नेतार"मित्यादिस्तवनविषयाप्तगुणातिशयपरीक्षारूपाया समन्तभद्राचार्यकृते. सर्वथाप्यसम्भवात् । निश्श्रेयसपूर्वोक्तशास्त्रशब्दस्यार्थोऽयम् । २ एतच्च विभावयति । ३ नन्वेवमपि शास्त्रारम्भस्तवविपयपरमात्मगुणातिशयपरीक्षैव देवागमाभिधानं लब्धुमर्हति देवागमेत्यादिमङ्गलपुरस्सरस्तवविपयपरमात्मगुणातिशयपरीक्षामित्यनेन तयोरेकत्वेनाभिधानात्, न पुन शास्त्रावताररचितस्तुतिगोचराप्तमीमासितं देवागमाभिधानं लब्धुमर्हति। तत कथमिदमुक्तम्।—शास्त्रावताररचितस्तुतिगोचराप्तमीमासितमिदं शास्त्रं । देवागमाभिधानमित्युक्ते तद्गुणातिशयपरीक्षातदाप्तमीमांसितयोरेकत्वे साधिते तदाप्तमीमासितमपि देवागमाभिधानं भविष्यत्येवेति स्वीकृत्य तयोरेकत्वसमर्थनार्थमाह ।— मङ्गलपुरस्सरेत्यादि । ४ मोक्षमार्गप्रणेतृत्वादि । ५ ननु च मीमासितं, परीक्षा, विचार इत्यनर्थान्तर तच्च वादिप्रतिवादिभ्या भवितव्यम् । तथा च सति समन्तभद्राचार्यस्य महावादिन प्रतिवादी न कश्चिन्मनुष्यमात्र सम्भवत्येव ( अवटुतटमटति झटिति स्फुटतटवाचाटधूर्जटेर्जिव्हा । वादिनि समन्तभद्रे कान्येपा संकथा तत्र ) तत. कथमाप्तमीमासाविधानमुपपद्यते इति पृष्ट' सन्नाचष्टे तदेवमित्यादि । तदेवमुक्तन्यायेनेत्यर्थ । ६ तत्त्वार्थसूत्रस्य । ७ मोक्षनिमित्त मङ्गलनिमित्तमाचार्या शास्त्रं कुर्वन्ति । ८ उमास्वामिपादै गृद्धपिच्छाचार्यापरनामधेयै "आचार्य कुन्दकुन्दाख्यो वक्रग्रीवो महामति. । एलाचार्यो गृद्धपिच्छ पद्मनन्दी वितन्यते"॥१॥ "तत्त्वार्थसूत्रकर्तृत्वात्प्रकटीकृतसन्मत. । उमास्वामिपदाचार्यो मिथ्यात्वतिमिरांशुमान् ॥ २ ॥ ( टिप्पण्यन्तरम् )। ९ विनेयानाम् । १० यस ( द्वन्द्वसमास )। ११ अर्थविशेपप्रतिपत्त्यर्थं शास्त्रन्यायानुसारितया तथैवोपन्यासादिति पूर्वोक्तभाष्यांशविवरणमिदम्। एवं यथायोग्यं ज्ञातव्यम्। १२ कुर्वाणा समन्तभद्राचार्या । १३ जिन , परमेष्ठी। १४ तत्त्वार्थसूत्रकारै । १५ मोक्षमार्गस्य नेता कर्मभूभृता भेत्ता विश्वतत्त्वाना ज्ञातेति विशेपणत्रयेणाहं स्तुत सूत्रकृता भो समन्तभद्राचार्या देवागमादिविभूत्या त्व महानिति कुतोहं नाभिष्टुत इति पृष्टा इव । १६ इति हेतो । अथवा देवागमादिविभूतित । १७ वर्द्धमान । १८ अस्माक परीक्षाप्रधानाना समन्तभद्रादीनाम् । १९ चक्रवर्त्यागमादि । २० चतुरास्यत्वादि । २१ सुरपुष्पवृष्ट्यादि । २२ परीक्षाप्रधानाना स्तुत्यो नासीत्यादि भावयति । २३ आज्ञावशवर्तिन । २४ देवागमादिचिन्हस्य । २५ इति हेतो । २६ देवागमादिविभूतितस्त्वं महानित्ययम् । २७ महत्वाभावे । २८ जैनागमसत्यवादिना स्याद्वादिनामपि विपक्षेषु मस्करिप्रभृतिषु प्रवर्त्तमानत्वाद्धेतो साधकत्वासम्भवात् । २९ माययोपदर्शिताश्च तास्तद्विभूतयो देवागमादिविभूतयस्तास्सन्ति येपा मायाविना ते मायोपदर्शिततद्विभूतिमन्तस्तै. ।

१ आप्तस्येति, २ मीमांसकस्य, ३ देवागमादि प्रतिपादक

भिचारः [1]सत्यधूमवत्त्वादेः पावकादौ साध्ये स्वप्नोपलब्धधूमादिमता देशादिनानैकान्तिकत्वप्रसङ्गात् सर्वा[3]-नुमानोच्छेदात्। इति चेत् तर्हि मा भूद[2]स्य हेतोर्व्यभिचारः पारमार्थिक्यः पुरन्दरभेरीनिनादादिकृतप्रति[4]घा-तागोचरचारिण्यो यथोदितविभूतयस्तीर्थकरे भगवति त्वयि तादृश्यो मायाविष्वपि ने[5]त्यतस्त्वं महानस्माकम-सीति[6] व्याख्याना[7]द्ग्रन्थविरोधाभावादिति कश्चि[8]त्, सोपि कुतः प्रमाणात्प्रकृ[9]तहेतुं विपक्षासम्भ[10]विनं प्रतीया[11]त् ? न तावत्प्रत्यक्षादनुमानाद्वा त[12]स्य त[13]दविषयत्वात्। नाप्यागमादसि[14]द्धप्रामाण्यात्तत्प्रतिपत्तिरतिप्रसङ्गात्। प्र[15]माणतः सिद्धप्रामाण्यादागमात्तत्प्रतिपत्तौ ततः सा[16]ध्यप्रतिपत्तिरेवास्तु परम्प[17]रापरिश्रमपरिहारश्चैवं[18] प्रतिपत्तुः स्यात्। [19]ततः सूक्तं सर्वथा नातो हेतोस्त्वमसि नो महांस्तस्यागमाश्रयत्वादिति। तर्ह्यन्तरङ्गवहिरङ्गविग्रहादिमहोदये-नान्यजनाति[20]शायिना स[21]त्येन स्तोत[22]व्योहं महानिति भगव[23]त्पर्यनुयोगे सतीव प्राहुः ।—

अध्यात्मं बहिरप्येष विग्रहादिमहोदयः। दिव्यः सत्यो दिवौकस्स्व[24]प्य[25]स्ति रा[26]गादिमत्सु सः ॥२॥

आत्मानमधिश्रित्य वर्त्तमानोऽध्यात्ममन्तरङ्गो विग्रहादिमहोदयः शश्वन्निःस्वेदत्वादिः परानपेक्ष[27]त्वात्। ततो वहिर्गन्धोदकवृष्ट्यादिर्वहिरङ्गो देवोपनीतत्वात्। स च सत्यो मायाविष्वसत्त्वात्। दिव्यश्च मनुजेन्द्रा[28]-णामप्यभावात्। स एष बहिरन्तःशरीरादिमहोदयोपि पूरणादिष्वसम्भवी व्यभिचारी स्वर्गिषु भावादक्षी-णकषायेषु। [29]ततोपि न भवान् परमात्मेति स्तूयते। [30]अथ यादृशो घातिक्षयजः [31]स भगवति न तादृशो देवेषु ये[32]नानैकान्तिकः स्यात्। दिवौकस्स्वप्य[33]स्ति रागादिमत्सु सः नैवास्तीति व्याख्यानादभिधीयते तथाप्यागमाश्रयत्वादहेतुः पूर्व[34]वत्। ननु प्रमाणसंप्लववादि[35]नां प्रमाणप्रसिद्धप्रामाण्यादागमात्[36]साध्यसिद्धावपि तत्प्रसिद्धसाधनजनितानुमानात्पुनस्तत्प्रतिपत्तिरविरुद्धैवेति चेन्न, उ[37]पयोगविशेषस्याभावे प्रमाणसंप्लवस्यान-भ्युपगमात्। सति हि प्रतिपत्तुरुपयोगविशेषे दे[38]शादिविशेषसम[39]वधानादागमात्प्रतिपन्नमपि हिरण्यरेतसं स पुनरनुमानात्प्रतिपित्सते। तत्प्रतिबद्धधूमादिसाक्षात्करणात्प्रतिपत्तिविशेषघटनात्। पु[40]नस्तमेव प्रत्यक्षतो बुभुत्सते। त[41]त्करणसम्बन्धात्तद्विशे[42]षप्रतिभा[43]ससिद्धेः। न चै[44]वमागममात्रगम्ये साध्ये साधने च त[45]त्प्रतिप-

---

१ अत्राह कश्चित्स्वमतवर्त्ती 'हे समन्तभद्राचार्या मायाविभिः कृत्वास्य हेतोर्व्यभिचारो नास्ति तदेव सत्यधूमवत्त्वादेरित्या दिना दर्शयति। २ देवागमादिमत्त्वस्य। ३ विनाश। ४ मायाविषु तादृश्यो विभूतयो न दृश्यन्ते। ५ इति हेतोः। ६ देवागमादिश्लोकस्यैवं व्याख्यानादित्यर्थ। ७ व्यभिचाराभावे देवागमेत्यादिग्रन्थविरोध इत्यत आह ग्रन्थविरोधाभावात्। ८ तटस्थः स्वमतवर्त्ती पृच्छति। ९ देवागमादिहेतुम्। १० मष्करिष्वसम्भविनम्। ११ निश्चीयात्। १२ विभूतिमत्त्वादिहेतोः। १३ तयो प्रत्यक्षानुमानयोरगोचरत्वात्। प्रत्यक्षाच्चामरादिविभूतिर्न दृश्यते नाप्यनुमानेन हेतोरसिद्धेरिति प्रत्यक्षानुमानाभ्यां हेतुरयं गोचरो न। १४ असिद्धप्रमाणत्वादागमात्तस्य हेतोः परिज्ञानं चेत्तदातिप्रसङ्गः। १५ अयमागमो धर्मी प्रमाणं भवितुमर्हति पूर्वापरविरोधरहितत्वादित्यनुमानात् प्रमाणात्। १६ महानिति। १७ आगमाद्धेतुप्रतिपत्तित. साध्यसिद्धिरिति परम्परापरिश्रमस्तस्यपरिहार.। १८ आगमात्साध्यप्रतिपत्तिप्रकारेण। १९ निर्विशेषे सति विशेषव्याख्यानद्वयस्यागमाश्रितत्वं यत। २० मस्करिपूरणाद्यन्यजनेभ्योतिशयवता। २१ परमार्थभूतेन। २२ अहं पक्ष. महान् भवामीति साध्यो धर्म अन्तरङ्ग-वहिरङ्गविग्रहादिमहोदयसद्भावान्यथानुपपत्ते। २३ प्रश्ने। २४ अक्षीणकषायेषु देवेषु। २५ वर्त्तते यस्मात्तस्मात्त्वं महान्न। अथवा किमस्तीति काकु नास्तीत्यर्थ.। अतस्त्वं महानस्माकमसीत्यभिप्रायो भगवत.। २६ आदिशब्दान्मोहद्वेषमदाहङ्काराणां ग्रहणम्। २७ मन्त्राद्यनपेक्षत्वात्। २८ चक्रवर्त्यादीनाम्। २९ हेतोर्व्यभिचारित्वात्। ३० यदि। आह स्वमतवर्त्ती। ३१ विग्रहादिमहोदय.। ३२ न केनापि। ३३ किमस्तीति काकुः नास्तीत्यर्थ.। ३४ सोपि प्रकृतहेतुं विपक्षासम्भविनं कुत प्रतीयादित्यादिसम्बन्धनीयम्। ३५ वहूना प्रमाणानामेकस्मिन्नर्थे प्रवृत्ति प्रमाणसम्प्लव.। जैनानाम्। ३६ महत्ता। ३७ परिच्छित्ति। ३८ कालस्वरूपम्। ३९ निर्णयात्। ४० पुनः स प्रतिपत्ता तं हिरण्यरेतसं साक्षाद्बोद्धुमिच्छति। कस्मात्? अग्निनेत्रेन्द्रियसंयोगात्साध्यविशेषप्रतिभास सिद्ध्यति यत। ४१ इन्द्रियेण। ४२ पिङ्गभासुराकार। ४३ विशेषप्रतिभास-सिद्धेरिति वा पाठ.। ४४ अग्निप्रकारेण। ४५ प्रमाणसंप्लवेन तस्य साध्यस्य परिज्ञानविशेषो नास्ति।

त्विविशेषोऽस्तीति किंमकारणमत्र प्रमाणसंप्लवोऽभ्युपगम्यते प्रत्यक्षनिश्चितेऽग्नौ धूमे च तदभ्युपगमप्रसङ्गात् । सर्वथा विशेषाभावात् । ततो देवागमनभोयानचामरादिविभूतिभिरिवान्तरङ्गबहिरङ्गविग्रहादिमहोदयेनापि न स्तोत्रं भगवान् परमात्मार्हति । तर्हि तीर्थकृत्सम्प्रदायेन स्तुत्योऽहं महानिति भगवदाक्षेपप्रवृत्ताविव साक्षादाहुः—

तीर्थकृत्समयानां च परस्परविरोधतः । सर्वेषामाप्तता नास्ति कश्चिदेव भवेद्गुरुः ॥ ३ ॥

इति भगवतो महत्त्वे साध्ये तीर्थकरत्वं साधनं कुतः प्रमाणात् सिद्धम् ? न तावदध्यक्षात्तस्य तद्विषयत्वात्साध्यवत् । नाप्यनुमानात्तदविनाभाविलिङ्गाभावात् । समयात्सिद्धमिति चेत् पूर्ववदागमाश्रयत्वादगमकत्वमस्य व्यभिचारश्च । न हि तीर्थकरत्वमाप्ततां साधयति—शक्रादिष्वसम्भवि सुगतादौ दर्शनात् । यथैव हि भगवति तीर्थकरत्वसमयोऽस्ति तथा सुगतादिष्वपि । सुगतस्तीर्थकरः, कपिलस्तीर्थकर इत्यादिसमयाः सन्तीति सर्वे महान्तः स्तुत्याः स्युः । न च सर्वे सर्वदर्शिनः परस्परविरुद्धसमयाभिधायिनः । तदुक्तम् ।—"सुगतो यदि सर्वज्ञः कपिलो नेति का प्रमा । तावुभौ यदि सर्वज्ञौ मतभेदः कथं तयो"रिति । ततोऽनैकान्तिको हेतुस्तीर्थकरत्वाख्यो न कस्यचिन्महत्त्वं साधयतीति कश्चिदेव गुरुर्महान् भवेत् ? नैव भवेदित्यायातम् । अत एव न कश्चित्पुरुषः सर्वज्ञः स्तुत्यः श्रेयोऽर्थिना श्रुतेरेव श्रेयःसाधनोपदेशप्रसिद्धेरित्यपरः । तं प्रत्यपीयमेव कारिका योज्या । तीर्थं कृन्तन्तीति तीर्थकृतो मीमांसकाः सर्वज्ञागमनिराकरणवादित्वात् । तेषां समयास्तीर्थकृत्समयास्तीर्थच्छेदसम्प्रदाया भावनादिर्वाक्यार्थप्रवादा इत्यर्थः । तेषां च परस्परविरोधादाप्तता संवादकर्तृता नास्तीति कश्चिदेव सम्प्रदायो भवेद्गुरुः संवादको नैव भवेदिति व्याख्यानात् । तदेवं वक्तव्यम् ।—भावना यदि वाक्यार्थो नियोगो नेति का प्रमा । तावुभौ यदि वाक्यार्थौ हतौ भट्टप्रभाकराविति । कार्येऽर्थे चोदनाज्ञानं स्वरूपे किन्न तत्प्रमा । द्वयोश्चेद्धन्त तौ नष्टौ भट्टवेदान्तवादिनाविति । ननु मे भावनावाक्यार्थ इति सम्प्रदायः श्रेयान् नियोगे बाधकसद्भावात् । नियुक्तोऽहमनेनाग्निष्टोमादिवाक्येनेति निरवशेषो योगो हि नियोगस्तत्र मनागप्ययोगस्य सम्भवाभा-

१ किमिति किमर्थम् । २ कारणं विना । ३ साध्ये । ४ अग्नौ धूमे च प्रत्यक्ष निश्चिते सति तस्य प्रमाणसंप्लवस्याङ्गीकारप्रसङ्गो घटते । ५ दिव्यैरूपस्यात्मनाविना आगमेन । ६ प्रवक्तृतां सत्याम् । ७ तीर्थं परमागमलक्षणं कुर्वन्ति ये ते तीर्थकृतो जैनव्यतिरिक्तादिनः कपिलादयस्तेषां समया आगमास्तेषाम् । ८ स्वकीयस्वकीयभिन्नाभिप्रायेण । ९ मीमांसक, सांख्य, सौगत, नैयायिक, चार्वाक, तत्त्वोपप्लववादि, योग, ब्रह्माद्वैतवादि, पुरुषाद्वैतवादि, चित्राद्वैतवादि, शब्दाद्वैतवादि, ज्ञानाद्वैतवादिप्रमुखाणां वादिनामेकान्तमताश्रयिणाम । १० यथाभूतार्थोपदेष्टृत्वम । ११ परमतापेक्षया काक्वा व्याख्यान, कश्चिदेक गुरुर्भवेदपितु न कश्चिद्गुरुर्भवेदिति । जैनमतापेक्षयायमर्थो प्राप्तोऽस्या कारिकाया, क. परमात्मा चिदेवार्हन् केवल्येवाप्तो भवेन्नान्य. । सप यन्ति ये ते भवेत संसारिणस्तेषां गुरुर्भवेद्गुरुरित्येकपदं ज्ञेयम् । चार्वाकमते वृहस्पतेर्ग्रहण ज्ञेयम । १२ प्रत्यक्षागोचरत्वात । १३ भगवान् धर्मी महान् भवतीति साध्यस्तीर्थकरत्वान्यथानुपपत्तेरिति हेतु । यो महान्न भवति स तीर्थकरो न भवति यथा रथ्यापुरुष तीर्थकरश्चायं तस्माद महान् भवतीति । १४ आगमात् । १५ व्यभिचारमेव भावयति । १६ एतस्मात्सौत्युक्तं आह । १७ आशङ्क्य । १८ कुमारिलेन । १९ सर्वथा क्षणिकं, सर्वथा नित्यमित्यादि । २० पुंस । २१ यत एवं ततस्तीर्थकरत्वनामा हेतुर्व्यभिचारी सन् कस्यचित् सुगतादेर्महत्त्वं न साधयति । २२ सर्वेषां तीर्थकरत्वप्रतिपादकत्वमस्ति यत । २३ श्रेयोर्थिना कथं श्रेय इत्युक्ते आह 'वेदात्' । २४ मीमांसक । २५ सर्वज्ञप्रतिपादक । २६ उपदेशा. । २७ आदिशब्देन विधिनियोगौ । २८ संवादकताप्रेरणालक्षणभावनाज्ञानम् । २९ संवादकता नास्ति यत । ३० भावनारूप । ३१ नियुक्तोहमित्याकूतं यस्माद्भवति स एव नियोग इत्यर्थ । ३२ सर्वं वै खल्विदं ब्रह्मेत्यादिविधिस्वरूपप्रतिपादने वेदवाक्य कथं न प्रमाणम । ३३ कार्यस्वरूपयो' । ३४ अत्राह भावनावादी भट्ट । अग्निष्टोमं स्वर्गकामो यजेतानेन वादिनो मते लिङ्लोट्तव्यप्रत्ययस्वरूपः । ३५ अप्रेरकत्वस्य, असघटमानस्य चिद्भावनारूपस्य कार्यस्य ।

वात् स चानेकविधः प्रवक्तृ[1]मतभेदात् । केषाञ्चिल्लिङादि[2]प्रत्ययार्थः[3] शुद्धो[4]ऽन्य[5]निरपेक्षः कार्यरूपो नियोगः । प्रत्य[7]यार्थो नियोगश्च यतः शुद्धः प्रतीयते । कार्यरूप[6]श्च तेनात्र[9] शुद्धं कार्यमसौ मतः ॥ विशेषणं तु[8] यत्तस्य[10] किञ्चिदन्यत्[11] प्रतीयते । प्रत्ययार्थो[12] न तद्युक्तं धात्वर्थः स्वर्गकामवत् ॥ प्रेरकत्वं तु यत्[13]तस्य[14] विशेषण[15]मिहेष्यते । तस्याप्रत्ययवाच्यत्वाच्छुद्धे कार्ये नियोगता ॥ १ ॥ इति वचनात् । परेषां[16] शुद्धा[17] प्रेरणा[18] नियोग इत्याशयः[19] । प्रेरणैव नियोगोऽत्र शुद्धा[20] सर्वत्र गम्यते । नाप्रेरितो यतः कश्चिन्नियुक्तं स्वं प्रबुध्यते । २ । प्रेरणासहितं कार्यं नियोग इति केचिन्मन्यन्ते । ममेदं कार्यमित्येवं ज्ञातं पूर्वं यदा भवेत् । स्वसिद्धौ[21] प्रेरकं[22] तत्स्यादन्यथा[23] तन्न सिद्ध्यति । ३ । कार्यसहिता प्रेरणा नियोग इत्यपरे । प्रेर्यते पुरुषो नैव कार्येणेह विना क्वचित् । ततश्च प्रेरणा प्रोक्ता नियोगः कार्यसङ्गता । ४ । कार्यस्यैवोपचारतः[24] प्रवर्त्तकत्वं नियोग इत्यन्ये । प्रेरणा[25]विषयः कार्यं न तु तत्प्रेरकं स्वतः । व्यापार[26]स्तु प्रमाणस्य[27] प्रमेये[28] उपचर्यते । ५ । कार्यप्रेरणयोः[29] सम्बन्धो नियोग इत्यपरे । प्रेरणा हि विना कार्यं प्रेरिका नैव कस्यचित् । कार्यं वा प्रेरणायोगो नियोगस्तेन[30] सम्मतः । ६ । तत्समुदायो[31] नियोग इति चापरे । परस्पराविनाभूतं द्वय[32]मेतत्[33]प्रतीयते । नियोगः समुदायोऽस्मात् कार्यप्रेरणयोर्मतः । ७ । तदुभयस्वभावविनिर्मुक्तो[34] नियोग इति चान्ये । सिद्ध[35]मेकं यतो[36] ब्रह्म गतमाम्नाय[37]तः सदा । सिद्धत्वेन न तत्कार्यं प्रेरकं कुर्वत[38] एव तत् । ८ । यन्त्रा[39]रूढो[40] नियोग इति कश्चित् । कामी[41] यत्रैव[42] यः कश्चिन्नियोगे सति[43] तत्र सः । विषया[44]रूढमात्मानं मन्यमानः प्रवर्त्तते । ९ । भोग्य[45]रूपो नियोग इत्यपरः । ममेदं भोग्यमित्येवं भोग्यरूपं प्रतीयते । ममत्वेन च विज्ञानं भोक्तर्येव व्यवस्थितम् ॥ स्वामित्वेनाभिमानो[46] हि भोक्तुर्यत्र भवेदयम् । भोग्यं तदेव विज्ञेयं तदेवं स्वं[47] निरुच्यते ॥ साध्य[48]रूपतया येन[49] ममेदमिति गम्यते । तत्प्रसाध्येन रूपेण भोग्यं स्वं व्यपदिश्यते ॥ सिद्धरूपं हि यद्भोग्यं न नियोगः स तावता । साध्यत्वेनेह[50] भोग्यस्य प्रेरकत्वान्नियोगता[51] । १० । पुरुष एव नियोग इत्यन्यः । ममेदं कार्यमित्येवं मन्यते पुरुषः सदा । पुंसः कार्यविशिष्टत्वं[52] नियोगोऽस्य[53] च वाच्यता ॥ कार्यस्य[54] सिद्धौ जातायां तद्युक्तः[55] पुरुषस्तदा । भवेत्साधित इत्येवं पुमान् वाक्यार्थ उच्यते । ११ । [56]सोयमेकादशप्रकारोऽपि नियोगो विचार्यमाणो बाध्यते ।—

१ अभिप्राय । २ अनेन लिङ्लोट्तव्यप्रत्ययार्थं सूच्यते न तु लडादिप्रत्ययार्थं । ३ "जातिर्व्यक्तिश्च लिङ्गं च प्रकृत्यर्थोऽभिधीयते । संख्या च कारकं चेति प्रत्ययार्थं प्रतीयते" । ४ अग्निहोत्रादिविशेषणरहितः । ५ धात्वर्थनिरपेक्ष । ६ अवश्यं करणीय । ७ कुत एतदित्याशङ्क्य पुरातनं श्लोकत्रयमाह । ८ एव । ९ वेदवाक्ये । १० कार्यरूपस्य नियोगस्य । ११ अग्निहोत्रादिकम् । १२ यजनमात्र । १३ कार्यस्य स्वनिष्पत्त्यर्थं यत्प्रेरकत्वं प्रवर्त्तकत्वम् । १४ कार्यरूपस्य नियोगस्य । १५ योगकर्मणि । १६ नियोगवादिनाम् । १७ वाक्यान्तर्गतकर्माद्यवयवापेक्षारहिता । १८ प्रेरकत्वम् । १९ सिद्धान्त । २० नियोगरहिता । २१ वाक्यस्य । २२ पुरुषस्य यागकर्मणि । २३ ममेदं कार्यमित्येवं ज्ञानाभावे तत्स्वसिद्धौ प्रेरकं न सिद्ध्यति । २४ मुख्यं वेदवाक्यस्य यत्प्रेरकत्वं तद्यागलक्षणकार्ये उपचर्यते इत्युपचार । २५ वेदवाक्यव्यापार. । याग । २६ प्रवर्त्तकत्वम् । २७ वेदवाक्यस्य । २८ यागादौ कार्ये । २९ यागवेदवाक्ययो. सम्बन्ध. । ३० प्रेरणा विना कार्यं कस्यचित्प्रेरकं नैव तेन कारणेन प्रेरणाकार्ययो. सम्बन्धो नियोग प्रतिपादित । ३१ तयोः प्रेरणाकार्ययोस्तादात्म्यम् । ३२ तादात्म्यम् । ३३ यत कारणात् । ३४ कार्यरूपमेव हि यत्किञ्चन स्वनिष्पत्त्यै प्रेरकं स्यादस्य तु ब्रह्मणो नित्यत्वेन कार्यरूपत्वाभावात् प्रेरकत्वं न भवतीत्यर्थ । ३५ अग्निष्टोमादिवाक्ये कार्यप्रेरणानिरपेक्षतयावभास. परमात्मस्वभावो वा । ३६ निरंशम् । ३७ वेदात् । ३८ कुत ? यत. । ३९ यागकर्म । ४० पुरुष । ४१ स्वर्गकामी । ४२ यागकर्मणि । ४३ प्रवर्त्तकवाक्ये सति । ४४ यागलक्षण । स्वर्ग । ४५ भविष्यद्रूपमेव भोग्य नियोग इत्याह । ४६ अभिप्राय. । ४७ स्वकीयम् । ४८ स्वर्गादिकं साध्यम् । ४९ पुंसा । ५० वेदवाक्ये । ५१ यत । ५२ यागादिलक्षणसम्पृक्तत्वम् । यज्ञकर्त्ता । भोग्यतामात्रेण । ५३ नियोग स्यादबाधित इति वा पाठ । ५४ यदि पुरुष एव नियोगस्तदा तस्य नित्यत्वात्कथं साध्यरूपो भवतीत्याशङ्कायामाह । ५५ साध्यकार्यविशिष्ट । ५६ अथ विधिवादमाश्रित्य भट्ट प्राभाकरमतसम्बन्धिनं नियोगवादं दूषयति ।

प्रमाणाद्यष्टविकल्पानतिक्रमात्[4] । तदुक्तम्[1] ।— प्रमाणं[5] किं नियोगः स्यात् प्रमेयमथवा पुनः । उभयेन विहीनो वा द्वयरूपोथवा पुनः ॥ शब्दव्यापाररूपो वा व्यापारः[3] पुरुषस्य वा । द्वयंव्यापाररूपो वा द्वयाव्यापार एव वा ॥ तत्रैकादशभेदोपि[2] नियोगो यदि प्रमाणं तदा विधिरेव[6] वाक्यार्थ इति वेदान्तवादप्रवेशः प्रभाकरस्य[7] स्यात्, प्रमाणस्य चिदात्मकत्वात्[8], चिदात्मनः प्रतिभासमात्रत्वात्, तस्य[9] च परब्रह्मत्वात्[10]। प्रतिभासमात्राद्धि पृथग्विधिः कार्यरूपतया[11] न प्रतीयते घटादिवत्[12] । प्रेरकतया वा नानुभूयते[13] वचनादिवत्[14][15][16]। कर्मकरणसाधनतया[17] हि तत्प्रतीतौ[18] कार्यप्रेरकताप्रत्ययो युक्तो नान्यथा[19] । किं तर्हि[20] द्रष्टव्योऽयमात्मा[21] श्रोतव्यो निदिध्यासितव्य[22] इत्यादिशब्दश्रवणादवस्थान्तरविलक्षणेन[23][24] प्रेरितोहमिति जाताकूतेनाहङ्कारेण[25][26] स्वयमात्मैव प्रतिभाति स एव विधिरिति वेदान्तवादिभिरभिधानात् । १ । प्रमेयत्वं तर्हि नियोगस्यास्तु प्रमाणत्वे दोषाभिधानादित्यप्यसत्—प्रमाणाभावात् । प्रमेयत्वे हि तस्य[27] प्रमाणमन्यद्वाच्यम्—तदभावे प्रमेयत्वायोगात् । श्रुतिवाक्यं प्रमाणमिति[28] चेन्न—तस्याचिदात्मकत्वे[29] प्रमाणत्वाघटनादन्यत्रोपचारात्[30] । सविदात्मकत्वे[31] श्रुतिवाक्यस्य पुरुष[32] एव श्रुतिवाक्यमिति स एव प्रमाणम् । तत्संवेदनविवर्त्तस्तु[33] नियुक्तोहमित्यभिमानरूपो[34] नियोगः प्रमेयत्वमिति[35] नायं पुरुषादन्यः प्रतीयते यतो वेदान्तवादिमतप्रवेशोऽस्मिन्नपि पक्षे न भवेत् (२) तर्हि प्रमाणप्रमेयरूपो नियोगो भवत्वित्यप्ययुक्तम्—संविद्विवर्त्तत्वापत्तेः अन्यथा[36] प्रमाणप्रमेयरूपतानुपपत्तेः । तथा च स एव चिदात्मोभयस्वभावतयात्मानमादर्शयन्[37] नियोग इति सिद्धो ब्रह्मवादः (३) । अनुभयस्वभावो नियोग इति चेत्तर्हि[38] संवेदनमात्रमेव[39] पारमार्थिकं[40] तस्य[41] कदाचिदप्यहेयत्वादनुभयस्वभावत्वसम्भवात्[42][43]। प्रमाणप्रमेयत्वव्यवस्थाभेदविकलस्य सन्मात्रदेहतया[44] तस्य[45] वेदान्तवादिभिर्निरूपितत्वात्तन्मतप्रवेश एव (४) । यदि पुनः शब्दव्यापारो[46] नियोग इति मतं तदा भट्टमतानुसरणमस्य[47] दुर्निवारम्—शब्दव्यापारस्य शब्द[48]-

१ रविगुप्तेन । २ भाट्ट प्राभाकरं प्रतिपृच्छति । ३ वाङ्मयमात्रकथनो व्यापार । ४ अष्टप्रकारविकल्पमध्ये । ५ प्रथम. प्रमाणस्वरूपो विकल्प. । ६ कर्त्तव्यार्थोपदेशो विधि । ब्रह्म । ७ नियोगवादिन । ८ अत्र प्रमाणस्याचिदात्मकत्वशङ्कायां तस्याचिदात्मकत्वे प्रमाणत्वाघटनादन्यत्रोपचारादित्यग्रे वक्ष्यमाणमुत्तरं द्रष्टव्यम् । ९ प्रतिभासमात्रस्य । १० प्रतिभासश्चान्यो विधिश्चान्य इत्युक्ते आह । ११ कर्त्तव्य । १२ व्यतिरेकदृष्टान्त । यथा घट प्रतिभासमात्रात् कार्यरूपतया पृथक् प्रतीयते न तथा विधि प्रतिभासमात्रात् स्वरूपात् पृथक् प्रतीयते । १३ नानुमीयते इत्यपि खपाठ । १४ व्यतिरेकदृष्टान्त । १५ अङ्गुलिसंज्ञा । १६ यथा वचनादि प्रेरकतया प्रतिभासमात्रात् पृथगनुभूयते तथा विधिर्नानुभूयते । १७ उभयरूपतया विधिर्नानुभूयते इत्युक्ते आह । क्रियते निष्पाद्यते इति कर्म घटादि । प्रेर्यते नियुज्यते पुरुष स्वकृत्येऽनेनेति प्रेरकं वचनं करणम् । १८ विधिप्रतीतौ । १९ कर्मकरणसाधनत्वाभावेन विधिप्रतीतौ कार्यताप्रेरकताज्ञानं युक्तं न स्यात् । २० तर्हि किं स्वरूपं विधेरित्युक्ते आह द्रष्टव्येत्यादि । २१ "श्रोतव्य श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तित । मत्वा च सततं ध्येय एते दर्शनहेतव" । २२ परब्रह्मस्वरूपेण ध्यातव्य । २३ अवस्था दर्शनादि अवस्थान्तरमदर्शनादि तेन विलक्षणो दर्शनादिस्तेन । २४ अप्रेरितावस्थाविलक्षणेनाकारेण प्रेरितोहमित्यभिमानरूपेण । २५ दर्शनादिना । २६ प्रमेयरूपस्य नियोगस्य ग्राहक प्रमाणम् । २७ प्रभाकरेण । २८ श्रुतिवाक्यं प्रमाणं, नियोग प्रमेयमिति चेत् । २९ अत्राह भावनावादी भट्ट ।—भो नियोगवादिन् प्रभाकर तावक श्रुतिवाक्यं चिदात्मकमचिदात्मकं वेति । तत्र विकल्पद्वयं खण्डयति । ३० चन्द्रवन्मुखमित्यादिरुपचार. । ३१ ज्ञानात्मकत्वे सति । ३२ परब्रह्म पश्चात् कार्यं कुर्यात् । ३३ पर्याय । ३४ विशेषणमिदं नियोगस्य संवेदनविवर्त्तत्वसमर्थनार्थम् । ३५ ज्ञानपर्यायप्राप्तत्वान्नियोगस्य सामान्येन नियुक्तोहमित्यभिमानरूपत्वाभ्युपगमादन्यथा ज्ञानपर्यायप्राप्त्यभावे प्रमाणरूपत्व नोपपद्यते, अप्रकाशमानत्वेन प्रमेयरूपत्वं च न घटते इति भाव । ३६ स्वरूपम् । ३७ प्रकाशयन् । ३८ प्रमाणप्रमेयरूपत्यागे । ३९ संवेदनमात्रादन्यस्य कस्यचिदनुभयस्वभावत्वाघटनात् । ४० पारमार्थिकत्वं कुत ? । ४१ सवेदनमात्रस्य । ४२ कुत । ४३ अनुभयस्वभावत्वं कुत । ४४ सत्स्वरूपतया । ४५ संवेदनमात्रस्य । ४६ अग्निष्टोमेन स्वर्गकामो यजेत इत्यादिशब्दव्यापार । ४७ प्रभाकरस्य वेदान्तवादिमतप्रवेश स्यात् । ४८ शब्दरूपार्थरूपा चेति भावना द्वेधा ।

भावनारूपत्वात् ( ५ ) अथ पुरुषव्यापारो नियोग[1]स्तदापि परमतानुसरणम्—पुरुषव्यापारस्यापि [2]भावना-स्वभावत्वात् शब्दात्मव्यापारभेदेन भावनायाः परेण द्वैवि[3]ध्याभिधानात् ( ६ ) । तदुभय[4]रूपो नियोग इति चेत्तर्हि पर्यायेण युगपद्वा ? यदि पर्यायेण स[5] एव दोषः—कचित्कदाचिच्छब्दव्यापारस्य पुरुषव्यापारस्य च भावनास्वभावस्य नियोग इति नामकरणात् । युगपदुभयस्वभावत्वं पुनरेकत्र वि[6]रुद्धं न शक्यं व्यवस्था[7]पयितुम् ( ७ ) । तर्हि तदनुभयव्यापाररूपो नियोगोऽङ्गीकर्त्तव्य इति चेत् सोपि वि[8]षयस्वभावो वा स्यात् फलस्वभावो वा स्यान्नि[9]स्स्वभावो वा ? गत्यन्तराभावात् । विषयस्वभाव इति चेत् । कः पुनरसौ विषयः ? अग्निष्टोमेन यजेत स्वर्गकाम इत्यादिवाक्यस्यार्थो यागादिर्विषय इति चेत् स[10] तद्वा[11]क्यकाले स्वयमविद्यमानो विद्यमानो वा? यद्यविद्यमानस्तदा त[12]त्स्वभावो नियोगोप्यविद्यमान एवेति क[13]थमसौ वाक्यार्थः खपुष्पवत् । बुद्ध्या[14]रूढस्य भावि[15]नस्तस्य वाक्यार्थत्वे सौगतमता[16]नुसरणप्रसङ्गः । अथ त[17]द्वाक्यकाले वि[18]द्यमा-नोसौ तर्हि न नियोगो वाक्यस्यार्थः—तस्य यागा[19]दिनिष्पादना[20]र्थत्वात्—निष्पन्नस्य च यागादेः पुनर्निष्पा-दनायोगा[21]त्, पुरुषादिवत् । अथ तस्य[22] किञ्चिदनिष्पन्नं रूपं तदा तन्निष्पादनार्थो नियोग इति मतम् तर्हि त[23]त्स्वभावो नियोगोप्यनिष्पन्न इति कथं वाक्यार्थः ? स्वयमसन्निहितस्य[24] कल्पनारूढस्य वाक्यार्थत्वे स[25] एव सौगतमतप्रवेशः ( ८ ) फलस्वभावो नियोग इत्ययमपि पक्षो न कक्षीकर्तव्यः—त[26]स्य नियोगत्वाघटनात् । न हि स्वर्गादिफलं नियोगः—फ[27]लान्तरपरिकल्पनप्रसङ्गात्—निष्फलस्य नियोगस्यायोगात् । फलान्तरस्य च फलस्वभावनियोगवादिनां नियोगत्वापत्तौ तदन्यफलपरिकल्पनेऽनवस्थाप्रस[28]ङ्गः । फ[29]लस्य वाक्य[30]काले स्वयम-सन्निहितत्वाच्च त[31]त्स्वभावो नियोगोप्यसन्निहित एवेति कथं वाक्यार्थः ? त[32]स्य वाक्यार्थत्वे निरा[33]लम्बनश-ब्दवादाश्रयणात् कुतः प्रभाकरमतसिद्धिः ? [नि]स्वभावो नियोग इत्ययमपि पक्षोऽनेनैव प्रतिक्षि[34]प्तः ( ९ ) । किञ्च सन्नेव वा नियोगः स्यादसन्नेव वोभयरूपो वानुभयरूपो वा ? प्रथमपक्षे विधिवाद एव । द्वितीयपक्षे निरा[35]लम्बनवादः । तृतीयपक्षे तूभयदोषानु[36]षङ्गः । चतुर्थपक्षे व्याघा[37]तः—स[38]त्त्वासत्त्वयोः परस्परव्यवच्छेदरू[39]पयो-रेकतरस्य निषेधेऽन्यतरस्य विधानप्रसक्तेः—सकृदेकत्र प्र[40]तिषेधायोगात् । सर्वथा सदसत्त्वयोः प्रतिषेधेपि कथञ्चित्सद[41]सत्त्वा[42]विरोधाददोष इति चेत् स्याद्वादाश्रयणप्रसङ्गः प्रभाकरस्य । कि[43]ञ्च नियोगः सर्व[44]थोपि प्रवर्त्तकस्वभावो वा स्यादप्रवर्त्तकस्वभावो वा? प्रवर्त्तकस्वभावश्चेत् प्रभाकराणामिव ताथागतादीनामपि

---

१ तदेव (पूर्वोक्तमेव) इति खपुस्तकपाठः। २ अर्थभावना । ३ शब्दभावना आत्म ( अर्थ ) भावना च । ४ शब्दव्यापारेण पुरुषव्यापारेण च। ५ तर्हि । भट्टमतानुसरणलक्षण पूर्वोक्त । ६ प्रेरणाया अतीतकालत्वं क्रियाया भविष्यत्कालत्वं यतः पूर्वं प्रेरित । ७ यथा तेजस्तमसोरैक्यमेकत्र स्थातुं न शक्यम् । ८ विषयो यागादिकर्म। ९ पर्युदासवृत्त्या द्वौ विकल्पौ प्रसज्य-वृत्त्या त्वेकः (नि स्वभाव॰) । १० विषयः । ११ वेदवाक्यकाले । १२ विषयस्वभाव॰ । १३ नियोग. । १४ बुद्धिपरिणतस्य । वर्त्तमानकाले कल्पितविषयस्य । १५ विषयस्वभावनियोगस्य । १६ प्रमाणप्रमेयव्यवहारस्य काल्पनिकत्वात्सौगतमते । वक्त्रऽ-भिप्रेतमात्रस्य सूचकं वचनं त्वितीदं हि सौगतमतम् । १७ वेद । १८ यागादिविषयो नियोगो यागमुत्पादयति । १९ आकाशादि । २० यागादिनिष्पादनं वाक्यकाले जातमेव । २१ पुरुषादिविषयस्य । २२ यागादे॰ । २३ यागादिविषयस्वभावः । २४ भाविनो विषयस्य । २५ पूर्वोक्त. । २६ फलस्वभावस्य । २७ अन्यथा । २८ प्रसङ्गादिति खपुस्तकपाठः । २९ स्वर्गादे॰ । ३० अग्निष्टोमेन यजेतेति वाक्यकाले । ३१ फलस्वभाव । ३२ असन्निहितस्य फलरूपनियोगस्य । ३३ शब्दस्यान्यापोहाभिधायित्वेनार्थशून्यवादः। सौगतमते शब्दस्त्वन्यापोहरूपो नत्वर्थाभिधायी । ३४ नि.स्वभावस्यान्यापोहत्वानतिक्रमात् । ३५ अन्धसर्पबिलप्रवेशन्यायेन । ३६ तदुक्तम् ।—प्रत्येकं यो भवेद्दोषो द्वयोर्भावे कथं न स इति वचनात् । ३७ विरोध । ३८ कथम् ? । ३९ यथा सदित्यु-क्तेऽसत्त्वमेवायाति, असदित्युक्ते सत्त्वमेवायाति । ४० सत्त्वासत्त्वयोः । ४१ सदसत्त्वविधानाददोष इति खपाठः । ४२ सर्वेषां पदार्थानां क्रमवर्त्तित्वात् शब्दाना च । ४३ भाट्टः । ४४ एकादशप्रकारोपि ।

प्रवर्त्तकः स्यात्—तस्य सर्वथा प्रवर्त्तकत्वात् । तेषां विपर्यासादप्रवर्त्तक इति चेत् परेषामपि विपर्यासादप्रवर्त्तकोस्तु । शक्यं हि वक्तुं, प्राभाकरा विपर्यस्तत्वाच्छब्दनियोगात्प्रवर्त्तन्ते नेतरे—तेषामविपर्यस्तत्वादिति । सौगतादयो विपर्यस्तास्तन्मतस्य प्रमाणबाधितत्वात् । न पुनः प्राभाकरा इत्यपि पक्षपातमात्रम्—तन्मतस्यापि प्रमाणबाधितत्वाविशेषात् । यथैव हि प्रतिक्षणविनश्वरसकलार्थकथनं प्रत्यक्षादिविरुद्धं तथा नियोक्तृनियोगतद्विषयादिभेदपरिकल्पनमपि सर्वप्रमाणानां विधिविषयताव्यवस्थापनेन तद्बाधकत्वोपपत्तेः । यदि पुनरप्रवर्त्तकस्वभावः शब्दनियोगस्तदा सिद्ध एव तस्य प्रवृत्तिहेतुत्वायोगः । स च वाक्यार्थत्वाभावं साधयति । किञ्च नियोगः फलरहितो वा स्यात् फलसहितो वा ? फलरहितश्चेत्, न ततः प्रेक्षावतां प्रवृत्तिः अप्रेक्षावत्त्वप्रसङ्गात्, प्रयोजनमनुद्दिश्य न मन्दोपि प्रवर्त्तते इति प्रसिद्धेश्च । प्रसिद्धचण्डनरपतिवचननियोगादफलादपि प्रवर्त्तनदर्शनाददोष इति चेन्न, तस्यापायपरिरक्षणफलत्वात् । तन्नियोगादप्रवर्त्तने तदाज्ञोल्लङ्घनेनकृतामपायोवश्य सम्भवतीति । तर्हि वेदवचनादपि नियुक्तः प्रत्यवायपरिहारार्थं प्रवर्त्तताम्—"नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासये"ति वचनात् । कथमिदानीं स्वर्गकाम इति वचनमवतिष्ठते—जुहुयाज्जुहोतु होतव्यमिति लिङ्लोट्तव्यप्रत्ययान्तनिर्देशमात्रादेव नियोगमात्रस्य सिद्धेस्तत एव च प्रवृत्तिसम्भवात् । यदि पुनः फलसहितो नियोग इति पक्षस्तदा फलार्थितैव प्रवर्त्तिका न नियोगः—तमन्तरेणापि फलार्थिनां प्रवृत्तिदर्शनात् । पुरुषवचनान्नियोगेथैवमुपालम्भो नापौरुषेयादग्निहोत्रादिवाक्यात्—तस्यानुपालभ्यत्वादिति चेत्, "सर्वं वै खल्विदं ब्रह्मे"त्यादि वचनमपि विधिमात्रप्रतिपादकमनुपालभ्यमस्तु तत एव । तथा च वेदान्तवादसिद्धिः । तस्मान्न नियोगो वाक्यार्थः कस्यचित्प्रवृत्तिहेतुत्वाभावाद्विधिवत् । सर्वेषु च पक्षेषु नियोगस्य प्रत्येकं विचार्यमाणस्यायोगान्न वाक्यार्थत्वमवतिष्ठते । तथा हि ।—न तावत्कार्यं शुद्धं नियोग इति पक्षो घटते प्रेरणानियोज्यवर्जितस्य नियोगस्यासम्भवात् । तस्मिन्नियोगसंज्ञाकरणे स्वकम्बलस्य कुद्दालिकेति नामान्तरकरणमात्रं स्यात् ।

---

१ सर्वपुरुषापेक्षाप्रकारेण । २ सौगतादीनाम् । ३ अप्रवर्त्तकस्वभावे नियोगे प्रवर्त्तकतया मननं विपर्यास । ४ युष्माकं प्राभाकराणां विपरीतत्वादप्रवर्त्तकोस्तु । ५ प्रवर्त्तकस्वभावे नियोगेऽप्रवर्त्तकतया मननं विपर्यास । ६ प्रवर्त्तकोस्त्विति खपाठ, अत एव खपुस्तके चतुर्दशाङ्कटिप्पण्यादौ अप्रवर्त्तकस्वभावे इति लेख, त्रयोदशाङ्कटिप्पण्यादौ तु प्रवर्त्तकस्वभावे इति पाठ । ७ अप्रवर्त्तकत्वात् ( खपुस्तके ) । ८ शब्दाधिकारात् । ९ ताथागतादय । १० अत्राह नियोगवादी प्रभाकर । ११ अत्राह भावनावादी भट्ट ।—भो प्रभाकर इति ते वचन स्वमतपक्षपातमात्रम् । कस्मात् ? प्रभाकरमतस्यापि प्रमाणबाधितत्वेन विशेषो नास्ति यत । १२ नियोगकृद् यज्ञकृद् यज्ञकर्त्ता । अयं यज्ञकर्त्तायं नियोग इदं फलमिति भेदा पादनं प्रत्यक्षादिप्रमाणाद्विरुद्धं मतभेद साधयितु न शक्यते । १३ वेदवाक्य । १४ आदिशब्दात् पुरुषफले । १५ विधिमध्यपतितत्वव्यवस्थापनेन । १६ प्रत्यक्षादिविरुद्धमिति सम्बन्ध । १७ तस्य नियोगस्य बाधकमुपपद्यते यत । १८ शब्द नियोगस्य । १९ शब्दनियोगः सिद्ध सन् । २० फलरहितान्नियोगाद्विचारचतुराणां प्रवृत्तिर्न घटते । घटते चेत्तदा तेषामप्रेक्षावत्त्वं सज्जतीति । २१ प्रसिद्ध इत्ययं शब्द खपुस्तके नास्ति । २२ चण्डस्त्वत्यन्तकोपन । २३ चण्डनरपतिवचनादेशात् । २४ जनानाम् । २५ वित्तापहारादि । २६ प्रभाकर । २७ पापपरिहारफलाय । अवश्य विघ्न आयाति धर्मकार्ये तन्निवारणाय । २८ त्रिकाल सन्ध्योपासनजपदेवर्षिपितृतर्पणादिकमित्याद्यनुष्ठानम् । २९ दर्शपौर्णमासीग्रहग्रहणादिषु क्रियमाणं नैमित्तिकानुष्ठानम् । ३० अकुर्वन् विहित कर्म प्रत्यवायेन लिप्यते इति श्रुते । ३१ भावनावादी । ३२ प्रत्यवायपरिहारस्य फलत्वप्रतिपादनकाले । ३३ यदि विघ्नविनाशनाय यज्ञ क्रियते तर्हि स्वर्गकाम इत्यनेन किं प्रयोजनम् ? । ३४ इहलोकप्रत्यवायपरिहारार्थी पुमान् जुहुयादिति प्रवर्त्तता, न तु स्वर्गकाम इति । ३५ प्रत्ययस्वरूप एव नियोग । ३६ ततः स्वर्गकामनिरपेक्षतया यागे प्रवर्त्तता नाम । ३७ नियोगं विनापि । ३८ अत्राह नियोगवादी । ३९ पूर्वोक्त सर्व । ४० दूषणम् । ४१ अग्निष्टोमं स्वर्गकामो यजेतेत्याद्यपौरुषेयादग्निहोत्रादिवाक्यान्नियोगे दूषणं न—तस्य वाक्यस्यादूष्यत्वात् । ४२ नेह नानास्ति किञ्चन । आराम ( विस्तारं ) तस्य पश्यन्ति न तत्पश्यति कश्चन ॥ ४३ अदूष्यत्वस्याविशिष्टत्वात् । ४४ पुरुषस्य । ४५ परब्रह्म यथा ४६ एकादशभेदनियोगेषु । ४७ यजेतेति । प्रवर्त्तकत्व । ४८ स्वर्गकाम । ४९ कुदाली

न च तावता स्वे[1]ष्टसिद्धिः । शुद्धा प्रेरणा[2] नियोग इत्यप्यनेनै[3]वापास्तं–नि[4]योज्यफलै[5]रहितायाः प्रेरणाया[6]ः प्रलापमात्रत्वा[7]न्नियोगरूपतानुपपत्तेः । प्रेरणासहितं कार्यं नियोग इत्यप्यसम्भाव्यम्—नियोज्यविरहे नियोगविरोधात् । कार्यसहिता प्रेरणा नियोग इत्यप्यनेन निरस्तम् । कार्यस्यैवोपचारतः प्रवर्त्तकत्वं नियोग इत्यप्यसारम्—नियोज्यादिनिरपेक्षस्य[9] कार्यस्य प्रवर्त्तकत्वोपचारा[10]योगात् । कदाचित्कचित्परमार्थतस्तस्य तथा[8]नुपलम्भाच्च । कार्य[11]प्रेरणयो[12]ः सम्बन्धो नियोग इति वचनमसङ्ग[13]तम्—ततो[14] भिन्न[15]स्य सम्बन्धस्य सम्बन्धिनिरपेक्षस्य नियोगत्वा[16]घटनात् । सम्बन्ध्या[17]त्मनः सम्बन्धस्य नियोगत्वमित्यपि दुरन्वयम्—प्रेर्यमाण[18]पुरुषनिरपेक्षयोः सम्बन्ध्यात्मनोरपि कार्यप्रेरणयोर्नियोगत्वानुपपत्तेः । तत्समुदा[19]यनियोगवादोप्यनेनै[20]व प्रत्याख्यातः । कार्यप्रेरणाविनिर्मुक्तस्तु नियोगो न विधिवादमतिशेते[21] । यत्पुनः स्वर्गकामः पुरुषोऽग्निहोत्रादिवाक्यनियोगे सति यागलक्षणं विषयमारूढमात्मानं मन्यमानः प्रवर्त्तते इति यन्नारूढनियोगवचनं तदपि न परमा[22]त्मवादप्रतिकूलम्–पुरुषाभिमा[23]नमात्रस्य नियोगत्ववचनात्, तस्य[24] चाविद्योदयनिबन्धनत्वात् । भोग्यरूपो नियोग इति चायुक्तम्–नियोक्तृ[25]प्रेरणा[26]शून्यस्य भोग्य[27]स्य तद्भावानुपपत्तेः । पुरुषस्वभावो हि[28] न नियोगो घटते तस्य[29] शाश्वतिकत्वेन[30] नियोगस्य शाश्वतिकत्वप्रसङ्गात् । पुरुषमात्रविधेरेव[31] तथा[32]भिधाने वेदान्तवादपरिसमाप्तेः[33] कुतो नियोगवादो नाम । नन्वेवं[34] नियोगनिराकरणेपि विधेर्वाक्या[35]र्थत्वघटनान्न भावना वाक्यार्थः सिद्धो भट्टस्येति न [36]चेतसि विधेयम्–विधेरपि विचार्यमाणस्य बाध्यमानत्वात् । सोपि हि प्रमाणरूपो वा स्यात् प्रमेयरूपो वा तदुभयरूपो वा अनुभयरूपो वा पुरुषव्यापाररूपो वा शब्द[37]व्यापाररूपो वा द्वयव्यापाररूपो वाऽद्वयव्यापाररूपो वेत्यष्टौ विकल्पान्नातिक्रामति । तथाहि ।—प्रमाणं विधिरिति कल्प[38]नायां प्रमेयं किमपरं स्यात् ? तत्स्व[39]रूपमेवेति चेन्न—सर्वथा निरंशस्य सन्मात्रदेहस्य विधेः प्रमाणप्रमेयरूपद्वयविरोधात् । क[40]ल्पितत्वात्तद्रूपद्वयस्य तत्राविरोध इति चेत्, कथमिदा[41]नीमन्या[42]पोहः शब्दार्थः प्रतिषिध्य[43]ते—संविन्मात्रस्याप्रमा[44]णत्वव्यावृत्त्या प्रमाणत्वमप्रमेयत्वव्यावृत्त्या च प्रमेयत्वमिति

---

१ स्वर्ग । स्वर्गो नियोगपक्षे कूर्दालिकापक्षे खननादि । २ अग्निष्टोमेन यजेत स्वर्गकाम इत्यादि । ३ पूर्वोक्तेन वक्ष्यमाणेन च । ४ नियोज्य पुमान् । ५ स्वर्ग. । ६ प्रेरकत्वस्य । ७ निरर्थकत्वात् । ८ निरर्थकत्वादिति भाव । ९ नियोज्यादिनिरपेक्षस्य कार्यस्य । १० प्रवर्त्तकत्वप्रकारेण । ११ यागादि । १२ वेदवाक्य । १३ इति च न सङ्गतमिति खपुस्तकपाठ. । १४ कार्यप्रेरणारूपेभ्य सम्बन्धिभ्य. । १५ सम्बन्धो हि सम्बन्धिभ्यां भिन्नोऽभिन्नो वेति विकल्पद्वयनवतीति क्रमेण निराकुर्वन्नाह । १६ नियोगत्वेनाघटनादिति खपुस्तकपाठ । १७ सम्बन्धिनावात्मानौ स्वरूपे यस्य । १८ यस. (कर्मधारय· ) । १९ तादात्म्यम् । २० ततो भिन्नस्येत्यादिना । २१ नातिशयं प्राप्नोति । नातिक्रामति । किन्तु विधिवाद एवायात । २२ विधिवाद । २३ अभिप्राय. । २४ पुरुषस्याभिमानाभावादित्युक्ते आह । पुरुषाभिमानमात्रस्य । २५ वेदवाक्य । २६ प्रवर्त्तकलक्षणो वाक्यधर्म । २७ स्वर्गस्य । २८ पुरुषस्वभावोपीति खपुस्तकपाठः । २९ अन्यथा । तस्य पुरुषस्वभावस्य । ३० नित्यत्वेन । ३१ अस्तित्वस्य । ३२ नियोग इति । ३३ आप्ते. । ३४ अथ नियोगवादिनं निराकृत्य भट्टो विधिवादिनं दूषयति । ३५ वाक्यार्थनिवेदनादिति खपाठ. । ३६ त्वया विधिवादिनेति शेषः । ३७ यदि शब्द सद्भावस्वरूपं नाभिदधाति निषेधस्वरूपमभिदधाति चेत्तदभावे क्वचिद्वस्तुनि प्रवृत्तिर्न स्यात् । ३८ ब्रह्माद्वैतवादिनाम् । ३९ विधिस्वरूपमेव । ४० ननु स एव चिदात्मोभयस्वभावतया स्वात्मानं प्रकाशयन्नित्युक्तं तावत्, साम्प्रतं निरंशत्वेनोच्यतेत पूर्वापरविरोध इति चेन्न, प्रमेयस्वभाव· काल्पनिक प्रतिपाद्यार्थमुच्यते न तु वास्तवस्तद्विवर्तत्वात्तस्य । ४१ प्रमाणप्रमेयरूपद्वयस्य कल्पितत्वाभिधानकाले । ४२ विधौ कल्पितत्वात्प्रमाणप्रमेयरूपद्वयं घटते चेत्कल्पितं किमन्यापोह· ? स एव शब्दार्थस्तत्रापि वाक्यार्थत्वघटनात् । ४३ अत्राह सौगतमतमवलम्ब्य भावनावादी विधिवादिनं प्रति ।— हे विधिवादिन् कल्पनारूपत्वात्प्रमाणप्रमेयरूपद्वयं विधौ न विरुध्यते इति त्वया प्रतिपाद्यते चेत् तर्हि कल्पनारूपत्वादगोव्यावृत्तिर्गौ अघटव्यावृत्तिर्घट इत्यादिलक्षण. सौगताभ्युपगतशब्दार्थः अन्यापोह अभावात्मकस्त्वया विधिवादिना कथं निराक्रियते ? प्रमाणान्यापोहयो कल्पितत्वाविशेषात् । ४४ शून्य ।

परै[1]रभिधातुं शक्यत्वात् । वस्तु[2]स्वभावाभिधायकत्वाभावे शब्दस्यान्यापोहा[3]भिधायकत्वेपि कं[4]चित्प्रवर्त्तकत्वायोगान्नान्यापोहः शब्दार्थ इति चेत्, तर्हि वस्तुस्वरूपाभिधायिनोपि शब्दस्यान्यापोहानभिधा[5]यित्वेऽन्य[6]परिहारेण क्वचित्प्रवृत्तिनिबन्ध[7]तापायाद्विधिरपि शब्दार्थो मा भूत् । पर[8]मपुरुषस्यैव विधेयत्वात्तदन्यस्या[9]सम्भवान्नान्यपरिहारेण प्र[10]वृत्तिरिति चेत् कथमिदा[11]नीं "द्रष्टव्यो रेऽयमात्मे"त्या[12]दिवाक्यान्नैरात्म्या[13]दिपरिहारेणात्मनि प्र[14]वृत्तिर्नैरात्म्यादिदर्शनादीनामपि प्रसङ्गात् । नैरा[15]त्म्यादेरनाद्यविद्योपकल्पितत्वान्न त[16]द्दर्शनादौ प्रवृत्तिरिति चेत् क[17]थमन्यपरिहारेण प्रवृत्तिर्न भवेत् ? परम[18]ब्रह्मणो [19]विधिरेवान्ये[20]स्यानाद्यविद्योपकल्पितस्य नैरात्म्यादेः परिहा[21]र इति चेत् क[22]थमेवमन्यापोहवा[23]दिनोपि परापोहनमेव स्वरूपविधिर्न भवेत्[24] ? तस्या[25]न्यापोहवादि[26]विरोधान्नैवमिति चेत् विधि[27]वादिनोपि तथा[28] विधिवादविरोधादन्यापोहाभ्युपगमो मा भूत् । परमा[29]र्थतोन्यापोहो विधिवादिना नैवाभ्युपगम्यते तस्य प्रतिभास[30]समानाधिकरणत्वेन प्रतिभासान्तःप्रविष्टत्वसिद्धेः परमपुरुषत्वात्, प्रतिभासस्वरूपवत् । तस्याप्रतिभासमानत्वे व्यवस्थानुपपत्तेरन्यथातिप्रसं[30]ङ्गात् । शब्द[31]ज्ञानेऽप्य[32]नुमानज्ञाने चान्यापोहस्य प्रतिभासनेपि तत्समानाधि[33]करणतया प्रतिभासनान्न ततो[34]ऽन्यत्वम् । तस्य च शब्दानुमानज्ञानस्य प्रतिभासमात्रात्मकत्वान्ना[35]र्थान्तरत्वमिति चेत् कथमिदा[36]नीमुपनिषद्वा[37]क्यं प्रति[38]भासमात्रादन्य[39]ल्लिङ्गं वा यतस्तत्प्रतिपत्तिः प्रेक्षा[40]वतः स्यात् । तस्य[41] परमब्रह्मविवर्त्त[42]त्वाद्विवर्त्तस्य च [43]विवर्त्तिनोऽभेदेन परिकल्पनात्ततस्तत्प्रतिपत्तिरिति चेत् कथं[44] तत्परिकल्पिताद्वाक्याल्लिङ्गाद्वा परमार्थपथावतारिणः परमब्रह्मणः प्रतिपत्तिः—परिकल्पिताद्धूमादेः पारमार्थिकपावकादिप्रतिपत्तिप्रसङ्गात् । पारमा[45]र्थिकमेवोपनिषद्वाक्यं लिङ्गं च परमब्रह्मत्वेनेति चेत् तर्हि[46] यथा तत्पारमार्थिकं तथा[47] साध्यसमं कथं

---

१ सौगते सविन्मात्रपक्षग्राहके । २ विधिवादी । ३ तदा शब्दो वस्तुस्वरूपमभिदधाति अन्यापोहस्वरूपं नाभिदधाति चेदन्यपरिहारेण प्रवृत्तिर्न स्यात् स्वपररूपयोः सङ्करो भवेदित्यर्थः । ४ विधौ । ५ विधेयत्वात्प्राप्यत्वात् । ६ अन्यद् ब्रह्मव्यतिरिक्तं वस्तु नास्ति विधिवादिनो मते । ७ विधिवादी । ८ प्राप्यत्वात् । ९ परमपुरुषात्किञ्चिद्भिन्नं वस्तु नास्ति यतः । १० विधौ । ११ अन्यपरिहारेण प्रवृत्त्यभावप्रतिपादनकाले । १२ द्रष्टव्योयमात्मा श्रोतव्योनुमन्तव्यो निदिध्यासितव्य इति श्रुतिः । १३ सौगत आह ।—हे विधिवादिन् अन्यथा नैरात्म्यादि परिहाराभावे पुरुषे शब्दस्य प्रवृत्तिर्घटते चेत्तदा नैरात्म्यादिदर्शनादीनामपि प्रवृत्तिर्घटताम् । १४ अन्यथा । १५ विधिवाद्याहानात्मवादिकम् ।—अनाद्यऽज्ञानोपरुद्धं यतस्तस्मान्नैरात्म्यादिदर्शनश्रवणादौ प्रवृत्तिर्न घटते । १६ नैरात्म्य । १७ भाट्ट । १८ विधिवादी ( परब्रह्मणः ) । १९ विधानम् । २० अन्यापोहस्य । २१ निषेध । २२ सौगतः । भाट्ट । २३ शून्यवादिन । २४ अपि तु भवेदेव ( विधिवादे दूषणं दत्तम् ) २५ विधिवाद्याह ।—तस्य विधेरन्यापोहवादेन विरोधाद्धे सौगत यदुक्तं त्वया अन्यापोहनमेव विधिस्तदेवं न स्यात् । २६ सौगत । भाट्टः । २७ अन्यापोहस्य विधिकथनप्रकारेण । २८ विधिवादी । २९ विधि प्रतिभासतेऽपोह प्रतिभासते इत्यन्यापोहस्य प्रतिभाससामानाधिकरण्यम् । विधिवादिनोऽनुमानम् ।—अन्यापोह पक्ष प्रतिभाससमानाधिकरणत्वेन कृत्वा प्रतिभासान्त प्रविष्टो भवतीति साध्यो धर्म —प्रतिभासमानत्वात् । यत्प्रतिभासमानं तत्प्रतिभासान्त प्रविष्टम् । प्रतिभासते चायं तस्मात्प्रतिभासान्तःप्रविष्ट । विधिवाद्याह ।—अन्यापोह प्रतिभासते न प्रतिभासते वा ? प्रतिभासते चेत्तदा विधौ प्रविष्टः । न प्रतिभासते चेत्तदा तस्य व्यवस्थितिरपि नास्ति । ३० अप्रतिभासमानत्वेप्यन्यापोहस्य स्थितिरुपपद्यते चेत्तदातिप्रसङ्ग स्यात् । असत स्थितिश्चेत्तदा खरविषाणादेरपि सास्तु । ३१ अन्यापोह इति । ३२ अन्यापोहोस्ति—अमुकत्वात् । ३३ अभेदतया । ३४ प्रतिभासादन्यापोहस्यान्यत्वं न । ३५ प्रतिभासात् । विधे । ३६ प्रतिभाससामानाधिकरण्यात्प्रतिभासादन्यापोहादीनामभेदप्रतिपादनकाले । ३७ सर्वं वै खल्विदं ब्रह्मेत्यादि । ३८ ब्रह्मणः । ३९ प्रतिभासमानत्वम् । ४० परमब्रह्मपरिज्ञानं विचारकस्य कुत स्यात् ? न कुतोपि । ४१ विधिवादी प्राह ।— लिङ्गस्य । ४२ "पूर्वाकारापरित्यागादपरः प्रतिभाति चेत् । विवर्त्तः स परिज्ञेयो दर्पणे प्रतिबिम्बवत्" ॥ ( पूर्वाकारपरित्यागादिति कपाठ ) । ४३ ब्रह्मण । ४४ भाट्ट । सौगत । ४५ विधिवाद्याह । ४६ भाट्टः । सौगतो वदति ।—यथा तथेदं वाक्यं लिङ्गं वा सत्यभूतं तथा सत्यभूतपरब्रह्मसमानमनुमानं च कर्तृपुरुषाद्वैतं कथं व्यवस्थापयेद् ? अपि तु न । ४७ कल्पितत्वप्रकारेण ।

पुरुषाद्वैतं व्यवस्थापयेत् ? यथा[1] च प्रतिपाद्य[2]जनस्य प्रसिद्धं न तथा[3] पारमार्थिकं[4]—द्वैतप्र[5]सङ्गात् । इति कुतः परमार्थसिद्धिः । तत[6]स्तामभ्युपगच्छता पारमार्थिकमुपनिषद्वाक्यं लिङ्गं च[7] प्रतिपत्तव्यम् । त[8]च्चाचित्स्वभा-वं[9], चित्स्व[10]भावत्वे परसवेद्यत्वविरोधात् प्रतिपादकचित्स्वभावत्वात्, तत्सुखादिवत् । प्रतिपाद्यचित्स्वभावत्वे वा न प्रतिपादकसवेद्यत्वं प्रतिपाद्यसुखादिवत् । तस्यं तदुभयचित्स्वभावत्वे प्राश्निकादिसंवेद्यत्वविरोधस्तदु-भयसुखादिवत् । सक[11]लजनचित्स्वभावत्वे प्र[12]तिपादकादिभावानुपपत्तिः—अ[13]विशेषात् । प्रतिपादकादी-नामविद्योपकल्पितत्वाददोष इति चेत्, यैवं[14] प्रतिपादकस्याविद्या प्रतिपादकत्वोपकल्पिका सैव प्रतिपाद्यस्य प्राश्निकादेश्चाविशिष्टा प्रतिपादकत्वमुपकल्पयेत् । प्रतिपाद्यस्य चाविद्या प्रतिपाद्यत्वोपकल्पनपरा प्रतिपा-दकादेरविशिष्टा प्रतिपाद्यत्वं परिकल्पयेत् प्रतिपादकादीनामभेदात्तदविद्यानामभेदप्रस[15]ङ्गात् । भेदे[16] वा प्रतिपादकादीनां भेदसिद्धिः—विरु[17]द्धधर्माध्यासात् । अनाद्यऽविद्योपकल्पित एव तदविद्यानां भेदो न पारमार्थिक इति चेत्, परमार्थतस्तर्ह्यभिन्नास्तदविद्या इति स एव प्रतिपादकादीनां सङ्कर[18]प्रसङ्गः । यदि पुनरविद्यो[19]पि प्रतिपादकादीनामविद्योपकल्पितत्वादेव, न भेदाभेदविकल्पसहा नीरूप[20]त्वादिति मतं तदा परमार्थपथावतारिणः प्रतिपादकादय इति बलादायातम्—तद[21]विद्यानामविद्योपकल्पितत्वे विद्यात्वविधेरवश्य-म्भावित्वात् । तथा च प्रतिपादिकादिभ्यो भिन्नमुपनिषद्वाक्यं संक्रा[22]न्तसं[23]वेद्यत्वान्यथानुपपत्तेः इत्य[24]चित्स्वभावं,

---

१ कल्पितत्वप्रकारेण । २ येन प्रकारेणोपनिषद्वाक्यं लिङ्गं च प्रतिपादकादिजनस्य प्रसिद्धं तेन प्रकारेण प्रसिद्धं पारमार्थिकं न पारमार्थिकम् । भवति चेत् तदा द्वैतं प्रसज्यते, इति कुतः पारमार्थिकसिद्धिः ? न कुतोपि । उपनिषद्वाक्यस्येति शेषः । ३ कोर्थः पारमार्थिकमुपनिषद्वाक्यं लिङ्गं चेति त्वयोक्तं तथा चेत्साध्यसमं यथाप्रसिद्धं तथोपनिषद्वाक्यमप्यसिद्धम् । असिद्धं साध्यमिति वचनात् । विरुद्धयोरधिकरणात् । ४ अन्यथा । ५ पारमार्थिकत्वं प्रतिपाद्यस्य प्रसिद्धं किल तर्हि कुतः चित्स्वभावस्य प्रतिपाद्यादीनां प्रसिद्धेरभावात्, प्रतिपादकसुखादिवत् । ६ ततः उपनिषद्वाक्याल्लिङ्गाच्च परमार्थसिद्धिमङ्गीकुर्वता विधिवादिना उपनिषद्वाक्यं लिङ्गं च परमार्थभूतं ज्ञातव्यम् । ७ च अङ्गीकर्त्तव्यं प्रतिपत्तव्यमिति कपुस्तकपाठः ८ विकल्पचतुष्टयं मनसि कृत्वा क्रमेण दूषयन्नाह । ९ सौगतो वदति हे विधिवादिन् तत् ( उपनिषद्वाक्यं लिङ्गं च ) अचित्स्वभावं चित्स्वभावं वेति प्रश्नविकल्पः । अचित्स्वभावं चेत्तदा परब्रह्मणो द्वैतं व्यवस्थापयति । चित्स्वभावं चेत्तदा प्रतिपादकाद्यनुमानद्वारेण दूषयति । प्रतिपादकवाक्यं पक्षः प्रतिपाद्यसवेद्यं न भवतीति साध्यो धर्मः प्रतिपादकचित्स्वभावत्वात् । यत्प्रतिपादकचित्स्वभावं तत्प्रतिपाद्यसवेद्यं न, यथा प्रतिपादकसुखादिकम् । प्रतिपादकचित्स्वभावं चेदं तस्मात्प्रतिपाद्यसवेद्यं न भवति । एवमग्रेपि । १० उपनिषद्वाक्यस्य लिङ्गस्य च चित्स्वभावत्वे सति परेषां ग्राह्यत्वं विरुध्यते । उपनिषद्वाक्यस्य लिङ्गस्य गुरोश्च चित्स्वभावत्वमस्तीत्युक्ते तथा सति गुरुसुखदुःखादिवत्तस्यापि परेषां प्रतिपाद्यादीनां संवेद्यत्वं विरुध्यते । तस्य शिष्यस्य चित्स्वभावत्वे सति वा शिष्यसुखादेर्यथा तथा तस्यापि गुरोः सवेद्यत्वं विरुध्यते । तस्य गुरुशिष्योभयचित्स्वभावत्वे सति तत्सुखादेर्यथा तथोपनिषद्वाक्यस्यापि प्राश्निकानां सवेद्यत्वं ज्ञानग्राह्यत्वं विरुध्यते । ११ प्रतिपाद्यादि । १२ सर्वजनचित्स्वभावत्वे सति तस्यायं गुरुः, अयं शिष्यः, अमी प्राश्निकाः इत्यादिभावो नोपपद्यते सर्वेषां चित्स्वभावत्वेन विशेषाभावात् । १३ या अविद्या गुरोर्गुरुत्वव्यवस्थापिका सैव शिष्यादेः सकाशादभिन्ना सती शिष्यादेरपि गुरुत्वं व्यवस्थापयेत् । १४ सकलजनचित्स्वभावस्याविशेषात् । १५ प्रतिपादकादीनां सङ्करप्रसङ्गः । प्रसङ्ग इति कपाठः । १६ अविद्याभेदकृतः प्रतिपादकादीनां भेद इति । १७ अभेदसाधने प्रवृत्तत्वे भेदः साधित इति विरुद्धधर्माध्यासः ( अध्यासः साहित्यम् ) । १८ य एव प्रतिपादकः स एव प्रतिपाद्य इति । १९ न केवलं प्रतिपादकादय एवाविद्योपकल्पिताः । २० तस्या अविद्याया नीरूपत्वात् अविद्यमानत्वादित्यर्थः । २१ प्रतिपादकाद्यविद्यानामनाद्यविद्योपकल्पितत्वे प्रतिपादकादीनां विद्यासद्भावोऽव्ययमेव सम्भवति । २२ उपनिषद्वाक्यं प्रतिपादकादिभ्यो भिन्नं न भवतीति चेत्तदा प्रतिपादकादीनां युगपदेव सर्वेषां सवेद्यत्वं न भवेत् । २३ तेषां प्रतिपादकादीनाम् । २४ उपनिषद्वाक्यमचित्स्वभावं सद्बहिर्वस्तु सिद्धं यथा तद्वत् ( उपनिषद्वाक्यवत् ) घटादिवस्तुनोपि बहिर्वस्तुत्वं सिध्यति ।

सिद्धं बहिर्वस्तु तद्वद्घटादिवस्तुसिद्धिरिति न प्रतिभासाद्वैतव्यवस्था प्रतिभास्य[1]स्यापि सुप्रसिद्धत्वात् । प्रति[2]-भा[3]ससमानाधिकरणता पुनः प्रतिभास[4]स्य कथञ्चिद्भेदेपि[5] न विरुध्यते । घट[6]ः प्रतिभासत इति प्रतिभासविषयो भवतीत्युच्यते विषयविषयिणो[7]रभेदोपचा[8]रात्, प्रस्थप्रमितं धान्यं प्रस्थ इति यथा । ततः सामानाधिकरण्यादुपचरितान्नानुपच[9]रितैकत्वसिद्धिः । मुख्यं सामानाधिकरण्यं क्व सिद्धमिति चेत्, संवेदनं प्रतिभासते भाति चकास्तीत्यादि व्यवहारे मुख्यम् + तत[10] वैयधिकरण्य[11]व्यवहारस्तु गौणस्तत्र संवेदनस्य प्रतिभासनमिति पटस्य प्रतिभासनमित्यत्र तस्य[12] मुख्यत्वप्रसिद्धेः । कथञ्चिद्भेदमन्तरेण सामानाधिकरण्यानुपपत्तेश्च । तत[13] एव कथञ्चिद्भेदसिद्धिः । शुक्ल[14]ः पट इत्यत्र सर्वथा शुक्लपटयोरैक्ये हि न समानाधिकरणता पटः पट इति यथा । नापि सर्वथा भेदे हिमवन्मकराकरवत् । त[15]थान्यापोहस्य[16] प्रतिभासमानस्य प्रतिभाससमानाधिकरणत्वेपि प्रतिभासाद्भेदव्यवस्थितेस्तद्विषयः शब्दः कथं विधिविषय एव सम[17]वतिष्ठते । तद[18]भ्युपगमे च कथमन्यपरिहारेण क्वचित्प्रवर्त्तकः शब्दो यतो विधिविषयः स्यादिति सूक्तम्—विधेः[19] प्रमाणत्वे तस्यैव प्रमेयत्वकल्पनायामन्यापोहा[20]नुप्रवेशो[21]न्यथान्यत्प्रमेयं वाच्यमिति । प्रमेयरूपो विधिरिति कल्पनायामपि प्रमाणमन्यद्वाच्यमिति तस्यैवोभयस्व[22]भावत्वविरोधात्—कल्पनावशाद्विधेः प्रमाणरूपत्वेन्यापोहवादानुषङ्गस्याविशेषात् । प्रमाणप्रमेयरूपो विधिरिति कल्पनाप्यनेन निरस्ता । तदनुभयरूपो विधिरिति कल्पनायां तु खरशृङ्गादिवदवस्तुतापत्तिः—प्रमाणप्रमेयस्वभावरहितस्य विधेः स्वभावान्तरेण व्यवस्थाना[23]योगात् । प्रमात्रा[24]देरपि प्रमेयत्वोप[25]पत्तेः । अन्यथा तत्र[26] प्रमाणवृत्तेरभावात् सर्वथा वस्तुत्वहानिः ।

---

१ उपनिषद्वाक्यं घटादि वस्तुरूपं प्रतिभास्यं प्रमेयमपि सुप्रसिद्धम् । ( प्रतिभासस्यापीति खपाठः ) । २ घट प्रतिभासते, ज्ञानं प्रतिभासते इति प्रतिभाससमानाधिकरणता । ३ यदि घटादयो ज्ञानादर्थान्तरभूतास्तदा कथं ज्ञानसामानाधिकरण्य घटादेर्घटेतेत्युक्ते आह प्रतिभाससमानेति । ४ प्रतिभासस्येति खपाठः । ५ ज्ञानाज् ज्ञेयमुपचारादभिन्नं परमार्थतो भिन्नमिति प्रतिभासात्प्रतिभास्यस्यान्यापोहलक्षणस्य कथञ्चिद्भेदेपि प्रतिभाससमानाधिकरणता न विरुध्यते । प्रतिभासः समानमधिकरणं यस्य स समानाधिकरणस्तस्य भाव प्रतिभाससमानाधिकरणता । ६ घट प्रतिभासत इत्युपचरितं सामानाधिकरण्य, सवेदनं प्रतिभासते इति मुख्यं सामानाधिकरण्यं, संवेदनस्य प्रतिभासनमिति उपचरितं वैयधिकरण्यं, पटस्य प्रतिभासनमिति मुख्यं वैयधिकरण्यम् । ७ यदि घटप्रतिभासयोर्विषयविषयिभावस्तदा कथं घटः प्रतिभासते इत्याशङ्कयाह । "मुख्यबाधाया" सति हि प्रयोजने निमित्ते चोपचारः प्रवर्त्तते इति न्यायानुसाराद् घटः प्रतिभासत इत्यत्राभेद उपचर्यते तत्र घटस्याप्रतिभासत्वं मुख्यबाधाप्रतिभास्यत्व निमित्तं तद्व्यवहारः प्रयोजनमिति । ८ घट प्रतिभासत इत्यत्र घटे ज्ञानस्योपचारो विषयिभावो निमित्तम् । ९ यत एवं तत उपचारभूतादन्यापोहस्य प्रतिभाससामानाधिकरण्यान्न परमार्थभूतैकत्वसिद्धि । १० भिन्नाधिकरण्यव्यवहार । ११ मुख्ये सामानाधिकरण्ये । १२ वैयधिकरण्यव्यवहारस्य । १३ सामानाधिकरण्यादेव । १४ सर्वथा भेदे वा किं दूषणमित्युक्ते आह । १५ पटप्रकारेण । १६ समानाधिकरणता इति सम्बन्ध । १७ कथञ्चिद्भेदे सामानाधिकरण्यव्यवस्थापनद्वारेण प्रतिभासमानोन्यापोहः समानाधिकरणत्वे सत्यपि प्रतिभासाद्भिन्नो व्यवतिष्ठते, यतस्तस्मादन्यापोहविषयः शब्दो विधिविषय एव कथं समवतिष्ठते ? न कथमपि । १८ अन्यापोहविषय शब्दो विधिविषयो भवतीत्यङ्गीकारे कृते सति नैरात्म्यादिपरिहारेणाविवक्षितवस्तुपरिहारेण वा क्वचिद्ब्रह्मणि विवक्षितवस्तुनि वा शब्दः कथं प्रवर्त्तको यत कुतो विधिविषय स्यान्न कुतोपि । एवं शब्द परार्थं परिहृत्य स्वार्थे प्रवर्त्तमानो भावाभावात्मको ज्ञेय इति स्याद्वादप्रक्रिया । १९ अन्यापोहवादी आह—अप्रमाणत्वव्यावृत्त्या प्रमाणत्वमप्रमेयत्वव्यावृत्त्या प्रमेयत्वमित्यन्यापोहावतार । २० अन्यापोहस्य प्रमेयत्वकल्पनाभावे । २१ अन्यापोहवादानुप्रवेशेन । २२ तस्यैवोभयस्वभावत्वविरोधादित्यादिना द्वितीयविकल्पनिराकरणेन । २३ स्वभावान्तरेण व्यवस्थानाभाव कुतो यावता प्रमात्रादिरूपेण विधेर्व्यवस्थितिर्भविष्यतीत्याशङ्कयाह । २४ प्रमिति । २५ विधिवाद्याह ।–विधि प्रमाणं प्रमेयं च मा भवतु किन्तु प्रमातृप्रमितिरूपोस्तीति चेदाहान्यापोहवादी ।—प्रमात्रादेरपि प्रमाणविषयत्वं घटते अन्यथा प्रमेयत्वं न घटते चेत्तदा प्रमाणव्यापारस्याभावात् प्रमात्रादिरूपेणाभ्युपगतस्य विधेर्वस्तुत्वं हीयते । २६ प्रमातरि प्रमितौ वा ।

शब्दव्यापाररूपो विधिरिति चेत् सा शब्दभावनैव । पुरुषव्यापारः स इति चेत् सार्थभावना[1] स्यात् । एतेनो[2]भय[3]व्यापाररूपो विधिरिति प्रत्याख्यातम् । तदनु[4]भयव्यापाररूपस्तु विधिर्विषय[5]स्वभावश्चेत्[6] तस्य[7] वाक्यकाले[8]ऽसन्निधानान्निरालम्बनशब्दवादप्रवेशः[9] । फल[10]स्वभावश्चेत् स[11] एव दोषः—तस्यापि तदाऽसन्निधानादन्यथा विधेरनवतारात् । निःस्वभावो विधिरिति कल्पनायां तु विधिर्वाक्यार्थ इति न किञ्चिद्वाक्यार्थ इत्युक्तं स्यात् । किञ्च[12] यदि विधिः सन्नेव तदा न कस्य[13]चिद्विधेयः पुरुषस्वरूपवत् । अथासन्नेव तथापि न विधेयः खरविषाण[14]वत् । अथ पुरुषरूपतया सन् दर्शना[15]दिरूपतया त्वसन्निति विधेयः स्यात्[16] तदोभय[17]रूपता[18]पत्तिः । न सन्नाप्यसन् विधिरिति चेत् तदिदं व्याहतम्[19]—सर्वथा सत्त्वप्रतिषेधे सर्वथैवासत्त्वविधिप्रसङ्गात्—तन्निषेधे[20] वा सर्वथा सत्त्वविधानु[21]षङ्गात् । सकृदुभयप्रतिषेधे तु कथञ्चित्सदसत्त्वविधानान्मतान्तरानुषङ्गात्[22] कुतो विधिरेव वाक्यार्थः । किञ्च विधिः प्रवर्त्तकस्वभावो वा स्यादप्रवर्त्तकस्वभावो वा ? प्रवर्त्तकस्वभावश्चेद्वेदान्तवादिनामिव ताथागतादीनामपि प्रवर्त्तकः स्यात् ।[23]तेषां विपर्यासान्न[24] प्रवर्त्तक इति चेत्[25] त एव वेदान्तवादिनामप्रवर्त्तक इत्यपि शक्येत[26] । सौगतादीनामेव विपर्यासोऽप्रवर्त्तमानानां, न पुनः प्रवर्त्तमानानां विधिवादिनामित्यप्रामाणिक[27]मेवेष्टम्—उभयेषां समानाक्षेपसमाधानत्वात् । यदि पुनरप्रवर्त्तकस्वभाव एव[28] विधिस्तदा कथं वाक्यार्थः स्यान्नियोगवत् । किञ्च विधिः फलरहितो वा स्यात् फलसहितो वा ? फलरहितश्चेन्न प्रवर्त्तको नियोगवदेव । पुरुषा[29]द्वैते न कश्चित्कुतश्चित्प्रवर्त्तक इति चेत् कथमप्रवर्त्तको विधिः सर्वथा वाक्यार्थः कथ्यते[30] ।—तथा[31] नियोगस्यापि वाक्यार्थत्वप्रसङ्गात् । तथा द्रष्टव्यो रेऽयमात्मेत्यादिवाक्यादात्मनि[32] दर्शनश्रवणानुमननध्यानविधाने प्रतिपत्तुरप्रवृत्तौ किमर्थस्तद्वा[33]क्याभ्यासः ? फलसहितो विधिरिति कल्पनायां फलार्थितयैव लोकस्य प्रवृत्तिसिद्धेर्व्यर्था विधि[34]कथनं नियोगकथनवत् । तथापि[35] विधेर्वाक्यार्थत्वे नियोगस्यापि वाक्यार्थत्वं कुतो न भवेत् ।

---

१ पुरुषभावना । २ प्रत्येकपक्षद्वयनिराकरणेन । ३ पर्यायेण युगपद्वेत्यादिना नियोगनिराकरणे प्रोक्तं दूषणमत्रापि ज्ञातव्यं द्रष्टव्येत्यादिना । ४ तदुभयाव्यापाररूप इति वा पाठ. । ५ ब्रह्मदर्शनादि । ६ शब्दात्मव्यापाररहितो विधिरिति चेत् सोपि विषयस्वभावो वा स्यान्निःस्वभावो वा फलस्वभावो वेति क्रमेण दूषयति । ७ विषयस्वभावस्य विधे॰ । ८ सर्वं वै खल्विदं ब्रह्मेत्यादिवाक्यकाले । ९ सौगतमते निरालम्बनशब्दवादोभिप्रेत । १० अर्थरहित । ११ फलस्वभावस्य विधे. स एव निरालम्बनशब्दवादप्रवेश. । कस्मात् ? तदा वाक्यकाले विधेरसामीप्यात् । १२ विधि सन्नेव वाऽसन्नेव वा उभयरूपो वानुभयरूपो वेति विकल्पक्रमेण दूषयति । १३ विधि. पक्ष॰ कस्यचिन्नविधेयो न भवतीति साध्यो धर्म॰—सत्त्वात् । य सन् स न कस्यचिद्विधेयो यथा पुरुषः । संश्चायं तस्मान्न कस्यचिद्विधेय. ( कर्त्तव्य ) । १४ द्वितीयविकल्पानुमानम्—विधि पक्ष॰ कस्यचिद्विधेयो न भवतीति साध्य —असत्त्वात् । यदसत्तन्न कस्यचिद्विधेयं यथा खरविषाणम् । असश्चायं तस्मान्न कस्यचिद्विधेय. । १५ द्रष्टव्यो रेयमात्मेत्यादिदृश्यत्वकर्तव्यत्वादिना । १६ विधिरिति शेष । १७ ततश्च स्वसिद्धान्तव्याघातः–विधेः सर्वथासत्त्वाभ्युपगमात्—असद्रूपस्य कस्यापि वेदान्तिनानभ्युपगमात् । १८ द्वैतापत्ति॰ । १९ विरुद्धम् । २० सर्वथा असत्त्वनिषेधे । २१ जैनमता ( स्याद्वाद ) श्रयणात् । २२ तस्य सर्वथा प्रवर्त्तकत्वात् । २३ ताथागतादीनाम् । २४ प्रवर्त्तकस्वभावे विधावप्रवर्त्तकतया गमनं विपर्यास॰ । २५ विपर्यासादेव । २६ वक्तुमिति शेषः । २७ इति स्याद्वादी वदति ।—उभयेषा सौगतादीना वेदान्तवादिनां चेष्टं प्रतिपादितं प्रमाणविरुद्धं भवति । कस्मात् ? सदृशप्रत्यवस्थानव्यवस्थानात् । २८ विधिः पक्ष. वाक्यार्थो न भवतीति साध्यो धर्मः—अप्रवर्त्तकत्वान्नियोगवत् । २९ अत्राह विधिवादी ।—कश्चिद्विधि कुतश्चित्प्रमाणात्प्रमाणाद्वैते प्रवर्त्तको न स्यात् । ३० अन्यथा । ३१ अप्रवर्त्तकत्वेन । ३२ ब्रह्मणि । ३३ किम्प्रयोजनक॰ । ३४ द्रष्टव्येत्यादि । विधिः प्रवर्त्तक इति प्रतिपादनम् । ३५ अप्रवर्त्तकत्वेपि । यद्यपि प्रमाणप्रमेयाद्यनेकधा विकल्पखण्डनद्वारेण विधिर्वाक्यार्थो नास्ति तथापि विधिवादिनो बलात्कारेण विधेर्वाक्यार्थत्वे नियोगस्यापि वाक्यार्थत्वं कथं न भवेत् ? इत्याशय. ।

पटादिवत्[1] पदार्थान्तर[2]त्वेनाप्रतिभासनान्नियोज्य[3]मानविषय[4]नियोक्तृ[5]धर्मत्वेन चानवस्थानान्न नियोगो वाक्यार्थ इति चेत् तदितरत्र[6]ापि समानम्[7]— विधेरपि घटादिवत् पदार्थान्तरत्वेनाप्रतिभासनात्—विधी[8]यमानविषये[9]विधायक[10]धर्मत्वेनाव्यवस्थितेश्च । यथैव[11,12] हि नियोज्यस्य पुंसो धर्मे नियोगेऽननुष्ठेयता[13] नियोगस्य सिद्धत्वाद्—अन्यथा तदनुष्ठानोपरमाभावानुषङ्गात्[14]—कस्यचिद्[15]रूपस्यासिद्धस्याभावात् । असिद्ध[16]रूपतायां वाऽनियोज्यत्वम्—विरोधाद्वन्ध्यास्तनन्धयादिवत् । सिद्धरूपेण नियोज्यत्वे तस्यैवार्थरूपेण वा नियोज्यतायामेकस्य[17] पुरुषस्य सिद्धासिद्धरूपसङ्करान्नियोज्येतरत्वविभागासिद्धिः । तद्रूपा[18]ऽसङ्करे वा[19] भेदप्रसङ्गादात्मनः सिद्धासिद्धरूपयोः सम्बन्धाभावोनुपकारात् । उपकारकल्पनायामात्मनस्तदुपकार्यत्वे[20] नित्यत्वहानिः । तयोरात्मोपकार्यत्वे सिद्धरूपस्य सर्वथोपकार्यत्वव्याघातः । असिद्धरूपस्याप्युपकार्यत्वे गगनकुसुमादेरुपकार्यतानुषङ्गः।सिद्धासिद्धरूपयोरपि कथञ्चिदसिद्धरूपोपगमे प्रकृतपर्यनुयोगानिवृत्तेरनवस्था[21]नुषङ्गादित्युपालम्भः[22] । तथा[23] विधाप्यमानस्य पुरुषस्य धर्मे विधौ[24]वपि सिद्धस्य पुंसो दर्शनश्रवणानुमननध्यानविधानविरोधः । तद्विधाने[25] वा सर्वदा तदनुपरति[26]प्रसक्तिः । दर्शनादिरूपेण तस्या[27]सिद्धौ विधान[28]व्याघातः कूर्मरोमादिवत् । सिद्धरूपेण विधाप्यमानस्य विधाने तस्यैवासिद्धरूपेण चाविधाने सिद्धासिद्धरूपसङ्करा द्विधाप्येतरत्वविभागासिद्धिः । तद्रूपासङ्करे वा भेदप्रसङ्गादात्मनः[29] सिद्धासिद्धरूपयोस्तत्सम्बन्धाभावादि दोषासञ्जनस्या[30]विशेषः । तथा[31] विषयस्य योगलक्षणस्य धर्मे नियोगे तस्याऽपरिनिष्पन्नत्वात् स्वरूपा[32]भावाद्वाक्येन प्रत्येतुमशक्य[33]त्वस्य विधौ[34]वपि विषय[35]धर्मे समानत्वात्कुतो विषय[36]धर्मो विधिः ? पुरुष[37]स्यैव विषयतयावभासमानस्य विषयत्वात्तस्य[38] च परिनिष्पन्नत्वान्न तद्धर्मस्य विधेर[39]सम्भव इति चेत् तर्हि[40] यजनाश्रयस्य द्रव्यादेः सिद्धत्वात्तस्य[41] च विषयत्वात्कथं तद्धर्मो नियोगोपि न सिद्ध्येत् ? येन रूपेण विषयो विद्यते तेन तद्धर्मो नियोगोपीति, तदनुष्ठाना[42]भावे विधिविषयो येन रूपेणास्ति तेन तद्धर्मस्य विधेः कथमनुष्ठानम् ?

---

१ व्यतिरेकदृष्टान्त । विधिवादाह ।—यथा पुरुषात्पटादिकार्यरूपं भिन्नं प्रतिभासते तथा न नियोगप्रेर्यमाणपुरुषविषयप्रेरकधर्मरूपेण घटादि प्रतिभासते न तथा नियोग इति हेतुद्वयान्नियोगस्यानवतारान्न नियोगो वाक्यार्थो न भवति। २ भिन्नत्वेन । ३ पुरुष । ४ यागादि । ५ अग्निष्टोमेत्यादि । ६ विधिपक्षे । ७ विधिर्न वाक्यार्थ इत्यादि । ८ अवश्यकरणीयतयाभिमन्यमान । सर्वं वै खल्विदं ब्रह्मेत्यादिवाक्याद्विधाप्यमान । ९ यागादिरूप । १० आत्मा ११ एतदेव क्रमेण विव्रियते १२ अतो नियोगखण्डनद्वारेण विधिखण्डनार्थं भावनावादी वदति । १३ अकर्तव्यता । १४ सिद्धरूपस्य नियोगस्य यद्यनुष्ठेयता तदा तस्य नियोगस्य करणीयानवस्थाप्रसङ्गः—यतस्तत्र नियोगे कश्चिद्भागो असिद्धो नास्ति । १५ पुरुषधर्मस्य नियोगस्य सिद्धत्वं कथमित्याशङ्कायामाह कस्यचिदिति । १६ असिद्धरूपोपि नियोगो नियोज्यो भवतीति चेत्तदा वन्ध्यास्तनन्धयादेरपि नियोज्यत्वप्रसङ्ग । तथा नास्ति लोके विरोधदर्शनात् १७ नियोगस्यैकं रूपं सिद्धमन्यदसिद्धं सिद्धरूपेण नियोज्यत्वे सति तस्यैव नियोगस्यासिद्धरूपेण कृत्वा अनियोज्यताया सत्यामित्येकपुरुषस्य सिद्धासिद्धरूपमिश्रणाद्यं नियोज्योयमनियोज्य इति भेदो न सिद्ध्यति । अथ वा तद्रूपयोरमिश्रणे सति भेदघटनादात्मन सिद्धासिद्धरूपयोश्च परस्परसम्बन्धो नास्ति । कस्मात् ? उपकाराकरणात् । १८ तद्रूपासङ्करे एव भेदप्रसङ्गादिति वा पाठः । १९ आत्मन. सकाशात् सिद्धासिद्धपर्याययोर्भेदप्रसङ्गात् । २० ताभ्या सिद्धासिद्धाभ्यामुपकार्यत्वे किं दूषणं स्यात् ? आत्मनो नित्यत्वहानि । २१ प्रारब्धनियोगप्रश्नस्य निवृत्तिर्न भवतीति तदा किमायातम् ? अनवस्थानाम दूषणं स्यात् । २२ अत प्रभृति नियोगखण्डनवद्विधे खण्डनं करोति भावनावादी । २३ यथैव हीत्यादिनियोगपक्षे । २४ अवश्यकरणीयदर्शनश्रवणमननादिरूपे । २५ तस्य सिद्धस्य पुरुषस्य करणे वा । २६ अविश्रान्तिरनवस्था वा । २७ विधे । २८ यागलक्षणस्य विषयधर्मस्य नियोगस्य । २९ सकाशात् । ३० अनुषङ्गस्य । ३१ हे विधिवादिन् । ३२ प्रत्येतुमशक्यत्वं कुत इत्युक्ते तत्र समर्थनपर प्रथमं साधनम् । ३३ दूषणस्य । ३४ अवश्यकरणीयदर्शनादौ । ३५ दर्शनादि । ३६ आत्मन धर्म । ३७ विधिवादी । ३८ पुरुषस्य । ३९ अवश्यकरणीयदर्शनादे । ४० नियोगमतमवलम्ब्य भावनावादी वदति । ४१ द्रव्यादे । ४२ तस्य नियोगस्य करणाभावे सति विधेरप्यनुष्ठानं मा भूत् ।

येन[1]ांशेन ना[2]स्ति तेनानुष्ठा[3]नमिति चेत् त[4]न्नियोगेपि समानम् । कथ[5]मसन्नियोगोनुष्ठीयते—अप्रतीयमानत्वात् खरविषाणवदिति चेत्[6]त एव विधिरपि नानुष्ठेयः । [7]प्रतीयमानत्वादनुष्ठे[8]यार्थतया चासिद्धत्वादनुष्ठेयो विधिरिति चेन्नियोगोपि त[9]थास्तु । न[10]न्वनुष्ठे[11]यतयैव नियोगोवति[12]ष्ठते, न प्रतीयमानतया तस्याः सकल[13]वस्तुसाधारणत्वात् । [14]अनुष्ठेयता च यदि प्रतिभाता कोन्यो नियोगो यस्यानुष्ठितिरिति चेत् तर्हि विधिरपि न प्रतीयमानतया प्रतिष्ठामनुभ[15]वति, किन्तु विधीयमानतया[16] । सा चेदनुभूता कोन्यो विधिर्नाम यस्य विधानमुपनिषद्वाक्यादनुक[17]र्ण्यते । न[18]नु द्रष्टव्यादिवाक्येनात्मदर्शनादिकं विहितं[19] ममेति प्रतीतेरप्रतिक्षयार्हो विधिः कथमपाक्रि[20]यते ? किमिदा[21]नीमग्निहोत्रादिवाक्येन यागादिविषये नियुक्तोहमिति प्रतीतिर्न विद्यते येन नियोगः प्रतिक्षिप्यते ? सा प्रतीतिरप्रमाणमिति चेत् विधिप्रतीतिः कथमप्रमाणं न स्यात् ? विधिप्रतीतेः पुरुषदोषरहितवेदवचनेन जनितत्वादिति चेत्तत एव नियोगप्रतीतिरप्यप्रमाणं मा भूत्—सर्वथाप्यविशेषा[22]त् । तथापि नियोगस्य विषयधर्मस्यासम्भवे विधेरपि तद्धर्मस्य न सम्भवः । शब्द[23]स्य विधाय[24]कस्य धर्मो विधिरित्यपि न निश्चेतुं शक्य[25]म्—नियोगस्यापि नियोक्तृशब्दधर्मत्वप्रतिघाताभावानुषक्तेः । शब्दस्य सिद्धरूप[26]त्वात्तद्धर्मो नियोगः कथमसिद्धो येनासौ सम्पा[27]द्यते कस्यचिदित्यपि न मन्तव्यम्—विधिसम्पादनविरोधात्—तस्या[28]पि सिद्धोपनिषद्वाक्यधर्मत्वाविशेषात् । प्रसिद्ध[29]स्यापि सम्पादने पुनःपुनस्तत्सम्पादनप्रवृत्त्यनुपरमात् कथमुपनिषद्वाक्यस्य प्रमाणता—तदपूर्वार्थताविरहात्स्मृतिव[30]त् । तस्य वा प्रमाणत्वे नियोगवाक्यं प्रमाणमस्तु—विशेषाभावात् । किञ्च तद्विधिविषयं वाक्यं गुणभावेन प्रधानभावेन वा विधौ प्रमाणं स्यात् ? यदि गुणभावेन तदाग्निहोत्रं जुहुयात्स्वर्गकाम इत्यादिरपि त[31]दस्तु—गुणभावे[32]न विधिविषयत्वस्य भावात्—त[33]त्र भट्टमतानुसारिभिर्भावनाप्राधान्येनोपगमात्—प्राभाकरैश्च नियोगगोचरत्वस्य प्रधानत्वाङ्गीकरणात् । तौ च भावनानियोगौ नासद्विष[34]यौ प्रवर्त्तेते प्रतीयेते वा सर्वथाप्यसतोः प्रतीतौ वा शशविषाणादेरपि तदनुषक्तेः[35] । सद्रू[36]पतया च तयोर्विधिनान्तरीयकत्वसिद्धेः सिद्धं गुणभावेन विधिविषयत्वं वाक्यस्य । इति नाप्रमाणतापत्तिर्येन कर्मकाण्डस्य पारमार्थिकता न भवेत् । प्रधा[37]नभावेन विधिविषयं चोदनावाक्यं प्रमाणमिति चायुक्तम्—विधेः

---

१ अत्र विधिवादी वदति । २ विधिर्नास्ति । ३ विधे. करणं घटते । ४ अनुष्ठानम् । ५ विधिवादी । ६ उत्तरम् । अप्रतीयमानत्वादेव । ७ विधिवादी । ८ दर्शनश्रवणादिरूपतया । ९ विधिप्रकारेण प्रतीयमानत्वादनुष्ठेयो भवतु । १० विधिवादी भावनावादिनं प्रति । ११ कर्त्तव्यतया । १२ अयं नियोगो नान्य इति व्यवस्थितिर्भवति । १३ जुहुयादित्यादिषु । १४ अनुष्ठेयता प्रतिभाता अप्रतिभाता वा ? यदि प्रतिभाता तदा प्रतिभासान्तःप्रविष्टैव । अप्रतिभाता चेत्तदा तस्यावस्थितिरपि नास्ति । १५ तस्याः सकलवस्तुसाधारणत्वादिति सम्बन्धः । १६ द्रष्टव्यो रेयमात्मेत्यादिकर्त्तव्यतया । १७ वेदान्तवादिना । १८ विधिवादी । १९ अवश्यङ्करणीयम् । २० प्रभाकरेण । २१ विधे. प्रतीतिकाले । २२ विधिप्रतीतिनियोगप्रतीत्योर्द्वयोरपि पुरुषदोषरहितवेदवचनजनितत्वेन कृत्वा सर्वथापि विशेषाभावात् । २३ विधिलक्षणार्थप्रतिपादकस्य । २४ विधिवाद्याह ।—विदधातीति विधायको द्रष्टव्यो रेयमात्मेत्यादिवाक्यरूपः शब्दस्तस्य धर्मे विधिरपि विधायक इति । २५ अन्यथा । २६ शब्दस्त्वग्निहोत्रं जुहुयादित्यादि सिद्धरूप. शब्दधर्म एव नियोगः कथमसिद्धो यतो यागादि. कर्त्तव्य. स्यात् । २७ वेदवाक्येनानुष्ठेयो भवतीति प्रतिपाद्यते । २८ विधिसम्पादनस्य । २९ ज्ञातस्यापि । ३० वेदस्य उप समीपे निपदनमुपनिषत् तस्य वाक्यमुपनिषद्वाक्यं पक्ष प्रमाणं न भवतीति साध्यो धर्मः तस्यापूर्वार्थताविरहात् । यथा स्मृति । यथा स्मृतेरपूर्वार्थताप्रतिपादनं नास्ति श्रुत्यनुसारित्वात् तथेत्यर्थ. । ३१ नियोगभावनास्तित्वम् । ३२ नियोगस्योपचारेण विधिविषयत्वघटनात् । ३३ विधौ । ३४ असतौ च तौ विपयौ च । ३५ सर्वथाप्यविद्यमानस्य शशकशृङ्गगगनकुसुमवन्ध्यास्तनन्धयादेरपि तयो प्रतीतिप्रवृत्तिकयोरनुपङ्गात् । ३६ भावनानियोगयोर्नान्तरीयकत्वं ( न विच्छेदकत्वमविनाभावित्वं वा ) तस्य सिद्धेर्घटनात् । ३७ वेदवाक्यं मुख्यं विधिरपि मुख्य इति चेन्न—तथासति द्वैताभावात् । * वर्ण्यते इत्यपि पुस्तकान्तरे ।

सत्यत्वे[1] द्वैतावतारात्[2] । तदसत्यत्वे प्राधान्याऽयोगात् । तथा[3] हि । यो योऽसत्यः स स न प्रधानभावमनुभवति । यथा तदविद्याविलासः । तथा चासत्यो विधिरिति न प्रधानभावेन तद्विषयत्वोपपत्तिः । स्यान्मतम् ।—न सम्यगवधारितं विधेः स्वरूपं भवता[4] तस्यैवं[5] यतो व्यवस्थितत्वात् । प्रतिभासमात्राद्धि[6] पृथग् विधिः कार्यतया न प्रतीयते घटादिवत्[7] प्रेरकतया च नाध्यवसीयते वचनादिवत्[8] । कर्मकरणसाधनतया हि तत्प्रतीतौ[9] कार्यताप्रेरकताप्रत्ययो[10] युक्तो नान्यथा[11] । किंतर्हि द्रष्टव्योऽयमात्मा श्रोतव्योऽनुमन्तव्यो निदिध्यासितव्य इत्यादिशब्दश्रवणादवस्थान्तरविलक्षणेन[12] प्रेरितोऽहमिति जाताकूतेनाकारेण स्वयमात्मैव प्रतिभाति । स एव विधिरित्युच्यते । तस्य[13] च ज्ञानं विषयतया सम्बन्धमधितिष्ठतीति[14] प्रधानभावविभावना विधेर्न[15] विहन्यते—तथाविधवेदवाक्यादात्मन[16] एव विधायकतया प्रतिभासनात् । तद्दर्शनश्रवणानुमननध्यानरूपस्य विधीयमानतयानुभवात् । तथा[17] च स्वयमात्माऽऽत्मानं द्रष्टुं श्रोतुमनुमन्तुं ध्यातुं वा प्रवर्त्तते । तथा प्रवृत्त्यसम्भवे ह्यात्मनः प्रेरितोऽहमित्यवगतिरप्रामाणिकी स्यात् । ततो नासत्यो विधिर्येन[18] प्रधानता तस्य विरुध्यते । नापि सत्यत्वे द्वैतसिद्धिः—आत्मस्वरूपव्यतिरेकेण तदभावात्[19]—तस्यैकस्यैव तथा[20] प्रतिभासनादिति । तदप्यसत्यम्[21]—नियोगादि[22]वाक्यार्थस्यापि निश्चयात्मकतया प्रतीयमानत्वात् । तथा हि ।—नियोगस्तावदग्निहोत्रादिवाक्यादिव द्रष्टव्योऽरेऽयमात्मेत्यादिवचनादपि प्रतीयत एव । नियुक्तोऽहमनेन वाक्येनेति निरवशेषो[23] योगः प्रतिभाति—मनागप्ययोगाशङ्कानवतारादवश्यकर्त्तव्यतासम्प्रत्ययात् । कथमन्यथा तद्वाक्यश्रवणादस्य[24] प्रवृत्तिरुपपद्यते—[25]मेघध्वन्यादेरपि[26] प्रवृत्तिप्रसङ्गात् । किञ्च शब्दाद् द्रष्टव्योऽरेऽयमात्मेत्यादेरात्मद्रष्टव्यतादिविधिस्तदऽद्रष्टव्यतादि[27]व्यवच्छेदरहितो यदीष्यते[28] तदा न कस्यचित्प्रवृत्तिहेतुः[29]—प्रतिनियतविषयविधिनान्तरीयकत्वात्प्रेक्षावत्प्रवृत्तेः । तस्य चातद्विपर्यय[30]परिहाराविनाभावित्वात् कटः कर्त्तव्य इति यथा । न हि कटे कर्त्तव्यताविधिरतद्व्यवच्छेद[31]मन्तरेण व्यवहारमार्गमवतारयितुं शक्यः । परपरिहार[32]सहितो विधिः शब्दार्थ इति चेत् तर्हि[33] [34]विधिप्रतिषेधात्मकः शब्दार्थ इति कुतो विध्येकान्तवादस्य प्रतिष्ठा प्रतिषेधैकान्तवादवत्[35] । स्यान्मतम्[36] ।—परपरिहारस्य[37] गुणीभूतत्वाद्विधेरेव प्रवृत्त्यङ्गत्वेन[38] प्राधान्याद्विधिः शब्दार्थ इति । कथम्[39]इदानीं[40] शुद्धकार्यादि[41]रूपनियोगव्यवस्थितिर्न स्यात् ?—कार्यस्यैव शुद्धस्य प्रवृत्त्यङ्गतया प्रधानत्वोपपत्तेः—नियोज्यादेः[42] तत्रापि[43] गुणीभावात् । तद्वत्प्रे-

---

१ उपचरितत्वाभावे । २ श्रोतव्यश्रोतृत्वादिभेदेन विधायकतया विधेयतया च । ३ अत्र विधिविषयं वाक्यं प्रधानभावेन विधौ प्रमाणमस्तीति यदुक्तं तत्खण्डनार्थं भावनावादी नियोगमतमवलम्ब्याह ।—"विधिः प्रधानभावं नानुभवति—असत्यत्वात् । यो योऽसत्य इत्यादि" । ४ प्रभाकरेण । ५ ( वेदान्त्याह ) नियोगमतावलम्बिना भट्टेन त्वया । ६ विधेः । ७ यथा घटादि कार्यतया पृथक् प्रतीयते तथा विधि प्रतिभासमात्रात् पृथङ् प्रतीयते । ८ यथा प्रेरकतया वचनमध्यवसीयते तथा विधिर्न । ९ विधि । १० कार्यताप्रेरकता ( विधेः ) न युक्तेत्येव स्वपाठः । ११ कर्मकरणसाधनाभावे विधिपरिज्ञाने कार्यताप्रेरकताप्रत्ययो युक्तो न । १२ अप्रेरितावस्थाविलक्षणेन । अद्रष्टव्यादिविलक्षणेन । १३ विधेः । १४ दर्शनादिकं विधीयमानतया विधेः सम्बन्धमधितिष्ठतीति यावत् । वृक्षस्य शाखेवाभेदे षष्ठीविधिना एकत्वमेवेत्यर्थं । १५ विधेर्मुख्यत्वनिश्चयो न विरुध्यते । १६ वेदवाक्यादात्मान्य एव न तद्दर्शयति । वेदवाक्यं ज्ञानमेव तच्चात्मनो धर्मोऽत कारणाद्वेदवाक्यात्मनोरभेद एवेति । १७ विधायकविधीयमानयोरभेदे । १८ प्रमिति । १९ विधेरभावात् । २० विधायकतया विधेयतया च । २१ भाट्ट । २२ आदिशब्देन भावना । २३ दर्शनश्रवणादावात्मसम्बन्ध । २४ नु । २५ अन्यथा । कर्तव्यतासम्प्रत्ययाभावेपि तद्वाक्यश्रवणात्प्रवृत्तिरुपपद्यते चेत् । २६ का ( पञ्चमी ) । २७ अश्रोतव्यतादि । २८ वेदान्तिना त्वया । २९ आत्मद्रष्टव्यतादौ । ३० अप्रतिनियतविषय । ३१ पटकर्तव्यतादिपरिहारं विना । अकटकर्तव्यतानिराकरणं विना । ३२ विधिवादी वदति । ३३ भाट्ट । ३४ अस्तित्व । ३५ यथा सर्वथा प्रतिषेधैकान्त ( अन्यापोह ) वादस्य प्रतिष्ठा नास्ति । ३६ विधिवादी । ३७ अन्यापोहस्य । ३८ हेतुत्वेन । ३९ भाट्ट । ४० प्राधान्यमाश्रित्य विधेः शब्दार्थनिरूपणावसरे । ४१ शुद्धकार्याद्येकादशप्रकार । ४२ पुरुषादे । ४३ शुद्धकार्यरूपे नियोगे । वाक्ये ।

रणादिस्वभावनियोगवादिनां प्रेरणादौ प्रधानताभिप्रायात् तदितरस्य सतोपि गुणभावाध्यवसायाद्युक्तो नियोगः शब्दार्थः । शुद्ध[1]कार्यप्रेरणादिषु स्वो[2]भिप्रायात् कस्यचित्प्रधानभावेपि पराभिप्रायात्प्रधानत्वाभावात् । तदन्यतर[3]स्यापि स्वभावस्याव्यवस्थितेनैक[4]स्यापि शब्दार्थत्वमिति चेत् तर्हि[5] पुरुषाद्वैतवादागमवशाद्विधेः प्रधानत्वेपि ताथागतमताश्रयणादप्रधानताघटनात् सोपि न प्रतिष्ठामापद्येत विप्रतिपत्तिसद्भावाविशेषात्[6] । स्यान्मतिरेषा ते[7] विधेरेव सर्वत्र[8] प्रधानता—प्रवृत्त्यङ्गत्वोपपत्तेः । न पुनः प्रतिषेधस्य प्र[9]वृत्त्यङ्ग[10]तानुपपत्तेः । क्वचित्[11]प्रवर्त्तितुकामो हि सर्वस्तद्विधिं[12]मन्वेषते तत्र[13] पररूपप्रतिषेधान्वेषणे[14] परिनिष्ठा[15][16]नुपपत्तेः—पररूपाणा[17]मानन्त्यात् क्वचित्[18]प्रतिषेद्धुमशक्तेर्थे[19] । तद्धि[20] पररूपं न तावत्स्वयमप्रतिपद्य क्रमशः प्रतिषेद्धुं[21] शक्यम्—प्रतिषेधस्य निर्विषयत्वप्रसङ्गात् । नापि प्रतिपद्य—तत्प्रतिपत्तेरपि पररूपप्रतिषेधापेक्षत्वात्—तस्यापि[22] च प्रतिपन्नस्यैव प्रतिषेधे[23]ऽनवस्थानुषङ्गात् । युगपत्सकलपररूपप्रतिषेधे परस्पराश्रयानुषङ्गात् । सिद्धे सकलपररूपप्रतिषेधे प्रतिपित्सितविधिसिद्धि[24]स्तत्सिद्धौ[25] च तत्परिहारेण[26] तत्प्रतिपत्तिपूर्वकसकलपररूपप्रतिषेधसिद्धिरिति । तदेतद[27]नालोचिताभिधानम्—मण्डनमिश्रस्य[28] । सर्वथा विधेरपि प्रवृत्त्यङ्गतानुपपत्तेः । सर्वो हीष्टे वस्तुनि प्रवर्त्तितुमना जनोनिष्टपरिहारं तत्रा[29]न्वेषते—अन्यथानिष्टेपि प्रवृत्तौ समीहितव्याघातप्रसक्तेः । अनिष्टप्रतिषेधश्च प्रत्यक्षादिवत्[30] कुतश्चिद्वाक्यादपि शक्यः प्रतिपत्तुम्—केवलविधिप्रतिपत्तेरेवान्यप्रतिषेधप्रतिपत्तिरूपत्वात्—केवलभूतलप्रतिपत्तेरेव घटाभावप्रतिपत्तिसिद्धेः । न ह्ययं प्रतिपत्ता [31]किञ्चिदुपलभमानः पररूपैः संकीर्ण[32]मुपलभते—यतः प्रमाणान्तरात्तत्प्रतिषेधः साध्यते[33] । न[34] च सर्वथा तैरसङ्कीर्णमेव—सदा[35]द्यात्मनापि तदसङ्करे तस्यासत्त्वप्रसङ्गात् । परस्मा[36]त्कथञ्चिद्व्यावृत्तमऽव्यावृत्तात्मकं च कुतश्चित्प्रमाणा[37]दुपलभमानोर्थी परव्यावृत्तिद्वारेण वा प्रवर्त्तते विधिद्वा[38]रेण वेति । विधेरिवान्यापोह[39]स्यापि प्रवृत्त्यङ्गत्वोपपत्तेर्न विधेरेव प्राधान्यम्—विधात्रेव[40] प्रत्यक्षमुपनिषद्वाक्यं चेति नियमस्यासम्भवात्—अन्यथा[41]

---

१ विधिवादी । २ प्राभाकराभिप्रायात् । ३ अत्र विधिवादी वदति ।—तयो प्रधानत्वाप्रधानत्वयोरन्यतरस्यापि शुद्धकार्यादिनियोगस्य । ४ प्रेरणादिनियोगस्य प्रधानस्याप्रधानस्य वा । ५ भावनावादी सौगतमतमवलम्ब्य विधिवादिनमाह । ६ विधिवादिसौगतयोर्विवादसद्भावेन विशेषाभावात् । ७ विधिवादिन· । ८ वाक्ये । ९ सर्वथा प्रवृत्त्यङ्गतानुपपत्तेरिति वा पाठ । १० कारणता । ११ जलादौ । १२ जलाद्यस्तित्वम् । १३ जलादौ । १४ सति । १५ परिसमाप्ति । १६ परिनिष्ठानुपपत्ति· कुतः ? १७ अग्निरूपाणाम् । १८ जलादौ । १९ तत्र विवक्षिते वस्तुनि पररूपाभावविचारणे परिसमाप्तिर्न सम्भवति । कस्मात् ? पररूपाण्यनन्तानि यत· क्वचिद्वस्तुनि प्रतिषेध· कर्तुं न शक्यते च यत इति हेतुद्वयम् । २० विधिवादी पृच्छति ।—हे सौगतमतावलम्बिन् भावनावादिन् त्वया यत्पररूपं प्रतिषिध्यते तत्क्रमशो युगपद्वा ? क्रमशश्चेत्तदा तत्रापि पररूपं तदनिश्चित्य निश्चित्य वा प्रतिषिध्यते ? इति विकल्पमेव विधिवादी खण्डयति । २१ पररूपं ज्ञात्वा स्वयं क्रमेण निवारयितुं न शक्यते । कस्मात् ? तस्य पररूपस्य निश्चितेरप्यन्यपररूपप्रतिषेधाश्रयत्वात् । २२ पररूपस्यापि । २३ प्रतिषेधेनानवस्थाप्रसङ्गादिति पाठान्तरम् । २४ सद्भाव । २५ प्रतिपित्सितविधिसिद्धौ । २६ प्रतिपित्सितवस्तुनिराकरणेन तत्परिज्ञानपूर्वकसर्वान्यरूपनिषेधसिद्धि· । २७ भावनावादी भाट्टः । २८ विधिवादिन· । २९ इष्टे । ३० प्रत्यक्षादेरिव । ३१ जलादिकम् । ३२ सहितम् । ३३ किञ्चित्केवलभूतलादिकं जानन् पश्यन् वायं प्रमाता पुमान् पररूपैर्घटादिकैः सङ्कुलं न पश्यति यत· कुतोन्यस्मात्प्रमाणात्पररूपप्रतिषेध· साध्यते ? अपि तु न कुतोपि । ३४ पर आह ।—तर्हि हे स्याद्वादिन् शुद्धभूतलघटादिपररूपं सर्वथाऽसङ्कीर्णमेवेति पृष्टे स्याद्वादी वदति ।—नैवम् । कस्मात् ? सत्त्वप्रमेयत्ववस्तुत्वादिना कृत्वा भूतलस्य पररूपैः सहाऽमेलने सति भूतलस्याप्यसत्त्वमायाति यतः । ३५ अन्यथा । ३६ इष्टेतरात् । पररूपात् । ३७ प्रत्यक्षात् । ३८ सदाद्यात्मना । ३९ प्रतिषेधस्यापि । ४० ( प्रथमान्तम् ) आहुर्विधातृ प्रत्यक्ष न निषेद्धृ विपश्चितः । नैकत्वे आगमस्तेन प्रत्यक्षेण प्रबाध्यते इति विधिवादिप्रतिपादितवाक्यस्यार्थस्य नियमस्यासम्भवात् । ४१ अन्यथा, नियम· सम्भवति चेत्तदा ततो विधातृ सकाशादविद्याविधानमनुपजति ।

[1]ततो विद्यावदविद्याविधानानुषङ्गात्। सो[2]ऽयमविद्याविवेकि[3]सन्मात्रं [4]कुतश्चित्प्रतीयन्नेव न निषेद्धृप्रत्यक्षम[5]न्यदेवेति ब्रुवाणः कथं स्वस्थः ? कथं वा प्रत्यक्षादेर्निषेद्धृत्वाभावं [6]प्रतीयात् ? [7]यतस्तत्प्रतिपत्तिः–तस्यैवाभावविषयत्वसिद्धेः। [8]प्रत्यक्षादेर्विधातृत्वप्रतिपत्तिरेव निषेद्धृत्वाभावप्रतिपत्तिरिति चेत्तर्हि सिद्धं भावाभावविषयत्वं [9]तस्येति न परोदितो विधिर्वाक्यार्थः सिद्ध्यति। नियोगस्यैव वाक्यार्थत्वोपपत्तेः प्रभाकरमतसिद्धिः। [10]स [11]एव वाक्यार्थोऽस्त्वित्ययुक्तम्—[12][13]धात्वर्थवन्नियोगस्य [14]परोपवर्णितस्वरूपस्य वाक्यार्थतया प्रतीत्यभावात्–[15]सर्वत्र [16]भावनाया एव वाक्यार्थत्वप्रतीतेः। सा हि द्विधा; शब्दभावनार्थभावना च "–शब्दात्मभावनामाहुर[17]न्यामेव [18]लिङादयः। [19]इयं त्वन्यैव [20]सर्वार्थो सर्वाख्यातेषु विद्यते" इति वचनात्। तत्र शब्दभावना शब्दव्यापारः। [21]शब्देन हि पुरुषव्यापारो [22]भाव्यते, पुरुषव्यापारेण [23]धात्वर्थो, धात्वर्थेन [24]फलमिति। न [25]चैवं [26]पुरुषव्यापारे शब्द[27]व्यापारवद्धात्वर्थे च पुरुषव्यापारवत् फले धात्वर्थो भावनानु[28]युज्यते—[29]तस्य [30]शुद्धस्य सन्मात्ररूपतया विधिरूपत्वप्रसङ्गात्। तदुक्तम्।—"सन्मात्रं [31]भावलिङ्गं स्यादसंपृक्तं तु कारकैः। धात्वर्थः [32]केवलैः [33]शुद्धो भाव इत्यभिधीयते। [34]तां प्रातिपदि[35]कार्थं च धात्वर्थं च प्रचक्षते। सा सत्ता सा महा[36]नात्मा यामाहुस्त्वतलादयः।" इति च प्रतिक्षि[37]प्तश्चैवंविधो विधिवादो नियोगवादिनैवेति नास्माक[38]मत्रातितरामादरः। [39]अथ [40]ततोऽन्यो[41] धात्वर्थः सोऽपि न [42]प्रत्ययार्थशून्यः [43]कुतश्चिद्वाक्यात्प्रतीयते—[44][45]तदुपाधेरेव तस्य ततः सम्प्रत्ययात्। [46]प्रत्ययार्थस्[47]तत्र प्रतिभासमानोऽपि न प्रधानं [48]कर्मादिवद[49]न्यत्रापि भावादिति चेत

---

१ प्रत्यक्षादुपनिषद्वाक्याद्वा। २ स्याद्वाद्याह।—सोऽयं विधिवादी अविद्यापृथग्भूतं सन्मात्रं कुतश्चित्प्रमाणाज्जानन्नेव निषेद्धृ प्रत्यक्षं नान्यत् ( विधात्रेव प्रत्यक्षं न ) इति जल्पन् कथं स्वस्थः स्यात्? अपि तु न। अविद्याया विवेकः पृथग्भावः, अविवेकः सोऽस्यास्तीत्यविद्याविवेकि तच्च तत्सन्मात्रं चाविद्याविवेकिसन्मात्रम्। अविद्यायाः सन्मात्रे शून्यत्वमित्यन्नेव प्रतिषेधः प्रतीयते। ३ अविद्याविवेकेन ( अविद्यापरिहारेण ) सन्मात्रमिति पाठः खपुस्तकीयः। ४ प्रमाणात्। ५ उपनिषद्वाक्यम्। अन्यद्वेति खपाठः। ६ ततश्च न निषेद्धृ प्रत्यक्षमिति वचो विरुध्येत। ७ यस्मात् प्रमाणाद्विधिप्रतिपत्तिस्तस्मादेव प्रतिषेधप्रतिपत्तिः सिध्यति। ८ विधिवादी। ९ प्रत्यक्षादेः प्रमाणस्य। १० नियोगः। प्राभाकरः। ११ अतः। १२ अत्र भावनावादी वदति।—इति नियोगवादिवचोऽयुक्तम्—विधिवादवत्परोदितनियोगस्याप्यप्रमाणत्वात्। १३ सन्मात्रं धात्वर्थोऽत्र विधिः। १४ प्रभाकरः। १५ नियोगविध्यादिस्वरूपप्रतिपादके वैदिके लौकिके च वाक्ये। १६ तेन ( वाक्येन ) भूतिषु ( यागक्रियासु ) कर्तृत्वं प्रतिपन्नस्य वस्तुनः ( द्रष्टव्यादेः )। प्रयोजकक्रियामाहुर्भावनां भावनाविदः। १७ अर्थभावनातो भिन्नाम्। १८ लिङ्लोट्तव्याः कर्तारः। १९ अर्थभावना। करोति धात्वर्थलक्षणा वक्ष्यमाणेयं सर्वार्थप्रतिपादिनी भावना अन्या पूर्वोक्ताया शब्दभावनातो भिन्ना। कुतः? सर्वाख्यातेषु विद्यमानत्वात्। २० सर्वोऽर्थो यजनादिर्यस्याः सा। २१ अग्निष्टोमेत्यादिना। २२ उत्पाद्यते। २३ यथा शब्दव्यापारः। २४ धात्वर्थस्य। २५ धात्वर्थस्य फलजनकत्वप्रकारेण। २६ कपुस्तके पुरुषव्यापारः इति प्रथमान्तेन पाठः। २७ यथा शब्दव्यापारः। २८ पुरुषव्यापारे शब्दव्यापारो यथा धात्वर्थे पुरुषव्यापारो भावना तथा फले धात्वर्थो भावना न। २९ धात्वर्थस्य। ३० स हि धात्वर्थः सन्मात्ररूपो वा यजनादिरूपो वा क्रियारूपो वेति विकल्पत्रयं मनसि कृत्वा क्रमेण दूषयति भाट्टः। ३१ भाव इति निश्चेयम्। ३२ अर्थान्तररहितः। ३३ स्वान्तर्गतविशेषरहितः। ३४ सत्ताम्। ३५ अर्थवदधातुरप्रत्ययः प्रातिपदिकमिति पाणिनिकृता शब्दानां सञ्ज्ञा। ३६ परब्रह्म। ३७ एवं नियोगवादिना धात्वर्थभावनावादः प्रतिक्षिप्तः तथा विधिवादः प्रतिक्षिप्तः। ३८ भावनावादिनां विधिवादनिराकरणे। ३९ द्वितीयविकल्पः ( भाट्टः )। ४० भावनावाद्याह—हे विधिवादिन् एवं किं तवाभिप्रायः। ततः सन्मात्रादन्य एव धात्वर्थ इति तदा–सोऽपि धात्वर्थः प्रत्ययार्थरहितो न दृश्यते। ४१ यजनादिः। ४२ लिङाद्यर्थः करोत्यर्थव्याप्तः। ४३ अग्निहोत्रादेः। ४४ प्रत्ययसहितस्यैव तस्य धात्वर्थस्य ततो वाक्यात्प्रत्ययो भवति। ४५ स प्रत्ययार्थः उपाधिर्विशेषणं यस्य स तथोक्तस्तस्य तदुपाधेः प्रत्ययार्थविशेषणभूतस्य सम्प्रत्ययात्। ४६ प्रभाकरः। विधिवाद्याह। ४७ धात्वर्थे। ४८ कर्मकरणादेर्यथान्यत्र भावो विद्यते। ४९ धात्वन्तरे।

तर्हि[1] धात्वर्थो यजनादिः प्रधानं मा भूत् प्रत्ययान्तरे[2]पि भावात् प्रकृतप्रत्यय[3]पायेपीति समानं पश्यामः[4] । यदि[5] पुनः क्रिया[6] सकलव्यापिनी धात्वर्थः—सर्वधातुषु भावात् तदा सैव भावना[7] किं नेष्यते—सर्वार्थेषु[8] सद्भावात् । यथैव हि जुहुयाज्जुहोतु होतव्यमिति लिङादयः क्रिया हवनावच्छिन्नां[9] प्रतिपादयन्ति तथा सर्वाख्यातप्रत्यया[10] अपि—पचति पपाच पक्ष्यतीति पचनावच्छिन्नायाः क्रियाया एव प्रतिपत्तेः । पाकं[11] करोति चकार करिष्यतीति । तथा[12] च लिङादिप्रत्ययप्रत्याय्यः करोत्यर्थ एव वाक्यार्थ इत्यायातम् । स[13] च भावना[14]स्वभाव एवेति न धात्वर्थ[15] एव वाक्यार्थतया प्रतीयते । नापि[16] कार्यादि[17]रूपो नियोगः । ननु[18] शब्द[19]व्यापाररूपो नियोगः प्रतीयत[20] एव । शब्दो हि स्वव्यापारस्य पुरुषव्यापारकरण[21]लक्षणस्य प्रतिपादको[22], न पुनः कारकः शब्दादुच्चरितान्नियुक्तोहम[23]नेनेति प्रतिपत्तृणा प्रतिपत्तेरन्यथा[24]नुपपत्तेरिति चेत् तर्हि[25] भावनैव[26] नियोग इति शब्दान्तरेणोक्ता स्यात् । तदुक्तम् ।—शब्दादुच्चरितादात्मा[27] नियुक्तो गम्यते नरैः । भावनातः[28] परः को[29] वा नियोगः परिकल्प्यतामिति । स्यान्मतम्[30] ।—यदि शब्दव्यापारो भावना कथमगृहीत[31]सङ्केतो नैवं[32] गच्छति नियुक्तोहमनेनेति स्वभावतस्तस्य[33] नियोजकत्वात् । सङ्केतग्रहणस्या[34]नुपयोगित्वादिति तद[35]समीचीनमेव—सङ्केतस्य[36] तथाऽवगतौ[37] सहकारित्वात्—सामग्री जनिका नैकं कारण[38]मिति प्रसिद्धेः । ननु[39] च सङ्केतसामग्री[40] न प्रेरणे[41] भावनायां[42] वा व्याप्रियते—अर्थवेदने[43] तस्या प्रवृत्तेः—अर्थप्रतीतौ[44] पुरुषस्य स्वयमेव[45] तत्र[46] तदर्थितया प्रवृत्तेः[47] । इदं[48] कुर्विति प्रेषणाध्येषणयो[49]रेव हि प्रतीतिः—तदप्रतीतौ नियुक्तत्वाप्रतिपत्तेः । नियुक्तत्वं च नाम कार्ये[50] व्यापारितत्वम् । कार्ये व्यापृत[51]तामवस्थां प्रतिपद्य[52] नियोजको[53] नियुङ्क्ते । सा च तस्य[54] भाविन्यवस्था न स्वरूपेण साक्षात्कर्तुं शक्या । स्वरूपसाक्षात्करणे हि सर्वं तदैव[55] सिद्धमिति न नियोगः स्यात्सफल । ततः प्रयोजको बाध्यमानप्रतीतिक एव ।

---

१ भाट्ट । २ धात्वर्थान्तरे । ३ लिङ्लोट्तव्य । ४ वयं भावनावादिन. हे विधिवादिन् तव मम च तुल्यं दूषणं पश्यामः । ५ ( तृतीयो विकल्प. ) भावनावादी प्राह ।—हे विधिवादिन् भवदभ्युपगत. सन्मात्रस्तावद्धात्वर्थो न । यदि पुन सकलव्यापिनी करोत्यर्थलक्षणा क्रिया सर्वधातुषु सम्भवाद्धात्वर्थस्त्वयाभ्युपगम्यते तदास्माभि सैव सर्वव्यापिनी क्रिया भावना किं नेष्यते । अपि त्वभ्युपगम्यते । कुत. ? सर्वार्थेषु सर्वाख्यातेषु च तस्या सम्भवात् । ६ यजनपचनादि-क्रिया । ७ पुरुषभावना । ८ यजनादिलक्षणेषु लडादिषु च । ९ हवनविशिष्टाम् । १० लडादय । ११ केन प्रकारेण प्रतिपत्तिरित्युक्ते आह । १२ क्रियाया एव भावनात्वे च । १३ आत्मा । १४ शुद्धभावना । १५ त्रिविधोपि धात्वर्थः । १६ भाट्ट । १७ वाक्यार्थतया न प्रतीयते । १८ प्रभाकर । १९ अग्निहोत्रादि । २० वाक्यार्थतया । २१ कृतिरूपव्यापार प्रति साधकतमलक्षणस्येति । २२ ज्ञापकः । एवं कुर्विति । २३ शब्देन । २४ अन्यथा शब्दोच्चारणाभावे नियुक्तोहमनेनेति प्रतिपत्तृणा प्रतिपत्तिर्नोपपद्यते । २५ भाट्ट । २६ शब्दभावना । २७ स्वरूपम् । २८ शब्दभावनात. । २९ न कोपीत्यर्थ. । ३० सुगतस्य । ३१ प्रेरणा । ३२ नावगच्छतीति पाठान्तरम् । ३३ शब्दस्य यत स्वभावेन नियोजकत्वम् । ३४ कायस्येत्यध्याहारः । ३५ सौगतमाशङ्क्य भट्ट प्राह । ३६ अस्य शब्दस्यायमर्थ इति सङ्केत । ३७ सङ्केतग्रहणे शब्दस्यायोग्यत्वात् सङ्केतग्राहकं ज्ञानं न तु शब्द । ३८ कार्यस्य । ३९ बौद्ध । ४० सङ्केतलक्षणा सामग्री । ४१ प्रेरणायामिति वा पाठः । नियोगे । ४२ उभयरूपायाम् । ४३ यदि सङ्केतसामग्री न तत्र व्याप्रियते तदा पुरुषस्य कथमर्थे प्रवृत्तिरित्युक्ते आह । ४४ सत्याम् । ४५ नियोगभावनानिरपेक्षतया । ४६ अर्थे । ४७ सङ्केतसामग्र्या अर्थपरिज्ञाने सति प्रवृत्तिघटनात् । ४८ किञ्च भावना हि प्रेषणाध्येषणरूपा । सा च प्रयोज्यप्रयोजकद्वयों विना तयोश्च बाध्यमानप्रतीतिकत्वेनाऽसत्त्वात्कुत· सा भावना ? यतस्तत्र सङ्केतो व्याप्रियेतेति वक्तुकामः । किञ्च प्रेषणाध्येषणयोरपि बहिरर्थरूपतया न शाब्दी प्रतीतिरस्ति बुद्ध्यारूढस्यैवार्थस्य शब्दवाच्यत्वादत· कथं तद्रूपा भावना शब्दाभिधेयो यतस्तत्र सङ्केतो व्याप्रियेतेति वक्तुकाम इदं कुर्वित्याद्यारभ्य प्रज्ञाकर इतिपर्यन्त माह । ४९ लिङर्थयो. । ५० नियोज्यस्य । ५१ व्यापृततामवस्थामिति स्वपाठ । ५२ आत्मना स्वीकृत्य । ५३ शब्दव्यापारापरपर्यायप्रेरणादिरूपः शब्द. । ५४ नियोजकस्य । ५५ अग्निष्टोमेन यागादिकरणं स्वर्गप्रापणनिमित्तपुण्योपार्जनं च सर्वं निष्पन्नमेव तस्मिन्नेव काले ।

तदुक्तम् ।—यथा प्रयोजकस्तत्र बाध्यमानप्रतीतिकः । प्रयोज्योपि[1] तथैव[2] स्यात्[3]च्छब्दो बुद्ध्यर्थ[4]वाचकः ॥ यथैव हि प्रयोजकस्य[5] शब्दस्य प्रयोज्येन पुरुषेण [6]स्वव्यापारशून्यमात्मानं प्रतीयता प्रयोजकत्वप्रतीतिर्बाध्यमाना[7] निरालम्बना[8] तथा प्रयोज्यत्वप्रतीतिरपि[9] तेनैव[10] स्वव्यापाराविष्टमात्मानमप्रतीयता बाध्यते । शब्दात् सा[11] प्रतीतिरिति च न युक्तम्[12]—तस्य[13] बुद्ध्यर्थख्यापनत्वात् । सोपि हि शब्दो बुद्ध्यर्थमेव ख्यापयति । एवं मया[14] प्रतिपादितमेव मया[15] प्रतिपन्नमिति—द्वयोरपि प्रतिपादकप्रतिपाद्ययोरध्यवसायात् । पौरुषेयवचनाद्धि मयैवं तावत्प्रतिपन्नमर्थं[16] तु वक्तुरयम्[17]भिप्रायो भवतु मा वाभूदिति प्रतिपत्ता[18]ध्यवस्यति । अपौरुषेयादपि शब्दादेव[19]मयमर्थो मया प्रतिपन्नोऽस्य[20] भवतु मा वा भूदिति[21] वक्तृव्यापारविषयो[22] योर्थः पौरुषेयशब्दस्य यो वा बुद्धौ प्रकाशतेर्थः अपौरुषेयत्वाभिमतशब्दस्य तत्र[23] प्रामाण्य न पुनर्बाह्यार्थतत्त्वनिबन्धनम्[24] । तदुक्तम् ।—वक्तृव्यापारविषयो योर्थो बुद्धौ[25] प्रकाशते । प्रामाण्यं[26] तत्र[27] शब्दस्य नार्थतत्त्व[28]निबन्धनमिति वचनात् । ततो विवक्षारूढ एवार्थो वाक्यस्य, न पुनर्भावनेति प्रज्ञाकरः[29] । [30]सोपि न परीक्षकः—प्रत्यक्षादिव शब्दाद्बहिरर्थप्रतीतिसिद्धेः । यथैव हि प्रत्यक्षात्प्रतिपत्तृप्रणिधानसामग्रीसव्यपेक्षात्प्रत्यक्षार्थ[31]प्रतिपत्तिस्तथा सङ्केतसामग्रीसापेक्षादेव शब्दाच्छब्दार्थ[32]प्रतिपत्तिः सकलजनप्रसिद्धा—अन्यथा[33] ततो बहिरर्थे प्रतिपत्तिप्रवृत्तिप्राप्त्ययोगात् । न चार्थवेदनादेवार्थे पुरुषस्यार्थिनः स्वयमेव प्रवृत्तेः शब्दोऽप्रवर्त्तक इत्येव वक्तु युक्तम्—प्रत्यक्षादेरप्येवमप्रवर्त्तकत्वप्रसङ्गात्—तदर्थेपि सर्वस्याभिलाषादेव प्रवृत्तेः । परम्परया[38] प्रत्यक्षादिप्रवर्त्तकमिति चेत् तथा[39] वचनमपि प्रवर्त्तकमस्तु—विशेषाभावात् । यथा च प्रत्यक्षस्य सलिलादिरर्थः–तस्य तत्र प्रतीतेस्तथा वाक्यस्य भावना प्रेरणा वा तस्यैव[40] तत्र[41] प्रतीतेरबाध्यमानत्वात् । [42]नन्विदं कुर्विति वचनात्कार्ये[43] व्यापारितत्व पुरुषस्य नियुक्तत्वम् । न च कार्ये व्यापृततावस्था भाविनी तेन साक्षात्कर्त्तु शक्या—तत्[44]साक्षात्करणे नियोगस्याफलत्वप्रसङ्गात् । ततो बाध्यमानैव तत्[45]प्रतीतिरिति । तदेतद्[46]समञ्जसमालक्ष्यते—अन्यत्रापि[47] समानत्वात् । प्रत्यक्षस्य हि प्रवर्त्तकत्वं प्रवृत्तिविषयोपदर्शकत्वमुच्यते । प्रवृत्तिविषयश्चार्थक्रिया[48]कारी सलिलादिः । सा च तस्या[49]र्थक्रियाकारिता भाविनी न साधनावभासिना वेदनेन[50] साक्षात्कर्त्तु शक्या तत्साक्षात्करणे[51] प्रवृत्तिवैफल्यात् । ततोऽध्यक्षस्य प्रवर्त्तकत्वं बाध्यमानप्रतीतिकं कथमेवेति न शक्यं वक्तुम्[52] । [53]यदि पुनरर्थक्रियाकारिताऽनागतापि साधनावभासिनि [54]वेदने प्रतिभातैव—एकत्वाध्यवसायात्[55] तदा शब्दादपि पुरुषस्य कार्यव्यापृतता[56]

---

१ पुरुष । २ काल्पनिकः । ३ किञ्च शब्दात् प्रेषणादिप्रतीतिरपि न युक्ता । कुत इत्याह । ४ बुद्धिपरिकल्पितो यत । ५ प्रेरकस्य । ६ यागविषय । स्वव्यापाराविष्टमात्मानमप्रतीयतेति पाठान्तरम् । ७ सती । ८ बाध्यमाना सती निरालम्बनेति शेष । ९ पुंसा । १० प्रयोज्येन । ११ प्रेरणाप्रेषणयो. सम्बन्धिनी । १२ इतो वदति बौद्ध ।—सा भाविनी प्रतीति शब्दाज्जायते इति हे भट्ट यदुक्तं त्वया तद्वक्तुं युक्तं न । १३ शब्दस्य । १४ गुरुणा । १५ शिष्येण । १६ गुरो । १७ बुद्ध्यारूढ । १८ श्रोता । १९ वेदवाक्यात् । २० अपौरुषेयस्य । २१ प्रतिपत्ताध्यवस्यतीति सम्बन्ध । २२ प्रतिपन्नार्थोव्यभिचारी । वक्तृव्यापारो विवक्षा । २३ बुद्ध्यर्थे । २४ बाह्यपदार्थस्वरूपकारणकम् । २५ श्रोतुर्बुद्धौ । २६ उपाध्यायव्यापारगम्यार्थशिष्यबुद्धिप्रकाशमानार्थे शब्दस्य प्रामाण्यम् । २७ बुद्ध्यारूढेर्थे । २८ बाह्यतत्त्व । २९ बौद्ध । ३० इतो भाट्टो वदति । ३१ प्रत्यक्षविषयार्थ । ३२ शब्दविषयार्थ । ३३ शब्दाद् घटादिबाह्यपदार्थप्रतिपत्तिर्न भवति चेत्तदा तत शब्दाद्बहिरर्थे जलादौ पिपासितादे पुंसो जलादि परिज्ञानं, तत्समीपे गमनं, स्नानपानानयनादिरूपा तत्प्राप्तिश्च न घटते । ३४ अन्यथा । ३५ प्रत्यक्षार्थे । ३६ नु । ३७ शब्दात् । अभिलाषादिति च क्वचित्पाठ । ३८ प्रत्यक्षादर्थप्रतिपत्तिस्ततोऽभिलापस्तत प्रवृत्तिरिति । ३९ भाट्ट । ४० भावनाप्रेरणारूपस्यार्थस्य । ४१ भावनाप्रेरणयो । ४२ सौगत । ४३ यागलक्षणे । ४४ भावनाप्रेरणालक्षणार्थस्य । ४५ व्यापृतत्व । ४६ भट्ट । ४७ प्रत्यक्षादावपि बाध्यमानप्रतीतित्वस्य समानत्वात् । ४८ स्नानपानादि । ४९ सलिलादे । ५० प्रत्यक्षेण । ५१ भाविन्यर्थक्रियाकारिताया प्रत्यक्षीकरणे सति । ५२ कुत ? यतो बाध्यमानप्रतीतिकमेवेति । ५३ हे सौगत त्वमेवं वदसि । ५४ प्रत्यक्षे । ५५ भाविन्यर्थक्रियाकारिताप्रत्यक्षयोरैक्याधारत्वात् । ५६ अनागतता ।

तत[1] एव प्रतिभातैवेति किं नानुमन्यते । तथा[3] सति बुद्ध्यारूढोर्थः शब्दस्य स्यादिति चेत्त्वया[2]पि प्रत्यक्षस्य बुद्ध्यध्यवसितोर्थः किन्न भवति । अतो[4] निरालम्बनमेव प्रत्यक्षं न[5] स्यात् । परमार्थतः[6] प्रत्यक्षमपि न प्रवर्त्तकम्—स्वरूपस्य स्वतो[7] गतेः संवेदनाद्वैतस्य वा सिद्धिरिति चेत् पुरुषाद्वैतस्य[8] कुतो न सिद्धिः ? तस्य नित्यसर्वगतस्यैकस्य संवित्त्यभावादिति[9] चेत् क्षणिकनिरंशस्यैकस्य संवित्तिः किं कस्यचित्कदाचिदस्ति ? यतस्तत्सिद्धिरेव स्यात् । ततः पुरुषाद्वैतवत्संवेदनाद्वैतस्य सर्वथा व्यवस्थापयितुमशक्तेर्भेदवादे[10][11] च प्रत्यक्षस्य प्रवर्त्तकत्वायोगाद्भिन्नाभिन्नात्मकं वस्तु प्रातीतिकमभ्युपगन्तव्यम्[12]—विरोधादेश्चित्रज्ञानेनो[13]त्सारितत्वात् । भेदस्याभेदस्य[14][15] वा सांवृतत्वे[16] सर्वथार्थक्रियाविरोधात् । तथा च शब्दात्कार्यव्यापृततायां व्यक्तिरूपेण भाविन्या अपि शक्तिरूपेण पुरुषस्य सतः[17] कथञ्चिदभिन्नाया शब्दज्ञाने तदैवं[18] प्रतिभासनेपि न नियोगो निष्फलः स्यात् प्रत्यक्षतः[19] सलिलादौ प्रवृत्तिवत् । तत्र[20] हि सलिलादेरर्थक्रियायोग्यता[21]प्रतिभासनेपि व्यक्त्यर्थक्रियानुभवाभावात्तदर्थप्रवर्त्तनं प्रतिपत्तुः सफलतामियर्ति नान्यथा[22] । एवं[23] शब्दादात्मनः[24] कार्यव्यापृततायोग्यताप्रतिपत्तावपि[25] व्यक्तकार्यव्यापृततानुभवाभावात्[26] पुरुषस्य [27]नियोगः सफलतामियात्—तथा प्रतीतेरेव[28] चाध्यक्षत्वसिद्धेः । ततो[29] न विवक्षारूढ एव शब्दस्यार्थः प्रमाणबलादवलम्बितुं युक्तः सन्मात्रविधिवत् । यदप्युक्तम्[30] ।—नियोगो यदि शब्दभावनारूपो वाक्यार्थस्तथा सति देवदत्तः पचेदिति कर्त्तुरनभिधानात्कर्तृकरणयो[31]स्तृतीयेति[32] तृतीया प्राप्नोति । कर्त्तुरभिधाने त्वनभिहिताधिकाराद्विडेव चोक्तत्वान्न[33] भवतीति[34] । तदप्ययुक्तं[35]—भावना[36]विशेषणत्वेन कर्त्तुः प्रतिपादनात् । भावना[37] हि करोत्यर्थः । स[38] च देवदत्तकर्तृकः प्रतिभाति । पचेद्देवदत्तः पाकं कुर्यादिति पाकावच्छिन्नायाः करणक्रियाया देवदत्तकर्तृकायाः प्रतीतेः—सकृदेव[39] विशेषणविशेष्ययोः प्रतिभासाविरोधात् । नीलोत्पलादिवत् । ततो[40] नेदं प्रज्ञाकरवचश्चारु । "क्रम[41]प्रतीतेरेवं स्यात् प्रथमं भावनागतिः । तत्सामर्थ्यात्[42]पुनः पश्चाद्यतः कर्त्ता प्रतीयते" इति यदभ्यधायि[43] द्विवचनबहुवचने[44] च प्राप्नुतः एकत्वाद्व्यापारस्य । अथ कारकभेदात् स्वव्यापारभेदो भविष्यति क्रियेते[45] कटौ देवदत्तयज्ञदत्ताभ्याम्[46]इति महदसमञ्जसं स्यात् । तथा हि ।—एकत्वा-

---

१ पुरुषव्यापृततावस्थयोरेकत्वाध्यवसायादेव । २ भवद्भिः सौगतैः । ३ बौद्ध । ४ भाट्ट । ५ कुतो न स्यात् ? अपि तु स्यादेव । ६ बौद्ध । ७ ज्ञानस्य स्वस्मादेव प्रवृत्तिर्न तु बहिरर्थात् । ८ भाट्ट । ९ प्रतीति । १० दृश्यप्राप्ययोरर्थयो सर्वथा भेदे । ११ हे सौगत पूर्वजलज्ञानोत्तरस्नानपानप्रवृत्तिज्ञानयोः सर्वथा भेदप्रतिपादने तावत्प्रत्यक्षं ज्ञानं प्रवृत्तिविषयोपदर्शकं न स्याद्यतः । १२ भवद्भिः सौगतैः । १३ विरोधादेर्दोषस्य चित्रज्ञानदृष्टान्तेन निराकृतत्वात् । १४ क्षणिकस्य । १५ नित्यस्य । १६ काल्पनिकत्वेसति ( असत्यत्वे ) द्रव्यवादी सांख्यो भेदं सङ्कल्पितं मनुते । पर्यायवादी बौद्धोऽभेदं सङ्कल्पितं मनुते । एवमुभयोः कल्पितत्वे वस्तुनः सर्वथापि नार्थक्रिया घटते । १७ स्वतः इति पाठान्तरम् । १८ स्वर्गकामोग्निहोत्रं जुहुयादित्यादिवाक्योच्चारणकाले । १९ यथा प्रत्यक्षाज्जलादौ प्रवृत्तिर्निष्फला न स्यात्तथा शब्दान्नियोगो निष्फलो न स्यात् । २० प्रत्यक्षे । २१ सामर्थ्यं । २२ प्रवर्त्तनमन्तरेणार्थक्रियानुभवो न स्यात् । व्यक्तार्थक्रियानुभवे सति जलक्रियार्थं प्रवर्त्तनं पुरुषस्य सफलता न प्राप्नोति । २३ प्रत्यक्षप्रकारेण ( भाट्ट ) । २४ पुरुषस्य । २५ यागलक्षण । २६ यागलक्षण । २७ कनुभूत २८ प्रतीतेरेवाऽबाध्यत्वसिद्धेरिति पाठान्तरम् । २९ प्रत्यक्षादिव शब्दाद्बहिरर्थप्रतिपत्तिसिद्धिर्यतः प्रयोज्यप्रयोजकप्रतीतिश्च सत्या प्रतिपादिता यतः । ३० भाट्टो वदति । (प्रज्ञाकरेण स्वग्रन्थे) । ३१ अप्रधानयोः । ३२ विभक्ति । ३३ कर्तुः । ३४ तृतीया । ३५ भाट्ट । ३६ अर्थभावना । ३७ भावनायाः किं लक्षणमित्युक्ते आह । ३८ करोत्यर्थं । ३९ यदि भावनाविशेषणत्वेन कर्त्ता तथापि तयो क्रमप्रतीतिसम्भवेन पूर्वं कर्तुः प्रतिभासाभावात्तृतीया प्राप्नोतीत्याशङ्कायामाह । ४० भट्टो वदति ।—यत एव तत इदमग्रेतनकारिकादौ वक्ष्यमाणं सौगतवचनं मनोज्ञं न स्यात् । ४१ क्रमप्रतीतेरिरेवं स्यादिति नपुस्तकपाठ । ४२ कर्तृभावनयोर्विशेषणविशेष्यभावप्रकारेण । स्युरेवंतुपुनरेवेत्यवधारणवाचका इति वचनात् । ४३ भट्टो वदति ।—यदवादि सौगतेन तदप्यसत्यमितिपर्यन्तं सम्बन्ध । ४४ क्रियालक्षणाया भावनायाः । ४५ तर्हि । ४६ उदाहरणम् ।

त्कर्म[1]णः प्राप्तं क्रियैकत्वं तथाभि[2]दः। कर्तृ[3]भेदादितीत्थं[4] च किं कर्त्तव्यं[5] विचक्षणैरिति। त[6]दप्यसत्यम्—प्र[7]तीतिविरोधात्। प्रतीयते हि धात्वर्थस्य भेदादेकवचनं देवदत्तयज्ञदत्ताभ्यामास्य[8]ते। स च धात्वर्थो न नियोगः—नियोगस्य प्रत्ययार्थ[9]त्वात्। स[10] च धात्वर्था[11]तिरिक्तः कर्तृसाध्यः। तस्य[12] कर्तृभेदाद्भेद इति। तत[13]. कटं कुरु[14]त इति द्विवचनम्। धात्वर्थस्तु शुद्धो न कारकभेदा[15]द्भेदी। स्यादाकू[16]तम्।—सम्बन्धाद्यदि तद्भे[17]दो[18] धात्वर्थ[19]स्याप्यसौ[20] भवेत्। सोपि [21]निर्वर्त्य[22] एवेति तद्भे[23]देनैव भिद्यताम्॥—अस्मा[24]कं तु।—विवक्षा[25]परतन्त्रत्वाद्भेदाभेद[26]व्यवस्थितेः। ल[27]भिधानात्कार[28]कस्य सर्वमेतत्[29]समञ्जसम्॥ क्रिया[30] हि कर्त्तु कर्मण[31]श्च भेदेन हि विवक्ष्यते सा[32] यदा लकारेणा[33]भिधीयते, न कर्त्ता तदा कर्त्त[34]रि तृतीया भवति। यदा कर्त्ताभिधीयते तदा प्रथमार्थत्वात्प्रथमा भवति। क्रिय[35]ते महात्मना, करोति महात्मेति। तदेत[36]दपि पक्षपातमात्रम्। सौगतस्य भेदाभेदयोर्वस्तुरूपयोः प्रतीतिसिद्धत्वेन तद्विवक्षावशात् तथा व्यवहारस्य पारमार्थिकत्वोपपत्तेः। त[37]तो युक्ता शब्दव्यापाररूपा शब्दभावना, पुरुषव्यापाररूपाऽर्थभावना च। तत्र हि कर्त्तृव्यापारस्तिङ्भि[38] प्रतिपाद्यते। स[39] एव च भाव[40]ना। त[41]था चाह।—भावा[42]र्थाः कर्मश[43]ब्दाः। भावन भावो ण्यन्ता[44]द्धञ्प्रत्ययः। तथा च सति भावनैवासौ। भावना च कर्तृव्यापार· स[45] चोदित· स्वव्या[46]पारे प्रव[47]र्त्तते इति। नियोग[48]स्य च तच्छेष[49]त्वादप्रधानत्वादवाक्या[50]र्थत्वम्। नियोगविशिष्टत्वाच्च भावनायास्तथा[51] प्रतिपादने नि[52]यमेन प्रवर्त्तते। क[53]थं चासौ कर्त्ता स्वव्यापारं प्रतीयन्नेव प्रवर्त्तते अ[54]न्यथा स्वव्यापारे एव न [55]चोदितो भवेत्। स्यान्म[56]तम्।—व्या[57]पार एष मम किमव[58]श्यमिति मन्यते। फलं विनैव नैवं[59] चेत् सफलाधि[60]गमः कुत इति। त[61]दप्यसमीक्षिताभिधानम्—अग्निष्टोमेन यजेत स्वर्गकाम इत्यादिवेदवाक्यसामर्थ्यादेव पुरुषेण त[62]दा मम एष व्यापार इति प्रत्येतुं शक्यत्वात्। [63]ममेद कर्त्तव्यमिति फलमपश्यन् कथं प्रत्येतीति चेत् प्रत्यक्ष[64]त कथ प्रत्येति ? फल[65]योग्यतायाः प्रतीतेरिति चेद्वाक्यादपि त[66]त एव तथा प्रत्येतु। फल[67]स्याती-

---

१ कटलक्षणस्य। २ भेदात्। ३ तथामिदा, कर्तृभेद इतीत्थं चेति पाठान्तरम्। कर्त्रेऽपेक्षया क्रियाया द्वैविध्यं जातम्। ४ क्रियाय· एकत्वानेकत्वप्रकारेण। ५ न किमपि ( काकु )। ६ भट्ट ( सौगतोक्तमसत्यम्. । ७ प्रत्यक्ष। ८ भावे। ९ प्रत्ययार्थो धात्वर्थाद्भिन्न। १० पुरुषव्यापार। ११ क्रियात·। १२ प्रत्ययार्थस्य। १३ कर्तृसाध्यप्रत्ययत्वात् (भाट्ट·)। १४ देवदत्तयज्ञदत्तौ। १५ भावरूपो धात्वर्थ। १६ योगाचारस्य। १७ तस्य प्रत्ययरूपनियोगस्य। १८ कर्तृसम्बन्धात्कारकभेदाद्यदि प्रत्ययभेदस्तदा। १९ सत्तारूपस्य आस्यते इत्यस्य। २० प्रत्ययभेद। २१ पुरुषेण निष्पाद्य। २२ हेतो। २३ कारक। कर्तृ। प्रत्यय। २४ योगाचाराणाम् ( सौगतानाम् )। २५ कल्पना। २६ व्यापारस्य कारकस्य। २७ दशलकारेण। २८ प्रत्ययरूपनियोगस्य भेदाभेदौ भवत। २९ एकवचनादिकम्। ३० भावे समुत्पन्ना लकाराभिधेया। ३१ का ( पञ्चमी )। ३२ क्रिया। ३३ त्यादिप्रत्ययेन। ३४ अप्रधाने। ३५ भावे क्रियाया कर्त्तु सकाशादत्र भेद। ३६ भाट्ट। ३७ देवदत्तकर्तृक करोत्यर्थो भवति यत। ३८ आख्यातेन। ३९ कर्तृव्यापार। ४० अर्थभावना। ४१ कर्तृव्यापारस्य भावनात्वेन। ४२ भाव एव अर्थो येषां ते। ४३ कर्मशब्दा ( क्रियावाचका ) इत्यत्र कर्मशब्दा एव भावार्था इत्येवकारो द्रष्टव्यः। ४४ ण्यन्तस्य घञिति पाठान्तरम्। ४५ स पुरुषोऽग्निष्टोमेन स्वर्गकामो यजेतेत्यादिवेदवाक्येन प्रेरित सन्। ४६ यागे। ४७ पुरुष·। ४८ नियोगस्येति पाठान्तरम्। नियोगशब्देन शब्दभावना। ( शब्दव्यापाररूपप्रेरणस्य )। ४९ अर्थभावनाया विशेषणत्वात्। ५० मुख्यत्वेनेति शेष। गुणवृत्त्या चेदस्ति तर्हि कथम् ? ५१ इदं कुर्विति नियोगनिष्टत्वेन। ५२ विशेषणविशेष्यनान्तरीयकत्वादिति भाव। ५३ प्रेर्यमाणोपि न प्रवर्त्तते चेत्। ५४ स्वव्यापाराप्रतीयमानत्वे। ५५ पुरुष। ५६ सौगतस्य। ५७ वेदेनोक्तो यागादिलक्षणो व्यापारोऽवश्यं ममेद स्वर्गादिफलं विना पुरुषोऽवेति न वा। ५८ वाक्योच्चारणकाले फलाभावश्चेन्ममैव व्यापार कथं मन्यते। ५९ फलं विनापि मन्यते चेत्। ६० प्राप्तिरवगतिश्च। ६१ भाट्ट। ६२ वाक्योच्चारणकाले। ६३ सौगत। ६४ भट्टो वदति।—सौगतं फलं विना प्रत्यक्षप्रमाणादिदं जलमिति कथं जानाति स्नानादिफलमपश्यन् भवान् कथं प्रत्येति। ६५ सौगत·। ( स्नानपानादि )। ६६ फलयोग्यताया प्रतीतेरेव। ६७ फलस्य स्वर्गादे।

न्द्रियत्वात्कथं तद्योग्यता स्वव्यापारस्य कर्त्री[1] प्रतीयते इति चेत् [2]प्रत्यक्षविषयस्य कथम् ? प्रतिपत्तुरभ्यास-सामर्थ्यात्प्रत्यक्षस्य विषये[3] फलयोग्यतानिश्चय इति चेत् तत[4] एव च कर्त्तुः[5] स्वव्यापारे[6] तद्योग्यतानिश्चयो[7]-स्तु—सर्वथा विशेषाभावात् । [8]यदप्यवादि प्रज्ञाकरेण "यजते पचतीत्यत्र भावना न प्रतीयते । यज्या-द्यर्थातिरेकेण[9] तस्या वाक्यार्थता कुतः ? । पाकं करोति यागं च यदि भेदः प्रतीयते । एवं सत्यऽनवस्था स्यादसमञ्जसताकरी" ॥ [10]करोति यागं स्वव्यापारं निष्पादयति यागनिष्पत्तिं निर्वर्त्तयति [11]व्यपदेशा एते यथा[12]कथञ्चिद्भेदपरिकल्पनपुरस्सराः[13] । नैते[14]भ्योऽस्ति पदार्थतत्त्वव्यवस्थेति[15][16] । शिलापुत्रक[17]स्य शरीरमिति भेदव्यवहारो भेदमन्तरेणापि दृश्यते । "यथा द्विजस्य व्यापारो याग इत्यभिधीयते । तत[18]ः परा पुनर्दृष्टा करोतीति न हि क्रिया ॥ यद्वा क्रिया च द्रव्य[19]स्य विशेषणा[20]दपरा न हि[21] । सामा[22]नाधिकरण्येन देवदत्ततया गतेरिति " तदपि न परीक्षाक्षमम् । "यजतेपचतीत्यत्र भावनायाः प्रतीतितः । यजाद्यर्थातिरेकेण युक्ता वाक्यार्थता ततः ॥ पाकं करोति यागं चेत्येवं भेदेऽवमासिते । काऽनवस्था भवेत्तत्र तत्प्रतीत्यनुसारि[23]-णाम् " ॥ यजते यागं करोतीति हि यथा प्रतिपत्तिस्तथा स्वव्यापारं निष्पादयतीत्यपि सैव प्रतिपत्तिः—स्वव्यापारशब्देन यागस्याभिधानात्—निष्पादयतीत्यनेन तु करोतीति प्रतीतेः । यागं करोति स्वव्यापारं निष्पादयतीति नार्थभेदः । यागनिष्पत्तिं निर्वर्त्तयतीत्यत्रापि यागनिष्पत्तिर्याग एव । निर्वर्त्तनं करणमेव । ततो यागं करोतीति प्रतीतं स्यात् । तत[24]ो नैते व्यपदेशा यथाक[25]थञ्चिद्भेदपरिकल्पनपुरस्सराः—प्रतीयमान-करोत्यर्थविषयत्वात् । याग करोति विदधात्येवमादिव्यपदेशवत् । ततो युक्तैवैतेभ्य[26]ः पदार्थतत्त्वव्यवस्था—अनवस्थानवतारा[27]त् । [28]अथ यजते यागं करोति यागक्रियां करोतीत्येवमनवस्थोच्य[29]ते [30]तर्हि स्वरूप[31]ं संवे-दयते स्वरूपसंवेदनं संवेदयते इत्यप्यनवस्था[32] स्यात् । अथ स्वरूपं वेदयते इत्यनेनैव स्वरूपसंवेदनप्रति-पत्तेः स्वरूपसंवेदनं संवेदयते इत्यादि निरर्थकत्वादयुक्तं [33]तर्हि यागं करोतीत्यनेनैव यागावच्छिन्नक्रिया-प्रतिपत्तेर्यागक्रियां करोतीत्यादिवचनमनर्थकमेव व्यव[34]च्छेद्याभावात् । यजते इत्यनेनैव यागावच्छिन्न-क्रियाप्रतीतेर्यागं करोतीत्यपि वचनमनर्थकमिति चेत्स[35]त्यं यदि तद्वचनादेव तथा प्रत्येति । यस्तु न प्रत्येति तं प्रति विशेषणविशेष्यभेदकथनपरत्वात् तथाभिधानस्य नानर्थक्यम् । शिलापुत्रकस्य शरीरं राहोः शिर इत्यादिभेदव्यवहारा अपि न कथञ्चिद्भेदमन्तरेण प्रवर्त्तन्ते—गौण[36]त्वप्रसङ्गा[37]त् । शिलापुत्रकस्य, राहोरित्युच्यमाने हि किमिह[38] सन्देहः । तद्व्यवच्छित्तये शरीरं, शिरइत्यभिधानमन्यस्य कार्यादेर्व्यवच्छेदक-

---

१ यज्ञकर्त्री । २ ( भट्ट ) तर्हि प्रत्यक्षस्य सलिलादे पुरुषेण स्वव्यापारस्य स्नानपानादिक्रियायोग्यता कथं निश्चीयते ? ३ जलादौ । ४ शान्तिकपौष्टिकाचरणफलाभ्यासात् । ( ऐहिकामुत्रिकेपि ) । ५ यज्ञकर्त्तु । ६ यागलक्षणे । ७ फलयोग्यतानिश्चय । ८ भट्ट आह ।—यदपि वक्ष्यमाणमवादि प्रज्ञाकरेण । ( तदपि न परीक्षाक्षममिति सम्बन्धः ) । ९ अति-रेको नामाऽऽधिक्यम् । १० कथमनवस्थेत्याशङ्क्याह । ११ शब्दा । १२ प्रकृतिप्रत्ययादिभेदमन्तरेणापि । १३ वर्त्तन्ते इति शेष । १४ व्यपदेशेभ्य । १५ यदि यागं करोतीत्यत्र भावनाख्यपदार्थतत्त्वव्यवस्था तदा स्वव्यापारं निष्पादयतीत्यत्रापि भावनान्तराणां व्यवस्था भविष्यतीति भाव । ( यजते यागं करोतीति भेदव्यवहारे सत्यपि तदभिधेयतत्त्व ( भाव-नाख्य ) स्य कथं भेदेऽनवस्था न स्यादित्याशङ्कायामाह ) । १६ यजते यागं करोतीत्यत्राभेदेपि भेदस्त्वया दर्शितो यजनार्थस्त्वेक एवेत्यभेद दर्शयन्नाह । १७ केतो । १८ यागात् । यागस्य व्यापाररूपत्वात्ततो भिन्ना करोतीति क्रिया न दृश्यते इति भाव । १९ पुरुषस्य । २० विशेषणात् । २१ देवदत्तत्वेन प्रापणात् । २२ केन कृत्वा प्रापणमित्याह सामानाधिक-रण्येति । २३ व्यपदेशानाम् । २४ एकार्थता यत । २५ अर्थं विना । २६ यागं करोति स्वव्यापार निष्पादयेति यागं निर्वर्त्तयतीत्येतेभ्यो वाग्व्यवहारेभ्य ( भट्ट सविदद्वैतवादिन प्रत्याह ) । २७ एते व्यपदेशभेदा सर्वेपि करोतिक्रियारूपार्थभावनामेव व्यवस्थापयन्ति—अर्थभेदेनाऽनवस्थाभावादिति भाव । २८ प्रज्ञाकर । २९ यदि त्वया सौगतेनेति शेष । ३० भट्ट । ३१ कर्तृ । ३२ सौगतस्येति शेष । ३३ भट्ट । ३४ परिहार्य । ३५ भट्ट । ३६ कथञ्चिद्भेदमन्तरेणापि भेदव्यवहारा प्रवर्त्तन्ते चेत्तदा भेदव्यवहाराणा गौणत्वं स्यात् । ३७ औपचारिकं चैतन्नेष्टम्—तात्त्विकभेदस्यानन्तर निरू-पितत्वात् । ३८ किमिति सन्देह इति पाठान्तरम् ।

मुपपन्नम्[1] । तस्मिंश्च[2] सति कस्येति संशयः स्यात् । तद्व्यपोहनाय शिलापुत्रकस्य राहोरित्यभिधानं श्रेयः—
अवस्था[3]तद्वतोः कथञ्चि[4]द्भेदात् । शरीरं हि शिलापुत्रकस्यावस्था अवयवोप[5]चयलक्षणावस्था[6]न्तरव्यावृत्ता ।
शिलापुत्रकः पुनरवस्था[7]ता—खण्ड[8]ाद्यवस्थान्तरेष्वपि प्रतीतेः । एतेन राहुरवस्थाता शिरोवस्थायाः ख्या[9]तः ।
सं[10]वृतोऽवस्थाता—अवस्थाव्यतिरेकेणानुपलब्धेरिति चेन्न—उ[11]भयासत्त्वात् । अवस्थातुरसत्त्वे सांवृ-
तत्वे वावस्थायाः सत्त्वाऽसावृतत्वविरोधात् खपुष्पसौर[12]भवत् कृत्रिमफणिस्फटादिवच्च । त[13]तो वस्तुस्वभा-
वाश्र[14]य एव यागं करोतीति व्य[15]पदेशः—सत्यप्रतीतिकत्वात् । संविदमनुभवतीत्यादि व्यपदेशवत् ।
त[16]था द्विजस्य व्यापारो याग इत्यभिधीयते । ततः परा च निर्बाधा करोतीति क्रियेष्यते ॥ यच्च क्रियापि
भावस्या[17]ऽविशेषा[18]दपरैव [19]हि । सामानाधिकरण्येन देवदत्त[20]तया गतेः ॥ द्विजो हि व्यापृतेतरावस्थानुयायी
स एवायमित्येकत्वप्रत्यय[21]वशान्निश्चितात्मा परमार्थ[22]सन्नेकः । यागस्तु तद्व्यापारः प्रागऽभूत्वा भवन्
पुनरपग[23]च्छन्नऽनित्यतामात्मसात्कुर्वन् भेदप्रत्ययविषय[24]स्ततोऽपर एव—क[25]थञ्चिद्वि[26]रुद्धध[27]र्माध्यासात् । त[28]था
यागेत[29]रव्यापारव्यापिनी करोतीति क्रियानुस्यू[30]तप्रत्ययवेद्या तद्वि[31]परीतात्मनो यागादर्थान्तरभूता सर्वथा-
प्यप्रतिक्षेपा[32]र्हानुभूयते—य[33]जते यागं करोति देवदत्त इति स[34]मानाधिकरणतया देवदत्तेन सहाव[35]गतेः ।
सर्वथा[36] तदैक्ये तद्विरोधात् पटतत्स्वात्मवत् । [37]किं करोति देवदत्तः ? यजति पचतीति प्रश्नोत्तरदर्श-
नात् करोतीति निश्चितेपि यज्यादिषु सन्देहा[38]च्च । तथा हि ।—य[39]स्मिन्निश्चीयमानेपि यन्न निश्चीयते
तत्ततः कथञ्चिदन्यत् । यथान्यदेहे निश्चीयमानेप्यनिश्चीयमाना बुद्धिः । करोतीति निश्चीयमानेप्यनिश्ची-
यमानश्च यज्यादिरिति । स्या[40]न्मतम् ।—करोत्यर्थयज्याद्यर्थौ विभिन्नौ यदि तत्त्वतः । अन्यत्सन्दिग्धम-
न्यस्य कथने दुर्घटः क्रमः ॥ न हि करोतीति क्रियातो विभिन्नाया यज्यादिक्रियायां सन्देहे ततोन्य[41]त्र
करोत्यर्थे निश्चिते प्रश्नः श्रेयान्—अ[42]निश्चिते एव प्रश्नस्य साधीयस्त्वात् । ततः करोत्यर्थयज्याद्यर्थयोस्ता-
दात्म्यमेपितव्यम्—तत्रैवप्रश्नोत्तरदर्शनादिति । तदेत[43]दनुपपन्नम्—करोत्यर्थस्य सामान्यरूपत्वात्—

---

१ अन्ययोगव्यवच्छेदाभावे सन्देहविच्छित्तिर्न स्यात् । २ शरीरे शिरसि चोच्यमाने सति । ३ शरीरशरीरवतो । ४ अवस्थापेक्षया । ५ सर्वावयवसम्पूर्णता । ६ ऊर्द्धस्थितिखण्डादि । ७ स्थितिमान् । ८ ऊर्द्धस्थितिखण्डादि । ९ व्याख्यात इत्यपि पाठ । १० ( बौद्ध ) कल्पितः । ११ अवस्थावस्थावतो । १२ खपुष्पस्यासत्त्वे सावृतत्वे च सौरभस्य सत्त्वमसावृतत्वं च विरुध्यते यथा । १३ शिलापुत्रकस्य शरीरमित्यादि व्यवहार कथञ्चिद्भेदमन्तरेण घटते यत । १४ यागकृतिलक्षण पदार्थ आत्मस्वरूपाश्रय एव । १५ भावनालक्षणं यद्वस्तु तत्स्वभावाश्रय इत्युक्तेऽर्थशून्यत्वं नेत्यर्थ । १६ किञ्च । १७ द्विजलक्षणस्य द्रव्यस्य । १८ अभेदात् । १९ यदि क्रिया च द्रव्यस्य विशेषादपरा नहीति च पाठ । २० सहार्थे तृतीया । २१ प्रत्यभिज्ञान । २२ परमार्थ. सन्नेक इति पाठान्तरम् । २३ नश्यन् । २४ द्विजात्तद्व्यापारो यागरूपो भिन्न एव । २५ उत्पादविनाशापेक्षया । २६ द्विजात् । २७ अनित्यत्वलक्षण । २८ द्विजाद्यागलक्षणक्रिया भिन्ना यथा । २९ पचन । ३० यजनपचनादौ करोत्यर्थसद्भावेनानुगतप्रत्ययवेद्या । ३१ करोत्यर्थविपरीतात्मकाद्यजनात् करोतीति क्रियार्थान्तरभूतास्ति । ३२ अनिराकरणीया । ३३ यागस्तु तद्व्यापारस्ततो देवदत्तादपर एवेति करोतीति क्रिया यागादर्थान्तरभूतेत्यनन्तरोक्तसाध्यद्वये यथाक्रमं यजते याग करोति देवदत्त यजतिपचतीत्यादिना च साधनद्वयमुपदर्शयन् यजते इत्याह । ३४ देवदत्तस्य करोतेश्च समानाधिकरणता । ३५ यागस्य । ३६ भो बौद्ध । तयो करोतीतिक्रियायागयो देवदत्तेन सह सर्वथैकत्वे तत्सामानाधिकरण्य विरुध्येत यथा पटपटस्वरूपयो सर्वथैक्ये सामानाधिकरण्य विरुद्धयते ( न तु कथञ्चिदैक्ये ) । ३७ यागादन्या क्रियेति साधनद्वयेण स्थापयति । ३८ समानाधिकरणताविरोध । ३९ यज्यादि करोत्यर्थाद्भिन्न —तस्मिन्निश्चीयमानेपि तस्याऽनिश्चीयमानत्वात् । ४० बौद्धआह ।—करोत्यर्थयज्याद्यर्थौ सामान्यविशेषौ तत्त्वस्वरूपेण यदि भिन्नौ तदान्यो यज्याद्यर्थ सन्दिग्ध अन्यस्य करोत्यर्थस्य कथने प्रश्नोत्तरे तदायं क्रमो दुर्घट । ४१ यज्यादिक्रियात । ४२ सामान्यापेक्षयाऽनिश्चितेर्थे । ४३ आह भट्ट ।—सामान्यविशेषयोर्वस्तुस्वरूपयो सर्वथैक्यमित्येतद्वचो बौद्धस्य प्रमाणविरुद्धम् ।

तद्विशेषरूपत्वाच्च यज्यादेः[1]। सामान्यविशेषयोश्च कथञ्चिदभेदोपगमात्। सन्दि[2]ग्धस्यैव कथना[3]त्। प्रश्नोत्तर क्रमस्य दुर्घटत्वाघटनात्। त[4]दभेदैकान्ते एव तस्य दुर्घटत्वात्। स्यादाकू[5]तंते।—न[6] सामान्यं विशेषेण विना किञ्चित्प्रतीय[7]ते। सामान्याक्षिप्यमा[8]णस्य न हि ना[9]माऽप्रतीतता॥ केव[10]लसामान्यप्रतीतौ हि विशेषांशे सन्देह इत्ययुक्त[11]म्—त[12]स्याऽप्रतीतत्वात्। घटप्रतीतौ हिमवदादिवत्। अ[13]थ सा[14]मान्येन विशेष[15] आक्षिप्यते। तथा [16]सति सोपि प्रतीत एवेति कथं संशयः? न हि प्रतीतत्वादपर आ[17]क्षेपः। अथ प्रतीत एवासौ साम[18]न्येन न तु विशेषेण[19]—तस्य सामान्यरूपेणाक्षेपा[20]त्। न[21]नु तदेव सामान्यमाक्षेप[22]कं तदेवाक्षेप्यमिति कथमेतत्? न च सामान्यादपरं सामान्यमाक्षेप्यम्। त[23]था सति ततोप्यपरं ततोप्यपरमित्यनवस्था। न[24]नु सामान्यप्रत्यक्षाद्विशेषाऽप्रत्यक्षाद्विशेषस्मृतेश्च संशयो युक्त ए[25]वं, न त्वनुपलम्भादभाव एव युक्तः सामान्येनानुपलम्भप्रमा[26]णवादिनः। अ[27]थोपलब्धिलक्षणप्राप्तानुपलम्भादभावे नानुपलब्धिमात्रात् तथानुप[28]लब्धेरेवे[29] संशयः व्य[30]र्थमेतत्सामान्यप्रत्यक्षादिति। यदि सामान्यप्रत्यक्षतायामप्युपलब्धिल[31]क्षणप्राप्ता[32]नुपलब्धिर्न [33]स्यात्। स्या[34]त्संश[35]यः। अ[36]थोपलब्धिलक्षणप्राप्तानुपलब्धिरेव न सम्भवति सामान्यप्रत्यक्षतायाम्। एवं तर्हि सैवानुपलब्धिलक्षणप्राप्तस्यानुपलब्धिः संशयहेतुरिति प्राप्तं; विशेषस्मृतेरिति च व्य[37]र्थम्। न हि विशेषस्मृतिव्यतिरेकेणापरः संशयः—उ[38]भयांशावलम्बिस्मृतिरूपत्वात्संशयस्य। दृश्यते च कन्याकुब्जादि[39]षु सामान्यप्रत्यक्षतामन्तरेण[40]पि प्रथमतरमेव स्मरणात् संशयः। त[41]स्मात्करोतीति[42] तदेव यज्यादिक[43]मनियमेन प्रतीयमानं सामान्य[44]तो द[45]ष्टानुमानात्सामान्यम्। तदेतदपि प्रज्ञापराधविजृम्भितं प्रज्ञाकरस्य—करोत्यर्थसामान्यस्याध्यव[46]साये यज्याद्यर्थविशेषानवगतावेव त[47]त्संशयोपगमात्। न च सामान्येध्यवसिते ततोन्यत्र–विशेषेनध्यवसिते संशीतावतिप्रसङ्गः—सामान्यविशेषयोः क[48]थञ्चिदभेदात्।—हिमवद्घटादीनां तु परस्परमत्यन्तभेदात्। ए[49]कत्र निश्चयेपि नानवगततदन्यत[50]मे संशीतिर्यतोतिप्रसङ्गः स्यात्। नापि सामान्येनाक्षिप्ते तद्विशेषसंशयोपगमोस्ति यतस्तदाक्षेपपक्षनिक्षिप्तदोषोपक्षेपः[51]। न चैवमनभिमततद्विशेषे-

१ यज्याद्यर्थस्य। २ प्रश्नात्। ३ सामान्यविशेषयोः कथञ्चित्सामान्यापेक्षया अभेदोपगमादेकतरस्य सन्दिग्धस्य कथनात् प्रश्नोत्तरक्रमो घटते। ४ तयोः सामान्यविशेषयोः सर्वथाऽभेदे सत्येव तस्य प्रश्नोत्तरक्रमस्य दुर्घटत्वं स्यात्। ५ प्रज्ञाकरस्य। ६ भट्टेन यदि सामान्यविशेषयो कथञ्चिद्भेदोभ्युपगम्यते तदा न सामान्यमित्यादि। ७ विशेषयुक्तमेव प्रतीयते इत्यर्थः। ८ सामान्येन स्वीक्रियमाणस्य (ज्ञाप्यमानस्य)। ९ निश्चयेन। १० कारिकायाः पूर्वांशस्य सुगमत्वादुत्तरार्द्धं व्याचष्टे। ११ भट्टवचनम्। १२ विशेषस्य। १३ भट्ट। १४ करोत्यर्थेन। १५ यज्याद्यर्थः। १६ (बौद्ध) सामान्ये प्रतीते सति। १७ स्वीकार.। १८ करोत्यर्थेन। १९ यज्याद्यर्थेन। २० परिज्ञानात्। २१ बौद्ध। २२ ज्ञापकम्। २३ अपरस्मिन् सामान्ये सति। २४ भाट्ट.। २५ दृश्यमानानुपलम्भाऽदृश्यमानानुपलम्भविकल्पद्वयं परिहृत्य सामान्यमेवानुपलम्भप्रमाणं यो वदति तस्यानुपलम्भादभाव एव घटते, न तु संशय। २६ भाट्टस्य। २७ भाट्ट प्राह। २८ उत्तरमाह प्रज्ञाकर.। २९ अनुपलब्धिमात्रादेव। ३० यतस्ततः। ३१ यज्यादि। ३२ किन्त्वनुपलब्धिमात्रं स्यात्। ३३ तर्हि। ३४ नास्ति च तथा ततश्च भाव एवेति भाव.। ३५ तथाऽनुपलब्धिलक्षणरूपायाः पिशाचादीनामनुपलब्धे. संशयो युक्त। ३६ भाट्ट ३७ तर्हि वैयर्थ्यं भवतु का नो हानिरित्युक्ते आह। ३८ यजतिपचति। ३९ नागरेषु कान्यकुब्जादिषु इति ख पाठ। ४० सामान्ये संशयस्यान्वयव्यतिरेकौ न स्तः। अनुपलब्धिमात्रे स्तः। ततश्च सामान्यप्रत्यक्षादिति विशेषणं व्यर्थम्। ४१ संशयो न घटते यत.। ४२ उल्लेखनम्। ४३ विशेषरूपं न तु करोतीति क्रियारूपम्। ४४ एकत्वेन। ४५ दृष्ट इति भावप्रधानोयं निर्देश.। ततश्च सामान्यतो दृष्टात् सामान्यरूपेण दृश्यमानत्वाल्लिङ्गाज्जातमनुमानं तस्माद्यज्यादिकं सामान्यम्—तथैव दृश्यमानत्वात्। यद्यथा दृश्यते तत्तथैव भवति यथा नीलं नीलतया। इत्यनुमानम्। (भट्ट.) यज्यादिकं सामान्यं न भवति—तद्व्यतिरिक्तकरोतिसामान्यासम्भवात्। सत्त्वसामान्यासम्भवे घटादिवत्। इत्युक्ते सौगत प्राह।—यज्यादिकं स्वव्यतिरिक्तकरोतिसामान्यासम्भवेपि सामान्यं भवति—परापरसामान्येषु सामान्यान्तराऽभावेपि सामान्यं सामान्यमिति प्रतीतिलक्षणानुमानसद्भावादिति भाव.। ४६ निश्चये। ४७ विशेषे संशयो घटते। ४८ क्रियान्वयलक्षणसामान्यरूपेण। ४९। घटे। ५० हिमवदादौ। ५१ अपि तु न।

ष्वविशेषेण संशयोनुषङ्गी—स्मरणविषये एव विशेषेनेकत्र संशयप्रतीतेः । सामान्यप्रत्यक्षाद्विशेषाप्रत्यक्षाद्विशेषस्मृतेश्च संशय इति वचनात् । सामान्ये ह्युपलभ्यमाने तदविनाभाविनो विशेषस्यानुपलम्भेपि नाभावः सिद्ध्यति—तदभावे तस्याप्यभावप्रसङ्गात् । तदुक्तम् ।—निर्विशेषं हि सामान्यं भवेच्छशविषाणवत् । सामान्यरहितत्वाच्च विशेषस्तद्वदेव हि ॥ न चैव विशेषेऽदृश्यानुपलब्धेरेव संशयः—स्मृतिनिरपेक्षत्वप्रसङ्गात् । विशेषस्मृतिरेव संशय इति चेन्न—साध्यसाधनव्याप्तिस्मृतेरपि संशयत्वप्रसङ्गात् । सर्वसाधनानां संशयितसाध्यव्याप्तिकत्वापत्तेस्तत्स्मृतेरचलितत्वान्न संशयत्वमिति चेत्तर्हि चलिता प्रतीतिः संशयः । सा चोभयविशेषस्मृत्युत्तरकालभाविनी—तदन्वयव्यतिरेकानुविधानात् । न पुनर्विशेषस्मृतिरेव सामान्योपलब्धिवत् । तदुभयाशावलम्बिनी स्मृतिः संशीतिरित्यपि फल्गुप्रायम्—तदविचलनेपि संशीति प्रसङ्गात् । सामान्याप्रत्यक्षतायामपि कन्याकुब्जादिषु प्रथमतरमेव स्मरणात् संशयदर्शनान्न सामान्योपलम्भः संशयहेतुरिति चेन्न—असिद्धत्वात् । तत्रापि हि प्रासादादिसन्निवेशविशेषविषयः संशयः कन्याकुब्जनगरसामान्योपलम्भनपुरस्सरएव—सर्वथानुपलम्भे संशयविरोधात् सर्वथोपलम्भवत् । योपि तद्भावाभावविषयः संशयः सोपि नगरादिसामान्योपलम्भपूर्वक एव । नगरादिकं सामान्यतस्तावत्प्रसिद्धम् । कन्याकुब्जादि नामकं तु तदस्ति किं वा नास्तीत्युभयाशावलम्बिनः प्रत्ययस्योत्पत्तेर्न च नगरत्वं नाम न किञ्चिदिति वक्तुं शक्यम्—प्रत्यासत्तिविशेषस्य प्रासादादिसमूहस्य नगरत्वोपवर्णनात् । तत्रानुस्यूतप्रत्ययहेतोर्नगरत्वसामान्यस्य सिद्धेस्तदुपलम्भपूर्वकस्तद्विशेषे संशयो न विरुध्यत एव । ततः करोत्यर्थसामान्योपलम्भात्तद्विशेषयज्याद्यर्थस्यानुपलब्धेरनेकविशेषस्मरणाच्च युक्तस्तत्र सन्देहः । न हि तदेव यज्यादिकमनियमेन करोतीत्युपलब्धुं शक्यम् । करोत्यर्थसामान्यासम्भवे सत्त्वसामान्यासम्भवे घटादिकमिवास्तीत्यनियमेन परापरसामान्येषु पुनः सामान्यमित्यनियमेनोपलम्भो गौण एव—सामान्येषु सामान्यान्तरासम्भवात् । तत्सम्भवे वानवस्थाप्रसङ्गात् । न चैवं सर्वत्र सामान्यमन्तरेणैवानियतप्रत्ययो गौण इति वक्तुं शक्यम्—मुख्याभावे गौणस्यानुपपत्तेः । विकल्पबुद्धौ प्रतिभासमानः सामान्याकारो मुख्यः स्वलक्षणेषु पुनरारोप्यमाणो गौण इति चेन्न—विशेषाकारस्यापि तत्र गौणत्वप्रसङ्गात् । शक्यं हि वक्तुम्—प्रत्यक्षबुद्धौ प्रतिभासमानो विशेषाकारो मुख्यो, बहिः स्वलक्षणेषु स एवाध्यारोप्यमाणो गौण इति । नन्वेवमपि ज्ञानविशेषाः

---

१ विवक्षितवस्तुसामान्याविनाभाविविशेषेषु बहुषु सत्स्वेकस्मिन् स्मरणगोचरे विशेषे संशयो घटते । अनभिमतस्याविवक्षितस्य वस्तुनस्तेषु विशेषेषु संशयो नास्ति । २ सामान्य । ३ विशेषाभावे सामान्यस्याप्यभावप्रसङ्गात् । ४ ( भट्ट ) विशेषाणामनुपलम्भादभावासिद्धप्रकारेण । ५ एवं विशेषे सामान्याविनाभाविनि सति अदृश्यानुपलब्धे सकाशात्संशयो न भवति किन्तु दृश्यानुपलब्धेरेव संशय । अदृश्यानुपलब्धौ स्मृतेर्निरपेक्षत्वं भवति किन्तु दृश्यानुपलब्धौ सापेक्षा स्मृतिः । ६ संशयिता संशयप्राप्ता साध्ये व्याप्तिर्येषां तानि संशयितसाध्यव्याप्तिकानि तेषां भाव इत्यादि । ७ अनिश्चिता । ८ प्रतिपत्तिरिति पाठान्तरम् । ९ संशयस्य । १० संशय इति शेष । ११ बौद्धोक्तम् । १२ सामान्यरूपेसाध्यसाधनेत्युभयाशाविचलनेपि ( निश्चलभूतेपि ) । १३ बौद्ध । १४ रचनाविशेष । १५ पूर्वक एव । १६ सामान्यरूपेणापि विशेषस्यानुपलम्भे । १७ सामान्यस्य भावः विशेषस्याभावस्तयोर्विषय संशय । १८ नगर नगरमिति । १९ प्रासादादौ । २० यजति पचतीत्यादि । २१ नगरेऽनुगतज्ञानकारणात् । २२ तस्मादित्युपसंहारग्रन्थं निराकुर्वन्नाह भाट्ट । २३ अभेदेन सामर्थ्येन । २४ करोत्यर्थेन । २५ सौगत । २६ ननु परापरेषु सामान्येषु परं सामान्य महासत्ता अपर करोति पचति यजतीत्यादि तद्विशेषस्वभाव एव ) तदभावेपि (सामान्यभावे) इदं सामान्यमिदं सामान्यमिति सामान्यमन्तरेणापि सामान्यमुपलब्धुं शक्यत एवेत्युक्ते आह । २७ परापरसामान्येषु सामान्योपलम्भस्य गौणत्वप्रकारेण । २८ वस्तुषु । २९ सामान्यप्रत्यय । ३० हे सौगत । । ३१ मुख्यसामान्यस्य । ३२ सौगत । ३३ अन्यापोहो बहिरर्थ ( सत्याकार इति पाठान्तरम् । ) ३४ अणुक्षणिकेषु । ३५ भाट्ट । ३६ स्वलक्षणक्षणस्य । ३७ अणुक्षणिकेषु । ३८ निर्विकल्पकज्ञाने । ३९ निर्विकल्पज्ञानस्यैव विशेषाकारो न तु बहिरर्थस्य । ४० ( सौत्रान्तिकः ) सामान्यविशेषयोर्बहिरसत्त्वप्रकारेण ।

परमार्थतः[1] सन्तः सिद्धाः[2] बहिरर्थविशेषास्तु न वास्तवा इति विज्ञानवादिमतमायातं तर्हि[3]—विज्ञानसामान्यं वस्तुभूतं न बहिरर्थसामान्यमिति [4]सामान्यविशेषात्मकं विज्ञानं परमार्थसदायातं न क्षणिकविज्ञानस्वलक्षणवादि[5]मतम्[6] । विकल्प[7]विज्ञानेपि न वास्तवः सामान्या[8]कारः—तस्याऽनाद्यऽविद्योपपादितत्वात् । संवेदनस्वरूपस्यैवासाधारणस्य परमार्थसत्त्वादिति चेन्न[9]—विपर्ययस्यापि कल्पयितुं शक्यत्वात् । संवेदनेपि नासाधारणाकारः पारमार्थिकः—तस्यानाद्यविद्योदयनिबन्धनत्वात् [10]संवेदनसामान्यस्यैव वास्तवत्वादिति वदतोऽन्य[11]स्यापि निवारयितुमशक्यत्वात्[12] । [13]न वस्तुभूतं संवित्सामान्यम्—वृत्तिवि[14]कल्पानवस्थादिदोषानुषङ्गात् । बहिरर्थसामान्यवत् । इति चेत्[15]तर्हि न संविद्विशेषः परमार्थः सन्—विचार्यमाणायो[16]गाद्बहिरर्थविशेषवदित्यप्य[17]न्योब्रूयात् । तथा च सत्याऽऽश्र[18]यासिद्धो हेतुरित्युभ[19]यत्र समानं दूषणम् । [20]साधनविकलं निदर्शनमित्यपि न चोद्यम्—समानत्वात् । संवित्[21]स्वलक्ष[22]णाद्वैतोप[23]गमात् सिद्धसाध[24]नमिति चेत् संवित्[25]सामान्याद्वैतोपगमात्[26]परस्यापि सिद्धसाधनं कुतो न भवेत् ? संवित्[27]सामान्याद्वैतं प्रतीतिविरुद्धम्—विशेषसंविदभावे जातु चिदसंवेदनादिति चेत् संवित्[28]स्वलक्षणाद्वैतमपि तर्हि प्रतीतिविरुद्धमेव—संवित्सामान्यसंवेदनाभावे तद्विशेषसंवेदनस्य सकृद[29]प्यभावात् । सर्वाक्षेपसमाधीनां समानत्वात् । [30]ततो निर्बाधप्रतीतिबलाद्भेद[31]व्यवस्थायां सामान्यव्यवस्थाऽस्तु[32] [33]सुघटैव । [34]अन्तःसंवेदनेषु तद्वद्बहिरर्थेषु च सामान्यविशेषव्यवस्थोररीकर्तुं[35] युक्ता—निर्बाधप्रतीतिसिद्धत्वाविशेषात् । एतेनैतदपि प्रत्याख्यातं यदुक्तं धर्मकीर्तिना—[36]तद्रूपपरा[37]वृत्तवस्तुमात्रप्रवेदनात् । सामान्यविषयं प्रोक्तं [38]लिङ्गं भेद[39]प्रतिष्ठितेरिति । [40]तद्रूपानुवृत्त[41]स्य वस्तुमात्रस्य निर्बाधबोधाधि[42]रूढस्य सिद्धेर्भेदमात्र[43]स्याप्रतिष्ठितत्वात्—सर्वदा बहि[44]रन्तश्च भेदाभेदा[45]त्मनो वस्तुनः प्रतिभासनात् । [46]न चैतौ भेदाभेदौ विवक्षामात्रवशवर्तिनौ—[47]सर्वत्र तत्सङ्करप्रसङ्गात् । येनात्मना[48] भेदव्यवस्था तेनैवाभेदव्यवस्थितिः स्यात्—तद्विवक्षाया निरङ्कुश-

---

१ परमार्थसन्त इति पाठान्तरम् । २ योगाचारमतम् । ३ भाट्ट । ४ ज्ञाने पूर्वं सामान्यस्य स्वयमभ्युपगतत्वात् विकल्पबुद्धौ प्रतिभासमान सामान्याकारो मुख्य इति परमार्थसदायातम्—विकल्पज्ञाने सामान्याकारस्याभ्युपगमात् निर्विकल्पके तदनभ्युपगमाददोष इति न मन्तव्यम्—विकल्पज्ञानस्य स्वरूपे निर्विकल्पकत्वेन बहि· सामान्याकारस्यापि मुख्यत्वाभ्युपगमेन परमार्थत· सामान्यविशेषात्मनो ज्ञानस्य समायातत्वात् । ५ सौत्रान्तिकस्य । ६ सौत्रान्तिकवादिमतम् । ७ सौगत· प्राह । ८ घटपटाद्याकारः । ९ भाट्ट· । १० निर्विकल्पकज्ञानं । ११ भाट्टस्य । १२ सौगतेनेति शेषः । १३ सौगत । १४ एकस्यानेकवृत्तिर्नेत्यादिकारिकाव्याख्याने चतुर्थपरिच्छेदे निरूपितत्वात् । १५ भाट्ट । १६ यद्यसत्सर्वथा कार्यमित्यादिकारिकाव्याख्याने तृतीयपरिच्छेदे विचार्यमाणस्यायोगात् । १७ सवित्सामान्यवादी भाट्टः । १८ संवित्सामान्यं प्रमाणसिद्धमसिद्धं वा ? प्रमाणसिद्धं चेन्न—वृत्तिविकल्पानवस्थादिदोषानुषङ्गात् । अप्रमाणसिद्धं चेत्तर्हि आश्रयासिद्धो हेतुः । एव संविद्विशेष· प्रमाणसिद्धोऽप्रमाणसिद्धोवेत्यत्रापि योज्यम् । १९ संवित्सामान्यसंविद्विशेषयो । २० सौगत आह—हे भट्ट बहिरर्थविशेषवदिति त्वयोक्तो दृष्टान्त साध्यसाधनविकल इति । भट्टो वदति—इत्यपि सौगतेन न चोद्यम्—तवापि बहिरर्थसामान्यवदिति दृष्टान्ते तुल्यदूषणत्वात् । २१ सौगतः । २२ विशेष । २३ मध्यक्षणैकाभ्युपगमात् ( मध्यमक्षणिकाभ्युपगमात् । २४ माध्यमिकं प्रति । २५ भाट्ट· । २६ विधिवादिनो भट्टस्य । २७ सौगत । २८ भाट्ट । २९ सर्वथा । ३० भाट्ट ( सामान्याभावे विशेषस्याप्यभावो यत· ) । ३१ विशेषावस्थायाम् । ३२ सामान्यव्यवस्था तु इति पाठान्तरम् । ३३ प्रतिभासते विशेषो भेदव्यवस्थायां यथा तथान्त संवेदनेषु सामान्यमाभासते । ३४ अंत इति पाठान्तरम् । ३५ सौगतैः । ३६ अन्यरूपेण । ३७ अन्यापोह । ३८ लिङ्गजनितत्वाल्लिङ्गमनुमानम् । ३९ भेदस्याग्निस्वलक्षणस्यानुमानेनाग्रहणात् । ४० नन्वभेद एव नास्ति ततो भेदाभेदात्मक कुत इत्याशङ्कायां स्याद्वादमाश्रित्य भट्टो वदति । ४१ युक्तस्य । ४२ सामान्यविशेषरूपस्य विषयस्य । ४३ सामान्यनिरपेक्षस्य विशेषस्य । ४४ बहिर्घटादिरन्तर्वस्तुज्ञानम् । ४५ सामान्यविशेषात्मकस्य । ४६ सौगत आह अभेदवद्भेदोपि विवक्षावशवर्त्येव—सर्वविकल्पातीतत्वादस्येति । ४७ भा ( तृतीया ) । ४८ कथम् ? तथाहि ।

स्वात् । [1]पूर्ववासनाप्रतिनियमाद्विवक्षायाः प्रति[2]नियमसिद्धेर्न तद्वशाद्भेदाभेदव्यवस्थितौ सङ्करप्रसङ्ग इति चेत् कुत[3]स्तद्वासनाप्रतिनियमः ? प्रबोधकप्रत्य[4]यप्रतिनियमादिति चेन्न—[5]तदनियमे तदनियमप्रसङ्गात् । पूर्वस्ववासनाप्रतिनियमात्प्रकृतवासनाप्रतिनियम इति चेन्न—[6]तस्याः संविदव्यभिचारे वस्तुस्व[7]भावतापत्तेः । कदाचित्तद्[8]व्यभिचारे भेदाभेदव्यवस्थि[9]तेरपि व्यभिचारप्रसक्तेः कुतो न तत्सङ्करप्रसक्तिः ? सुदूरमपि गत्वा वस्तुस्वभावावलम्बनादेव तत्परिहारमिच्छता वस्तुस्वभावावेव भेदा[10]भेदौ परे[11]णाभ्युपगन्तव्यौ । [12]ततो यद-भिन्नं [13]साधारणं वस्तुस्वरूपं तदेव सामान्यं सिद्धम् । न पुनरन्यापोह[14]मात्रं विकल्प[15]बुद्धिपरिनिष्ठितम्—यतः करोति—सामान्यं यज्यादिविशेषव्यापि वास्तवं न भवेत् । तदुपलम्भेपि च विशेषे सन्देहोनुपल-भ्यमानेपि स्मृतिविषये न [16]स्यात् । [17]ननु च स्थाणुपुरुष[18]विविक्तमपरमूर्द्धतासामान्यं यज्यादिविशेष[19]व्यतिरिक्तं च [20]करोतिसामान्यं न वास्तवमस्ति—बुद्ध्यऽभेदात् । न हि बुद्धिभेदमन्तरेण पदार्थभेदव्यवस्थितिः—अति[21]प्रसङ्गात् । तदुक्तम्—न भेदाद्भिन्नमस्त्यन्यत्सामान्यं बुद्ध्यभेद[22]तः । बुद्ध्याकारस्य भेदेन पदार्थस्य विभिन्नतेति । तदेतद[23]सदेव—[24]सामान्यभेदयोर्बुद्धिभेदस्य सिद्धत्वात् । सामान्यबुद्धिर्हि तावदनुगता[25]कारा विशेषबुद्धिः पुनर्व्यावृत्ता[26]कारानुभूयते ? दूरादूर्द्धतासामान्यमेव च प्रतिभाति न स्थाणुपुरुषविशेषौ—तत्र सन्देहा[27]त् । तद्विशेषपरिहारेण प्रतिभासनमेव [28]सामान्यस्य [29]ततो व्यतिरेकावभासनम्—एतावन्मात्रलक्ष-णत्वात्तद्व्यतिरेकस्य । यदप्युक्[30]तम्—[31]ताभ्यां [32]तद्व्यतिरेकश्चेत् किन्नदूरेवभासनम् । दूरेवभासमान[33]स्य सन्निधाने-ति[34]भासनमित्येतदप्युक्[35]तम्—विशेषेपि समानत्वात् । सोपि हि यदि [36]सामान्याद्व्यतिरिक्तस्तदा दूरे वस्तुनः स्वरूपे सामान्ये प्रतिभासमाने किन्न प्रतिभासते ? न हीन्द्रधनुषि नीले[37] रूपे प्रतिचकासति पीतादिरूपं दूरान्न प्रतिचकास्ति । [38]अथ निकटदेशसामग्रीविशेषप्रतिभासस्य जनिका न दूरदेशवर्त्तिनां प्रतिपत्तृणा-मिति [39]न विशेषप्रतिभासनं, तर्हि सामान्य[40]प्रतिभासस्य जनिका दूरदेशसामग्री काचिन्निकटदेशवर्त्तिना नास्ति । ततो न निकटे तत्प्रतिभासनमिति समः समाधिः । अस्ति च निकटे सामान्य[41]स्य प्रतिभासनं स्पष्टं विशेषप्रतिभासनवत् । यादृशं तु दूरे तस्याऽस्पष्टं प्रतिभासनं तादृशं न निकटे विशेषप्रतिभासन-वदेव । विशेषो हि यथा दूरादस्पष्टः प्रतिभाति न तथा सन्नि[42]धाने—स्व[43]सामग्र्यभावा[45]त् । [44]अत एव च न सामान्यस्य प्रतिभासने विशेषेष्वप्रतिभासमानेष्व[46]ऽस्पष्टप्रतिभासव्यवहार[47]ः—प्रतिभासमानरूपे एव सा[48]मा-

---

१ सौगत । २ भाट्ट । ३ पूर्व । ४ प्रकट निर्विकल्पकज्ञान । ५ प्रबोधकप्रत्यये पूर्ववासनाया अनियमे प्रबोधकप्रत्यय-स्यानियमत्वप्रसङ्गात् । ६ निर्विकल्पकज्ञानेन सह तस्या वासनाया व्यभिचारोऽव्यभिचारो वेति विकल्पद्वयं करोति भाट्ट । ७ यद्यस्मादभिन्नं तत्तदात्मकम् । वस्तुस्वरूपा वासना यदि तर्हि बौद्धमतव्याघात वस्तुस्वभावतापत्तेर्वासनाया । ८ भिन्नत्वे । ९ पञ्चम्येकवचनम् । १० विशेषसामान्ये । ११ सौगतेन । १२ बाह्यवस्तुस्वभावालम्बनादेव—सङ्करपरिहारो यतः । १३ सकलपदार्थेषु साधारणम् । १४ अवस्तुमात्रम् । १५ सामान्यं नेति विकल्पबुद्धिपरिगृहीतम् । १६ वक्रो-क्त्या वाच्यम् । १७ सौगत । १८ विशेषौ । १९ भिन्नम् । २० करोति सामान्यग्राहिका यज्यादिविशेषग्राहिकेति प्रकारेण बुद्ध्यभावात् । २१ एकेन घटज्ञानेनान्येषा ज्ञानं स्यात् । अथवा एकेन घटज्ञानेन सर्वेषा घटानां प्रतीतिप्रसङ्गात् । २२ इयं सामान्यग्राहिकेयं विशेषग्राहिकेत्यनेन प्रकारेण बुद्धेर्भेदाभावात् । २३ भाट्ट । २४ सामान्यविशेषयो ( ईप् ) (सप्तमी)। २५ इदं सदिदं सदिति । २६ नेदं नेदमिति । २७ दूरादूर्द्धतासामान्यस्यैव प्रतिभासनं भवतु । एतावता तस्यास्ततो ( विशेषात् ) व्यतिरेकावभासनं कुत इत्याह । २८ व्यतिरेकस्य । २९ सामान्यात् । ३० धर्मकीर्त्तिना । ३१ स्थाणुपुरुषा-भ्याम् । ३२ भेद । ३३ सामान्यस्य । ३४ विशेषतया प्रतिभासनम् । ३५ भाट्ट । ३६ ऊर्द्धतालक्षणात् । ३७ सामान्ये। ३८ सौगत । ३९ भाट्ट । ४० उर्द्धतालक्षण । ४१ ऊर्द्धताकारस्य । ४२ किन्तु स्पष्ट एव । ४३ स्वस्याऽस्पष्टप्रतिभासनस्य। ४४ सामान्यवद्विशेषेष्वस्पष्टप्रतिभासनमेव को दोष इत्युक्ते आह । ४५ सामान्यविशेषयोर्दूरादस्पष्टतया प्रतिभासनादेव । ४६ सर्वथा । ४७ सर्वदा । ४८ सामान्यज्ञाने विशेषज्ञाने वा ।

न्ये विशेषे वा अस्पष्टव्यवहारदर्शनात् । न ह्यप्रतिभासितान्[1]यप्रतिभासिता वा कस्य[2]चिदस्पष्टप्रतिभासिता[3]। किं तर्हि ? कुतश्चिद्[4]दृष्टादृष्टकारणकलापादस्पष्टज्ञानस्योत्पत्तिरर्थे[5]ष्वस्पष्टता[6]—विषयिधर्मस्य विषयेपूपचारात् । संवेदनस्यैव ह्यस्पष्टता धर्मः स्पष्टतावत् । [6]तस्या विषयधर्मत्वे [7]सर्वदा [8]तथाप्रतिभासप्रसङ्गात् [9]कुतः प्रतिभासपरावृत्तिः [10]स्यात् ? न [11]चास्पष्टं संवेदनं निर्विषयमेव—[12]संवादकत्वात् [13]स्पष्टसंवेदनवत् । [14]क्वचिद्विसंवाददर्शनात् सर्वत्र विसंवादे—स्पष्टसंवेदनेपि तत्प्रसङ्गात् । [15]ततो नैतत्[16]साधु—बुद्धिरेवातदा[17]कारा [18]तत्र उत्पद्यते [19]यदा । तदाऽस्पष्टप्रतीभासव्यवहारो जगन्मत इति—चन्द्रद्वया[20]दिप्रतिभासे तद्व्यवहारप्रसक्तेः । [21]न च मीमांसकानां सामान्यं विशेषेभ्यो[22] भिन्नमेव वाऽभि[23]न्नमेव वा—तस्य कथञ्चित्ततो भिन्नाभिन्नात्मनः प्रतीतेः। प्रमाणसिद्धे च सामान्यविशेषात्मनिजात्यन्तरे वस्तुनि तद्ग्राहिणो ज्ञानस्य सामान्यविशेषात्मकत्वोपपत्तेर्न काचिद्बुद्धिरविशेषा[24]कारा सर्वथास्ति, नाप्यसामान्याकारा सर्वदोभयाकारायास्तस्याः प्रतीतेः । न चार्थाकारा[25] बुद्धिः—तस्या निराकारत्वात् [26]तत्र प्रतिभासमानस्याकारस्यार्थधर्मत्वात् । [27]न च निराकारत्वे संवेदनस्य प्रतिकर्मव्यवस्था ततो विरुध्यते—प्रतिनियतसा[28]मग्रीवशात् प्रतिनियतार्थव्यवच्छेद[29]कतया तस्योत्पत्तेः प्रतिकर्मव्यवस्थानसिद्धेः साकारज्ञानवादि[30]नामपि तथाभ्युपगम[31]स्यावश्यम्भावित्वात् । अन्यथा[32] सकलसमानाकारव्यवस्थापकत्वानुप[33]पत्तेःसंवेदनस्य त[34]दसिद्धेः । ततोऽसा[35]मान्याकारा बुद्धिः सामान्यावभासिनी [36]कुतश्चिदस्पष्टा कस्मिंश्चिद्वस्तुन्यविशेषा[37]कारा च विशेषावभासिनीति दूरे सामान्यस्य प्रतिभासोऽस्पष्टः स्याद्विशेषस्य च कस्यचित्—[38]सकलविशेषरहितस्य सामान्यस्य प्रतिभासासंभवात् । [39]न चोर्ध्वतासामान्ये विशेषे च प्रतिनियतदे[40]शत्वादौ प्रतिभासमाने स्थाणुपुरुषविशेषयोः सन्देहानुपपत्तिः—तयोरप्रतिभासनात् । तत्प्रतिभासनसाम[41]र्थ्यभावादनुस्मरणे सति सन्देहघटनात् । [42]तद्वत्पचति यजतीत्यादिक्रियाविशेषाप्रतिभासने करोतीतिक्रियासामान्यस्य प्रतिनियतदेशादि[43]रूपस्य प्रतिभासने युक्तः सन्देहः किं करोतीति । [44]तथा प्रश्ने च पचति यजते इत्यादि प्रतिवचनं न दुर्घटम्—[45]कथञ्चित्पृष्टस्यैव प्रतिपादनात् । एवं यजनादिक्रियाविशेषाणां साधारणरूपा करोतीति क्रिया क[46]थञ्चि[47]त्ततो व्यतिरेकेणोपलभ्यमाना [48]कर्तृव्यापाररूपार्थभावना

---

१ सामान्यविशेषयोर्मध्ये एकस्य । २ सामान्यस्य विशेषस्य वा । ३ अस्पष्टस्पष्टप्रतिभासिताभेदेपि ज्ञानाश्रिते स्तो न तु वस्त्वाश्रिते । ४ दृष्टकारणं देशकालादि अदृष्टं कारणं मतिज्ञानावरणक्षयोपशमविशेष. । ५ भवति । ६ अस्पष्टतायाः । ७ अन्धकारावस्थायामपि । ८ उद्द्योतावस्थायामिव । ९ वस्तुनः स्पष्टताधर्मस्य सर्वदा प्रतिभासस्याङ्गीकारे दूषणमाह । १० बौद्धाभिप्रायमनूद्य वक्ति । ११ ( भाट्ट ) सविकल्पकम् । १२ सत्यत्वात् । १३ निर्विकल्पकवत् । १४ अस्पष्टज्ञाने । १५ अस्पष्टसंवेदनं सविषयं यत. । १६ वक्ष्यमाणम् । १७ अस्वलक्षणाकारा, अविशेषाकारा, वहिःस्वलक्षणाकारा । १८ स्वलक्षणलक्षणादर्थात् । १९ यदा तु प्रतिभासते तदेत्यादि पाठान्तरम् । २० जाततैमिरिकस्य । २१ तर्हि भवता मीमासकाना भेदाभेदे सतीदं दूषणं समानं तत्र किम् ? इति प्रश्ने आह । २२ स्थाणुपुरुषादिभ्य । २३ अत एवास्पष्टतालक्षण निर्विषयलक्षण दूषणं न । २४ विशेषाकाराद्व्यावृत्ताऽविशेषाकारा । २५ सौगताभ्युगताद्रूप्यसहिता न भवतीत्यर्थ. । २६ विषये । बुद्धेर्निराकारत्वं तर्हि आकारः कथं प्रतिभासते इत्युक्ते आह । २७ हे सौगत । २८ भाट्ट. । २९ ग्राहकतया। ३० सौत्रान्तिकानाम् । ३१ प्रतिनियतसामग्रीवशात्प्रतिनियतार्थव्यवच्छेदकस्य ज्ञानस्याङ्गीकारस्य । ३२ प्रतिनियतसामग्रीवशात् प्रतिनियतव्यवच्छेदकत्वाभावे सकलनीलपीतादिनिर्भासाना तुल्याकारत्वमापद्यते संवेदनस्य ( विवक्षितनीलाकारवदशेषनीलाकारग्रहणप्रसक्ते· )। ३३ व्यवस्थापकत्वापत्तेरिति पाठान्तरम् । ३४ प्रतिकर्मव्यवस्थापनस्य सिद्धिर्न स्यात् । ३५ योग्यतावशात्प्रतिनियतार्थव्यवस्था यतः । ३६ दृष्टादृष्टकारणकलापात् । ३७ सामान्याकारा । ३८ कोपि विशेषो दूरे न प्रतिभासते इत्युक्ते आह । ३९ सौगताभिप्रायमनूद्याह । ४० स्थाणुपुरुषोचितदेश. । आदिशब्दात्प्रकाशान्धकारकलुषवेलाश्च गृह्यन्ते । ४१ देशनैकट्यम् । ४२ सामान्यप्रत्यक्षाद्विशेषाप्रत्यक्षाद्विशेपस्मृतेश्च सन्देहो युक्त इत्युक्तवत् । ४३ विशेषालिङ्गितस्य । आदिशब्देनातिप्रकाशान्धकारः । ४४ कि करोतीति । ४५ पृष्ट एव पुमानुत्तर प्रतिपादयतीत्यर्थः । ४६ शक्यविवेचनत्वेन । ४७ यजनादिक्रियाविशेषेभ्यो भिन्नत्वेन । ४८ करोत्यर्थलक्षणा ।

विभाव्यते एव—शब्दव्यापाररूपशब्दभावनावत् सफलबाधकरहितत्वनिर्णयात् । सैव च वाक्यार्थो न पुनर्नियोगोऽन्यापोहादिवत् । इति भट्टसम्प्रदाय एव संवादकःसिद्धः । कोऽर्थे चोर्थे चोदनायाः प्रामाण्यं तत एव न स्वरूपे—तत्र बाधकसद्भावात् । सर्ववेदान्तवादनिराकरणाच्च भट्टस्य कश्चिदपि प्रतिघात इति केचित् । अत्र प्रतिविधीयते । यत्तावदुक्तं, शब्दव्यापारः शब्दभावनेति । तत्र शब्दात्तद्व्यापारोऽनर्थान्तरभूतोऽर्थान्तरभूतो वा स्यात् ? यद्यनर्थान्तरभूतस्तदा कथमभिधेयः ? शब्दस्य स्वात्मवत् । न ह्येकस्यानंशस्य प्रतिपाद्यप्रतिपादकभावो युक्तः ? संवेद्यसंवेदकभाववत् । स्वेष्टे विपर्यासेन तद्भावापत्तेः—प्रतिनियमहेतुत्वभावात् । तद्भेदपरिकल्पनया प्रतिपाद्यप्रतिपादकभावे तस्य सांवृत्तत्वप्रसङ्गात् । स्वरूपमपि शब्दः श्रोत्रेण गमयति बहिरर्थवत् स्वव्यापारेण । ततस्तस्य प्रतिपादक इति चेत्—रूपादीनामपि स्वरूपप्रतिपादकत्वप्रसङ्गात् । तेपि हि स्वं स्वं स्वभावं चक्षुरादिभिर्गमयन्ति—चक्षुरादीनां स्वातन्त्र्येण तत्र प्रवर्त्तनात् तत्प्रयोज्यत्वात् तेषां च रूपादीनां निमित्तभावेन प्रयोजकत्वात् स्वयमधीयानानां कारीषाग्न्यादिवत् । अथ रूपादयः प्रकाश्या एव ततोऽर्थान्तरभूतानां चक्षुरादीनां प्रकाशकादीनां सद्भावादिति मतम् । तथैव शब्दस्वरूपं प्रकाश्यमस्तु—ततोन्यस्य श्रोत्रस्य प्रकाशकस्य भावात् । सत्यमेतदिन्द्रियबुद्धेर्विषयभावमनुभवन् प्रकाश्य एव शब्दो रूपादिवत् । प्रतिपादकस्तु स्वरूपे शाब्दीं बुद्धिमुपजनयन्नभिधीयते इति चेन्न—तत्र वाच्यवाचकभावसम्बन्धाभावात् । तस्य द्विष्ठत्वेनैकत्रानवस्थितेः । यदि पुनरर्थान्तरभूत एव शब्दात्तद्व्यापार इति मतं तदा स शब्देन प्रतिपाद्यमानो व्यापारान्तरेण प्रतिपाद्यते चेत्तर्हि तद्भाव्यः स्यात् । तद् व्यापारान्तरं तु भावनानुपज्यते । तदपि यदि शब्दादर्थान्तरं तदा तद्भाव्यं व्यापारान्तरेण स्यात् । तत्तु भावनेत्यपरापरभाव्यभावनापरिकल्पनायामनवस्थाप्रसङ्गः । अथ शब्दात्तद्व्यापारः कथञ्चिदनर्थान्तरम् विष्वग्भावेनानुपलभ्यमानत्वात् कुण्डादेर्बदरादिवत् । कथञ्चिदर्थान्तरं च विरुद्धधर्माध्यासात्—तदनुत्पादेऽप्युत्पादात्तद्विनाशेपि च विनाशादाकाशादन्धकारवदिति मतम् । तदाप्युभयदोषानुषङ्गः । स्यान्मतम्—अग्निष्टोमादिवाक्यमुपलभ्यमानं पुरुषव्यापारस्य साधकमिदमित्यनुभवाद्वाक्यस्य एव तद्व्यापारो भावना वाक्यस्य विषयतां संभवति—तथा प्रतीतेः । अन्यथा सर्वत्र विषयविषयिभावसंभावनाविरोधात् ।

---

१ स्फोटादि । २ भट्टमतः । ३ भावनालक्षणे । ४ विधौ । ५ भट्टमतानुसारी । ६ जैनेन । ७ हे भट्ट तथा । ८ व्यापारः शब्दव्यापारो न भवति—ततोऽनर्थान्तरत्वात् तत्स्वरूपवत् । अत्राशङ्का—ननु शब्दस्य स्वात्मा शब्दाभिधेयो भवतु । को दोषः? तथा सति सन्दिग्धानैकान्तिकत्वं हेतोरित्युक्ते आह नहीति । ९ शब्दस्य ज्ञानापेक्षया निरंशस्य । १० एकानंशस्य प्रतिपाद्यप्रतिपादकत्वं चेत् । ११ भट्टस्य स्वेष्टं शब्दस्य प्रतिपादकत्वं स्वरूपस्य प्रतिपाद्यत्वमिति । तद्विपरीत्येन शब्दस्य प्रतिपाद्यत्वेन १२ कुतः । १३ शब्दः प्रतिपादकः स्वरूपं प्रतिपाद्यमिति प्रतिनियमहेतोरभावात् । १४ शब्दस्य तद्भेदपरिकल्पनया । १५ शब्दस्य । १६ कल्पितत्व । १७ भाट्ट । १८ यथा शब्दः स्वव्यापारेण बहिरर्थं गमयति । १९ शब्दः श्रोत्रेण स्वरूपं गमयति यतः । २० स्वरूपस्य । २१ जैन. । २२ ततो रूपादिर्भावना स्यात् । २३ रूपादय. । २४ पुरुषस्य । २५ एतदेव भावयति । २६ रूपादिविषये । २७ ते रूपादयः प्रयोज्याश्चक्षुरादय प्रयोजकाः । निमित्तमात्रकृतं तत्प्रयोज्यत्वं, न तु मुख्यवृत्त्या । २८ स्वस्वरूपवेदनं प्रति । २९ भाट्ट । ३० जैनः । ३१ भाट्टः । ३२ श्रोत्रेन्द्रियस्य । ३३ जैन । ३४ अनंशरूपे शब्दे । ३५ द्वितीयपक्षे । ३६ (जैनः) यथा च छेदकस्य कुठारस्य छेद्यस्य वृक्षस्य तयोरन्तरालेऽप्यान्तरव्यापारेणोत्पतननिपतनेन भाव्यम् । ३७ कारणभूतेन । ३८ जैनः । ३९ शब्दव्यापारेण हि पुरुषव्यापारो भाव्यते इत्युक्तं पूर्वं तथा तद्वदित्यर्थः । ४० व्यापारान्तरम् । ४१ भाट्ट । ४२ शब्दात् । ४३ पृथग्भावेन । ४४ व्यतिरेकदृष्टान्तः । यत्र कथञ्चिदनर्थान्तरत्वं न भवति तत्र विष्वग्भावेनोपलभ्यमानत्वं भवति । यथा कुण्डाद्बदरादिः । ४५ शब्द । ४६ पृथक् । ४७ शब्दव्यापारस्य । ४८ जैनः । ४९ अनर्थान्तरार्थान्तरोक्तदोषः स्यात् । ५० भट्टस्य । ५१ गृह्यमाणम् । ५२ साधकमिति पाठान्तरम् । ५३ प्राप्नोति । ५४ भावनाया वाक्यविषयत्वाभावे । ५५ ज्ञानार्थयोः ।

संवेदन[1]मपि हि भवतां[2] स्वव्यापारं[3] विषयी कुर्वन् तदनर्थान्तरभूतमर्थान्तरभूतं कथञ्चिदुभयस्वभावं वा सवेदयेत्[4]—गत्यन्तराभावात् । प्रथमपक्षे न संवेद्यसंवेदकभावः—संवेदनतद्व्यापारयोः सर्वथानर्थान्तरत्वा-द्वाक्यतद्व्यापारयोः[5] प्रतिपाद्यप्रतिपादकभाववत् । द्वितीयपक्षेपि न तयोस्तद्भावः—[6]अनवस्थानुपङ्गात्तद्वत् । तृतीयपक्षे तु तदुभयदोषप्रसक्तेस्तद्वदेव कुतः संवेद्यसंवेदकभावः सिध्येत् अथ[7] स्वार्थसंवेदनव्यापारविशिष्टं संवेदनमबाधमनुभूयमानं विकल्पशतेनाप्यशक्यनिराकरणं संवेद्यसंवेदकभावं साधयतीत्यभिधाने परस्यापि[8] शब्द[9]. स्वव्यापारविशिष्टः पुरुषव्यापारं[10] भावयतीत्य[11]बाधप्रतीतिसद्भावाद्वाक्यव्यापारो भावना वाक्यस्य[12] विषयो व्यवतिष्ठते एवेति । [13]तदनुपपन्नम्—वैषम्यात्[14][15] । संवेदनेनहि [16]संवेद्यमानः स्वात्मा[17]ऽर्थो वा तस्य[18] विषयो न पुनः संवेदकः स्वात्मा तत्[19]संवेद्यत्वेनान्यस्य[20] संवेदनस्य[21]ात्मनः[22] संवेदकत्वोपपत्तेराकाङ्क्षा[23]परिक्षयादनव-स्थानवतारात् । वाक्येन[24] तु भाव्यमानः[25] पुरुषव्यापारो न तस्य विषयः । [26]स्वव्यापारस्तु भावकत्व[27]लक्षणो भावनाख्यो विषयो[28]भ्युपगम्यते इति मनागपि न साम्यम्—तथाप्रतीत्यभावाच्च । न हि कश्चिद्वाक्य[29]श्रव-णादेवं प्रत्येति स्वव्यापारो[30]नेन वाक्येन मम प्रतिपादित इति । किं तर्हि ? जात्यादि[31]विशिष्टोर्थः क्रिया[32]-ख्योनेन[33] प्रकाशित इति प्रतीतिः—सर्वेण वाक्येन क्रियाया एव कर्मादिविशेषणविशिष्टायाः प्रकाशनात्। देवदत्त गामभ्याज शुक्लां[34] दण्डेनेत्यादि[35]वत् । सैवा[36]भ्याजनादिव्यवच्छिन्ना क्रिया भावना अभ्याज अभ्या-जनं कुर्विति प्रतीतिरिति चेन्न[37]—तस्याः पुरपस्थत्वेन सम्प्रत्ययाच्छब्दात्मभावनारूपत्वायोगात् । तथा[38] च कथमिदमवतिष्ठते—शब्दात्मभावनामाहुरन्या[39]मेव लिङादय इति । यदप्युक्तम्[40]—अर्थभावना पुरुषव्या-पारलक्षणा[41] वाक्यार्थ इति तदप्ययुक्तम्—नियोगस्य वाक्यार्थत्वप्रसङ्गात् । नियुक्तोहमनेन वाक्येन यागादाविति प्रतिपत्तुः प्रतीतेः । इष्ट[42]स्तादृशो नियोगो भावना[43]स्वभावः शुद्धकार्यादिरूपस्यैव नियोगस्य निराकरणादिति चेन्न[44] तस्यापि प्रधानभावार्पितस्य[45] करोत्यर्थादिविशेषण[46]स्य वाक्यार्थत्वोपपत्तेः। निरपेक्षस्य तु करोत्यर्थस्यापि वाक्यार्थत्वानुपपत्तेः । न च करोत्यर्थ एव वाक्यार्थ इति युक्तम्—यज्याद्यर्थस्यापि वाक्यार्थतयानुभवात् । [47]करोतिसामान्यस्य सकलयज्यादिक्रियाविशेषव्यापिनो नित्यत्वाच्छब्दार्थत्वम्—नित्याः[48] शब्दार्थसम्बन्धा इति वचनात् । न पुनर्यज्यादिक्रियाविशेषास्तेषामनित्यत्वाच्छब्दार्थत्वा[49]ऽवे-

१ यथास्माकं ( भाट्टाना ) विकल्पेन पृष्टं तथास्माभिरपि पृच्छ्यते जैन. । २ जैनानाम् । ३ स्वार्थग्रहणलक्षणम् । ४ स्वार्थग्रहणलक्षणम् । ५ ज्ञेयवस्तुग्रहणलक्षणो व्यापार । ६ यदि पुनरर्थान्तरभूत एव संवेदनात्संवेदनव्यापार इति मतं तदा स संवेदनव्यापार संवेदनेन संवेद्यमानो व्यापारान्तरेण संवेद्यते चेत्तर्हि व्यापारान्तरभाव्य. स्यात् । व्यापारान्तर तु यदि संवेदनादर्थान्तर तदा तद्व्यापारान्तरं व्यापारान्तरेण भाव्यमिति सत्यनवस्था । ७ भट्टो वदति । ८ जैनैः ९ भाट्टस्य । १० यागलक्षणम् । ११ ( प्रेरयति ) स्वपरग्राहिकातीन्द्रियशक्ति. करणरूपा । १२ शब्द. पुरुषव्यापार भावयतीत्यादि वचनम् । १३ जैन. । १४ दृष्टान्तदार्ष्टान्तिकयो । १५ वैषम्यं भावयति । १६ स्वात्मा तु न संवेदक· किन्तु संवेद्य एव । १७ स्वपरग्राहिकातीन्द्रियशक्ति करणरूपा स्वात्मा । १८ तस्य वाक्यस्य । १९ स्वात्मन. । २० करणरूपस्य । २१ विषयरूपतया ग्राह्यत्वे । २२ स्वरूपस्य । २३ अवान्तरव्यापारस्याकाङ्क्षा नास्ति ततो नानवस्था । २४ अन्यत्सवेदनं ह्यात्मान स्वरूप परि-च्छिनत्ति । अतोन्यत्संवेदनं संवेदकं स्वात्मा तु संवेद्य इत्यायातम् । २५ उत्पाद्यमान । २६ तर्हि भाट्टाभिहितविषय· क इत्युक्ते आह । २७ उत्पादकत्वलक्षण· । २८ तस्य वाक्यस्य । २९ अग्निष्टोमेन यजेतेत्यादि । ३० पुरुषव्यापार. । ३१ आदिशब्दाद् गुणद्रव्ये । ३२ यजेत आलभेतेत्यादि । ३३ अनेन वाक्येन । ३४ गुण. । ३५ द्रव्यम् । ३६ भाट्ट. । ३७ जैन. । ३८ लिङादीना शब्दव्यापारविपयत्वाभावे सति । ३९ अर्थभावनात । ४० इदानीमर्थभावना निराकर्तुमु पक्रमते । ४१ देवदत्त करोतीत्यादिलक्षणा । ४२ भाट्ट आह " भो जैन " ४३ शब्दव्यापार इत्युक्ते शब्दभावनैवेति भावनास्वभावः । ४४ जैन· । ४५ विवक्षितस्य । ४६ वस । ४७ भाट्टो वदति । ४८ "नित्या· शब्दार्थसम्बन्धास्तत्राम्नाता· महर्षिभि· । सूत्राणा सानुतन्त्राणा भाष्याणा च प्रणेतृभि." । ४९ वाक्यर्थता ।

दर्शनात्[1] । इति चेन्न[2]—यज्यादिक्रियासामान्यस्य[3] सकलयज्यादिक्रियाविशेषव्यापिनो नित्यत्वाच्छब्दार्थत्वाविरोधात्, सर्व[4]क्रियाव्यापित्वात्करोतिसामान्य शब्दार्थ इति चेत्[5] तर्हि सत्तासामान्यं[6] शब्दार्थो[7]ऽस्तु, करोतावपि तस्य सद्भावात् । महा[8]क्रियासामान्यव्यवस्थितिरूपत्वात्[9] । यथैव हि पचति पाकं करोति, यजते यागं करोतीति प्रतीतिस्तथा पचति पाचको भवति, यजते याजको भवति, करोतीति कारको भवतीत्यपि प्रत्ययोस्ति । ततः करोतीतरा[10]र्थव्यापित्वाद्भवत्यर्थ[11]स्यैव शब्दार्थत्वं[12] युक्तमुत्पश्यामः[13] । स्यान्मतं "निर्व्यापा[14]रेपि वस्तुनि भवत्यर्थस्य प्रतीतेर्न क्रियास्वभावत्वं, "[15]निष्क्रियेषु गुणादिषु भवना[16]ऽभावप्रसङ्गात्" इति चेन्न, करोत्यर्थेपि समानत्वात् । परिस्पन्दा[17]त्मकव्यापाररहितेपि करोत्यर्थस्य भावात्, तिष्ठति स्थानं करोतीति प्रतीतेः, गुणादिषु च[18] करोत्यर्थाभावे सर्वथा कारकत्वायोगादवस्तुत्वप्रसक्तेः । तत[19] एव करोत्यर्थो व्यापकः, सति[20] सर्वत्र भावात् । अन्यथा[21] तस्याऽकारकत्वेनावस्तुत्वात् सत्त्वविरोधात् । भवन[22]क्रियेत्यादिव्यवहारदर्शनाच्च[23] सत्ता करोत्यर्थविशेषणमेव । करोत्यर्थस्यैव सर्वत्र प्राधान्याद्वाक्यार्थत्वम् । इति चेन्न[24], तस्य[25] नित्यस्यैकस्यानंशस्य सर्वगतस्य सर्वथा विचार्यमाणस्यासम्भवात् । नित्यं[26] करोत्यर्थसामान्यं प्रत्यभिज्ञायमानत्वाच्छब्दवदिति चेन्न[27], हेतोर्विरुद्धत्वात्, कथञ्चिन्नित्यस्येष्ट[28]विरुद्धस्य साधनात्, सर्वथा नित्यस्य प्रत्यभिज्ञानायोगात्, तदेवेदमिति पूर्वोत्तरपर्यायव्यापिन्येकत्र[29] प्रत्ययस्योत्पत्तेः, [30]पौर्वापर्यरहितस्य पूर्वापरप्रत्यय[31]विषयत्वासम्भवात् । धर्मौ[32]वेव पूर्वापरभूतौ, न धर्मसामान्यमिति चेत् कथं[33] तदेवेद[34]मित्यभेदप्रतीतिः ? पूर्वापरस्वरूपयोरतीतवर्त्तमानयोस्तदित्यतीतपरामर्शिना स्मरणेनेदमिति वर्त्तमानोल्लेखिना प्रत्यक्षेण च विषयीक्रियमाणयोः परस्परं भेदात्[35] । करोति[36]सामान्यादेकस्मात्तयोः कथञ्चिद्भेदाभेदप्रतीतिरिति चेत् [37]सिद्धं तस्य कथञ्चिदनित्यत्वम्, अनित्यस्वधर्माव्यतिरेकात्[38] । न[39] ह्यनित्यादभिन्नं नित्यमेव युक्तमनित्यस्वात्मवत्, सर्वथा नित्यस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोधाच्च । तदनित्यं सामान्यं, विशेषादेशा[40]च्छब्दवत् । तत एवानेकं तद्वत् । करोतीति[41] स्वप्रत्ययाविशेषादेकं करोतिसामान्यं सदिति स्वप्रत्ययाविशेषादेकसत्तासामान्यवदिति चेन्न, सर्वथा स्वप्रत्ययाविशेषस्यासिद्धत्वात्[42] । प्रतिकरोत्यर्थ[43]व्यक्ति करोतीति-प्रत्ययस्य[44] विशेषात्[45] प्रतिसद्व्यक्ति सदितिप्रत्ययवत् । तद्व्यक्तिविषयो विशेषप्रत्यय[46] इति चेत्तर्हि[47] ता व्यक्तयः[48] सामान्यात्[49]सर्वथा यदि भिन्नाः प्रतिपाद्यन्ते तदा यौगमतप्रवेशो मीमांसकस्य । अथ[50] कथञ्चिदभिन्ना[51]स्तदा सिद्धं सामान्यस्य विशेषप्रत्ययविषयत्वं विशेषप्रत्ययविषयेभ्यो विशेषेभ्यः कथञ्चिदभिन्नस्य सामान्यस्य विशेषप्रत्ययविषयत्वोपपत्तेर्विशेषस्वात्मवत् । ततोऽनेकमेव[53] करोतिसामान्यं सत्तासामा-

---

१ अघटनात् । २ जैन । ३ करोत्यर्थविशेषस्य । ४ भाट्ट । ५ जैनः । ६ भवनक्रिया । ७ वाक्यार्थ । ८ महाक्रिया सत्तालक्षणा सैव सामान्यं तदेव रूपं यस्या करोतिक्रियाया । ९ सत्तासामान्यस्य । १० इतर =पचनादि । ११ न पुन करोत्यर्थस्य । १२ वाक्यार्थत्वम् । १३ वयं जैना । १४ निष्क्रिये । १५ अन्यथा । १६ सत्त्वस्य विनाशाद्गुणादीनामभाव आयात । १७ [पर आह] क्रिया द्विविधा परिस्पन्दात्मिका (चलनात्मिका) भाववती च । १८ किञ्च । १९ पर एव । २० विद्यमाने वस्तुनि । २१ असति सर्वत्र भावे । २२ महासत्ता । २३ । हेत्वन्तरमिदम् । २४ जैन आह । २५ करोतिसामान्यस्य । २६ ( भाट्ट आह ) घटादौ व्यभिचारश्चेत्तर्हि "सर्वथा"पदं ज्ञातव्यम् । २७ जैनः । २८ भाट्टमते करोत्यर्थस्य सामान्यं सर्वथा नित्यमिति । २९ वस्तुनि । ३० ज्ञानमेव पूर्वापरीभूतं नार्थ इत्याशङ्कायामाह । ३१ प्रत्ययो ज्ञानम् । ३२ भाट्ट । ३३ जैन. । ३४ यदेव मया यजनादावुपलब्धं तदेव पचनादौ करोत्यर्थस्य सामान्यम् । ३५ ततो नाभेदप्रतीति । ३६ भाट्ट । ३७ जैन. । ३८ अव्यतिरेक.अभेद । ३९ सन्दिग्धानैकान्तिकत्वे सत्याह जैन. । ४० पर्यायार्थिकनयाद्भेदकथनात् । ४१ घटं करोति पट करोतीत्यादौ । ४२ हेतो । ४३ पर्यायार्थिकनयेन भेदस्यापि कथनात् । ४४ करोत्यर्थस्य व्यक्ति प्रतीति प्रतिकरोत्यर्थव्यक्ति । ४५ घटकरणपटकरणादिप्रत्ययस्य । ४६ भेदात् । ४७ घटकरणं पटकरणमिति । ४८ जैन । ४९ घटपटादिरूपा. । ५० करोतिसामान्यात् । ५१ भाट्ट । ५२ सामान्यात् । ५३ यावन्तो विशेषास्तावन्ति सामान्यानि न त्वेकमित्यर्थः ।

न्यवत्। नाप्यनंशं[1], कथञ्चित्सांशत्वप्रतीतेः, सांशेभ्यो[2] विशेषेभ्यो[3]नर्थान्तर[4]भूतस्य सांशत्वोपपत्तेस्तत्स्वात्मवत्। तथा[5] न सर्वगतं तत्सामान्यं, व्यक्त्यन्तरालेनुपलभ्यमानत्वात्। तत्रा[6]नभिव्यक्तत्वात्तस्यानुपलम्भ इति चेत्तत[7] एव व्यक्तिस्वात्मनोपि तत्रानुपलम्भो[8]स्तु। तस्य तत्र सद्भावावेदकप्रमाणाभावादसत्त्वादेवानुपलम्भ इति चेत् सामान्यस्यापि विशेषाभावादसत्त्वादेवानुपलम्भोस्तु, व्यक्त्यन्तराले तस्यापि सद्भावावेदकप्रमाणाभावात् प्रत्यक्षतस्तथा[9]ननुभवात् खरविषाणादिवत्। व्यक्त्य[10]न्तरालेस्ति सामान्यं, युग[11]पद्भिन्नदेश[12]स्वाधारवृत्तित्वे सत्येकत्वाद्वंशादि[13]वदित्यनुमानात्तत्र तत्सद्भावसिद्धिरिति चेन्न[14], हेतोः प्रतिवाद्यऽसिद्धत्वा[15]त्। न हि भिन्नदेशासु व्यक्तिषु सामान्यमेकं यथा स्थूणादिषु वंशा[16]दिरिति प्रतीयते, यतो युगपद्भिन्नदेशस्वाधारवृत्तित्वे सत्येक[17]त्वं तस्य[18] सिध्यत् स्वाधारान्तरालेस्तित्वं साधयेत्, प्रतिव्यक्ति सदृशपरिणामलक्षणस्य सामान्यस्य भेदाद्विसदृशपरिणामलक्षणविशेषवत्। यथै[19]व हि काचि[20]द्व्यक्तिरुपलभ्यमाना व्यक्त्य[21]न्तराद्विशिष्टा[22] विसदृशपरिणामदर्शनादवतिष्ठते तथा सदृशपरिणामदर्शनात्किञ्चित्केन[23]चित्समानमव[24]सीयते इति निर्बाधमेव, तेनायं समानः सोनेन समान इति समानप्रत्ययात्। ननु[25] पूर्वमननुभूतव्यक्त्यन्त[26]रस्यै[27]कव्यक्तिदर्शने समानप्रत्ययः कस्मान्न भवति? तत्र सदृशपरिणामस्य भावादिति चेत्तवापि विशिष्ट[28]प्रतीतिः कस्मान्न भवति? वैसादृश्यस्य भावात्। परा[29]पेक्षत्वाद्विशिष्टप्रतीतेरिति चेत्तत एव तत्र[30] समानप्रत्ययो[31]पि मा भूत्। न हि स परापेक्षो न भवति, परापेक्षामन्तरेण क्वचित्कदाचिदप्यभावाद् द्वित्वा[32]दिप्रत्ययवद्दूरत्वादिप्रत्ययवद्वा। द्विविधो हि वस्तुधर्मः परापेक्षः परानपेक्षश्च वर्णा[33]दिवत् स्थौल्यादिवच्च। ननु[34] च सादृश्ये[35] सामान्ये स एवायं गौरिति प्रत्ययः कथं शबलं[36] दृष्ट्वा धवलं पश्यतो घटेतेति चेदेकत्वो[37]पचारादिति ब्रूमः[38]। द्विविधं ह्येकत्वं मुख्यमुपचरितं चेति। मुख्यमात्मादिद्रव्ये। सादृश्ये तूपचरितमिति। मुख्ये तु[39] तत्रैकत्वे तेन[40] समानोयमिति प्रत्ययः कथमुपपद्येत? तयो[41]रेक[42]सामान्ययोगादिति चेन्न[43]—सामान्यवन्तावेताविति प्रत्ययप्रसङ्गात्[44]। अभेदोपचारे[45] तु सामान्यतद्वतोः सामान्यमिति प्रत्ययः स्यात्। न तेन समानोयमिति। यष्टिसहचरितः पुरुषो यष्टिरिति यथा, यष्टिपुरुषयोरभेदोपचारात्[46]। मृन्मये[47] गवि सत्यगवयसदृशे गोसादृश्यस्य सामान्यस्य भावाद्गोत्वजातिप्रसङ्ग इति चेन्न[48], सत्य[49]गवप्रव्यवहारहेतोः सादृश्यस्य तत्रा[50]भावात् तद्भावे तस्य सत्यत्वप्रसङ्गात्। भावा[51]गवादिभिः स्थापना[52]गवादेः सादृश्यमात्रं तु

---

१ करोतिसामान्यम्। २ सावयवेभ्यो घटपटादिभ्यः। ३ भेदलक्षणेभ्यः। ४ सामान्यस्य। ५ जैनः। ६ भाट्टः। ७ जैनः। ८ ततश्च व्यक्तीनामपि सर्वगतत्वं समायातम्। न च तथा स्वीक्रियते। ९ व्यक्त्यन्तराले सत्त्वरूपेण। १० भाट्टः। ११ सामान्यं व्यक्त्यन्तरालेस्ति—एकत्वादित्येवास्तु इत्युक्ते देवदत्तेन व्यभिचारस्तत्परिहारार्थं स्वाधारवृत्तित्वविशेषणम्। तथा प्येकविष्टरोपविष्टेन तेनैव व्यभिचारो मा भूदिति भिन्नदेशविशेषणम्। तथापि क्रमेणानेकासनासीनेन तेन व्यभिचारः स्यात्। तत्परिहारार्थं युगपद्विशेषणं कृतमनुमानेस्मिन्। १२ भिन्नदेशश्चासौ स्वाधारश्च। १३ स्थूणादिषु वंशादिवदित्यर्थः। १४ जैनः। १५ सामान्यस्यैकत्वं नाङ्गीक्रियते जैनैः। १६ प्रतीयते यथा। १७ हेतुः। १८ सामान्यस्य। १९ एतदेव भावयति। २० घटपटादिलक्षणा। २१ मकुटादिलक्षणात्। २२ भिन्ना। २३ वस्तु। २४ निश्चीयते। २५ भाट्टः। २६ पुंसः। २७ एकव्यक्तिदर्शने। २८ विशिष्टप्रतीतौ विशेषे। २९ भाट्टः। ३० एकव्यक्तिदर्शने। ३१ अनेन देवदत्तेन समानोयं जिनदत्तो, जिनदत्तेन समानो देवदत्तो नेत्यत्रापि परापेक्षत्वं यतः। ३२ द्वित्वादिप्रत्ययाः एकत्वादिनिष्ठा परापेक्षा विना नोपपद्यन्ते। ३३ श्वेतपीतादिवत्। ३४ भाट्टः। ३५ सास्नादिमत्त्वे गोत्वे। ३६ शबलं गां दृष्ट्वा धवलं गां पश्यतः पुंसः स एवायं गौरिति प्रत्ययः कथं घटते?। ३७ शबलेन सदृशो धवल इत्येकत्वोपचारात्। ३८ जैनाः। ३९ मुख्ये गोत्वलक्षणे इत्यर्थः। तत्र—शबलधवलयोः। ४० गवा। ४१ परः (शबलधवलयो)। ४२ एकं गोत्वमित्यर्थः। ४३ जैन आह। ४४ न तु तेन समानोयमिति प्रत्ययः स्यात्। ४५ (जैनः प्राह) अङ्गीक्रियमाणे। ४६ न यष्ट्या समानः पुरुष इति प्रत्ययो भवति। ४७ परः। ४८ जैन। ४९ चैतन्यदोहनादेः। ५० मृन्मये। ५१ भावः सत्यः। ५२ साकारे वा निराकारे काष्ठादौ यन्निवेशनम्। सोयमित्यवधानेन स्थापना सा निगद्यते॥

गवादिमात्र[1]व्यवहारकारणं तदेकजातित्व[2]निबन्धनमनुरुध्यते[3] एव सत्त्वादिसादृश्यवत् । ततो न मीमांसकाभ्युपगत[4]स्वभावं करोतिसामान्यमुपपद्यते यत्[5]सकलयज्यादिक्रियाविशेषव्यापिकर्तृव्यापाररूपभावनाख्यां प्रतिपद्यमानं वाक्येन[6] विषयीक्रियेत । प्रतिनियतक्रियागतस्य[7] तु करोतिसामान्यस्य शब्दविषयत्वे यज्यादिसामान्यस्य[8] कथं तद्[9]विनिवार्येत; येन तद[10]पि वाक्यार्थो न स्यात् । तदेवं भावना वाक्यार्थसम्प्रदायो न श्रेयान्, बाधकसद्भावान्नियोगादिवाक्यार्थसम्प्रदायवत् । इति श्रु[11]तिसम्प्रदायावलम्बिनां मतेऽत एव न कश्चित्सर्वज्ञ इ[12]त्ययुक्तं, श्रुतेरविशेषादप्रमाण[13]तापत्तेः । इति सूक्तं "य[14]थैव हि सुगतादयः परस्परविरुद्धक्षणिकनित्याद्येकान्तसमयाभिधायिनः सर्वे न सर्वदर्शिन इति न कश्चित्सर्वज्ञस्तथा श्रुतयोपि परस्परविरुद्धकार्यार्थ[15]स्वरूपाद्य[16]र्थाभिधायिन्यः सर्वा न प्रमाणभूताः" । इ[17]ति न काचिदपि श्रुतिः प्रमाणं स्यात् । न हि कार्येर्थे श्रुतिरपौरुषेयी[18], न पुनः स्व[19]रूपे, येनापौरुषेयत्वात्तदन्यतरश्रुतिजनितमेव ज्ञानं प्रमाणं दोषवर्जितैः कारणैर्जनितत्वादुपपद्येत । बा[20]धवर्जित[21]त्वं तु नैकत्रा[22]प्यस्ति हिंसाद्यभिधायिनः "श्वेतमजमालभेत भूतिकामः" इत्या[23]देः "सधनं हन्यात्"इत्यादेरिव धर्मे प्रमाणत्वानुपपत्तेः, पु[24]रुषाद्वैताभिधायिनश्च सर्वं खल्विदं ब्रह्म"इत्यादेः "सर्वं प्रधा[25]नमेव"इत्यादेरिव स्वविषये प्रमाणत्वायोगात् । अपू[26]र्वार्थत्वं पुनः सर्वस्याः श्रुतेरविशिष्टं, प्रमाणान्तराप्रतिपन्ने धर्मादौ परब्रह्मादौ च प्रवृत्तेः । न[27] च काचिच्छ्रु[28]तिः स्वयं स्वार्थं प्रतिपादयत्यन्यव्यवच्छेदेन कार्ये एवार्थे ऽहं[29] प्रमाणं न स्वरूपे; स्वरूपे एव वा न कार्येऽर्थे सर्वथेत्यविशेषः सिद्धः । न[30]नु च "पदानि तावल्लोके येष्वर्थेषु प्रसिद्धानि तेष्वेव वेदे, तेषा[31]मध्याहारा[32]दिभिरर्थस्यापरिकल्पनीयत्वादपरिभाषित[33]व्यत्वाच्च । सति सम्भ[34]वे लौकिकपदार्थज्ञश्च विद्वानश्रुतपूर्वं काव्यादिवाक्यार्थमवबुध्यमानो दृष्टः । त[35]द्वच्छ्रुतिवाक्यार्थमपि कश्चित्स्वयमेवाश्रुतपूर्वमवबोद्धुमर्हतीति युक्तं श्रुतेः स्वयमेवान्यव्यवच्छेदेन स्वार्थप्रतिपादनम्" इति कश्चि[36]त् सोपि न परीक्षाचतुरः, सर्वस्याः श्रुतेस्तथा[37]भावाविशेषात् । न[38] च भावनैव नियोग एव वा लौकिकवाक्यस्यार्थः शक्यः प्रतिष्ठापयितु, येन वैदिकवाक्यस्यापि स एवार्थः स्यात् । नापि सन्मात्रविधिरेव कस्यचिद् वाक्यस्यार्थः शक्यप्रतिष्ठो, येन श्रुतिवाक्यस्यापि स एवार्थोऽन्ययोगव्यवच्छेदेन स्यात्, त[39]त्रानेकबाधकोपन्यासात् । ततः सुगतादिवच्छ्रुतयोपि न प्रमाणमित्यायातम् । तथे[40]ष्टत्वाददोष इत्येके[41]षामप्रमा[42]णिकैवेष्टिः । न कश्चित्तीर्थकरः प्रमाणं, नापि समयो वेदोन्यो वा त[43]र्कः, परस्प[44]र-

१ लाङ्गूलककुदविषाणादिरूपेण । २ तेन भावगवादिनैका जातिर्यस्य स्थापनागवादेस्तस्य भावस्तदेकजातित्वम् । तस्य निवन्धनम् । ३ (जैनैरनुगृह्यते) भावगव्यपि मृन्मयेन सह सत्त्वसादृश्यं यथास्ति । ४ नित्यनिरंशैकसर्वगतस्वभावम् । ५ यदिति काकुः । ६ वेदवाक्येन । ७ करोतिक्रियाविशेषगतस्य स्वव्यक्तिसर्वगतस्येत्यर्थ. । ८ देवयजनगुरुयजनादियजनसामान्यस्य । ९ शब्दविषयत्वम् (वाक्यार्थत्वमित्यर्थ) । १० यजनसामान्यम् । ११ इत. कारिकार्यमाहुराचार्याः । १२ मीमासकेनोक्तम् । १३ परस्परविरुद्धार्थाभिधायित्वेन । १४ सूक्तं भावयति । १५ स्वरूपो नियोग· । १६ आदिना विध्यादिग्रह । १७ हेतो । १८ अपौरुषेयवाक्यै· । १९ ब्रह्मस्वरूपे । २० तदेव दर्शयति । २१ श्रुते. । २२ वचसि (कार्येर्थे स्वरूपे वा) । २३ वाक्यस्य । २४ [ जैनो नैकत्रापि बाधवर्जितत्वं प्रदर्शयितुं हेत्वन्तरमाह ] २५ साङ्ख्यमते सर्वं प्रधानमेव । २६ अपूर्वार्थग्राहित्वम् । २७ पराभिप्रायं निराकरोति जैन. । २८ विधिग्राहिणी नियोगग्राहिणी वा । २९ श्रुति. । ३० मीमासक । ३१ वेदगतपदानाम् । ३२ आदिना प्रकरणादिग्रह । ३३ गण्डकाश्चतुरो गुञ्जा इत्यादिगणितपरिभाषावद्व्यवहारकालात्पूर्वमस्य शब्दस्यायमर्थ इति सङ्केतस्योत्तरकाल व्यवहारनिमित्तस्य कारणं परिभाषणं तस्याविषयत्वाच्चेत्यर्थ । ३४ येष्वर्थेषु लौकिकपदाना सम्भवस्तेष्वेवार्थेषु वैदिकपदाना सम्भवे सति । ३५ लौकिककाव्यादिवाक्यार्थमिव । ३६ मीमांसकः । ३७ लौकिकवाक्यार्थानुसारेणार्थस्य प्रतिपादकत्वभावाविशेषात् । ३८ एतदेव भावयति जैन । ३९ सर्वश्रुतिषु । ४० इतश्चार्वाकमतप्रसङ्ग. । ४१ प्रत्यक्षमेवैकं प्रमाणमिच्छन्ति एके चार्वाकास्तेषाम् । ४२ प्रमाणरहिता । ४३ तर्कोनुमानम् । ४४ सर्वथा नित्यत्वानित्यत्वादिसमर्थनार्थं सौगतकापिलादिप्रयुक्तानुमानाना परस्परविरोधात्तर्कस्य परस्परविरोध. ।

-विरोधात् । "तर्कोऽप्रतिष्ठः[1] श्रुतयो विभिन्ना[2] नैको मुनिर्यस्य[3] वचः प्रमाणम् । धर्मस्य[4] तत्त्वं निहितं गुहायां महाजनो येन[5] गतः स पन्था." इति वचनात् । कश्चिद् देवतारूपो गुरुर्बृहस्पतिर्भवेत् संवादकः[6], प्रत्यक्ष-सिद्धपृथिव्यादितत्त्वोपदेशात् । इति[7] प्रत्यक्षमेकमिच्छन्ति ये तेषां लौकायतिकानामिष्टिरप्रमाणिकैव[8], प्रत्यक्ष-तर्त्तद्व्यवस्थापनासम्भवात्[9] । न खलु प्रत्यक्षं सर्वज्ञप्रमाणान्तराभावविषयम्, अतिप्रसङ्गात्[10] । सर्वज्ञस्य[11] हि मुनेः प्रमाणान्तरस्य च वेदाद्यागमस्यानुमानस्य च तर्काख्यस्याभावं यदि किञ्चिद्व्यवस्थापयेत्[12], तत्राप्रव-र्त्तमानत्वात्, तदा पुरुषान्तरादि[13]प्रत्यक्षान्तराणामप्यभावं तदेव गमयेत् तद्विषयाणां च धर्मादीनाम्[14] इत्यति-प्रसङ्गः स्वयमिष्टस्य बृहस्पत्यादिप्रत्यक्षस्यापितद्विषयस्याभावसिद्धेः । अथ[15] प्रत्यक्षान्तरं स्वयमात्मानं[16] व्यवस्था-पयति पृथिव्यादिस्वविषयं च, तत्र प्रवर्त्तनात् । अतो न तदभावप्रसङ्ग इति मतं तर्हि[17] सर्वज्ञोपि स्वसंवेदनादात्मानं स्वर्गापूर्वादिविषयं[18] च व्यवस्थापयतीति कथं तदभावसिद्धिः ? प्रमाणान्तरस्य[19] च तद्वच-नस्य हेतुवाद[20]रूपस्याहेतुवादरूपस्य च स एव व्यवस्थापकः स्यादिति कुतस्तदभावसिद्धिः[22] ? सर्वज्ञः[23] स्वप-रव्यवस्थापकोस्तीत्यत्र किं प्रमाणमिति चेत्[24] स्वप्रत्यक्षैकप्रमाणवादिनः[25] प्रत्यक्षान्तरं[26] स्वपरविषयमस्तीत्यत्र किं प्रमाणम् ? तथा[27] प्रसिद्धिरन्यत्रापीति न प्रत्यक्षं तदभावावेदकम्, अतिप्रसङ्गस्य दुष्परिहारत्वात्[28] । नानुमानम्, असिद्धेः । प्रत्यक्षमेकमेव[29] प्रमाणम्[30], अगौणत्वात्प्रमाणस्य[31] अनुमानादर्थनिश्चयो दुर्लभः, सामान्ये[32] सिद्धसाधनाद् विशेषेनुगमाभावात् सर्वत्र[33] विरुद्धाव्यभिचारिणः[34] संभवात् । इति स्वयमनुमानं निराकुर्वन्ननुमानादेव सर्वज्ञप्रमाणान्तराभावं व्यवस्थापयतीति कथमनुन्मत्तः ? प्रतिपत्तुः[38] प्रसिद्धं हि प्रमाणं स्वप्रमेयस्य निश्चायकं, नाप्रसिद्धम्, अतिप्रसङ्गादेव । परप्रसिद्धमनुमानं सर्वज्ञप्रमाणान्तराभाव-ग्राहकमिति चेत् तत् परस्य प्रमाणतः सिद्धं प्रमाणमन्तरेण वा ? यदि प्रमाणतः सिद्धं नाऽनात्मसिद्धं नाम, परस्येवात्मनोपि वादिनः सिद्धत्वात् प्रमाणसिद्धस्य सर्वेषामविप्रतिपत्तिविषयत्वाद्, अन्यथातिप्र-सङ्गात्, प्रत्यक्षस्यापि प्रमाणसिद्धस्य विप्रतिपत्तिविषयत्वापत्तेरनात्मसिद्धत्वप्रसङ्गात् । ततो यत्परस्य प्रमाणतः सिद्धं तच्चार्वाकस्यात्मसिद्धम् । यथा प्रत्यक्षम् । प्रमाणसिद्धं च परस्यानुमानम् । तस्मान्नाऽनात्म-सिद्धम् । अन्यथा परस्यापि न सिध्येत्, अतिप्रसङ्गादेव । तथा हि ।—यत् प्रमाणमन्तरेण सिद्धं

---

१ अव्यवस्थितः । २ नानार्थप्रतिपादकत्वेन । ३ सुगतः कपिलो जिनो वा । ४ ततश्च । ५ पथा । ६ प्रमाणभूतः । ७ इतो जैन आह । ८ सर्वज्ञादिपरोक्षार्थाभावस्य प्रमाणस्य । ९ ताद्भिः (सर्वज्ञप्रमाणान्तरयोरभाव) । १० अतिप्रसङ्गमेव विवृणोति । ११ चार्वाकाभिमतम् । १२ प्रत्यक्षं सर्वज्ञप्रमाणान्तरयोरभावं व्यवस्थापयति—तत्राप्रवर्त्तमानत्वात् । यद्यत्राप्रवर्त्तमानं तत्त-स्याभावं व्यवस्थापयति खरविषाणादिवत् । १३ देशान्तरकालान्तरवर्त्ती पुरुषोत्र ग्राह्यः । १४ बृहस्पतिप्रत्यक्षान्तरगोचराणाम् । १५ चार्वाकः । १६ स्वयं स्वस्वरूपम् । १७ जैनः । १८ अपूर्वं धर्माधर्मादि । १९ तस्य सर्वज्ञस्य । २० तर्करूपस्य । २१ हेतु-वादरूपस्यानुमानस्येत्यर्थः । अहेतुवादरूपस्य आगमस्येत्यर्थः । २२ प्रमाणान्तराभावसिद्धिः । २३ चार्वाकः । २४ जैनः । २५ चार्वाकस्य । २६ बृहस्पतिप्रत्यक्षम् । २७ चार्वाको वदति—बृहस्पतिप्रत्यक्षं स्वपरग्राहकमित्यस्माकं गुरुपरम्परया प्रख्यातिरस्तीति चेत्तदन्यत्रापि सर्वज्ञप्रत्यक्षेप्येवं भवतु । २८ अन्यथा । २९ चार्वाक आह—अहमनुमानेन सर्वज्ञाभावं साध-ये । पर आह—भवन्मतेनुमानं नास्ति सिद्धेरघटनात् । ३० चार्वाकः । ३१ "प्रमाणं तर्हि गौणत्वात्" इत्यादि पाठान्तरम् । ३२ अमुख्या ( अनुमानतः ) न्मुख्यप्रत्यक्षप्रमाणस्यार्थनिश्चयो दुर्लभः । ३३ प्रत्यक्षस्य । ३४ हे चार्वाक अनुमाननिराक-रणार्थं त्वमेवं वदसि । एवं किम् ? अनुमानं सामान्यं साधयति विशेषं वा ? सामान्यं चेत्सामान्ये सिद्धसाधनादित्यादि । ३५ व्याप्तिनिश्चयकाले एव सामान्यस्य सिद्धत्वात् । विशेषे पर्वतादौ साध्ये यत्र धूमस्तत्र पर्वताग्निरित्यनुगमाभावः । ३६ अनुमाने । ३७ विरुद्धस्येत्यर्थं हेतोरित्यर्थः । ३८ चार्वाकस्य । ३९ खरविषाणादिकं व्यवस्थापयेदप्रसिद्धनुमानमित्यर्थः । ४० चार्वाक आह—जैनादिप्रसिद्धम् । ४१ जैनादेः । ४२ चार्वाकस्यापि । ४३ कुतः ? यतः । ४४ यथा प्रत्यक्षम् । ४५ अतिप्रसङ्गं विवृणोति । ४६ आत्मसिद्धस्य चार्वाकस्वीकृतस्य प्रत्यक्षस्याप्यसिद्धत्वं घटेतेत्यर्थः । ४७ जैनादेः । ४८ प्रमा-णमन्तरेण । ४९ जैनस्य ।

तत्परस्यापि न सिद्धम् । यथा तदनभिमततत्त्वम् । प्रमाणमन्तरेण सिद्धं च परस्यानुमानम् । तन्न सिद्धं स्वयं[1]मनभिमततत्त्वसिद्धिप्रसङ्गात्[2] । तद्[3]इमे स्वयमेकेन प्रमाणेन[4] सर्वं सर्वज्ञरहितं पुरुषसमूहं संविदन्त एवात्मानं[5] निरस्यन्तीति व्याहतमेतत्, अतिप्रसङ्गादेव । स्वयं[6]मनिष्टं ह्यतीन्द्रियप्रत्यक्षमेषां[7] स्यात्, इन्द्रि[8]यप्रत्यक्षेण सर्वज्ञरहितस्य पुरुषसमूहस्य संवेदना[9]नुपपत्तेः प्रमाणान्तराभावस्येव[10] प्रमाणान्तरमन्तरेण । इति सर्वत्र सर्वदा सर्वस्य सर्वज्ञत्वाभावं प्रत्यक्षतः संविदन् स्वयं सर्वज्ञः स्यात् । तथा सति व्याहतमेतत् सर्वज्ञप्रमा[11]णान्तराभाववचनं चार्वाकस्य । प्रत्यक्षैकप्रमाणैषणं[12] वा व्याहतमस्य देशकालनरान्तरप्रत्यक्षाणां स्वयं प्रत्यक्षतः प्रामाण्यस्य साधने सर्वसाक्षात्कारित्वप्रसङ्गात्, संवादकत्वादिलिङ्गजनितानुमानात्तत्साधने अनुमानप्रामाण्यसिद्धिप्रसक्तेः, परस्य[13] प्रसिद्धेनानुमानेन तत्प्रमाणताव्यवस्थापने स्वस्या[14]पि तत्सिद्धेरनिवार्यत्वात् । अन्यथा[15] परस्यापि तदप्रसिद्धेः कुतः प्रत्यक्षमेकमेव प्रमाणं न पुनरन्यदिति व्यवस्था स्यात् ?

तथेष्टत्वाददोष इत्येकेषा[16]मप्रमाणिकैवेष्टिः । एके हि तत्त्वोपप्लववादिनः सर्वं प्रत्यक्षादिप्रमाणतत्त्वं प्रमेयतत्त्वं चोपप्लुतमेवेच्छन्ति । तेषां प्रमाणरहितैव तथेष्टिः सर्वमनुपप्लुतमेवेतीष्टेर्न[17] विशिष्यते । न खलु प्रत्यक्षं सर्वज्ञ[18]प्रमाणान्तराभावविषयम्, अतिप्रसङ्गात् । नानुमानम्, असिद्धेः । सर्वं हि प्रत्यक्ष[19]मनुमेयमत्यन्तपरोक्षं च वस्तु जानन्तीति सर्वज्ञानि प्रमाणान्तराणि प्रत्यक्षानुमानागमप्रमाणविशेषाः । तेषामभावं स्वयं[20]मसिद्धं प्रत्यक्षमनुमानं वा कथं व्यवस्थापयेद्यतस्तद्विषयं स्यात् ? तथा[21] सति सर्वं प्रमाणं सर्वस्य[22] स्वेष्टतत्त्व[23]विषयं भवेदिति कुतस्तत्त्वोपप्लवः ? परस्य[24] सिद्धं प्रमाणं तदभावविषयमिति चेत्[25] तत् परस्य[26] प्रमाणतः सिद्धं प्रमाणमन्तरेण वा ? यदि प्रमाणतः सिद्धं नानात्मसिद्धं नाम, प्रमाणसिद्धस्य नानात्मनां वादिप्रतिवादिनां सिद्धत्वाविशेषात् । अन्यथा[27] परस्यापि[28] न सिध्येत्, प्रमाणमन्तरेण सिद्धस्यासिद्धत्वाविशेषात् । तदिमे तत्त्वोपप्लववादिनः स्वयमेकेन केनचिदपि प्रमाणेन स्वप्रसिद्धेन[29] वा सकलतत्त्वपरिच्छेदकप्रमाणविशेषरहितं सर्वं पुरुषसमूहं संविदन्त एवात्मानं[30] निरस्यन्तीति व्याहतमेतत्—तथा तत्त्वोपप्लववादित्वव्याघातात् । ननु[31] चानुपप्लुततत्त्ववादिनोपि[32] प्रमाण[33]तत्त्वं प्रमेयतत्त्वं च प्रमाणतः सिध्येत् प्रमाणमन्तरेण वा ? प्रमाणतश्चेत्तदपि प्रमाणान्तरतः सिध्येदित्यनवस्थानात्कुतः प्रमाणतत्त्वव्यवस्था ? यदि पुनः प्रथमं प्रमाणं द्वितीयस्य व्यवस्थापकं द्वितीयं तु प्रथमस्येष्यते तदेतरेतराश्रयणान्नैकस्यापि व्यवस्था । स्वतः[34] प्रमाणस्य प्रामाण्यव्यवस्थितेरयमदोष इति चेन्न—सर्वप्रवादिनां तत्र विप्रतिपत्त्यभावप्रसङ्गात् । कुतश्चित्प्रमाणात्तद्विप्रतिपत्तिनिराकरणे तत्रापि प्रमाणान्तराद् विप्रतिपत्तिनिराकरणेन भाव्यमित्यनवस्थानमप्रतिहतप्रसरमेव । परस्परं[35] विप्रतिपत्तिनिराकरणे चान्योन्यसंश्रयणं दुरुत्तरम् । प्रमाणम-

---

१ अन्यथा । २ चार्वाकेणानभिमतं तत्त्वमनुमान परलोकादिश्च तस्य सिद्धिप्रसङ्गात् । ३ चार्वाका । ४ इन्द्रियप्रत्यक्षेण । ५ इन्द्रियप्रत्यक्षैकप्रमाणवादिस्वरूपम् । ६ स्वयमस्वीकृतमनभिप्रेतं वा । ७ चार्वाकाणाम् । ८ अन्यथा । ९ सवेदन ज्ञानम् । १० अतीन्द्रियप्रत्यक्षेण विना इन्द्रियप्रत्यक्षेणैव प्रमाणान्तराभावस्य सवेदनानुपपत्तिर्यथा । ११ ताद्दिः । १२ वाञ्छनम् । १३ जैनादेः । १४ चार्वाकस्यापि । १५ ( प्रमाणमन्तरेण प्रसिद्धेऽनुमाने सति जैनादेरपि तत्प्रसिद्धिर्न स्यात् तत ) । १६ एकं शून्यमिच्छन्तीत्येकेषस्तेषामेकेषाम् ( साख्याभिप्रायेण जैनो ब्रूते ) । १७ इत्यपि वक्तुं शक्यत्वान्न विशिष्यते । यथा हि तत्त्वोपप्लववादिना सर्वमुपप्लुतमेवेति वचनमात्रात्सिद्धं 'तथान्येषामतत्त्वोपप्लववादिना सर्वमनुपप्लुतमेवेत्यपि वचनमात्रात् सिद्धं भवतु—अप्रामाण्यस्योभयत्र समानत्वात् । १८ सर्वज्ञानि च तानि प्रमाणान्तराणि तेषामभाव । १९ प्रत्यक्षविषयम् । २० ( स्वयमसिद्धं प्रत्यक्षमनुमानं वेति कर्तृपदम् ) । २१ ( अतिप्रसङ्गादिति भाष्यपदं व्याख्याति ) तदभावविषयत्वे सति । २२ जैनादे । २३ स्वकीयस्वकीयमतानुसारितत्त्वग्राहकम् । २४ आह तत्त्वोपप्लववादी । २५ जैन' । २६ जैनस्य । २७ प्रमाणं प्रमाणमन्तरेण सिद्धं चेत् । २८ जैनस्य । २९ पुरुषसमूह सकलतत्त्वविरहित इत्येवं येनावबुद्ध तदेव प्रमाणम् अत एवात्मानं निरस्यन्तीति । ३० प्रमाणाङ्गीकारे । ३१ तत्त्वोपप्लववादी प्राह । ३२ जैनादे । ३३ "प्रमाणत्वं प्रमेयत्वम्" इति पाठान्तरम् । ३४ ( जैनपक्षमुपपाद्य तत्त्वोपप्लववादी इति चेन्नेत्यनेन खण्डयति ) । ३५ प्रथमं द्वितीयस्य व्यवस्थापकं द्वितीयं तु प्रथमस्येष्यते ।

न्तरेण तु प्रमाणादितत्त्वं यदि सिद्ध्येत्तदा तदुपप्लवव्यवस्थापि तथा दुःशक्या निराकर्त्तुम् । स्यान्मतम्[1] । "विचारोत्तरकालं प्रमाणादितत्त्वव्यवस्थितिः । विचारस्तु यथाकथञ्चित्[2] क्रियमाणो नोपालम्भार्हः[3]—सर्वथा[4] वचनाभावप्रसङ्गात्" इति । एवं[5] तर्हि तत्त्वोपप्लववादिनामपि विचारादुत्तरकालं तत्त्वोपप्लवव्यवस्था तथैवास्तु सर्वथा विशेषाभावात् । एवं च तत्र प्रमाणतत्त्वमेव तावन्निर्धार्यते[6] ।—कथं प्रमाणस्य प्रामाण्यम् ? किमदुष्ट[7]कारकसन्दोहोत्पाद्यत्वेन, बाधारहितत्वेन[8], प्रवृत्तिसामर्थ्येन[9] अन्यथा[10] वा ? यदि[11] दुष्टकारकसन्दोहोत्पाद्यत्वेन तदा सैव कारकाणामदुष्टता कुतोवसीयते ? न तावत्प्रत्यक्षान्नयनकुशलादेः[12] संवेदनकारणस्यातीन्द्रियस्यादुष्टतायाः प्रत्यक्षीकर्त्तुमशक्तेः । नानुमानात्, तदविनाभाविलिङ्गाभावात् । विज्ञानं[13] तत्कार्यं लिङ्गमिति चेन्न[14], विज्ञानसामान्यस्य तदव्यभिचारित्वाभावात्[15] । प्रमाणभूतं[16] विज्ञानं तल्लिङ्गमिति चेत् कुतस्तस्य[17] प्रमाणभूततावसायः ? तददुष्टकारणारब्धत्वादिति चेत् सोयमन्योन्याश्रयः । सिद्धे विज्ञानस्य प्रमाणभूतत्वे निर्दोषकारणारब्धत्वसिद्धिस्तत्सिद्धौ च प्रमाणभूतत्वसिद्धिरिति । किञ्च[18] चक्षुरादिकारणानां गुणदोषाश्रयत्वे[19] तदुपजनितसंवेदने दोषाशङ्कानिवृत्तिर्न स्यात् गुणदोषाश्रयपुरुषवचनजनितवेदनवत् । गुणाश्रयतयैव[20] तन्निश्चये तदुत्थविज्ञाने दोषाशङ्कानिवृत्तौ पुंसोपि कस्यचिद्गुणाश्रयत्वेनैव निर्णये तद्वचनजनितवेदने दोषाशङ्कानिवृत्तेः किमपौरुषेयशब्दसमर्थनीयासेन[21] ? अथ[22] पुरुषस्य गुणाधिकरणत्वमेवाशक्यनिश्चयं, परचेतोवृत्तीनां दुरन्वयत्वात्[23] तद्व्यापारादेः साङ्कर्यदर्शनात्, निर्गुणस्यापि[24] गुणवत इव व्यापारादिसंभवादुपवर्ण्यते तर्हि[25] चक्षुरादीनामप्यतीन्द्रियत्वात्तत्कार्यसाङ्कर्योपलब्धेः कुतो गुणाश्रयत्व[26]नियमनिश्चयः शक्यः कर्त्तुम् ? कस्यचिद[27]पौरुषेयस्यापि च ग्रहोपरागादेः शुक्लवस्त्रादौ पीतज्ञानहेतोरुपलक्षणाद्वेदस्यापौरुषेयस्यापि मिथ्याज्ञानहेतुत्वसंभावनायां कथमिव निःशङ्कं याज्ञिकानां तज्जनितवेदने प्रामाण्यनिश्चयः ? ततो नादुष्टकारकजन्यत्वेन कस्यचित्प्रमाणता । नापि बाधानुत्पत्त्या, मिथ्याज्ञानेपि[28] स्वकारण[29]वैकल्याद्बाधकस्यानुत्पत्ति[30]संभवात् प्रमाणत्वप्रसक्तेः । अथ[31] यथार्थग्रहणनिबन्धना बाधानुत्पत्तिरप्रमाणाऽसंभविनी प्रमाणत्वसाधिनीति मतं, कुतस्तस्याः[32][33] सत्यार्थग्रहणनिबन्धनत्वनिश्चयः ? संविदः[34] प्रमाणत्वनिश्चयादिति चेत् परस्पराश्रयः[35] । सति प्रमाणत्वनिश्चये संवेदनस्य यथार्थग्रहणनिबन्धनबाधानुत्पत्तिनिर्णयस्तस्मिंश्च सति प्रमाणत्वनिश्चय इति । अन्यतः[36] प्रमाणत्वनिश्चये किमेतया बाधानुत्पत्त्या ? न[37] च बाधानुत्पत्तेर्यथार्थग्रहणनिबन्धनत्वं स्वत एव निश्चीयते, सन्देहाभावप्रसङ्गात्[38] । दृश्यते च सन्देहः, किं यथार्थग्रहणादत्र[39] बाधानुत्पत्तिराहोस्वित्स्वकारण[40]वैकल्यादित्युभयसंस्पर्शिप्रत्ययोत्पत्तेः क्वचिद्दूरे मरीचिकायां जलज्ञाने स्वकारणवैकल्याद्बाधकप्रत्ययानुत्पत्तिप्रसिद्धेरभ्यास[41]देशे तत्कारणसाकल्याद्बाधकज्ञानोत्पादात् । किञ्च[42]ार्थ-

१ जैनादे । २ प्रमाणेन प्रमाणमन्तरेण वा । ३ जैनादिकृतः । ४ अन्यथा । ५ तत्त्वोपप्लववादी । ६ प्रमेयतत्त्वं च तिष्ठतु । ७ अदोष चक्षुरादिनैर्मल्यम् । ८ एतत्पर्यन्तं विकल्पद्वयमिदं मीमांसकापेक्षया । ९ अयं तृतीयविकल्पो नैयायिकमतापेक्षया । १० अन्यथा-अविसंवादकत्वेनेत्ययं चतुर्थो विकल्प सौगतमतापेक्षया । ११ तत्त्वोपप्लववादिमतमालम्ब्य जैन प्राह । १२ कौशल्यं नैर्मल्यम् । १३ मीमांसक. । १४ तत्त्वोपप्लववादिमतमालम्ब्य जैन प्राह । १५ शुक्तिकाया रजतज्ञानं कार्यलिङ्गं कारणदुष्टता साधयतीति व्यभिचारो, यतो विज्ञानसामान्यं दुष्टतायामपि वर्त्तते । १६ मीमांसकः । १७ तत्त्वोपप्लववादी । १८ दूषणान्तरं तत्त्वोपप्लववादी ( शून्यवादी ) प्राह । १९ अङ्गीकृते । २० भो मीमासक चक्षुरादीनां गुणाश्रयतयैव । २१ मीमासकस्य । २२ मीमांसक । २३ दुरधिगमत्वात् । २४ कुत. ? यत । २५ तत्त्वोपप्लववादी । २६ चक्षुरादीनाम् । २७ अपौरुषेयत्वाददुष्टकारणं वेदवाक्यम् । ततस्तज्जनितवेदने प्रामाण्यनिश्चयो भविष्यतीत्यारेकायामाह । २८ मरीचिकाया जलज्ञाने । २९ तद्देशोपसर्पणं स्वकारणं बाधककारणमित्यर्थं । ३० नेदं जलमिति । ३१ मीमांसक । ३२ तत्त्वोपप्लववादी । ३३ तर्हीति शेप । ३४ मीमासक । ३५ तत्त्वोपप्लववादी । ३६ प्रमाणान्तरात् । ३७ मीमांसकाभिप्रायं निराकुर्वन्नाह तत्त्वोपप्लववादी । ३८ अन्यथा । ३९ न. अस्माकम् । ४० तद्देशोपसर्पणरूपबाधककारणस्य । ४१ समीपे । ४२ तत्त्वोपप्लववादी ।

संवेदनानन्तरमेव बाधानुत्पत्तिस्तत्प्रामाण्यं व्यवस्थापयेत् सर्वदा वा ? न तावत्प्रथमविकल्पः संभवति, मिथ्याज्ञानेपि क्वचिदनन्तरं बाधानुत्पत्तिदर्शनात् । सर्वदा बाधानुत्पत्तेः संविदि प्रामाण्यनिश्चयश्चेन्न[1], तस्या[2]ः प्रत्येतुमशक्यत्वात्, संवत्सरादिविकल्पेन[3]ापि बाधोत्पत्तिदर्शनात् । चिरतरकालं बाधस्यानुत्पत्तावपि स्वकारणवैकल्यात् कालान्तरेप्यसौ[4] नोत्पत्स्यते इति कुतो निश्चयनीयः[5] ? क्वचित्तु मिथ्याज्ञाने तज्जन्मन्यपि बाधा नोपजायते, स्वहेतु[6]वैकल्यात् । न चैतावता[7] तत्प्रामाण्यम्[8] । किञ्च क्वचिद्देशे स्थितस्य बाधानुत्पत्तिः प्रतिपत्तुः सर्वत्र[9] वार्थसंविदि प्रामाण्यहेतुः ? न तावत्प्रथमः पक्षः—कथंचि[10]न्मिथ्यावबोधस्यापि प्रमाणत्वो[11]पत्तेः । नापि द्वितीयः, कस्यचिद्दूरे स्थितस्य बाधानुत्पत्तावपि समीपे बाधोत्पत्तिप्रतीतेः सर्वत्र बाधास्थितस्य बाधानुत्पत्तिसन्देहात् । समीपे बाधानुत्पत्तावपि दूरे बाधोत्पत्तिसंभावनाच्च । किञ्च कस्यचिद्बाधानुत्पत्तिः सर्वस्य वा ? न तावत्कस्यचिद्बाधानुत्पत्तिः संविदि प्रामाण्यहेतुः, विपर्ययेपि भावात् । मरीचिकादौ तोयज्ञाने देशान्तरगमनादिना बाधानुत्पत्तावपि प्रमाणत्वाभावात् । सर्वस्य[12] बाधानुत्पत्तिरर्थसंवेदने प्रामाण्यकारणमिति चेन्न, तस्याः किञ्चिज्ज्ञैर्ज्ञातुमशक्तेः, शक्तौ वा तस्य सर्वज्ञत्वापत्तेरसर्वज्ञव्यवहाराभावप्रसङ्गात्[13] सर्वदेशकालपुरुषापेक्षया बाधकाभावनिर्णयस्यान्यथानुपपत्तेः । इति न बाधारहितत्वेन संवेदनस्य प्रामाण्यम् । नापि[14] प्रवृत्तिसामर्थ्येन, अनवस्था[15]प्रसक्तेः । प्रवृत्ति[16]सामर्थ्यं हि फलेना[17]भिसम्बन्धः सजातीय[18]ज्ञानोत्पत्तिर्वा ? यदि[20] फलेनाभिसम्बन्धः सोवगतोनवगतो वा संविदः प्रामाण्यं गमयेत् ? न तावदनवगतः, अतिप्रसङ्गात्[21] । सोवगतश्चेत् तत एव प्रमाणादन्यतो वा ? न तावत्तत एव, परस्पराश्रयानुषङ्गात् । सति फलेनाभिसम्बन्धस्यावगमे तस्य[22] प्रमाणत्वनिश्चयात् तस्मिंश्च सति तेन[23] तद[24]वगमात् । अन्यतः प्रमाणात्सोवगत इति चेत्तदन्यत्प्रमाणं कुतः प्रामाण्यव्यवस्थामास्तिघ्नुते[25]? प्रवृत्तिसामर्थ्यादिति चेत् तदपि प्रवृत्तिसामर्थ्यं यदि फलेनाभिसम्बन्धस्तदावगतोऽनवगतो वा संविदः प्रामाण्यं गमयेदित्यादि पुनरावर्त्तत इति चक्रक[26]प्रसङ्गः । एतेन[27] सजातीयज्ञानोत्पत्तिः प्रवृत्तिसामर्थ्यं संवित्प्रामाण्यस्यागमकं प्रतिपादितं, सजातीयज्ञानस्य प्रथमज्ञानात्प्रामाण्यनिश्चये परस्पराश्रयस्याविशेषात्, प्रमाणान्तरात्[28]तत्प्रामाण्यनिर्णयेनवस्थानुषङ्गात् । प्रवृत्ति[29]श्च प्रतिपत्तुः प्रमेयदेशोपसर्पणं प्रमेयस्य प्रतिपत्तौ स्यादप्रतिपत्तौ वा ? न तावदप्रतिपत्तौ, सर्वत्र[30] सर्वस्य प्रवृत्तिप्रसङ्गात् । तत्प्रतिपत्तौ[31] [32]चेन्निश्चितप्रामाण्यात् संवेदनात्तत्प्रतिपत्तिरनिश्चितप्रामाण्याद्वा ? प्रथमपक्षे परस्पराश्रयणमेव, सति प्रवर्त्तकस्य संवेदनस्य प्रामाण्यनिश्चये ततः प्रमेयप्रतिपत्तिः, सत्यां च प्रमेयप्रतिपत्तौ प्रवृत्तेः सामर्थ्यात्तत्प्रामाण्यनिश्चयात् ।

---

१ तत्त्वोपप्लववादी । २ बाधानुत्पत्ते । ३ भेदेन । ४ बाधानुत्पत्ति । ५ तत्त्वोपप्लववादी मीमासकं प्रत्याह—हे मीमासक त्वया कुत प्रमाणान्निश्चयनीयो द्वितीयोपि विकल्प. ? । ६ हेतु बाधककारणम् । ७ सर्वदा बाधानुत्पत्त्या । ८ अर्थवेदनस्य । ९ दूरे समीपे च स्थितस्य प्रतिपत्तुर्बाधानुत्पत्ति । १० पुंस । ११ बाधककारणवैकल्यात् । १२ द्वितीयविकल्प । १३ सर्वे सर्वज्ञा भवेयुरिति । १४ प्रवृत्तिसामर्थ्येन प्रमाणस्य प्रामाण्यमिति नैयायिको ब्रूते । तं प्रत्याह तत्त्वोपप्लववादी । १५ चक्रकप्रसङ्गदूषणं तदप्यनवस्था । १६ तत्त्वोपप्लववादी काणाद प्रति पृच्छति । १७ सामर्थ्यं पुनरस्या फलेनाभिसम्बन्ध इति पक्षिलभाष्यात् । १८ स्नानपानादिना । १९ पुंसः । २० तत्त्वोपप्लववादी । २१ पर्वतादौ धूमापरिज्ञानेप्यग्निनिश्चयप्रसङ्गात् । २२ विज्ञानस्य । २३ विज्ञानेन । २४ फलेनाभिसम्बन्धस्यावगमात् । २५ प्राप्नोति । २६ चक्रकं विवृणोति ।—तदपि प्रवृत्तिसामर्थ्यं यदि फलेनाभिसम्बन्धस्तदा सोवगतोनवगतो वा सविद प्रामाण्य गमयेत् ? 'यद्यनवगतस्तदातिप्रसङ्गः । सोवगतश्चेत्तत एव प्रमाणादन्यतो वा ? न तावत्तत एव परस्पराश्रयानुषङ्गात् । अन्यत प्रमाणात्सोवगत इति चेत्तदन्यत्प्रमाण कुत प्रामाण्यव्यवस्थामास्तिघ्नुते ? प्रवृत्तिसामर्थ्यादिति चेत्तदपि प्रवृत्तिसामर्थ्यं यदि फलेनाभिसम्बन्धस्तदावगतोनवगतो वेत्यादिप्रकारेण वारत्रयमावर्त्तने चक्रक दूषणं भवति । २७ प्रवृत्तिसामर्थ्यस्य फलेनाभिसम्बन्धस्य निराकरणद्वारेण । २८ तत्र सजातीयज्ञाने । २९ तत्त्वोपप्लववादी इत परं प्रवृत्तिं विचारयति । ३० प्रमेये । ३१ नैयायिक । ३२ तत्त्वोपप्लववादी ।

प्रमाणान्तरात्[1]तत्प्रतिपत्तौ प्रथमसंवेदनस्य वैयर्थ्यं, स एव च पर्यनुयोगो[2]नवस्थापत्तिकरः । द्वितीयपक्षे तु प्रामाण्यनिश्चयानर्थक्यं, स्वयमनिश्चितप्रामाण्यादेव संवेदनात्प्रमेयप्रतिपत्तिप्रवृत्तिसिद्धेः । संशयात्[4]प्रवृत्तिदर्शनाददोष इति चेत् किमर्थ[5]मिदानीं प्रमाणपरीक्षणम् ? लोक[6]वृत्तानुवादार्थ[7]मिति चेत्तर्हि[8] लोकवृत्तं[9] कुतो[10] निर्विवादं प्रसिद्धं यस्यानुवादार्थं प्रमाणशास्त्रप्रणयनम् ? न तावत्स्वत[11] एव, प्रमाणतोर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणमिति परतः प्रामाण्यानुवादविरोधात् । स्वतः[12] प्रसिद्धं हि[13] प्रमाणप्रमेयरूपं लोकवृत्तं तथैवानुवदितुं युक्तं[14] नान्यथा[15], अतिप्रसङ्गात् । यथा[16]नूद्यते[17]साभिस्तथैव लोकवृत्तं प्रसिद्धं न स्वत[18] इति चेन्न, स्वतः सर्वप्रमाणानां प्रामाण्यमित्यन्यै[19]र्लोकवृत्तस्यानुवादात् तथैव[20] प्रसिद्धिप्रसङ्गात् । स[21] मिथ्यानुवाद इति चेत् तवापि[22] मिथ्यानुवादः कुतो न भवेत् ? तथा[23] लोकवृत्तस्य प्रसिद्धत्वादिति चेत् परोप्येवं[24] ब्रूयात् । तथैव लोकवृत्तस्य प्रसिद्धत्वे तथानुवादस्य सत्यत्वं, तत्सत्यत्वाच्च तथैव लोकवृत्तस्य प्रसिद्धत्वमितीतरेतराश्रयत्वमप्युभयोः[25] समानम् । तथा[26] लोकवृत्तान्तरात्[27]तस्य[28] प्रसिद्धौ पुनरनवस्था दुर्निवारैव । इति न प्रवृत्तिसामर्थ्यात्संविदः प्रामाण्यनिश्चयानुवादो[29] युक्तः । ततो न प्रवृत्तिसामर्थ्येन प्रामाण्यं व्यवतिष्ठते । नाप्य[30]विसंवादित्वेन, तद[31]विसंवादस्यार्थक्रियास्थिति[32]लक्षणस्यानवगतस्य प्रामाण्यव्यवस्थाहेतुत्वायोगात् । तस्यावगतस्य तद्धेतुत्वे कुतस्तदवगमस्य प्रामाण्यम् ? संवादान्तरादिति चेन्न, तदवगमस्यापि संवादान्तरात्प्रामाण्यनिर्णयेनवस्थाप्रसङ्गात् । अथा[33]र्थक्रियास्थितिलक्षणाऽविसंवादज्ञानस्याभ्यासदशायां स्वतः प्रामाण्यसिद्धेरदोषः । कोय[34]मभ्यासो नाम ? भूयः संवेदने संवादानुभवनमिति चेत् तज्जातीये[35]ऽतज्जातीये[36] वा ? तत्रातज्जातीये[37] न तावदेकत्र[38] संवेदने भूयः संवादानुभवनं संभवति क्षणिक[39]वादिनः[40] । संतानापेक्षया संभवतीति चेन्न, संतानस्यावस्तुत्वादपेक्षानुपपत्तेः । वस्तुत्वे वा तस्यापि क्षणिकत्वसिद्धेः कुतस्तदपेक्षया सोभ्यासः ? स[41]न्तानस्याक्षणिकत्वे वा यत्सत्तत्सर्वं क्षणिकमिति न सिद्ध्येत् । तज्जातीये भूयः संवा[43]दानुभवनमिति चेन्न[44], जाति[45]निराकरणवादिन[46]ः क्वचित्तज्जातीयत्वानुपपत्तेः । अन्या[48]पोहलक्षणया जात्या कं[49]चित्तज्जातीयत्वमुपपन्नमेवेति चेन्न[50], अन्यापोहस्यावस्तुरूपत्वात्, तस्य वस्तुरूपत्वे वा जाति[51]त्वविरोधात् स्वलक्षणस्यासाधारणस्य[52] वस्तुत्वोपगमात्[53] । तदेवं[54] सामान्यतः प्रमाणलक्षणानुपपत्तौ विशेषेणापि प्रत्यक्षादिप्रमाणानुपपत्तेर्न प्रमाणतत्त्वं विचार्यमाणं व्यवतिष्ठते । तदव्यवस्थितौ कुतः प्रमेयतत्त्वव्यवस्थेति विचारात्तत्त्वोपप्लवव्यवस्थितिः । इत्येतदपि [55]सर्वमसारं, तत्त्वोपप्लवस्यापि विचार्यमाणस्यैवं[56]-

---

१ भो नैयायिक । २ प्रमाणान्तरस्यापि प्रामाण्यप्रवृत्तिसामर्थ्येन प्रवृत्तिश्च प्रतिपत्तुरित्यादिग्रन्थावतारः । ३ अनिश्चितप्रामाण्यादिति । ४ नैयायिकः । ५ तत्त्वोपप्लववादी । ६ नैयायिक । ७ सार्थकम् । ८ तत्त्वोपप्लववादी । ९ प्रमाणप्रमेयरूपो व्यवहारो लोकवृत्तम् । १० स्वतो वा परतो वा । ११ स्वरूपतः । १२ तत्त्वोपप्लववादी । १३ परत प्रामाण्यानुवादविरोधं विवृणोति तत्त्वोपप्लववादी । १४ भवदीये प्रमाणशास्त्रे । १५ परत प्रकारेण । १६ नैयायिक. । १७ परतः प्रकारेण । १८ [" न स्वत " इति भाति ] । १९ मीमासकैः । २० सर्वप्रमाणानां स्वतः प्रामाण्यमिति प्रसिद्धिप्रसङ्गात् । २१ स्वतोनुवादः । २२ नैयायिकस्य । २३ नैयायिकः । परतः प्रामाण्यप्रकारेण । २४ मीमासक. । २५ नैयायिकमीमासकयो. । २६ परतः प्रामाण्यप्रकारेण । (द्वितीयविकल्प ) । २७ अन्यस्माल्लोकवृत्तात्तस्य प्रकृतलोकवृत्तस्य । २८ अनुवादस्य । २९ अनुकथनम् । ३० मीमांसकनैयायिकयोर्मतस्य प्रमाणतत्त्वं विचार्येदानीं सौगतप्रमाणतत्त्व विचारयन्ति ग्रन्थकृतः । ३१ यसः (कर्मधारय.) । ३२ अर्थक्रियासद्भावलक्षणस्य । ३३ बौद्ध । ३४ तत्त्वोपप्लववादी । ३५ सत्यरूपे सामान्यरूपे । ३६ विशेषरूपे । ३७ सवेदने । ३८ स्वलक्षणे । ३९ उत्पन्नविनष्टत्वात् । ४० बौद्धः । ४१ हे बौद्ध । ४२ बौद्ध. । सवेदने । ४३ सत्यरूपस्य संवादस्य । ४४ तत्त्वोपप्लववादी । ४५ सामान्यनिराकरणवादिन. । ४६ अन्वयरूपद्रव्यनिषेधवादिनस्तव सौगतस्य क्वचिद्वस्तुनि अन्वयरूपता नोपपद्यते । ४७ घटत्वपटत्वादिरूपेण । ४८ बौद्ध । ४९ स्थिरस्थूलवस्तुनि । ५० तत्त्वोपप्लववादी । ५१ ( जातिविरोधादिति पाठान्तरम् ) । ५२ विशेषस्य । ५३ तव सौगतस्य मते । ५४ पूर्वोक्तविकल्पचतुष्टयप्रकारेण । ५५ जैनो वक्ति । ५६ वक्ष्यमाणप्रकारेण ।

व्यवस्थितेरनुपप्लुत[1]तत्त्वसिद्धिनिराकरणायोगात्। अथ[3] "तत्त्वोपप्लवः[4] सर्वथा न विचार्यः, तस्योपप्लुतत्वादेव[5] विचारासहत्वादन्यथानुपप्लुततत्त्वसिद्धिप्रसङ्गात्[6]। केवलं[7] तत्त्ववादिभिरभ्युपगतस्य प्रमाणप्रमेयतत्त्वस्य विचाराक्षमत्त्वात्तत्त्वोपप्लवसिद्धिः" इति मतं[2] तदपि[8] फल्गुप्रायं, यथातत्त्वम्[9]विचारितत्वात्[10]। न ह्यदुष्टकारकसन्दोहोत्पाद्यत्वेन संवेदनस्य प्रमाणत्वं स्याद्वादिभिर्व्यवस्थाप्यते, बाधारहितत्वमात्रेण वा। नापि प्रवृत्तिसामर्थ्येनान्यथा[11] वा, प्रतिपादितदोषोपनिपातात्। किं तर्हि? सुनिश्चि[12]तासम्भवद्बाधकत्वेन। न[13] चेदं स्वार्थव्यवसायात्मनो ज्ञानस्य दुरवबोधम्[14]। सकलदेशकालपुरुषापेक्षया सुष्ठु निश्चितमसम्भवद्बाधकत्वं हि प्रमाणस्याभ्यस्तविषये स्वत एवावसीयते, स्वरूपवत्। अनभ्यस्तविषये तु परत इति नानवस्थेतरेतराश्रयदोषोपनिपातः। स्वार्थव्यवसायात्मकत्व[15]मेव हि सुनिश्चितासम्भवद्बाधकत्वम्। तच्चाभ्यासदशायां न परतः प्रमाणात्साध्यते, येनानवस्था स्यात्, परस्पराश्रयो वा, तस्य स्वत एव सिद्धत्वात्। तथानभ्यासदशायामपि परतः[16] स्वयंसिद्धप्रामाण्याद्वेदनात् पूर्वस्य तथाभाव[17]सिद्धेः कुतोनवस्थादिदोषावकाशः? क्वचिद्[18]अभ्यासा[19]नभ्यासौ तु प्रतिपत्तुरदृष्ट[20]विशेषवशाद्देशकालादिविशेषवशाच्च भवन्तौ सम्प्रतीता[21]वेव, यथा[22]वरणक्षयोपशममात्मनः सकृदसकृद्वा स्वार्थसंवेदनेऽभ्यासोपपत्तेः। स्वार्थ[23]व्यवसाया[24]वरणोदये वाऽसंवेदने सकृत्संवेदने वा संवेदनपौनःपुन्येपि वाऽनभ्यासघटनात्। पूर्वा[25]पर स्वभावत्यागोपादानान्वितस्वभावस्थितिलक्षणत्वेनात्मनः परिणा[26]मिनोभ्यासानभ्यासाविरोधात्। सर्वथा क्षणिकस्य नित्यस्य वा प्रतिपत्तु[27]स्तदनुपपत्तेरभीष्टत्वात्[28]। नन्विदं[29] सुनिश्चितासम्भवद्बाधकत्वं संवेदनस्य कथमसर्वज्ञो ज्ञातुं समर्थ इति चेत् सर्वत्र[30] सर्वदा सर्वस्य सर्वं संवेदनमसुनिश्चितासम्भवद्बाधकमित्यप्यसकलज्ञः कथं जानीयात्? तत[31] एव संशयोस्त्विति चेत् सोपि[32] तथाभावेतरविषयः सर्वस्य सर्वदा सर्वत्रेति कथमसर्वज्ञः[33] शक्तोवबोद्धुम्? स्वसंवेदने तथा[34]वबोधात्सर्वत्र तथावबोध इति चेत् तर्ह्यनुमान[35]मायातं, विवादाध्यासितं संवेदनं सुनिश्चितासम्भवद्बाधकत्वेतराभ्यां सन्दिग्धं, संवेदनत्वादसत्संवेदनवदिति। तच्च[36] यदि[37] सुनिश्चितासंभवद्बाधकं सिद्धं तदा तेनैव साधनस्य व्यभिचारः। अथ[38] न तथा सिद्धं, कथं[39] साध्यसिद्धिनिबन्धनम्? अतिप्रसङ्गात्। स्वसंवेदनं च प्रतिपत्तुः[40] किञ्चित् क्वचित् कदाचित् सुनिश्चितासम्भवद्बाधकं किञ्चित्तद्वि[41]परीतं प्रसिद्धं न वा?

---

१ उपप्लुतो बाधित। २ तत्त्वोपप्लववादिन। ३ परः। ४ शून्यवाद.। ५ अभावरूपत्वादेव। ६ भो जैन। ७ तथापि विचारासहत्वे तत्त्वोपप्लवसिद्धि. कथमिति जैनेनोक्ते स आह। ८ आह जैनः। ९ तत्त्वमनतिक्रम्येत्युक्ते किं तत्त्वमुल्लङ्घ्य विचारितमित्यर्थः। १० अविचारितत्वमग्रे दर्शयति। ११ अविसंवादित्वादिना। १२ प्रमाणस्य प्रामाण्यं स्याद्वादिभिर्व्यवस्थाप्यते इति शेष.। १३ जैन पराभिप्रायं निराकरोति। १४ किन्तु सुघटमेवेत्यर्थ। १५ व्यवसायात्मकत्वपदेन संशयविपर्ययानध्यवसायव्यवच्छेदः। १६ अन्यप्रमाणात्। १७ प्रामाण्यसिद्धे। १८ विषये। १९ ज्ञाने भूयः संवादानुभवनमभ्यासस्तदभावोनभ्यास.। दृष्टादृष्टनिमित्तानां वैचित्र्यादिह देहिनाम्। जायते क्वचिदभ्यासोनभ्यासो वा कथञ्चन। २० अदृष्ट पुण्यादिर्ज्ञानावरणादिश्च। २१ बहुधानुभवविषयत्वं नीतावित्यर्थ। २२ क्रियाविशेषणम्। २३ पूर्वस्यैव हेत्वन्तरम्। २४ व्यवसायो ज्ञानं, तस्य। २५ ननु भो जैन नित्यस्यात्मनोभ्यासानभ्यासौ कथं स्यातामित्युक्ते जैन प्राह। २६ नित्यानित्यरूपस्य। २७ आत्मन। २८ जैनस्य (अनभ्यासात्मकज्ञानपरिहारेणाभ्यासात्मकज्ञानप्राप्तिविरोधात् क्षणिकस्य नित्यस्य वा)। २९ तत्त्वोपप्लववादी। ३० जैन। ३१ (तत्त्वोपप्लववादी) उभयपक्षासिद्धे.। ३२ जैन आह। ३३ तत्त्वोपप्लववाद्यादि। ३४ सुनिश्चितासम्भवद्बाधकत्वेतराभ्यां सन्दिग्धत्वप्रकारेण। ३५ जैन प्राह। ३६ जैन.। ३७ संवेदनसाधनं सिद्धमसिद्धं वा? यदि सिद्धं तदा तेनैव सन्दिग्धं न साध्यते अत साधनस्य व्यभिचार.। अथ न सिद्धं तदा स्वयमसिद्धं साधनकारणम्। यद्यसिद्धमपि साधनं साध्यं साधयति तदातिप्रसङ्ग इति भाव.। ३८ असुनिश्चितासम्भवद्बाधकं चेदित्यर्थ.। ३९ तर्हीति शेष.। ४० संवेदनम्। ४१ असुनिश्चितासंभवद्बाधकम्।

यदि न प्रसिद्धं, कथं सन्देहः ? क्वचिदप्रसिद्धोभयविशेषस्य तत्सामान्यदर्शनेनैव तत्परामर्शिप्रत्ययस्य सन्देहस्यासम्भवाद्भूभवनसंवर्द्धितोत्थितमात्रस्य तादृशः स्थाणुपुरुषविषयसन्देहवत्। यदि पुनस्तदुभयं प्रसिद्धं तदा स्वतः परतो वा ? अभ्यासदशायां स्वतोनभ्यासदशायां परत एवेति चेत् सिद्धमकलङ्कशासनं, सर्वस्य संवेदनस्य स्यात्स्वतः स्यात्परतः प्रामाण्याप्रामाण्ययोर्व्यवस्थानात्, अन्यथा क्वचिद्व्यवस्थातुमशक्तेः। एतेन तत्त्वोपप्लववादिनः किमदुष्टकारकसन्दोहोत्पाद्यत्वेन बाधकानुत्पत्त्या प्रवृत्तिसामर्थ्येनान्यथा वेत्यादिविकल्पसन्दोहहेतुकप्रश्नानुपपत्तिः प्रकाशिता, स्वयमन्यत्रान्यदा कथञ्चिदप्रतिपन्नतद्विकल्पस्य पुनः क्वचित्तत्परामर्शिसंशयप्रत्ययायोगात् । क्वचित्कदाचिददुष्टकारकसन्दोहोत्पाद्यत्वादिविशेषप्रतिपत्तौ तु कुतस्तत्त्वोपप्लवसिद्धिः ? पराभ्युपगमात्तत्प्रतिपत्तेरदोष इति चेत् स तर्हि पराभ्युपगमो यदि प्रमाणात्प्रतिपन्नः स्वयं तदा कथं प्रमाणप्रमेयतत्त्वोपप्लवः ? पराभ्युपगमान्तरात्तत्प्रतिपत्तौ तदपि पराभ्युपगमान्तरमन्यस्मात् पराभ्युपगमान्तरात्प्रतिपत्तव्यमित्यनवस्था। पराभ्युपगमं च स्वयं प्रतीयन्नेव न प्रत्येमीति ब्रुवाणः कथं स्वस्थः ? स्वयमप्रतीयंस्तु पराभ्युपगमं ततः किञ्चित्प्रत्येतीति दुरवबोधं—सोयं किञ्चिदपि स्वयं निर्णीतमनाश्रयन् क्वचिद्विचारणाया व्याप्रियत इति न बुध्यामहे, किञ्चिन्निर्णीतमाश्रित्य विचारस्यानिर्णीतेर्थे प्रवृत्तेः। सर्वविप्रतिपत्तौ तु क्वचिद्विचारणानवतारात् । तदुक्तं "किञ्चिन्निर्णीतमाश्रित्य विचारोन्यत्र वर्त्तते। सर्वविप्रतिपत्तौ तु क्वचिन्नास्ति विचारणा" इति। ततः सूक्तं, तत्त्वोपप्लववादिनः स्वयमेकेन प्रमाणेन स्वप्रसिद्धेन परप्रसिद्धेन वा विचारोत्तरकालमपि प्रमाणतत्त्वं प्रमेयतत्त्वं चोपप्लुतं संविदन्त एवात्मानं निरस्यन्तीति व्याहतिः।

तदेवं कारिकाव्याख्यानमनवद्यमवतिष्ठते । "तीर्थच्छेदसम्प्रदायानां तथा सर्वमवगतमिच्छतामाप्तता नास्ति, परस्परविरुद्धाभिधानात्, एकानेकप्रमाणवादिनां स्वप्रमाण्याव्यावृत्तेरिति । एकप्रमाणवादिनो हि संवेदनाद्वैतावलम्बिनश्चित्राद्वैताश्रयिणः परब्रह्मशब्दाद्वैतभाषिणश्च सुगतादयो यथा तीर्थच्छेदसम्प्रदायास्तथा प्रत्यक्षमेकमेव प्रमाणमिति वदन्तोपि चार्वाकाः, परमागमनिराकरणसमर्थत्वात्। यथा च कपिलादयोनेकप्रमाणवादिनस्तीर्थच्छेदसम्प्रदायास्तथा तत्त्वोपप्लववादिनोपि, तैरेकस्यापि प्रमाणस्यानभिधानात्, नैकैप्रमाणवादिनोऽनेकप्रमाणवादिन इति व्याख्यानात्। तथा सर्वमाप्तागमपदार्थजातमवगतमिच्छन्तोप्यनेकप्रमाणवादिनो वैनयिकास्तीर्थच्छेदसम्प्रदायाः। तेषामशेषाणामाप्तता नास्ति, परस्परविरुद्धयोरर्थयोरभिधानात्।

तत्र संवेदनाद्वैतानुसारिणः स्वपक्षसाधनस्य परपक्षदूषणस्य वा संविदद्वैतविरुद्धस्याभिधानं, तथा द्वैतप्रसिद्धेः। संवृत्त्या तदुपगमे न परमार्थतः संविदद्वैतसिद्धिः, अतिप्रसङ्गात्। एतेन चित्राद्वैतपर-

१ क्वचिद्वस्तुनि। अज्ञातस्थाणुपुरुषत्वादे । २ तत्सामान्यादर्शिन इव इति पाठान्तरम्। सामान्यादर्शिनो विशेषोपलम्भे सति सन्देहस्यानुपपत्तिर्यथा तथा प्रकृतेपि। अथात्र दृष्टान्तोऽप्रसिद्ध इति न मन्तव्यं, भूभवनेत्यादिलौकिकोदाहरणप्रदर्शनात्। ३ तादृशो नरस्य यथा तत्र सन्देहो नोदेति। ४ तत्त्वोपप्लववादी। ५ स्थाणुपुरुषत्वे। ६ जैन । ७ कथञ्चित्तु विवक्षितप्रकारेणाभ्यासदशापेक्षयेत्यर्थं । ८ केवल स्वत एव परत एव वेति स्वीकारे। ९ अनधिगतवस्तुविकल्पस्य पुरुषस्य क्वचित्प्रदेशे वस्तुविचारे सशयो न घटते इति। १० तत्त्वोपप्लववादिनः। ११ तत्त्वोपप्लववादी प्राह। १२ जैनः। १३ तत्त्वोपप्लववादिना। १४ अप्रतिपत्तिविषयीकुर्वन्। १५ पराभ्युपगमात्। १६ वस्तुमात्रम्। १७ तत्त्वोपप्लववादी। १८ शून्यवादिन. स्वप्रसिद्धेन विनान्यत्र विचार· सन्देहश्च न प्राप्नोतीत्यर्थः। १९ अनिर्णीतेर्थे। २० वक्ष्यमाणप्रकारेण। २१ सर्वज्ञसामान्ये विप्रतिपत्तिमतां मीमासकचार्वाकतत्त्वोपप्लववादिनामात्मत्वसद्भावं प्रसाध्येदानीं तद्विशेषविप्रतिपत्तिमता सौगतादीनां निर्वचनं साधयति तीर्थेत्यादिना। २२ समयः सम्प्रदायः। २३ तथापि तत्त्वोपप्लववादिनामनेकप्रमाणत्वं कथमित्यत आह नैकेति। प्रसज्यप्रतिषेधोत्र। २४ समूहम्। २५। अभ्युपगतम्। स्वीकृतमित्यर्थ । २६ सत्यता सवादकता। २७ तथा सति। २८ स्वपक्षसाधने परपक्षदूषणे वा सति द्वैतप्रसङ्गं निराकुर्वन् यदि कल्पनया द्वैतमङ्गीकुर्यात्तदा संविदद्वैतसिद्धिरपि कल्पनयैव सिध्येन्न निश्चयेनेत्यर्थ ।

ब्रह्माद्यवलम्बिनां परस्परविरुद्धाभिधानं प्रतिवर्णितम् । प्रत्यक्षमेकमेव प्रमाणमिति वदतां[१] प्रमाणेतर[२]सामान्यव्यवस्थापनस्य संवादेतर[३]स्वभावलिङ्गजानुमाननिबन्धनस्य परचित्तावबोधस्य च व्यापारादिकार्यलिङ्गोत्थानुमाननिमित्तस्य परलोकादिप्रतिषेधस्य चानुपलब्धिलिङ्गोद्भूतानुमानहेतुकस्य प्रत्यक्षैकप्रमाणविरुद्धस्याभिधानं प्रतिपत्तव्यं, तथा[४] प्रमाणान्तरसिद्धेः[५] । परोपगमात्तत्स्वीकरणे स्वयं प्रमाणेतरसामान्यादिव्यवस्थानुपपत्तेः कुतः प्रत्यक्षैकप्रमाणवादः,[६] अतिप्रसङ्गात्[७] । तथानेकप्रमाणवादिनां कपिल[८]कणभक्षा[९]क्षपाद[१०]जैमिनि[११]मतानुसारिणां स्वोपगतप्रमाणसंख्यानियमविरुद्धस्य सामस्त्येन साध्यसाधनसम्बन्धज्ञानस्या[१२]भिधानं बोद्धव्य, प्रमाणान्तरस्योहस्य सिद्धेः । यावान्कश्चिद्धूमः स सर्वोप्यग्निजन्माऽनग्निजन्मा वा न भवतीति प्रतिपत्तौ न प्रत्यक्षस्य सामर्थ्यं, तस्य[१३] सन्निहितविषयप्रतिपत्तिफलत्वात् । नाप्यनुमानस्य[१४], अनवस्थानात्, तद्व्याप्तेरप्यपरानुमानगम्यत्वात् । इति वैशेषिकस्योहः प्रमाणान्तरम[१५]निच्छतोप्यायातम् । एतेन[१६] सौगतस्य प्रमाणान्तरमापादितम्[१७] । तथागमस्यापि व्याप्तिग्रहणेऽनधिकारात्कापिलस्योहः प्रमाणं नैयायिकस्य च तत्रो[१८]पमानस्याप्यसमर्थत्वात् प्राभाकरस्य[१९] चार्थापत्तेरप्यनुमानवत्तत्राव्यापाराद्भट्टमतानुसारिणश्चाभावस्यापि तत्रानधिकृतत्वात् । तथैकमपि प्रमाणमनभ्युपगच्छतां तत्त्वोपप्लवावलम्बिनामनेकप्रमाणवादिना तत्त्वोपप्लवोपगमस्य प्रमाणसिद्ध्यविनाभाविनः सकलतत्त्वोपप्लवविरुद्धस्या[२०]भिधानमवगन्तव्यम् । वैनयिकानां तु सर्वमवगतमिच्छतां परस्परविरुद्धाभिधानं विरुद्धसवेदनं प्रसिद्धमेव, सुगत[२१]मतोपगमे कपिलादिमतस्य विरोधात् । ततः सिद्धो हेतुः परस्परविरोधत इति तीर्थकृत्समयानां सर्वेषामाप्तत्वाऽभावं साधयति । यदि[२२] पुनः संविदद्वैतादीनां[२३] स्वतः[२४] प्रमितिसिद्धेः प्रमाणान्तरतः स्वपरपक्षसाधनदूषणवचनाभावान्न परस्परविरुद्धाभिधानं स्वसंवेदनैकप्रमाणवादिनां, नापी[२५]न्द्रियजप्रत्यक्षैकप्रमाणवादिनां, प्रत्यक्षप्रामाण्यस्य प्रत्यक्षत एव सिद्धेः, अनुमानादिप्रामाण्याभावस्यापि तत एव प्रसिद्धेः प्रमाणान्तराप्रसङ्गात्, तथानेकप्रमाणवादिनामपि स्वोपगतप्रमाणसंख्यानियमस्य स्वत एव सिद्धेः प्रमाणान्तरस्योहस्याप्रसङ्गान्न विरुद्धाभिधानं संभवतीति मतं तदापि[२६] न तेषामाप्ततास्ति, स्वप्रमाव्यावृत्तेरन्यथा[२७]नैकान्तिकत्वात् । न हि संविदद्वैतेन्यत्र[२८] वा स्वस्य स्वेनैव प्रमा संभवति, निरंशत्वात्[२९]प्रमाणप्रमेयस्वभावव्यावृत्तौ प्रमाया व्यावृत्तेस्तद[३०]व्यावृत्तौ प्रमात्रादिस्वभावाव्यावृत्तेरैकान्तिकत्वाभावात्[३१] प्रमात्राद्यनेकस्वभावस्यैकसंवेदनस्यानेकान्तात्मनोनुमननात्[३२], संवित्

---

१ चार्वाकाणाम् । २ इतरत्=असत्यम् । ३ इतर =विसवाद । ४ तथा सति । ५ "प्रमाणेतरसामान्यस्थितेरन्यधियो गते । प्रमाणान्तरसद्भाव प्रतिषेधाच्च कस्यचित्" इति वचनात् । ६ अन्यथा । ७ अनुमानसद्भावेप्येकप्रमाणवादिता चार्वाकस्य यदि स्यात्तदानेकप्रमाणवादिना वैशेषिकादीनामप्येकप्रमाणवादिताप्रसङ्गात् । ८ कपिल =साङ्ख्य । ९ कणभक्षो=वैशेषिक । १० अक्षपादो=नैयायिक । ११ जैमिनि =प्रभाकरभट्ट । १२ ऊहाख्यस्य । १३ प्रत्यक्षस्य । १४ ऊहपरिज्ञाने सामर्थ्यम । १५ अनिष्टम् । १६ वैशेषिकस्य प्रमाणान्तरप्रतिपादनेन । १७ सौगतेनापि प्रत्यक्षानुमानाख्यप्रमाणद्वयस्याभ्युपगमात् । १८ ऊहग्रहणे । १९ प्रत्यक्षमनुमानं च शाब्दं चोपमया सह । अर्थापत्तिरभावश्च षट् प्रमाणानि जैमिने. ॥ जैमिने षट् प्रमाणानि चत्वारि न्यायवादिन । साङ्ख्यस्य त्रीणि वाच्यानि द्वे वैशेपिकबौद्धयो ॥ श्लोकानुक्तमपि प्रभाकरस्य पञ्च प्रमाणानीति ज्ञेयम् । २० यतस्तत्त्वोपप्लवग्राहि प्रमाणं सत्यभूतमायातं तत्त्वोपप्लवरूप प्रमेयश्च तत. सकलतत्त्वोपप्लवकथनस्य विरोध । २१ कुत ? । २२ सवेदनाद्वैतादयो वदन्ति स्याद्वादिन प्रति ।—हे स्याद्वादिन् यत्त्वयास्माकं परस्परविरुद्धाभिधानं प्रतिपादितं स्वस्वोपगतप्रमाणसख्यानियमविरोधश्च प्रतिपादितस्तद्द्वयमपि नास्त्यस्माकमिति । अस्योत्तरमाह स्याद्वादी 'तथापि तेषामाप्तता नास्ति, स्वप्रमाणफलज्ञानलक्षणाया प्रमाया अभावात्' इति । २३ चतुर्णामद्वैतवादिनाम् । २४ आत्मन सवेदनात् स्वस्मात्प्रमिति प्रमाणस्य साध्यं फलं सिद्ध्यतीत्यर्थः । २५ परस्परविरुद्धाभिधानमिति सम्बन्धो योजनीय । २६ तथापीत्यर्थ । २७ अन्यथा प्रमाऽभावाभावे अनैकान्तिकत्वमायाति । २८ अद्वैतान्तरे । २९ अनेकधर्मरहितत्वात् ( बौद्धमतापेक्षया ) । ३० तस्या प्रमाया भावे सति । ३१ स्याद्वादसिद्धेरित्यर्थ । ३२ कुत ? यतः ।

स्वयं स्वेन स्वं संवेदयत इति प्रतीतेः । नापीन्द्रियजप्रत्यक्षे स्वप्रमा घटते, भूत[1]वादिभिस्तस्यास्वसंविदितत्त्वोपगमात् । इति सिद्धा तत्र[2] स्वप्रमाया व्यावृत्तिः । ततो न प्रत्यक्षत एव प्रमाणेतरसामान्यस्थित्यादिः । तदव्यावृत्तौ वा स्वार्थव्यवसायात्मकत्वसिद्धेः स्याद्वादाश्रयणादैकान्तिकत्वाभावादनैकान्तिकत्वम् । एते[4]नानेकप्रमाणवादिनामनेकस्मिन् प्रमाणे स्वप्रमाव्यावृत्तिर्व्याख्याता । तदव्यावृत्तौ वानैकान्तिकत्वप्रसक्तिः, अनेकशक्त्या[5]त्मकस्वार्थव्यवसायात्म[6]कानेकप्रमाणसिद्धेः । तत्त्वोपप्लववादिनां तु तत्त्वोपप्लवे स्वप्रमाया व्यावृत्तिः सिद्धैव । तदव्यावृत्तौ तत्त्वोपप्लवैकान्तिकत्वाभावप्रसक्ते[7]श्च । ततो नैतेषामाप्तता । किञ्च सर्व[8]प्रमाणविनिवृत्तेरि[9]तरथा संप्रतिपत्तेः । ये[10] तावदेकं नित्यं[11] प्रमाणं स्वभावभेदा[12]भावाद्वदन्ति तेषां सर्वप्रमाणविनिवृत्तिः ये[13]प्यनेकमनित्यं प्रतिक्षणं स्वभावभेदादाचक्षते तेषा[14]मपि, प्रत्यक्षादिप्रमाणानां नित्यैकान्ता[15]च्चे[16]तरेणै[17]व प्रकारेण कथञ्चिन्नित्यानित्यात्मकत्वेन संप्रतिपत्तेः । ततो नैतेषां नित्यानित्यैकान्तप्रमाणवादिनां तीर्थकृत्समयानामाप्तता । किञ्च वा[18]गक्षबुद्धीच्छापुरुषत्वा[19]दिकं कश्चि[20]दनाविलज्ञानं निराकरोति न पुनस्तत्प्रतिषेधवा[21]दिषु तथेति परम[22]गहनमेतत् । तथा हि । तीर्थच्छेदसम्प्रदायास्तथैकान्तवादिनो नाऽनाविल[23]ज्ञाना अविशिष्टवागक्षबुद्धीच्छादिमत्त्वादविशिष्टपुरुषत्वादेर्वा रथ्यापुरुषवत् । इति नैतेषामाप्तता । तत्[24]प्रतिषेधवादिनां पुनः स्याद्वादिनां नाप्तः कश्चिदविशिष्टवागादिमानविशिष्टपुरुषो वा, तस्य युक्तिशास्त्राविरोधिवाक्त्वे[25]नाभ्युपगतत्वात्, करण[26]क्रम[27]व्यवधानाद्यतिवर्त्तिबुद्धित्वात्, इच्छा[28]रहितत्वाद्विशुद्ध[29]पुरुषातिशयत्वादिति । यथा[30] वागादिकं निर्दोषज्ञाननिराकरणसमर्थं न तथा स्याद्वादन्यायवेदिभिरभिष्टूयमाने भगवतीति परमगहनमेतत्, अयुक्ति[31]शास्त्रविदामगोचरत्वादकल[32]ङ्कधिषणाधिगम्यत्वात् । इत्थं सिद्धं सुनिश्चितासम्भवद्बाधकप्रमाणत्वम् । तेन[33] कः परमात्मा चिदेव लब्ध्यु[34]पयोगसंस्काराणामावरणनिबन्धना[35]नामत्यये भवभृतां[36] प्रभुः । सकलस्याद्वादन्यायविद्विषा[37]माप्तप्रतिक्षेपप्रकारेण हि स्याद्वादिन एवाप्तस्याप्रतिक्षेपार्हत्वेन सुनिश्चितासम्भवद्बाधकप्रमाणत्वं सिध्यति । तेनैवं कारिकायास्तुरीयपादो व्याख्यायते । कः परमात्मा, पराऽऽत्यन्तिकी मा लक्ष्मीर्यस्येति विग्रहात् । चिदेव[38] ज्ञ[39] एव न पुनः कथञ्चिदप्यज्ञः, चिदिति शब्दस्य मुख्यवृत्त्याश्रयणात् कथञ्चिदचित्यपि[40] चिच्छब्दस्य प्रवृत्तौ गौणत्वप्रसङ्गात् । ननु[41] च 'परमात्मा साक्षाद्वस्तु जानन्नि-

---

१ चार्वाकै । २ प्रत्यक्षे । ३ बौद्धापेक्षया निरंशत्वात् प्रमात्रादिव्यावृत्तौ प्रमाया व्यावृत्तेरित्याद्युक्तप्रकारेण । अन्येषामपेक्षया अस्वसंविदितत्वोपगमादित्याद्युक्तप्रकारेण च । ४ एताः शक्तयः कारणरूपा । ५ एतत्कार्यरूपम् । ६ स्वप्रमाया. सद्भावे स्वप्रमाया एव प्रमाणप्रमेयरूपत्वात् । ७ पूर्वं तु परस्य प्रमाणमभ्युपगम्य दूषणमुक्तमिदानीं तदपि निराकरोति । ८ सूत्रे परस्परविरोधत इत्येतदुपलक्षणम् । तेन सर्वप्रमाणविनिवृत्तेरित्यादेरपि ग्रहणम् । ९ कथञ्चिन्नित्यानित्यात्मकत्वेन । १० नित्यवादिन साख्या ब्रह्माद्वैतवादिनश्च । ११ ब्रह्मादेरुपादानकारणस्य नित्यत्वे एकत्वे चोपादेयस्यापि नित्यत्वमेकत्वं चेति भावः । १२ युगपत्क्रमेण वा । १३ अनित्यवादिन सौगता. । १४ सर्वप्रमाणविनिवृत्तिरिति सम्बन्धः । १५ सकाशात् । १६ चकारेणानित्यैकान्तग्रहणम् । १७ कथञ्चित्प्रकारेण । १८ मीमासकेनाभिधीयमानस्य न क्वचिदनाविलज्ञानमिति दूषणस्य परिहारद्वारेणैव परेषा सुगतादीनामाप्तता नास्ति परं त्वस्माकं त्वस्तीति वक्तुकामा वागक्षेत्याद्याहुराचार्याः । १९ कर्तृपदम् । २० सुगतकपिलादावेकान्तवादिषु । २१ जैनेषु । २२ दुरवबोधम् । २३ निरावरणज्ञाना. । २४ अविशिष्टवागादिप्रतिषेधवादिनाम् । २५ अविशिष्टवाक्त्वं निराकृतमनेन । २६ अक्षबुद्धिनिराकरणमनेन । २७ आदिना देशकालद्रव्यादिव्यवधानग्रह । २८ इच्छावत्त्वं निराकृतमनेन । २९ अविशिष्टपुरुषत्वमनेन निराकृतम् । ३० सुगतादिषु । ३१ युक्तिर्न्याय । शास्त्रमागम । ३२ निष्कलङ्कबुद्धि, पक्षेऽकलङ्कदेवाना बुद्धि । ३३ येन कारणेन तीर्थच्छेदसम्प्रदायाना सर्वेषामाप्तता नास्ति तेन कारणेन । ३४ इन्द्रियानिन्द्रियान्यतमावरणक्षयोपशमो लब्धि । अर्थग्रहणव्यापार उपयोग । तयो सस्कारास्तेषाम् । ×३५ आवरण निबन्धनं येषा ते तेषाम् । ३६ भवं यन्तीति क्विपि भवेतो भवभृतस्तेषां गुरु प्रभुर्भवेद्गुरुरिति कारिकापदस्य व्युत्पादनम् । ३७ सुगतादीनाम् । ३८ चेतयते इति चित् । ३९ सर्वज्ञ । ४० प्रतिबिम्बादौ । ४१ मीमासकः ।

× ज्ञानावरणक्षय लब्धिः इत्येव श्रेयान्

न्द्रियसंस्कारानुरोधत एव जानीयान्नान्यथा तं[1]द्वेदनस्य प्रत्यक्षत्वविरोधात् । न चेन्द्रियसंस्कारा. सकृत्सर्वार्थेषु ज्ञानमुपजनयितुमलं, सम्बद्धवर्त्तमानार्थविषयत्वात् " सम्बद्ध वर्त्तमान च गृह्यते चक्षुरादिभिः " इति वचनात् । ततो न ज्ञ एव, भाव्यतीतासम्बद्धार्थज्ञानाभावादज्ञत्वस्यापि भावात्' इति न मन्तें[2]व्यं, लब्ध्युपयोगसंस्काराणामत्यये इति वचनात् । लब्ध्युपयोगौ हीन्द्रियं, "लब्ध्युपयोगौ भावेन्द्रियम्" इति व[3]चनात् । तयो[4]ः संस्काराः स्वार्थधा[5]रणाः । तेषामत्यये सति ज्ञ एव स्यात् । 'कुतः पुनर्भावेन्द्रियसंस्काराणामत्यये सति ज्ञ एव स्यान्न तु द्रव्येन्द्रियाणामत्यये, अतीन्द्रियप्रत्यक्षतोऽशेषार्थसाक्षात्कारित्वोपगमात्' इत्यपि न शङ्कनीयं, भावेन्द्रि[6]याणामावरणनिबन्धनत्वात् । कार्त्स्न्यतो ज्ञानावरणसंक्षये हि[7] भगवानतीन्द्रियप्रत्यक्षभाक् सिद्धः । न[8] च सकलावरणसंक्षये भावेन्द्रियाणामावरणनिबन्धनानां संभवः—कार[9]णाभावे का[10]र्यानुपपत्तेः । न[11]नु चावरणक्षयोपशमनिबन्धनत्वाद्भावेन्द्रियाणा कथमावरणनिबन्धनत्वमिति चेद् देश-[12]घातिज्ञानावरणस्पर्द्ध[13]कोदये सति सर्वघा[14]तिज्ञानावरणस्पर्द्धका[15]नामुदयाभा[16]वे सदव[17]स्थाया च तेषां भावादावरणनिबन्धनत्वसिद्धेरचोद्यमेतत् । न[18] कश्चिद्भवभृदतीन्द्रियप्रत्यक्षभागुपलब्धो यतो भगवांस्तथा संभाव्यते इत्यपि न शङ्का श्रेयसी, तस्य भवभृतां प्रभुत्वात् । न हि भवभृत्साम्ये दृष्टो धर्मः सकलभवभृत्प्रभौ सम्भावयितुं शक्यः, त[19]स्य संसारिजनप्रकृतिमभ्यतीतत्वात् । न[20]नु च सुनिर्णीतासम्भवद्बाधकप्रमाणत्वात्तथाविधो भवभृता प्रभुः साध्यते । तच्चा[21]सिद्धं, सुनिश्चितासंभवत्साधकप्रमाणत्वस्य तद्बाधकस्य सद्भावात् । न हि त[22]त्साधकं प्रत्यक्षम् । नाप्यनुमानं, तदेकदेशस्य लिङ्गस्यादर्शनात् । तदुक्तं " सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः । दृष्टो न चैकदेशोस्ति लिङ्गं[23] वा योनुमापयेत् " इति । आगमोपि न तावन्नित्यः सर्वज्ञस्य प्रतिपादकोस्ति, तस्य का[24]र्यार्थे एवार्थे प्रामाण्यात् स्वरूपेपि प्रामाण्येतिप्रसङ्गा[25]त् । स[26] सर्ववित् स लोकविदित्यादेर्हिरण्यगर्भः सर्वज्ञ इत्यादेश्चागमस्य नित्यस्य कर्मा[27]र्थवादप्रधानत्वात् तात्पर्या[28]संभवादन्यार्थप्रधा[29]नैर्वचनैरन्यस्य सर्वज्ञस्य विधानासंभवात् । पूर्वं[30] कुत[31]श्चिदप्रसिद्धस्य तैरनुवादायोगात् । अनादे-

१ अन्यथावेदनस्य । २ स्याद्वाद्याह । ३ तत्त्वार्थाधिगमवचनात् । ४ लब्ध्युपयोगयो प्रकर्षा (संस्कारा ) स्वग्राह्यार्थग्राहका. परिमितरूपा भवन्ति । ५ धारणाज्ञानरूपा न तु स्वरूपार्थग्रहणोन्मुखता संस्कारे, उपयोगसंस्कारयोरेकत्वप्रसङ्गात् । ६ न तु द्रव्येन्द्रियाणामावरणनिबन्धनत्वं तेषामङ्गोपाङ्गनामकर्मनिबन्धनत्वात् । ७ एवार्थे । न तु तत्राष्टकर्मविनाश कारणम् आवरणापायस्यैव कारणत्वोपगमात् । ८ ज्ञानावरणसंक्षये भगवानतीन्द्रियप्रत्यक्षभाग्भवत्येतावता भावेन्द्रियाणामभावादेवेति कथमित्याशङ्कायामाह । ९ कारणानामावरणाभावरूपाणाम् । १० कार्यस्य=भावेन्द्रियरूपस्य । ११ आह कश्चित्स्वमतवर्त्ती । १२ णाणावरणचउक्कं तिदंसणं सम्मगं चसजलणं । णवणोकसायविग्घं छव्वीसा देसघादीओ ॥ [ज्ञानावरणचतुष्कं त्रिदर्शनं सम्यक्त्वं चतु - संज्वलनम् । नवनोकषाया· विघ्न· षड्विंशतिर्देशघातीया ] । देशं [ आत्मगुणस्यैकदेशं ] घ्नन्तीति देशघातिन इति व्युत्पत्ति· । देशघातिनश्च ते ज्ञानावरणाश्च ते स्पर्द्धकाश्चेति देशघातिज्ञानावरणस्पर्द्धकास्तेषामुदये । १३ वर्गं शक्तिसमूहोणोरणूना ( शक्तिसमूहः ) वर्गणोदिता । वर्गणानां समूहस्तु स्पर्द्धक स्पर्द्धकापहैः ॥ इत्युक्तलक्षणो बहूना कर्मत्वमापन्नानां पौद्गलिकवर्गणानां समूह स्पर्द्धको ज्ञेयः । १४ सर्वमात्मगुणं घ्नन्तीति सर्वघातिन । केवलणाणावरणं केवलदंस कसायवारसय । मिच्छं च सव्वघादी सम्मामिच्छं अबंधेहिं (अवधम्हि) ॥ [ केवलज्ञानावरणं केवलदर्शनावरणं कषायद्वादशकम् [ अनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानानां प्रत्येकं चतुष्कमिति द्वादश ] । मिथ्यात्वं च सर्वघातिन सम्यग्मिथ्यात्वमबन्धे ( जिनै ) ] । इत्युक्तलक्षण सर्वघाती, आत्मगुणाना सामस्त्येन घातनात् । १५ वर्त्तमानकाले उदययोग्यानामित्यर्थं । १६ उदयाभावरूपे क्षये फलमदत्त्वैव तेषा निर्जरणे इत्यर्थ. । १७ सर्वघातिज्ञानावरणस्पर्द्धकानामेवोदेष्यमाणाना सदवस्थायाम् । आत्मनि कर्म· स्वरूपेण सम्बन्धे विद्यमाने सतीत्यर्थ· । १८ मीमांसकशङ्का । १९ सकलभवभृत्प्रभो· । २० पुनश्च मीमासक । २१ हेतु· । २२ सर्वज्ञसाधकम् । २३ लिङ्गं भूत्वा य एकदेश सर्वज्ञमनुमापयेदित्यर्थ । २४ योगे । २५ अलाबूनि निमज्जन्ति ग्रावाणः प्लवन्त इत्यत्रापि वेदे स्वरूपनिरूपकस्य आप पवित्रमित्यादेरपि प्रामाण्यप्रसङ्गात् । २६ यो यागं करोति । २७ कर्मार्थवाद =यागप्रशंसावाद. तत्स्तुतिकथन वा । २८ सर्वज्ञरूपेर्थे । २९ स्तुत्यर्थकथनपरै. । ३० आगमेन सर्वज्ञस्यानुवादो भवतीत्युक्ते आह । ३१ प्रमाणात् ।

रागमस्यादिमत्सर्वज्ञप्रतिपादनविरोधाच्च । नाप्यनित्यस्तत्प्रणीत एवागमस्तस्य प्रकाशको युक्तः, परस्पराश्रयप्रसङ्गात् । नरान्तरप्रणीतस्तु न प्रमाणभूतः सिद्धो यतः सर्वज्ञप्रतिपत्तिः स्यात् । असर्वज्ञप्रणीताच्च वचनान्मूलवर्जितात् सर्वज्ञप्रतिपत्तौ स्ववचनात्किन्न तत्प्रतिपत्तिरविशेषात् । तदुक्तं " न चागमविधिः कश्चिन्नित्यः सर्वज्ञबोधनः । न च मन्त्रार्थवादाना तात्पर्यमवकल्प्यते ।१। नै चान्यार्थप्रधानैस्तैस्तदस्तित्वं विधीयते । न चानुवदितुं शक्यः पूर्वमन्यैरबोधितः ।२। अनादेरागमस्यार्थो न च सर्वज्ञ आदिमान् । कृत्रिमेण त्वसत्येन स कथं प्रतिपाद्यते ।३। अथ तद्वचनेनैव सर्वज्ञोऽज्ञैः प्रतीयते । प्रकल्प्येत कथं सिद्धिरन्योन्याश्रययोस्तयोः ।४। सर्वज्ञोक्ततया वाक्यं सत्यं तेन तदस्तिता । कथं तदुभयं सिध्येत् सिद्धं मूलान्तराद्दते ।५। असर्वज्ञप्रणीतात्तु वचनान्मूलवर्जितात् । सर्वज्ञमवगच्छन्तः स्ववाक्यात्किं न जानते ।६।" इति । नोपमानमपि सर्वज्ञस्य साधकं, तत्सदृशस्य जगति कस्यचिदप्यभावात् । तथोक्तं, सर्वज्ञसदृशं कञ्चिद्यदि पश्येम सम्प्रति । उपमानेन सर्वज्ञं जानीयाम ततो वयम्" इति । नार्थापत्तिरपि सर्वज्ञस्य साधिका, तदुत्थापकस्यार्थस्यान्यथानुपपद्यमानस्याभावात् । धर्माद्युपदेशस्य बहुजनपरिगृहीतस्यान्यथाऽपि भावात् । तथा चोक्तम् " उपदेशो हि बुद्धादेर्धर्माधर्मादिगोचरः । अन्यथाप्युपपद्येत सर्वज्ञो यदि नाभवत् ।१। बुद्धादयो ह्यवेदज्ञास्तेषां वेदादसम्भवः । उपदेशः कृतोतस्तैर्व्यामोहादेव केवलात् ।२। ये तु मन्वादयः सिद्धाः प्राधान्येन त्रयीविदाम् । त्रयीविदाश्रितग्रन्थास्ते वेदप्रभवोक्तयः ।३।" इति । न च प्रमाणान्तरं तदुपलम्भकं सर्वज्ञस्य साधकमस्ति । मा भूदत्रत्येदानीन्तनानामस्मदादिजनानां सर्वज्ञस्य साधकं प्रत्यक्षाद्यन्यतमं देशान्तरकालान्तरवर्त्तिनां केषाञ्चिद्भविष्यतीति चायुक्तं " यज्जातीयैः प्रमाणैस्तु यज्जातीयार्थदर्शनम् । दृष्टं सम्प्रति लोकस्य तथा कालान्तरेप्यभूत्" इति वचनात् । तथा हि । विवादाध्यासिते देशे काले च प्रत्यक्षादिप्रमाणमत्रत्येदानीन्तनप्रत्यक्षादिग्राह्यसजातीयार्थग्राहकं भवति तद्विजातीयसर्वज्ञाद्यर्थग्राहकं वा न भवति, प्रत्यक्षादिप्रमाणत्वादत्रत्येदानीन्तनप्रत्यक्षादिप्रमाणवत् । ननु च यथाभूतमिन्द्रियादिर्जनितं प्रत्यक्षादि सर्वज्ञाद्यर्थासाधकं दृष्टं तथाभूतमेव देशान्तरे कालान्तरे च तादृशं साध्यतेऽन्यथाभूतं वा ? तथाभूतं चेत् सिद्धसाधनम् । अन्यथाभूतं चेदप्रयोजको हि हेतुः जगतो बुद्धिमत्कारणकत्वे साध्ये सन्निवेशविशिष्टत्ववत् । इति चेत्तदसत्, तथाभूतस्यैव तथा साधनात् सिद्धसाधनस्याप्यभावात्, अन्यादृशप्रत्यक्षाद्यभावात् । तथा हि । विवादापन्नं प्रत्यक्षादिप्रमाणमिन्द्रियादिसामग्रीविशेषानपेक्षं न भवति, प्रत्यक्षादिप्रमाणत्वात् प्रसिद्धप्रत्यक्षादिप्रमाणवत् । न गृद्धवराहपिपीलि-

---

१ आदिमत्सर्वज्ञं प्रतिपादयति यदा तदा सर्वज्ञोऽभूद्भविष्यति भवतीति त्रिरूपेणापि प्रतिपादने विरोधः । २ मूलं प्रामाण्यम् । ३ स्तुत्यादि( चोदनादि )वादाना सत्यत्वं नावगम्यते । विशेषेण स्पष्टीकरणं त्वस्य भावनाविवेकनाम्नि ग्रन्थे कृतम् । ४ न वाक्यार्थप्रधानैस्तैस्तदस्तीति वा पाठ. । ५ प्रमाणैः । ६ कृत्रिमत्वादेवासत्यत्वम् । ७ सर्वज्ञवचनेन । ८ अन्योन्याश्रयं भावयति । ९ वाक्येन । १० सिद्धं च तन्मूलान्तर ( प्रमाणान्तर ) च तत्तस्मात् । ११ सर्वज्ञसदृशस्य । १२ अर्थापत्त्युत्थापकस्य । १३ सर्वज्ञाभावेपि धर्माद्युपदेश सम्भवति बहुजनपरिगृहीतत्वात् । ततो धर्माद्युपदेशो नान्यथानुपपद्यमानो यतः सर्वज्ञं साधयेत् । १४ सर्वज्ञाभावे । १५ अन्यथा नोपपद्येत इति पाठान्तरम् । यद्येवं पाठस्तदा काकुरूपेण ध्येय. । १६ मध्ये । १७ "त्रियामृक् सामयजुषी इति वेदास्त्रयस्त्रयी" इत्यमर । १८ त्रयीविद्भिराश्रिता (व्याख्याता) स्मृतिरूपा

२० सुगतादषु । त्रयीविदाश्रितग्रन्था । त्रयीवित्प्रधानमन्वादिकृता स्मृतिसाधारणास्त्रयीविद आश्रयन्तीति भावः ।

च्छेदसम्प्रदायाना सर्वेष.) ० दूरादिनियतार्थगोचरै. । २१ सिद्धान्त (जैन) पक्षमादाय वादी शङ्कते । २२ अतीन्द्रियजातं

व्यापार उपयोग । तयो तथासाधनत्वं कुत इत्यारेकायामाह । २४ एतदनुमानस्य खण्डनमत एवाक्षानपेक्षाऽञ्जनादि-

भवभृतस्तेषां गुरुः प्रभुर्भवेद्ध इति भाष्यव्याख्यानावसरे प्रोक्तं द्रष्टव्यम् । २५ गृद्धस्य चाक्षुषं वराहस्य श्रौत्रं पिपीलिका-

४० प्रतिबिम्बवादौ । ४१ मी.

४ ज्ञानावरणादय.

कादिप्रत्यक्षेण सन्निहितदेशविशेषानपेक्षिणा नक्तञ्चर[1]प्रत्यक्षेण वालोकानपेक्षिणानेकान्तः, कात्यायना[2]द्यनुमाना[3]तिशयेन जैमिन्याद्यागमाद्यतिशयेन[4] वा तस्यापीन्द्रियादिप्रणिधान[5]सामग्रीविशेषमन्तरेणासंभवात् स्वार्था[6]तिलङ्घनाभावादतीन्द्रियान[7]नुमेयाद्यर्थाविषयत्वाच्च । तथा चोक्त "यत्रा[8]प्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात् । दूरसूक्ष्मादिदृष्टौ[9] स्यान्न रूपे श्रोत्रवृत्तिता ।१। [10]येपि सातिशया दृष्टाः प्रज्ञामेधादिभिर्नराः । स्तोकस्तोकान्तरत्वेन न त्वतीन्द्रियदर्शनात् ।२। प्राज्ञोपि हि नरः सूक्ष्मानर्थान् द्रष्टुं क्षमोपि सन् । स्वजाती[11]रनतिक्रामन्नतिशेते परान्नरान् ।३। एकशास्त्रविचारेषु दृश्यतेतिशयो महान् । न तु शास्त्रान्तरज्ञानं तन्मात्रे[12]णैव लभ्यते ।४। ज्ञात्वा व्याकरणं दूरं बुद्धिः शब्दापशब्दयोः । प्रकृष्यते न नक्षत्रतिथिग्रहणनिर्णये ।५। ज्योतिर्विच्च प्रकृष्टोपि चन्द्रार्कग्रहणादिषु । न भवत्यादिशब्दानां साधुत्वं ज्ञातुमर्हति ।६। तथा वेदेतिहासा[13]दिज्ञानातिशयवानपि । न स्वर्गदेवताऽपूर्व[14]प्रत्यक्षीकरणे क्षमः ।७। दशहस्तान्तरं व्योम्नि यो नामोत्प्लुत्य गच्छति । न योजनमसौ गन्तुं शक्तोभ्यासशतैरपि ।८।" इति। न दृष्टप्रत्यक्षादिविजातीया[15]तीन्द्रियप्रत्यक्षादिसंभावना यतः संभाव्य[16]व्यभिचारिता साधनस्य[17] स्यात् । पुरुषविशेषस्य तत्[18]सम्भावनायां संभाव्यव्यभिचारित्वमेवेति चेन्न, तस्या[19]सिद्धत्वात्, साधकाभावात्सर्वपुरुषाणा त्रिविप्रकृष्टार्थसाक्षात्कारित्वानुपपत्तेरिति । तदेतत्[20]सर्वमपरीक्षिताभिधानं मीमांसकस्य । न हि सर्वज्ञस्य निराकृतेः प्राक् सुनिश्चितासंभवत्साधकप्रमाणत्वं सिद्धं येन परैः[21] प्रत्यवतिष्ठेत । नापि बाधकासंभवात्परं[22] प्रत्यक्षादेरपि विश्वासनिबन्धनमस्ति । तत्[23]प्रकृते[24]पि सिद्धं[25] यदि तत्सत्तां न साधयेत्[26] सर्वत्रा[28]प्यविशेषात्तदभावे[27] दर्शनं[29] नादर्शनमतिशेतेऽनाश्वासाद्विभ्रमवत् । स्यान्[30]मतं "मा सिधत्सर्वज्ञस्य निराकरणात्पूर्वं सुनिश्चितासंभवत्साधकप्रमाणत्व, स्वप्रत्यक्षस्य सर्वज्ञान्तरप्रत्यक्षस्य च तत्[31]साधकस्य संभवात्, परोपदेशलिङ्गाक्षानपेक्षो[32]ऽवितथाऽशेषसूक्ष्माद्यर्थप्रतिपादकतद्वचनविशेषात्मकलिङ्गजनितानुमानस्य च तत्[33]साधकस्य सद्भावादनादिप्रवचनविशेषस्य च तदुद्द्योतितस्य तत्[34]साधकत्वेन सिद्धेः । निराकरणादुत्तरकाल तु सिद्धमेव " इति । तद[35]पि स्वमनोरथमात्रं, सर्वज्ञनिराकृतेरयोगात् सर्वथा बाधकाभावात् । स[36]दुपलम्भकप्रमाणपञ्चकनिवृत्तिलक्षणं ज्ञापकानुपलम्भे[37]न सर्वज्ञस्य बाधकमिति चेन्न, तस्य स्वसम्बन्धिनः[38] परचेतोवृत्तिविशेषा[39]दिना व्यभिचारात्, सर्वसम्बन्धिनोऽसिद्धत्वात् । तदुक्तं तत्त्वार्थश्लोकवार्त्तिके । "स्वसम्बन्धि यदीद स्याद्व्य[40]भिचारि पयोनिधेः । अम्भःकुम्भादिसंख्यानैः सद्भि[41]रज्ञायमानकैः[42] ।१। सर्वसम्बन्धि तद्बोद्धुं किञ्चिद्बोधैर्न[43] शक्यते । सर्वबोधोस्ति चेत्कश्चित्तद्बोद्धा किं निषिध्यते ।२। सर्वसम्बन्धि सर्वज्ञज्ञापकानुपलम्भनम् । न चक्षुरादिभि-

---

१ विडालघूकमूषकादयो नक्तञ्चरा.। २ कात्यायनो=वररुचि । ३ व्याप्तिस्मरणमन्तरेणोत्पन्नलक्षणेन। ४ सङ्केतस्मरणमन्तरेण। ५ एकाग्रता । ६ स्वार्थो नियतविषय । ७ अतीन्द्रियं च तदननुमेयं चेति द्वन्द्व । ८ इन्द्रिये। ९ क्रियमाणायाम्। १० ननु च प्रज्ञास्मृत्यादिशक्तीना प्रतिपुरुषमतिशयदर्शनात्सिद्धं कस्यचित्काष्ठामापद्यमानं धर्मादिसूक्ष्माद्यर्थसाक्षात्कारि प्रत्यक्षमित्यारेकायामाह ।११ तत्तद्विषयाणाम। १२ एकशास्त्रज्ञानमात्रेण। १३ पुरातननृपादिचरित्रग्रन्थसन्दर्भ इतिहास ।१४ अपूर्वं पुण्यपापे। १५ द्वन्द्व । १६ सभाव्येनातीन्द्रिय(नेन्द्रिये)प्रत्यक्षादिना व्यभिचार । १७ प्रत्यक्षादिप्रमाणत्वादिति साधनस्य । १८ तस्य अतीन्द्रियप्रत्यक्षस्य। १९ पुरुषविशेषस्य। २० अत्राह स्याद्वादी। २१ परो मीमासक प्रत्यवतिष्ठेत (प्रतिकूलतामवलम्बेत) अपि तु नेत्यर्थ । २२ अन्यत् सवादकत्वादिकम्। २३ बाधकासम्भवत्वम्। २४ सर्वज्ञे। २५ सिद्धं सत्। २६ तर्हीति शेष । २७ दर्शने दर्शनाभावे वा ( सर्वज्ञस्य ) सत्यदर्शने असत्यदर्शने च वा। २८ अविशेषात्सर्वत्रापि सुनिश्चितासंभवद्बाधकप्रमाणस्याभावे इत्यर्थ । २९ प्रत्यक्षम्। ३० मीमासकस्य । ३१ सर्वज्ञसाधकस्य । ३२ अन्तरितदूरमिति । क्रियाविशेषणमेतत्। ३३ स सर्वज्ञ । ३४ स सर्वज्ञ । ३५ सिद्धान्ती। ३६ सदुपलम्भकं सद्ग्राहकम। ३७ विद्यमानदर्शकप्रत्यक्षादिप्रमाणपञ्चकाभावस्वरूपमभावप्रमाणम्। ३८ सिद्धान्ती तदनुपलम्भनं स्वसम्बन्धि परसम्बन्धि वेति विकल्प्य क्रमेण दूषयति । स्वस्याभावप्रमाणवादिन सम्बन्धि स्वसम्बन्धि। ३९ परचित्तव्यापारविशेषादिना व्यभिचारसम्भवात्। ४० तदेति शेष'। ४१ विद्यमानैः। ४२ किञ्चिज्ज्ञेन। ४३ अतीन्द्रियत्वात्।

वेद्यमत्यक्षत्वाददृष्टवत् ।३। नानुमानादलिङ्गत्वात्[1] कार्थापत्त्युपमागतिः । सर्वज्ञस्यान्यथाभावसादृश्यानुपपत्तितः[2] ।४। सर्वप्रमातृसम्बन्धिप्रत्यक्षादिनिवारणात् । केवलागमगम्यं च कथं मीमांसकस्य तत्[3] ।५। कार्येऽर्थे[4] चोदनाज्ञानं प्रमाणं यस्य सम्मतम् । तस्य स्वरूप[5]सत्तायां तन्नैवा[6]तिप्रसङ्गतः[7] ।६। तज्ज्ञापकोपलम्भस्याभा[8]वोऽभावप्रमाणतः। साध्यते चेन्न तस्यापि सर्वत्रा[9]प्यप्रवृत्तितः ।७। गृहीत्वा वस्तुसद्भावं स्मृत्वा तत्प्रतियोगिनम् । मानसं नास्तिताज्ञानं येषामक्षानपेक्षया ।८। तेषामशेषनृज्ञाने स्मृते[10] तज्ज्ञापके[11] क्षणे । जायेत नास्तिताज्ञानं मानसं तत्र नान्यथा ।९। न चाशेषनरज्ञानं सकृत्साक्षादुपर्यते[12] । न क्रमादन्य[13]सन्तानप्रत्यक्षत्वानभीष्टितः ।१०। यदा च क्वचिदेकत्र[14] भवेत्तन्नास्तितागतिः[15] । नैवान्यत्र[16] तदा सास्ति[17] क्वैवं सर्वत्र नास्तिता ।११। प्रमाणान्तरतो[18]प्येषां[19] न सर्वपुरुषग्रहः । तल्लिङ्गादे[20]रसिद्धत्वात् सहोदीरितदूषणात्[21] ।१२। तज्ज्ञापकोपलम्भोपि सिद्धः पूर्वं न जातुचित् । यस्य[22] स्मृतौ प्रजायेत नास्तिताज्ञानमाञ्जसम् । १३ । परोपगमतः[23] सिद्धः स[24] चेन्नास्तीति साध्यते । व्याघात[25]स्तत्प्रमाणत्वेन्योन्यं सिद्धो न सोऽन्यथा ।१४। नन्वेवं सर्वथैकान्तः परोपगमतः कथम् । सिद्धो निषिध्यते जैनैरिति चोद्यं न धीमताम् ।१५। प्रतीतेऽनन्तधर्मात्मन्यर्थे स्वयमबाधिते । को दोषः सुनयै[26]स्तत्रैकान्तोपप्लवसाधने ।१६। अनेकान्ते[27] हि विज्ञानमेकान्तानुपलम्भनम् । तद्विधिस्तन्निषेधश्च मतो नैवान्यथा[28] गतिः ।१७। नैवं[29] सर्वत्र सर्वज्ञज्ञापकानुपदर्शनम् । सिद्धं तद्दर्शनारोपो[30] येन तत्र निषिध्यते ।१८।" इति । तदेवमसिद्धं ज्ञापकानुपलम्भनं सर्वज्ञस्य न बाधकमिति सिद्धं सुनिश्चितासंभवद्बाधकप्रमाणत्वमेव साधकम्[31] । तथा हि । अस्ति सर्वज्ञः सुनिश्चितासम्भवद्बाधकप्रमाणत्वात्प्रत्यक्षादिवत् । प्रत्यक्षादेस्तावद्विश्वास[32]निबन्धनं बाधकासंभव एव सुनिश्चितः । न ततोऽपरं संवादकत्वं प्रवृत्तिसामर्थ्यमदुष्टकारणजन्यत्वं वा, तस्य[33] तत्रा[34]वश्यं भावादिति । प्रत्यक्षादिप्रमाणमुदाहरणं, वादिप्रतिवादिनोः प्रसिद्धत्वात् साध्यसाधनधर्माविकलत्वात् । सुनिश्चितासंभवद्बाधकप्रमाणश्च स्यादविद्यमानश्चेति सन्दिग्धविपक्षव्यावृत्तिकमिदं साधनं न मन्तव्यं, विपक्षे बाधकसद्भावात् । तथा हि । यदसत्तन्न सुनिश्चितासंभवद्बाधकप्रमाणम् । यथा मरीचिकायां तोयं सम्भवद्बाधकप्रमाणं, मेरुमूर्द्धनि मोदकादिकं च सन्दिग्धा[35]संभवद्बाधकम् । सुनिश्चितासंभवद्बाधकप्रमाणश्च सर्वज्ञः । इति प्रकृते सर्वज्ञे सिद्धमपि साधनं यदि सत्तां न साधयेत्तदा दर्शनं[36] नादर्शनमतिशयीत, अनाश्वासात् स्वप्नादिविभ्रमवत्, तस्य[37] सुनिश्चितासंभवद्बाधकप्रमाणत्वस्याभावे सर्वत्र दर्शने दर्शनाभासे च विशेषाभावात् ।

---

१ अत्यन्तपरोक्षत्वेन सर्वज्ञस्य ज्ञापकलिङ्गाभावः । २ सर्वस्यानन्यथाभावसादृश्यानुपपत्तित इति वा पाठः । ३ सर्वज्ञज्ञापकानुपलम्भनम् । ४ मीमासकस्य । ५ स्वरूपशब्देन सर्वज्ञः । ६ सर्वज्ञज्ञापकानुपलम्भनम् । ७ आपः पवित्रमित्यादेरपि प्रामाण्यप्रसङ्गात् । ८ प्रभाकरं निराकृत्य भट्टं निराकुर्वन्नाह तज्ज्ञापकेति । ९ सर्वपुरुषसम्बन्धिनि ज्ञापकानुपलम्भने । १० सति । ११ सर्वज्ञज्ञापके काले । १२ घटते । १३ अन्यपुरुषमनोव्यापारादिप्रत्यक्षत्वानिष्टेः । १४ नरे । १५ सर्वज्ञनास्तितानिश्चितिः । १६ नरे । १७ नास्तितागतिः । १८ अनुमानादिना । १९ मीमांसकानाम् । २० अनुमाने लिङ्गस्य, उपमाने सादृश्यस्य, अर्थापत्तौ त्वन्यथाभावस्य चाभावादित्यर्थः । २१ सर्वसम्बन्धि तद्बोद्धुं किञ्चिद्बोधैर्न शक्यते इत्यादिना पूर्वमेव नास्तितासिद्धौ प्रयुक्ते तत्र तत्र प्रत्येकप्रमाणे दूषणस्योक्तत्वात् । २२ तज्ज्ञापकोपलम्भस्य स्मृतौ सत्याम् । २३ जैनाभ्युपगमतः । २४ सर्वज्ञः । २५ कथं व्याघातस्तथाहि ।—तस्य परोपगमस्य प्रमाणत्वेन्योन्यं परस्परं ( वादिप्रतिवादिनोः ) स सिद्धः । अन्यथा ( तदप्रमाणत्वे ) अन्योन्यं परस्परमुभयोरेव न सिद्ध इति । २६ सुयुक्तिभिः । २७ गृहीत्वा वस्तुसद्भावमित्यादिप्रक्रिया जैनेषु नास्ति ततश्चास्माकं न किञ्चिद्दूषणमित्याहानेकान्ते इति । २८ गृहीत्वा वस्तुसद्भावमित्यादिप्रकारेण । २९ अनेकान्ते हीत्यादिप्रकारेणैव अनुपलम्भनं स्यादित्युक्ते सिद्धान्त्याह नैवमिति । ३० भ्रान्तिः । ३१ सर्वज्ञस्य । ३२ विश्वासस्य प्रतीतेः । ३३ संवादकत्वादेः । ३४ सुनिश्चितासम्भवद्बाधके । ३५ मेरुमूर्द्धनि मोदकादिसत्ताऽसत्तयोः साध्ययोरुभयत्रापि सुनिश्चितासंभवद्बाधकप्रमाणत्वस्य हेतोः सम्भवात् । ३६ प्रत्यक्षम् । ३७ प्रत्यक्षस्य ।

x सर्वज्ञज्ञापक दर्शन—

“साधक[1]बाधकप्रमाणभावात्सर्वज्ञे[2] संशयोस्त्वित्ययुक्तं, यस्मात्साधकबाधकप्रमाणयोर्निर्णयात् भावाभाववयोरविप्रतिपत्तिरनिर्णयादारेका स्यात् । साधकनिर्णयात्तत्सत्तायामविप्रतिपत्तिर्बाधकनिर्णयात्त्वसत्तायाम् । उभयनिर्णयस्तु न सभवत्येव क्वचित्[3], व्याघातात्[4] साधकबाधकाभावनिर्णयवत्[5]। साधकानिर्णयात्पुनः सत्तायामारेका स्याद्बाधकानिर्णयादसत्तायामिति विपश्चितामभिमतो[6] न्यायः । ततो भवभृतां प्रभौ सुनिश्चितासम्भवद्बाधकप्रमाणत्वं सत्तायाः साधकं सिध्यत् सुनिश्चितासंभवत्साधकप्रमाणत्वं व्यावर्त्तयत्येव, विरोधात्[7] । नैवमेतत्[8]तत्र[9] सिध्यति येन सुनिश्चितासंभवद्बाधकप्रमाणत्वस्य व्यावर्त्तकं स्यात् । ततः[10] सिद्धो भवभृतां प्रभुः सर्वज्ञ एव । **न खलु ज्ञस्वभावस्य कश्चिदगोचरोस्ति यन्न क्रमेत, तत्स्वभावान्तर[11]प्रतिषेधात्*** । कुतः पुनस्तस्या[12]ज्ञत्वलक्षणस्वभावान्तरप्रतिषेधः सिद्धो यतोसौ ज्ञस्वभाव एव स्यात् ? सर्वश्चार्थस्तस्य विषयः स्यात् ? ततस्तं क्रमेतैव[13] ? इति चेत् चोदना[14]बलाद्भूता[15]द्यशेषार्थज्ञानान्यथा[16]नुपपत्तेः[17] । सोयं[18] चोदना हि भूतं भवन्तं भविष्यन्तं विप्रकृष्टमित्येवंजातीयकमर्थमवगमयितुमलं पुरुषविशेषानिति स्वयं प्रतीयन्[19] सकलार्थज्ञानस्वभावतामात्मनो न प्रत्येतीति कथं स्वस्थः ? तच्च न ज्ञानमात्मनो भिन्नमेव मीमांसकस्य[20] कथञ्चिदभेदोपगमादन्यथा[21] मतान्तर[22]प्रसङ्गात् । ततो नाज्ञस्वभावः पुरुषः क्वचिदपि[23] विषये, सर्वविषये चोदनाज्ञानोत्पत्तेर्विकल्पज्ञानोत्पत्तेर्वा[24] सर्वत्र तदनुपपत्तौ[25] विधिप्रतिषेधविचाराघटनात् । कथमेवं[26] कस्यचित्क्वचिदज्ञानं स्यादिति चेदुच्यते[27] । **चेतनस्य सतः सम्बन्ध्यन्तरं[28] मोहोदयकारणकं मदिरादिवत्*** । तत्कुतः[29] सिद्धम् ? विवादा[30]ध्यासितो जीवस्य मोहोदयः[31] सम्बन्ध्यन्तरकारणको मोहोदयत्वान्मदिराकारणकमोहोदयवदित्यनुमानात् । यत्तत्सम्बन्ध्यन्तरं तदात्मनो ज्ञानावरणादि कर्मेति । **तदभावे साकल्येन विरतव्यामोहः सर्वमतीतानागतवर्तमानं पश्यति प्रत्यासत्तिविप्रकर्षयोरकिञ्चित्करत्वात्*** । कथं पुनर्ज्ञानावरणादिसम्बन्ध्यन्तरस्याभावे साकल्येन विरतव्यामोहः स्याद्यतः सर्वमतीतानागतवर्त्तमानानन्तार्थव्यञ्जन[32]पर्यायात्मकं जीवादितत्त्वं साक्षात्कुर्वीतेति चेदिमे[33] ब्रूमहे । यद्यस्मिन् सत्येव भवति तत्तदभावे न भवत्येव । यथाग्नेरभावे धूमः । सम्बन्ध्यन्तरे सत्येव भवति चात्मनो व्यामोहः[34] तस्मात्तदभावे स न भवतीति निश्चीयते । देशकाल[35]तः प्रत्यासन्न[36]मेव पश्येद्विरतव्यामोहोपि सर्वात्मना, न पुनर्विप्रकृष्ट[37]मित्ययुक्तं[38], प्रत्यासत्तेर्ज्ञानाकारणत्वाद्विप्रकर्षस्य चाज्ञानानिबन्धनत्वात्, तद्भावेपि[39] ज्ञानाज्ञानयोरभावान्नयनतारका[40]ञ्जनवच्चन्द्रार्कादिवच्च । योग्यतासद्भावेतराभ्यां क्वचिद्भावे योग्यतैव[41] ज्ञानकारणं, प्रत्यासत्तिविप्रकर्षयोरकिञ्चित्कर[42]-

१ मीमांसकाशङ्का । २ सर्वज्ञस्य । ३ वस्तुनि । ४ विरोधात् । ५ यत्र साधकाभावस्तत्र बाधकसद्भावः । यत्र च बाधकाभावस्तत्र साधकसद्भाव । न त्वेकत्र साधकबाधकाभावो यथा तथा तदुभयनिर्णयोपि न । ६ सर्वत्र । ७ सुनिश्चितासभवद्बाधकत्वं यत्र तत्र सुनिश्चितासभवत्साधकत्वं न घटते, अन्योन्यविरोधात् । ८ सुनिश्चितासभवत्साधकप्रमाणत्वम् । ९ सर्वज्ञे । १० निर्दोषत्वाद्धेतो । ११ तत्स्वभावान्तरम्=अज्ञत्वलक्षणम् । १२ सर्वज्ञस्य । १३ जानीयात् । १४ जैन । १५ भविष्यद्वर्तमानादिपदेन ज्ञेयाः । १६ ज्ञस्वभावत्वाभावे । १७ आत्मा ज्ञस्वभाव एव साध्यः । १८ मीमांसक । १९ चोदना सकलं जानाति, आत्मा तु न जानातीति वदन् । २० मीमासकस्यापि । २१ सर्वथा भेदे । २२ मतान्तरं यौगम् । २३ भूताद्यशेषार्थे । २४ विकल्पज्ञानं यत्सत्तत्सर्वमनेकान्तात्मकमिति व्याप्तिज्ञानम् । २५ व्याप्तिज्ञानानुपपत्तौ । २६ मीमांसकशङ्का । २७ जैनै । २८ सम्बन्धिना ज्ञानावरणादीनां मध्ये अन्तरमन्यतमं=ज्ञानावरणमित्यर्थः । २९ मीमांसकः पृच्छति ।—तद् ज्ञानावरणं कर्म कुत सिध्यति । ३० इति चेदाहुराचार्याः विवादेति । ३१ अज्ञानाद्युदयः । ३२ पर्यायो द्विधार्थव्यञ्जनभेदात् । व्यञ्जन=स्थूलपर्यायः । सूक्ष्म प्रतिक्षणध्वंसी पर्यायश्चार्थपर्याय । ३३ प्रत्यक्षीभूता वयं जैना । ३४ अज्ञानम् । ३५ मीमासकशङ्का । ३६ समीपतामापन्नम् । ३७ दूरम् । ३८ जैन । ३९ तयोः=प्रत्यासत्तिविप्रकर्षयोः । ४० नयनतारकाया अञ्जनेन सह प्रत्यासत्तावपि न ज्ञानोदयोऽञ्जनस्य । चन्द्रार्कादीस्तु विप्रकृष्टानपि जानाति नयनतारका यथा । ४१ ज्ञानावरणविशेषाभावरूपा । ४२ प्रत्यासत्त्यभावे विप्रकर्षसद्भावेपि ज्ञानोत्पादात् ।

त्वात् । सा पुनर्योग्यता देशतः कार्त्स्न्यतो वा व्यामोहविगमस्तत्प्रतिबन्धिकर्मक्षयोपशमक्षयलक्षणः । इति साकल्येन विरतव्यामोहः सर्वं पश्यत्येव । तदुक्तं "ज्ञो[2] ज्ञेये कथमज्ञः स्यादसति प्रतिबन्धने । दाह्येऽग्निर्दा[1]हको न[3] स्यादसति प्रतिबन्धने[4] ।१।" इति । अत एवाक्षानपेक्षाऽञ्जनादिसंस्कृतचक्षुषो यथालोकाऽनपेक्षा* । अत एव । कुत एव ? साकल्येन विरतव्यामोहत्वादेव सर्वदर्शनादेव वा । यो हि देशतो विरतव्यामोहः किञ्चिदेवास्फुटं पश्यति वा तस्यैवाक्षापेक्षा लक्ष्यते न पुनस्तद्विलक्षणस्य प्रक्षीणसकलव्यामोहस्य सर्वदर्शिनः[5], [6]सर्वज्ञत्वविरोधात् । न हि सर्वार्थैः सकृदक्षसम्बन्धः संभवति साक्षात्परम्परया वा । [7]ननु चावधिमनःपर्ययज्ञानिनोर्देशतो विरतव्यामोहयोरसर्वदर्शनयोः कथमक्षानपेक्षा संलक्षणीया ? [8]तदा-वरणक्षयोपशमातिशयवशात्स्वविषये परिस्फुटत्वादिति ब्रूमः । न चैवं[9] साकल्येन विरतव्यामोहत्वस्य सर्वदर्शनस्य वानैकान्तिकत्वं शङ्कनीयं, विपक्षेक्षापेक्षे मतिश्रुतज्ञाने [10]तदसंभवात् । अवधिमनःपर्ययज्ञाने तदसंभवात् पक्षाव्यापकत्वादहेतुत्वमिति[11] चेन्न, सकलप्रत्यक्षस्यैव पक्षत्ववचनात्, तत्र चास्य हेतोः सद्भावात्, विकलप्रत्यक्षस्यावधिमनःपर्ययाख्यस्यापक्षीकरणात् । न चास्मदादिप्रत्यक्षेक्षापेक्षोपलक्षणात्सकलवित्प्रत्यक्षेपि सास्त्येवेति वक्तुं शक्यम्[12], अञ्जनादिभिरसंस्कृतचक्षुषोऽस्मदादेरालोकापेक्षोपलक्षणात् तत्संस्कृतचक्षुषोपि कस्यचिदालोकापेक्षाप्रसङ्गात् । नक्तञ्चराणामालोकापायेपि स्पष्टरूपावलोकनप्रसिद्धेर्नालोको नियतं कारणं प्रत्यक्षस्येति चेत्तर्हि सत्यस्वप्नज्ञानसे[13]क्षणिकादिज्ञानस्य च स्पष्टस्य चक्षुराद्यनपेक्षस्य प्रसिद्धेरक्षमपि नियतं प्रत्यक्षकारणं मा भूत्[14] । ततो यथाञ्जनादिसंस्कृतचक्षुषामालोकानपेक्षा स्फुटं रूपेक्षणे तथा साकल्येन विरतव्यामोहस्य सर्वसाक्षात्करणेऽक्षानपेक्षा । इति करणक्रमव्यवधानातिवर्तिसकलप्रत्यक्षो भवभृतां[15] गुरुः प्रसिद्ध्यत्येव ।

यतश्चासौ न देवागमादिविभूतिमत्त्वादध्यात्मं बहिरपि दिव्यसत्यविग्रहादिमहोदयाश्रयत्वाद्वा महान्, नापि तीर्थकृत्त्वमात्रात्, यतश्च तीर्थच्छेदसम्प्रदायोपि वैदिको नियोगभावनादिसम्प्रदायो न संवादकः प्रत्यक्षैकप्रमाणवादिसम्प्रदायस्तत्त्वोपप्लववादिसम्प्रदायो वा सर्वाप्तसर्वादो[16] वा न प्रमाणभूतो व्यवतिष्ठते, ततः सुनिश्चितासम्भवद्बाधकप्रमाणो भगवन् भवानेव[17] भवभृतां प्रभुरात्यन्तिक[18]दोषावरणहान्या साक्षात्प्रबुद्धाशेषतत्त्वार्थत्वेन च मुनिभिः सूत्रकारादिभिरभिष्टूयते । इति समन्तभद्राचार्यैर्निरूपिते सति कुतस्तावदात्यन्तिकी दोषावरणहानिर्मयि[19] विनिश्चितेति भगवता पर्यनुयुक्ता इवाचार्याः प्राहुः ।—

**दोषावरणयोर्हानिर्निःशेषास्त्यतिशायनात्[20] । क्वचिद्[21]यथा स्वहेतुभ्यो बहिरन्तर्मलक्षयः ॥ ४ ॥**

दोषा[22]वरणसामान्ययोर्हानेः प्रसिद्धत्वा[23]द्धर्मित्वं न विरुध्यते । तत्प्रसिद्धिः पुनरस्मदादिषु देशतो निर्दोषत्वस्य ज्ञानादेश्च का[24]र्यस्य निश्चयाद्भवत्येव, अन्यथा तदनुपपत्तेः । सा क्वचिन्निःशेषास्तीति साध्यते[25],

---

१ ता । २ सर्वज्ञ । ३ कथं न स्यादपि तु स्यादेव । ४ मणिमन्त्रादौ । 'प्रतिवद्धरि' इत्यपि पाठ । ५ अर्हत्प्रत्यक्षस्य । ६ अन्यथा ( अक्षापेक्षत्वे )। ७ परः । ८ सिद्धान्ती । ९ साकल्येन विरतव्यामोहत्वसर्वदर्शनाभ्यां विनापि अवधिमनःपर्ययोरक्षानपेक्षत्वप्रकारेण । १० तस्य=विरतव्यामोहत्वस्य सर्वदर्शनस्य वा हेतो । ११ अवधिमनःपर्यययोरपि पक्षान्तर्भावं ज्ञात्वा साकल्येन विरतव्यामोहत्वस्य सर्वदर्शनस्य वा हेतो पक्षाव्यापकत्वं नाम हेत्वाभासत्वं दोषं समर्थयति परः । १२ परेण । १३ ईक्षणिका=द्व्यक्षरा शाकिनी ग्राह्या (?)। १४ भवेतामिति पाठान्तरम् । १५ प्रमाणभूत. । १६ सर्वे आप्ता इति वादो यस्य स सर्वाप्तवादो वैनयिक । १७ वर्द्धमान. । १८ अन्तमतिक्रान्त कालोऽत्यन्तः । तस्मै प्रभवतीति आत्यन्तिकी, यस्या हाने पुनर्नाशो न विद्यते तथेत्यर्थः । १९ अर्हति । २० तरतमभावेन हीयमानत्वात् । २१ क्वचिच्छब्दः पूर्वार्द्धेपि सम्बन्धनीयः । क्वचिच्छब्देन कनकोपलो दृष्टान्ते अर्हंश्च दार्ष्टान्ते ग्राह्य. । २२ दोषसामान्यमावरणसामान्यं च तयो. । २३ प्रसिद्धो धर्मीति वचनात् । २४ दोषावरणयोर्हानेरभावे निर्दोषत्वं ज्ञानादि कार्यं च नोपपद्यते । २५ इष्टमबाधितमसिद्धं साध्यमिति वचनात् ।

वादिप्रतिवादिनोरत्र[1] विप्रतिपत्तेः । अतिशायनादिति हेतुः । क्वचित्कनकपाषाणादौ किट्टकालिकादिबहिरन्तर्मलक्षयो यथेति दृष्टान्तः[2], प्रसिद्धत्वात् । स हि कनकपाषाणादौ प्रकृष्यमाणो[3] दृष्टो निश्शेषः । तद्वद्दोषावरणहानिरपि प्रकृष्यमाणाऽसदादिषु प्रतीता सती क्वचिन्निश्शेषाऽस्तीति सिद्ध्यति । कः पुनर्दोषो[4] नामावरणाद्भिन्नस्वभाव इति चेदुच्यते । वचन[5]सामर्थ्यादज्ञानादिर्दोषः स्वपर[6]परिणामहेतुः* । न हि दोष एवावरणमिति प्रतिपादने कारिकाया दोषावरणयोरिति द्विवचनं समर्थम्[7] । ततस्तत्सामर्थ्यादावरणात्पौद्गलिकज्ञानावरणादिकर्मणो भिन्नस्वभाव एवाज्ञानादिर्दोषो[8]ऽभ्यूह्यते । तद्धेतुः पुनरावरणं कर्म जीवस्य पूर्वस्वपरिणामश्च । स्वपरिणाम[9]हेतुक एवाज्ञानादिरित्ययुक्तं, तस्य कादाचित्कत्वविरोधा[10]ज्जीवत्वादिवत्[11] । परपरिणाम[12]हेतुक एवेत्यपि न[13] व्यवतिष्ठते, मुक्तात्मनोपि तत्प्रसङ्गात्[14], सर्वस्य[15] कार्यस्योपादानसहकारिसामग्रीजन्यतयोपगमात्तथा प्रतीतेश्च । तथा च दोषो जीवस्य स्वपरपरिणामहेतुकः, कार्यत्वान्माषपाकवत् । नन्वेवं[16] निश्शेषावरणहानौ दोषहानेः सामर्थ्यसिद्धत्वा[17]द्दोषहानौ वावरण[18]हानेरन्यतरहानिरेव निश्शेषतः साध्येति चेन्न, दोषावरणयोर्जीवपुद्गलपरिणामयोरन्योन्यकार्यकारणभावज्ञापनार्थत्वादुभयहानेर्निश्शेषत्वसाधनस्य[19] । दोषो हि तावदज्ञानं ज्ञानावरणस्योदये जीवस्य स्याददर्शनं दर्शनावरणस्य, मिथ्यात्वं दर्शनमोहस्य, विविधमचारित्रमनेकप्रकारचारित्रमोहस्य, अदानशीलत्वादिर्दानाद्यन्तरायस्येति, तथा[20] ज्ञानदर्शनावरणे तत्प्रदोष[21]निन्हव[22]मात्सर्या[23]न्तराया[24]ऽऽसादनो[25]पघाते[26]भ्यो[27] जीवमास्र[28]वतः[29], केवलिश्रुतसंघधर्मदेवावर्णवादाद्दर्शनमोहः, कषायोदयात्तीव्रपरिणामाच्चारित्रमोहः, विघ्नकरणादन्तराय इति तत्त्वार्थे प्ररूपणात् । समर्थयिष्यते चायं कार्यकारणभावो दोषावरणयोः "कामादिप्रभवश्चित्रः कर्मबन्धानुरूपतः" इत्यत्र । अथ[30] दोष एवाविद्या[31]तृष्णा[32]लक्षणश्चेतसो[33]ऽनादितद्वासनोद्भूतः संसारहेतुर्नावरणं पौद्गलिकं, तेन मूर्तिमता चित्तस्यामूर्तस्यावरणायोगादिति वदतो बौद्धान्निराकर्तुमावरणग्रहणं, मूर्तिमतापि मदिरादिना चित्तस्यामूर्तस्यावरणदर्शनात्, तत्[34]सम्बन्धाद्विभ्रमसंवेदनादन्यथा तदनुपपत्तेः । मदिरादिनेन्द्रियाण्येवाव्रियन्ते इति चेन्न तेषामचेतनत्वे तदावरणासंभवात् स्थाल्यादिवद्विभ्रमायोगात् । चेतनत्वे[35] तेषाममूर्तत्वेपि मूर्तिमतावरणमायातमिति प्रायेणान्यत्र[36] चिन्तितम् । ततो दोषहानिवदावरणहानिरपि निश्शेषा क्वचित्साध्या, तदावरणस्य दोषादन्यस्य मूर्तिमतः प्रसिद्धेः । अत[37] एव लोष्टादौ निश्शेषदोषावरणनिवृत्तेः सिद्धसाध्यतेत्यसमीक्षिताभिधानं[38], साध्यापरिज्ञानात्* । प्रध्वंसाभावो हि दोषावरणयोः साध्यो न पुनरत्यन्ताभावः, तस्यानिष्टत्वात्[39], सदा[40]त्मनो मुक्तिप्रसङ्गात् । नापीतरेतरा[41]भावः, तस्य[42] प्रसिद्धत्वात्,

---

१ निःशेषहानौ । २ प्रसिद्धो दृष्टान्त इति वचनात् । ३ द्वित्रादिवर्णिकामारभ्य षोडशवर्णिकापर्यन्तं हीयमानम् । ४ जैनैः । ५ दोषावरणयोरिति द्विवचनसामर्थ्यात् । ६ स्वपरौ जीवकर्मणी । ७ सदर्थम् । ८ रागद्वेषादि । ९ सौगतमतम् । १० स्वपरिणामस्तु नित्यः परिणामस्य गुणरूपस्य यावद्द्रव्यभावित्वे सति सकलपर्यायानुवर्तित्वं गुणत्वमिति लक्षणेन नित्यत्वप्रतिपादनात् । अज्ञानादिस्त्वनित्य इत्यतो विरोधः । ११ जीवत्वादिगुणस्य यथा कादाचित्कत्वविरोधोऽस्य नित्यत्वात् । १२ सांख्यैः । १३ जैनैः । १४ अज्ञानादिकर्मरेणूनां मुक्तात्मनापि सम्बन्धप्रसङ्गात् । १५ जैनमते एवमभिमतम् । १६ दोषस्यावरणकार्यत्वप्रतिपादनप्रकारेण । १७ कारणनाशे कार्यनाशनियमात् । १८ अत्रापि कारणनाशे कार्यनाशनियमो हेतुः । १९ अन्योन्यकार्यकारणभावज्ञापनार्थं ह्युभयहानिनिश्शेषत्वसाधनम् । २० दोषं प्रत्यावरणस्य कारणत्वं प्रतिपाद्येदानीमावरणं प्रति दोषस्य कारणत्वमावेदयन्ति । २१ तत्प्रदोषो ज्ञानदर्शनप्रद्वेषः । २२ निन्हवमाच्छादनम् । २३ मात्सर्यं निन्दा तिरस्कारश्च । २४ विघ्नकरणमन्तरायः । २५ आसादनं शास्त्रादेर्विराधनम् । २६ अध्येतॄणां पीडाकरणमुपघातः । २७ एभ्यः कारणेभ्यो ज्ञानदर्शनावरणद्वयं जीवेन सह बन्धं याति । २८ हेतुतः । २९ आस्रवतीत्यध्याहार्यं पदम् । ३० सौगताशङ्का । ३१ अविद्या मिथ्याज्ञानम् । ३२ भोगाभिलाषस्तृष्णा । ३३ चित्तक्षणस्य आत्मन इत्यर्थः । ३४ तेन मदिरादिना । ३५ अभ्युपगते । ३६ श्लोकवार्तिके । ३७ अतिशायनादेव । ३८ बौद्धस्य । ३९ अनिष्टस्य साध्यत्वाभावात् । ४० कुतः ? यतः । ४१ आत्मा दोषावरणं न तथात्मा नेति इतरेतराभावः । ४२ इतरेतराभावस्यात्मनि कर्माद्यपेक्षया प्रसिद्धत्वात् ।

दोषावरणयोरनात्मत्वादात्मनश्चादोषावरणस्वभावत्वात् । प्रागभावोपि न साध्यस्तत[1] एव, प्राग[2]विद्यमानस्य दोषावरणस्य स्वकारणादात्मनि प्रादुर्भावाभ्युपगमात् । न च लोष्टादौ दोषावरणयोः प्रध्वंसाभावः संभवति, तस्य भूत्वा भवनलक्षण[3]त्वात् तयोस्तत्रा[4]त्यन्तमभावात् । तन्न सिद्धसाध्यता । नन्वेवं, दोषावरणयोर्हा[5]नेरतिशायनान्निश्शेषतायां साध्यायां बुद्धेरपि किन्न परिक्षयः स्याद्विशेषाभावाद[6]तोनैकान्तिको हेतुरित्यशिक्षितलक्षितं*, चेतनादिगुणव्या[7]वृत्तेः सर्वात्मना पृथिव्या[8]देरभिमतत्वा[9]त् [10]। ननु च पृथिव्यादौ सर्वा[11]त्मना चेतनादिगुणप्रध्वंसाभावस्याभावा[12]द्बुद्धिहान्यानैका[13]न्तिकमेवातिशायनमित्यप्यनवबोधविजृम्भितं, पृथिव्यादौ पुद्गले पृथिवीकायिकादिभिरात्मभिः शरीरत्वेन गृहीते स्वायुपःक्षयात्त्यक्ते चेतनादिगुणस्य व्यावृत्तेः सर्वात्मना प्रध्वंसाभावरूपत्वेन स्याद्वादिभिरभिमतत्वात्, " न हि स कश्चित्पुद्गलोस्ति यो न जीवैरसकृद्भुक्तोज्झितः " इति वचनात् । प्रसिद्धश्च पृथिव्यादौ चेतनादिगुणस्याभावः, अनु[14]पलम्भान्यथानुपपत्तेः । अदृश्या[15]नुपलम्भादभावा[16]सिद्धिरित्ययुक्तं, परचैतन्यनिवृत्तौ[17]वारेकापत्तेः, संस्कर्तॄणां पातकित्वप्रसङ्गाद्, बहुलमप्रत्यक्षस्यापि रोगादेर्विनिवृत्तिनिर्णयात्* । स्यान्म[18]तं ते, 'व्यापारव्याहाराकारविशेष[19]व्यावृत्तिसम[20]यवशात्तादृशं[21] लोको विवेचयति ।—नास्त्यत्र मृतशरीरे चैतन्यं व्यापारव्याहाराकारविशेषानुपलब्धेः, कार्यविशेषानुपलम्भस्य का[22]रणविशेषाभावाविनाभावित्वात्, चान्दनादिधूमानुपलम्भस्य तत्समर्थचान्दनादिपावकाभावाविनाभावित्ववत् । तथा नास्त्यस्य रोगो ज्वरादिः, स्पर्शादिविशेषानुपलब्धेर्भूतग्रहा[23]दिर्वा, चेष्टाविशेषानुपलब्धेः । सम्यग्वैद्यशास्त्रभूततन्त्रादिसमयवशादत्यन्ताभ्यस्तचैतन्यरोगादिकार्यविशेषाणां लोकानां तद्विवेकोपपत्तिः'इति, तदेतत्[24]पृथिव्यादौ सर्वात्मना चेतनादिगुणव्यावृत्तावपि समानम् ।—नास्त्यत्र भस्मादिपृथिव्यादौ पृथिवीचेतनादिगुणः, व्यापारव्याहाराकारविशेषव्यावृत्तेरिति समयवशात्तत्सिद्धान्तविल्लोको विवेचयति । स्यादाकूतं ते[25], 'व्यापारादिविशेषस्यानुपलब्धे[26]स्तज्जननसमर्थचेतनादिगुणव्यावृत्तिसिद्धावपि तज्जननासमर्थचेतनादिव्यावृत्त्यसिद्धेर्न सर्वात्मना तद्व्यावृत्तिसिद्धिः'इति, तदसमञ्जसं, व्यापाराद्यशेषकार्यजननासमर्थस्य शरीरिणां चेतनादेरसम्भवात्, संभवे वा शरीरित्वविरोधा[27]त् । ततः का[28]र्यविशेषानुपलब्धेः सर्वात्मना चेतनादिगुणव्यावृत्तिः पृथिव्यादेः सिध्यत्येव, मृतशरीरादेः परचैतन्यरोगादिनिवृत्तिवत् । यदि पुनर[29]यं निर्बन्धः सर्वत्र विप्रकर्षिणा[30]मभावा[31]सिद्धे[32]स्तदा कृतकत्वधूमादेर्विनाशानलाभ्यां [33]व्याप्तेरसिद्धेर्न [34]कश्चिद्धेतुः ।

---

१ प्रसिद्धत्वादेव । २ प्रसिद्धत्वे हेतुमाह । ३ घटो भूत्वा कपालभवनमेव प्रध्वंसाभावः । ४ लोष्टादावत्यन्ताभावेन वर्तनात् । ५ दोषावरणबुद्धीनामतिशायनगुणेन कृत्वा विशेषो यतो नास्ति । ६ यतो न हि बुद्धिपरिक्षयः । ७ प्रध्वंसाभावस्य । ८ आदिपदेन शरीर गृह्यते, उत्तरत्र व्यापारव्याहारव्यावृत्तेरपि वक्ष्यमाणत्वात् । ९—रप्यभिमतत्वादिति पाठान्तरम् । १० पृथिव्यां चेतनगुणव्यावृत्तिर्वर्तते एवातो नानेकान्तः । ११ सामस्त्येन । १२ चेतनादिगुणस्य तत्रात्यन्ताभावात् । १३ बुद्धिहानेरतिशायित्वेपि सर्वात्मना पृथिव्यादौ चेतनादिगुणप्रध्वंसाभावो नास्ति, यतोनेकान्तः । १४ अन्यथा—चेतनादिगुणसद्भावे तदभावोपलम्भाभावप्रसक्तेः । १५ अदृश्यश्चेतनगुणः । १६ चेतनादिगुणस्य । १७ अदृश्यानुपलम्भस्याभावासाधकत्वे सति परशरीरगतचैतन्यस्य निवृत्तावप्यारेका स्यात् । १८ खपुस्तके ते इति पदं नास्ति । १९ व्यापारः—दिशेपश्वलनादिः । व्याहारविशेषो वचनविशेषः । आकारविशेषश्च । २० समय सङ्केतः । २१ चैतन्याभावविशिष्टम् । २२ कारण=चैतन्यम् । २३ नास्ति । २४ पूर्वोक्तं मतम् । २५ मीमांसकस्य । २६ तत्=व्यापारव्याहारादि । २७ मुक्तात्मवत् । २८ कार्य=व्यापारादि । २९ अदृश्यानुपलम्भात्सर्वात्मना चेतनादिगुणव्यावृत्तिर्न सिध्यत्येवेति । ३० रामरावणवेदकर्त्रादीनाम् । ३१ किन्तु भावसिद्धेरेव मीमांसकस्य स्यात् । ३२ जैन । ३३ यद्विनाशि न भवति तत्कृतकं न भवति, यत्राग्निर्नास्ति तत्र धूमोपि नास्तीति च व्यतिरेकव्याप्तेरसिद्धेः । ३४ बौद्धमतेऽदृश्यानुपलम्भादभावसिद्धिर्नास्ति तत परस्परमसस्पृष्टाना परमाणूनां विकल्पबुद्धावप्रतिभासनात्तेपामभावासिद्धिः ।

ततः शौद्धोदनिशिष्यकाणामनात्मनीनमेतत्, अनुमानोच्छेदप्रसङ्गात्* । न हि जैमिनीयमतानुसारिणो विप्रकर्षिणामर्थानामभावासिद्धिमनुमन्यन्ते, वेदे कर्त्रऽभावासिद्धिप्रसङ्गात् सर्वज्ञाद्यभावसाधनविरोधाच्च । ते तामनुमन्यमाना वा शौद्धोदनिशिष्यका एव । न चैषामेतदात्मनीनं, अनुमानोच्छेदस्य दुर्निवारत्वात्, साध्यसाधनयोर्व्याप्त्यसिद्धेः । परोपगमाद्व्याप्तिसिद्धेर्नानुमानोच्छेद इति चेन्न, तस्यापि परोपगमान्तरात्सिद्धावनवस्थाप्रसङ्गात् तस्यानुमानात्सिद्धौ परस्पराश्रयप्रसङ्गात् । प्रसिद्धेनुमाने ततः परोपगमस्य सिद्धिस्तत्सिद्धौ च ततो व्याप्तिसिद्धेरनुमानप्रसिद्धिरिति । ततो न श्रेयानयं निर्बन्धः सर्वात्मना चेतनादिगुणव्यावृत्तिः पृथिव्यादेर्न सिद्ध्यत्येवेति । तत्प्रसिद्धौ च न बुद्धिहान्या हेतोर्व्यभिचारः, तस्याः सपक्षत्वात् । तथा हि । यस्य हानिरतिशयवती तस्य कुतश्चित्सर्वात्मना व्यावृत्तिः, यथा बुद्ध्यादिगुणस्याश्मनः । तथा च दोषादेर्हानिरतिशयवती कुतश्चिन्निवर्त्तयितुमर्हति सकलं कलङ्कमिति कथमकलङ्कसिद्धिर्न भवेत् ?*

ननु च यदि प्रध्वंसाभावो हानिस्तदा सा पौद्गलिकस्य ज्ञानावरणादेः कर्मद्रव्यस्य न संभवत्येव नित्यत्वात् तत्पर्यायस्य तु हानावपि कुतश्चित् पुनः प्रादुर्भावान्न निश्शेषा हानिः स्यात् । निश्शेषकर्मपर्यायहानौ वा कर्मद्रव्यस्यापि हानिप्रसङ्गः, तस्य तदविनाभावात् । तथा च निरन्वयविनाशसिद्धेरात्मादिद्रव्याभावप्रसङ्ग इति कश्चित् सोप्यनवबुद्धसिद्धान्त एव । यस्मात्, मणेर्मलादेर्व्यावृत्तिः क्षयः, सतोत्यन्तविनाशानुपपत्तेः । तादृगात्मनोपि कर्मणो निवृत्तौ परिशुद्धिः* । प्रध्वंसाभावो हि क्षयो हानिरिहाभिप्रेता । सा च व्यावृत्तिरेव मणेः कनकपाषाणाद्वा मलस्य किट्टादेर्वा । न पुनरत्यन्तविनाशः । स हि द्रव्यस्य वा स्यात्पर्यायस्य वा ? न तावद्द्रव्यस्य, नित्यत्वात् । नापि पर्यायस्य द्रव्यरूपेण ध्रौव्यात् । तथा हि । विवादापन्न मण्यादौ मलादि पर्यायार्थतया नश्वरमपि द्रव्यार्थतया ध्रुवं, सत्त्वान्यथानुपपत्तेः । शब्देन व्यभिचार इति चेन्न, तस्य द्रव्यतया ध्रौव्याभ्युपगमात् । विद्युत्प्रदीपादिभिरनेकान्त इत्ययुक्त, तेषामपि द्रव्यत्वतो ध्रुवत्वात्, क्षणिकैकान्ते सर्वथार्थक्रियाविरोधस्याभिधानात् । ततो यादृशी मणेर्मलादेर्व्यावृत्तिर्हानिः परिशुद्धिस्तादृशी जीवस्य कर्मणां निवृत्तिर्हानिः । तस्या च सत्यामात्यन्तिकी शुद्धिः सम्भाव्यते, सकलकर्मपर्यायविनाशेपि कर्मद्रव्यस्याविनाशात्तस्याकर्मपर्यायाक्रान्ततया परिणमनाद्, मलद्रव्यस्य मलात्मकपर्यायतया निवृत्तावप्यमलात्मकपर्यायाविष्टतया परिणमनवत् । तदेतेन तुच्छः प्रध्वंसाभावः सर्वत्र प्रत्याख्यातः, कार्योत्पादस्यैव पूर्वाकारक्षयरूपत्वप्रतीतेः । समर्थयिष्यते चैतत् "कार्योत्पादः क्षयो हेतोर्नियमात्" इत्यत्र । तेन मणेः कैवल्यमेव मलादेर्वैकल्यम् । कर्मणोपि वैकल्यमात्मकैवल्यमस्त्येव ततो नातिप्रसज्यते* । द्रव्यार्थतया बुद्धेरात्मन्यप्यविनाशात्सर्वात्मना परिक्षयाप्रसङ्गात् पर्यायार्थतया परिक्षयेपि सिद्धान्ताविरोधात् । ननु च यथा कर्मद्रव्यस्य कर्मस्वभावपर्यायनिवृत्तावप्यकर्मात्मकपर्यायरूपतयावस्थानं तथात्मनो बुद्धिपर्यायतया

१ (जैमिनीयानाम्) मीमांसकानाम् । २ अन्यथा । ३ भावसिद्धिमित्यर्थ । ४ ततो वेदस्य सकर्तृकत्व स्यात् । ५ प्रतिपादनम् । ६ स्वकीयम् । ७ अनुमानोच्छेदस्य दुर्निवारत्वम् । ८ पाषाणात् । ९ आत्मनः । १० द्रव्यभावरूपम् । ११ अकलङ्कस्य=परमसर्वज्ञस्याकलङ्कदेववचसो वा । १२ तटस्थो जैन । १३ भूत्वाभवनलक्षण । १४ द्रव्यत्वेन । १५ कारणात् । १६ तत्पर्यायस्य । १७ सकाशात् । १८ एकस्माद्द्वितीयस्य व्यावृत्तिरेव क्षय इष्यते सैद्धान्तिकानाम् । १९ यथा व्यावृत्तिरिति शेष । २० ध्रौव्यमन्तरेण । २१ शब्दो नश्वर. सत्त्वादित्यपि वक्तुं शक्यत्वात् । किं तात्पर्यम ? सत्त्वान्यथानुपपत्तिरूपो हेतु शब्दस्य नश्वरत्वमेव साधयति, न तु ध्रौव्यमित्यर्थ । २२ विद्युदादीनां सत्त्वेपि द्रव्यार्थतया ध्रौव्याभावादनेकान्त इत्यर्थ । २३ पुद्गलद्रव्यत्वत. । २४ कर्मद्रव्यस्य । २५ पुद्गलद्रव्यस्यात्मनि पारतन्त्र्यकरणे कर्मत्वपरिणामस्तदकरणेऽकर्मत्वपरिणाम इति सिद्धान्त । २६ यथा घटपटादि । २७ कारिकायाम् । २८ निःशेषकर्मपर्यायहानौ वा कर्मद्रव्यस्यापीत्यादिनोक्तप्रकारेण । यथा कर्मवैकल्येप्यात्मकैवल्यं तथा बुद्धिवैकल्येप्यात्मकैवल्यमस्त्विति वाऽतिप्रसङ्गो नेति भाव । २९ सौगत ।

निवृत्तावप्यबुद्धिरूपपर्यायतयावस्थानात् सिद्धान्तविरोध एवेत्यतिप्रसज्यते इति चेन्न, वैषम्यात् । कर्मद्रव्यं हि पुद्गलद्रव्यम् । तस्यात्मनि पारतन्त्र्यं कुर्वतः कर्मत्वपरिणामस्तदकुर्वतोऽकर्मत्वपरिणामेनावस्थानं, रूपादिमत्त्वसामान्यलक्षणत्वात्पुद्गलद्रव्यस्य कर्मत्वलक्षणत्वाभावादविरुद्धमभिधीयते । बुद्धिद्रव्यं तु जीवः । तस्य बुद्धिः पर्यायः । तत् सामान्यं लक्षणम्, "उपयोगो लक्षणम्" इति वचनात् । न च लक्षणाभावे लक्ष्यमवतिष्ठते, तस्य तदलक्षणत्वप्रसक्तेर्येनाबुद्धिपर्यायात्मकतयावस्थानं जीवस्य निःशेषतो बुद्धिपरिक्षयेऽप्यविरुद्धं स्यात् । नन्वेवमज्ञानादेर्दोषस्य पर्यायार्थतया हानिर्निरशेषा सिध्येदावरणवन्न पुनर्द्रव्यार्थतया बुद्धिवत् । ततो दोषसामान्यस्यात्मन्यवस्थानान्न निर्दोषत्वसिद्धिरित्यपरः, सोऽप्यतत्त्वज्ञ एव, यतः प्रतिपक्ष एवात्मनामागन्तुको मलः परिक्षयी स्वनिर्ह्रासनिमित्तविवर्द्धनवशात्* । द्विविधो ह्यात्मनः परिणामः स्वाभाविक आगन्तुकश्च । तत्र स्वाभाविकोऽनन्तज्ञानादिरात्मस्वरूपत्वात् । मलः पुनरज्ञानादिरागन्तुकः, कर्मोदयनिमित्तकत्वात् । स चात्मनः प्रतिपक्ष एव । ततः परिक्षयी । तथा हि । यो[14] यत्रागन्तुकः स तत्र स्वनिर्ह्रासनिमित्तविवर्द्धनवशात्परिक्षयी । यथा जात्यहेम्नि ताम्रादिमिश्रणकृतः कालिकादिः । आगन्तुकश्चात्मन्यज्ञानादिर्मलः । इति स्वभावहेतुः । न तावदयमसिद्धः । कथम्? यो[16] यत्र कादाचित्कः स तत्रागन्तुकः । यथा स्फटिकाश्मनि लोहिताद्याकारः । कादाचित्कश्चात्मनि दोष इति । न चेदं कादाचित्कत्वमसिद्धं, सम्यग्ज्ञानादिगुणाविर्भावदशायामात्मनि दोषानुपपत्तेः । ततः प्राक्तत्सद्भावाद्गुणाविर्भूतिदशायामपि तिरोहितदोषस्य सद्भावान्न कादाचित्कत्वं, सातत्यसिद्धेरिति चेन्न, गुणस्याप्येवं सातत्यप्रसङ्गात् । तथा च हिरण्यगर्भादेर्वेदार्थज्ञानकालेऽपि वेदार्थाज्ञानप्रसङ्गः । ज्ञानाज्ञानयोः परस्परविरुद्धत्वादेकत्रैकदा न प्रसङ्ग इति चेत्तत एव सकलगुणदोषयोरेकत्रैकदा प्रसङ्गो मा भूत् । पुनर्दोषस्याविर्भावदर्शनाद्गुणकालेऽपि सत्तामात्रसिद्धिरिति चेत्तर्हि गुणस्यापि पुनराविर्भूतिदर्शनाद्दोषकालेऽपि सत्तामात्रसिद्धिः, सर्वथा विशेषाभावात् । तथा चात्मनो दोषस्वभावत्वसिद्धिवद्गुणस्वभावत्वसिद्धिः कुतो निवार्येत? विरोधादिति चेद्दोषस्वभावत्वसिद्धिरेव निवार्यतां, तस्य गुणस्वभावत्वसिद्धेः । कुतः सेति[28] चेद्दोषस्वभावत्वसिद्धिः कुतः? संसारित्वान्यथानुपपत्तेरिति चेत्तत्संसारित्वं सर्वस्यात्मनो यद्यनाद्यनन्तं तदा प्रतिवादिनोऽसिद्धं, प्रमाणतो मुक्तिसिद्धेः । कुत इति चेदिमे ब्रूमहे । क्वचिदात्मनि संसारोऽत्यन्तं निवर्तते तत्कारणात्यन्तनिवृत्त्यन्यथानुपपत्तेः । संसारकारणं हि मिथ्यादर्शनादिकमुभयप्रसिद्धं क्वचिदत्यन्तनिवृत्तिमत्, तद्विरोधिसम्यग्दर्शनादिपरमप्रकर्षसद्भावात् । यत्र यद्विरोधिपरमप्रकर्षसद्भावस्तत्र तदत्यन्तनिवृत्तिमद्भवति । यथा चक्षुषि तिमिरादि । नेदमुदाहरणं साध्यसाधनधर्मविकलं, कस्यचिच्चक्षुषि तिमिरादेरत्यन्तनिवृत्तिमत्त्वप्रसिद्धेस्तद्विरोधिविशिष्टाञ्जनादिपरमप्रकर्षसद्भावसिद्धेश्च निर्विवादक-

---

१ जैनः । २ दृष्टान्तदार्ष्टान्तिकयो । ३ आदिपदेन रसगन्धवर्णाः । ४ लक्षणस्य । ५ तत्=लक्ष्यम् । ६ अपि तु न स्यात् । ७ सतोऽत्यन्तविनाशानुपपत्ति[illegible] । ८ मीमांसकः । ९ अज्ञानादिर्दोषः । १० पृथक्करणेन [illegible] विनाश । [illegible] । ११ निर्ह्रास[illegible] १२ मलनिर्ह्रासस्य [illegible] निमित्तं सम्यग्दर्शनादिगुणस्तस्य विवर्द्धनवशाद्धेतो । १३ कर्म ज्ञानावरणादि । १४ अज्ञानादिर्मल आत्मनि स्व[illegible] निर्ह्रासनिमित्तविवर्द्धनवशात्परिक्षयी, आगन्तुकत्वादित्यध्याहार्यम् । १५ स्वनिर्ह्रासनिमित्तविवर्द्धनवशात्परिक्षयी प्रसिद्ध[illegible] । १६ आत्मन्यज्ञानादिर्मल आगन्तुकः कादाचित्कत्वादित्यध्याहार्यम् । १७ दोषस्वभावत्वं जीवानामिच्छन् मीमांसकः प्राह । १८ गुणाविर्भूतेः प्राक् । १९ स दोष । २० ब्रह्मादिज्ञानस्य । २१ दोषप्रकारेण । २२ गुणसद्भावकालेऽपि तिरोहितदोषसद्भावेऽङ्गीक्रियमाणे । २३ आत्मनः । २४ आत्मनो गुणस्वभावत्वसिद्धिः । २५ आत्मनः । २६ आत्मनो दोषस्वभावत्वमन्तरा संसारित्वं न स्यात्ततो दोषस्वभावत्वसिद्धिरिति मीमांसकः । २७ जैन । २८ मुक्तिसिद्धिः कुतः । २९ वयं जैनाः । ३० तत्कारण=मिथ्यादर्शनादि । ३१ मिथ्याज्ञानवशात् सम्यग्ज्ञानाभाव इति प्रतिवादिनोऽपि सिद्धम् । ३२ यस्य ।

त्वात् । कथं मिथ्यादर्शनादिविरोधि सम्यग्दर्शनादि निश्चीयते इति चेत् तत्प्रकर्षे[1] तदपकर्षदर्शनात्[2]। यद्धि प्रकृष्यमाण यदपकर्षति तत् तद्विरोधि सिद्धम् । यथोष्णस्पर्शः प्रकृष्यमाणः शीतस्पर्शमपकर्षंस्तद्विरोधी । मिथ्यादर्शनादिकमपकर्षति च प्रकृष्यमाणं क्वचित्सम्यग्दर्शनादि तत् तद्विरोधि । कथं पुनः सम्यग्दर्शनादेः क्वचित्परमप्रकर्षसद्भावः सिद्ध इति चेत्प्रकृष्यमाणत्वात्[3] । यद्धि प्रकृष्यमाणं तत्क्वचित्परमप्रकर्षसद्भावभाग्दृष्टम् । यथा नभसि परिमाणम् । प्रकृष्यमाणं च सम्यग्दर्शनादि । तस्मात्परमप्रकर्षसद्भावभाक् । परत्वापरत्वाभ्यां व्यभिचार[4] इति चेन्न, तयोरपि सपर्यन्ते[5]जगद्धादिनां परमप्रकर्षसद्भावभाक्त्वसिद्धेः । न चापर्यन्तं जगदिति वक्तुं शक्यं, विशिष्टसन्निवेशत्वात्पर्वतवत् । यत्पुनरपर्यन्तं तन्न विशिष्टसन्निवेशं सिद्धं, यथा व्योम । विशिष्टसन्निवेशं च जगत् तस्मात्सर्वतः सपर्यन्तमिति निगदितमन्यत्र[6] । संसारेणानेकान्त[7] इति चेन्न तस्याप्यभव्यजीवेषु परमप्रकर्षसद्भावसिद्धौ प्रकृष्यमाणत्वेन प्रतीतेः । एतेन मिथ्यादर्शनादिभिर्व्यभिचारः प्रत्याख्यातः[8], तेषामप्यभव्येषु परमप्रकर्षसद्भावात् । ततो नानैकान्तिकं प्रकृष्यमाणत्वं परमप्रकर्षसद्भावे साध्ये । नापि विरुद्धं, सर्वथा विपक्षाद्व्यावृत्तेः[9] । इति क्वचिन्मिथ्यादर्शनादिविरोधि=सम्यग्दर्शनादि=परमप्रकर्षसद्भावं साधयति[10] । स च सिध्यन्मिथ्यादर्शनादेरत्यन्तनिवृत्तिं गमयति । सा च गम्यमाना स्वकार्य[11]संसारात्यन्तनिवृत्तिं निश्चाययति । यासौ संसारस्यात्यन्तनिवृत्तिः सा मुक्तिरिति । तदन्यथा[12]नुपपत्तेरात्मनो ज्ञानादिगुणस्वभावत्वसिद्धेर्न दोषस्वभावत्वसिद्धिः, विरोधात्[13] । प्रसिद्धायां क्वचिदात्मनि निःश्रेयसभाजि गुण[14]स्वभावतायामभव्यादावपि तन्निर्णयः[15], जीवत्वान्यथा[16]नुपपत्तेः । प्रसिद्धे च सर्वस्मिन्नात्मनि ज्ञानादिगुणस्वभावत्वे दोषस्वभावत्वासिद्धेः सिद्धं दोषस्य कादाचित्कत्व[17]मागन्तुकत्वं साधयति । ततः स[18] एव परिक्षयी स्वनिर्ह्रासनिमित्तविवर्द्धनवशादिति सुस्पष्टमाभाति, दोषनिर्ह्रासनिमित्तस्य सम्यग्दर्शनादेर्विशेषेण वर्द्धनप्रसाधनात् । इत्यावरणस्य[19] द्रव्यकर्मणो दोषस्य च भाव[20]कर्मणो भूभृत इव महतोत्यन्तनिवृत्तिसिद्धेः कर्मभूभृतां भेत्ता मोक्षमार्गस्य प्रणेता स्तोतव्यः समवतिष्ठते विश्वतत्त्वाना ज्ञाता च ।

ननु[21] निरस्तोपद्रवः सन्नात्मा कथमकलङ्कोपि विप्रकर्षिणमर्थं[22] प्रत्यक्षीकुर्यात्* । न हि नयनं निरस्तोपद्रव विगलिततिमिरादिकलङ्कपटलमपि देशकालस्वभावविप्रकर्ष[23]भाजमर्थं प्रत्यक्षीकुर्वत् प्रतीतं, स्वयो[24]ग्यस्यैवार्थस्य तेन प्रत्यक्षीकरणदर्शनात् । निरस्तग्रहोपरागाद्युपद्रवोपि दिवसकरः प्रतिहतघनपटलकलङ्कश्च स्वयोग्यानेव वर्त्तमानार्थान् प्रकाशयन्नुपलब्धो नातीतानागतानर्थानयोग्यानिति जीवोपि निरस्तरागादिभावकर्मोपद्रवः सन् विगलितज्ञानावरणादिद्रव्यकर्मात्मककलङ्कोपि च कथं विप्रकृष्टमर्थमशेषं प्रत्यक्षीकर्तुं प्रभुः [26] मुक्तात्मा भवन्नपि न चोदनाप्रामाण्यप्रतिबन्धविधायी, धर्मादौ[24] तस्या[25] एव प्रामाण्यप्रसिद्धेः मुक्तात्मनस्तत्राप्रमाणत्वात्तस्यानन्दादिस्वभावपरिणामेपि धर्मज्ञत्वाभावादप्रतिषेध्यत्वात्[26] । तदुक्तं, " धर्मज्ञत्व-

---

१ तस्य सम्यग्दर्शनादे । २ तस्य मिथ्यादर्शनस्य । ३ तरतमभावेन वर्द्धमानत्वात् । ४ प्रकृष्यमाणेपि परत्वापरत्वे न परमप्रकर्षभाजीत्याभ्यां हेतोर्व्यभिचार । ५ पर्यन्तेन (परिमाणेन) सह वर्तमानं सपर्यन्तं तच्च जगत् । ६ श्लोकवार्तिकादौ । ७ संसारस्य परमप्रकर्षसद्भावाभावेपि प्रकृष्यमाणत्वरूपहेतोर्दर्शनात् । ८ मिथ्यादर्शनादीना परमप्रकर्षाभावेपि प्रकृष्यमाणत्वहेतोर्दर्शनादनेकान्त प्रत्याख्यात । ९ परमप्रकर्षरहितात् । १० प्रकृष्यमाणत्वमिति कर्तृपदमध्याहार्यम् । ११ स्वकार्यं संसारस्तस्य । १२ ज्ञानादिगुणस्वभावत्वाभावे । १३ उभयमेकत्रैकदा विरुध्यते यत । १४ चेतनागुणस्वभावतायाम् । १५ ज्ञानगुणस्वभावत्वनिर्णयोस्ति । १६ गुणस्वभावत्वमन्तरा । १७ साधनम् । १८ आगन्तुको मलः । १९ ज्ञानावरणस्य । २० अज्ञानादे । २१ मीमांसकः । २२ विप्रकर्षशब्दो देशकालस्वभावशब्दैः प्रत्येकमभिसम्बध्यते । २३ देशकालाद्यविप्रकृष्टस्य । २४ धर्मादिस्थापने । २५ चोदनायाः । २६ नन्वानन्दादिस्वभावोपि नास्तीत्यत्राह ।— आनन्दादिस्वभावस्याप्रतिषेधादिति ।

निषेधस्तु केवलोऽत्रोप[1]युज्यते। सर्वमन्यद्विजानँस्तु पुरुषः केन वार्यते ॥१॥" इति वदन्तमिव स्तोतुं[2] प्रश्नाति[3]-शयचिकीर्षया भगवन्तं प्रत्याहु[4]ः।—

**सूक्ष्मान्तरितदूरार्थाः प्रत्यक्षाः कस्यचिद्यथा। अनुमेयत्व[5]तोऽग्न्यादिरिति सर्वज्ञसंस्थितिः ॥५॥**

सूक्ष्माः स्वभावविप्रकर्षिणोऽर्थाः परमाण्वादयः, अन्तरिताः कालविप्रकर्षिणो रामादयो, दूरास्तु देश-विप्रकर्षिणो हिमवदादयस्ते कस्यचित्प्रत्यक्षा, अनुमेयत्वाद्यथाऽग्न्यादिरित्येवं सर्वज्ञस्य सम्यक् स्थितिः स्यात्। अथ मत[6]मेतत् "सूक्ष्मादयोऽर्था यथा[7]भूताः कस्यचित्प्रत्यक्षा दृष्टास्तथाभूता एव तथा[8]नुमेयत्वेन साध्यन्तेऽन्यथा[9]भूता वा? यथाभूताश्चेत्सिद्धसाध्यता, सूक्ष्माणां सहस्रधा भिन्नकेशाग्रादीनामन्तरितानां च प्रपितामहादीनां दूरार्थानां च हिमवदादीनां कस्य[10]चित्प्रत्यक्षत्वप्रसिद्धेः। अन्यथाभूतानां तु कस्यचि-त्प्रत्यक्षत्वसाधनेऽनुमेयत्वादित्यप्रयोजको हेतुः क्ष्माधरादीनां बुद्धिमत्कारणत्वे साध्ये सन्निवेशविशिष्ट-त्वादिव[11]त्। धर्म्यसिद्धिश्च, परमाण्वादीनामप्रसिद्धत्वात्" इति तदयुक्त, विवादाध्यासितानां सूक्ष्मा-द्यर्थानां कस्यचित्प्रत्यक्षत्वेन साध्यत्वादप्रसिद्धं साध्यमिति वचनात्। धर्मादयो हि कस्यचित्प्रत्यक्षत्वेन वादिप्रतिवादिनोर्विवादापन्नास्त एव कस्यचित्प्रत्यक्षा इति साधयितुं युक्ता न पुनरन्ये[12]। न चैवं[13] धर्म्य-सिद्धिः, धर्मादीनामसर्वज्ञवादिनोपि याज्ञिक[14]स्य सिद्धत्वात्। नन्वेवं भूधरादीनां धीमद्धेतुकतया विवा-दापन्नानां तथा साध्यत्वे कथमप्रयोजको हेतुः सन्निवेशविशिष्टत्वादिरिति चेत्स्वभावभेदात्। यादृ[15]शमभि-नवभवनादिषु सन्निवेशविशिष्टत्वमक्रियादर्शिनोपि कृतबुद्ध्युत्पादकं धीमद्धेतुकत्वेन व्याप्तं प्रतिपन्नं तादृशमेव जीर्णप्रासादादिषूपलभ्यमानं धीमद्धेतुकत्वस्य प्रयोजकं स्यान्नान्यादृशं भूधरादिषु प्रतीयमानम-कृतबुद्ध्युत्पादकमिति स्वयं मीमांसकैरभिधानात्। नैवमनुमेयत्वं, तस्य स्वभावभेदाभावात्। न[16] हि साध्याविनाभावनियमनिश्चयैकलक्षणलिङ्गजनितज्ञान[17]विषयत्वमनुमेयत्वमग्न्यादौ धर्मादौ[18] च लिङ्गिनि भिद्यते येन किञ्चि[19]त्प्रयोजकमपरमप्रयोजकमिति विभागोवतरेत्। **स्वभावकालदेशविप्रकर्षिणामनुमेय-त्वमसिद्धमित्य[21]नुमानमुत्सारयति यावान् कश्चिद्भावः स सर्वः क्षणिक इत्यादिव्याप्तेरसिद्धौ प्रकृतोपसंहारायोगादविप्र[22]कर्षिणामनुमितेरानर्थक्यात्। सत्त्वा[23]देरनित्यत्वादिना[24] व्याप्तिमिच्छ[25]तां सिद्धमनुमेयत्वमनवयवे[26]नेति न किञ्चि[27]द्व्याहतं पश्यामः।** स्यान्मतं "केचिदर्थाः प्रत्यक्षा, यथा घटादयः, केचिदनुमेया ये कदाचित्क्वचित् प्रत्यक्ष[28]प्रतिपन्नाविनाभाविलिङ्गा[29]ः, केचिदागममात्रगम्याः सर्वदा स्वभावादिविप्रकर्षिणो धर्मादयः, तेषां सर्वप्रमातृसम्बन्धिप्रत्यक्षादिगोचरत्वायोगात्। तदुक्तं "सर्वप्रमातृसम्बन्धिप्रत्यक्षादिनिवारणात्। केवलागमगम्यत्वं लप्स्य[32]ते पुण्यपापयोः" इति। ततो धर्मादीना-मनुमेयत्वमसिद्धमुद्भावयन्नपि नानुमानमुत्सार[33]यति, तस्या[34]नुमेयेर्थे व्यवस्थानात्" इति, तदसत्, धर्मादी-

---

१ मुक्तात्मनि। २ सूत्रकारस्य। ३ प्रतिज्ञातिशयेति पाठान्तरम्। ४ समन्तभद्राचार्याः। ५ अनुमातुं योग्यत्वात्। ६ मीमांसकस्य। ७ नियतदेशाद्याकाराः। ८ कस्यचित्प्रत्यक्षत्वप्रकारेण। ९ अनियतदेशाद्याकाराः। १० आधुनिकस्य। ११ क्ष्माधरादयो बुद्धिमत्कारणकाः, सन्निवेशविशिष्टत्वादित्यत्रायं हेतुरप्रयोजको, बुद्धिमत्कारणत्वमन्तरेणापि सन्नि-वेशविशिष्टत्वसिद्धेः। १२ स्वर्गादयः। १३ विवादापन्नानां साध्यत्वप्रकारेण। १४ भाट्टस्य। १५ स्वभावभेदं दर्शयति। १६ स्वभावभेदाभावं दर्शयति। १७ ज्ञानम्=अनुमानज्ञानम्। १८ पुण्यपापादौ। १९ अग्न्यादीनामनुमेयत्वम्। २० धर्मादी-नामनुमेयत्वम्। २१ इति वदन् मीमांसको बौद्धश्च स्वानुमानमुत्सारयती ( निवारयति ) त्यर्थः। २२ स्वभावदेशकालवि-प्रकर्षिणामनुमेयत्वमसिद्धमित्यङ्गीकारे यावान्कश्चिद्भाव इत्यादिव्याप्तेरसिद्धौ भावश्चायं तस्मात् क्षणिक इति प्रकृतोपसंहारा-योगः। २३ असमदादिप्रत्यक्षगोचराणाम्। २४ हेतोः। २५ क्षणिकत्वादिना सह। २६ बौद्धानाम्। २७ सामस्त्येन। २८ विरुद्धम्। २९ सौगतमीमांसकादीनाम्। ३० प्रत्यक्षेण प्रतिपन्नं ज्ञातमविनाभाविलिङ्गं येषां ते। ३१ यथाग्न्यादयः। ३२ प्राप्स्यते। ३३ मीमांसकः। ३४ अग्न्यादौ।

नामप्यनित्यत्वादिस्वभावतयानुमेयत्वोपपत्तेः । तथा हि । यावान्कश्चिद्भावः पर्यायाख्यः स सर्वोऽनेकक्षणस्थायितया क्षणिको[1] यथा घटस्तथा च धर्मादिरिति मीमांसकैरपि कुतश्चित्[3] पर्यायत्वादेरनित्यत्वेन व्याप्तिः साधनीया, तदसिद्धौ प्रकृतेपि धर्मादौ पर्यायश्च[2] धर्मादिरित्युपसंहारायोगात् । कथं चायं[4] स्वभावादिविप्रकर्षिणामनुमेयत्वमसिद्धमभिदधानः सुखादीनामविप्रकर्षिणामनुमितेरानर्थक्यं[5] परिहरेत्? शश्वद[6]विप्रकर्षिणामनुमितेरनिष्टेरदोष[7] इति चेत् क्व पुनरियमनुमितिः स्यात्[8]? कदाचिदविप्रकर्षिणामन्यदा देशादिविप्रकृष्टानां[9] प्रतिपन्नाविनाभाविलिङ्गानामनुमितिरिति चेत् कथमेवं शश्वदप्रत्यक्षाया बुद्धेरनुमानं यत इदं[10] शोभेत? "ज्ञाते त्वर्थेनुमानादवगच्छति[11] बुद्धिम्" इति । अर्थापत्तेर्बुद्धिप्रतिपत्तेरदोष इति चेद् धर्मादिप्रतिपत्तिरपि तत एवास्तु । यथैव हि बहिरर्थपरिच्छित्त्यन्यथानुपपत्तेर्बुद्धिप्रतिपत्ति[12]स्तथा श्रेयःप्रत्यवायाद्यन्यथानुपपत्त्या धर्माधर्मादिप्रतिपत्ति[13]रपि युक्ता भवितुम् । श्रेयःप्रत्यवायादेरन्यथाप्युपपत्तेः[14] क्षीणार्थापत्तिरिति चेन्न, तदुत्पत्तौ दृष्टकारणव्यभिचारा[15]ददृष्टकारणप्रतिपत्तेः, रूपादिज्ञानादिन्द्रियशक्तिप्रतिपत्तिवत्[16] । न चा[17]र्थापत्तिरनुमानादन्यैव, अनुमानस्यैवार्थापत्तिरिति नामकरणात् । ततो बुद्ध्यादेः शश्वद्विप्रकर्षि[18]णोनुमेयत्वसिद्धौ धर्मादेरपि तत्सिद्धिः[19] । ये तु ताथागतादयः[20] सत्त्वकृतकत्वादेरनित्यत्वादिना व्याप्तिमिच्छन्ति[21] तेषां सिद्धमनुमेयत्वमनवयवेनेति न किञ्चिद्व्याहतमसर्वज्ञवादिनां सर्वज्ञवादिनां[22] च, स्वभावादिविप्रकृष्टेष्वर्थेष्वनुमेयत्वव्यवस्थितेः । एतेनात्यन्तपरोक्षेष्वर्थेष्वनुमेयत्वाभावाद्भागासिद्धमनुमेयत्वमित्येतदपि प्रत्याख्यातं, तेषामपि कथञ्चिदनेकान्तात्मकत्वादि[23]स्वभावतयानुमेयत्वसिद्धेः । अथवा[24]नुमेयत्वं श्रुतज्ञानाधिगम्यत्वं हेतुः, मतेरनु पश्चान्मीयमानत्वात्[25], अनुमेयाः[26] सूक्ष्मादयोर्था इति व्याख्यानान्मतिपूर्वज्ञानस्य श्रुतत्वात्, "श्रुतं मतिपूर्वम्" इति वचनात् । न चैतदसिद्धं प्रतिवादिनो[27]पि सर्वस्य[28] श्रुतज्ञाना[29]धिगम्यत्वोपगमात् । चोदना[30] हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवंजातीयकमर्थमवगमयितुमलमिति स्वयमभिधानात् । तदुक्तं तत्त्वार्थश्लोकवार्तिके "सूक्ष्माद्यर्थोपि चाध्यक्षः कस्यचित्[31]सकलः स्फुटम् । श्रुतज्ञानाधिगम्यत्वा[32]न्नदीद्वीपाद्रिदेशवत् । १ । न हेतोः सर्वथैकान्तै[33]रनेकान्तः[34] कथञ्चन । श्रुते[35]ज्ञानाधिगम्यत्वा[36]त्तेषां दृष्टेष्ट[37]बाधनात् । २ । स्थानत्रया[38]विसंवादि[39] श्रुतज्ञानं हि वक्ष्यते । तेना[40]धिगम्यमानत्वं सिद्धं सर्वत्र वस्तुनि । ३ ।" इति । ततोनुमेयाः सूक्ष्माद्यर्थाः कस्यचित्प्रत्यक्षाः सिद्धा एव । तेऽनुमेया[41],

---

१ पर्यायापेक्षया । २ पर्यायत्वादिति हेतुरध्येय । ३ प्रमाणात् । ४ मीमासक । ५ मानसप्रत्यक्षत्वात् । ६ शश्वदित्यादिप्रकारेण परिहराम्यहं मीमासक । ७ विप्रकर्षिणामनुमेयत्वाभावादविप्रकर्षिणामनुमेयत्वानिष्टेरित्यर्थ । ८ प्रत्यक्षगोचराणाम् । ९ पावकादीनाम् । १० वक्ष्यमाणम् । ११ मीमासक । १२ मयि बुद्धिरस्ति, घटादिबहिरर्थज्ञानान्यथानुपपत्ते. । १३ धर्माधर्मौ स्त , श्रेय'प्रत्यवायाद्यन्यथानुपपत्तेः । श्रेय सुखम् । प्रत्यवायो दु खम् । १४ धर्माधर्मयोरभावेपि स्त्र्यादिदर्शनात् । १५ स्त्र्यादिभिः सौख्यमेवेति न, असुखस्यापि तत सम्भवादिति व्यभिचार' । १६ मयि विशिष्टेन्द्रियशक्तिरस्ति, विशिष्टरूपादिज्ञानान्यथानुपपत्ते । १७ किञ्च । १८ परोक्षस्य । १९ अनुमेयत्वसिद्धि । २० आदिशब्देन नैयायिकादय । २१ यत्सत्तत् क्षणिकमिति बौद्धा । यत्कृतकं तदनित्यमिति नैयायिका । २२ जैनानाम् । २३ सर्वमनेकान्तात्मकं, सत्त्वात् । २४ प्रकारान्तरेणानुमेयत्वं व्याख्याति । २५ श्रुतज्ञानं मतिपूर्वकमेव भवति । २६ श्रुतज्ञानविषया' । २७ मीमासकस्य । २८ सूक्ष्माद्यर्थस्य । २९ श्रुतं वेद । ३० वेदवाक्यम् । ३१ सर्वज्ञस्य । ३२ सूक्ष्माद्यर्थस्य । ३३ नित्यत्वेनानित्यत्वेनैव वा एकान्तरूपेण स्वीकृतैरर्थै. । ३४ अनैकान्तिकत्वं दोष । ३५ श्रुतं श्रुतज्ञानाभास' । ३६ सर्वथैकान्तानामर्थानाम् । ३७ प्रत्यक्षानुमानबाधनात् । ३८ सर्वत्र वस्तुनि श्रुतज्ञानाधिगम्यत्वाभावाद्भागासिद्धोयमित्याशङ्कायामाह स्थानेति । ३९ स्वभावान्तरितं, देशान्तरितं, कालान्तरितं चेति स्थानत्रयम् । ४० ततश्च । ४१ मीमांसक. शङ्कते ।—अनुमेया अपि ते न कस्यचित्प्रत्यक्षाः सम्भवन्ति ।

**न कस्यचित्प्रत्यक्षाश्च स्युः, किं व्याहन्यते? इति[1] समानमग्न्यादीनाम् ***। अग्न्यादयोनुमेयाः स्युः कस्यचित्प्रत्यक्षाश्च न स्युरिति । **तथा चानुमानोच्छेदः स्यात् ***, सर्वानुमानेषूपालम्भस्य समानत्वात् । शक्यं हि वक्तुं धूमश्च क्वचित्स्यादग्निश्च न स्यादिति । **तद[3]भ्युपगमेऽस्वसंवेद्य[4]विज्ञानव्यक्तिभिरध्यक्षं किं[5] लक्षयेत्[6] प्रमाणतया परम[7]प्रमाणतयेति[8] न किंचिदे[9]तत्[10] तया नैतत्तया वा अयम[11]भ्युपगन्तुमर्हति ***। प्रत्यक्षं प्रमाणमविसंवादित्वादनुमानादिकमप्रमाणं, विसंवादित्वादिति लक्षयतो[12]नुमानस्य बलाद्व्यवस्थितेर्न प्रत्यक्षमेकमेव प्रमाणमिति व्यवतिष्ठते । ततोनुमानमिच्छता याज्ञिकेनेव लौकायति[13]केनापि प्रसिद्धाविनाभावनियमनिश्चयलक्षणादनुमेयत्वहेतोः सूक्ष्माद्यर्थानां कस्यचित्प्रत्यक्षत्वसिद्धिरेषितव्या । स्यान्[14]मतं, बाधितविषयोयं हेतुरनुमानेन पक्षस्य बाधनात् । तथा हि । न कश्चित् सूक्ष्माद्यर्थसाक्षात्कारी, प्रमेयत्वात्सत्त्वाद्वस्तुत्वादसदादिवत् । न चेदं साधन[15]मसिद्धं व्यभिचारि वा, प्रत्यक्षाद्यविसंवादित्वात्[16] । तदुक्तं " प्रत्यक्षाद्यविसंवादि प्रमेयत्वादि यस्य[17] तु । सद्भाववारणे शक्तं को नु तं[18] कल्पयिष्यति "इति । तदप्यसम्यक्, तत[19] एव कस्यचित्सूक्ष्माद्यर्थसाक्षात्कारित्वसिद्धेः । सूक्ष्माद्यर्थाः कस्यचित्प्रत्यक्षाः प्रमेयत्वात्सत्त्वाद्वस्तुत्वाद्वा स्फटिकादिवत् । अनुमेयेना[20]त्यन्त[21]परोक्षेण चार्थेन व्यभिचार इति चेन्न, तस्य[22] पक्षीकरणात् । तदेवं **प्रमेयत्वसत्त्वादिर्यत्र[23] हेतु[24]लक्षणं पुष्णाति तं[25] कथं चेतनः[26] प्रतिषेद्धुमर्हति संशयितुं वा *** सूक्ष्माद्यर्थसाक्षात्कारिणस्तस्यैव[27] सुनिश्चितासंभवद्बाधकत्वादस्तित्वसिद्धेरबाधितविषयत्वस्यापि परोप[28]गतहेतुलक्षणस्य प्रकृतहेतोः पोषणात् । ननु[29] च सर्वज्ञस्यास्तित्वे साध्ये सुनिश्चितासंभवद्बाधकप्रमाणत्वं हेतुः सर्वज्ञभावधर्मश्चेदसिद्धः[30] । को हि नाम सर्वज्ञभावधर्मं हेतुमिच्छन् सर्वज्ञमेव नेच्छेत् । सर्वज्ञाभावधर्मश्चेद्विरुद्धः, ततः[31] सर्वज्ञनास्तित्वस्यैव सिद्धेः । सर्वज्ञभावाभावधर्मश्चेद्व्यभिचारी, सपक्षविपक्षयोर्वृत्तेः ? तदुक्तम् " असिद्धो भावधर्मश्चेद्व्यभिचार्युभयाश्रयः । विरुद्धो धर्मोऽभावस्य स सत्तां साधयेत् कथम्"इति । **धर्मिण्य[32]सिद्धसत्ताके भावाभावोभयधर्माणामसिद्धविरुद्धानैकान्तिकत्वात्कथं सकलविदि सत्त्वसिद्धिरिति ब्रुवन्नपि देवानां प्रियस्[33]तद्धर्मिस्व[34]भावं न लक्षयति ***। स[35] हि तावदेवं[36] सौगतमतमाश्रित्य ब्रुवाणः प्रष्टव्यः[37] । **शब्दानित्यत्वसाधनेपि कृतकत्वादावयं[38] त्रिकल्पः किं न स्यादिति *** । शक्यं हि वक्तुं, कृतकत्वादिहेतुर्यद्यनित्यशब्दधर्मस्तदाऽसिद्धः । को नामानित्यशब्दधर्मं हेतुमिच्छन्ननित्यशब्दमेव नेच्छेत्[39] ? अथ नित्यशब्दधर्मस्तदा विरुद्धः, साध्यविरुद्ध[40]-

---

१ शङ्का परिहरन्नाहु: स्याद्वादिनः ।—इति ( पूर्वोक्तम् ), अग्न्यादयो धूमवत्त्वादिनानुमेयाः सन्तु, न च प्रत्यक्षाः कस्यचिदिति समानमुभयत्र । न च तथेष्टं मीमांसकस्य ततो नोक्तशङ्कावकाश इत्यर्थः । २ सन्दिग्धानैकान्तिकत्वस्य । ३ अनुमानोच्छेदाङ्गीकारे ( चार्वाकमाहु. ) । ४ विज्ञानमस्वसंवेद्यं भूतपरिणामत्वात् पित्रादिवत् । ५ कर्मतापन्नम् । ६ ( मीमासकः ) नैव लक्षयेत् । ७ अनुमानम् । ८ चार्वाको लोकान् प्रति अध्यक्षं किं दर्शयेत् ( कथं प्रतीतिं कारयेत् )? ९ अप्रमाणतया । १० अनुमानम् । ११ चार्वाक । १२ चार्वाकस्य । १३ चार्वाकेन । १४ मीमासकस्य । १५ प्रागुक्तम् । १६ यतो न साधयति सूक्ष्माद्यर्थसाक्षात्कारिणा प्रत्यक्षम् । १७ सर्वज्ञस्य । १८ सर्वज्ञसद्भावम् । १९ प्रमेयत्वादितः । २० अनुमानमात्रगम्येन । २१ आगमगम्येन । २२ अनुमेयस्यात्यन्तपरोक्षस्य च । २३ सर्वज्ञे साध्ये । २४ सुनिश्चितासंभवद्बाधकत्वस्य लक्षणं स्वरूपम् । अथवानुमेयत्वस्य लक्षणमबाधितविषयत्वम् । २५ सर्वज्ञम् । २६ मतिमान् । २७ पुरुषस्य प्रतिषेधकस्य संशयितस्य वा । २८ परेण मीमांसकेनाभ्युपगतः प्रमेयत्वादिहेतुः सर्वज्ञास्तित्वे अबाधितविषयः सन् सुनिश्चितासंभवदित्यादिप्रकृतहेतुं पुष्णाति । २९ मीमासक. । ३० सर्वज्ञवत् । ३१ सर्वज्ञाभावधर्मात् । ३२ सर्वज्ञे । ३३ मीमासकः ( मूर्ख. ) । ३४ सर्वज्ञलक्षणम् । ३५ मीमांसक· । ३६ ( पुरस्ताच्छब्दानित्यत्वादिकथनं सौगतापेक्षयेत्यर्थः ) । ३७ जैनेन । ३८ तद्भावधर्मस्तदभावधर्मस्तद्भावाभावधर्मो वेति । ३९ शब्दस्यानित्यत्वं साध्यं तद्धर्मः कृतकत्वं हेतुः । साध्येऽसिद्धे हेतुरप्यसिद्ध, अनित्यशब्दस्याप्रसिद्धत्वे तद्धर्मरूपकृतकत्वस्याप्यप्रसिद्धेः । ४० अनित्यत्वविरुद्धं नित्यत्वम् ।

साधनात् । अथोभयधर्मस्तदा व्यभिचारी, सपक्षेतरयोर्वर्तमानत्वात् ।' इति सर्वानुमानोच्छेदः, क्वचित्[1]पावकादौ साध्ये धूमवत्त्वादावपि विकल्पस्यास्य[2] समानत्वात् । विमत्यधिकरणभावापन्नविनाश[3]धर्मि[4]धर्मत्वे[5] कार्यत्वादेरसंभवद्बाधकत्वादेरपि सन्दिग्ध[6]सद्भावधर्मिधर्मत्वं[7] सिद्धं[8] बोद्धव्यम् । ननु[9] च शब्दादेर्धर्मिणः शब्दत्वादिना प्रसिद्धसत्ताकस्य सन्दिग्धानित्यत्वादिसाध्यधर्मकस्य धर्मो हेतुः कृतकत्वादिरिति युक्तं; सर्वथाप्यसिद्धसत्ताकस्य तु सर्वज्ञस्य कथं विवादापन्नसद्भावधर्मकस्य धर्मो हेतुरसंभवद्बाधकत्वादिर्युज्यते, प्रसिद्धो धर्मी अप्रसिद्धधर्मविशेषणविशिष्टतया स्वयं[10] साध्यत्वेनेप्सितः पक्ष इति वचनात्[11], कथञ्चिदप्यप्रसिद्धस्य धर्मित्वायोगात् । इति कश्चित्[12], सोपि यदि सकलदेशकालवर्तिनं शब्दं धर्मिणमाचक्षीत तदा कथं प्रसिद्धो धर्मीति ब्रूयात् ? तस्याप्रसिद्धत्वात् । परोपगमात्सकलः शब्दः प्रसिद्धो धर्मीति चेत् स्वाभ्युपगमात्[13]सर्वज्ञः प्रसिद्धो धर्मी किन्न भवेद्धेतु[14]धर्मवत् । [15]परं प्रति समर्थित एव हेतुधर्मः साध्यसाधन[16] इति चेद्धर्म्य[17]पि परं[18] प्रति समर्थितो[19] एवास्तु, विशेषाभावात् ? किञ्च[20] सर्वथा प्रसिद्धसत्ताको धर्मी कथञ्चिद्वा ? सर्वथा चेच्छब्दादिरपि धर्मी न स्यात्, तस्याप्रसिद्ध[21]साध्यधर्मोपाधिसत्ताकत्वात्[22] । कथञ्चित्प्रसिद्धसत्ताकः शब्दादिर्धर्मीति चेत् सर्वज्ञः कथं धर्मी न स्यात् ? प्रसिद्धात्मत्वादिविशेषणसत्ताकस्याप्रसिद्धसर्वज्ञत्वोपाधिसत्ताकस्य[23] च धर्मिणो[24]भ्युपगमे सर्वथा नाप्रसिद्धसत्ताकत्वं, कथञ्चित्प्रसिद्धसत्ताकत्वात् । स्याद्वादिनो हि कश्चिदात्मा सर्वज्ञोस्तीति पक्षप्रयोगमाचक्षते, नान्यथा[25] । ततो[26]ऽनुपालभमानो[27] धर्मिस्वभावं न लक्षयत्[28]येव, प्रकृतो[29]नुमाने सर्वज्ञस्य धर्मित्वावचनाच्च । सूक्ष्माद्यर्था एव ह्यत्र धर्मिणः प्रसिद्धा युक्तास्तावत्प्रसिद्धसत्ताका एव, परमाण्वादीनामपि प्रमाणसिद्धत्वेन वक्ष्यमाण[30]त्वात् । ननु[31] सूक्ष्मादयोर्थाः किमिन्द्रियप्रत्यक्षेण कस्यचित्प्रत्यक्षाः साध्या उतातीन्द्रिय[32]प्रत्यक्षेण ? प्रथमविकल्पेऽनुमानविरुद्धः[33] पक्षः 'सूक्ष्मा[34]द्यर्था न कस्यचिदिन्द्रियज्ञानविषयाः, [35]सर्वथेन्द्रियसम्बन्धरहित[36]त्वात् । ये[37] तु कस्यचिदिन्द्रियज्ञानविषयास्ते न सर्वथेन्द्रियसम्बन्धरहिता दृष्टाः । यथा घटादयः । सर्वथेन्द्रियसम्बन्धरहिताश्च सूक्ष्माद्यर्थास्तस्मान्न कस्यचिदिन्द्रियज्ञानविषयाः' इति केवलव्यतिरेकिणानुमानेन बाध्यमान-

---

१ पर्वतादौ । २ अभिमतपर्वतधर्मो वानभिमतपर्वतधर्मो वोभयधर्मो वेत्यस्य । ३ विमति =विवादः । ४ विनाशधर्मोस्यास्तीति विनाशधर्मी शब्द । ५ सन्दिग्धश्चासौ सद्भावश्चास्तित्वलक्षणः स एव धर्मो यस्यार्हतः इति विमत्यधिकरणभावापन्नविनाशधर्मी । ६ यत. । ७ अत्रेदं मीमासकस्य तात्पर्यं, भो जैन शब्दस्तु सिद्ध एव । शब्दस्य यदनित्यत्वं साध्यं सन्दिग्धमस्ति तदेव कृतकत्वादिना साध्यते इति । ८ असभवद्बाधकत्वलक्षणम् । ९ मीमांसक । १० जैनेन । ११ जैनस्य । १२ मीमासकः । १३ परोपगमात्सकलः शब्द. प्रसिद्धो धर्मीति यदि मीमासकेन भवताभ्युपगम्यते तर्हि स्वेषा जैनानामभ्युपगमात्सर्वज्ञ. प्रसिद्धो धर्मी भवेदिति किं नेष्यते ? परोपगमस्योभयत्राप्यविशेषात् । १४ हेतुश्चासौ धर्मश्चेति । १५ मीमांसकम् । १६ साध्यस्य साधक । १७ शब्दोपि । १८ जैनं प्रति । १९ समर्थितहेतु एवास्तु इति पाठान्तरम् । २० विकल्पान्तरेण जैनो धर्मिणं विचारयति । २१ अप्रसिद्धसाध्यधर्मोपाधि ( विशेषण ) सत्ता यस्य शब्दस्य स । तत्त्वात् । २२ यथा शब्दानित्यत्वस्य सत्ता अप्रसिद्धा वर्तते । २३ अयं सर्वज्ञ इति विशेषणलक्षणा उपाधि । २४ सर्वज्ञस्य । २५ एवं चेत् न हि सर्वज्ञनिराकृते. प्रागित्यादिभाष्यविवरणावसरे अस्ति सर्वज्ञ, सुनिश्चितासम्भवद्बाधकप्रमाणत्वादित्युक्त. प्रयोगः शोभेतेति चेन्न, तत्राप्यभिप्रेतस्यात्मशब्दस्याध्याहार्यमाणत्वात् । अनुमेयत्वहेतोरबाधितविषयत्वसमर्थनप्रसङ्गायाते अस्ति सर्वज्ञ, सुनिश्चितेत्याद्यनुमाने परोक्तं दोषं परिहृत्य प्रकृतानुमाने स दोषो न सम्भवतीति प्रकृतानुमाने इत्याहु । २६ मीमासक. सौगतो वा । २७ दोषमुद्भावयन् । २८ जानाति । २९ सूक्ष्मान्तरितदूरार्था कस्यचित्प्रत्यक्षा, अनुमेयत्वादित्यनुमाने । ३० बुद्धिशब्दप्रमाणत्वमिति कारिकाव्याख्याने । ३१ मीमासको नैयायिकं प्रत्याह । ३२ अतीन्द्रियं=मनः । ३३ कालात्ययापदिष्ट । प्रमाणबाधिते पक्षे हेतोर्वर्तमानत्वं कालात्ययापदिष्टत्वम् । ३४ अनुमानविरुद्धत्वं दर्शयति । ३५ साक्षात् परम्परया वा । ३६ सूक्ष्माद्यर्थानाम् । ३७ व्यतिरेकव्याप्तिः ।

त्वात्[1]। न च सर्वथेन्द्रियसम्बन्धरहितत्वमसिद्धं, साक्षात्परमाणु[2]धर्मादीनामिन्द्रियसम्बन्धाभावात्। तथा हि। न कस्यचिदिन्द्रियं साक्षात्परमाण्वादिभिः सम्बध्यते, इन्द्रियत्वादस्मदादीन्द्रियवत्। योगि[3]जधर्मा[4]नुगृहीतमिन्द्रियं योगिनस्तैः साक्षात्सम्बध्यते इति चेत् कोऽय[5]मिन्द्रियस्य योगजधर्मानुग्रहो नाम? स्वविषये प्रवर्तमान[6]स्यातिशया[7]धानमिति चेत्तदसंभव एव, परमाण्वादौ स्वयमिन्द्रियस्य प्रवर्तनाभावात्, प्रवर्तने वा योगजधर्मानुग्रहस्य वैयर्थ्यात्। तत एवेन्द्रियस्य परमाण्वादिषु प्रवृत्तौ परस्पराश्रयप्रसङ्गः[8]। सति[9]इन्द्रियस्य योगजधर्मानुग्रहे परमाण्वादिषु प्रवृत्तिः सत्यां च तस्यां योगजधर्मानुग्रह इति। परमाण्वादिष्विन्द्रियस्य प्रवृत्तौ सहकारित्वं योगजधर्मानुग्रह इति चेन्न, स्वविषयातिक्रमेण[10] तस्य तत्र तदनुग्रहायोगात्, अन्यथा कस्यचिदेकस्येन्द्रियस्य[11] सकलरसादिषु प्रवृत्तौ तदनुग्रहप्रसङ्गात्[12]। दृष्ट[13]विरोधान्नैवमिति चेत् समान[14]मन्यत्र[15]। यथैव हि चक्षुरादीनि प्रतिनियतरूपादिविषयाणि दृष्टानि नाप्रतिनियतसकल[16]रूपादि[17]विषयाणि तथोपलब्धिलक्षणप्राप्तानि महत्त्वोपेतानि पृथिव्यादिद्रव्याणि तत्समवेतरूपादीनि चक्षुरादीन्द्रियगोचरतया प्रसिद्धानि, न पुनः परमाण्वादीनि। समाधि[18]विशेषोत्थधर्ममाहात्म्याद् दृष्टातिक्रमेण परमाण्वादिषु चक्षुरादीनि प्रवर्तन्ते न पुना रसादिष्वेकमिन्द्रियम्, इति[19] न किञ्चिद्विशेषव्यवस्थानिबन्धनमन्यत्र जाड्यात्। एतेन[20] परम्परया परमाणुरूपादि[21]ष्विन्द्रियसम्बन्धः प्रतिध्वस्तः, संयोगाभावे संयुक्तसमवायादीना[22]मसंभवात् श्रोत्रे सकलशब्दसमवायासंभवे शब्दत्वेन समवेतसमवायासंभववत्। यदि[23] पुनरेकमेवान्तःकरणं योगजधर्मानुगृहीतं युगपत्सकलसूक्ष्माद्यर्थविषयमि[24]ष्यते तदापि दृष्टाति[25]क्रम एव, मनसो युगपदनेकत्र विषये प्रवृत्त्यद[26]र्शनात्। तत्र दृष्टाति[27]क्रमेष्टौ वा स्वयमात्मैव समाधिविशेषोत्थधर्मविशेषवशादन्तःकरणनिरपेक्षः साक्षात् सूक्ष्माद्यर्थान् पश्यतु किमिन्द्रियेणेवान्तःकरणेन? तथा च नेन्द्रियज्ञानेन कस्यचित्प्रत्यक्षाः सूक्ष्माद्यर्थाः संभाव्यन्ते। अतीन्द्रिये[28]प्रत्यक्षेण कस्यचित्प्रत्यक्षाः साध्यन्ते इति चेद[29]प्रसिद्धविशेषणः[30] पक्षः, क्वचि[31]दतीन्द्रियज्ञानप्रत्यक्षत्वस्याप्रसिद्धेः सांख्यं प्रति विनाशी शब्द इत्यादिवत्[32]। साध्यशून्यश्च दृष्टान्तः स्यादग्न्यादेरतीन्द्रियप्रत्यक्षविषयत्वाभावात्। इति[33] केचित्तेपि न सम्यग्वादिनः, सूक्ष्माद्यर्थानामिन्द्रियजप्रत्यक्षेण कस्यचित्प्रत्यक्षत्वासाधनात्तत्पक्षनिक्षिप्तदोषानवतारात्[34]। तथा साधयतां[35] स्याद्वादिभिरपि तद्दोषसमर्थनात्। नाप्य[36]तीन्द्रियप्रत्यक्षेण कस्यचित्प्रत्यक्षत्वं साध्यते येनाप्रसिद्धविशेषणः पक्षः साध्यशून्यश्च दृष्टान्तः स्यात्, प्रत्यक्ष[37]सामान्येन कस्यचित्सूक्ष्माद्यर्थप्रत्यक्षत्वसाधनात्। प्रसिद्धे च सूक्ष्माद्यर्थानां सामान्यतः कस्यचित्प्रत्यक्षत्वे सर्वज्ञत्वस्य सम्यक्स्थित्युपपत्तेस्तत्प्रत्यक्षस्येन्द्रियानिन्द्रियानपेक्षत्वं सिध्यत्येव। तथा हि।

---

१ साधनम्। २ परमाणवश्च धर्मादयश्चेति तेषाम्। ३ नैयायिक। ४ ध्यानोद्भूतधर्मेण। ५ मीमांसकः पृच्छति। ६ इन्द्रियस्य। ७ स्पष्टतापादनम्। ८ परस्पराश्रयं दर्शयति। ९ अङ्गीक्रियमाणे। १० रूपादिविषयोर्लङ्घनेन। ११ स्पर्शनादेः। १२ योगजधर्मानुग्रहप्रसङ्गात्। १३ नैयायिकः। प्रत्यक्षविरोधात्। १४ मीमासकः। १५ परमाण्वादौ प्रत्यक्षविरोधस्तुल्यः। १६ सकलपदेन परमाणुरूपं गृह्यते। १७ आदिपदेन रसादिग्रहः। १८ योगजधर्मानुग्रहोत्थधर्मातिशयात् प्रत्यक्षोल्लङ्घनेन। १९ चक्षुरिन्द्रियपरमाण्वोः संयोगसन्निकर्षाभावे। २० संयोगलक्षणसाक्षात्सम्बन्धनिराकरणेन। २१ आदिशब्देन रसरसत्वादयो ग्राह्याः। २२ आदिपदेन संयुक्तसमवेतसमवायादिर्ग्राह्यः। २३ भो नैयायिक। २४ तव नैयायिकस्य। २५ प्रत्यक्षोल्लङ्घनमेव। २६ युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति वचनात्। २७ प्रत्यक्षविरोधाङ्गीकारे। २८ सूक्ष्माद्यर्थाः। २९ मीमासकः। ३० सूक्ष्माद्यर्था अतीन्द्रियप्रत्यक्षेणेति अप्रसिद्ध विशेषणं यस्य सः। अतीन्द्रियप्रत्यक्षेतीदं विशेषणमप्रसिद्धमित्यर्थः। ३१ दृष्टान्ते। ३२ सांख्यमते आविर्भावतिरोभावौ स्तो न तु किञ्चिद्विनाशि। ३३ स्याद्वादिनः प्राहुः 'इति केचिन्मीमासकास्तेपि न सम्यग्वादिनः' इति। ३४ जैनानाम्। ३५ नैयायिकानाम्। ३६ सिद्धान्ती। ३७ तर्हि सूक्ष्माद्यर्थाना कथं प्रत्यक्षत्वं स्थाप्यते जैनैर्भवद्भिरिति मीमांसकाशङ्कायामाह प्रत्यक्षसामान्येनेत्यादि।

योगि[1]प्रत्यक्षमिन्द्रियानिन्द्रियानपेक्षं, सूक्ष्माद्यर्थविषयत्वात् । यन्ने[2]न्द्रियानिन्द्रियानपेक्षं तन्न सूक्ष्माद्यर्थविषयं दृष्टं, यथास्मदादिप्रत्यक्षम् । सूक्ष्माद्यर्थविषयं च योगिनः प्रत्यक्षं सिद्धं, तस्मादिन्द्रियानिन्द्रियानपेक्षम् । नावधिमनःपर्ययप्रत्यक्षाभ्यां हेतुर्व्यभिचारी, तयोरपीन्द्रियानिन्द्रियानपेक्षत्वसिद्धेः । ननु[3] च कस्येदं सूक्ष्माद्यर्थप्रत्यक्षत्वं साध्यते ? अर्हतोनर्हतः[4] सामान्यात्मनो वा ? यदि विप्रकृष्टार्थप्रत्यक्षत्वमर्हतः साध्यते[5] पक्षदोषोऽप्रसिद्धविशेषणत्वम् । तत एव व्याप्ति[6]र्न सिध्येत् । अनर्हतश्चेदनिष्टानुषङ्गोपि[7] । कः पुनः सामान्यात्मा तदुभयव्यतिरेकेण यस्य विवक्षितार्थ[8]प्रत्यक्षत्वम् ? इत्येत[9]द्विकल्पजालं शब्दनित्यत्वे[10]पि समानं, न केवलं सूक्ष्मादिसाक्षात्करणस्य प्रतिषेधने संशीतौ वा । तदयं[11]मनुमानमुद्रां भिनत्ति[12] * । न कश्चित्सूक्ष्मादिसाक्षात्कारी, पुरुषत्वादेः, रथ्यापुरुषवत् । विवादापन्नः पुरुषः सूक्ष्मादिसाक्षात्कारित्वेन संशयित एव विप्रकृष्ट[13]स्वभाव[14]त्वात् पिशाचादिवत् । इति सूक्ष्मादिसाक्षात्करणस्य प्रतिषेधने संशीतौ वा तावदि[15]दं विकल्पजालं समानं सिद्धमेव । स[16] हि तत्र प्रतिषेधं संशयं वा साधयन् किमर्हतः साधयेदनर्हतः सामान्यात्मनो वा ? अर्हतश्चेदप्रसिद्धविशेषणः पक्षो व्याप्तिश्च न सिध्येद्, दृष्टान्तस्य[17] साध्यशून्यतानुषङ्गात् । अनर्हतश्चेत्स एव दोषो बुद्धादेः परस्या[18]सिद्धेरनिष्टानुषङ्गश्च, अर्हतस्तत्प्रत्यक्षत्वविधाननिश्चयात् । कः पुनः सामान्यात्मा तदुभयव्यतिरेकेण यस्य विवक्षिते[19]तार्थप्रत्यक्षत्वप्रतिषेधसंशयौ साध्येते ? इति । तद्व[20]च्छब्दनित्यत्वसाधनेपि समानमेतद्विकल्पजालम् । तथा हि । अयं[21] शब्दानां नित्यत्वं साधयन् सर्वगतानां साधयेदसर्वगतानां वा सामान्यात्मनां वा ? वर्णानां नित्यत्वमकृतकत्वादिना सर्वगतानां यदि साधयति स्यादप्रसिद्ध[22]विशेषणः पक्षः[23] इतर[24]थानिष्टानुषङ्गः । कीदृक् पुनः सामान्यं नाम येनो[25]भयदोषप्रसङ्गपरिहाराय कल्प्येत ? सर्वगतत्वसाधनेपि समानम्[26] * । तद्धि[27] वर्णानाममूर्तानां साधयेन्मूर्तानां तदुभयसामान्यात्मनां वा ? यद्यमूर्तानां सर्वगतत्वं[28] साधयेत्तदाऽप्रसिद्धविशेषणता पक्षस्य । अथ मूर्तानामनिष्टानुषङ्गः[29] । कीदृक् पुनः सामान्यं नाम यदुभय[30]दोषप्रसङ्गपरिहाराय कल्प्येत ? सर्वगतेतरसामान्यात्मन इव मूर्तेतरसामान्यात्मनोऽसम्भवाद्वर्णेषु । तदयं[31]मनुमानमुद्रां सर्वत्र[32] भिनत्तीति नानुमानविचारणायामधिकृतः स्यात् । अविवक्षितविशेषस्य[33] पक्षीकरणे समः समाधिरित्य[34]लमप्रतिष्ठितमिथ्याविकल्पौघैः[35] * । यथैव हि शब्दस्याविवक्षितसर्वगतत्वासर्वगतत्वविशेषस्याकृतकत्वादिहेतुना नित्यत्वे साध्ये न कश्चिद्दोषः स्यात्, नाप्यविवक्षितामूर्तत्वेतरविशेषस्य सर्वत्रोप[36]लभ्यमानगुणत्वादिना[37] सर्वगतत्वे, तथैवाविवक्षितार्हदनर्हद्विशेषस्य कस्यचित्पुरुषस्य विप्र-

१ योगी=सर्वज्ञः । २ व्यतिरेकव्याप्तिः । ३ मीमांसकः । ४ बुद्धादे । ५ तर्हीत्यध्याहार्यम् । ६ यत्र यत्रानुमेयत्वं तत्र तत्र कस्यचिदर्हतः प्रत्यक्षत्वमिति व्याप्तिर्नास्त्यतः पक्षदोष । ७ अपिशब्दात्पक्षदोषोपि । ८ सूक्ष्माद्यर्थानाम् । ९ जैन आह । १० मीमांसकस्येष्टे । ११ तत्तस्मादयं मीमांसकः । १२ मीमांसकः सूक्ष्माद्यर्थसाक्षात्करणप्रतिषेधसंशययोः क्रमेणानुमाने द्वे रचयति ( वक्ष्यमाणप्रकारेण )। १३ विवादापन्नस्य सर्वज्ञस्य। १४ पूर्वोक्तप्रकारेण। १५ तव मीमांसकस्य। १६ मीमांसकः। १७ रथ्यापुरुषस्य । १८ मीमांसकस्य । १९ सूक्ष्माद्यर्थानाम् । २० मीमांसकाभीष्टे शब्दनित्यत्वे एतद्विकल्पजालं समानं सूक्ष्मादिसाक्षात्करणस्य प्रतिषेधने संशये चापीति । अयं मीमांसको वक्ष्यमाणरीत्यानुमानद्वयं करोति यत्तन्न सम्यगित्यर्थः । २१ मीमांसकः । २२ अप्रसिद्धं सर्वगतत्वविशेषणं यस्य स । २३ शब्दः । २४ असर्वगतानां नित्यत्वं साधयति चेत् । २५ अनिष्टानुषङ्गस्वरूपोऽप्रसिद्धविशेषणत्वरूपश्चेत्युभयदोषौ । २६ एकान्तवाद्यभिमतसर्वथासर्वगतत्वस्य स्याद्वादिना क्वचिदप्यप्रसिद्धेः । २७ सर्वगतत्वम् । २८ अमूर्तः शब्दः सर्वगतः, अकृतकत्वादिति । २९ मीमांसकमते शब्दानाममूर्तत्वात् । ३० पक्षदोषोनिष्टानुषङ्गश्चेति । ३१ यतो मीमांसकस्य स्वपक्षेपि समानं तत्तस्मादयं मीमांसकः । ३२ स्वपक्षेपि परपक्षवत् । ३३ अविवक्षितः सर्वगतत्वासर्वगतत्वादिर्विशेषो यस्य स तस्य । ३४ हे मीमांसक । ३५ अर्हतोऽनर्हतो वेत्यादिरूपैः । ३६ सर्वत्रोपलभ्यमानमाकाशम् । ३७ नित्यः शब्दः सर्वगतो भवति, द्रव्यत्वे सत्यमूर्तत्वादाकाशवदित्यादिना च ।

कृष्टार्थसाक्षात्करणेपि साध्येनुमेयत्वादिहेतुना न कञ्चिद्दोषं पश्यामो[1]न्यत्राप्रतिष्ठितमिथ्याविकल्पौघेभ्यः प्रकृत[2]साधनाप्रतिबन्धिभ्यः, तेषा[3]मप्रतिष्ठितत्वात्, [4]साधनाभासे इव सम्यक्साधनेपि [5]स्वाविषयेवतारात् । ततो निरवद्यमिदं साधनं कस्यचित्सूक्ष्मादिसाक्षात्कारित्वं साधयति ।

नन्वस्तु नामैवं कस्यचित्कर्मभूभृद्भेदित्वमिव विश्वतत्त्वसाक्षात्कारित्वं, [6]प्रमाणसद्भावात् । स तु परमात्मा-र्हन्नेवेति कथं निश्चयो यतोहमेव महानभिवन्द्यो भवतामिति [7][8]व्यवसिताभ्यनुज्ञानपुरस्सरं भगवतो विशेष-सर्वज्ञत्वपर्य[9]नुयोगे सतीवाचार्याः प्राहुः ।—

**स त्वमेवासि निर्दोषो युक्ति[10]शास्त्राविरोधिवाक् । अविरोधो यदिष्टं ते प्रसिद्धेन न [11]बाध्यते ॥६॥**

दोषास्तावदज्ञानरागद्वेषादय उक्ताः । निष्क्रान्तो दोषेभ्यो निर्दोषः । प्रमाणब[12]लात्सिद्धः सर्वज्ञो वीतरागश्च सामान्यतो यः स त्वमेवार्हन्, युक्तिशास्त्राविरोधिवाक्त्वात् । यो य[13]त्र युक्तिशास्त्राविरोधिवाक् स तत्र निर्दोषो दृष्टो, यथा क्वचिद्व्याध्युपशमे भि[14]षग्वरः । युक्तिशास्त्राविरोधिवाक् च भगवान् मुक्तिसंसारतत्का[15]रणेषु, तस्मान्निर्दोष इति निश्चयः । युक्तिशास्त्राभ्यामविरोधः कुतो मद्वा[16]चः सिद्धोऽ[17]नवयवेनेति चेद्यस्मादिष्टं मोक्षादिकं ते प्रसिद्धेन प्रमाणेन न बाध्यते । तथा हि । यत्र यस्या[18]भिमतं तत्त्वं प्रमाणेन न बाध्यते स तत्र युक्तिशास्त्राविरोधिवाक् । यथा रोगस्वास्थ्यतत्कारणत[19]त्त्वे भिषग्वरः । न बाध्यते च प्रमाणेन भगवतोभिमतं मोक्षससारतत्कारणतत्त्वम् । तस्मात्तत्र त्वं[20] युक्तिशास्त्राविरोधिवाक् । इति विषयस्य युक्तिशास्त्राविरोधित्वसिद्धेर्विषयिण्या भगवद्वाचो युक्तिशास्त्राविरोधित्वसाध[21]नम् । [22]कथमत्र कारिकायामनुपात्तो भिषग्वरो दृष्टान्तः कथ्यते इति चेत् स्वयं ग्र[23]न्थकारेणान्यत्राभिधानात्, "त्वं सम्भवः संभव[24]तर्षरोगैः सन्तप्यमानस्य जनस्य लोके । आसीरिहाकस्मि[25]क एव वैद्यो वैद्यो यथा नाथ रुजां प्रशान्त्यै" इति स्तोत्रप्रसिद्धेः । [26]इह दृष्टान्तावचनं तु सक्षेपोपन्यासान्न विरुध्यते, अन्यथानुपपन्नत्वनियमैकलक्षणप्राधान्यप्रदर्शना[27]र्थं वा ।

त[28]त्र भगवतोभिमतं मोक्षतत्त्वं तावन्न प्रमाणेन बाध्यते, प्रत्यक्षस्य तद्बा[29]धकत्वायोगात् । [30]नास्ति कस्यचिन्मोक्षः, सदुपलम्भकप्रमाणपञ्चकाविषयत्वात् कूर्मरोमादिवदित्यनुमानेन बाध्यते इति चेन्न, मोक्षस्यानुमानादागमाच्च प्रसिद्धप्रामाण्यादस्तित्वव्यवस्था[31]पनात्, क्वचिद्दोषावरणक्षयस्यैवानन्तज्ञानादिस्वरूपलाभफलस्यानुमा[32]नागमप्रसिद्धस्य मोक्षत्वात्, " बन्धहेत्वभावनिर्जराभ्यां कृत्स्नकर्मविप्रमोक्षो मोक्षः" इति वचनात् । त[33]त एव नागमेनापि मोक्षतत्त्वं बाध्यते, [34]तस्य तत्सद्भावावेदकत्वव्यवस्थितेः । तथा मोक्षकार[35]णतत्त्वमपि न प्रमाणेन विरुध्यते प्रत्यक्षतोऽकारणकमोक्षप्रतिपत्तेरभावात्ते[36]न तद्बाधनायोगात् । नानुमानेनापि तद्बाधनं, [37]ततो मोक्षस्य कारणवत्त्वसिद्धेः । सका[38]रणको मोक्षः, प्रतिनियत-

---

१ विना । २ प्रकृतं साधनमनुमेयत्वम् । ३ विकल्पौघानाम् । ४ अप्रतिष्ठितत्वे हेतुरयम् । ५ मिथ्याविकल्पौघाविषये । ६ प्रमाणं सुनिश्चितासभवद्बाधकत्वलक्षणम् । ७ व्यवस्थितेति पाठान्तरम् । ८ व्यवसितं निश्चितमभ्यनुज्ञानमभ्युपगमस्तत्पुरस्सर-मिति क्रियाविशेषणम् । ९ प्रश्ने । १० युक्तिस्तर्कः । शास्त्रमागमः । हेतुगर्भितं विशेषणमिदम् । ११ यद्यस्मात्ते इष्टं प्रसिद्धेन न बाध्यते तत एवाविरोध इत्यर्थः । १२ अनन्तरोक्तकारिकाद्वयोक्तानुमानद्वयबलात् । १३ तत्त्वे । १४ वैद्य-शास्त्रयुक्त्यविरोधिवाग् निर्दोष । १५ मुक्तिश्च संसारश्च तत्कारणे च तेषु । १६ मम वर्द्धमानस्य । १७ सामस्त्येन । १८ यस्य पुरुषस्य स इति सम्बन्ध । १९ रोगश्च स्वास्थ्यं च तत्कारणानि च तान्येव तत्त्वं तस्मिन् । २० भगवान् । २१ लिङ्गमस्ति, विषयविषयिणोरभेदोपचारात् । २२ तटस्थ शङ्कते । २३ समन्तभद्राचार्येण । २४ संभवः संसारः । तर्षः तृष्णा । २५ प्रत्युपकारनिरपेक्षः । २६ कारिकायाम् । २७ पक्षधर्मत्वादिपञ्चरूपं विनापि अन्यथानुपपन्नत्वनियमलक्षणाद्धेतोः साध्यसिद्धे कारिकायामदृष्टान्तवचनम् । २८ मोक्षसंसारतत्कारणेषु चतुर्षु मध्ये । २९ तेषा=मोक्षतत्त्वादीनाम् । ३० स्वमतेनुमानस्याभावेपि चार्वाकः परमतापेक्षयानुमानं दर्शयति । ३१ अग्रे । ३२ दोषावरणयोर्हानिरित्याद्युक्तानुमानादिना । ३३ एवं मोक्षस्य युक्त्यविरोधं प्रतिपाद्य शास्त्राविरोधं प्रतिपादयति तत एवेति । ३४ आगमस्य । ३५ सम्यग्दर्शनादि । ३६ प्रत्यक्षेण । ३७ अनुमानात् । ३८ सम्यग्दर्शनादिकारणकः ।

कालादि[1]त्वात् पटादिवत् । तस्याकारणकत्वे सर्वदा सर्वत्र सर्वस्य सद्भावानुषङ्गः, परापेक्षारहितत्वादिति । नागमेनापि मोक्षकारणतत्त्वं बाध्यते, तस्य तत्साधकत्वात् "सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः[2]" इति वचनात् । तथा संसारतत्त्वमपि न प्रसिद्धेन बाध्यते, प्रत्यक्षतः ससाराभावासिद्धे[3]स्तस्य तद्बाधकत्वाघटनात् । स्वोपात्तकर्मवशादात्मनो भवान्तरावाप्तिः संसारः । स न प्रत्यक्षविषयो येन प्रत्यक्षं तं बाधेत

अनुमा[4]नं तद्बाधकमिति चेन्न, तदभा[5]वप्रतिबद्धलिङ्गाभावाद् । गर्भा[6]दिमरणपर्यन्तचैतन्यविशिष्टकाया[7]त्मनः पुरुषस्य जन्मनः पूर्वं मरणाच्चोत्तरं नास्ति भवान्तरम्, अनुपलब्धेः खपुष्पवदित्यनुपलम्भः संसाराभावग्राहकः संसारतत्त्वबाधक इति चेन्न, तस्यासिद्धेः । प्राणिनामा[8]द्यं चैतन्यं चैतन्योपा[9]दानकारणकं, चिद्विवर्तत्वान्मध्य[10]चैतन्यविवर्तवत् । तथाऽन्त्यचैतन्यपरिणा[11]मश्चैतन्यकार्यः[12], तत एव तद्वत् । इत्यनुमानेन पूर्वोत्तरभावोपलम्भाद्यथोक्तसंसारतत्त्वसिद्धेः । गोमयादेरचेतनाच्चेतनस्य वृश्चिकादेरुत्पत्तिदर्शनात्तेन व्यभिचा[13]री हेतुरिति चेन्न, त[14]स्यापि पक्षीकरणात् । वृश्चिकादिशरीरस्याचेतनस्यैव गोमयादेः सम्मू[15]र्च्छनं, न पुनर्वृश्चिकादिचैतन्यविवर्तस्य, तस्य पूर्वचैतन्यविवर्तादेवोत्पत्तिप्रतिज्ञानात् । खड्गि[16]चरमचित्तेन चित्तान्तरानुपादा[17]नेन व्यभिचारः साधनस्येत्यपि मनोरथमात्रं, त[18]स्य प्रमाणतोऽप्रसिद्धत्वात्, निरन्वयक्षणक्षयस्य प्रतिक्षेपा[19]त् । ननु च यथाद्यः पथिकाग्नि[20]रेरणिनिर्मथनोत्थोऽनग्निपूर्वको दृष्टः परस्त्वग्निपूर्वक एव तथाद्यं चैतन्यं कायाकारादिपरिणतभूतेभ्यो भविष्यति, [21]परं तु चैतन्यपूर्वकं, विरोधाभावात् । इति कस्यचित्प्रत्यवस्थितिः स्वपक्षघातिनी जा[22]तिरेव, चिद्विवर्तत्वस्य हेतोः सा[23]ध्येन व्याप्तेरखण्डनात् । प्रथमपथिकाग्नेरनग्न्युपादानत्वे जलादीनामप्यजलाद्युपादानत्वोपपत्तेः पृथिव्यादिभूतचतुष्टयस्य तत्त्वान्तरभावविरोध[24]ः । तथा हि । येषां परस्परमुपादानोपादेयभावस्तेषां न तत्त्वान्त[25]रत्वम् । यथा क्षितिविवर्त्ताना[26]म् । परस्परमुपादानोपादेयभावश्च पृथिव्यादीनाम् । इत्येकमेव पुद्गलतत्त्वं पृथिव्यादिविवर्त्तमवतिष्ठेत । अथ क्षित्यादीनां न परस्परमुपादानोपादेयभावः, सहकारिभावोपगमात् । कथमपे[27]वंकोपादानः प्रथमः पथिकपावकः प्रसिध्येद्यतस्तद्वदचेतनपूर्वकं प्रथमचैतन्यं प्रसज्येत? यथैव हि प्रथमा[28]विर्भूतपावकादेस्तिरोहितपावकान्तरादिपूर्वकत्वं तथा गर्भचैतन्यस्याविर्भूतस्वभावस्य तिरोहितचैतन्यपूर्वकत्वमिति किन्न व्यवस्था स्यात्? स्यान्म[29]तं, सहका[30]रिमात्रादेव प्रथमपथिकाग्नेरुपजननोपगमात्तिरोहिता[31]ग्न्यन्तरोपादानत्वमसिद्धमिति तद[32]सत्, अनुपादानस्य कस्यचिदुपजननादर्शनात् । शब्दविद्युदादेरुपादानादर्शनाददोष इति

---

१ द्रव्यक्षेत्रकालतीर्थादिसामग्रीं विना मोक्षो न भवतीत्यत. सकारणको मोक्ष । २ मोक्षकारणमित्यर्थ । ३ प्रत्यक्षस्य । ४ चार्वाक । ५ संसाराभावेन सह प्रतिबद्धस्य लिङ्गस्याभावात् । ६ चार्वाक । ७ चैतन्यविशिष्ट काय एवात्मा, तस्य । ८ गर्भावस्थाप्राप्तम् । ९ आद्युत्पन्नचैतन्यात्पूर्वं चैतन्यमुपादानं यस्य तत् । १० मध्यो युवादे । ११ मरणावस्थालक्षणः । १२ उत्पत्स्यमानचैतन्यं कार्यं यस्य सः । एतन्मरणावस्थालक्षणं चैतन्यमुपादानकारणत्वादग्रेपि चैतन्यमुत्पादयिष्यत्येव अन्यथा निरन्वयविनाश स्याद् । न च निरन्वयविनाश सम्भवति, सर्वलोपप्रसङ्गात् । १३ वृश्चिकादेश्चैतन्योपादानकारणाभावेपि चिद्विवर्तत्वहेतोर्दर्शनात् । १४ वृश्चिकादिचैतन्यस्यापि आद्यचैतन्येन पक्षीकरणात् । १५ गर्भोपपादरूपद्विप्रकारकजन्मवर्जितं जन्म ( शरीरपरिकल्पनम् ) सम्मूर्छनम् । १६ खड्ग इव खड्गो ध्यानम् । सोस्यास्तीति खड्गी । खड्गिचरमचित्तस्य पूर्वचिद्विवर्तत्वेपि उत्तरचैतन्योपादानकारणत्वाभावात्, उत्तरचित्कार्यकत्वाभावेपि चिद्विवर्तदर्शनाद्वा हेतो । १७ चित्तसततिक्षयो मोक्ष इति बौद्धा । १८ खड्गिचरमचित्तस्योत्तरचैतन्योपादानत्वाभावरूपहेतो । १९ अग्ने । २० अरणिः काष्ठविशेष. । २१ युववृद्धादिचैतन्यम् । २२ मिथ्योत्तरं जाति. । २३ चैतन्योपादानकारणकत्वरूपेण साध्येन सह । २४ एककारणजन्यत्वात् । यदेककारणजन्म तन्न तत्त्वान्तरम् । यथा मृदुत्पन्नो घटो न मृदोतिरिच्यते । २५ पृथिव्यप्तेजोवायुरूपम् । २६ स्थासकोशकुशूलशिवकादीनाम् । २७ जैन. । २८ अरणिमथनकाले । २९ चार्वाकस्य । ३० अरणिमथनमात्रादेव । ३१ प्रच्छन्नरूपारणिस्थिताभ्यन्तरकारणकत्वम् । ३२ जैनः ।

चेन्न, शब्दादिः सोपादान एव, कार्यत्वाद् घटादिवदित्यनुमानात्तस्यादृश्योपादानस्यापि[1] सोपादानत्वस्य साधनात् । नन्वेवमस्तु[2] सर्वोऽग्निरग्न्यन्तरोपादान एव सर्वस्य[3] सजातीयोपादानत्वव्यवस्थितेः । चेतनस्य तु चेतनान्तरोपादानत्वनियमो न युक्तः, तस्य भूतोपादानत्वघटनात्, भूतचेतनयोः सजातीयत्वात्[4]तत्त्वान्तरत्वासिद्धेरिति चेन्न, तयोर्भिन्नलक्षणत्वात्तत्त्वान्तरत्वोपपत्तेः, तोयपावकयोरपि तत[5] एव परैस्तत्त्वान्तरत्वसाधनात्[6] । तथा हि । तत्त्वान्तरं भूताच्चैतन्यं, तद्भिन्नलक्षणत्वान्यथानुपपत्तेः । न तावदसिद्धो हेतुः क्षित्यादिभूतेभ्यो रूपादिसामान्यलक्षणेभ्यः[7] स्वसंवेदनलक्षणस्य चैतन्यस्य तद्भिन्नलक्षणत्वसिद्धेः । न हि भूतानि स्वसंवेदनलक्षणानि, अस्मदाद्यनेकप्रतिपत्तृप्रत्यक्षत्वात् । यत्पुनः स्वसंवेदनलक्षणं तन्न तथा[8] प्रतीतं, यथा ज्ञानम्[9] । तथा[10] च भूतानि, तस्मान्न स्वसंवेदनलक्षणानि । अनेकयोगिप्रत्यक्षेण सुखादिसंवेदनेन[11] व्यभिचारी हेतुरिति न शङ्कनीयम्, अस्मदादिग्रहणात्[12] । ज्ञानस्य स्वसंवेदनलक्षणत्वमसिद्धमिति चेन्न, बहिरर्थपरिच्छेदकत्वान्यथानुपपत्त्या[13] तस्य स्वसंवेदनलक्षणत्वसिद्धेः । यो ह्यस्वसंवेदनलक्षणः स न बहिरर्थस्य परिच्छेदको दृष्टो, यथा घटादिरिति विपक्षे बाधकप्रमाणसद्भावात्सिद्धा हेतोरन्यथानुपपत्तिः । प्रदीपादिनानेकान्त[14] इति चेन्न, तस्य जडत्वेन[15] बहिरर्थपरिच्छेदकत्वासम्भवात्, बहिरर्थपरिच्छेदकज्ञानोत्पत्तिकारणत्वात्तु प्रदीपादेर्बहिश्चक्षुरादेरिव परिच्छेदकत्वोपचारात् । न चोपचरितेनार्थपरिच्छेदकेन प्रदीपादिना मुख्यस्यार्थपरिच्छेदकत्वस्य हेतोर्व्यभिचारचोदनं विचारचतुरचेतसां कर्तुमुचितम्, अतिप्रसङ्गात्[16] । स्वरूपमात्रपरिच्छेदनव्यापृते सुखादिज्ञाने बहिरर्थपरिच्छेदकत्वाभावात्पक्षाव्यापको हेतुरिति चेन्न, तस्यापि[17] स्वतो बहिर्भूतसुखादिपरिच्छेदकत्वाद्बहिरर्थपरिच्छेदकत्वसिद्धेः कुम्भादिवेदन[18]स्यापि सर्वथा स्वबहिर्भूतार्थपरिच्छेदकत्वानुपपत्तेः सदाद्यात्मना[19] कुम्भादेः संवेदनादभेदे[20]प्रतीतेः, अन्यथा तदसत्त्व[21]प्रसङ्गात् । कथञ्चित्स्वबहिर्भूतत्वं तु सुखादिसंवेदनात्सुखादेरपि प्रतीयत एव, सुखादितत्संवेदनयोः कारणादि[22]भेदाद्भेदव्यवस्थितेः । तर्हि घटादिज्ञानवत् सुखादिज्ञानस्यापि स्वबहिर्भूतार्थपरिच्छेदकत्वात्ततोऽन्यस्य[23] विज्ञानस्यासम्भवात्किं स्वस्य संवेदकं ज्ञानं स्यादिति चेन्न, तस्यैव घटादिसुखादिज्ञानस्य स्वरूपसंवेदकस्य सतः[24] परसंवेदकत्वोपगमात् स्वसंवेदनसिद्धेः, स्वपरव्यवसायात्मकत्वात् सर्ववेदनस्य । स्वात्मनि क्रियाविरोधान्न स्वरूपसंवेदकं ज्ञानमिति चेत् का पुनः क्रिया स्वात्मनि विरुध्यते ? न तावद्धात्वर्थलक्षणा, भवनादिक्रियायाः क्षित्यादिष्वभावप्रसङ्गात् । परिस्पन्दा[25]त्मिका क्रिया स्वात्मनि विरुद्धेति चेत् कः पुनः क्रियायाः स्वात्मा ? क्रियात्मैवेति चेत् कथं तस्यास्तत्र विरोधः ? स्वरूपस्य विरोधकत्वायोगात् । अन्यथा[26] सर्वभावानां स्वरूपविरोधान्निस्स्वरूपतानुषङ्गात् । विरोधस्य द्विष्ठत्वाच्च

---

१ अदृश्यमुपादानं पुद्गलरूपं यस्य तस्य । २ चार्वाकः । ३ कार्यस्य । ४ भूताच्चैतन्योत्पत्तिर्यतस्ततो भूतचैतन्ययोः सजातीयत्वम् । ५ भिन्नलक्षणत्वात् । ६ चार्वाकैः । ७ रूपरसगन्धस्पर्शवन्तः पुद्गलाः । ८ अस्मदाद्यनेकप्रतिपत्तृप्रत्यक्षं न प्रतीतम् । ९ अस्मदाद्यऽप्रत्यक्षम् । १० अस्मदाद्यनेकप्रतिपत्तृप्रत्यक्षाणि सन्ति । ११ सुखादिसंवेदनस्याऽस्वसंवेदनलक्षणत्वेप्यनेकयोगिप्रत्यक्षत्वात् । १२ अस्मदादिभिरपि प्रत्यक्षत्वादित्यर्थः । १३ ज्ञानं स्वसंवेदनलक्षण, बहिरर्थपरिच्छेदकत्वान्यथानुपपत्तेः । १४ स हि बहिरर्थप्रकाशकश्चास्वसंविदितश्च । १५ अज्ञानरूपत्वेन । १६ अग्निर्दहनशक्तियुक्तो, अग्नित्वात् । व्यतिरेके जलादि । अत्रोपचरितेन माणवकाग्निना व्यभिचारप्रसङ्गात् । १७ सुखादिज्ञानस्यापि स्वस्माद् ज्ञानाद्बहिर्भूतं सुखादि तस्य संवेदकत्वमिति बहिरर्थपरिच्छेदकत्वं सिद्धम् । १८ यथा कुम्भादिवेदनं बहिरर्थपरिच्छेदकं न तथा सुखादिसंवेदनमित्याशङ्कायामाह जैनः कुम्भादीति । १९ घटः सन् ज्ञानं सदिति सदात्मना । २० कुम्भादिर्यथा सन् तथा ज्ञानमपि सत् । अतो न संवेदनाज्ज्ञानं सर्वथा भिन्नम् । २१ तस्य कुम्भादेः । २२ सद्वेद्योदयो हि सुखकारणं ज्ञानस्य तु ज्ञानावरणापगमादि इति कारणभेदः । २३ स्वस्य विज्ञानस्यासम्भवात् । २४ भवतः । २५ उत्क्षेपणापक्षेपणादिरूपा । २६ स्वरूपस्यापि विरोधकत्वे ।

न क्रियायाः स्वात्मनि विरोधः । क्रियावदा[1]त्मा क्रियायाः स्वात्मेति चेत्कथं तत्र विरोधः? क्रि[2]यावत्येव सर्वस्याः क्रियायाः प्रतीतेरविरोधसिद्धेः । अथ क्रिया, करणं निष्पादनं स्वात्मनि विरुद्धमित्यभिमतं तर्हि न ज्ञानं स्वरूपं निष्पादयतीत्यु[3]च्यते येन विरोध[4]ः स्यात् । इत्यसिद्धः स्वात्मनि क्रियाविरोधः, स्वकारणविशेषा[5]न्निष्पद्यमानस्य ज्ञानस्य स्वपरप्रकाशनरूपत्वात् प्रदीपस्य स्वपरोद्द्योतनरूपत्ववत् । यथैव हि रूपज्ञानोत्पत्तौ प्रदीपः सहकारित्वाच्चक्षुषो रूपस्योद्द्योतकः कथ्यते तथा स्वरूपज्ञानोत्पत्तौ तस्य[6] सहकारित्वात्स्वरूपोद्द्योतकोपि । ततो ज्ञानं स्वपररूपयोः परिच्छेदकं, तत्रा[7]ज्ञाननिवृत्तिहेतुत्वान्यथा[8]नुपपत्तेः । इत्यविरुद्धं पश्यामः स्वसंवेदनमन्तस्तत्त्वस्य[9] लक्षणं भूतासम्भवीति भिन्नलक्षणत्वं तयोः[10] सिद्ध्यत्येव । तच्च सिध्यत्तत्त्वान्तरत्वं साधयति, तच्चा[11]ऽसजातीयत्वम् । तदप्यु[12]पादानोपादेयभावा[13]भावं, तयो[14]स्तत्प्र[15]योजकत्वात् । तदेवं भूतचैतन्ययोर्नास्त्युपादानोपादेयभावो, विभिन्नलक्षणत्वात् । इति व्यापकविरुद्धव्याप्तो[16]पल[17]ब्धिः, उपादानोपादेयभावव्यापकस्य सजातीयत्वविशेषस्य विरुद्धेन तत्त्वान्तरभावेन व्याप्ता[18]द्भिन्नलक्षणत्वात्प्रतिषे[19]ध्याभावसाधनात् । नह्यत्र[20] सजातीयत्वविशेषस्योपादानोपादेयभावव्यापकत्वमसिद्धं, विजातीयत्वाभिमतयोः पयःपावकयोः सत्त्वादिना सजातीययोरपि तदनुपगमात्[21] कथञ्चि[22]द्विजातीययोरपि मृत्पिण्डघटाकार[23]योः पार्थिवत्वादिना विशिष्टसामान्येन सजातीययोरुपादानोपादेयभावसिद्धेः । कथं[24] तर्हि[25] सजातीयत्वविशेषस्य तत्त्वान्तरभावेन विरोध इति चेत्तत्त्वा[26]न्तरभूतयोस्तदनुपलम्भात्, पूर्वाकार[27]परित्यागाऽजहद्वृत्तो[28]त्तराकारान्वय[29]प्रत्यय[30]विषयस्योपादानत्वप्रतीतेः, परित्यक्तपूर्वाकारेण द्रव्येणात्मसात्क्रियमाणोत्तराकारस्योपादेयत्वनिर्ज्ञाना[31]दन्यथा[32]तिप्रसङ्गात्[33] । कथं तत्त्वान्तरभावेन भिन्नलक्षणत्वं व्याप्तमिति चेत् तद[34]भावेनुपपद्यमानत्वात्[35] । किण्वा[36]दिमदिरादिपरिणामयोरतत्त्वान्तरभावेपि भिन्नलक्षण[37]त्वस्य दर्शनात्तस्य[38] तेनाव्याप्तिरिति चेन्न, तयो[39]र्भिन्नलक्षणत्वासिद्धेः, किण्वादेरपि मदजननशक्तिसद्भावान्मदिरादिपरिणामवत् । सर्वथा मदजननशक्तिविकलत्वे हि किण्वादेर्मदिरादिपरिणामदशायामपि तद्वैकल्यप्रसङ्गः । नन्वेवं[40] भूतान्त[41]स्तत्त्वयोरपि भिन्नलक्षणत्वं मा भूत्, कायाकारपरिणतभूतविशेषावस्थातः प्रागपि क्षित्यादिभूताना चैतन्यशक्तिसद्भावादन्यथा तदवस्थायामपि चैतन्योद्भूतिविरोधादिति न प्रत्यवस्थेय, चेतनस्यानाद्यनन्तत्वप्रसिद्धेरात्मवा-

---

१ क्रियास्यास्तीति क्रियावान् । स चासौ आत्मा च क्रियावदात्मा । २ द्रव्ये । ३ जैनै । ४ अपि तु न । ५ आवरणक्षयोपशमादिविशेषात् । ६ तस्य ज्ञानस्य सहकारित्वात् । ७ स्वपररूपयो । ८ स्वपररूपपरिच्छेदकत्वाभावे । ९ चेतनस्य । १० भूतचैतन्ययो । ११ तत्त्वान्तरत्वं च भूतचैतन्ययोरसजातीयत्वं साधयति । १२ असजातीयत्वमपि । १३ साधयतीति सबन्ध । १४ भूतचैतन्ययोरुपादानोपादेययोर्वा । १५ तत् सजातीयत्वं प्रयोजकं ययोरिति बस । १६ उपादानोपादेयभावस्य व्याप्यस्य व्यापक यत्सजातीयत्वं ततो विरुद्ध तत्त्वान्तरत्वं तेन व्याप्तं विभिन्नलक्षणत्वं तस्योपलब्धि । १७ विभिन्नलक्षणत्वादित्ययं हेतुर्व्यापकविरुद्धव्याप्तोपलब्धि. कथ्यते । तदेवाग्रे दर्शयति । १८ व्याप्ता इति पाठान्तरम् । १९ प्रतिषेध्यस्य चेतनस्याभावसाधनात् । २० नन्वेवं तन्वादेर्घटाद्याकारस्य चोपादानोपादेयभाव. स्यात्, पार्थिवत्वादिविशिष्टसामान्यसद्भावाविशेषादिति न शङ्कनीयं, *व्यापकस्य सजातीयत्वस्योपादानोपादेयाख्यव्याप्याभावेपि व्यवस्थानाविरोधात् "व्यापकं तदऽतन्निष्ठं व्याप्यं तन्निष्ठमेव च"*इत्यादिवचनादित्याशयगर्भमाह नहीति । 'भिन्नलक्षणत्व'हेतौ । २१ सजातीयत्वस्य उपादानोपादेयभावव्यापकत्वानुपगमात् । २२ मृत्त्वघटत्वप्रकारेण । २३ द्रव्यपर्याययो. । २४ चार्वाक· । २५ तर्हि कुत्र सजातीयत्वं वर्तते इत्याशङ्क्य अन्तर्गूढसजातीयत्वनिमित्तकमुपादानोपादेयभावमाह आचार्य । २६ जैन । २७ परित्यागो व्यय पूर्वाकारपरि—इति पाठान्तरम् । २८ उत्पादरूपेण । २९ अन्वय अनुवर्तनम् । ३० प्रत्ययो ज्ञानम् । ३१ पयःपावकयोरप्युपादानोपादेयभावो मास्तु तत । ३२ उक्तप्रकारस्योपादानोपादेयत्वप्रतीत्यभावे । ३३ ( मेचकादिषु चित्रज्ञानाभावप्रसङ्गात् ) । ३४ तत्त्वान्तरभावाभावे । ३५ भिन्नलक्षणत्वस्य । ३६ चार्वाक । किण्वादि, कारणरूपपिष्टगुडधातक्यादि । ३७ मदशक्त्यजनकत्वस्य मदशक्तिजनकत्वस्य च । ३८ ( भिन्नलक्षणत्वस्य तत्त्वान्तरभावेन सह ) । ३९ किण्वादिमदिरादिपरिणामयो । ४० ( किण्वादेर्मदजननशक्तिसद्भावप्रकारेण ) । ४१ (अन्तस्तत्त्वं हि चित् ) ।

दिनामिष्टप्रतिष्ठानात् । न चैवं चैतन्यं भूतविवर्त्तः, क्षित्यादितत्त्वस्यापि तद्विवर्त्तत्वप्रसङ्गात्, अनाद्यनन्तत्वाविशेषात् । ततो भिन्नलक्षणत्वं तत्त्वान्तरत्वेन व्याप्तं भूतचैतन्ययोस्तत्त्वान्तरत्वं साधयत्येव । इति चैतन्यपरिणामोपादान एवाद्यचैतन्यपरिणामः प्राणिनामन्त्यचैतन्योपादेयश्च जन्मान्तराद्यचैतन्यपरिणामः सिद्धः । पूर्वभवपरित्यागेन भवान्तरपरिग्रह एव च संसारः । इति प्रसिद्धेन प्रमाणेन संसारतत्त्वं न बाध्यते, नानुमानेन, नाप्यागमेन, तस्य तत्प्रतिपादकतया श्रुतेः "ससारिणस्त्रसस्थावराः" इति वचनात् । तथा संसारोपायतत्त्वमपि न प्रसिद्धेन बाध्यत, प्रत्यक्षस्य तदबाधकत्वात् । निर्हेतुकः संसारोऽनाद्यनन्तत्वादाकाशवदित्यनुमानेन तद्बाध्यते इति चेन्न, पर्यायार्थादेशात्संसारस्यानाद्यनन्तत्वासिद्धेः, दृष्टान्तस्यापि साध्यसाधनविकलत्वाद, द्रव्यार्थादेशात्तु तस्य तथासाधने सिद्धसाध्यतानुपक्तेः । सुखदुःखादिभावविवर्त्तनलक्षणस्य संसारस्य द्रव्यक्षेत्रकालभावभवविशेषहेतुकत्वप्रतीतेश्च नाहेतुकसंसारसाधनानुमानमनवद्यम् । इति न किञ्चिदनुमानं संसारोपायतत्त्वस्य बाधकम् । नाप्यागमः, तस्य तत्साधकत्वात् "मिथ्यादर्शनाविरतिप्रमादकषाययोगा बन्धहेतवः" इति वचनात्, बन्धहेतूनामेव संसारहेतुत्वात् । तदेवं मोक्षसंसारतत्कारणतत्त्वं भगवतोभिमतं प्रसिद्धेन प्रमाणेन युक्तिशास्त्राख्येनाबाध्यं सिध्यत्तद्वाचो युक्तिशास्त्राविरोधित्वं साधयति, तच्च निर्दोषत्वम् । इति त्वमेव स सर्वज्ञो वीतरागश्च स्तोतुं युक्तो नान्य इत्युच्यते ।

**विप्रकर्ष्यपि भिन्नलक्षणसम्बन्धित्वादिना कस्यचित्प्रत्यक्षं सोत्र भवानर्हन्नेव** * । दृश्यलक्षणाद्भिन्नलक्षणमदृश्यस्वभावस्तत्सम्बन्धित्वेन विप्रकर्षि परमाण्वादिकम् । तथा वर्त्तमानात्कालाद्भिन्नः कालोतीतोनागतश्च, तत्सम्बन्धित्वेन रावणशङ्खादि । तथा दर्शनयोग्याद्देशाद्भिन्नदेशोऽनुपलब्धियोग्यस्तत्सम्बन्धित्वेन मकराकरादि । तद्भिन्नलक्षणसम्बन्धित्वादिना स्वभावकालदेशविप्रकर्ष्यपि कस्यचित्प्रत्यक्षं साधितम् । सोत्र भवानर्हन्नेव, न पुनः कपिलादय इति । एतत्कुतो निश्चितमिति चेत्, **अन्येषां न्यायागमविरुद्धभाषित्वात्** * । ये न्यायागमविरुद्धभाषिणस्ते न निर्दोषा यथा दुर्वैद्यादयः, तथा चान्ये कपिलादय इत्यनुमानान्न्यायागमाविरुद्धभाषिण एव भगवतोर्हतो निर्दोषत्वमवसीयते । न चात्र न्यायागमविरुद्धभाषित्वं कपिलादीनामसिद्धं, तदभिमतस्य मोक्षसंसारतत्कारणतत्त्वस्य प्रसिद्धेन प्रमाणेन बाधनात् । तत्र कपिलस्य तावत्स्वरूपे चैतन्यमात्रेवस्थानमात्मनो मोक्ष इत्यभिमतं तत्प्रमाणेन बाध्यते, चैतन्यविशेषेनन्तज्ञानादौ स्वरूपेवस्थानस्य मोक्षत्वसाधनात् । न ह्यनन्तज्ञानादिकमात्मनोऽस्वरूपं, सर्वज्ञत्वादिविरोधात् । प्रधानस्य सर्वज्ञत्वादि स्वरूपं, नात्मन इति चेन्न, तस्यात्मा तस्यास्त्वाकाशवत् । ज्ञानादेरप्यचेतनत्वादचेतनप्रधानस्वभावत्वं युक्तमेवेति चेत् कुतस्तदचेतनत्वसिद्धिः? ... । ज्ञानादय उत्पत्तिमत्त्वाद् घटादिवदित्यनुमानादिति चेन्न, हेतोरनुभवेन व्यभिचारात्, तस्य चेतनत्वेप्युत्पत्तिमत्त्वात् । कथमुत्पत्तिमाननुभव इति चेत्परापेक्षत्वाद् बुद्ध्यादिवत् । परापेक्षोसौ बुद्ध्यध्यवसायापेक्षत्वात् "बुद्ध्यध्यवसितमर्थं पुरुषश्चेतयते" इति वचनात् । बुद्ध्यध्यवसितार्थानपेक्षत्वेनुभवस्य सर्वत्र सर्वदा सर्वस्य पुंसोनु-

---

१ उभयत्रापि । २ पूर्वचैतन्यमुपादानम् । ३ अन्त्यचैतन्यस्योपादेयो भविष्यज्जन्माद्यचैतन्यपरिणाम । ४ प्रत्यक्षेण । ५ अनुपलब्धेरिति पूर्वोक्तचार्वाकानुमानेन । ६ उपायः, कारणम् । ७ पर्यायार्थिकनयापेक्षया । ८ संसारस्य । ९ नित्यत्वेन । १० भाव परिणाम । ११ सुखदुःखादय एव भावाः परिणामास्तेषां विवर्तनं तदेव लक्षणं यस्य । १२ द्रव्यक्षेत्रकालभावभवभेदात्पञ्चधा ससारः । १३ युक्तिशास्त्राविरोधित्वम् । १४ साधयतीत्यध्याहार्यं पदम् । १५ बुद्धादि । १६ भगवानिति पाठान्तरम् । १७ घटादेः । १८ आदिशब्देन पिशाचादि । १९ शङ्ख, शङ्खचक्रवर्ती । २० विप्रकर्षि । २१ दूरतामापन्नमपि । २२ प्रकृतिपुरुषयोर्भेदविज्ञानात् प्रकृतिनिवृत्तौ पुरुषस्य सुषुप्तपुरुषवदव्यक्तचैतन्योपयोगेन स्वरूपमात्रावस्थानलक्षणो मोक्ष इति साङ्ख्याभिमतम् । २३ जैनैः । २४ साङ्ख्य । २५ सिद्धान्ती पृच्छति । २६ पुरुषस्य प्रतिबिम्बितार्थदर्शनमनुभवः । २७ जैनः । २८ साक्षात्करणलक्षणोनुभवः । २९ प्रतिबिम्बितं निश्चितं वार्थम् । ३० जानाति ।

भवप्रसङ्गात् सर्वस्य सर्वदर्शित्वापत्तेस्तदुपायानुष्ठानवैयर्थ्यमेव[1] स्यात् । यदि पुनरनुभवसामान्यमात्मनो नित्यमनुत्पत्तिमदेवेति मतं[2] तदा ज्ञानादिसामान्यमपि नित्यत्वादनुत्पत्तिमद्भवेदित्यसिद्धो हेतुः[3] । ज्ञानादिविशेषाणामुत्पत्तिमत्त्वान्नासिद्ध इति चेत्तर्ह्यनुभवविशेषाणामप्युत्पत्तिमत्त्वादनैकान्तिकोसौ[4] कथं न स्यात्? नानुभवस्य विशेषाः सन्तीति चायुक्त, वस्तुत्वविरोधात्[5] । तथा हि । नानुभवो वस्तु, सकलविशेषरहितत्वात् खरविषाणवत् । नात्मना[6]नेकान्तः, तस्यापि सामान्यविशेषात्मकत्वादन्यथा तद्वदवस्तुत्वापत्तेः । कालात्ययापदिष्टश्चायं हेतुः[7], ज्ञानादीनां स्वसंवेदनप्रत्यक्षत्वाच्चेतनत्वप्रसिद्धेरध्यक्षबाधितपक्षानन्तरं प्रयुक्तत्वात् । अथ चेतन[8]संसर्गादचेतनस्यापि ज्ञानादेश्चेतनत्वप्रतीतिः प्रत्यक्षतो भ्रान्तैव । तदुक्तं[9] "तस्मात्[10]तत्[11]संसर्गा[12]दचेतनं चेतनवदिह लिङ्गम्[13]"इति । तदप्य[14]चर्चिताभिधानं, शरीरादेरपि चेतनत्वप्रतीतिप्रसङ्गाच्चेतनसंसर्गाविशेषात्[15] । शरीराद्यसंभवी बुद्ध्यादेरात्मना संसर्गविशेषोस्तीति चेत्स कोन्योन्यत्र कथंचित्तादात्म्यात्, तददृष्टकृतकत्वादि[16]विशेषस्य शरीरादावपि भावात् । ततो नाचेतना ज्ञानादयः, स्वसंविदितत्वादनुभववत् । स्वसंविदितास्ते[17], परसंवेदनान्यथानुपपत्तेरिति प्रतिपादितप्रायम् । तथा चात्मस्वभावा[18] ज्ञानादयः, चेतनत्वादनुभववदेव । इति न चैतन्यमात्रेवस्थानं मोक्षः, अनन्तज्ञानादिचैतन्यविशेषेवस्थानस्य मोक्षत्वप्रतीतेः ।

एतेन बुद्ध्यादिविशेषगुणोच्छेदादात्मत्वमात्रेवस्थानं मुक्तिरिति कणभक्षाक्षपादमतं[19] प्रमाणेन बाधितमुपदर्शितं, पुंसोनन्तज्ञानादिस्वरूपत्वसाधनात्, स्वरूपोपलब्धेरेव मुक्तित्वसिद्धेः । स्यान्मतं[20] "न बुद्ध्यादयः पुंसः स्वरूपं, ततो भिन्नत्वादर्थान्तरवत् । ततो[21] भिन्नास्ते, तद्विरुद्ध[22]धर्माधिकरणत्वाद्घटादिवत् । तद्विरुद्धधर्माधिकरणत्वं पुनस्तेषामुत्पादविनाशधर्मकत्वादात्मनोनुत्पादाविनाशधर्मकत्वात्प्रसिद्धम्"इति तदयुक्तं[23], विरुद्धधर्माधिकरणत्वेपि सर्वथा भेदासिद्धेर्मेचकज्ञानतदाकार[24]वत् । एकं हि मेचकज्ञानमनेकश्च तदाकारो नीलादिप्रतिभासविशेष इत्येकत्वानेकत्वविरुद्धधर्माधिकरणत्वेपि मेचकज्ञानतत्[25]प्रतिभासविशेषयोर्न भेदोभ्युपगम्यते, मेचक[26]ज्ञानत्वविरोधात् । यदि पुनर्युगपदनेकार्थग्राहि मेचकज्ञानमेकमेव, न तत्रानेकप्रतिभासविशेषसम्भवो यतो विरुद्धधर्माधिकरण[27]त्वमभेदेपि स्यादिति मतं[28] तदापि तत्किमनेकया शक्त्यानेकमर्थं युगपद्गृह्णाति किं वैकया? यद्यनेकया तदैकमनेकशक्त्यात्मकमिति स एव विरुद्धधर्माध्यासः[29] । ततोनेकशक्तेरनेकत्वधर्माधारभूतायाः पृथक्त्वात् तस्य त्वेकत्वधर्माधारत्वान्नैकत्र विरुद्धधर्माध्यास इति चेत्कथमनेका शक्तिस्तस्येति व्यपदिश्यते? ततो भेदादर्थान्तरवत्[30]। सम्बन्धादिति[31] चेत्[32]तर्हि तदनेकया शक्त्या

---

१ तस्य सर्वदर्शित्वस्योपायानां कारणानां ध्यानमौनादीनामनुष्ठानस्य वैयर्थ्यम् । २ साङ्ख्यस्य । ३ उत्पत्तिमत्त्वादिति । ४ ( अनुभवस्योत्पत्तिमत्त्वेपि चेतनत्वादनैकान्तिकत्वं हेतो, विपक्षेपि हेतुदर्शनात् ) । ५ निर्विशेषं हि सामान्यं भवेत् खरविषाणवदिति वचनात् । ६ ( आत्मनः सकलविशेषरहितत्वेपि वस्तुत्वादनेकान्त इति चेन्न ) । ७ उत्पत्तिमत्त्वादिति । ८ साङ्ख्यः । ९ आत्मसंसर्गात् । १० साङ्ख्यग्रन्थे । ११ आत्मनश्चेतनत्वं सिद्धं यस्मात्तस्मात् । १२ आत्मसंसर्गात् । बुद्धिसंसर्गादिति टिप्पणान्तरम् । १३ लिङ्ग्यते ज्ञायते इति लिङ्गं ज्ञेयमित्यर्थः । १४ स्याद्वादी । १५ शरीरे ज्ञाने चा । १६ तस्यात्मनोऽदृष्टं पुण्यादि तेन कृतकत्वादिर्विशेषः (आदिशब्दाद्भोग्यभोक्तृत्वादिः) तस्य शरीरादौ सम्बन्धो नास्तीत्युच्यते साङ्ख्येन चेत्तन्न, तस्यापि शरीरादौ भावात् । १७ साधनस्यास्वसंविदितत्वं परिहरति । १८ स्वसंविदितत्वेपि ज्ञानादीनां प्रधानजलमित्युक्ते सत्याह । १९ वैशेषिकनैयायिकमतम् । २० वैशेषिकनैयायिकयोः । २१ पुंसः । २२ तत पुंस । २३ स्याद्वादी । २४ मेचकज्ञानतदाकारयोरिव । २५ ते मेचकवर्णाः । २६ अन्यथा । २७ आत्मबुद्ध्यादीनाम् । २८ तव यौगस्य । २९ यद्यनेकया शक्त्यानेकार्थं युगपद्गृह्णाति तदा एकमेव चित्रज्ञानमनेकशक्त्यात्मकं सिद्धमिति स एव विरुद्धधर्माध्यासः । ३० मेचकज्ञाना( चित्रज्ञानात् )द्घटाद्यर्थान्तरवदनेकशक्तेर्भेदे सति तस्य चित्रज्ञानस्यानेकशक्तिरिति कथं व्यपदिश्यते? । ३१ शक्त्या सह मेचकज्ञानस्य समवायसम्बन्धात्तस्येत्युच्यते इति चेत् । ३२ जैन आह तर्हीति ।

संवध्यमानमनेकेन रूपेण कथमनेक[१]रूपं न स्यात्? तस्या[२]प्यनेकरूपस्य ततो[३]ऽन्यत्वात्तदेक[४]मेवेति चेत्कथं तत्तस्य[५]ति व्यपदेष्टव्यम्? सम्बन्धादिति चेत्स एव दोषोऽनिवृत्तश्च पर्यनुयोगोऽनवस्थानात्। यदि पुनरेकेनैव[६] रूपेणानेकया शक्त्या संवध्यते तदानेकविशेष[७]णत्वविरोधः। पीतग्रहणशक्त्या हि येन स्वभावेन सं[८]वध्यते तेनैव नीलादिग्रहणशक्त्या चेत् पीतग्राहित्वविशेषणमेव मेचकज्ञानं स्यान्न नीलादिग्राहित्वविशेषणमिति पीतज्ञानमेव स्यान्न तु मेचकज्ञानम्। अथैकया शक्त्यानेकमर्थं[९] तद्गृह्णातीति द्वितीयविकल्पः समाश्रीयते तदापि सर्वार्थ[१०]ग्रहणप्रसङ्गः। पीत[११]ग्रहणशक्त्या ह्येकया यथा नीलादिग्रहणं तथातीतानागतवर्त्तमानाशेषपदार्थग्रहणमपि केन निवार्येत? अ[१२]थ न पीतग्रहणशक्त्या नीलग्रहणशक्त्या वा पीतनीलाद्यनेकार्थग्राहि मेचकज्ञानमि[१३]ष्यते। किं तर्हि? नीलपीतादिप्रतिनियतानेकार्थग्रहणशक्त्यैकयेति[१४] मतं तदा[१५] न का[१६]र्यभेदः कारणशक्तिभेदव्य[१७]वस्थाहेतुः स्यादित्येकहेतुकं विश्वस्य वैश्वरूप्यं प्रसज्येत। तथा चानेककारणप्रतिवर्णनं सर्वकार्योत्पत्तौ वि[१८]रुध्यते। तदभ्युपगच्छता मेचकज्ञानमनेकार्थग्राहि नानाशक्त्यात्मकमुररीकर्त्तव्यम्। तेन[१९] च विरुद्धधर्माधिकरणेनैकेन प्र[२०]कृतहेतोरनैकान्तिकत्वान्न[२१] ज्ञानादीनामात्मनो भेदैकान्तसिद्धिर्येनात्मानन्तज्ञानादिरूपो न भवेत्। निराकरिष्यमाणत्वाच्चा[२२]ग्रतो गुणगुणिनोरन्यत्वै[२३]कान्तस्य, न ज्ञानादयो गुणाः सर्वथात्मनो भिन्नाः शक्याः प्रतिपादयितुं यतोऽशेषविशेषगुणनिवृत्तिर्मुक्तिर्व्यवतिष्ठेत। न[२४]नु च धर्माधर्मयोस्तावन्निवृत्तिरात्यन्तिकी मुक्तौ प्रतिपत्तव्या, अन्यथा त[२५]दनुपपत्तेः। तन्निवृत्तौ च तत्फलबुद्ध्या[२६]दिनिवृत्तिरवश्यंभाविनी निमित्तापाये नैमित्तिकस्याप्यनुपपत्तेः। मुक्तस्यात्मनोऽन्तःकरणसंयोगाभावे वा न त[२७]त्कार्यस्य बुद्ध्यादेरुत्पत्तिः। इत्यशेषविशेषगुणनिवृत्तिर्मुक्तौ सिद्ध्यत्येवेति केचित्[२८] तेऽप्यदृष्टहेतुकानां बुद्ध्यादीनामात्मान्तःकरणसयोगजानां च मुक्तौ निवृत्तिं ब्रुवाणा न निवा[२९]र्यन्ते। कर्मक्षयहेतुकयोस्तु प्रशमसुखानन्तज्ञानयोर्निवृत्तिमाचक्षाणास्ते न स्वस्थाः प्रमाणविरोधा[३०]त्। ततः क[३१]थञ्चिद्बुद्ध्यादिविशेषगुणानां निवृत्तिः क[३२]थञ्चिदनिवृत्तिर्मुक्तौ व्यवतिष्ठते। न चैवं सिद्धान्तविरोधः, "बन्धहेत्वभावनिर्जराभ्यां कृत्स्नकर्मविप्रमोक्षो मोक्षः" इत्यनुवर्तमा[३३]ने "औपशमिकादिभव्यत्वानां च[३४]ान्यत्र[३५] केवलसम्यक्त्वज्ञानदर्शनसिद्धत्वेभ्यः" इति सूत्रसद्भावात्। त[३६]त्रौपशमिकक्षायोपशमिकौदयिकपारिणामिकभावानां दर्शन[३७]ज्ञानग-

---

१ ( मेचकज्ञानम्। २ चित्रज्ञानसम्बन्धिनानेकरूपस्य। ३ चित्रज्ञानात्। ४ चित्रज्ञानम् )। ५ अनेकरूपं चित्रज्ञानस्येति। ६ तदनेकया शक्त्या सम्बध्यमानमनेकेन रूपेणैकेन रूपेण वेति विकल्पद्वयं कृत्वा आपृच्छय अनेकेन रूपेणेत्यत्र तु दूषणमुक्तमधुना एकेन रूपेणानेकया शक्त्या संवध्यत इत्यत्र द्वितीयपक्षे दोषमाह। ७ अनेका शक्तय इति विशेषणत्वविरोधः। ८ मेचकज्ञानम्। ९ मेचकज्ञानम्। १० मेचकज्ञानं नीलपीताद्येव केवलं न गृह्णाति किन्तु सर्वार्थग्राहकं स्यात्। ११ सर्वार्थग्रहणप्रसङ्गं विवृणोति। १२ यौगः। १३ यौगेन। १४ एवम्भूतया एकया शक्त्या नीलपीताद्यनेकार्थग्राहि मेचकज्ञानमिष्यते इति मतम्। १५ जैन आह। १६ घटपटादिकार्यभेदः। १७ कार्यभेदात्कारणशक्तिभेदो न स्यात्। १८ यावन्ति कार्याणि तावन्ति कारणानीति यौगमतं विरुध्यते। १९ मेचकज्ञानेन। २० विरुद्धधर्माधिकरणत्वादित्यस्य। २१ मेचकज्ञानस्य तदाकारादभेदेपि विरुद्धधर्माधिकरणत्वसिद्धेः। २२ एकस्यानेकवृत्तिर्नेत्यादिकारिकाव्याख्यानावसरे चतुर्थपरिच्छेदे। २३ भेदैकान्तस्य। २४ यौगः। २५ तस्याः, मुक्तेः। २६ धर्माधर्मकारणकं बुद्ध्यादि। २७ अन्तःकरणसयोगकार्यस्य। २८ यौगाः। २९ अस्माभिर्जैनैः। ३० मुक्तात्मा गुणवानात्मत्वादमुक्तात्मवदित्यनुमानेन विरोधात्। ३१ अदृष्टजानाम् ( कर्मप्रभवानाम् )। ३२ कर्मक्षयहेतुजानाम्। ३३ अस्य प्रकरणे इत्यर्थः। ३४ विप्रमोक्षो मोक्ष इत्यर्थः। ३५ विना। ३६ औपशमिकादिषु। ३७ ( क्रमशः—औपशमिकं सम्यग्दर्शनं, क्षायोपशमिको ज्ञानोपयोगः, औदयिकी गतिर्भवान्तरगमनरूपा ) आदिपदं प्रत्येकमभिसंबध्यते। तेन सम्यक्चारित्रे इत्यादिसूत्रोक्तानां सर्वेषां ग्रहणम्। भव्यत्वं पारिणामिकम्। अनाविर्भूतरत्नत्रयाविर्भावयोग्यताफलकं भव्यत्वम्। ( रत्नत्रयाविर्भावे तद्भव्यत्वं क्षीयते=विपच्यते इत्यर्थः, न तु नश्यतीति, तस्य शक्तिरूपत्वेनाविनाशात् )।

त्यादीनां भव्यत्वस्य च विप्रमोक्षो मोक्ष इत्यभिसम्बन्धान्मुक्तौ विशेष[1]गुणनिवृत्तिरिष्टा, अन्यत्र केवलज्ञान-दर्शनसिद्धत्वेभ्य इति वचनादनन्तज्ञानदर्शनसिद्धत्वसम्यक्त्वानामनिवृत्तिश्चेति युक्तं तथा वचनम् । कथ[2]-मेवमनन्तसुखसद्भावो मुक्तौ सिध्येदिति चेत् सि[3]द्धत्ववचनात् । सकलदुःखनिवृत्तिरात्यन्तिकी हि भगवतः सिद्धत्वम् । सैव चानन्तप्रशमसुखम् । इति सांसारिकसुखनिवृत्तिरपि मुक्तौ न विरुध्यते ।

अनन्[4]तसुखमेव मुक्तस्य, न ज्ञानादिकमित्यानन्दैकस्वभावाभिव्यक्तिर्मोक्ष इत्यपरः सोपि युक्त्यागमाभ्यां बाध्यते । तदनन्तं सुखं मुक्तौ पुंसः संवेद्यस्वभा[5]वमसंवेद्यस्वभावं वा? संवेद्यं चेत्तत्संवेदनस्यानन्तस्य सिद्धि[6]ः, अन्यथानन्तस्य सुखस्य स्व[7]यं संवेद्यत्वविरोधात् । यदि पुनरसंवेद्यमेव तत्तदा कथं सुखं नाम? सातसंवेदनस्य सुखत्वप्रतीतेः । स्यान्मतं [8]ते, अभ्युपगम्यते एवानन्तसुखसंवेदनं परमात्मनः । केवलं बाह्यार्थानां ज्ञानं नोपेय[9]ते त[10]स्येति, तदप्येवं सम्प्र[11]धार्यम्—किं बाह्यार्थाभावाद्बाह्यार्थसंवेदनाभावो मुक्तस्येन्द्रि-यापायाद्वा? प्रथमपक्षे सुखस्यापि संवेदनं मुक्तस्य न स्यात्, तस्यापि बाह्यार्थवदभावात् । पुरुषाद्वैतवादे हि बाह्यार्थाभावो यथाभ्युपगन्तव्यस्तथा सुखाभावोपि, अन्यथा द्वैतप्रसङ्गात् । अथ द्वैतवादावलम्[12]बिनां सतोपि बाह्यार्थस्येन्द्रियापायादसंवेदनं मुक्तस्येति मतं तदप्यसंगतं, त[13]त एव सुखसंवेदनाभावप्रसङ्गात् । अथा[14]न्तःकरणाभावेपि मुक्तस्यातीन्द्रियसंवेदनेन सुखसंवेदनमिष्यते तर्हि बाह्यार्थसंवेदनमस्तु तस्याती-न्द्रियज्ञानेनैवेति मन्यतां, सर्वथा विशेषा[15]भावात् । येऽपि[16] निराश्रवचि[17]त्तसन्तानोत्पत्तिर्मोक्ष इत्याचक्षते तेषामपि मोक्षतत्त्वं युक्त्याभ्यु[18]पायेन च बाध्यते प्रदीपनिर्वाणोप[19]मशान्तनिर्वाणवत् चि[20]त्तानां तत्त्वतोऽन्वितत्व-सा[21]धनात् सन्तानोच्छेदानुपपत्तेश्च[22] निरन्वयक्षणक्षयैकान्ताभ्युपायेन च मोक्षाभ्युपगमबाधनस्य वक्ष्यमाणत्वात् ।

त[23]था मोक्षकारणतत्त्वमपि कपिलादिभिर्भाषितं न्यायागमविरुद्धम् । तद्विज्ञानमा[24]त्रं न परनिःश्रे-यसकारणं, प्रकर्षपर्य[25]न्तावस्थायामप्यात्मनि शरीरेण सहावस्था[26]नान्मिथ्याज्ञानवत् । न तावदिहासिद्धो हेतुः, सर्वज्ञानामपि कपिलादीनां स्वयं प्रकर्षपर्यन्तावस्थाप्राप्तस्यापि ज्ञानस्य शरीरेण सहावस्था-नोपगमा[27]त् । साक्षात्सकलार्थज्ञानोत्पत्त्यनन्तरं शरीराभावे कुतोयमाप्तस्योपदेशः प्रवर्तते? अशरीरस्याप्तस्यो-पदेशकरणविरोधादाकाशवत् । तस्या[28]नुत्पन्ननिखिलार्थज्ञानस्योपदेश इति चेन्न[29], तस्याप्रमाणत्वशङ्काऽनि-वृत्तेरन्याऽज्ञानपुरुषोपदेशवत् । यदि पुनः शरीरान्तरानुत्पत्तिर्निःश्रेयसं न गृहीतशरीरनिवृत्तिः । तस्य[30] साक्षात्सकलतत्त्वज्ञानं कारणं, न तु गृहीतशरीरनिवृत्ते[31]ः, फलोपभोगात्तदुपगमा[32]त् । ततः पूर्वोपात्तशरीरेण सहावतिष्ठमानात्तत्त्वज्ञानादाप्तस्योपदेशो युक्त इति म[33]तं तदा हेतुः सिद्धोभ्युप[34]गतस्तावत् । स च परनिः-

---

१ विशेषाः अदृष्टजबुद्ध्यादयः । २ यौगः । ३ जैनः । ४ अतः परं वेदान्तवादी प्राह । ५ ज्ञेयस्वभावम् । स्वसंवेद्यस्वभावमिति पाठान्तरम् । ६ ( विषयरूपस्य सुखस्यानन्त्ये विषयिणस्तद्वेदनस्याप्यानन्त्यम्—अन्यथा तत्संवेदनानुपपत्तेः ) । ७ आत्म-ना । ८ वेदान्तवादिनः । ९ अभ्युपगम्यते । १० परमात्मनः । ११ ( जैनः ) विचार्यम् ( वक्ष्यमाणप्रकारेण ) । १२ भाट्टानाम् । १३ इन्द्रियापायादेव । १४ परः । १५ सुखसंवेदनबाह्यार्थसंवेदनयोः । १६ सौगताः । १७ वीतरागद्वेषात्मसन्तानोत्पत्तिः । १८ आगमेन । १९ प्रदीपस्य निर्वाणोपमं तच्च तच्छान्तनिर्वाणं च । यथा प्रदीपनिर्वाणं युक्त्यागमेन च बाध्यते । २० ज्ञानानां सान्वयत्वेन साधनात् । २१ द्वितीयपरिच्छेदे सन्तानः समुदायश्चेति कारिकायां वक्ष्यमाणत्वात् । २२ मानसानां परमार्थतोनुगतत्वं साध्यते मानसानां सन्तानोच्छेदश्च न संभवतीति हेतुद्वयात् । २३ यथा मोक्षतत्त्वम् । २४ मात्रशब्देन दर्शनचारित्रयोर्निरासः । २५ सकलार्थसाक्षात्कारितावस्थायाम् । २६ विज्ञानमा-त्रस्य प्रवर्तमानत्वात् । २७ कापिलादिभिः । २८ सांख्यः प्राह । आप्तस्य । २९ जैन आह ।—अनुत्पन्ननिखिलार्थज्ञानस्य पुंस उपदेशस्यासत्यत्वसंभवात् । ३० शरीरान्तरानुत्पत्तिलक्षणस्य निःश्रेयसस्य । ३१ ( गृहीतशरीरनिवृत्तौ न सकलतत्त्व-ज्ञानं कारणं, गृहीतशरीरनिवृत्तौ फलोपभोगस्य कारणत्वात् ) । ३२ ( गृहीतशरीरनिवृत्तिः फलोपगमादेव भवतीत्युपग-मात्सांख्यैः । ३३ सांख्यस्य । ३४ अस्माभिः स्याद्वादिभिरङ्गीकृतः प्रकर्षपर्यन्तावस्थायामप्यात्मनि ज्ञानस्य शरीरेण सहावस्थानादित्ययं हेतुः ।

श्रेयसाऽकारणत्वं तत्त्वज्ञानस्य साधयत्येव, भाविशरीरस्येवोपात्तशरीरस्यापि निवृत्तेः परनिःश्रेयसत्वात्, [1]तस्य च [2]तद्भावेप्यभावात्। [3]फलोपभोगकृतोपात्तकर्मक्षयापेक्षं तत्त्वज्ञानं परनिःश्रेयसकारणमित्यप्यनालो[4]चिता-भिधानं, फलोपभोगस्यौपक्रमिकानौपक्रमिकविकल्पानतिक्रमात् । [5]तस्यौपक्रमिकत्वे कुतस्तदुपक्रमो[6]ऽन्यत्र तपोति[7]शयात्। इति तत्त्वज्ञानतपोतिशयहेतुकं परनिःश्रेयसमायातम्। [8]समाधिविशेषादुपात्ताशेषकर्मफलोप-भोगोपगमाददोष इति चेत् [9]कः पुनरसौ समाधिविशेषः? स्थिरीभूतं ज्ञानमेव स इति चेत् तदुत्पत्तौ परनिः-श्रेयसस्य भावे स एवास्योपदेशाभावः । [11]सकलतत्त्वज्ञानस्यास्थैर्या[12]वस्थायामसमाधिरूपस्योपजनने युक्तोयं योगिनस्तत्त्वोपदेश इति [13]चेन्न, सकलतत्त्वज्ञानस्यास्थैर्यविरो[14]धात्तस्य कदाचिच्चलनानुपपत्तेः, [15]अक्रमत्वा-द्वि[16]षयान्तरसंचरणाभावात्, [17]अन्यथा सकलतत्त्वज्ञानत्वासंभवादस्मदादिज्ञानवत् । [18]अथ तत्त्वोपदेशद-शायां योगिनोपि ज्ञानं विनेयजनप्रतिबोधाय व्याप्रियमाणमस्थिरमसमाधिरूपं पश्चान्निवृत्तसकलव्यापारं स्थिरं समाधिव्यपदेशमास्कन्दतीत्युच्यते [19]तर्हि समाधिश्चारित्रमिति नाममात्रं भिद्यते, [20]नार्थः, तत्त्वज्ञानादशेषाज्ञा-ननिवृत्तिफलादन्य[21]स्य परमोपेक्षालक्षणस्वभावस्य समु[22]च्छिन्नक्रियाऽप्रतिपातिपरमशुक्लध्यानस्य तपोतिशयस्य समाधिव्यपदेशकरणात्। तथाच्चारित्रसहितं तत्त्वज्ञानमन्तर्भूततत्त्वार्थश्रद्धानं परनिःश्रेयसमनिच्छता-मपि कपिलादीनामग्रे[23] व्यवस्थितम्। ततो न्यायविरुद्धं सर्वथैकान्तवादिनां ज्ञानमेव मोक्षकारणतत्त्वम्। स्वागमविरुद्धं च, सर्वेषामागमे प्रव्रज्याद्यनुष्ठान[24]स्य सकलदोषोपरम[25]स्य च बाह्यस्याभ्यन्तरस्य च चारित्रस्य मोक्षकारणत्वश्रवणात्।

तथा संसारतत्त्वं चान्येषां न्यायागमविरुद्धम्। तथा हि। नास्ति नित्यत्वाद्येकान्ते कस्यचित्संसारः, विक्रियानुप[26]लब्धेः। इति न्यायविरोधः। समर्थयि[27]ष्यते तदागमविरोधश्च, [28]स्वयं पुरुषस्य संसाराभाववच-नाद्, [29]गुणानां संसारोपपत्तेः [30]परेषां संवृ[31]त्त्या संसारव्यवस्थितेः।

तथा संसारकारणतत्त्वं चान्येषां न्यायागमविरुद्धम्। [32]तद्धि मिथ्याज्ञानमात्रं तैरुररीकृतम्। न च तत्कारणः संसारः, तन्नि[33]वृत्तावपि संसारानिवृत्तेः। यन्निवृत्तावपि यन्न निवर्त्तते न तत्तन्मात्रकारणम्। यथा तक्षादिनिवृत्तावप्यनिवर्तमानं देवगृहादि न तन्मात्रकारणम्। मिथ्याज्ञाननिवृत्तावप्यनिवर्त्तमानश्च संसारः। तस्मान्न मिथ्याज्ञानमात्रकारणक इति। अत्र न हेतु[34]रसिद्धः, सम्यग्ज्ञानोत्पत्तौ मिथ्याज्ञाननिवृत्तावपि दो[35]षानिवृत्तौ संसारानिवृत्तेः [36]स्वयमभिधानात्। दोषाणां संसारकारणत्वावेदकागमस्वीकरणाच्च तन्मात्रं संसारकारणतत्त्वं न्यायागमविरुद्धं सिद्धम्। तदेवमन्येषां न्यायागमविरुद्धभाषित्वादर्हन्नेव युक्तिशास्त्रा-विरोधिवाक् सर्वज्ञो वीतरागश्च निश्चीयते। ततः स एव सकल[37]शास्त्रादौ प्रेक्षावतां संस्तुत्यः।

---

१ परनिःश्रेयसत्वस्य। २ तत्त्वज्ञानभावेपि। ३ (साख्य.) फलाना शुभाशुभानामुपभोगोऽनुभवन तेन कृतो योसावुपात्तकर्मणा क्षयस्तस्य अपेक्षा यस्य तत्तथोक्तम्। ४ जैन आह। ५ फलोपभोगस्य। ६ विना। ७ (तपोतिश-यस्याकामनिर्जराकारणत्वमुक्तम्)। ८ न तु तत्त्वज्ञानमात्रहेतुकम्। ९ तत्त्वज्ञानतपोतिशयहेतुकत्वाभावेपि मोक्षस्य स्थिरी-भूततत्त्वज्ञानमेव हेतुरित्यदोष इति साख्य। १० स्याद्वादी। ११ साख्यः। १२ चलावस्थायाम्। १३ जैन। १४ अस्थैर्यविरोध दर्शयति। १५ चलनानुपपत्ति कुतः? १६ अक्रम. कुतः? १७ विषयान्तरसञ्चरणे सति। १८ साख्य.। १९ जैन॰। २० अर्थोऽभिप्रायस्तु न भिद्यते। २१ भिन्नस्य। २२ नष्टव्यापाराऽविनाशीति स्वरूपं तच्छुक्लध्यानस्य। २३ कपिलादीनां सम्मुखम्। २४ बाह्यचारित्ररूपस्य। २५ आभ्यन्तरचारित्ररूपस्य। २६ (येषा मते नित्य एवात्मा तेषा मते आत्मनो भवान्तरावाप्तिरूपः ससारो न सभवति आत्मनो नित्यत्वेन विकारानुपपत्ते)। २७ (अग्रेऽस्माभि.)। २८ न प्रकृतिर्न विकृति॰ पुरुष, एकमेवाद्वितीय ब्रह्मेत्यादि च वदद्भि॰। २९ सत्त्वरजस्तमसाम्। प्रकृतिविकृत्यहङ्कारादीनाम्। ३० साख्यानाम्। सौगतानामिति टिप्पणान्तरम्। ३१ कल्पनया। ३२ संसारकारणतत्त्वम्। ३३ मिथ्याज्ञाननिवृत्तौ। ३४ तन्निवृत्तावपि संसारानिवृत्तेरिति। ३५ दोषाः रागद्वेषा.। ३६ साख्यैः। ३७ सकलं तत्त्वार्थादि।

ये[1] त्वाहुः—'सतोपि यथार्थदर्शिनो वीतरागस्ये[2]दन्तया निश्चेतुमशक्तेस्तत्कार्यस्य व्यापारादेस्तद्व्यभिचारा[3]दवीतरागेपि दर्शनात्, सरागाणामपि वीतरागवच्चेष्टमानानामनिवारणान्न कस्यचित् स त्वमेवाप्त इति निर्णयः सभवति'इति तेषामपि, विचित्राभिसंबन्ध[4]तया[5] व्यापारव्याहारादिसाङ्कर्येण क[6]श्चिदप्यतिशयानि[7]र्णये कैमर्थक्याद्विशेषेष्टिः, ज्ञानवतोपि विसंवादात्, क्व पुनराश्वासं लभेमहि? * न हि ज्ञानवतो वीतरागात्पुरुषाद्विसंवादः कश्चित्संभवति [11]सुगतादावप्यनाश्वासप्रसङ्गात् [12]तस्य कपिलादिभ्यो विशेषेष्टेरानर्थक्यप्रसङ्गात् । न च व्यापारव्याहाराकारविशेषाणां [13]तत्र [14]साङ्कर्यं सिध्यति, विचित्राभिसन्धितानुपपत्तेः, [15]तस्याः पृथग्जने रागादिमत्यज्ञे प्रसिद्धेः प्रक्षीणदोषे भगवति नि[16]वृत्तेः, अस्य यथार्थप्रतिपादनाभिप्रायतानिश्चयात् । कुतश्चा[17]यं सर्व[18]स्य विचित्राभिप्रायतामदृश्यां व्यापारादिसाङ्कर्यहेतुं निश्चिनुयात्? शरीरि[19]त्वादेर्हेतोः स्वात्मनीवेति चेत् [20]तत एव सुगतस्यासर्वज्ञत्वनिश्चयोस्तु । तत्रा[21]स्य [22]हेतोः सन्दिग्धविपक्षव्यावृत्ति[23]कत्वान्न तन्निश्चयः । शरीरी च स्यात्सर्वज्ञश्च, विरोधाभावात्, वि[24]ज्ञानप्रकर्षे शरीराद्यपकर्षादर्शनादिति चे[25]त्तत एव सर्वज्ञस्य विचित्राभिप्रायतानिश्चयोपि मा भूत्, तत्रापि प्रोक्तहेतोः सन्दिग्धविपक्षव्यावृत्तिकत्वाविशेषात् । [26]सोयं विचित्रव्यापारादिकार्यदर्शनात्सर्वस्य विचित्राभिसन्धितां निश्चिनोति, न पुनः कस्यचिद्वचनादिकार्यातिशयनिश्चयात् सर्वज्ञत्वाद्यतिशयमिति कथमनुमे[28]यः? कैमर्थक्या[29]च्चास्य[30] सन्तानान्तरस्वसन्तानक्षणक्षयस्वर्गप्रापणशक्त्या[31]दे[32]र्विशेषस्येष्टिः? विप्रकृष्टस्वभावत्वाविशेषात्, वेद्यवेद[34]काकाररहितस्य वेदनाद्वैतस्य वा विशेष[32]स्य प्रमाणभूतस्य[33] जगद्धितैषिणः शास्तुस्तायिन शोभनं गतस्य सम्पूर्णं वा गतस्य पुनरनावृत्त्या सुष्ठु वा गतस्य विशेष[35]स्येष्टिः? सर्वत्रा[35]नाश्वासाविशेषात् । [36]न चैवं वा[37]दिनः किञ्चिदनुमानं नाम, निरभि[38]सन्धीनामपि बहुलं कार्यस्वभावानियमोपलम्भात्, सति काष्ठादिसामग्रीविशेषे [39]क्वचिदुपलब्धस्य[40] तदभावे प्रायसोनुपलब्धस्य [41]मण्यादिकारणकलापेपि संभवात् । यज्जातीयो यतः संप्रेक्षितस्तज्जातीयात्तादृगिति दुर्लभनियमतायां धूमधूमकेत्वादीनामपि व्याप्यव्या-

---

१ सौगता. । २ अयमेवेति प्रकारेण । ३ अवीतरागेपि दर्शनादेव व्यभिचार. । ४ विचित्राभिसन्धितया इति-पाठान्तरम् । ५ अभिप्रायतया । हेतुरयं, तृतीयान्तस्यापि हेतुत्वात् । ६ कपिलादाविव सुगतेपि । ७ सरागाणा वीतरागवच्चेष्टमानाना मायाविनामपि नानापरिणामत्वेन गमनवचनादिसङ्करत्वेन क्वचिदपि पुरुषे माहात्म्यानिश्चये सति विशेषाभिमत( सुगत )स्यानर्थक्य घटते । एवं सति ज्ञानिनोपि असत्यत्व घटते । ८ सुगतस्य । ९ विश्वासम् । १० विषये । ११ अन्यथा ( ज्ञानवतोपि विसंवाद सभवति चेत् ) । १२ सुगतस्य । १३ ज्ञानवति । १४ सरागो वीतरागवद्वीतरागश्च सरागवच्चेष्टते इति साङ्कर्यम् । १५ ( विचित्राभिसन्धितायाः ) । १६ ( विचित्राभिसन्धिताया ) । १७ सौगत । १८ सर्वज्ञस्यासर्वज्ञस्य वा । १९ सौगत· प्राह ।—सर्वज्ञे वीतरागे विचित्राभिप्रायोस्ति, शरीरित्वादस्मदादिवत् । २० स्याद्वादी । २१ सुगते । २२ शरीरित्वादेरित्यस्य । २३ शरीरी चास्तु सर्वज्ञश्चेति सन्दिग्धा विपक्षाद्व्यावृत्तिर्यस्य हेतो स । तत्त्वात् । २४ विरोधाभावे हेतुमाह । २५ जैन । २६ सौगतः । २७ बुद्धिमान् । २८ किं लिङ्गमाश्रित्येत्यर्थ । २९ सौगतस्य । ३० सन्तानान्तरो देवदत्तयज्ञदत्तसन्तान. । स्वस्य आत्मनः सन्तानश्च । तयो क्षणक्षयिणी या शक्ति स्वर्गप्रापणस्य च या शक्तिस्तदादेर्विशेषस्येष्टिर्निश्चितिर्निरर्थिका भवति । कुत ? दूरतरस्वभावत्वात्, उभयत्र सर्वज्ञत्वाद्यतिशये उक्तविशेषस्येष्टौ च विशेषाभावात् । ३१ ज्ञानाद्वैतवादिन प्रति जैनस्योक्ति । ३२ कैमर्थक्यादिष्टिरिति पूर्वेणान्वय· । ३३ प्रमाणभूताय जगद्धितैषिणे प्रणम्य शास्त्रे सुगताय तायिने । ( इत्युक्त बौद्धै ) । ३४ सुगतकपिलार्हता मध्ये । ३५ सर्वज्ञत्वाद्यतिशये सवेदनाद्वैतगुणे सुगतगुणे चानिर्णयतया विशेषाभावात् । ३६ अनुमानात्तद्विशेषेष्टि· स्यादित्युक्ते आह—न चैवमिति । ३७ एवं वादिन सौगतस्य किञ्चिदनुमानं न सम्भवति, निरभिप्रायाणामनुमानानुमेयानां बाहुल्येन कार्यस्वभावरूपयोर्हेत्वोरनिश्चयदर्शनात् । ३८ अभिप्रायरहितानामचेतनादीनामग्न्यादीनामित्यर्थ । ३९ कारणभूते । ४० अग्नेः । ४१ मणि सूर्यकान्त ।

पकभावः कथमिव निर्णीयेत? वृक्षः, शिंशपात्वा[1]दिति लताचूता[2]देरपि[3] क्वचिदेव दर्शनात् प्रेक्षावतां किमिव निःशङ्कं चेतः स्यात्? तदेतददृष्टसंशयैकान्तवादिनां विदग्धमर्कटानामिव खला-ङ्गूलभक्षणम् *। ननु[4] च 'काष्ठादिसामग्रीजन्योऽग्निर्यादृशो दृष्टो न तादृशो मण्यादिसामग्रीप्रभव इति यज्जातीयो यतो दृष्टः स तादृशादेव न पुनरन्यादृशादपि, यतो धूमपावकयोर्व्याप्यव्यापकभावो न निर्णी-यते, तथा[5] यादृशं चूतत्वं वृक्षत्वेन व्याप्तं तादृशं न लतात्वेन, यतः शिंशपात्ववृक्षत्वयोरपि व्याप्यव्यापक-भावनियमो दुर्लभः स्यात्[6]' इति कश्चित्[7]सोपि प्रतीते[8]रपलापकः, कार्यस्य[9] तादृशंतया[10] प्रतीयमानस्यापि कारण[11]विशेषातिवृत्तिदर्शनात्[12]। यत्तत[13]: परीक्षितं कार्यं कारणं नातिवर्तते इति चेत्[14] स्तुतं * प्रस्तु[15]-तं, व्यापारादि[16]विशेषस्यापि किञ्चिज्ज्ञरागादिमदसंभविनो यत्ततः परीक्षितस्य भगवति ज्ञानाद्यतिशयान-तिवृत्तिसिद्धेः[17]। एतेन यत्ततः परीक्षितं व्याप्यं व्यापकं नातिवर्तते इति ब्रुवता[18]पि स्तुतं प्रस्तुतमित्युक्तं वेदितव्यं, पुरुषविशेषत्वादेः स्वभावस्य व्याप्यस्य सर्वज्ञत्वव्यापकस्वभावानतिक्रमसिद्धेस्तद्वद[19]विशेषात्। ततोयं[20] प्रतिपत्तुरपराधो नानुमानस्येत्यनुकूलमाचरति[21] *। मन्दतरधिया धूमादिकमपि परीक्षितुम-क्षमाणां ततो[22] धूमध्वजादिबुद्धेरपि व्यभिचारदर्शनात्। प्रज्ञातिशयवतां तु सर्वत्र परीक्षाक्षमाणां यथा धूमादि पावकादिकं न व्यभिचरति तथा व्यापारव्याहाराकारविशेषः क्वचिद्विज्ञानाद्यतिशयमपीत्यनुकूला-चरणम्। एवं युक्तिशास्त्राविरोधिवाक्त्वं, भगवतोर्हत एव सर्वज्ञत्वं साधयतीत्यभिधाय तदेवं[23] तत्[24] **सुनिश्चितासम्भवद्बाधकप्रमाणत्वमर्हत्येव सकलज्ञत्वं साधयति नान्यत्रेत्यविरोध** इत्यादिना[25] स्प-ष्टयति *, स्वामीति[26] शेषः, यद्यस्मादविरोधः सुनिश्चितासंभवद्बाधकप्रमाणत्वं त्वय्येव तस्माच्च त्वमेव स इत्यभिधानसंबन्धात्। स एवाविरोधः कुतः सिद्ध इत्यारेकायां यदिष्टं ते प्रसिद्धेन न बाध्यते इत्यभि-धानात्। तत्रेष्टं[27] मतं[28] शासन[29]मुपचर्यते, निराकृतवाचोपि क्वचि[30]दविप्रतिषेधात् *। न पुनरि-च्छाविषयीकृतमिष्टं, प्रक्षीणमोहे भगवति मोहपर्यायात्मिकायास्तदिच्छायाः[31] सम्भवाभावात्। तथा हि। नेच्छा सर्वविदः शासनप्रकाशननिमित्तं, प्रणष्टमोहत्वात्। यस्येच्छा शासनप्रकाशननिमित्तं, न स प्रणष्टमोहो यथा किञ्चिज्ज्ञः। प्रणष्टमोहश्च सर्ववित्प्रमाणतः[32] साधितस्तस्मान्न तस्येच्छा शासनप्रका-शननिमित्तम्। इति केवलव्यतिरेकी हेतुर्निराकृतवाचं[33] साधयति, अव्यभिचारात्। ननु[34] सर्वविदिच्छा-मन्तरेण वक्ति, वक्तृत्वादसदादिवदित्यनेन निराकृतवाचो विप्रतिषेध इति चेन्नायं[35] नियमोस्ति। तदभ्यु[36]-पगमे को दोष इति चेत्, **नियमाभ्युपगमे सुषुप्त्यादावपि निरभिप्रायप्रवृत्तिर्न स्यात्** *।

१ इत्यनुमानं च न भवेद्यत.। २ न केवलं वृक्षचूतादे। ३ वृक्षो भवितुमर्हति, आम्रत्वात्तथा लतारूपचूतत्वात (उभयथापि वक्तुं शक्यते)। ४ पर.। ५ स्वभावहेतुं मण्डयति सौगत। ६ अपि तु न स्यादेव। ७ सौगत। ८ प्रत्यक्षस्य।' ९ वन्हे। १० काष्ठादिसामग्रीजन्यतया। ११ कारणविशेष काष्ठादिस्तस्यातिवृत्तिरुल्लङ्घनं तस्या दर्शनात्। १२ मण्यादेर्वन्हिदर्शनात्। १३ सौगत.। १४ जैन प्राह—त्वया सौगतेन अस्माकमिष्टं कथितम् (समर्थितम्)। १५ प्रकृतम्। १६ (व्याहारादीति पाठान्तरम्)। १७ अनुल्लङ्घनात्। १८ सौगतेन। १९ यथा यत्ततः परीक्षितं कार्यं कारणं नातिवर्तते तथा पुरुषविशेषत्वादिस्वभावो व्याप्य' सर्वज्ञत्वादिरूपव्यापकस्वभावं नातिवर्तते, उभयत्र व्याप्य-व्यापकभावयोर्विशेषाभावात्। २० साध्यव्यभिचारलक्षण। २१ बौद्ध'। २२ धूमादिकात्। २३ युक्तिशास्त्राविरोधिवाक्त्वाद्यनेकप्रकारेण। २४ पूर्वोक्तम्। २५ स त्वमेवेति कारिकोक्तेन। २६ समन्तभद्राचार्य.। २७ भगवति। २८ भगवानागमं कथयति परन्तु इच्छामन्तरेण कथयति। इष्टमिच्छाविषयीकृतमिति भगवत्युपचर्यते। अत्राह नैयायिक।—भो स्याद्वादिन् इच्छा विना वचनप्रवृत्तिर्न भवेत्। तदुपरि जैन प्राह।—भो नैयायिक निराकृतवाचोपि (निरभिप्रायायाः वाचोपि) क्वचिदविप्रतिषेधात् (इच्छा विनापि वचनस्योत्पत्तेर्वक्ष्यमाणत्वात्)। २९ आगम.। ३० सुषुप्तपुरुषादौ। ३१ शासनप्रकाशनेच्छाया। ३२ दोषावरणयोर्हानिरित्यादिना। ३३ (निरभिप्रायवचनम्)। ३४ नैयायिकः प्राह। ३५ जैन आह। ३६ पर आह। वाच इच्छापूर्वकत्वाभ्युपगमे।

न हि सुपुप्तौ गोत्र[1]स्खलनादौ वाग्व्यवहारादिहेतुरिच्छास्ति । **प्रतिसंविदि[2]ताकारेच्छा तदा संभवन्ती पुनः स्मर्येत वाञ्छान्तरवत् *** । न ह्यप्रतिसंविदिताकारेच्छा संभवति या पश्चान्न स्म[3]र्यते । पू[4]र्वका-लभा[5]विनीच्छा तदा वागादिप्रवृत्तिहेतुरप्रतिसंविदिताकाराऽनुमेया सम्भवत्येवेति चेत् किं पुनस्तदनुमा-नम्? वि[6]वादाध्यासिता वागादिप्रवृत्तिरिच्छापूर्विका, वागादिप्रवृत्तित्वात् प्रसिद्धेच्छापूर्वकवागादिप्रवृत्ति-वदिति चेन्न, हेतोरप्रयोजकत्वात् । यथा[7]भूतस्य हि जाग्रतोनन्यमनसो वा वागादिप्रवृत्तिरिच्छापूर्विका प्रतिपन्ना देशान्तरे कालान्तरे च तथाभूतस्यैव तत्प्रवृत्तिरिच्छापूर्विका साधयितुं शक्या न पुनरन्यादृशो-तिप्र[8]सङ्गात् । न च सुपुप्तस्यान्यमनस्कस्य वा तत्प्रवृत्तिरिच्छापूर्वकत्वेन व्याप्ता[9]वगता, तदवगतेरस-भवात् । सा हि स्वसन्ता[10]ने तावन्न संभवति, सुपुप्त्यादिविरोधात् । सु[11]पुप्तोन्यमनस्कश्च प्रवृत्तिमिच्छापूर्वि-कामवगच्छति चेति व्याहतमेतत् । पश्चादुत्थितोवगच्छतीति चेदिदमपि ता[12]दृगेव । स्वय[13]मसुपुप्तोनन्यम-नाश्च सुपुप्तान्यमनस्कप्रवृत्तिमिच्छापूर्वकत्वेन व्याप्तामवगच्छतीति ब्रुवा[14]णः कथमप्रतिहतवचनपथः स्वस्थै-र्[15]स्थीयते? तदानुमानात्तदवगतेरदोप इति चेन्न, अनवस्थाप्रसङ्गात्, त[16]दनुमानस्यापि व्याप्तिप्रतिपत्ति-पुरस्सरत्वात् तद्व्याप्तेरप्यनुमानान्तरापेक्षत्वात्, सुदूरमपि गत्वा प्रत्यक्षतस्तद्व्याप्तिप्रतिपत्तेरघटनात् । ए[17]तेन सन्तानान्तरे त[18]द्व्याप्तेरवगतिरपास्ता, अनुमानात्तदवगतावनवस्थानाविशेषात्, प्रत्यक्षतस्तदवगतेरसंभवाच्च । इति नानुमेया सुपुप्त्यादाविच्छास्ति तत्काला पूर्वकाला वा, तदनुमानस्यानुदयात् । त[19]था च सर्वज्ञप्रवृत्ते-रिच्छापूर्वकत्वे साध्ये वक्तृत्वादेर्हेतोः[20] सुपुप्त्यादिना व्यभिचारात्त[21]दनियम एव । **ततश्चै[22]तन्यकर[23]णपाटव-योरेव साधक[24]तमत्वम् *** । न[25]नु च सत्यपि चैतन्ये करणपाटवे च वचनप्रवृत्तेरदर्शनाद्विवक्षापि तत्सह-कारिकारणमपेक्ष्यते एवेति चेत्, सहकारिकारणान्तरं न वै निय[26]तमपेक्षणीयं, **नक्तञ्चरादेः सं[27]स्कृतच-क्षुषो वाऽनपेक्षितालोकसन्निधेः रूपोपलम्भात्** । **न चै[28]वं संवित्करणपाटवयोरप्यभावे विवक्षा-मात्रात्कस्यचिद्वचनप्रवृत्तिः प्रसज्यते, संवित्करणवैकल्ये यथाविवक्षं वाग्वृत्तेरभावात् *** । न हि[29] शब्दतोर्थतश्च शास्त्रपरिज्ञानाभावे तद्व्याख्यानविवक्षायां सत्यामपि तद्वचनप्रवृत्तिर्दृश्यते, करणपाटवस्य चाभावे स्पष्टशब्दोच्चारणं, बालमूकादेरपि तत्प्रसङ्गात् । ततश्चैतन्यं करणपाटवं च वाचो हेतुरेव निय-मतो, न विवक्षा, विवक्षामन्तरेणापि सुपुप्त्यादौ तद्दर्शनात् । **न च दोष[30]जातिस्तद्धेतुर्यतस्तां वाणी नाति[31]वर्तेत, त[32]त्प्रकर्षापकर्षानुविधानाभावाद्बुद्ध्यादिव[33]त् *** । न हि यथा बुद्धेः श[34]क्तेश्च प्रकर्षे वाण्याः प्रकर्षोऽपकर्षे वाऽपकर्षः प्रतीयते, तथा दोपजातेरपि, तत्प्र[35]कर्षे वाचोपकर्षात् त[36]दपकर्षे एव त[37]त्प्रकर्षात्, अ[38]तो वक्तुर्दोपजातिरनुमीयेत । सत्यपि च रागादिदोषे कस्यचिद्बुद्धेर्यथार्थव्यवसायित्वा[39]दिगुणस्य सद्भावात्,

---

१ गोत्रं नाम । २ प्रतिवचननियतत्वेन (जाग्रद्दशाया) सविदित आकारो यस्या सा । ३ किन्तु सम्यग्ज्ञानाकारा एवेच्छा सभवतीति नान्या । ४ पर· । ५ पूर्वकालो जाग्रदवस्था । ६ (पर प्राह) स्वप्नसमयिकी । ७ (जैनोऽप्रयोजकत्वं दर्शयति) । ८ गोपालघटिकादिधूमस्याप्यग्निगमकत्वं स्यादित्यतिप्रसङ्ग । विषाणिनी वाग्, गोशब्दवाच्यत्वादित्यतिप्रसङ्गे टिप्पणान्तरमिदम् । ९ (इच्छापूर्वकत्वेन सह व्याप्तत्वावगति·) । १० सुपुप्तसन्ताने । ११ विरोधमेवाह । १२ व्याहतमेव । १३ (व्याहतिं दर्शयति) । १४ नैयायिक· । १५ आद्रीयते । १६ अनवस्थां दर्शयति । १७ स्वसन्ताने व्याप्त्यभावसमर्थनेन । १८ साध्यसाधनव्याप्ते । १९ इच्छाया अननुमेयत्वप्रकारेण । २० नैयायिकोक्तस्य । २१ वक्तृत्वेच्छापूर्वकत्वयो (स्वभावकार्यस्वरूपान्यतरनियमाभाव) । २२ चैतन्यं ज्ञानम् । २३ करणं ताल्वादिप्रयत्न इन्द्रियाणि वा । २४ वाक्यप्रवृत्तिं प्रति साधकतमत्वं, सुपुप्त्यादाविच्छापूर्वकत्वाभावेपि वक्तृत्वदर्शनात् । २५ पर । २६ नियमेन । २७ अञ्जनादिना । २८ विवक्षाभावेपि वक्तृत्वसद्भावप्रकारेण । २९ (न हीति पूर्वेणान्वय) । ३० द्वेषादिसमूह । ३१ किन्तु अतिक्रमेतैव । ३२ तस्या दोपजाते । ३३ (व्यतिरेकी दृष्टान्त) । ३४ करणपाटवस्य । ३५ (तथा दोपजातेरपि प्रकर्षापकर्षयोर्वाक्यप्रकर्षापकर्षौ न हीत्यत्र हेतुमाह ।) ३६ तस्या दोपजाते । ३७ तस्या वाच । ३८ कुत ? अपि तु न कुतोपि । ३९ आदिशब्देन समारोपव्यवच्छेदादिग्रहणम् ।

सत्यवाक्प्रवृत्तेरुपलम्भात्, कस्यचित्तु वीतरागद्वेषस्यापि बुद्धेरयथार्थाध्यवसायित्वादिदोषस्य भावे वितथवचनस्य दर्शनाद्विज्ञानगुणदोषाभ्यामेव वाग्वृत्तेर्गुणदोषवत्ता व्यवतिष्ठते, न पुनर्विवक्षातो दोषजातेर्वा । तदुक्तं "विज्ञानगुणदोषाभ्यां वाग्वृत्तेर्गुणदोषता । वाञ्छन्तो[1] वा न वक्तारः शास्त्राणां मन्दबुद्धयः" इति । ततः साधूपदेशि[2] 'तत्रेष्टं[3] मतं शासनमुपचर्यते' इति ।

तत्प्रसिद्धेन न बाध्यते । **प्रमाणतः सिद्धं प्रसिद्धम् । तदेव कस्यचिद्बाधनं युक्तम्** । **विशेषणमेतत्[4]परमतापेक्षम्, अप्रसिद्धेनाप्यनित्यत्वाद्येकान्तधर्मेण बाधा[5]ऽकल्पनात्[6] *।** न[7] ह्यनेकान्तशासनस्य प्रत्यक्षतः सिद्धोस्त्यनित्यत्वधर्मो बाधकः, सर्वथा नित्यत्वादिधर्मवत्[8] । अनुमानात्सिद्धो बाधक इति चेन्नैतत्[9] **प्रमाणात्प्रतिबन्धसिद्धेरभ्युपगमात् । न खलु[10] परेषां[11] प्रत्यक्षमग्निधूमयोः क्षणभङ्गसत्त्वयोर्वा[12] साकल्येन व्याप्तिं प्रति समर्थम्, अविचारकत्वात्[13]सन्निहितविषयत्वाच्च *** । अस्मदादिप्रत्यक्षं[14] हि साध्यसाधनयोर्व्याप्तिग्राहि परैरभ्युपगन्तव्यं, न योगिप्रत्यक्षम्, अनुमानवैयर्थ्यप्रसङ्गात्, योगिप्रत्यक्षेण देशतः कार्त्स्न्यतो वा निश्शेषसाध्यसाधनव्यक्तिसाक्षात्करणे समारोपस्या[15]प्यभावात् तद्व्यवच्छेदनार्थमप्यनुमानोपयोगायोगात् । तच्च[16] निर्विकल्पकमिव सविकल्पकमपि न विचारकं[17], पूर्वापरपरामर्श[18]शून्यत्वादभिलापससर्गरहितत्वात्[19] । सन्निहितविषयं च, देशकालस्वभावविप्रकृष्टार्थागोचरत्वात् । तन्न[20] साकल्येन व्याप्तिग्रहणे[21]समर्थम् । **न चानुमानम्[22]नवस्थानुषङ्गात् *** । व्याप्तिग्राहिणोनुमानस्यापि व्याप्तिग्रहणपुरस्सरत्वात्तद्व्याप्तेरप्यनुमानान्तरापेक्षत्वात् क्वचिदप्यवस्थानाभावात् । एवमप्रसिद्धव्याप्तिकं च कथमनुमानमेकान्तवादिनामनित्यत्वाद्येकान्तधर्मस्य साधकं येन प्रमाणसिद्धः सर्वथैकान्तोऽनेकान्तशासनस्य बाधकः स्यात्? **स्याद्वादिनां[23] तु, परोक्षान्तर्भाविना नस्[24]तर्केण[25] सम्बन्धो व्यवतिष्ठेत *** । तस्य विचारकत्वात्, प्रत्यक्षानुपलम्भ[26]सहकारिणो मतिज्ञानविशेषपरोक्ष[27]तर्कज्ञानावरणवीर्यान्तरायक्षयोपशमविशेषादुपजायमानस्य यावान्कश्चिद्धूमः स सर्वोप्यग्निजन्माऽनग्निजन्मा वा न भवतीति शब्दयोजनासहितपरामर्शात्मकत्वा[28]त्कालत्रयवर्तिसाध्यसाधनव्यक्तिविषयत्वाच्च व्याप्तिं प्रति समर्थत्वात्, प्रत्यक्षवद्व्याप्तिग्रहणपूर्वकत्वा[29]भावादनुमानोहान्तरानपेक्षत्वा[30]दनवस्थाननुषङ्गात्[31], संवादकत्वेन समारोपव्यवच्छेदकत्वेन च प्रमाणत्वात्[32][33] । **तदप्रमाणत्वे न लैङ्गिकं प्रमाणमिति शेषः, समारोपव्यवच्छेदाविशेषात्[34] *** । तर्कतः संबन्धस्याधिगमे समारोपविरोधात् । न[35] हि निर्वि-

१ वक्तृत्वम् । २ प्रागुपादिष्टम् । ३ भगवति । ४ प्रसिद्धमिति । ५ तवेष्टस्य मतस्य । ६ परैः । ७ बौद्धं प्रत्याह स्याद्वादी । ८ यथा सर्वथा नित्यत्वादिधर्मो नानेकान्तस्य बाधकस्तथा । ९ तर्काख्यप्रमाणमन्तरा प्रतिबन्धसिद्धे ( व्याप्तिसिद्धे ) रनभ्युपगमाद्व्याप्तिसिद्ध्यभावेनुमानायोगात् । १० ( तर्काख्यप्रमाणादृतेपि प्रत्यक्षेणैव व्याप्तिसिद्धिः स्यादित्युक्ते आह, नेति ) । ११ सौगतानाम् । १२ क्षणिकत्वसत्त्वयो साध्यसाधनयो । १३ निर्विकल्पकत्वेन । १४ ( ननु योगिप्रत्यक्षं न सन्निहितविषयमित्युक्ते बौद्धेन स्याद्वादी प्राह ) । १५ संशयादे । १६ अस्मदादिप्रत्यक्षम् । १७ व्याप्तिग्राहकम् । १८ ( अविचारकत्वादिति भाष्योक्तहेतुमन्यप्रकारेण कथयति ) । सर्वत्रेदमस्माज्जातमिदं च सर्वत्रानेन क्षणिकत्वेन व्याप्तमिति परामर्शशून्यत्वान्निर्विकल्पकस्य सविकल्पकस्य वा प्रत्यक्षस्य । १९ निर्विकल्पकादुत्पन्नत्वात्सविकल्पकस्य ( शब्दसंसर्गसहितं व्याप्तिग्राहीति हि परेषा मतम ) । विरोधान्नोभयेतिकारिकाव्याख्यानावसरे अभिलापससर्गरहितत्वं बलादापद्यतेस्येति वक्ष्यते । २० अविचारकं सन्निहितविषयं च यत । २१ निर्विकल्पकं सविकल्पकं वा । २२ साकल्येन व्याप्तिग्राहकम् । २३ तर्हि स्याद्वादिना कथ व्याप्तिग्रह इत्युक्ते आह । २४ अस्माकम् । २५ उपलम्भानुपलम्भनिमित्तं व्याप्तिज्ञानमूहस्तर्क । २६ यत्र यत्र धूमस्तत्र तत्राग्निर्यथा मठ । यत्र यत्राग्निर्नास्ति तत्र तत्र धूमोपि नास्ति यथा महाह्रद. । इत्युक्तप्रकारौ प्रत्यक्षानुपलम्भौ सहकारिणौ यस्य तस्य । २७ मतिज्ञानविशेष एव परोक्षतर्कज्ञानं तदावरणम् । २८-२९-३०-३१-३२ तर्कस्य । ३३ प्रत्यक्षवदिति पूर्वोक्तमुदाहरणम् । ३४ तर्कानुमानयोः । ३५ तर्कादिव निर्विकल्पकादपि निर्णये जाते समारोपो विहन्यतामित्युक्ते आह ।

कल्पकोधिगमोस्ति यतस्तत्र समारोपोपि[1] स्यात्। किं तर्हि? अधिगमोपि[2] व्यवसायात्मैव, तदनुत्पत्तौ सतोपि दर्शनस्य साधनान्तरापेक्षया[3] सन्निधानाऽभेदात्[4] सुषुप्तचैतन्यवत्[5] * । सन्निधानं हीन्द्रियार्थसन्निकर्षः । तत्स्वयमप्रमाणमाख्यत् तथागतः, साधनान्तरापेक्षित्वात् तस्यार्थपरिच्छित्तौ । तत[6] एव दर्शनस्याप्रमाणत्वं, सुषुप्तचैतन्यवत् स्वयं[7] संशयविपर्यासानध्यवसायाव्यवच्छेदकत्वात् । तद्व्यवच्छेदिनो निश्चयस्य[8] जननात्प्रमाणं दर्शनमिति चेत् तत एव सन्निकर्षः प्रमाणमस्तु । तस्यासाधकतमत्वान्न[9] प्रमाणत्वमिति चेत्कुतस्तस्यासाधकतमत्वम्? अचेतनत्वाद्घटादिवदिति चेद्दर्शनस्याप्यसाधकतमत्वं चेतन[10]त्वात्सुषुप्तचैतन्यवत्किं न स्यात्? यस्य भावेर्थः परिच्छिन्नो व्यवह्रियतेऽभावे चाऽपरिच्छिन्नस्तद्दर्शनं साधकतममिति चेत्सन्निकर्षः साधकतमोस्तु, भावाभावयोस्तद्वत्ता[11] साधकतमत्वमिति वचनात् । न हि सन्निकर्षस्य भावे भाववत्त्वमभावेऽभाववत्त्वमर्थपरिच्छित्तेरप्रतीतम् । नाप्यर्थस्यान्यत्[12] परिच्छिन्नत्वं, तत्परिच्छित्त्युत्पत्तेः[13] । परिच्छित्तिरुत्पन्ना चेत्[14] परिच्छिन्नोर्थ[15] उच्यते । अथ निर्विकल्पकदृष्टौ सत्यामर्थस्य परिच्छित्तिर्निश्चयात्मकार्थपरिच्छेदव्यवहारहेतुरुत्पद्यते नासत्याम् । अतस्तस्याः साधकतमत्वमिति तवाकूत[16] तदपि न समीचीनं, सन्निकर्षादेव तदुत्पत्त्यविरोधात् । कथमचेतनात्सन्निकर्षाच्चेतनस्यार्थनिश्चयस्योत्पत्तिर्न विरुध्यते इति चेत् तवापि कथमचेतनादिन्द्रियादेरविकल्पदर्शनस्य चेतनस्योत्पत्तिरविरुद्धा? चेतनान्मनस्कारा[17]दिन्द्रियादिसहकारिणो दर्शनस्योत्पत्तिरिति चेत्तर्हि चेतनादात्मनः सन्निकर्षसहकारिणोऽर्थनिश्चयोत्पत्तिरपि कथं विरुध्यते? यतः स्वार्थव्यवसायात्मकोधिगमो न भवेत् । स च साकल्येन साध्यसाधनसम्बन्धस्तर्कादेवेति प्रमाणं तर्कः, स्वार्थाधिगमफलत्वात् समारोपव्यवच्छेदकत्वात्संवादकत्वाच्चानुमानादिवत् । ततः स्याद्वादिनां व्याप्तिसिद्धेरस्त्यनुमानं, न पुनरेकान्तवादिनां[18], यतोनुमानसिद्धेन सर्वथैकान्तेनानेकान्तस्य बाधाकल्पना स्यात् । इत्यप्रमाणसिद्धेनापि बाधा कल्पनीयैव परैः, अन्यथा स्वमतनियमाघटनात् । तथा सति सूक्तं परमतापेक्षं विशेषणं प्रसिद्धेन न बाध्यते इति । एतेन यदुक्तं भट्टेन " नरः कोप्यस्ति सर्वज्ञः स तु सर्वज्ञ इत्यपि[19] । साधनं[20] यत्प्रयुज्येत प्रतिज्ञामात्रमेव तत्[21] । १ सिसाधयिषितो[22] योर्थः सोनया नाभिधीयते[23] । येन[24]स्तूच्यते न तत्सिद्धौ किञ्चिदस्ति प्रयोजनम् । २ । यदीयागमसत्यत्वसिद्धौ सर्वज्ञतोच्यते । न सा सर्वज्ञसामान्यसिद्धिमात्रेण लभ्यते । ३ । यावद्बुद्धो न सर्वज्ञस्तावत्तद्वचनं मृषा । यत्र क्वचन सर्वज्ञे सिद्धे तत्सत्यता[25] कुतः । ४ । अन्यस्मिन्न हि सर्वज्ञे वचसोन्यस्य सत्यता । सामाना[26]धिकरण्ये हि तयो[27]रङ्गाङ्गिता[28] भवेत् । ५ । " इति तन्निरस्तं, भगवतोर्हत एव

१ (समारोपविरोधस्तु दूर एवास्ताम्)। २ व्याप्तिज्ञानमधिगमोत्र । सोपि सविकल्पात्मैव । ३ सविकल्पकज्ञानमेवात्र साधनान्तरम् । ४ सतोपि दर्शनस्य न समारोपव्यवच्छेदकत्वं स्वयं गत साधनान्तर सविकल्पकमपेक्षते । तथा सन्निकर्षोपि न समारोपव्यवच्छेदक स्वयं किन्तु साधनान्तरमपेक्षते । इति सन्निकर्षान्न विशेष । ५ यथा सुषुप्तचैतन्यस्य न स्वयं प्रामाण्यं साधनान्तरापेक्षित्वात् । ६ ( जैन. ) तर्हि तत एव साधनान्तरापेक्षित्वादेव हे सौगत । ७ दर्शनस्य । ८ सविकल्पकज्ञानस्य । ९ प्रमितिं प्रति । १० ( जैन आह ) यच्चेतनं तत्साधकतममेवेति न नियमोस्ति । ११ ( सन्निकर्षस्य भावाभावयो सतोरर्थपरिच्छित्तेर्भावाभाववत्तास्तीति सैव साधकतमत्वम् )। १२ तथापि कथमर्थ. परिच्छिन्नो व्यवह्रियते इत्याशङ्कायामाह जैन । १३ अर्थपरिच्छित्त्युत्पत्तिमन्तरा अन्यदर्थपरिच्छिन्नत्वं नास्तीत्यर्थ । १४ तत्परिच्छित्तेरन्यत् 'परिच्छित्तिरुत्पन्ना' इत्यर्थपरिच्छिन्नत्वमस्ति चेदित्यर्थो बौद्धशङ्काया । १५ ( जैन आह ) । १६ बौद्धस्य । १७ मनोव्यापारात् । १८ तर्कसिद्धाया व्याप्तेरभावे एकान्तवादिनामनुमानं प्रमाण न । १९ नर पक्ष॰ सर्वज्ञ इति च इति पक्षद्वयसाधनमित्यर्थ । २० सुनिश्चितासम्भवद्बाधकप्रमाणत्वादिति । २१ प्रतिज्ञामात्रमेव कथमित्याह । २२ अर्हदादि । २३ भवद्भिर्जैनै । २४ अनिर्द्धारित. प्रतिज्ञया । २५ ( बौद्धादिभि प्रवर्तमानागमसत्यता )। २६ य. सर्वज्ञ स एवागमस्य प्रणेतेति । २७ सर्वज्ञतद्वचनयो. । २८ कार्यकारणता ।

युक्तिशास्त्राविरोधिवाक्त्वेन सुनिश्चितासंभवद्बाधकप्रमाणत्वेन च सर्वज्ञत्ववीतरागत्वसाधनात्। ततस्त्वमेव महान् मोक्षमार्गस्य प्रणेता नान्यः कपिलादिः। यस्मात्—

**त्वन्मतामृतबाह्यानां सर्वथैकान्तवादिनाम्। आप्ताभिमानदग्धानां स्वेष्टं[१] दृष्टेन[२] बाध्यते ॥७॥**

त्वन्मतमनेकान्तात्मकं वस्तु तज्ज्ञानं च। तदेवामृतम्, अमृतस्य मोक्षस्य कारणत्वात् सर्वथा निर्बाधत्वेन परितोषकारित्वाच्च। ततो बाह्याः सर्वथैकान्तास्तदभिनिवेशिन[३]श्च वादिनः। ते चाप्ताभिमानदग्धा एव विसंवादकत्वेन तत्त्वतोऽनाप्तत्वाद्वयमाप्ता इत्यभिमानेन स्वरूपात्[४]प्रच्यावितत्वाद्दग्धा इव दग्धा इति समाधि[५]वचनत्वात्, तेषां स्वेष्टस्य सदाद्येकान्तस्य दृष्टबाधनात्। अनेकान्तात्मकवस्तुसाक्षात्करणं बहिरन्त[६]श्च सकलजगत्साक्षीभूतं विपक्षे प्रत्यक्षविरोधलक्षण[७]मनेन[८] दर्शयति[९] *। सदाद्येकान्तविरोध[१०]स्यानेकान्तात्मकवस्तुसाक्षात्करणलक्षणत्वाद्, बहिरिवान्तरपि तत्त्वस्यानेकान्तात्मकतया सकलदेशकालवर्तिप्राणिभिरनुभवनात्[११] सुनिश्चितासंभवद्बाधकप्रमाणत्वसिद्धेः। न हि किञ्चिद्रूपा[१२]न्तरविकलं सदसन्नित्यानित्याद्येकान्तरूपं संवेदन[१३]मन्यद्[१४]वा संपश्यामो यथा[१५]त्र प्रतिज्ञायते[१६], चित्र[१७]ज्ञानवत्कथञ्चिद[१८]संकीर्णविशेषै[१९]कात्मनः सुखादि[२०]चैतन्यस्य वर्णसंस्थाना[२१]द्यात्मनः स्कन्धस्य च प्रेक्षणात् +। स्यान्मतं[२२] "सुखादिचैतन्यमसंकीर्णविशेषा[२३]त्मकमेव न पुनरेकात्मकं, सुखचैतन्यादाह्लादनाकारान्मेयबोधनाकारस्य विज्ञानस्यान्यत्वाद्, विरुद्धधर्माध्यासस्यान्यत्वसाधनत्वाद्, अन्यथा[२४] विश्वस्यैकत्वप्रसङ्गात्" इति तदसत्[२५], चित्रज्ञा[२६]नस्याप्येकात्मकत्वाभावप्रसङ्गात् पीताकारसवेदनस्य नीलाद्याकारसवेदनादन्यत्वात्, तद्वद्[२७]विरुद्धधर्माध्यासात्। यदि पुनरशक्यविवेच[२८]नत्वात्पीताद्याकारसवेदनमेकात्मकमुररीक्रियते तदा सुखादिसंवेदनेन कोपराधः कृतः? तस्याप्यशक्यविवेचनत्वादेवैकात्मकत्वोपपत्तेः, पीताद्याकाराणामिव सुखाद्याकाराणां चैतन्या[२९]न्तरं नेतुमशक्यविवेचनत्वसद्भावात्। [३०]तर्ह्येकात्मकमेव सुखादिचैतन्यं न पुनरसंकीर्णविशेषात्मकमित्यपि न मन्तव्यं, चित्रज्ञानस्याप्यसंकीर्णविशेषात्मकत्वाभावप्रसङ्गात्। तथा[३१] च सति न तच्चित्रमेकज्ञानवत्[३२]। चित्रज्ञाने पीताद्याकारप्रतिभासस्याविद्योपकल्पितत्वादेकात्मकत्वमेव वास्तवमिति चेत्कथमेकानेकाकारयोः प्रतिभासाविशेषेपि वास्तवेतरत्वप्रविवेकः? एकाकारस्यानेकाकारेण विरोधात्तस्यावास्तवत्वे कथमेकाकारस्यैवावास्तवत्वं न स्यात्[३३]? समज्ञानेऽनेकाकारस्यावास्तवस्य प्रसिद्धेश्[३४]चित्र[३५]ज्ञानेपि तस्या[३६]वास्तवत्वं युक्तं कल्पयितुमिति चेत्केशादावेकाकारस्याप्यवास्तवत्वसिद्धेस्तत्रा[३७]वास्तवत्वं कथमयुक्तम्? पीताद्या[३८]कारस्य संवेदनादभेदेनैकत्व[३९]विरोधाद्भेदे प्रतिभासासम्भवात्, प्रतिभासे वा संवेदनान्तरत्वा[४०]पत्तेरवास्तवत्वमे-

१ नित्यत्वाद्येकान्ततत्त्वम्। २ प्रत्यक्षेण। ३ आग्रहिण। ४ आप्तस्वरूपात्। ५ उपचारवचनत्वात्। ६ बहिस्तत्त्वमन्तस्तत्त्वं च। ७ प्रत्यक्षविरोधो लक्षणं यस्येति बसः (बहिरन्तश्चेति विशेष्यमत्र)। ८ स्वेष्टं दृष्टेन बाध्यते इत्यनेन। ९ समर्थयति। १० बाधनस्य। ११ अनेकान्तात्मकवस्तुसाक्षात्करणस्य। १२ सद्रूपं रूपान्तरेणासत्त्वेन रहितम्। १३ अन्तस्तत्त्वम्। १४ बाह्यतत्त्वम्। १५ एकान्तत्वेन। १६ परैर्बौद्धादिभि। १७ तथा च दृश्यते। १८ सुखादिपर्यायापेक्षया। आत्मशब्दोयमुभयत्र सम्बध्यते। तेन विशेषात्मन एकात्मनश्चेति योज्यम्। इत्युक्ते किं तात्पर्यम्? द्रव्यपर्यायापेक्षया अन्तर्वस्तु बहिर्वस्तु चैकानेकात्मकं नामेत्यर्थः। १९ एकत्वं द्रव्यापेक्षया। २० सुखादिनानाधर्मसहितचैतन्यस्य। २१ स्कन्ध.—संस्थानमाकृति। पुद्गल। २२ चित्राद्वैतवादिन। २३ प्रतिनियतानेकस्वरूपम्। २४ विरुद्धधर्मत्वेप्यभिन्नत्वे सति। २५ जैनैरुच्यते। २६ चित्राद्वैतवादिनश्चित्रज्ञानमेकमेव वदन्ति। २७ (सुखज्ञानमेयज्ञानवत्)। २८ पीताद्याकराणा चित्रज्ञाने। २९ देवदत्तसुखाद्याकाराणा यज्ञदत्तसन्तानं प्रति पृथक्कर्तुमशक्यत्वात्। (द्वितीयैकवचनम्)। ३० निरंशैकज्ञानवादी माध्यमिक प्राह। ३१ चित्रज्ञानस्यैकत्वे। ३२ घटाद्येकपदार्थज्ञाने यथा चित्रव्यवहारो न। ३३ उभयत्र विरोधाविशेषात्। ३४ लोके। ३५ एकस्मिन्। ३६ अनेकाकारस्य। ३७ एकाकारे। ३८ पीताद्याकार सवेदनादभिन्नो भिन्नो वेति विकल्प्य क्रमेण दूषयति माध्यमिकः। ३९ इद संवेदनमिमे पीतादय इति। ४० तर्हि तच्चित्रज्ञानं न भवति किन्तु तत्र ज्ञानान्तरमेव स्यात्।

चेति चेत्, तत एवैकाकार[1]स्यावास्तवत्वमस्तु[2], तस्यापि पीताद्याकारप्रतिभासेभ्योनर्थान्तर[3]तायामेकत्वविरोधा[4]दर्थान्तरताया संवित्त्यभावात्[5], संवित्तौ[6] वा ज्ञानान्तरत्वप्रसक्तेर्विशेषाभावात्। ततो[7] न चित्रज्ञानेऽनेकाकारप्रतिभासस्यैव प्रेक्षावद्भिरवास्तवत्वं शक्यं कल्पयितुं, येनेदमेवाभिधीयमानं शोभेत "किं स्यात्सा चित्र[8]तैकस्यां न स्यात्तस्यां मता[9]वपि। यदीदं[10] स्वयमर्थेभ्यो[11] रोचते[12] तत्र के वयम्[13]" इति। न पुनरिदमपि[14], "किं नु स्यादेकता[15] न स्यात्तस्यां चित्रमतावपि। यदीद[16] रोचते बुद्धै चित्रायै तत्र के वयम्" इति। ननु[17] चैकस्या मतौ[18] चित्रता[19]पायेपि संवेदन[20]मात्रस्य भावान्न स्वरूपस्य[21] स्वतो[22] गतिर्विरुध्यते। संवेदनमात्रस्य त्वपाये सा विरुध्येतेति चेन्न[23], तदभावेपि[24] नानापीतादिप्रतिभाससद्भावात्तदविरोधात्[25]। नन्वेवं[26][27] 'नीलवेदनस्यापि प्रतिपरमाणु भेदान्नीलाणुसवेदनैः परस्परं भिन्नैर्भवितव्यम्। तत्रैक[28]नीलपरमाणुसंवेदनस्याप्येवं[29] वेद्यवेदकसंविदाकारभेदान्नितयेन भवितव्यम्। वेद्याकारादिसवेदनत्रयस्यापि प्रत्येकमपरस्ववेद्याकारादिसवेदनत्रयेण[30]। इति परापरवेदनत्रयकल्पनादनवस्थानान्न क्वचिदेकवेदनसिद्धिः सविदद्वैतविद्विषाम्[31]। क्वचिदपि[32] एकात्मकत्वानभ्युपगमे च कुतो नानात्मव्यवस्था[33]? वस्तुन्येकत्रा[34]परैकवस्त्वपेक्षयानेकत्वव्यवस्थोपपत्तेः। क्वचिदैक्यो[35]पगमे वा कथं चित्रमतौ नैक्यमविरुद्ध? चित्राकारापायेपि तस्य[36] सम्भवात्।' इति कश्चित् सोप्य[37]प्रेक्षापूर्ववादी, तथा[38] सति चित्रज्ञाने सविदाकार[39]वदेकस्य पीताकारस्य नीलाकारस्य च सद्भाव[40]सिद्धौ परस्परापेक्षयानेकत्वसिद्धेरनेक[41]चैतन्यव्याप्तस्यानेकाकारस्य चित्रज्ञान[42]स्यान्तर[43]रेकानेकात्मकत्वसाधने निदर्शन[44]स्योपपत्तेः। स्यान्मतं[45], सुखादीनां[46] चैतन्यं व्यापकं भवत् किमेकेन स्वभावेन भवत्यनेकेन स्वभावेन वा? यद्येकेन[47] तदा तेषामेकस्वरूपत्वापत्तिः। अथानेकेन तदा सोप्यनेकस्वभावः परेणानेकेन स्वभावेन व्यापनीय इत्यनवस्था। अथैकादृशेन स्वभावेन सुखादयश्चैतन्येन व्याप्यन्ते तदानेकेन स्वभावेन सजातीयेनेत्युक्तं स्यात्। तत्र च सैवानवस्था। न च गत्यन्तरमस्ति येन सुखादिव्याप्यैकं चैतन्यं सिध्येदिति। तदेतच्चित्र[48]ज्ञानेपि समानम्[49]। तस्य[50] पीताद्याकारव्यापिनः स्वयं[51] संवेदनान्न दोष इति चेत्, सुखादिव्यापिनश्चैतन्यस्य सह क्रमेण च स्वयं संवेदनात्कथमुपालम्भः स्यात्? न हि दृष्टेऽनु[52]-

---

१ चित्रज्ञाने। २ सवेदनान्तरत्वापत्ते। ३ अभेदे। ४ पीताद्याकारप्रतिभासेभ्यश्चित्रज्ञानस्य भेदे। ५ अर्थान्तरत्वे सति पीताद्यशेषाकारशून्यस्य चित्रज्ञानस्याप्रतीयमानत्वाद्धेतो। ६ अर्थान्तरत्वेपि। ७ उपसहरति जैन। ८ अनेकता। ९ चित्रज्ञाने। १० चित्रज्ञानस्यैकत्वम्। ११ ज्ञानलक्षणेभ्य। १२ प्रतिभासते। १३ वयं माध्यमिका निवारका कथं भवाम?। १४ शोभेतेति पूर्वेणान्वय। किं तत्? तदाह।—एकं चेच्चित्रता न स्याच्चित्रं चेदेकता कुतः? एकं च तच्च तच्चित्रमेतच्चित्रतरं महदिति। अन्यच्च स्वयमाह। १५ पीताद्याकाराणा स्याद्वाद्यभिमतानाम्। १६ चित्रत्वम्। १७ पीताद्यशेषाकारशून्यस्येदन्तयावगन्तुमशक्यत्वात्कथमेकत्वस्य वास्तवत्वमिति प्रत्यवस्थितान् चित्रज्ञानवादिन. प्रत्याचक्षाणो निरंशैकज्ञानवादी प्राह। १८ चित्रज्ञाने। १९ पीताद्याकाराणाम्। २० एकस्य। २१ चित्रज्ञाने सवेदनमात्रस्वरूपस्य। २२ चित्रज्ञानात्। २३ जैन। २४ एकस्य चित्रज्ञानस्य संवेदनमात्रस्याप्यभावे। २५ अतश्चित्रज्ञानस्यैकत्वविरोध। २६ निरंशकवादी माध्यमिकः प्राह। २७ भो जैन! त्वदुक्तप्रकारेण। एकस्यानेकत्वाङ्गीकारप्रकारेण। २८ तेषु मध्ये। २९ नानाप्रतिभाससद्भावत्वेन। ३० भवितव्यमित्यन्वय। ३१ जैनादीनाम्। ३२ ज्ञाने बहिरर्थे वा। ३३ तव जैनस्य। ३४ चित्रज्ञाने। ३५ ज्ञाने बहिरर्थे वा। ३६ चित्रमतावैक्योपगमस्य। ३७ इत स्याद्वादी प्राह। ३८ चित्राकारस्यापायेपि तस्य चित्रज्ञानस्य सम्भवादिति पूर्वोक्ते सति। ३९ सविदाकारस्येवैकस्येति खपुस्तकपाठ। एकस्य सविदाकारस्य यथा परस्परापेक्षयानेकत्वम्। ४० स्वस्वरूपापेक्षया। ४१ अनेकचैतन्यं नीलपीतादिप्रतिभास। तत्र व्याप्तस्य। ४२ विशेष्यस्य। व्यापकस्य। ४३ अन्तस्तत्त्वस्य ज्ञानादे। ४४ अन्तस्तत्त्वमेकात्मकमस्ति, चित्रज्ञानवदिति। ४५ सुखादीना प्रधानपरिणामत्वेनाचेतनत्वमभ्युपगम्य तेषा चैतन्यव्याप्तत्वाभाव मन्वान साङ्ख्यः प्राह। ४६ व्याप्यानाम्। ४७ भो जैन। ४८ इतो जैनो ब्रूते। ४९ पीताद्याकाराणां चित्रज्ञानं व्यापक भवत्किमेकेन स्वभावेनानेकेन वेत्यादिप्रकारेण। ५० व्यापकस्य चित्रज्ञानस्य। ५१ एकानेकस्वभावमन्तरेणैव। ५२ सुखादिव्यापिनि चैतन्येऽनुभूते।

पपन्नं नाम । न[1] च सुखादीनां चैतन्यव्यासत्वसंवेदनं भ्रान्तम्, अचेतनत्वग्राहिप्रमाणाभावात् । अचेतनाः सुखादय, उत्पत्तिमत्वाद् घटादिवदित्यनुमानं सुखाद्यचेतनत्वग्राहीति चेन्न, तस्य प्रत्यक्षबाधितविषयत्वात् चित्समन्वितानामेव सुखादीनां स्वसंवेदनप्रत्यक्षे सर्वदा प्रतिभासनात् । अनुमानविरुद्ध[2]श्च पक्षः । तथा हि । चेतनाः सुखादयः, स्वसंवेद्यत्वात् पुरुषवत् । पुरुषसंसर्गात्तेषां[3] स्वसंवेद्यत्वात्स्वतः संवेद्यत्वमसिद्धमिति चेन्न, जातुचिदस्वसंवेद्यत्वाऽप्रतीतेस्त[4]था वक्तुमशक्तेः–अन्यथा पुरुषस्य स्वसंवेद्यसुखादिसंबन्धात्स्वसंवेद्यत्वं, न स्वत इति वदतो[5] निवारयितुमशक्यत्वात्, चै[6]तन्यविशेषेण हेतो[7]र्व्यभिचारप्रतिपादनाच्च । न ततोऽचेतनत्वसिद्धिः सुखादीनाम् । न चैषां चेतनत्वसाधनेऽपसिद्धान्तः स्याद्वादिनां प्रसज्येत, चैतन्यजीवद्रव्यार्थादेशा[8]च्चेतनत्वप्रसिद्धेः, स[9]कलौपशमिकादिभावानां सुखज्ञानादिप्रतिनियतपर्यायार्थादेशादेव सुखादीनां ज्ञानदर्शना[10]भ्यामन्यत्ववचनात् । त[11]थापि ज्ञानात्मकाः सुखादयो, ज्ञानाभिन्नहेतुजत्वाद्विज्ञानान्तरवदिति चेन्न, सर्वथा विज्ञानाभिन्नहेतुजत्वासिद्धत्वात्, सुखादीनां सद्वेद्योदयादिनिमित्तत्वाद्विज्ञानस्य ज्ञानावरणान्तरायक्षयोपशमादिनिबन्धनत्वात् । क[12]थञ्चिद्विज्ञानाभिन्नहेतुजत्वं तु रूपालोका[13]दिनानैकान्तिकं, यथैव हि ततो विज्ञानस्योत्पत्तिस्तथा रूपालोकादिक्षणान्तरोत्पत्तिरपीति परैः[14] स्वयमभिधानात् । तदेतेन[15] यदभ्यधायि[16] "तदतद्रूपिणो[17] भावास्तदतद्रूपहेतुजाः । तत्सुखादि किम[18]ज्ञानं विज्ञानाभिन्नहेतुजम्" इति तदपास्तं, सुखादीनां विज्ञानरूपत्वासिद्धेः । "सुख[19]माह्लादनाकारं विज्ञानं मेयबोधनम् । शक्तिः क्रियानुमेया स्याद्यूनः कान्तासमागमे" इति वचनादतद्रूपाः[20] सुखादय इति । अतद्रूपाणां तद्रूपोपादानत्वे सर्वस्य सर्वोपादानत्वप्रसक्तिः । न च सुखादयो[21] विज्ञानाभिन्नोपादानाः स्युः । विज्ञानाभिन्नसहकारित्वं तु यथा सुखादीनां तथा रूपादीनामपि । इति ततस्तेषां विज्ञानात्मकत्वसाधने रूपादीनामपि तथात्वसाधनं स्यात् । तदुक्तं[22] "तदतद्रूपिणो भावास्तदतद्रूपहेतुजाः[23] । तद्रूपादि[24] किमज्ञानं विज्ञानाभिन्नहेतुजम्" इति । यदि पुनरिन्द्रियानिन्द्रियहेतुजत्वं विज्ञानाभिन्नहेतुजत्वमित्यभिधीयते तदपि न सुखादीनां ज्ञानत्वं साधयति, द्रव्येन्द्रियानिन्द्रियैर्व्यभिचारात्[25] । इति नैकान्ततो ज्ञानात्मकाः सुखादयो, द्रव्यार्थत[26] एव तेषां चेतनत्वोपपत्तेः, चेतनद्रव्यादात्मनोऽनर्थान्तरमूर्तानाम[27]चेतनत्वविरोधात् । एतेन ज्ञानादर्थान्तरभूतत्वात्सुखादीनामचेतनत्वमेवेति वदन्तो[28]ऽपाकृताः प्रत्येतव्याः, चेतनादात्मनोऽनर्थान्तरत्वेन कथञ्चिच्चेतनत्वसिद्धेः । आत्मनश्चेतनत्वमसिद्धमिति चेन्न, तस्य प्रत्यक्ष[29]प्रसिद्धत्वात् । तथात्मा चेतनः, प्रमातृत्वाद्, यस्त्वचेतनः स न प्रमाता, यथा घटादिः, प्रमाता चात्मा, तस्माच्चेतन इत्य-

---

१ न ह्यनुपपन्नं किन्तूपपन्नमेवेत्यत्र उपपत्तिं दर्शयति । २ सत्प्रतिपक्षः प्रकरणसम इत्यर्थः । ३ सुखादीनाम् । ४ तत एवेति शेषः । तथा पुरुषसंसर्गादित्यादिप्रकारेण । ५ जैनस्य । ६ उत्पत्तिमत्त्वेपि चैतन्यविशेषोऽचेतनत्वाभाववान्यतः । ७ उत्पत्तिमत्त्वादिति हेतो । ८ द्रव्यार्थिकनयापेक्षया । ९ एवं ज्ञानसुखादीनामभेदः स्यादित्युक्ते आह । १० उपयोगस्वभावाभ्याम् । ११ ज्ञानदर्शनाभ्यामन्यत्वेप्यभिन्नत्वमित्याशङ्क्य प्राह । १२ ( न सर्वथा विज्ञानाभिन्नहेतुजत्वं किं तु कथंचिदिति बौद्धेनोक्ते आह ) । १३ विज्ञानसाधनेन । बौद्धमते पूर्वरूपलक्षणस्योत्तररूपलक्षणं प्रत्युपादानत्वेन उत्तरज्ञानलक्षणं ति सहकारित्वेनाभिन्नहेतुत्वेपि कार्यभेदाभ्युपगमाद्व्यभिचारात् । १४ सौगतैः । १५ सुखादीनां ज्ञानरूपत्वाभावप्रकारेण । १६ सौगतेन । १७ तद्रूपा नीलचेतनादयः । अतद्रूपा अनीलाचेतनादयः । १८ अपि तु नैवेत्यर्थः । १९ सुखादीनां विज्ञानरूपत्वं कथमसिद्धमित्युक्ते आह । २० अज्ञानरूपाः । २१ सुखादीनां विज्ञानाभिन्नहेतुजत्वमुपादानापेक्षया सहकार्यपेक्षया वेति विकल्प्य क्रमेण दूषयन्नाह जैनः । २२ श्लोकवार्तिके । २३ इति चेत् ( सौगतेनोच्यते चेत् ) । २४ तत् तस्मात्, रूपादि नैवाज्ञानं किन्तु ज्ञानमेव स्यादित्यर्थः । २५ पूर्वेन्द्रियानिन्द्रियमुत्तरद्रव्येन्द्रियानिन्द्रियं प्रति कारणम् । तदा उत्तरद्रव्येन्द्रियानिन्द्रिययोर्ज्ञानेन सहाभिन्नहेतुजत्वात् । २६ द्रव्यार्थिकनयेन । २७ सुखादीनाम् । २८ नैयायिकाः । २९ प्रत्यक्षेणात्र स्वसंवेदनं गृह्यते ।

नुमानाच्च तत्सिद्धम् । प्रमितिस्वभावचेतनासमवायादात्मनि चेतनत्वसाधने सिद्धसाध्यतेति चेन्न, स्वयं[1] सामान्यतश्चेतनत्व[2]साधनात्, तदभावे चेतनाविशेषप्रमितिसमवायायोगात्पटादिवत्[3], कथञ्चित्तादात्म्यस्यैव समवायस्य साधनात् । चेतनाद[4]प्यात्मनः कथमभिन्नाः सुखादयो, भिन्नप्रतिभासविरोधादिति चेन्न[5], तत्र[6] सर्वथा भिन्नप्रतिभासस्यासिद्धत्वात्, कथञ्चिद्भिन्नप्रतिभासस्य कथञ्चिदभेदाविरोधात्, चित्रज्ञानवदेव सुखाद्या[7]त्मनः पुरुषस्यैकस्य घटनात्, सर्वेषामेकानेकात्मनश्चित्रज्ञानस्येष्टत्वात् । तत्सिद्धं चित्र[8]ज्ञानवत्कथञ्चिदसङ्कीर्णविशेषैकात्मनः[9] सुखादिचैतन्यस्य प्रेक्षणं तथा वर्णसंस्थानाद्यात्मनः स्कन्धस्य च[10] । न[11] हि वर्णादीनामेव[12] प्रेक्षणं प्रत्यक्षबुद्धौ, न पुनः स्कन्ध[13]स्यैकस्येति कल्पनमुपपन्नं, सर्वा[14]ग्रहणप्रसङ्गात्, स्कन्धव्यतिरेकेण वर्णादीनामनुपलम्भात् स्कन्धस्यैवा[15]सत्त्वात् । अथ 'प्रत्यासन्नासंसृष्टा[16] रूपादिपरमाणवः प्रत्यक्षाः, तेषां स्वका[17]रणसामग्रीवशात्[18]प्रत्यक्षसंविजननसमर्थानामेवोत्पत्तेः, स्कन्धस्यापि तत[19] एव परेषां[20] प्रत्यक्षतोपपत्ते[21]रन्यथा[22] सर्वस्कन्धानां[23] प्रत्यक्षत्वप्रसङ्गात्, स्कन्धत्वाविशेषात् । तदविशेषेपि केषाञ्चित्प्रत्यक्षत्वे परेषामप्रत्यक्षस्वभावत्वे[24] पिशाचशरीरादीनां तथा[25] स्वका[26]रणादुत्पत्तेः परमाणूनामपि केषाञ्चि[27]त्प्रत्यक्षत्वमन्येषा[28]मप्रत्यक्षत्वं तत[29] एवास्तु, किमवयविपरिकल्पनया[30] तस्या[31]ऽमूल्यदानक्रयित्वात् । स हि प्रत्यक्षे[32] स्वात्मानं न समर्पयति प्रत्यक्षतां च स्वीकर्तुमिच्छतीत्यमूल्यदानक्रयी[33], विकल्प[34]बुद्धावेव तस्य[35] प्रतिभासनाद्विचार्यमाणस्य[36] सर्वथानुपपन्नत्वात्' इति मतं[37] तदप्य[38]संगतमेव, प्रत्यासन्नासंसृष्टपरमाणूनां तथात्वेन[39] कस्यचि[40]त्कदाचिन्निश्चयासत्त्वात् प्रत्यक्षतानुपपत्तेः, स्कन्धस्यैव स्फुटमध्यक्षेवभासनात् तथा निश्चयनाच्च प्रत्यक्षत्वघटनात् । न[41] च परमाणुवत्सर्वे स्कन्धाः समपरिमाणा एव, येन केषांचित्प्रत्यक्षत्वे सर्वेषां प्रत्यक्षस्वभावता स्यात्, अणुमहत्त्वादि[42]परिमाणभेदेन तेषामदृश्येतरस्वभावभेदाद्भेदसिद्धेः । न[43] चायम[44]मूल्यदानक्रयी, प्रत्यक्षे स्वसमर्पणेन प्रत्यक्षतास्वीकरणात्, सर्वथा विचार्यमाणस्यापि घटनात् । विचारयिष्यते चैतत्[45]पुरस्तात्[46] ।

अपरे[47]: प्राह—स्कन्ध एव, न वर्णादयस्ततोन्ये सन्ति, तस्यैव चक्षुरादिकरणभेदाद्वर्णादिभेदप्रतिभासनात्, किञ्चिद[48]ङ्गुलिपिहितनयनभेदाद्दीपकलिकाभेदप्रतिभासनवदिति, तदप्यसम्यक्, सत्ताद्वैत[49]प्रसङ्गात् ।

---

१ स्वरूपेण । २ आत्मन । ३ परेष्ट आत्मा चेतनाविशेषप्रमितिसमवायभाग् न भवति, सामान्यत. स्वतोऽचेतनत्वात् पटादिवत् । ४ परो जैनाभिमतं चेतनमप्यात्मानं स्वीकृत्य दोषमाह । ५ जैना प्राहु' । ६ सुखादौ । ७ सुखादिस्वरूपस्य । ८ यथा चित्रज्ञानस्य कथञ्चिदेकानेकात्मकस्य प्रेक्षणं सिद्धम् । ९ कथञ्चिदेकानेकात्मकत्वेन सुखदु खहर्षविषादादिरूपस्य चैतन्यस्य । १० असङ्कीर्णविशेषैकात्मन. प्रेक्षणमित्यनेनान्वय । ११ ( स्कन्धस्य कथञ्चिदेकानेकात्मकत्वं साधयति ) । १२ केवलम् । १३ परमाणूना स्थूलपरिणति स्कन्ध. । सुगतमते तु परमाणुप्रचयरूप' स्कन्धः । १४ सर्वेषा वर्णसंस्थानादीनाम् । १५ वर्णादिव्यतिरेकेण स्कन्धस्यानुपलम्भो यथा । १६ असम्बद्धा. । १७ तर्हि परमाणुत्वाविशेषात्सर्वे ( अप्रत्यासन्ना' ) परमाणव प्रत्यक्षा' स्युरित्याशङ्कायामाह । १८ रूपचक्षुप्रकाशादिसामग्रीवशतः । १९ स्वकारणसामग्रीवशादेव । २० नैयायिकाना स्याद्वादिना च । २१ अतो वर्णादीनां नानुपलम्भ । २२ स्वकारणवशादेव स्कन्धस्य प्रत्यक्षसंविज्जननसमर्थस्वभावलाभावे सति । २३ पिशाचादिशरीरादीनाम् । २४ (पराभिमते सति । बौद्ध आह) । २५ प्रत्यक्षत्वाप्रत्यक्षत्वस्वभावेन । २६ स्वकारणं परमाणु । २७ पुञ्जीभूतानाम् । २८ अपुञ्जीभूतानाम् । २९ प्रत्यक्षाप्रत्यक्षस्वभावत्वात् । ३० अवयविन । ३१ मूल्यार्पणमन्तरेण ग्राह्यत्वात् । ३२ निर्विकल्पके । ३३ अवयविन प्रत्यक्षत्वे स्वात्मसमर्पणं मूल्यदानं, तददत्त्वा प्रत्यक्षत्वग्राही । ३४ अन्यापोहलक्षणायाम् । ३५ (स्कन्धस्य) । ३६ अवयवी अवयवेषु सर्वथैकेन स्वभावेन किं सर्वात्मना वर्तते इत्यादिप्रकारेण । ३७ ( सौगतस्य ) । ३८ जैना. प्राहु । ३९ भिन्नत्वेन । ४० पुसः । ४१ तथा सति सर्वेषा स्कन्धाना प्रत्यक्षता स्यादित्युक्ते आह । ४२ आदिशब्देन पिशाचेतरशरीरादिवर्तिसूक्ष्मस्थूलादिकं ग्राह्यम् । ४३ अस्तु नाम स्कन्धानां विषमपरिमाणत्वम् । तेषां विकल्पेवभासनादवस्तुत्वं स्यादित्यत आह । ४४ स्कन्धः । ४५ विषयभाव एव स्वसमर्पणमिति । ४६ द्वितीयपरिच्छेदे सन्तान. समुदायश्चेति कारिकायाम् । ४७ साङ्ख्य. । ४८ मनाक् । ४९ एकः स्कन्ध एव वर्तते न तु वर्णादय इत्युक्ते ।

शक्यं हि वक्तुं—सत्तैवैका[1], न द्रव्यादयस्ततोर्थान्तरभूताः सन्ति, कल्पनाभेदात्तद्भेदप्रतिभासनादिति[2] । न[3] चैतद्युक्तमिति निवेदयिष्यते । ततश्चित्रज्ञानवन्न केवलं सुखाद्यात्मनश्चैतन्यस्य प्रेक्षणं सिद्धम् । किं तर्हि ? वर्णसंस्थानाद्यात्मनः स्कन्धस्यापि । ततः सूक्तं[4]—न हि किञ्चिद्रूपान्तरविकलं सदेकान्तरूपमसदेकान्तरूपं वा, नित्यैकान्तरूपमनित्यैकान्तरूपं वा, अद्वैतैकान्तरूपं[5] द्वैताद्येकान्तरूपं[6] वा, संवेदनमन्तस्तत्त्वमन्यद्बहिस्तत्त्वं संपश्यामो, यथा[7] प्रतिज्ञायते सर्वथैकान्तवादिभिरिति । सामान्यविशेषैकात्मनः[8] संवित्तिरेकान्तस्यानुपलब्धिर्वा सर्वतः सिद्धा[9] चक्षुरादिमतामनार्हतकल्पनामस्तंगमयतीति[10][11] किं नः[12] प्रमाणान्तरेण[13] । न तावत्सामान्यैकान्तस्योपलब्धिर्विशेषस्याप्युपलब्धेः[14] । नापि विशेषैकान्तस्य[15], सामान्यस्यापीक्षणात् । न सामान्यविशेषैकान्तयोरेव[16] परस्परनिरपेक्षयोः[17], एकात्मनोप्युपलक्षणात् । न चैकात्मन[18] एव सामान्यविशेषैकात्मनः, ततो जात्यन्तरस्य[19] संवित्तेः । सर्वं[20] हि वस्तु सामान्यं विशेषापेक्षया विशेषः सामान्यापेक्षया वाऽपोद्धारकल्पनायां[21], स्वरूपेण तु सामान्यविशेषात्मकमेकम् । तस्य संवित्तिश्चक्षुरादिमता, मनार्हतकल्पनामस्तङ्गमयति, चक्षुरादिविकलानामेव तत्संभवात्[22] । एकान्तस्यानुपलब्धिर्वा तामस्तंगमयति तत एव । तथा हि । नास्ति सर्वथैकान्तः, सर्वदानेकान्तोपलब्धेरिति स्वभावविरुद्धोपलब्धिः, नास्ति सर्वथैकान्तोऽनुपलब्धेरिति स्वभावानुपलब्धिर्वा सर्वतश्चक्षुरादेः संवेदनात्सिद्धाऽध्यवसीयते । ननु[23] च 'सर्वथैकान्तस्य क्वचित्कदाचिदुपलब्धौ न सर्वत्र सर्वदा प्रतिषेधः सिद्ध्येत् । तस्यानुपलब्धौ नानेकान्तेन विरोधः, सत एव कथञ्चित्केनचिद्विरोधप्रतीतेः । प्रतिषेधश्च न स्यात्, तत[24] एव ।' इति कश्चित्तदसत्, सर्वथैकान्तस्याध्यारोप्यमाणस्य[25] प्रतिषेधसाधनात् तद्विरुद्धोपलब्धिसिद्धेस्तत्स्वभावानुपलब्धिसिद्धेश्च, स्वयमन्यथा[26] कस्यचिदनिष्टतत्त्वप्रतिषेधायोगादिष्टतत्त्वनियमानुपपत्तेः । अथवा प्रत्यक्षमेव[27] सामान्यविशेषात्मकमेकं वस्तु विदधत्सर्वथैकान्तप्रतीतिं[28][29] प्रतिषेधयतीति किं नः प्रमाणान्तरेणानुमानेनानुपलब्धिलिङ्गेन समर्थनेनापेक्षेण[30] ? प्रयासमन्तरेणेष्टानिष्टतत्त्वविधिप्रतिषेधसिद्धेः । न हि दृष्टाज्ज्येष्ठं[31] गरिष्ठमिष्टं[32], तदभावे[33] प्रमाणान्तराप्रवृत्तेः समारोपविच्छेदविशेषाच्च[34] । ननु च दृष्टं प्रत्यक्षमिष्टं पुनरनुमानादि प्रमाणम् । तत्र यथा दृष्टं ज्येष्ठम्, अनुमानादेरग्रेसरत्वात्, तथानुमानाद्यपि[35] प्रत्यक्षात्, तस्यापि[36] तदग्रेसरत्वात्[37], क्वचिदनुमानाद्युत्तरकालं प्रत्यक्षस्य प्रवृत्त्युपलक्षणत्वात् । यथा च दृष्टमविसंवादकत्वाद्गरिष्ठमिष्टात् तथेष्टमपि दृष्टात्, तदविशेषात् । ततः कथं दृष्टमिष्टाज्ज्येष्ठं गरिष्ठं च व्यवतिष्ठते, न पुनरिष्टं दृष्टादिति न चोद्यमनवद्यं[38], दृष्टस्य

१ गुणादयश्च । २ एषा सत्ता इमे द्रव्यादय इति । ३ तर्हि सत्ताद्वैतमेवास्त्वित्युक्ते आह । ४ भट्टाकलङ्कदेवैः । ५ (ब्रह्माद्वैतवादम्) । ६ सौगतमतम् । ७ एकान्तत्वेन । ८ सामान्यविशेषौ एक आत्मा यस्य तत्सामान्यविशेषैकात्मकम् । तस्यानेकान्तरूपस्य वस्तुन । सामान्यविशेषाभ्यामुपलक्षितमेकं स्वरूपं यस्य तत्तथोच्यते इति वा । ९ सम्यक् परिच्छित्तिः । १० स्पष्टेन्द्रियबोधानाम् । ११ (अनार्हतानामार्हतमतविरुद्धाना कल्पनाम्) । १२ जैनानाम् । १३ अनुमानादिना । १४ सत्ताद्वैतवाद्यभ्युपगतस्य । १५ बौद्धमतापेक्षया । १६ यौगमतापेक्षया । १७ पृथग्भूतयो (जटिलाभ्युपगतयो) । १८ तदात्मकस्य । भट्टमते भेदासहिष्णुरभेदस्तादात्म्यम् । (सामान्यविशेषयोरर्धार्धभागेन कृत्त्वेत्यर्थ) । १९ नरसिंहवत् । २० जात्यन्तरस्य संवित्तिः कथमित्युक्ते आह । २१ भेदनयविवक्षायाम् । २२ सा अनार्हतकल्पना । २३ सर्वथैकान्तस्योपलब्धावनुपलब्धौ वा प्रतिषेध. साध्यते इत्युक्ते सर्वथैकान्तः कदाचिदुपलब्धोऽनुपलब्धो वा प्रतिषिध्यते इति प्रश्नः फलति । तथा च विकल्प्य परो वक्ति । २४ (सत एव कथंचित्केनचित्प्रतिषेधात् । यतो विधिपूर्वक एव निषेधो भवति ।' एतेन स्वभावानुपलब्धिर्निरस्ता) । २५ मिथ्या अध्यारोप्यमाणस्य । २६ अध्यारोप्यमाणस्य प्रतिषेधसिद्धिर्न भवेद्यदि । २७ अनेकान्तात्मनो वस्तुन संवित्तिरेव । २८ विषयीकुर्वत् । २९ सामान्यात्मिकामेव विशेषात्मिकामेव वेत्येवम् । ३० एवंभूतेन प्रमाणान्तरेण । ३१ प्रत्यक्षात् । ३२ अनुमानादि । ३३ प्रत्यक्षाभावेऽनुमानस्य प्रवृत्तिर्न घटते यतः । ३४ प्रत्यक्षं विना समारोपविच्छेदविशेषोपि न स्यादित्यर्थ । ३५ आदिपदेन तर्कप्रत्यभिज्ञानोपमानादि । ३६ (अनुमानादेः । ३७ तस्मात् प्रत्यक्षात्) । ३८ जैन प्रत्युत्तरयति ।

लिङ्गादिविषयस्याभावेऽनुमानादेः प्रमाणान्तरस्याप्रवृत्तेः, अनुमानान्तराल्लिङ्गादिप्रतिपत्तावनवस्थाप्रसङ्गात् प्रत्यक्षस्यैव नियतसकलप्रमाणपुरस्सरत्वप्रसिद्धेर्ज्येष्ठत्वोपपत्तेः, प्रत्यक्षस्यानुमानादिना विनैव प्रवृत्तेरनुमानादेर्दृष्टात्पुरस्सरत्वाभावात्, ततो ज्येष्ठत्वायोगाद्, दृष्टस्यैव चेष्टाद्गरिष्ठत्वात्—समारोपविच्छेदविशेषात्। न[2] हि यादृशो दृष्टात्समारोपविच्छेदो विशेष[3]विषये प्रतिनिवृत्ताकाङ्क्षो[4]ऽक्षूणतया लक्ष्यते तादृशो[5]ऽनुमानादेः, तेन[6] सामान्यतः समारोपस्य व्यवच्छेदनात्, दृष्टस्यान्वय[7]व्यतिरेकयोः स्वभावभेदप्रदर्शनार्थत्वाच्च गरिष्ठत्वसिद्धेः*। प्रत्यक्षमेव हि स्वविषये सामान्यविशेषात्मकत्वान्वयस्य[10] विधिलक्षणस्य सर्वथैकान्तव्यतिरेकस्य च प्रतिषेधलक्षणस्य स्वभावभेदप्रदर्शन[11]प्रयोजनमुपलक्ष्यते साक्षात्, न पुनरनुमानादि तस्य सामान्यतस्तत्[12]प्रदर्शनप्रयोजकत्वात्[13]। किमर्थं[14] पुनरार्हतस्येष्टस्य[15] प्रसिद्धेनाबाधनं भगवतोऽर्हतः परमात्मकत्वं चाभिधाय सर्वथैकान्तस्य दृष्टेन बाधनं स्वयमसम्मतस्य, कपिलादीनां परमात्मत्वाभावं च सामर्थ्यलभ्यमपि ब्रवीति ग्रन्थकार[16] इति चेत् अनेकान्तैकान्तयोरुपलम्भानुपलम्भयोरेकत्वप्रदर्शनार्थं तावदुभय[17]माह मतान्तरप्रतिक्षेपार्थं वा, यदाह * धर्मकीर्तिः[18]—साधर्म्य[19]वैधर्म्ययोरन्यतरेणार्थगतावुभयप्रतिपादनं पक्षादि[20]वचनं वा निग्रहस्थानमिति। न तद्युक्तम् *। कुत इति चेत्[21], साधनसामर्थ्येन विपक्षव्यावृत्तिलक्षणेन पक्षं प्रसाधयतः[22] केवलं वचनाधिक्योपालम्भच्छलेन पराजयाधिकरणप्राप्तिः स्वयं[23] निराकृतपक्षेण[24] प्रतिपक्षिणा लक्षणीयेति[25] वचनात्[26]। यथोक्तेन हि साधनसामर्थ्येन स्वपक्षं साधयतः सद्वादिनः सभ्यसमक्षं जय एवेति[27] युक्तं, न केवलं वचनाधिक्योपालम्भव्याजेन पराजया[28]धिकरणप्राप्तिः साधीयसी, स्वसाध्यं प्रसाध्य नृत्यतो[29]पि दोषाभावाल्लोकवत्। सा च स्वयं निराकृतपक्षेण प्रतिवादिना लक्षणीयेत्यपि न युक्तं, परेण[30] निराकृतपक्षस्यैव पराजयप्राप्तियोग्यत्वनिश्चयाल्लोकवदेव। यदि[31] पुनः स्वपक्षमसाधयतो वादिनो वचनाधिक्येन प्रतिवादी पराजयप्राप्तिं लक्षयेत् तदा स्वपक्षं साधयन्नसाधयन्वा? प्रथमपक्षे स्वपक्षसिद्ध्यैव परस्य पराजितत्वाद्वचनाधिक्योद्भावनमनर्थकं, तस्मिन् सत्यपि पक्षसिद्धिमन्तरेण जयायोगात्। द्वितीयपक्षे तु युगपद्वादिप्रतिवादिनोः पराजयप्रसङ्गो जयप्रसङ्गो वा, स्वपक्षसिद्धेर[32]भावाविशेषात्। स्यान्मतं[33] 'न स्वपक्षसिद्ध्यसिद्धिनिबन्धनौ जयपराजयौ, तयोर्ज्ञानाज्ञाननिबन्धनत्वात्। तत्र साधर्म्यवचने वैधर्म्यवचनेपि वाऽर्थस्य[34] प्रतिपत्तौ तदुभय[35]वचनात्साधनवचनसामर्थ्याज्ञानं वादिनः स्यादेव। प्रतिवादिनस्तु

---

१ ( गरिष्ठत्वे हेतु )। २ ( समारोपविच्छेदविशेषरूपं गरिष्ठत्वहेतुं भावयति )। ३ वर्णसंस्थानादिना। ४ प्रतिनिवृत्ता आकाङ्क्षा ( प्रमाणान्तरस्य ) यस्य ( प्रत्यक्षस्य ) स। ५ ( अनुमानादे सकाशान्न तादृश )। ६ अनुमानादिना। ७ अनेकान्तात्मकस्यास्तित्वविधिरन्वय। ८ दृष्टं प्रत्यक्षमन्वयव्यतिरेकयो स्वभावभेदं दर्शयति तत प्रत्यक्षस्य गरिष्ठत्वसिद्धि। ९ ( स्वभावभेदप्रदर्शनार्थत्वादिति हेतु भावयति )। १० सामान्यविशेषात्मकत्वात्स्वस्येति पाठान्तरम्। ११ वस ( बहुव्रीहि )। १२ तच्छब्देनान्वयव्यतिरेकौ। १३ अतो दृष्टमेव गरिष्ठं सामान्यविशेषात्मकवस्तुग्राहकमेकान्तं निषेधयतीति समर्थितमेतत् 'स्वेष्ट दृष्टेन बाध्यत' इत्यत्र। १४ स त्वमेवासि निर्दोष इत्यादिना पूर्वमेवार्हच्छासनस्याबाधनमर्हत परमात्मत्व च सिद्धम्। पुनस्त्वन्मतामृतबाह्यानामित्यादिना सर्वथैकान्तस्य मतस्य दृष्टेन बाधन कपिलादे परमात्मत्वनिराकरणं च किमर्थमिति बौद्धाशङ्का। १५ अनेकान्तस्य। १६ स्वामिसमन्तभद्राचार्यः ( किमर्थमित्यन्वय )। १७ ( अन्वयव्यतिरेकौ )। १८ सौगताचार्य.। १९ अन्वयव्यतिरेकयो। २० आदिना प्रतिज्ञानिगमनादिग्रह। २१ निग्रहस्थानं पक्षं प्रसाधयतोऽप्रसाधयतो वेति विकल्प्य क्रमेण दूषयति सिद्धान्ती। तत्र प्रथमपक्षमाह तावत। २२ वादिन.। २३ स्वेन ( वादिना )। २४ निराकृत पक्षोस्य ( प्रतिवादिन. ) असौ निराकृतपक्षस्तेन लक्षयितुं युज्यते स्वपक्षसिद्धिनिबन्धनैव, जयाधिकरणप्राप्तिर्न तु वचनाधिक्यनिबन्धनेति भाव। २५ लक्षणीयापि तु न लक्षणीयेति वक्रोक्ति। २६ धर्मकीर्तिनोक्तत्वात्। २७ न तु निग्रहस्थानम्। २८ निग्रहस्थानप्राप्ति। २९ सद्वादिन। ३० वादिना। ३१ द्वितीयविकल्पं दूषयति। ३२ द्वयोरपि वादिप्रतिवादिनो। ३३ सौगतस्य। ३४ साध्यस्य। ३५ साधर्म्यवैधर्म्येत्युभयवचनात्।

तद्[1]उद्भावयतस्तज्ज्ञानम् । अतस्तद्धेतुकौ तयोर्जयपराजयौ कथमयुक्तौ स्याताम्" इति, तदपि न परीक्षाक्षमं वादिप्रतिवादिनोः पक्षप्रतिपक्षपरिग्रहवैयर्थ्यप्रसङ्गात् क्वचिदे[2]कत्रापि पक्षे ज्ञानाज्ञानयोः स[3]म्भवात् । न हि शब्दादौ नित्यत्वस्यानित्यत्वस्य वा ज्ञानाज्ञानपरीक्षायामेक[4]स्य तद्विज्ञानमपरस्य[5] तदविज्ञानं जयस्य पराजयस्य वा निबन्धनं न सम्भवति साधनसामर्थ्यज्ञानाज्ञानवत् । यु[6]गपत्साधनसामर्थ्यज्ञाने च वादिप्रतिवादिनोः कस्य जयः पराजयो वा स्यात्? त[7]दविशेषात् । न कस्यचिदिति चेत्तर्हि [8]साधनवादिनो वचनाधिक्यकारिणो यथा साधनसामर्थ्याज्ञानं तथा प्रतिवादिनोपि वचनाधिक्यदोषोद्भावनात् तस्य तद्दोष[9]मात्रे ज्ञानसिद्धेः । न हि यो यद्दोषं वेत्ति स तद्गुणमपि, कुतश्चिन्मारणशक्तौ विदितायामपि विषद्रव्यस्य कुष्टापनयनादिशक्तौ वेदनानुदयात् । ततो न जयः पराजयो वा स्यात्। स्या[10]न्मतं '[11]साधनवादिना साधु साधनं वक्तव्यं दूषणवादिना च तद्दूषणम् । त[12]त्र वादिनः प्रतिवादिना सभायामसाध[13]नाङ्गवचनस्योद्भावने साधु साधनाभिधानाज्ञानसिद्धेः प[14]राजयः प्रतिवादिनस्तु तद्दूषणज्ञाननिर्णयाज्जयः स्यात्' इति, तदप्यपेशलं, विकल्पा[15]नुपपत्तेः । स हि प्रतिवादी निर्दोषसाधनवादिनो वचनाधि[16]क्यमुद्भावयेत्साधनाभासवादिनो वा? प्रथमविकल्पे वादिनः कथं साधनस्वरूपाज्ञानम्? तद्वचने इयत्ताज्ञानस्यैवाभावात् । द्वितीयविकल्पे तु न प्रतिवादिनो दूषणज्ञानमवतिष्ठते, साधनाभासस्यानुद्भावना[17]त्तद्वि[18]ज्ञानासिद्धेः । तद्वचनाधिक्यदोषस्य ज्ञानाद्दूषणज्ञोऽसाविति चेत्साधनाभासाज्ञानाददूषणज्ञोपीति नैकान्ततो वादिनं जयेत्, त[19]ददोषोद्भावनलक्षणस्य पराजय[20]स्यापि निवारयितुमशक्तेः । अथ वचनाधिक्यदोषोद्भावनादेव प्रतिवादिनो जयसिद्धौ साधनाभासोद्भावनमनर्थकमिति मन्यसे, नन्वेवं साधनाभासानुद्भावनात्तस्य[21] पराजयसिद्धौ वचनाधिक्योद्भावनं कथं जयाय प्रकल्प्येत? यदि पुनः साधनाभासं वचनाधिक्यं चोद्भावयन्प्रतिवादी जयतीति मतं तदास्य महती द्वि[22]ष्टकामिता, साधर्म्यवचनादेवार्थगतौ वैधर्म्यवचनमनर्थकत्वाद्द्विष्ट्वा[23] साधनाभासोद्भावनादेव पर[24]स्य न्य[25]क्कारसिद्धौ तद्वचनाधिक्योद्भावनस्यानर्थकस्यापि कामितत्वात् । अथ न वचनाधिक्यमात्रं द्विष्यते, अर्थादाप[26]न्नस्य स्व[27]शब्देनाभिधानस्य द्विष्टत्वादिति मतं तदपि न सङ्गतं, निगमनवचनदोषस्य प्रतिज्ञावचनदोषोद्भावनाद्गतस्या[28]नुद्भावनप्रसङ्गात् । प्रतिज्ञायाः पुनर्वचनं हि निगमनम् । तच्च प्रतिज्ञावचनस्य दुष्टत्वप्रतिपत्तौ दुष्टं सामर्थ्यात्[29]प्रतीयते एव । अथार्थादापन्नस्यापि निगमनवचनदुष्टत्वस्योद्भा[30]वनमदोषोद्भा[31]वनभयादभि[32]मन्यते तर्हि साधर्म्यवचनाद्वैधर्म्यस्यार्थाय[33]तस्याप्यसा[34]धनाङ्गवचनभयादभिधानं मन्यतां, विशेषा[35]भावात्।

---

१ वचनाधिक्यम् । तत् साधनवचनसामर्थ्याज्ञानं प्रकटयतस्तज्ज्ञानं (साधनवचनसामर्थ्यज्ञानमिति ( टिप्पण्यन्तरम् )। २ नित्येऽनित्ये वा भेदेऽभेदे वा एकस्मिन्क्वचित्पक्षे । ३ वैयर्थ्यप्रसङ्गे हेतुः । ४ वादिन. । ५ प्रतिवादिन. । ६ भो सौगत यदि साधनसामर्थ्यज्ञानं जयस्य हेतुस्तदज्ञानं तु पराजयस्य तदा । ७ साधनसामर्थ्यज्ञानाविशेषात् । ८ जैनस्य । ९ साधनगुणे ज्ञानाभावो दूषणं चेति भावः । १० सौगतस्य । ११ स्वसाधनवादिनेति वा पाठः । १२ एवं च व्यवस्थाया सत्याम् । १३ साधर्म्यवचने प्रयुक्ते वैधर्म्यवचनं प्रयुज्यमानमसाधनाङ्गं वैपरीत्य वा । १४ वादिन इत्युपरिष्टादन्वयः । १५ वक्ष्यमाणाभ्या विकल्पाभ्या मतस्यानुपपत्तेः । १६ उदाहरणोपनयनिगमनादिवचनाधिक्यम् । १७ साधनाभासविज्ञानासिद्धे॰ । १८ ( तेन हि प्रतिवादिना वचनाधिक्यरूपो दोष एवोद्भावितो न तु साधनाभासरूप इति साधनाभासज्ञानासिद्धिस्तस्य )। १९ साधनाभासे अदोषोद्भावनमेव लक्षणं यस्य तस्य । २० ( प्रत्युत ) । २१ प्रतिवादिनः । २२ द्वेषविषयभूतं कामयते इत्येवंशील॰ । तस्य भावो द्विष्टकामिता । २३ द्वेषविषयं कृत्वा । २४ वादिनः । २५ न्यक्कारः पराजय । २६ साधर्म्यवचनादेवार्थगतौ अर्थादापन्नं ( स्वयमेव लब्धम् ) वैधर्म्यवचन, तस्य । २७ ( पुनस्तस्याभिधानं द्विष्टम् । तत्त्वात् )। २८ ज्ञातस्यार्थादापन्नस्य वा । २९ निगमनवचनस्य पुनरपि दोषोद्भावनं कथम्? ( सौगतेन प्रतिज्ञावयवस्येव निगमनावयवस्यापि नियमेन निवारणात् ) ३० पुनरुद्भावनम्। ३१ निगमनं न दूषितं तर्हि अदोषं भविष्यतीति भयात्पुनर्दूषितम् । ३२ सौगत. । ३३ ( अर्थादायातस्य ) ३४ वैधर्म्यवचनं न दूषित तर्हि साधनाङ्गं भविष्यतीति भयात्पुनर्वैधर्म्यवचनं प्रोक्तम् । ३५ निगमनवैधर्म्यवचनयोः ।

न हि साधर्म्यमेव वैधर्म्यमेव वा साधनस्याङ्गं, पक्षधर्मत्ववत्[1]तदुभयस्या[2]पि साधनाङ्गत्वात्, साधनस्य त्रिरू-
पत्वप्रतिज्ञानात् । ततो न ज्ञानाज्ञानमात्रनिबन्धनौ जयपराजयौ शक्यव्यवस्थौ, यथोदित[3]दोषोपनिपातात्।
स्वपक्षसिध्यसिद्धिनिबन्धनौ तु तौ निरवद्यौ, पक्षप्रतिपक्षपरिग्रहवैयर्थ्याभावात् [4]कस्यचित्कुतश्चित्स्वपक्षसिद्धौ
सुस्थितायां परस्य पक्षसिद्धेरसभवात् सकृत्तज्जयपराजययोरप्रसक्तेः । [5]न हि वादिना साध्याविनाभावनिय-
मलक्षणेन हेतुना स्वपक्षसिद्धौ विधातुं शक्यायामपि प्रतिज्ञो[6]दाहरणादिवचनमनर्थकमप[7]जयाय प्रकल्प्यते,
तद्विघाताहेतुत्वात्ततः प्रति[8]पक्षासिद्धेः, प्रतिपाद्याशयानुरोधतस्तत्प्रयोगात्तत्प्रतिपत्तिविशेषस्य प्रयोजनस्य
सद्भावात् । नापि [9]हेतोर्विरुद्धतोद्भावनादेव प्रतिवादिनः स्वपक्षसिद्धौ सत्यामपि दोषा[10]न्तरानुद्भावनं त[11]स्य
पराजयाय प्रकल्प्यते, त[12]त एव । एतेन स्वपक्षसिद्धौ कृतायामपि परपक्षनिराकरणं, तस्मि[13]न्वा स्वपक्षसाध-
नाभिधानं न वादिप्रतिवादिनोर्जयप्राप्तिप्रतिबन्धकमिति प्रतिपादितं बोद्धव्यम् । तदेवं साधर्म्यवैधर्म्ययोर-
न्यतरेणार्थगतौ तदुभयवचनं वादिनो निग्रहाधिकरणमित्ययुक्तं च व्य[14]वस्थितम् । प्रतिज्ञादिवचनं निग्रह-
स्थानमित्येतत्कथमयुक्तमिति चेदुच्यते । **प्रतिज्ञानुपयोगे शास्त्रादिष्वपि नाभिधीयेत, विशेषा[15]भावा-
त्** । न हि शास्त्रे प्रतिज्ञा नाभिधीयते एव अनियतकथाया वा, अग्निरत्र धूमात्, वृक्षोयं शिंशपात्वादि-
त्यादिवचनानां शास्त्रे दर्शना[16]त्, विरुद्धोयं हेतुरसिद्धोयमित्यादिप्रतिज्ञावचनानामनियतकथायां प्रयोगा[17]त्।
परानुग्रहप्रवृत्तानां शास्त्रकाराणां प्रतिपाद्यावबोधनाधीनधिया शास्त्रादौ प्रतिज्ञाप्रयोगो युक्तिमानेव, उपयो-
गित्वात्तस्येति चेद्वादेपि सोस्तु, तत्रापि तेषा ता[18]दृशत्वात्, वा[19]देपि विजिगीषुप्रतिपादनायाचार्याणां प्रवृत्तेः।
नि[20]यतकथायां प्रतिज्ञाया न प्रयोगो युक्तः, तद्विषयस्यार्थाद्गम्यमानत्वान्निगमनादिवदिति चेत्त[21]त एव शा-
स्त्रादि[22]ष्वपि । न हि त[23]त्र जिगीषवो न प्रतिपाद्याः प्रतिज्ञादिविषयो वा सामर्थ्यान्न गम्यते । शा[24]स्त्रादाव-
जिगीषूणामपि प्रतिपाद्यत्वात् प्रतिज्ञादेरप्रयोगे केषाञ्चिन्मन्दधियां प्रकृतार्थप्रतिपत्तेर्गम्यमान[25]स्य विषय-
स्यापि प्रयोगः, त[26]त्प्रतिपत्त्यर्थत्वादिति चेज्जिगीषु[27]वः किमु मन्दमतयो न सन्ति ? येन त[28]था तेषामप्रतिप-
द्यमानानां प्रतिपत्तये प्रतिज्ञादिप्रयोगो न स्यात् । इति विशेषाभावादेव शास्त्रादौ वादे च प्रतिज्ञादेरभि-
धानमनभिधानं वाभ्युपगन्तव्यमविशेषेणैव । ननु च प्रतिज्ञायाः प्रयोगेपि हेत्वादि[29]वचनमन्तरेण साध्या-
प्रसिद्धेर्व्यर्था प्रतिज्ञा हेत्वादिवचनादेव च साध्यप्रसिद्धेर्निगमनादिकमकिञ्चित्करमेवेति कश्चि[30]त्सोपि यत्स-
त्तत्सर्वं क्षणिकं, यथा घटः, संश्च शब्द इति त्रिलक्षणं हेतुमभिधाय य[31]दि समर्थयते, कथमिव
[32]सन्धामति[33]शेते ? * स्वहेतुसमर्थनमन्तरेण त[34]दभिधानेपि तदर्थाप्रतिपत्तेः । ता[35]वतार्थप्रतिपत्तौ स[36]मर्थनं

---

१ पक्षधर्मत्वशब्देनात्र सपक्षे सत्त्वं, विपक्षाद्व्यावृत्तिश्चेत्यपि ग्राह्यम् । २ साधर्म्यवैधर्म्येत्येतदुभयस्य । ३ पक्षप्रतिपक्षपरि-
ग्रहवैयर्थ्यादिर्यथोदित. । ४ वादिप्रतिवादिनोर्मध्ये । ५ सौगताशङ्कां निराकरोति जैनः । ६ जैनापेक्षयोदाहरणमनर्थकम् ।
७ पराजयाय । ८ स्वपक्षसिद्धौ जातायाम् । ९ वादिनोक्तस्य । १० बौद्धमतापेक्षया प्रतिज्ञोदाहरणादि दोषान्तरम् ।
११ प्रतिवादिन. । १२ प्रतिज्ञोदाहरणादिवचनस्य स्वपक्षसिद्धिविघाताहेतुत्वात् । १३ (परपक्षनिराकरणे)। १४ न तद्युक्तमिति
भाष्योक्तं सुव्यवस्थितम् । १५ वादशास्त्रयोः । १६ ( शास्त्रे प्रतिज्ञाभिधीयते एवेत्यत्राय हेतु )। १७ ( अनियतकथाया
च प्रतिज्ञाभिधीयते इत्यत्राय हेतु )। १८ परानुग्रहप्रवृत्तत्वात् । १९ तादृशत्वमेव दर्शयति । २० ( पर प्राह ) जल्पवि-
तण्डारूपायाम् । २१ जैन । २२ प्रतिज्ञाप्रयोगो न युक्त इति । २३ शास्त्रादौ । २४ सौगत. प्राह । २५ अर्थाद्गम्यमानस्य
प्रतिज्ञादिविषयस्य । २६ तेषा मन्दधियाम् । २७ ( जैन ) वादे । २८ यथा शास्त्रादौ मन्दबुद्धिप्रतिपत्त्यर्थं प्रतिज्ञादिप्रयोग ।
२९ आदिशब्देन दृष्टान्तग्रह । ३० बौद्ध. । ३१ हेतुसमर्थनानन्तर यदि साध्यसाधनयोर्व्याप्तिं समर्थयते तदा । ३२ प्रति-
ज्ञाम् । ३३ ( न स्वीकरोतीत्यर्थः )। प्रतिज्ञावद्धेतुरपि व्यर्थो भवतीत्यर्थ. । ३४ तस्य हेतो । ३५ ( भो सौगत ) साधन-
मात्रात् । ३६ कर्तृ ।

वा[1] निगमनादिकं[2] * कथमतिशयीत[3]? अकिञ्चित्करत्वाविशेषात्[4], यतः पराजयो न भवेत् *[5], ताथागतस्य हेत्वाद्यभिधाने तत्समर्थनाभिधाने वा। हेत्वा[6]द्यनभिधाने कस्य समर्थनमिति चेत्तथा सन्धाया अप्यनभिधाने क्व हेत्वादिः प्रवर्तताम्? गम्यमाने[7] प्रतिज्ञाविषये एवेति चेद्गम्यमानस्य हेत्वादेः समर्थनमस्तु। गम्यमानस्यापि हेत्वादेर्मन्दप्रतिपत्त्यर्थं वचनमिति चेत्तथा सन्धावचने[8] कोऽपरितोषः? स्यान्मतं[9], समर्थनं[10] नाम हेतोः साध्येन व्याप्तिं प्रसाध्य धर्मिणि[11] भावसाधनम्[12]। यथा यत्सत् कृतकं वा तत्सर्वमनित्यं यथा घटादिः, सन् कृतको वा शब्द इति। सन् कृतको वा शब्दः, यश्चैवं स सर्वो नश्वरो यथा घटादिरिति वा, प्रयोगक्रमनियमाभावादिष्टा[13]र्थसिद्धे[14]रुभयत्रा[15]विशेषात्, प्राक् सत्त्वं धर्मिणि प्रसाध्य साधनस्य पश्चादपि साध्येन व्याप्तिप्रसाधनस्याविरोधात्[16]। व्याप्तिप्रसाधनं[17] पुनर्विपर्यये[18] बाधकप्रमाणो[19]पदर्शनम्। यदि[20] पुनः सर्वं सत्कृतकं वा प्रतिक्षणविनाशि न स्यान्नित्ये[21] क्रमयौगपद्याभ्यामर्थक्रियाविरोधात्। अर्थक्रियासामर्थ्यं सत्त्वलक्षणमतो[22] व्यावृत्तमित्यसदेव तत्स्यात्[23]। सर्वसामर्थ्योपाख्या[24]विरहलक्षणं हि निरुपाख्यमिति। एवं साधनस्य[25] साध्य[26]विपर्यये बाधकप्रमाणानुपदर्शने[27] विरोधाभावादस्य[28] विपक्षे नित्ये[29] वृत्तेरदर्शनेपि सन्[30] कृतको वा स्यान्नित्यश्चेत्यनिवृत्तिरेव शङ्कायाः। ततो[31] व्यतिरेकस्य[32] सन्देहादनैकान्तिको[33] हेत्वाभासः स्यात्। न ह्यदर्शन[34]मात्राद्व्यावृत्तिः[35], विप्रकृष्टेष्वर्थेष्वसर्वदर्शिनोऽदर्शनस्याभावासाधनात्[36], अर्वाग्दर्शनेन[37] सतामपि केषां[38]-ञ्चिदर्थानामदर्शनात्। बाधकं[39] पुनः प्रमाणम्। यस्य क्रमयौगपद्याभ्यां न योगो, न तस्य क्वचित्[40]सामर्थ्यम्। अस्ति चाक्षणिके[41] सः। इति प्रवर्तमानमसामर्थ्य[42][43]मसल्लक्षणमाकर्षति[44]। तेन यत्सत्कृतकं वा तदनित्यमेवेति सिध्यति। तावता[45] च साधनधर्ममात्रान्वयः[46] साध्यधर्मस्य[47] स्वभावहेतुलक्षणं सिद्धं भवति। अत्राप्यदर्शनम[48]प्रमाणं यतः क्रमयौगपद्याऽयोगस्यैवासामर्थ्येन व्याप्त्यसिद्धेः पूर्वस्यापि हेतोः सत्त्वादेर्न व्याप्तिसिद्धिः। पुनरिहापि[49] साधनोपगमे[50][51]नवस्थाप्रसङ्ग इति न चोद्यम्[52][53], इष्टस्याभावसाधन[54]स्यादर्शनस्य प्रमाणत्वाप्रतिषेधात्। यद[55]दर्शनं[56] [57]विपर्ययं साधयति हेतोः[58] साध्यविपर्यये[59] तदपि विरुद्ध[60]मत्युपस्थानाद्बाधकं प्रमाणमुच्यते।

---

१ ( वाशब्दोत्र निगमनस्य समुच्चये ) न केवलं हेतुरेवेत्यर्थः। २ निगमनादेः समर्थनं कथमतिशयवदित्यर्थः। ३ कर्म। ४ समर्थननिगमनयोः। ५ भो जैन, त्वया हेतुं कथयित्वा यदि समर्थ्यते तदा दूषणं, परन्तु हेत्वाद्यनभिधाने। ६ इतो जैनः। ७ अर्थाद्गम्यमाने। प्रकरणादिवशेनैवेत्यर्थः। ८ सन्धा प्रतिज्ञा मर्यादा इत्यमरः। ९ सौगतस्य ( समर्थनं निग्रहाय न भवतीति प्राह )। १० समर्थनं नाम वचनाधिक्यं नाम दूषणं न भवति यतः समर्थनं पक्षधर्मत्वादावन्तर्भवति। ११ शब्दादौ। १२ अस्तित्वसाधनम्। १३ इष्टं क्षणिकत्वम्। १४ उदाहरणद्वयनिरूपणप्रकारद्वये। १५ उभयथा समर्थनेपि भाष्यकथनं संघटते इति शेषः। १६ हेतुसमर्थनं प्रतिपाद्य पुनर्व्याप्तेः साधनम्। १७ विपक्षे ( यथा बौद्धस्य क्षणिकत्वसाधने नित्यम् )। १८ सत्त्वस्य। १९ व्यापकानुपलब्धेरिति। २० एतदेव समर्थयति। २१ तदेति शेषः। २२ ( अनित्यत्वेनाभिमतात्सर्वस्मात् )। २३ ( सर्वम् )। २४ सजातीयविजातीयकार्यकारणसामर्थ्यमुपाख्या स्वभाव इति यावत्। २५ सत्त्वस्य। २६ नित्ये। २७ सति। २८ विपक्षेण सह साधनस्य। २९ सत्त्वादिति हेतोः। ३० घटादिपदार्थः। ३१ नित्यात्। ३२ सत्त्वलक्षणसाधनव्यावृत्तेः। ३३ सन्दिग्धानैकान्तिकः। सत्त्वादित्ययं हेतुः। ३४ नित्ये सत्त्वकृतकत्वयोरदर्शनमात्रात्। ३५ नित्यात्सत्त्वादेः साधनस्य। ३६ किञ्चिज्ज्ञस्यादर्शनं नित्ये सत्त्वाभावं न साधयति यतः। ३७ पूर्वभागदर्शिना नरेण। ३८ विप्रकृष्टानाम्। ३९ बाधकप्रमाणेन शङ्काया निवृत्तिः कुत इत्याशङ्कायामाह। ४० नित्यवस्तुनः। ४१ साध्यधर्मे कार्ये। ४२ क्रमयौगपद्यायोगः। ४३ अर्थक्रियाकरणासामर्थ्यम्। ४४ नित्ये। ४५ विपक्षे बाधकप्रमाणमात्रेणैव। ४६ मात्रशब्दः कार्त्स्न्ये। यावन्तः साधन ( सत्त्व ) धर्मास्तावत्सु साध्यधर्मस्यान्वय इत्यर्थः। ४७ क्षणिकत्वस्य। ४८ सत्त्वादिति। ४९ बाधकप्रमाणेपि। ५० सत्त्वकृतकत्वादेः। ५१ साधनस्यानुपलब्धिसाधनं सौगतस्याप्रमाणम्। ५२ बाधनोपगमे इति वा पाठः। ५३ सौगतो वक्ति इति न चोद्यमित्यादि। ५४ दृश्यानुपलब्धिलक्षणस्य। ५५ प्रमाणत्वाप्रतिषेधमेव दर्शयति। ५६ नित्ये क्रमयौगपद्ययोगस्यादर्शनम्। ५७ दृश्यविषयत्वम् ( क्षणिकम् )। ५८ क्रमयौगपद्यायोगलक्षणस्य। ५९ साध्यस्य असामर्थ्यस्य विपर्यये सामर्थ्ये सल्लक्षणे। ६० क्रमयौगपद्याऽयोगेन विरुद्धः क्रमयौगपद्ययोगः।

[1]एवं हि स हेतुः[2] साध्याभावेऽसन् सिध्येद्यदि तत्र[3] प्रमाणवता स्वविरुद्धेन[4] बाध्येत। अन्यथा तत्रास्य[5] बाधका-सिद्धौ संशयो दुर्निवारः। न च सर्वानुपलब्धिर्भावस्य[6] बाधिका, दृश्यानुपलब्धेरेव तद्बाधकत्वात्। तत्र[7] सामर्थ्यं[8] क्रमाक्रमयोगेन[9] व्याप्तं सिद्धं, प्रकारान्तरासम्भवात्। तेन व्यापकधर्मानुपलब्धिरक्षणिके सामर्थ्यं बाधत इति क्रमयौगपद्यायोगस्य सामर्थ्याभावेन व्याप्तिसिद्धेर्नानवस्थाप्रसङ्ग इति स्वभावहेतोः[10] समर्थनम्। कार्यहेतोरपि[11], यत्कार्यं लिङ्गं कारणसाधनायोपादीयते तस्य तेन कार्यकारणभावप्रदर्शनं प्रमाणाभ्याम्[12]। यथेदमस्मिन् सति भवति सत्स्वपि तदन्येषु[13] समर्थेषु तद्धेतुषु[14], तदभावे[15] न भवतीति। एवं ह्यस्यासन्दिग्धं तत्कार्यत्वं[16] समर्थितं भवति। अन्यथा[17] केवलं तदभावे[18] न भवतीत्युपदर्शनेऽन्यस्यापि तत्राभावे[19] सन्दिग्धमस्य[20] सामर्थ्यं स्यात्, अन्यत्[22] तत्र[23] समर्थं, तदभावे[24] तत्र[25] भूतमिति शङ्कायाः प्रतिनिवृत्त्यभावात्। एतन्निवृत्तौ[26] पुनर्निवृत्तौ[27] यदृच्छासंवादो मातृविवाहोचितदेशजन्मनः[28] पिण्डखर्जूरस्य देशान्तरेषु मातृविवाहाभावेऽभाव-वत्[29]। एवं समर्थितं[30] तस्य[31] कार्यं सिध्यति। सिद्धं स्वसम्भवेन तत्सम्भवं साधयति, कार्यस्य कारणाव्यभि-चारात्। अव्यभिचारे[32] च स्वकारणैः सर्वकार्याणां सदृशो[33] न्याय इति[34]। अनुपलब्धेरपि[35] समर्थनं, प्रतिपत्तुरुपलब्धिलक्षणप्राप्तस्यानुपलब्धिसाधनं, तादृशस्यैवानुपलब्धेरसद्व्यवहारसिद्धेः, अनुपलब्धिलक्षणप्राप्तस्य[36] प्रतिपत्तुः प्रत्यक्षोपलब्धिनिवृत्तावप्यभावासिद्धेः। तत्रोपलब्धिलक्षणप्राप्तिः स्वभावविशेषः[37] कारणान्तरसाकल्यं[38] च स्वभावविशेषः। यस्त्रिविधेन[39] विप्रकर्षेण विप्रकृष्टं यदनात्म[40]रूपप्रतिभासविवेकेन[43] प्रतिपत्तृप्रत्यक्ष-प्रतिभासिरूपं स तादृशः[44] सत्स्वन्येषूपलम्भकारणेषु[45] तथानुपलब्धोऽसद्व्यवहारविषयः[46][47]। ततोऽन्यथा[48][49] सति [50]लिङ्गे संशयः। अत्रापि[51] सर्वमेवंविधमसद्व्यवहारविषयः[52][53] इति[54] व्याप्तिः— कस्यचिद्दसतोऽभ्युपगमेऽन्यस्य[55][56][57][58] तल्लक्षणाविशेषात्[59]। न [60]ह्येवंविधस्यासत्त्वानभ्युपगमेऽन्यत्र[61][62] तस्य योगः। न ह्येवंविधस्य[63] सतः सत्स्वन्ये-षूपलम्भकारणेष्वनुपलब्धिः[64]। अनुपलभ्यमानं त्वीदृशं नास्तीत्येतावन्मात्रनिमित्तोऽयमसद्व्यवहारः[65], अन्यस्य[66]

---

१ अदर्शनस्य विपक्षे बाधकप्रमाणत्वप्रतिपादनप्रकारेण। २ नित्यमर्थक्रियाकारि न भवति, क्रमयौगपद्यायोगादित्ययं हेतु साध्यस्य (असामर्थ्यस्य अभावे) (क्षणिकस्वलक्षणे)। ३ क्षणिके। ४ क्रमयौगपद्ययोगेन। ५ क्षणिके। ६ सत्त्वस्य। ७ दृश्यानुपलब्धेरेव तद्बाधकत्वे सति। ८ अर्थक्रियाकारित्वलक्षणम्। ९ अक्रमो यौगपद्यम्। १० सत्त्वादित्यादे। ११ इदं वक्ष्यमाणं समर्थनम्। १२ अन्वयव्यतिरेकाभ्याम्। १३ अग्न्यन्येषु पवनेन्धनादिषु। १४ धूमहेतुषु। १५ वह्न्यभावे। १६ वह्निकार्यत्वम्। १७ अन्वयाभावे। १८ मूलकारणा ( वह्नि ) भावे। १९ सहकारिकारणस्य पवनेन्धनादे। २० कार्योत्पत्तौ। २१ विवक्षितकारणस्य वह्ने। २२ पवनादिकारणम्। २३ धूमरूपकार्योत्पत्तौ। २४ पवनाद्यभावे। २५ धूमलक्षणं कार्यम्। २६ अग्न्यभावे धूमनिवृत्ते प्रतीयमानत्वादग्नेरेव तत्र धूमकार्यजनने सामर्थ्यं न त्वन्यस्येत्याशङ्कायामाह। २७ कार्यस्य। २८ मातृविवाह उचितो यत्र। २९ इति यदृच्छासंवादः। ३० अन्वयव्यतिरेकरूपेण। ३१ अग्नेः कारणस्य। ३२ अव्यभिचारोपि सर्वत्र कार्यकारणे कथमित्युक्ते आह। ३३ अन्वयव्यतिरेकाभ्यामेवेत्यर्थः। ३४ इति कार्यहेतुसमर्थनम्। ३५ हेतो। ३६ परमाण्वादेरदृश्यस्य। ३७ उपलब्धिलक्षणप्राप्तस्य वस्तुन स्वरूपम्। ३८ कारणान्तरं चक्षुरादि। ३९ देशकालस्वभावभेदात्। ४० एतदर्थं क इत्युक्ते आह। ४१ अनात्मा अन्यपदार्थ.। ४२ अघटव्यावृत्तिर्घट इति। ४३ राहित्येन। ४४ ( उपलब्धिलक्षणप्राप्तिरूप स्वभावविशेष. कारणान्तरसाकल्यं च स्वभावविशेष इत्यर्थ. )। ४५ चक्षुरादिषु। ४६ ( त्रिविधेन विप्रकर्षेण विप्रकृष्टत्वप्रकारेण, अनात्मरूपप्रतिभासविवेकेन प्रतिपत्तृप्रत्यक्षप्रतिभासित्वप्रकारेण चानुपलब्ध। ४७ अनुपलब्धिविषय.। ४८ उपलब्धिलक्षणप्राप्तस्यानुपलब्धे सकाशात्। ४९ अनुपलब्धिलक्षणप्राप्तस्यानुपलम्भप्रकारेण। ५० अनुपलब्धिलक्षणे। ५१ न केवलं सत्त्वादिलक्षणे। ५२ वस्तु। ५३ उपलब्धिलक्षणप्राप्तस्यानुपलम्भरूपम्। ५४ द्रष्टव्या। ५५ ननु अनुपलब्धस्यैवासद्व्यवहारहेतुत्वात् कथमुपलब्धिलक्षणप्राप्तस्य तत्सङ्गतमित्याशङ्क्य व्याप्तिं समर्थयति। ५६ शशविषाणादे। ५७ सर्वदा। ५८ घटादे। ५९ उपलब्धिलक्षणप्राप्तियोग्य शशो विषाणं च। ६० उपलब्धिलक्षणप्राप्तस्य। ६१ असद्व्यवहारस्य। ६२ शशविषाणे। ६३ उपलब्धिलक्षणप्राप्तस्य शशविषाणादे.। ६४ किन्तूपलब्धिरेव। ६५ उपलब्धिलक्षणप्राप्तस्यानुपलब्धिमात्रनिमित्त.। ६६ अदृश्यानुपलब्धिलक्षणस्य।

तन्निमित्तस्या[1]भावादिति । तच्चैवं त्रिविधस्य हेतोः समर्थनं न रूपान्तरं, विपक्षव्यावृत्तिरूपत्वात्[2], तृतीयस्यैव रूपस्या[3]सपक्षासत्त्वलक्षणस्यैवं[4] प्रतिपादनात् । तदवचने[5] साधनाङ्गस्य[6] त्रिरूपलिङ्गस्यावचनादसाधनाङ्गवचनं निग्रहाधिकरणं प्रसज्येत । निगमनादेस्तु हेतुरूपातिरिक्तत्वादभिधानमनर्थकं, त्रिरूपहेतुना साध्यार्थप्रतिपत्तेर्विहितत्वात् । ततो निगमनादीन[7]ऽतिशेते एव समर्थनमिति । तदेतदपि[8] स्वदर्शनानुरागमात्रं सौगतस्य निगमनादेरपि साधनावयवत्वात्, प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवा इति परैरभि[9]धानात्, निगमनस्योपनयस्य वा सर्गरस्ये[10]वावचने[11] न्यूनाख्यस्य निग्रहस्थानस्य प्रसक्तेः, हीनमन्यतमेना[12]पि न्यूनमिति[13] वचनात् । यदि[14] पुनः साधनावयवत्वेपि निगमनादेर्वचनमयुक्तं, हेत्वादिनैवार्थप्रत्यायनादिति मतं तदा[15] समर्थनस्य[16] हेतुरूपत्वेपि निर्दोषहेतुप्रयोगादेव साध्यप्रसिद्धेस्तदभिधानमनर्थकं कथं न भवेत् ? यतः समर्थनं निगमनादीनतिशयीत[17] । [18]हेतोर्विपक्षव्यावृत्तिसाधनलक्षणस्य समर्थनस्यावचने रूपान्तरस[19]त्त्वेपि गमकत्वासम्भवान्निगमनाद्यवचनेपि गमकत्वोपपत्तेः समर्थनं निगमनादीनतिशयीतेति चेत् हन्त[20] हेतोसि, पक्षधर्मत्वसपक्षसत्त्वयोर्हेतुरूपत्वापायापत्तेः, अन्यथानुपपन्नत्व[21]स्यैव तथा[22] हेतुलक्षणत्वसिद्धेः, तस्यैव समर्थनरूपत्वात्, तद्भावे[22] एवं[23] हेतोः प्रयोजकत्वदर्शनात् पक्षधर्मत्वादिप्रयोगे वादिनो[24]ऽसाधनाङ्ग[25]वचनस्य निग्रहस्थानत्वप्रसक्तेः । प्रतिपाद्यानुरोधतः[26] पक्षधर्मत्वादिवचनान्न निग्रहप्राप्तिरिति चेत् तथा[27] निगमनादिवचनादपि सा[28] मा भूत्, सर्वथातिशयो[29]सत्त्वात् । यदि[30] पुनरयं निर्बन्धः[31] प्रतिपाद्यानुरोधतोप्यतिरिक्तवचनम[32]साधनाङ्गवचनं निग्रहस्थानमिति तदा सत्त्वमात्रेण नश्वरत्व[33]सिद्धावुत्पत्तिमत्त्वकृतकत्वादिवचनमतिरिक्तविशेषणोपादानात् कृतकत्वप्रयत्नानन्तरीयकत्वादिषु च कप्रत्ययातिरेका[34]दसाधनाङ्गवचनं पराजयाय प्रभवेत् । क्वचित्[35]पक्षधर्मत्व[36]प्रदर्शनं, संश्च शब्द इत्यविगानात् * । यस्य[37] निरुपाधि[38] सत्त्वं प्रसिद्धं तं प्रति शुद्धः स्वभावहेतुः प्रयुज्यते, नश्वरः शब्दः सत्त्वादिति[39] । यस्य[40] त्वनर्थान्तरभूतविशेषणं[41] सत्त्वं प्रसिद्धं तं प्रति सोनर्थान्तरभूतविशेषण एवोत्पत्तिमत्त्वा[42]दिति । यस्य[43] पुनरर्थान्तरभूतविशेषणं[44] सत्त्वं सप्रसिद्धं तं प्रत्यर्थान्तरभूतविशेषण एव कृतकत्वादिति, अपेक्षितपरव्यापारो हि भावः कृतक इति वचनात् । तथा कृतकत्वात्प्रयत्नानन्तरीयकत्वादित्यादिषु च स्वार्थिकस्य कप्रत्ययस्याभिधानमपि तादृश[45]शब्दप्रसिद्ध्यनुसारिणं[46] प्रति नातिरिक्त[47]मुच्यते, अन्यथाप्रयोगे[48] तदपरितोषात्[49] । तथा च यत्सत्त-

---

१ असद्व्यवहारनिमित्तस्य । नास्तीति निमित्तं यस्य तस्य । २ विपक्षव्यावृत्तिरूपस्य । ३ असपक्षो विपक्ष । ४ पूर्वोक्तसमर्थनप्रकारेण । ५ तृतीयरूपसमर्थनस्यावचने । ६ सिद्ध्यङ्गस्य । ७ निगमनादिभ्योऽतिशयवद्भवति । ८ ( यौग आह ) । ९ नैयायिकैः । १० प्रतिज्ञायाः । ११ यथा सगरस्यावचने न्यूनाख्यं तथा । १२ पञ्चानामप्यवयवाना मध्ये । १३ न्यूनं नाम निग्रहस्थानम् । १४ हे सौगत । १५ इतो जैन प्राह । १६ विपक्षाद्व्यावृत्तिलक्षणस्य । १७ अपि तु नातिशयीत । १८ सौगतः प्राह । १९ पक्षधर्मत्वसपक्षसत्त्वयो· सत्त्वेपि । २० जैन. प्राह । २१ जैनोक्तस्य । २२ विपक्षाव्यावृत्तिलक्षणसमर्थनस्य गमकत्वप्रकारेण । २२ अन्यथानुपपन्नत्वलक्षणस्य सद्भावे । तदभावे हेतोः प्रयोजकत्वादर्शनादिति पाठान्तरम् । २३ ( तदभावे तु हेतोरप्रयोजकत्वमेवेत्यर्थ ) । २४ सौगतस्य । २५ विपक्षाद्व्यावृत्तिलक्षणहेतोरेकस्यैव साधनाङ्गत्वात् पक्षधर्मत्वसपक्षसत्त्वरूपस्यासाधनाङ्गत्वम् । २६ सौगत आह । २७ जैन· प्राह । २८ निग्रहप्राप्तिः । २९ अतिशयो, विशेषः । ३० हे सौगत । ३१ आग्रह· । ३२ निगमनादिकम् । ३३ शब्दो नश्वर , सत्त्वादिति रीत्या । ३४ अतिरेक आधिक्यम् । ३५ अनुमाने । ३६ सश्च शब्द इत्युपनयेनैवाविप्रतिपत्तेः ( अविगानतः ) पक्षधर्मस्य प्रदर्शनमतोधिकम् । तत एव पराजयाय । ३७ प्रागुक्तं सर्वं परिहरन् सौगतो वक्ति, यस्य अद्वैतवादिनो योगाचारस्येत्यर्थ· । ३८ उत्पत्तिमत्त्वकृतकत्वादिविशेषणरहितम् । ३९ गम्यत्वादित्यधिक· पाठ. खपुस्तके । ४० साङ्ख्यस्य जैनस्य वा । ४१ अनर्थान्तरभूतं विशेषणं (उत्पत्तिमत्त्वम्) यस्य तत् । ४२ नातिरिक्तम् । ४३ नैयायिकस्य । ४४ (कृतकत्वम्) । ४५ तादृश. कप्रत्ययान्त इत्यर्थः । ४६ वादिनम् । ४७ नातिरिक्तमिति वाक्यं पूर्वमपि योज्यम् । ४८ तत्तद्वादिसाध्यप्रसिद्ध्यभावप्रकारेण । कस्यचित्सत्त्वादित्यनेन साध्यसिद्धिरस्ति कस्यचित्तु उत्पत्तिमत्त्वादित्यनेन साध्यसिद्धिरिति । ४९ तत्तद्वादिनः ।

त्सर्वं क्षणिकं यथा घट इतीयता शब्देप्यविगानेन सत्त्वप्रतिपत्तावपि संश्च शब्द इति पक्षधर्मप्रदर्शनं नातिरिक्तवचनं, तदन्तरेण तत्प्रतिपत्तुमशक्तं प्रति तथा वचनाच्छक्तं प्रति तदवचनात्[3], विदुषा[4] वाच्यो हेतुरेव हि केवलः " इति वचनान्न पराजयाय कस्यचित्प्रभवेत् ' इति वदन्तः सौगताः प्रतिपाद्यानुरोधतः[5] साधर्म्यवचनेपि वैधर्म्यवचनं तद्वचनेपि च साधर्म्यवचनं पक्षादिवचनं वा नेच्छन्तीति किमपि महाद्भुतम् । तथा तदिष्टौ[6] वा तद्वचनं निग्रहाधिकरणमित्ययुक्तमेव व्यवतिष्ठते । किञ्च क्वचित्[7]पक्षधर्मत्वप्रदर्शन सश्च शब्द इत्यविगानात्[8], त्रिलक्षणवचनसमर्थनं च[9] असाधनाङ्गवचनमपजयप्राप्तिरिति" व्याहतं *, संश्च शब्द इति वचनमन्तरेणापि शब्दे सत्त्वप्रतीतेस्तस्य निग्रहस्थानत्वप्रसङ्गात् । प्रतिज्ञावचनवदसाधनाङ्गत्वात्तस्य[12]अनिग्रहस्थानत्वे[13] वा संगरवचनादेरप्यपजयप्राप्तिविरोधात्पक्षधर्मप्रदर्शनमसाधनाङ्गवचनादपजयप्राप्त्या व्याहतमेव । त्रिलक्षणवचनसमर्थनं च[14], तदन्तरेणापि त्रिलक्षणवचनस्य साधनाङ्गत्वसिद्धौ प्रतिज्ञादिवचनस्य साधनाङ्गत्वसिद्धेः[15]अन्यथा तस्य[16] प्रतिज्ञादिवचनवत्[17]अपजयप्राप्तिनिबन्धनत्वप्रसक्तेः। ततस्तद्व्याहतिं[18] परिजिहीर्षता[19] गम्यमानस्यापि[20] वचनं नासाधनाङ्गवचनं वादिनो निग्रहाधिकरणमिति प्रतिपत्तव्यम् । नन्वेवम[21]प्रस्तुतस्यापि नाटकादिघोषणस्य द्वादश[22]लक्षणप्ररूपणस्य वा निग्रहाधिकरणत्वं न स्यादिति चेदेवमेतत्[23] । तथा[24]न्यस्यापि प्रस्तुतेतरस्य वादिनोक्ताविति[25]तरस्य स्वपक्षमसाधयतो विजयासंभवान्निग्रहस्थानमयुक्तम्[26] * । स्वपक्षं साधयतस्तु[27] तत्सिद्ध्यैव[28] विजयसंभवादितरस्य पराजयप्राप्तेर्नाप्रस्तुतादिवचनं निग्रहस्थानम् । साधनाङ्गस्या[29]वचनं * वादिनो निग्रहस्थानं, स्वेष्ट[30]साधनवचनमभ्युपगम्या[31]ऽप्रतिभया[32] तूष्णींभावादि[33]त्यप्यनेन[34] प्रत्युक्तम् । प्रतिवादिनोप्य[35]दोषोद्भावनं दोषस्यानुद्भासनं[36] वानेन प्रत्युक्तं * न्यायस्य[37] समानत्वात् । [38]किमेव[39] वादिना कर्तव्यमिति चेत्, विजिगीषुणोभयं कर्तव्यं स्वपरपक्षसाधनदूषणम् * । ततः किमिति चेत्, अतोन्यतरेणा[40]सिद्धानैकान्तिकवचनेपि जल्पाप[41]रिसमाप्तिः *, कस्यचित्स्वपक्षसिद्धेरभावात् । कथं तर्हि वादपरिसमाप्तिर्वादिप्रतिवादिनोरिति चेत्, निराकृतावस्थापितविपक्षस्वपक्षयोरेव जयेतरव्यवस्था, नान्यथा * । तदुक्तं—" स्वपक्षसिद्धिरेकस्य[42] निग्रहोन्यस्य वादिनः । नासाधनाङ्गवचनं[44] नादोषोद्भावनं द्वयोः[45] " इति । तथा तत्त्वार्थश्लोकवार्तिकेप्युक्तं

---

१ प्रयोगेण । २ तदन्तरेणापि । ३ संश्च शब्द इति पक्षधर्माऽवचनात् । ४ तद्भावहेतुभावौ हि दृष्टान्ते तद्वेदिनः । ख्याप्येते विदुषामित्यादि । ५ प्रतिपाद्यानुरोधत साधर्म्यवचनेपि वैधर्म्यवचनं तद्वचनेपि च साधर्म्यवचनं पक्षादिवचनं चेत्यादीष्टौ सत्याम् । ६ इति मत । ७ शब्दे धर्मिणि । ८ इति व्याहतमित्यग्रेणान्वयः । ९ सर्वं क्षणिकं, सत्त्वादित्येतावता शब्दे सत्त्वप्रतीते सश्च शब्द इति पक्षधर्मस्याविगानमित्यर्थ । १० इत्यपि व्याहतम् । कथा ? असाधनाङ्गवचनादपजयप्राप्त्येत्यर्थं । ११ इति हेतो । १२ (सश्च शब्द इति पक्षधर्मस्य) । १३ सौगतमतापेक्षया । १४ (व्याहतमेवेति पूर्वोक्तिनान्वय ) । १५ समर्थनसहितत्वेन । १६ त्रिलक्षणवचनसमर्थनस्य । १७ प्रतिज्ञादिवचनसमर्थनवदित्यर्थ । १८ समर्थनपक्षधर्मत्वप्रदर्शनयोर्व्याहतिम् । १९ बौद्धेन । २० प्रतिज्ञादे । २१ बौद्ध । २२ पञ्चेन्द्रियाणि शब्दाद्या विषया पञ्च मानसम् । धर्मायतनमेतानि द्वादशायतनानि वै । २३ जैनोक्ति । २४ प्रतिज्ञावचनप्रकारेण । २५ वादिन उक्तावितरस्येति वात्र पाठ । इतरस्य प्रतिवादिन इत्यर्थ । २६ वादिन. । २७ प्रतिवादिन । २८ स्वपक्षसिद्ध्या । २९ साधनस्य स्वेष्टसिद्धेरङ्गानि कारणानि प्रतिज्ञादीनि । तेष्वन्यतमस्य । ३० प्रतिज्ञादिकम् । ३१ प्रतिज्ञाय । ३२ बुद्धिराहित्येन । ३३ बौद्धाभिमतम् । ३४ उक्तन्यायेन । ३५ वादिना निर्दोषसाधने प्रयुक्ते सति । ३६ प्रतिवादिनो निग्रहाधिकरणम् । अनुद्भावनमिति वा पाठः । ३७ पूर्वोक्तस्यैव । ३८ बौद्ध पृच्छति । ३९ प्रतिज्ञादिवचनस्यानिग्रहस्थानत्वे सति । ४० वादिप्रतिवादिनोर्मध्ये । ४१ जल्पो, वाद । ४२ वादिप्रतिवादिनोर्मध्ये एकस्य । यदा वादी निराकृतविपक्षस्तदा वादिनो जय प्रतिवादिनः पराजय । यदा प्रतिवादी अवस्थापितस्वपक्षस्तदा तस्य जयो वादिनस्तु पराजय इत्यर्थ । ४३ निग्रहस्थानम् । ४४ 'च' इत्यध्याहार्यम् । ४५ वादिप्रतिवादिनो. ।

" स्वपक्षसिद्धिपर्यन्ता शास्त्रीयार्थविचारणा । वस्त्वाश्रयत्वतो यद्वल्लौकिकार्थविचारणा " इति । इति दर्शयन्नुभयमाह * ग्रन्थकारः श्रीस्वामिसमन्तभद्राचार्यः । ' स त्वमेवासि निर्दोषः ' इति, त्वन्मतामृतबाह्यानामित्यादि च, गम्यमानस्यापि वचने दोषाभावात् ।

ननु च सर्वथैकान्तवादिनामपि कुशलाकुशलस्य कर्मणः परलोकस्य च प्रसिद्धेराप्तत्वोपपत्तेर्महत्त्वं किं नः स्तुतमित्याशङ्कायामिदमाहुः—

**कुशलाकुशलं कर्म परलोकश्च न क्वचित् । एकान्तग्रहरक्तेषु नाथ स्वपरवैरिषु ॥ ८ ॥**

कायवाङ्मनःक्रिया कर्म, 'त्रिविधो योग आस्रवः । तद्द्विविधं कुशलाकुशलभेदात्, " कायवाङ्मनःकर्म योगः, स आस्रवः, शुभः पुण्यस्याऽशुभः पापस्य " इति वचनात् । प्रेत्यभावः परलोकः । तद्धेतुर्वा धर्मोऽधर्मश्च, कारणे कार्योपचारात् । चशब्दान्निःश्रेयसादिपरिग्रहः । एतत्सर्वमेकान्तग्रहरक्तेष्वनित्यैकान्ताद्यभिनिवेशपरवशीकृतेषु मध्ये न क्वचित्संभवति, तेषां स्ववैरित्वात् तत्त्वोपप्लववादिवत् । स्ववैरिणस्ते, परवैरित्वात्तद्वत् । किं पुनः स्वं को वा परः ? पुण्यं पापं च कर्म तत्फलं कुशलमकुशलं च स्वं, तत्सम्बन्धः परलोकादिश्च, तस्य स्वयमेकान्तवादिभिरिष्टत्वात् । परः पुनरनेकान्तः, तस्य तैरनिष्टत्वात् । तद्वैरित्वं तु तेषां तत्प्रतिषेधाभिधानात् । तत्स्ववैरित्वं साधयति, यस्मात् **कर्मफलसंबन्धपरलोकादिकमेकान्तवादिनां प्रायेणेष्टं तदनेकान्तप्रतिषेधेन बाध्यते** * । ननु च शून्यवादिभिरद्वैतावलम्बिभिश्च तस्यानिष्टत्वात्कथं सर्वेषामेकान्तवादिनां तदिष्टमिति चेन्न, तैरपि संवृत्त्या प्रायेणेष्टत्वात् । कथं पुनरनेकान्तप्रतिषेधेन तद्बाध्यते इति चेत् क्रमाक्रमयोः प्रतिषेधात्, तयोरनेकान्तेन व्याप्तत्वात् तत्प्रतिषेधेन तत्प्रतिषेधसिद्धेः[४३] । क्रमाक्रमप्रतिषेधे चार्थक्रियाप्रतिषेधः, तस्यास्ताभ्यां व्याप्तत्वात् । अर्थक्रियाप्रतिषेधे च कर्मादिकं विरुध्यते, तस्य तया व्याप्तत्वात् । यदि वानेकान्तप्रतिषेधेन क्षणिकाद्येकान्तविरोधः,[४६] तदेकान्तस्यानेकान्ताविनाभावित्वात् । तस्यापि स्वरूपेण सत्त्वेऽनेकान्तरूपेण चासत्त्वव्यवस्थायामनेकान्तस्य दुर्निवारत्वात्तदविनाभावित्वं सिद्धमेव, अन्यथा तद्व्यवस्थानुपपत्तेः । इति परवैरित्वात्स्ववैरित्वम् । तथा

---

१ धनप्राप्तिपर्यन्तम् । २ स्वपरपक्षसाधनदूषणं कर्तव्यं विजिगीषुणेत्येतत् । ३ इति स्वपक्षसाधनम् । ४ इति परपक्षदूषणम् । ५ समन्तभद्रस्वामिन । ६ एकान्तग्रहरक्तेषु मध्ये कस्मिंश्चित् । ७ (कायवाङ्मनसामालम्बनेनात्मप्रदेशपरिस्पन्दलक्षणा ) । ८ काययोगो वाग्योगो मनोयोगश्चेति त्रिविध. । ९ आस्रवति कर्म येन योगेन स आस्रवः कर्मागमकारणमित्यर्थ । १० पुण्यपापभेदात्सुखदु.खभेदाद्वा । ११ योग एव । १२ तत्त्वार्थसूत्रकारवचनात् । १३ प्रेत्य मृत्वा भावो गत्यन्तरप्राप्तिः प्रेत्यभाव । १४ परलोकहेतु । १५ ( परलोकः ) । १६ आदिना मोक्षादिग्रहश्च । १७ पुण्यपापपरलोकादिकम् । १८ वादिषु । १९ स्वयमङ्गीकृतस्य परलोकादे. । २० तेषा स्ववैरित्वमसिद्धमिति चेदाह । २१ अनेकान्तमतवैरित्वात् । २२ पुण्यपापरूपकर्मफलम् । २३ सुखं दु.खं च । २४ तेन पुण्यपापरूपेण धर्माधर्मेण सवन्ध कार्यकारणलक्षणो यस्य स परलोकादि । २५ स्वमिति सम्वन्ध । २६ कुशलाकुशलादिपूर्वोक्तस्य । २७ परवैरित्वमनेकान्तवैरित्वं वा । २८ स अनेकान्त. । २९ तत्-परवैरित्वं, स्वस्य स्वकीयस्य वैरित्वम् । ३० यस्मः ( कर्मधारय. ) । ३१ कर्मफलादिकमनन्तरोक्तम् । ३२ यस्मादेतत्पराभिमतं कर्मफलादिकमनेकान्तनिषेधेन वाध्यते तस्मात्परवैरित्वं, स्ववैरित्वं साधयति, ( यतस्ते बाधितमपि स्वपक्षं स्वीकुर्वन्ति । ३३ तटस्थ. । ३४ तत्त्वोपप्लववादिभि. । ३५ कर्मफलपरलोकादेरनिष्टत्वेनाङ्गीकारात् । यतः शून्यवादिना परलोकाद्यङ्गीकारे शून्याभाव , अद्वैतवादिना च परलोकाङ्गीकारे द्वैतापत्तिरतस्तेषामनिष्टत्वम् । ३६ मायया मिथ्यारूपेण वा । ३७ नित्यैकान्तेऽनित्यैकान्ते वा । ३८ स्याद्वादिभिर्युक्त्याऽसंभवत्वप्रदर्शनात् । ३९ क्रमाक्रमयो । ४० व्यापकेन । ४१ तस्य अनेकान्तस्य । ४२ तयो क्रमाक्रमयो । ४३ व्यापकनिवृत्तौ व्याप्यनिवृत्तेः सुसिद्धत्वात् । ४४ कार्यकरणमर्थक्रिया । ४५ प्रकारान्तरेणाहु स्याद्वादिन. । ४६ (इष्ट इति शेष ) । ४७ (क्षणिकाद्येकान्तस्य) । ४८ क्षणिकादिरूपेण । ४९ तत क्षणिकैकान्तस्याप्यनेकान्तत्वमायातम् । ५० ( एकान्तस्यानेकान्तेनाविनाभावित्वम् ) । ५१ (सा अर्थक्रिया) । ५२ परवैरित्वे ।

च कथं कर्मा[1]दिकमनाश्रयं न विरुध्यते ? ततो[2]नुष्ठान[3]मभिमत[4]व्याघातकृत्, सदसन्नित्यानित्याद्येकान्तेषु कस्य[5]चित्कुत[6]श्चित्कदा[7]चित्क्व[8]चित्प्रादुर्भावा[9]संभवात् * । ननु[10] च ‘ कस्यचित्कर्मणः पुण्यपापाख्यस्य[12] कुतश्चिदनुष्ठानात्कायादिव्यापार[11]लक्षणात्क्वचिदात्मनि कदाचित्संसारिदशायां जन्म[13] मा भूत् सर्वथा सतस्तदघटनात्, कर्मफलस्य वा शुभाशुभपरलोकलक्षणस्य[14] कर्म[15]विशेषा[16]त्, तत्त्वज्ञा[17]नादेर्वा निःश्रेयसस्य[18] सर्वथा सद्भावाविशेषात् । तस्या[19]सतस्तु ततो[20] जन्मास्तु, प्रागसतः पश्चात्प्रादुर्भावदर्शनात्, इति चेन्न, उभयत्र[21] तद्विरोधा[22]विशेषात् । न हि सर्वात्मना सर्वस्य भूता[23]वेव जन्म विरुद्धमपि तु सर्वथाऽभावे[24]पि, व्यलीक[25]प्रतिभासानामनुपरमप्रसङ्गात् * । ननु च शून्यवादिनः[26] स्वप्नदशायामिवान्यदा[27]पि व्यलीकप्रतिभासानां कर्मादीनां कथमनुपरमप्रसङ्गो यतः संवृत्या कर्मादिजन्माविरुद्धं न भवेदिति चेन्न, साध्यसमत्वा[28]दुदाहरणस्य । यथैव[29] स्वप्नदशाया व्यलीकप्रतिभासानामहेतुकत्वादनुपरमप्रसङ्गः शून्यवादिनां तथा स्वप्नावस्थायामपि, तद[30]विशेषात् । तेषामविद्यावासनाहेतुकत्वादहेतुकत्वमसिद्धमिति चेन्न, अनाद्यऽविद्यावासनाया अप्यसत्त्वे वितथप्रतिभासहेतुत्वविरोधात् खपुष्पवत्, सत्त्वे वा सर्वथा शून्यवादानवतारात् । संवृतिसत्त्वात्त[31]स्याः शून्यवादावतार इति चेत्तर्हि परमार्थतोऽसत्यऽविद्या कथं वितथप्रतिभासहेतुः स्यात् ? स्वरूपेण[32] सदेव हि किञ्चिद्वितथप्रतिभासान[33]पि जनयद्दृष्टं, यथा चक्षुषि तिमिरादि[34]कं, न पुनरसत्खरविषाणम् । इति सर्वशून्यवादिनो व्यलीकप्रतिभासानुपरमप्रसङ्ग एव, अहेतुकत्वात् । ततो नाभावैका[35]न्ते कस्य[36]चित्कुतश्चित्कदाचित्क्वचिज्जन्म संभवति, सदसदनेकान्तप्रतिषेधाद्भावैकान्तवत्[37] । न केवलं स्वभावनैरात्म्ये[38] एवायं दोषः[39] किं त्वन्त[40]रुभय[41]त्र वा निरन्वय[42]सत्त्वेपि[43] *, कार्यस्य[44] निर्हेतुकत्वाविशेषाज्जन्म[45]विरोधसिद्धेः, जन्मनि वा तस्यानुपरतिप्रसङ्गात् । नन्वन्तस्तत्त्ववादिनो योगाचारस्य पूर्वविज्ञानादुत्तरविज्ञानस्योत्पत्तेः सौत्रान्तिकस्य चान्तर्बहिस्तत्त्वोभयवादिनः पूर्वार्थक्षणादुत्तरार्थक्षणस्य प्रादुर्भावात्कुतो निष्कारणत्वं कार्यस्येति चेन्न, कार्य[46]कालमप्राप्नुवतः कारणत्वानुपपत्तेश्चिरतरातीतवत् * कार्य[47]कालं प्राप्नुवतोपि कारणत्वादर्शना[48]दन्यथा[49] सर्वस्य समानक्षण[50]वर्तिनस्तत्कारणत्वप्रसङ्गात् । यस्य भावा-

---

१ कर्मादेराश्रयो ह्यनेकान्तः । तद्विरहे कर्मादिकमनाश्रयमेव । २ कर्मादिकं विरुध्यते यतः । ३ तपोजपाद्याचरणम् । ४ अभिमतं स्वकर्मक्षयादि । ५ कर्मादेः । ६ अनुष्ठानात् । ७ संसारिदशायाम् । ८ आत्मनि । ९ कर्मादेः । १० यौगाचारो माध्यमिको वा । ११ कायादिव्यापारो लक्षणं यस्य । १२ पुण्यपापाख्यस्य । १३ जन्म मा भूदिति सम्बन्धः । १४ कर्मादिकं तु द्रव्यत्वेन जैनैर्निःस्वमङ्गीक्रियते । १५ सर्वथा सतस्तदघटनात् । १६ आवरणविशेषात् । १७ आदिपदेनानुष्ठानादेः । १८ जन्म मा भूदित्येव सम्बन्धः । यतः सर्वथा सत्त्वेनाविशेषात् । १९ परलोकादेः । बौद्धमते सर्वथाऽभाव इष्टः । अत एवं ( वक्ष्यमाणं ) प्राह माध्यमिकः । २० कुतश्चित्कारणात् । २१ सर्वथा सदसतोः पक्षयोः । २२ परलोकादिजन्मविरोधाविशेषात् । २३ सत्त्वे । २४ बौद्धाभिमते ( जन्म न घटते इत्यन्वयः ) । २५ व्यलीको मिथ्या । २६ माध्यमिकस्य । २७ जाग्रद्दशायाम् । २८ कर्मादयो व्यलीकप्रतिभासाः कदाचिदुपरमन्ते, तेषां संवृत्या जनितत्वात्, स्वप्नादिप्रतिभासवदितीदमुदाहरणं साध्यसममसिद्धमिति यावत् । कथम् ? स्वप्नादिप्रतिभासाः कदाचिदुपरमन्ते इति साध्यमेव न सिद्धं यतः । २९ (साध्यसमत्वमेव दर्शयन्ति यथेति) । ३० ( अहेतुकत्वाविशेषात् ) । ३१ ( अविद्यायाः संवृत्या, मायया अयथार्थत्वेनेत्यर्थः ) (सत्त्वात् शून्यवादः स्यादिति ) । ३२ सन्दिग्धानैकान्तिकत्वे सत्याह । ३३ अपिना सत्यानपि । ३४ सदेव तिमिरादिकं वितथप्रतिभासान् जनयति । ३५ शून्यैकान्तवादे । ३६ । कर्मणः । ३७ यथा भावैकान्ते कस्यचित्कुतश्चित्कदाचित्क्वचिज्जन्म न संभवति, सदसदनेकान्तप्रतिषेधात् । ३८ शून्यवादे । ३९ जन्मविरोधलक्षणः । ४० ज्ञाने निरन्वयसत्त्वे । ४१ ज्ञानबाह्यार्थयोर्निरन्वयसत्त्वे वा । ४२ निरन्वयक्षणक्षये । ४३ ज्ञानाद्वैतलक्षणोत्तरक्षणकार्यस्य बहिरर्थोत्तरक्षणकार्यस्य च । ४४ कार्यस्य । ४५ निरन्वयसत्त्वेपि उत्तरक्षणलक्षणकार्यजन्मनि । ४६ पूर्वक्षणलक्षणं कारणं कार्यकालमप्राप्य प्राप्य वा कार्यं करोतीति द्विधा विकल्प्य क्रमेण दूषयन्नाह । ४७ द्वितीयविकल्पः । ४८ सव्येतरगोविषाणवत् । ४९ कार्यकालं प्राप्नुवतः सर्वस्यानियमेन कारणत्वे । ५० कार्येण सह ।

भावयोः कार्यस्य भावाभावौ तदेव कारणमिति [1]कल्पनायां, [2]सत्य[3]ऽभवतः [4]स्वयमेव नियमेन पश्चाद्भव- **तस्तत्कार्य[5]त्वं विरुद्धं** *, [6]तत्र तदकारणत्वसाधना[7]दन्यकार्यवत्, [8]तस्य वा तदकार्यत्वं[9]सिद्धे[10]स्तद्वत्। कार्यमेव [11]तदनन्तरं संभवतीति चेत्, **कालान्तरेपि किन्न स्यात्? [12]तदभावाविशेषात् समनन्तरवत्** *। कालान्तरेपि किञ्चिद्भवत्येव मूषिका[13]ऽलर्कविषविकारवद्भाविराज्यादिनिमित्तकरतलरेखादि[14]वच्चेति चेत्, [15]स- **मर्थे सत्यऽभवतः पुनः कालान्तरे भाविनस्तत्प्रभवाभ्युपगमे कथमक्षणिकेऽर्थक्रियानुपपत्तिः, [16]तत्सत्त्वासत्त्वयोरविशेषा[17]त्** *। [18]स्वसत्ताक्षणात्पूर्वं पश्चाच्चासति समर्थे [19]कारणे [20]स्वकालनियताऽर्थक्रियोपप- द्यते, न पुनः [21]शश्वत्सतीति कुतो नियमः? **कारणसामर्थ्यापेक्षिणः फलस्य कालनियमक[22]ल्पनायाम- [23]चलपक्षेपि समानः परिहारः** *। [24]यथैव हि, क्षणिकं कारणं यद्यदा यत्र यथोत्पित्सु कार्यं तत्तदा तत्र तथो[25]त्पादयति, [26]तस्यैवंविधसामर्थ्यसद्भावात् तत्सामर्थ्यापेक्षिणः कार्यस्य स्वकालनियमः सि[27]ध्यतीति कल्प्यते तथा नित्यमपि कारणं यद्यदा यत्र यथा फलमुत्पित्सु तत्तदा तत्र तथोपजनयति, [28]तस्य तादृशसामर्थ्ययो- गात् तत्सामर्थ्यापेक्षिणः फलस्य कालनियमः किन्न कल्पयितुं शक्यः? शाश्वतिकस्य प्रतिकार्यं सामर्थ्यभेदा- दनित्यत्वप्रसंग इति चेन्न, क्षणि[29]कस्याप्येकस्य युगपदनेककार्य[30]कारिणः प्रतिकार्यं सामर्थ्यभेदादनेकत्वप्रस- ङ्गात्। **[31]क्षणवर्त्तिन [32]एकस्मात्कारणस्वभावमभेद[33]यतां विचि[34]त्रकर्मणामुत्पत्तौ कूटस्थेपि किं न [35]स्यात् क्रमशः कार्योत्पत्तिः?** * तस्यापि तथावि[36]धैकस्वभावत्वात्। [37]कथमत्रोत्पत्तिर्नाम? [38]**तत्र समानः पर्य- नुयोगः, सद[39]सतोरनुत्पत्तेर्नि[40]ष्पन्नखपुष्पवत्।** नित्यं कथमुत्पद्यते सत्त्वान्निष्पन्नवदिति पर्य[41]नुयुज्यते, न पुनः क्षणिकं कथं प्रादुर्भवेत्? असत्त्वात्खपुष्पवदिति पर्यनुयोगा[42]र्हमिति पक्षपातमात्रम्। **[43]सतः पुनर्गुणा- [44]न्तराधा[45]नमनेकं क्रमशो[46]प्यनुभवतः किं वि[47]रुध्येत,?** *। नन्वे[48]कत्वं विरुध्यते। [49]स हि गुणान्त[50]राधा- नमनेकं क्रमशोनुभवन् [51]यद्येकेन स्वभावेनानुभवेत्तदा तस्यै[52]कस्वभावतापत्तिः, अन्यथा निर्हेतुकत्वप्र[53]सङ्गात्, [54]तदनुभवनस्य नियमायोगा[55]त्। अथानेकेन स्वभावेन तदनुभवेत्तदा कथमेकस्वभावता त[56]स्य। अनेकस्वभाव-

---

१ सौगतस्य। २ कारणत्वेनाभिमते पूर्वक्षणे। ३ उत्तरक्षणलक्षणस्य कार्यस्य। ४ पूर्वक्षणरूपकारणमन्तरेण। ५ पूर्वक्ष- णकार्यत्वम्। ६ उत्तरक्षणलक्षणे कार्ये। ७ पूर्वक्षणमुत्तरक्षणस्य कारणं न भवति, तदभावेपि तस्योत्पादादित्यनुमानात्। ८ विवक्षितकार्यस्य। ९ तत्, तस्य पूर्वक्षणनिमित्तकं कार्यरूपत्वमुत्तरक्षणस्य कथं न? तस्मिन् सत्यभावात्, स्वयमेव च पश्चा- द्भावात्। १० अन्यकार्यवत्। ११ (सौगत आह) पूर्वक्षणक्षयानन्तरम्। १२ तस्य पूर्वक्षणस्य। १३ उन्मत्तः श्वा अलर्कः। अलर्क इति पुस्तकान्तरे। १४ अत्रोदाहरणे पूर्वस्मिंश्च जैनैः दृष्टकारणस्याविनाभाव स्वीक्रियते। १५ कारणे (जैन प्राह)। १६ (अक्षणिके नित्यत्वात्कार्योत्पादकत्वं न घटते, नित्ये क्रियाविरोधात्, क्षणिके तु असत्त्वादेवेत्यविशेष)। १७ (कार्यं प्रत्यका- रणत्वेन)। १८ क्षणिककारणस्य सत्ता। १९ किन्तु स्वकीयवर्तमानकाले सति। २० स्वकालो वर्तमानः। २१ नित्ये कारणे। २२ सौगतमते। २३ नित्यपक्षे। २४ भवन्मते। २५ कर्तृभूतं क्षणिकं कारणमिति पूर्वेणान्वयः। २६ क्षणिकरूपस्य कारणस्य। २७ इति सौगतेन कालनियमः कल्प्यते यथा तथा जैनैर्नित्यमित्यादि। २८ नित्यस्य कारणस्य। २९ कारणस्य। ३० उपादानत्वं सहकारित्वमिति द्वयरूपेण। ३१ (हे सौगत) क्षणिकात्। ३२ कारणात्। ३३ कारणभेदमकुर्वताम्। ३४ अनेककार्याणाम्। ३५ कूटस्थादपि कारणादेकस्मात्कारणस्वभावमभेदयतामित्यादि योज्यम्। ३६ नित्यस्यापि क्रमभा- व्यनेककार्योत्पादनस्वभावत्वात्, यथा क्षणिकस्य। ३७ बौद्ध शङ्कते, हे स्याद्वादिन् अत्र नित्ये कथमुत्पत्तिर्नामेति। ३८ स्याद्वादी उत्तरयति—तत्र क्षणिके कथमुत्पत्ति स्यादिति सम आवयो पर्यनुयोग (प्रश्न)। ३९ सर्वथा सतोऽसत एव वा। ४० क्रमेण सर्वथा सतोऽनुत्पत्तौ निष्पन्न (आत्मादि) वदिति दृष्टान्त, सर्वथाऽसतोऽनुत्पत्तौ खपुष्पं दृष्टान्तो ज्ञेयः। ४१ सौगतेन। ४२ इति पर्यनुयोगार्ह नेति सौगतेनोक्ते स्याद्वादी आह इति सौगतोक्तं पक्षपातमात्रमित्यादि। ४३ नित्यस्य। ४४ गुणान्तर सुखदु खादि। ४५ आधानं स्वीकार.। ४६ प्राप्नुवत' सत.। ४७ अपि तु न किमपि। ४८ नित्यस्य। ४९ नित्य आत्मादिपदार्थ। ५० ज्ञानाज्ज्ञानान्तरभावरूपम्। ५१ स नित्यो गुणान्तराधानमेकेनानेकेन वा स्वभावेनानुभवेदिति विकल्प्य क्रमेण दूषयति। ५२ गुणान्तरस्य पूर्वेण सह। ५३ नित्यस्य। ५४ नित्यानुभवनस्य। ५५ एकेन स्वभावेन सभवतो गुणान्तराधानस्यानेकत्वमस्ति चेति नियामकस्याभावात्। ५६ नित्यस्यात्मादे.।

स्य ततो[१] भेदात्तस्यै[२]करूपत्वे कुतोयमस्यानेकस्वभावः संबन्धात्तस्य[३] स[४] इति कल्पनायां स संबन्धः स्वस्व[५]भावै[६]र्गुणान्तराधानानुभवनहेतु. किमेकेन स्वभावेन स्यादनेकेन वेति स एव पर्यनुयोगोऽनवस्था च । इति कश्चित्[७] सोपि दूषणाभासवादी[८], स्वयमिष्ट[९]स्यैकस्य ज्ञानस्य ग्राह्यग्राहकाकारवैश्वरूप्य[१०]विरोधप्रसङ्गात्, प्रकृत[११]पर्यनुयोगस्याविशेषात् । क्षणस्थायिनः कस्यचिदेव[१२] ग्राह्यग्राहकाकारवैश्वरूप्यानभ्युपगमेपि[१३] संविदितज्ज्ञानस्य[१४] ग्राह्यग्राहकाकारविवेकं[१५] परोक्षं[१६] विभ्राणस्य सामर्थ्यप्राप्तेः[१७] *, संवेदनस्यैकस्य[१८] प्रत्यक्षपरोक्षाकारतया वैश्वरूप्यसिद्धेः । सविद्रूपतया संवेदनस्य प्रत्यक्षतैव ग्राह्यग्राहकाकारविविक्ततयापि[१९] प्रत्यक्षता, न पुनः परोक्षता यतो वैश्वरूप्यं प्रकृत[२०]पर्यनुयोगयोग्य भवेदिति चेन्न, तथा[२१] सकृदप्यप्रतिभासनाद्ब्रह्माद्वै[२२]तवत्, ग्राह्यग्राहकाकाराक्रान्तस्यैव सर्वदा वेदनस्यानुभवात् । ततः[२३] संवेदनमेकमनेकं प्रत्यक्षपरोक्षाकारौ विभ्राण सामर्थ्यप्राप्तमेव, अन्यथा[२४] शून्य[२५]संविदोर्विप्र[२६]तिषेधात्[२७]। ग्राह्यग्रा[२८]हकाकारशून्यतया हि शून्यम्। सवेदनमात्रमुपयते[२९]स्तत्[३०]संविदुपपद्यते, न पुनः सविन्मात्रमप्यसदु[३१]पवर्णयतो[३२], विप्रतिषेधात्स्वेष्टा[३३]सिद्धेः प्रलापमात्रप्रसक्तेः । तदयं[३४] * योगाचारः सौत्रान्तिको वा सर्वथा शून्यं संविदद्वैतं वानिच्छन्, क्षणस्थायि कारणं स्वसत्तायां कार्यं कुर्वदभ्युपगच्छन् क्रमोत्पत्तिमुपरुणद्धि[३५] सकल[३६]जगदेकक्षणवृत्तिप्रसङ्गात् । कालान्तरे कार्यं कुर्वत्कारणं क्षणिकमभ्युपगच्छतां[३७] नायं दोष इति चेन्न, तेषामपि कारणस्य कार्यकालप्राप्तौ क्षण[३८]भङ्गभङ्गानुपङ्गात्[३९], तदप्राप्नुवतस्तत्कृतौ[४०] व्यलीककल्पनाविशेषेण कूटस्थानतिशायनात् । यथैव हि कूटस्थमपरिणामित्वात्क्रमयौगपद्याभ्यामर्थक्रियायामसमर्थमपि व्यलीककल्पनया क्रमाक्रमसमाक्रान्तकार्यपरम्परां कुर्वदभ्युपगम्यते नित्यैकान्तवादिभिः सांख्यादिभिस्तथा क्षणिकमपि स्वसत्ताक्षणात्पूर्वं पश्चाच्चात्यन्तमसत्सर्वथार्थक्रियायामसामर्थ्यं प्रथयदपि सवृत्त्या क्रमाक्रमवृत्तिकार्यमालां निर्वर्त्तयदुररीक्रियते क्षणिकवादिभिः । इति कूटस्थादनतिशायनं क्षणिकस्य सिद्धमेव । ततः सुभाषितं * समन्तभद्रस्वामि-

---

१ नित्यात् । २ नित्यस्य । ३ नित्यस्य । ४ अनेकस्वभाव । ५ जैनस्य । ६ नित्यस्वभावै । ७ सौगत ( इतो जैनो ब्रूते ) । ८ परपक्षे प्रयुक्तस्य दूषणस्य स्वपक्षेपि समानत्वात् । ९ सौगतेन । १० वैश्वरूप्यं नानारूपत्वम् । ११ स हि गुणान्तराधानमित्यादिपर्यनुयोगस्य । यतोत्रापि स सर्वोपि पर्यनुयोग सघटते । १२ संवेदनस्य । १३ एवमनभ्युपगमेपि यदि विरोधो जैनैर्दीयते तर्हि केन वार्यते परं त्वस्माकं मते ज्ञानस्य ग्राह्यग्राहकाकारौ नेष्टौ स्त । १४ प्रत्यक्षज्ञानस्य । १५ पृथग्भावम् । १६ विशेषणम् । १७ ( परोक्षता विभ्राणस्यैव ज्ञानस्य ( परोक्षस्य ) ग्राह्यग्राहकाकाररूपेण भेद सामर्थ्यप्राप्तोस्ति, न प्रत्यक्षस्य ) । १८ निर्विकल्पकस्य । १९ पृथक्तया । २० सविदद्वैतमेकेन स्वभावेनानेकेन वा ग्राह्यग्राहकाकारं स्वीकरोतीति । २१ ( इतो जैन प्राह, ग्राह्यग्राहकाकारतयापि प्रत्यक्षत्वे ) । २२ निर्विशेषत्वेन यथा ब्रह्माद्वैतं न प्रतिभासते । २३ ग्राह्यग्राहकाकारविविक्ततया संवेदनस्य प्रत्यक्षता न संभवति यत । २४ ग्राह्यग्राहकाकारविविक्ततयापि प्रत्यक्षमेवाकारं विभृयाद्यदि । २५ एवं प्रत्यक्षपरोक्षाकारौ विभ्राणं सदनेक ज्ञानं सामर्थ्यप्राप्तमपि यदि नेष्यते तदा शून्यवादप्रसङ्ग । स च संविन्मात्राभ्युपगमेन विरुध्यते । २६ संवेदनस्यासत्त्वं शून्यं, सवेदनस्यानुभव संवित् । तयोः परस्पर विरोधात् । ( संविद्रूपं मन्यते सौगतैः शून्यवादश्चोपपाद्यते इति परस्परविरोध ) । २७ संवेदनमेव नास्ति कथं संवेदनानुभव इति विरोध । २८ (परस्परविरोधमेव दर्शयति) । २९ अभ्युपगच्छत । उपवर्णयत इति पाठान्तरम् । ३० (संवेदनमात्रम्) । ३१ स्वाभिमतं संविन्मात्रमुपयतस्तु तत्सविन्मात्रं संविदुपपद्यते सिध्यति । परन्तु तत्संविन्मात्रमपि यदि न स्वीकुर्यात् किन्तु असदित्युपवर्णयेत्तदा तस्य सविन्न सिध्येत्, यत परस्परं संविदसतोर्विप्रतिषेध । तत एव च स्वेष्टासिद्धिर्बौद्धस्य । ३२ असदित्युपवर्णनं बलादायातं यतो ग्राह्यग्राहकाकारं नास्ति । ३३ ग्राह्यग्राहकाकारविविक्ततयापि प्रत्यक्षस्य संवेदनमात्रस्यानुभव स्वेष्ट ( तस्यासिद्धिर्यतो विप्रतिषेध परस्परम् ) । ३४ सर्वथा शून्यवादे सविदद्वैते वा प्रत्यक्षपरोक्षाकारो वैश्वरूप्यसद्भावश्च प्रकृतपर्यनुयोगस्यानिवृत्तिहेतु समर्थितो यत । ३५ आवृणोति । ३६ अन्यथा । ३७ सौगतानाम् । ३८ क्षणभङ्गस्वभावभङ्गानुपङ्गादित्यर्थ. । ३९ ततश्च नित्यत्व स्यात् । ४० कार्यकालमप्राप्नुवत. कारणस्य कार्यकृतौ ।

भिः कुशलाद्यसंभूतिरेकान्तग्रहरक्तेष्विति *, [1]परस्परनिरपेक्षसदसदुभयै[2]कान्तनित्यानित्योभयैकान्तवादिनोपि तदसंभवादद्वैतैकान्तादिवादिवत्[3] । तदेवं सर्वथैकान्तवादिनां दृष्टेष्टविरुद्धभाषित्वादज्ञानादिदोषाश्रयत्वसिद्धेराप्तत्वानुपपत्तेस्त्वमेव भगवन्नर्हन् सर्वज्ञो वीतरागश्च युक्तिशास्त्राविरोधिवाक्त्वेन निर्दोषतया निश्चितो महामुनिभिस्तत्त्वार्थशासनारम्भेऽभिष्टुतः, तत्सिद्धिनिबन्धनत्वादिति तत्त्वार्थश्लोकवार्तिकालङ्कारे व्यासतः समर्थितं प्रतिपत्तव्यम् । ननु च भाव एव पदार्थानामिति निश्चये दृष्टेष्टविरोधाभावात्तद्वादिनो निर्दोषत्वसिद्धेराप्तत्वोपपत्तेः स्तुत्यताऽस्त्विति भगवत्पर्य[4]नुयोगे सतीवाहुः—

**भावैकान्ते पदार्थानामभावाना[5]मपन्हवात् । [6]सर्वात्मकमनाद्यन्तमस्वरूपमतावकम्[7] ॥९॥**

पदार्थाः, प्रकृत्यादीनि पञ्चविंशतितत्त्वानि "मूलप्रकृति[8]रविकृति[9]र्महदाद्याः[10] प्रकृतिविकृतयः[11] सप्त । षोडशक[12]श्च विकारो न प्रकृतिर्न विकृतिः पुरुषः" इति वचनात् । तेषामस्तित्वमेवेति निश्चयो भावैकान्तः । तस्मिन्नभ्युपगम्यमाने सर्वेषामितरेतराभावादीनामभावानामपन्हवः स्यात् । ततः सर्वात्म[13]कत्वादिप्रसङ्गः । तत्र व्यक्ताव्यक्त[14]योस्तावदितरेतराभावस्यापह्नवे व्यक्तस्याव्यक्तात्मकत्वे सर्वात्मकत्वम् । तथा च "हेतुमदनित्यमव्यापि सक्रियमनेक[15]माश्रितं लिङ्गम्[16] । सावयवं परतन्त्रं[17] व्यक्तं[18] विपरीत[19]मव्यक्तम्" इति व्यक्ताव्यक्तलक्षणभेदकथनविरोधः[20] । प्रकृतिपुरुषयोरत्यन्ताभावनिह्नवे प्रकृतेः पुरुषात्मकत्वे सर्वात्मकत्वमेव । तथा च "त्रिगुण[21]मविवेकि[22] विषयः[23] सामान्यमचेतनं प्रसवधर्मि[24] । व्यक्तं तथा प्रधानं तद्विपरीत[25]स्तथा[26] च पुमान्"इति तल्लक्षण[27]भेदकथनव्याघातः । प्रागभावस्यापह्नवे महदहङ्कारादेर्विकारस्यानादित्वप्रसङ्गः । तथा च "प्रकृते[28]र्महांस्ततोहङ्कारस्तस्माद्गणश्च षोडशकः । तस्मादपि षोडशकात् पञ्चभ्यः[29] पञ्च भूतानि"इति सृष्टिक्रमकथन विप्रतिषिध्यते[30] । प्रध्वंसाभावस्यापन्हवे तस्यानन्तत्वप्रसङ्गात्, पृथिव्यादीनि पञ्च महाभूतानि पञ्चसु तन्मात्रेषु लीयन्ते—पृथिव्या गन्धरूपरसस्पर्शशब्दतन्मात्रेषु प्रवेशात्, सलिलस्य रसादिषु, तेजसो रूपादिषु, वायोः स्पर्शशब्दतन्मात्रयोः, आकाशस्य शब्दतन्मात्रेनुप्रवेशात्, तन्मात्राणां च पञ्चानां बुद्धीन्द्रियाणां कर्मेन्द्रियाणां च मनसा सह षोडशकस्य गणस्याहङ्कारेऽन्तर्भावस्तस्य च महति महतः प्रकृताविति संहारनिवेदनमतिव्याकुलं स्यात् । ततः सर्वमस्वरूपं, स्वेनासाधारणेन रूपेण कस्यचित्तत्त्वस्य व्यवस्थानाघटनात्[31] । तच्च[32] "सर्वस्योभयरूपत्वे तद्विशेष[33]निराकृतेः[34] । चोदितो दधि

---

१ अनुष्ठानमित्यादिभाष्योक्ताऽऽदिशब्दगृहीतस्य परस्परनिरपेक्षसदसदाद्येकान्तवादिनोपि कुशलाद्यसंभूतिं प्रकटयति । २ उभयैकान्तं यौगमते । ३ यथाऽद्वैतादिवादिषु कुशलाद्यसंभव । ४ प्रश्नोनुयोगः पृच्छा चेत्यमरः । ५ प्रागभाव., प्रध्वसाभाव, इतरेतराभावोत्यन्ताभावश्चेति चत्वारोऽभावा । ६ सर्वेषा पदार्थाना सर्वात्मकत्वमनादित्वमनन्तत्वमस्वरूपत्वं (अस्वभावत्वं) चेति चत्वारो दोषा. क्रमेण प्रत्येकाभावापह्नवे । ७ तावकीनभिन्नमतावकम् । परमतमित्यर्थं । ८ मूलप्रकृतिः प्रधानम् । ९ अकार्यम् । १० महानहङ्कारश्च पञ्च तन्मात्राणि (गन्धरसरूपस्पर्शशब्दा ) चेति सप्त । ११ कारणकार्यरूपा.। १२ पञ्च बुद्धीन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, पञ्च महाभूतानि मनश्चेति षोडशको विकार· कार्यरूप एव । १३ आदिपदेन अनादित्वानन्तत्वास्वभावकत्वानि दूषणानि ग्राह्याणि । १४ महदादि घटादि च कार्यं व्यक्तम् । प्रधानमव्यक्तम् । १५ प्रधानाश्रितम् । १६ प्रकृत्यनुमापकम् । १७ प्रधानाधीनम् । १८ एवंभूतं व्यक्तम् । १९ प्रधानम् । २० सर्वस्य सर्वात्मकत्वात् । २१ सत्त्वरजस्तमोगुणयुक्तम् । २२ भेदरहितम् । २३ आत्मनो भोग्यरूपम् । २४ प्रसूते इति प्रसूतिर्वा प्रसव. । प्रधानं कारणं प्रसवधर्मीति महदादिकार्योत्पादकम् । व्यक्तं प्रसवधर्मीति कार्यरूपम् । अथवा कारणरूपं कथम्? महतोहङ्कारस्तत पञ्च तन्मात्राणि, पञ्च तन्मात्रेभ्य· पञ्च भूतान्युत्पद्यन्ते इति कारणत्वं तस्य । २५ व्यक्तप्रधानाभ्या विपरीतः । २६ व्यक्ताव्यक्तयोरेवलक्षणत्वे सति । २७ व्यक्ताव्यक्तपुरुषाणाम् । २८ आसर्गप्रलयस्थायिनी बुद्धिर्महान् । २९ पञ्चतन्मात्रेभ्य । ३० विरुध्यते । ३१ वस्तुस्वरूपनियामकाना चतुर्णामभावानामभावात् । ३२ अभावापह्नववादिना मतम् । ३३ (अतावकं मतं दूषणास्पदमित्यस्य हेतुरयम् )। ३४ सर्वस्य तत्त्वस्य व्यक्ताव्यक्तोभय,सदसदुभय, द्रव्यपर्यायोभय,—भावाभावोभयादिरूपत्वे तयोर्विशेषस्यान्यतरस्य निराकरणात् । किन्त्वेकरूपत्वे यथा दधि स्वरूपेण सत्तथा पररूपेणापि सत् । (तथा च दधि खाद इति चोदित. प्रेरित· पुमान् उष्ट्रं प्रति भक्षितुं किं न धावति—दध्युष्ट्रयोरेकरूपत्वादिति भाव )।

खादेति किमुष्ट्र नाभिधावति ” इति दूषणास्पदमतावकं मतं, न तव भगवतोऽर्हतः, कथञ्चिदभावापह्न-वाभावात्[1] । ननु च व्यक्ताव्यक्तयोरितरेतराभावस्य तत्स्वभावस्य[2] प्रकृतिपुरुषयोरत्यन्ताभावस्य च तद्रूपस्य महदहङ्कारादीनां प्रागभावस्य च स्वकारणस्वभावस्य[3] महाभूतादीनां प्रध्वंसाभावस्य च स्वान्तर्भावाश्रयस्व-[4]रूपस्य सांख्यैरभ्युपगमादभावापह्नवासिद्धेः कथं सर्वात्मकत्वादिदोष इति चेन्न, तथा[5] भावैकान्तविरोधात्, सर्वस्य भावाभावात्मकत्वप्रसक्तेः । न हि वयम[6]पि भावादर्थान्तरमेवाभावं संगिरामहे, तस्य[7] नीरूपत्वप्रस-ङ्गात्, नास्तीतिप्रत्ययजनकत्वरूपसद्भावादभावस्य नीरूपत्वाभावोपगमे तस्य भावस्वभावत्वसिद्धेः प्रत्य-[8]याभिधानविषयस्यार्थक्रियाकारिणः पदार्थस्य[9] भावस्वभावत्वप्रतिज्ञानात्, नास्तित्वस्य वस्तुधर्मत्वादस्तित्वव-त् । वस्तुनोस्तीतिप्रत्ययविषयो हि[10] पर्यायो[11]स्तित्वं, नास्तीतिप्रत्ययविषयस्तु नास्तित्वम् । **निष्पर्यायद्रव्यै-कान्तपक्षे सर्वात्मकत्वादिदोषानुषङ्गः** * कथं परिहर्तुं शक्यः ? [12] सर्व[13]विवर्तात्मकस्यैकस्यानाद्यनन्तस्य प्रधानस्येष्टत्वात् तद्व्यतिरेकेण[13] सकलविशेषाणां[14] तत्त्वतोऽसंभवात्सिद्ध[15]साधनमिति चेन्न[16], प्रकृतिपुरुषयोरपि विशेषाभावानुषङ्गात्, सत्ताव्यतिरेकेण तयोरप्रतिभासनात्सत्ताद्वैतप्रसङ्गात्[17] । तदेवास्तु[18], चेतनेतर[19]विशेषा-णामविद्योपकल्पितत्वादिति चेत् कुतः[20] **पुनर्विशेषानपन्हुवीत**[21]* ? न तावत्प्रत्यक्षात्, तस्य विधायक-[22]त्वनियमात्, विशेषप्रतिषेधे प्रवृत्त्ययोगात् । नाप्यनुमानादागमाद्वा, तस्यापि प्रतिषेधकत्वानिष्टेः[23], अन्यथा प्रत्यक्षस्यापि प्रतिषेधकत्वप्रसङ्गात्[24] । स्वयं न कुतश्चित्प्रमाणादयं[25] विशेषानपन्हुते । किं तर्हि ? तत्साधन-[26]**व्यभिचारात्** । वस्तु[27]विशेषसाधनवादिना[28] हि न कारणभेदस्तत्साधनं प्रयोक्तव्यं, तस्याभेदवादिनं प्रत्य-सिद्धत्वात् । नापि विरुद्धधर्माध्यासः[29], तत एव । किं तर्हि ? [30]**संविन्निर्भासभेदाद्भाव[31]स्वभावभेदः प्रक-ल्प्येत । स[32] पुनरभेदेप्यात्मनः खण्डशः प्रतिभासनात्** * व्यभिचारी[33] । ननु[34] ज्ञानात्मनः[35] खण्डशः प्रतिभासनस्य विभ्रान्तत्वात्तत्त्वतस्तस्यैकत्वान्न तेन व्यभिचारः । तदुक्तम् “ अविभागो[36]पि बुद्ध्यात्मा विपर्यासितदर्शनैः[37] । ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते” इति चेत्[38], **तदन्यत्रापि[39] विभ्रमाभावे कोश-पानं[40] विधेयम्** * । शक्यं हि वक्तुं[41], सविन्निर्भासभेदः कुतश्चित्[42]प्रतिपत्तुर्विभ्रम एव, तत्त्वतः संविन्मा-त्रस्याद्वयस्य व्यवस्थितेः । “यथा विशुद्धमाकाशं तिमिरोपप्लुतो नरः । सङ्कीर्णमिव मात्राभिर्[43]भिन्नाभिरभिम-न्यते । १ । तथेदममलं[44] ब्रह्म निर्विकल्पम[45]विद्यया । कलुषत्वमिवापन्नं भेदरूपं प्रपश्यति । २ । ” इति

---

१ अभावस्यापि वस्तुधर्मत्वेन स्याद्वादिभिः स्वीकारात् । २ व्यक्ताव्यक्तस्वभावस्य । ३ महदहङ्कारकारणस्वभावस्य । ४ ( स्वस्य महाभूतस्यान्तर्भावः स्वान्तर्भावः । तस्याश्रयः ) यत्र महाभूतानि लीयन्ते स महाभूतकारणद्रव्यमित्यर्थः । ( स स्वरूपं यस्य स, तस्य प्रध्वंसाभावस्य ) । ५ तथा सति । ६ जैनाः । ७ अन्यथा अभावस्य निस्स्वभावत्वप्रसङ्गात् । ८ नास्तीति प्रतीत्यभिधानयोर्जनकस्येत्यर्थो वा । ९ अभावादिपदार्थस्य । १० धर्मे । ११ (पर्यायो विवर्त्तः) । १२ साङ्ख्य । १३ प्रधानव्यतिरेकेण । १४ महदादीनाम् । १५ सिद्धस्यैव सर्वात्मकत्वादिदोषस्य साधनम् । १६ जैन । १७ साङ्ख्यस्य ब्रह्माद्वैतवादप्रसङ्गात् । १८ सत्ताद्वैतमेवास्त्विति ब्रह्माद्वैतवादी प्रत्यवतिष्ठते । १९ चेतनादितरे येऽचेतनविशेषास्तेषाम् । २० ( जैन आह ) कुतः प्रमाणात् । २१ ब्रह्माद्वैती । २२ आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः । नैकत्वे आगमस्तेन प्रत्यक्षेण प्रबाध्यते । २३ किन्तु विधायकत्वनियमात् । २४ प्रत्यक्षमूलत्वादनुमानागमयोः । २५ ब्रह्माद्वैती । २६ तत्साधनं, विशेषसाधनम् । २७ ( तत्साधनव्यभिचारमेव दर्शयति ब्रह्माद्वैती । तत्र कारणभेदस्तत्साधनं विरुद्धधर्माध्यासो वेति विकल्प्य क्रमेण दूषयति ) । २८ सौगतेन । २९ भेदसाधनम् । ३० ब्रह्माद्वैते एकमखण्डं ज्ञानं सौगतमते तु ज्ञानभेदोऽस्तीत्यनयोर्भेदं मनसि निधाय ब्रह्माद्वैती ब्रूते ज्ञानप्रतिभासेत्यादि । चेतनेतरभेदवेदिज्ञानाकारः संविन्निर्भासः । ३१ भावो, वस्तु । ३२ संविन्निर्भासभेदः । ३३ इति चित्राद्वैतवादिनं प्रत्यवादीद्ब्रह्मवादी । ३४ चित्राद्वैतवादी प्राह । ३५ ज्ञानस्वरूपस्य । ३६ एकः । ३७ मिथ्यादर्शनैः पुरुषैः । ३८ इतो ब्रह्मवादी । ३९ चित्रज्ञानस्वरूपादन्यत्र ब्रह्माद्वैते । ४० दिव्यपानम् । ४१ सौगतेन । ४२ अविद्यारूपकारणात् । ४३ रेखाभिः । ४४ उत्पादादिरहितम् । ४५ घटपटादिभेदस्वरूपरहितम् ।

वचनात् । तथा चासिद्धं विशेष[1]साधनं न साध्यसाधनायालम् । तदेकं[2] चक्षुरादिज्ञानप्रतिभासभेदव-शाद्रूपादिव्यपदेशभाग् ग्राह्यग्राहकसंवित्तिवत्[3] * । चक्षुरादि[4]ज्ञानप्रतिभासभेदोप्यसिद्ध एवाभेद[5]वादि-न इति चेद्ग्राह्यग्राहकसंवित्तिप्रतिभासभेदोपि भेदवादिनः[6] किमेकत्र ज्ञानात्मनि सिद्धः[7] ? संवृत्त्या सिद्ध इति चेत्समः समाधिः[8] । योपीतरे[9]तराभावप्रत्ययाद्भावस्वभावभेदं साधयेत्तस्य इतरेतराभावविकल्पोपि[10] कथमयथार्थो[11] न स्याद्वर्णादिविकल्पवत्[12] * । वर्णादि[13]प्रत्ययो भावस्वभावभेदं स्वसाध्यमर्थमन्तरेणैव भा-वाद्व्यभिचारित्वादयथार्थो, न पुनरितरेतराभावप्रत्यय इत्यशक्य[14]व्यवस्थं, तस्य[15] भावाभाव[16]योरभेदेपीतरेतरा[17]-भावप्रत्ययेन व्यभिचारात् । न[18] हि वस्तुव्यतिरिक्तमसन्नाम, प्रमाणस्यार्थविषयत्वात् * । प्रत्यक्षम[19]-भावविषयं भवत्येव[20], तस्येन्द्रियैः[21] संयुक्त[22]विशेषणसंबन्धसद्भावाद्, घटाभावविशिष्टं भूतलं गृह्णामीति प्रत्य-यादिति चेन्न, तस्य भूतलादिभावविषयत्वात् । अभावदृष्टौ[23] हि तदवसानकारणाभावाद्भावदर्शनमन-वसरं प्राप्नोति*, क्रमतोनन्तपररूपाभावप्रतिपत्तावेवोपक्षीणशक्तिकत्वप्रसङ्गात् । प्रत्यक्षस्य[24] क्वचित्[25]प्रतिपत्त्रा स्मर्यमाणस्य घटस्याभावप्रतिपत्तौ तदपर[26]रूपस्यानन्तस्यास्मर्यमाणत्वं भावदर्शनावसरकारणमिति चेन्न, प्रत्य-क्षस्य[27] स्मरणानपेक्षत्वात्, तस्य स्मृत्यपेक्षायामपूर्वार्थसाक्षात्कारित्वविरोधात् । भावप्रत्यक्षं[28] किञ्चित्तु स्मरण-निरपेक्षं योगिप्रत्यक्षवत् । किञ्चित्तु[29] स्मरणापेक्षं सुखादि[30]साधनार्थव्यवसायवत् । क्वचिदभावप्रत्यक्षं स्मरणनिर-पेक्ष, योगिनोऽभावप्रत्यक्षं यथा । क्वचिद[31]भावप्रत्यक्षं पुनः प्रतिषेध्यस्मरणापेक्षमेव, तथा प्रतीतेः । इति चेन्न[32], स्मरणापेक्षस्य विकल्पज्ञानस्य प्रत्यक्षत्वविरोधादनुमानादिवत् । प्रत्यक्षस्य सकलकल्पना[33]विषयत्वा-त्स्मृत्यपेक्षायामनवस्थाप्रसङ्गात्, स्मृतेः[34] पूर्वानुभवापेक्षत्वात्पूर्वानुभव[35]स्याप्यपरस्मृत्यपेक्षत्वात्, सुदूरमपि गत्वा कस्यचि[36]दनुभवस्य स्मृतिनिरपेक्षत्वे प्रकृतानुभव[37]स्यापि स्मृतिसापेक्षत्वकल्पनावैयर्थ्यात् । न[38] च स्मृतिः पूर्वानुभूतार्थविषया कथञ्चिदप्यपूर्वार्थे[39] ज्ञानमुपजनयितुमलं, तस्या[40]स्तत्[41]प्रत्यभिज्ञान[42]मात्रजननसामर्थ्य-प्रतीतेर्दृष्टे सजातीयार्थेपि स्मृतेः सादृश्य[43]प्रत्यभिज्ञानजनकत्वसिद्धेः । पूर्वानुभूते घटे स्मृतिस्ततो विजाती-येर्थान्तरे[44] तदभावे[45] विज्ञान[46]मुपजनयतीति शिलाप्लवं क श्रद्दधीतान्यत्र जडात्मनः[47] । ततः[48] स्मृतिनिरपेक्षमेव सर्वं प्रत्यक्षम् । तच्च यद्यभावविषयं स्यात्तदा भावदर्शनमनवसरमेव, तत्कारणाभावात् । प्रतिपत्तुर्भावदिदृ-

---

१ सविन्निर्भासभेदादिति । २ ब्रह्म । ३ प्रतिभासभेदवशादेकं चित्रज्ञानं ग्राह्यादिव्यपदेशभाग् यथा तथा ब्रह्म नाना-व्यपदेशभाक् । ४ आह सौगतः । ५ ब्रह्मवादिन । ६ सौगतस्य । ७ अपि तु नैव सिद्ध. । ८ सौगतब्रह्मवादिनोरुभयोरेव सवृत्त्या भेदस्याङ्गीकाराविशेषात् । ९ ब्रह्मवादी यौगाशङ्का निराकुर्वन्नाह योपीति ( यौग. ) । १० विकल्पो ज्ञानम् । ११ असिद्धः । १२ यथा वर्णादिज्ञानम् । १३ यौग प्राह । १४ ब्रह्मवादी प्राह, इति यौगस्य कथनमशक्यव्यवस्थमिति । १५ इतरेतराभावस्य । १६ शुद्धभूतलत्वं भावो, घटनास्तित्वमभाव , तयो । १७ भावाभावयोरभेदेपीतरेतराभावप्रत्यय उत्पद्यते । तेन व्यभिचार । १८ भावाभावयोरभेदं साधयति ब्रह्मवादी । १९ आह यौग । २० सन्मात्रविषयत्वात्प्रत्य-क्षस्येति हेत्वन्तरम् । २१ अभावस्य । २२ इन्द्रियै सयुक्ते भूतले, भूतले घटाभावोस्तीति विशेषणसंबन्धसद्भावात् । २३ ब्रह्माद्वैती ब्रूते, अभावदृष्टौ प्रत्यक्षेणाङ्गीक्रियमाणायाम् । २४ आह यौग । २५ देशे । २६ तस्मात्, घटादिभूतलादेः । २७ प्रत्यक्षमात्रस्येत्यर्थ. । २८ यौग प्राह, पदार्थप्रत्यक्ष द्विधा । अभावप्रत्यक्षमपि द्विधा । २९ भावप्रत्यक्षम् । ३० सुखा-दिसाधनं वस्तु दृष्ट्वा पूर्वानुभूतसुखसाधनत्व स्मृत्वा इदं वनितादिकं सुखसाधनमिति प्रत्यय प्रत्यक्षज्ञानं यथा भवति । ३१ भूतलादौ । ३२ ब्रह्माद्वैती । ३३ इदं भवति, इदं न भवतीति । ३४ अनवस्थामेव दर्शयति । ३५ यौगमतापेक्षया पूर्वानुभव प्रत्यक्षरूपोस्ति यत । ३६ अन्त्यस्य । ३७ घटाद्यभावग्राहकस्य । ३८ यौगः । ३९ अभावे । ४० इति चेन्नेत्यध्या-हार्यमत्र । ४१ तत्, तस्मिन्नपूर्वार्थे । ४२ न तु प्रत्यक्षजनकत्वसिद्धिस्तत । ४३ पूर्वव्यक्त्यनुभवसमये तद्गतं सादृश्यमप्यनु-भूयते एव । तत एव पूर्वार्थत्वमिति भाव । ४४ घटरहिते भूतले । ४५ विजातीयेर्थान्तरे । ४६ ( घटाभावप्रत्यक्षम् ) । ४७ यौगात् । ४८ प्रत्यक्षस्य स्मृतिसापेक्षत्वेऽपूर्वार्थसाक्षात्कारित्वं विरुद्ध यत ।

क्षा भावदर्शनकारणमित्यपि न सम्यक्, पुरुषेच्छानपेक्षत्वात्प्रत्यक्षस्य, सत्यामपि घटदिदृक्षायां तद्विकले प्रदेशे दर्शनाभावादसत्यामपि सति घटे दर्शनसद्भावात् । इति न प्रत्यक्षमभावं प्रत्येति, तस्य सन्मात्रविषयत्वात्तत्रैव प्रमाणत्वोपपत्तेरव्यभिचारात् । **सकलशक्तिविरहलक्षणस्य निरुपाख्यस्य स्वभावकार्यादेरभावात्कुतस्तत्प्रमितिः** * स्यादानुमानिकी ? न हि निरुपाख्यस्य स्वभावः कश्चित्सम्भवति, भावस्वभावत्वप्रसङ्गात् । नापि कार्यं, तत एव । इति कुतः स्वभावात्कार्याद्वा हेतोस्तत्प्रमितिः ? अनुपलब्धिः पुनस्तस्यासिद्धिमेवं व्यवस्थापयेदिति ततोपि न तत्प्रमितिः । भावानामनुपलब्धेस्तत्प्रमितिरित्यपि न सम्यक्, ततो भावान्तरस्वभावस्यैवाभावस्यावभासनात् । एतेन विरोधिलिङ्गान्निरुपाख्यस्याभावस्य प्रमितिरपास्ता । सदुपलम्भकप्रमाणपञ्चकनिवृत्तेस्तत्प्रमितिरित्यपि मिथ्या, तस्या अपि निरुपाख्यत्वे क्वचित्प्रमितिजननासम्भवात्, आत्मनः सदुपलम्भकप्रमाणपञ्चकरूपत्वेनापरिणामस्य प्रसज्यप्रतिषेधरूपस्य प्रमाणत्वविरोधात् । यदि पुनरन्यवस्तुविज्ञानरूपा तन्निवृत्तिस्तदा न ततो निरुपाख्यस्य प्रमितिः, वस्त्वन्तररूपस्यैवाभावस्य सिद्धेः । न च प्रकारान्तरमस्ति किञ्चित् । इति कुतस्तत्प्रमितिः ?

मा भून्निरुपाख्यस्याभावस्य प्रत्यक्षतोऽन्यतो वा प्रमाणात्प्रतिपत्तिस्तथापि न सत्ताद्वैतस्य सिद्धिः,वस्तुनानात्वस्यैव ततः परिच्छित्तेरित्यपरस्तस्यापि **वस्तुनो नानात्वं बुद्ध्यादिकार्यनानात्वात्प्रतीयेत** *,नान्यथा,अतिप्रसङ्गात् । तदपि व्यभिचार्येव, विपक्षेपि भावात्। तथा हि **स्वभावाभेदेपि विविधकर्मता दृष्टा युगपदेकार्थोपनिबद्धदृष्टिविषयक्षणवत्** *। न ह्येकत्र नर्तक्यादिक्षणे युगपदुपनिबद्धदृष्टीनां प्रेक्षकजनानां विविधं कर्म बुद्धिव्यपदेशसुखादिकार्यमसिद्धं, येन तस्य स्वभावाभेदेपि विविधकर्मता न भवेत्। शक्तिनानात्वं प्रसवविशेषात् । **स चेद्व्यभिचारी, कुतस्तद्गतिः** *? तस्यापि शक्तिनानात्वोपगमान्न बुद्ध्यादिः प्रसवविशेषो व्यभिचारीति चेन्न, अनवस्थाप्रसङ्गात्, नर्तक्यादिक्षणैकशक्तावपि बुद्ध्यादिकार्यनानात्वाच्छक्तिनानात्वप्रसङ्गात् तथा तच्छक्तावपि । इति सुदूरमपि गत्वा बुद्ध्यादिप्रसवविशेषसद्भावेपि शक्तिनानात्वाभावे कथं नासौ

---

१ मास्तु प्रत्यक्षादभावप्रतिपत्ति' । अनुमानात्तु संभवतीत्युक्ते आह । २ नि·स्वभावस्याभावस्य । ३ स्वभावलिङ्गस्य कार्यरूपलिङ्गस्य च । ४ लिङ्गरूपम् । ५ भावस्वभावत्वप्रसङ्गात् । ६ अभावप्रमितिर्लिङ्गजा । ७ अभावज्ञानेनुपलब्धिर्हेतु । ८ अभावस्य । ९ तुच्छाभावो नास्तीति । १० भावत्वे सत्यनुपलब्धेरिति हेतो· । ११ भूतललक्षणादे । १२ अभावप्रमितिजनकस्याभावप्रमाणस्य लक्षणं सामान्यतो विशेषतश्च, 'प्रत्यक्षादेरनुत्पत्ति प्रमाणाभाव उच्यते । सात्मनोऽपरिणामो वा विज्ञान वान्यवस्तुनि'इति यदुक्तं भट्टेन तत्सर्वं क्रमेण दूषयन्नाह द्वैती । १३ अभावविरोधी भावो यत । १४ अस्त्यत्र घटाभाव शुद्धभूतलोपलम्भादिति । नास्त्यत्र शीतस्पर्श·, अग्नेरिति च । १५ नि स्वभावत्वे । १६ अभावे । १७ पुरुषस्य । १८ अभावस्य । १९ द्वौ नञौ तु समाख्यातौ पर्युदासप्रसज्यकौ । पर्युदास सदृग्ग्राही प्रसज्यस्तु निषेधकृत् । १ । यथा अब्राह्मणमानयेत्यस्य ब्राह्मणसदृशमानयेत्यर्थ. पर्युदासे। प्रसज्ये तु सर्वथा निषेध एव भवति। २० आत्मनोऽपरिणाम केन प्रमाणेन गृह्यते ? न केनापि । लोके परिणाम एव दृश्यते, यथा मृत्पिण्डस्याभावो घटोत्पाद , तथा परिणमनस्वभावत्वात् । २१ यथा घटादन्यद्भूतलम् । २२ घटनिवृत्ति । २३ भूतललक्षणान्यवस्तुविज्ञानात् । २४ जैनादि । २५ बुद्ध्यादयश्च ता कार्यरूपास्तेषाम् । २६ बुद्ध्यादिकार्यनानात्वमन्तरेणापि वस्तुनानात्वसिद्धौ लोके एकमेव किञ्चिन्न स्यात् । २७ समर्थनम् । २८ एकत्वे । २९ नानाकार्यता । ३० युगपदेकार्थे नर्तक्यादावुपनिबद्धदृष्टीना पुरुषाणा सम्बन्धी विषयक्षण ( बौद्धं प्रति ) एक एव नानाकार्यकारी यथा । ३१ नर्तक्यादिक्षणस्य । ३२ ननु नर्तक्यादिक्षणस्य स्वभावाभेदोऽसिद्धः, शक्तिनानात्वस्य सद्भावात् । अत कार्यनानात्वसाधनं कथं व्यभिचारीत्युक्ते आह सत्ताद्वैती । ३३ नर्तक्याद्येकार्थे । ३४ प्रसव , कार्यम् । ३५ ( प्रसवविशेष ) । ३६ व्यभिचारित्वे प्रसवविशेषस्य कुतस्तस्य शक्तिनानात्वस्य गति सिद्धा ? । ३७ जैन ( नर्तकीक्षणस्य ) । ३८ नर्तक्यादिक्षणेन । ३९ सत्ताद्वैती । ४० नर्तक्यादिक्षणस्य नानाशक्तय सन्ति । तासां मध्ये एकशक्तौ । ४१ एकशक्तावागतनानाशक्तिषु मध्ये विवक्षितैकशक्तौ ताः शक्तय । तासु प्रत्येकमपीत्यर्थ । ४२ ( अनवस्थाप्रकारेण ) । ४३ प्रसवविशेष ।

व्यभिचारी स्यात्? इति कुतो वस्तुनानात्वगतिः? केवलम[1]विद्या स्वभावदेशकालावस्थाभेदानाऽऽत्मनि परत्र वा[2]ऽसतः स्वयमसती[3] मिथ्याव्यवहारपदवीमुपन[4]यति यतः क्षणभङ्गिनो भिन्नसंततयः स्कन्धा[5] विकल्पै[6]रन्यथा[7] वा इति * सत्ताद्वैतवादी विशेषानपन्हुवीत तद्रूपादिस्कन्धा[8]नां द्रव्यादिपदार्था[9]नां वा निरुपाख्याभावानामिवं[10],परमार्थतः क्षणिकत्वाक्षणिकत्वत[11]दुभयानुभय[12]रूपत्वा[13]दिविशेषसाधनेपि साधनव्यभिचारात्, सोपि[14] प्रति[15]भासकार्याद्यभेदेपि कस्य[16]चिदेकत्वं साधयतीति साध्यसाधनयोरभेदे किं केन कृतं[17] स्यात्? पक्षविपक्षादे[18]रभावात् * । कस्यचिद्धि सन्मात्रदेहस्य परब्रह्मणस्तद्वा[19]दी एकत्वं प्रतिभासनात्तत्कार्यात्तत्स्वभावाद्वा साधये[20]दन्यतो[21] वा? तच्च साधनं साध्यादभिन्नमेव, अन्यथा द्वैतप्रसङ्गात्। साध्यसाधनयोरभेदे च[22] किमेकत्वं केन प्रतिभासकार्यादिना निर्णीतं स्या[23]त्, पक्षस्य विपक्षस्य सपक्षस्य चाभावात्। साध्यधर्माधारतया हि प्रसिद्धो धर्मी पक्षः। स च सर्वेषामर्थानां धर्मिणाम[24]प्रसिद्धौ ततो[25]न्यत्वेन साध्यधर्मस्य चैकत्वस्यासंभवे कथ[26]प्रसिध्येन्नाम? विपक्ष[27]श्च तद्विरुद्धस्त[28]तोन्यो वा नाद्वैतवादिनोस्ति। तथा स[29]पक्षश्च साध्यधर्माविनाभूतसाधनप्रदर्शन[30]फलस्तस्य दूरोत्सारित एव। त[31]त्सिद्धौ वा भेदवादप्रसिद्धिः। पराभ्युपगमात्पक्षादिसिद्धेरदोष इति चेन्न, स्वपरविभागासिद्धौ पराभ्युपगमस्याप्यसिद्धेः। एतेन[32] यदुक्तं, सर्वेर्थाः प्रतिभासान्तःप्रविष्टाः प्रति[33]भाससमानाधिकरणतयाऽवभासमानत्वात् प्रतिभासस्वात्मवदिति ब्रह्माद्वैतस्य साधनं तदपि प्रत्याख्यातम्। आम्ना[34]यात्तत्सिद्धिरित्यप्यसभाव्यं, तस्यापि साध्या[35]दभेदे साधनत्वायोगात्। ततः साध्यसाधनयोरभेदे किं सत्ताद्वैतं केनानुमानेनागमेन प्रत्यक्षेण वा प्रमाणेन साधितं स्यात्, पक्षसपक्षविपक्षाणामाम्नायस्येन्द्रियादेश्चानुमानागमप्रत्यक्षज्ञानात्मकप्रमाणकार[36]णस्याभावान्नैवं त[37]त्कृतं स्यात्। न क्वचिदसाधना साध्यसिद्धिः, अतिप्रसङ्गात् *। साधनं हि प्रमाणं साध्यते निश्चीयतेऽनेनेति। तद्रहिता न साध्यस्य प्रमेयस्य सिद्धिः, शून्यतादिसिद्धिप्रसङ्गात्। स्वरूपस्य स्वतो गतिरिति तु संविदद्वैतवादिनोपि स[38]मानम्। किं बहुना, सर्वस्य स्वेष्टतत्त्वं प्रत्यक्षादिप्रमाणाभावेपि व्यवतिष्ठेत, स्वरूपस्य स्वतो गतेः। इत्यति[39]प्रसङ्ग एव, पुरुषाद्वैतवदनेकान्तवादस्यापि सिद्धेः,[40] संविदद्वैतवदनेकसवेदनस्यापि सिद्धेः। इति न सत्ताद्वैतं निष्प[41]र्यायं शक्यमभ्युपगन्तुम्। विचारयिष्यते चैतत् प्रपञ्चतोग्रे। तदलमतिप्रसङ्गेन।

---

१ वस्तुनानात्वाभावे देशकालावस्थाभेदाः कथं घटन्ते इत्याशङ्कायामाह। २ विद्यमानान् पदार्थान्। ३ अविद्या। ४ (वस)। ५ विज्ञानं वेदना सज्ञा सस्कारो रूपमेव चेति पञ्च स्कन्धा बौद्धाभिमताः। ६ (बौद्धाभिमताः)। ७ यौगाद्यभिमता अक्षणिका नित्या एकसंततयश्च (तेपि मिथ्यैवेत्यर्थ.)। ८ सौगतोक्तानाम्। ९ नैयायिकोक्तानाम्। १० यथा निरुपाख्याभावाना (नैयायिकाद्यभिमताना) विशेपसाधनव्यभिचार। ११ तदुभयं नैयायिकाभिमतम्। १२ तदनुभय, शून्यवाद्यभिमतम्। १३ ते च ते विशेषाश्च तेषा साधनेपि। १४ सत्ताद्वैतवादीत्यतः प्रभृत्याह जैन.। सोपि सत्ताद्वैतवादी। १५(सत्ताद्वैतवाद्युक्त परमतनिराकरणं स्वयमपि स्वीकृत्य जैनोधुना सत्ताद्वैतमत दूषयति)। प्रतिभासश्च तत्कार्यादि च तयोरभेदे। १६ ब्रह्मण॰। १७ साधितम्। १८ सत्ताद्वैतवादिमते। १९ ब्रह्मवादी। २० घटादयोऽभिन्ना॰, प्रतिभासकार्यत्वात्। २१ कारणभेदाभावादित्यादिहेतोर्वा। २२ सिद्धे सति। २३ अपि तु न स्यात्। २४ सत्ताद्वैते। २५ धर्मिभ्य। २६ पक्ष। २७ पक्षविरुद्ध.। विरुद्धधर्माध्यासाद्धेतो॰। २८ उक्तलक्षणात्पक्षात्। २९ अद्वैतवादिमते सपक्षोपि पक्षादन्यो न सिध्येदित्यर्थ। ३० भिन्नत्वसाधक.। ३१ भिन्नत्वसिद्धौ। ३२ पक्षसपक्षविपक्षाभावकथनेन। ३३ प्रतिभासो ब्रह्म। तत्समानमेकमधिकरणं येषा ते तेषा भावस्तया। ३४ वेदात्। ३५ ब्रह्मणः। ३६ (पक्षसपक्षविपक्षा अनुमानप्रमाणे कारणम्। आम्नायः आगमकारणम्। इन्द्रियादि तु प्रत्यक्षे कारणम्)। ३७ तत्, ब्रह्म। कृतं, साधितम्। अथवा तै. प्रमाणैः कृतं साधितं तत्कृतम्। ३८ संवित्स्वयमेव प्रकाशते इति मतम्। ३९ (व्यवतिष्ठेतेत्यादि. पूर्वोक्त एवातिप्रसङ्गः)। ४० (प्रमाणाभावस्योभयत्र समानत्वात्)। ४१ पर्यायो, भेद.।

ततो[1] भावा एव नानात्मादय इति भावैकान्तोऽभ्युपगम्यताम्[2] । तत्र[3] च सर्वात्मकत्वादिदोषानुषङ्गः परि-हर्तुमशक्यः ।

संप्रति घटादेः शब्दादेश्च प्रागभावप्रध्वंसाभावनिह्नववादिनं[4] प्रति दूषणमुपदर्शयन्तः कारिकामाहुः।—

**कार्यद्रव्यमनादि स्यात् प्रागभावस्य निह्नवे । प्रध्वंसस्य च धर्मस्य प्रच्यवे[5]ऽनन्ततां व्रजेत् ॥१०॥**

कार्यस्या[6]त्मलाभात्प्रागऽभवनं प्रागभावः। स च तस्य प्रागनन्तर[7]परिणाम एवेत्येके[8] तेषां त[9]त्पूर्वानादिपरिणा[10]मसन्ततौ कार्यसद्भावप्रसङ्गः[11] । तत्रे[12]तरेतराभाव[13]रूपस्य तदभावस्योपगमान्नायं[14] दोष इति चेत् तदनन्तरप-रिणामेपि तत[15] एव कार्यस्याभावसिद्धेः किमर्थः प्रागभावः परिकल्प्यते[16] ? कार्यस्य[17] प्रागभावाभावस्वभावत्व[18]-सिद्ध्यर्थमिति चेत् कथमेवं[19] कार्यात्पूर्वपर्यायेण[20] रहितेषु तत्पूर्वोत्तराखिलपरिणामेषु कार्यस्वभावत्वं न प्रस-ज्येत[21] ? प्रागभावाभावस्वभावत्वाविशेषेपि कश्चि[22]देवेष्टः पर्यायः कार्यं[23], न पुनरितरे परिणामा इत्यभिनिवे-शमात्रम्[24] । स्यादा[25]कूतं 'कार्यात्प्रागनन्तरपर्यायस्त[26]स्य प्रागभावः । तस्यैव[27] प्रध्वंसः कार्यं[28] घटादि । न पुनरितरेतराभावो, येन तत्पूर्वोत्तरसकलपर्यायाणां घटत्वं प्रसज्येत । न च तेषां[29] प्रागभावप्रध्वंसरूपता-स्ति, तदि[30]तरेतराभावरूपतोपगमात्' इति[31] तदेतदपि सुगतमतानुसरेणं[32] स्याद्वादवादिनामायातं, स्वमतविरो-धात् । प्रागभावो ह्यनादिरिति तन्मतम्[33] । तत्र[34] घटस्य पूर्वानन्तरपर्यायमात्रप्रागभावस्योपगमे विरुध्यते । द्रव्यार्था[35]देशादनादिः प्रागभावोभिमत इति चेत् किमिदानीं[36] मृदादिद्रव्यं प्रागभावः ? तथोपगमे कथं प्रागभावाभावस्वभावता घटस्य घटेत ? द्रव्यस्याभावासंभवात्[37] । अत[38] एव न जातुचिद् घटस्योत्पत्तिः स्यात् । यदि पुनः पूर्व[39]पर्यायाः सर्वेप्यनादिसन्ततयो घटस्य प्रागभावोऽनादिरिति मतं[40] तदापि प्रागनन्तरपर्याय-निवृत्ताविव तत्[41]पूर्वपर्यायनिवृत्तावपि घटस्योत्पत्तिप्रसङ्गः । तथा सति घटस्यानादित्वं पूर्वपर्यायनिवृत्तिस-न्ततेरप्यनादित्वात् । ननु च न प्रागनन्तरपर्यायः प्रागभावो घटस्य, नापि मृदादिद्रव्यमात्रं[42], न च तत्पूर्वसकलपर्यायसन्ततिः[43] । किं तर्हि ? द्रव्यपर्याया[44]त्मा प्रागभावः । स च स्याद[45]नादिः स्यात्[46]सादिरिति स्याद्वादिदर्शनं निराकुलमेवेति चेन्न, एवमप्युभयपक्षो[47]पक्षिप्तदोषानुषङ्गात् । द्रव्यरूपतया तावदनादित्वे

---

१ स्वमतोक्तदोषपरिजिहीर्षया साख्यैः सत्ताद्वैतेङ्गीकृते तस्याप्यशक्यव्यवस्थत्वमापादितं यत । २ (साख्यैः। न सत्ताद्वैतम्)। ३ भावैकान्ते। ४ विद्यानन्दिसूरिवर्याभिप्रायेण चार्वाकं प्रति, भट्टाकलङ्कदेवाभिप्रायेण तु सांख्यं मीमासकं च प्रति । ५ निह्नवे। ६ इतश्चार्वाकः प्रत्यवतिष्ठते । ७ प्राक्परिणाम इत्युक्तेत्यन्तव्यवहितपूर्वपरिणामस्यापि प्रागभावत्वं स्यादित्यनन्तरेत्युक्तम् । ८ जैना । ९ जैनानाम्। १० तस्मात् प्रागनन्तरपरिणामात्पूर्वा अनादिपरिणामास्तेषा सन्ततिस्तस्याम् । ११ प्रागनन्तरप-रिणामलक्षणस्य प्रागभावस्य तत्राभावात् । प्रसङ्गादिति पाठान्तरम् । १२ कार्योत्पत्तिशङ्कामनन्तरोक्तां निराकुर्वन्नाह जैनस्तत्रेत्यादि । तत्र अनादिपरिणामसन्ततौ । १३ ( अनादिपूर्वपरिणामसन्ततेः कार्यस्य च परस्परमितरेतराभावः । स एव तदभावो विवक्षितकार्याभावस्तस्य ) । १४ ( कार्यस्यानादित्वलक्षण )। १५ इतरेतराभावात् । १६ जैनैः । १७ घटलक्षणस्य। १८ प्रागभावो, मृत्पिण्डलक्षण । १९ चार्वाक । २० अनन्तरेण मृत्पिण्डलक्षणेन। २१ पूर्वोत्तरपर्यायाणां प्रागभावाभावत्वाविशेषात् । २२ पृथुबुध्नोदराकाररूप । २३ घटलक्षणम् । २४ जैनस्य । २५ जैनस्य । २६ कार्यस्य । २७ प्रागभावस्य । २८ कार्यम्। २९ तत्पूर्वोत्तरपर्यायाणाम् । ३० तेषां पूर्वोत्तरपर्यायाणाम् । ३१ इत्याकूतमिति सम्बन्ध । ३२ पूर्वक्षणविनाश एवोत्तरक्षणस्योत्पत्तिरिति सुगतमतम् । ३३ जैनमतम् । ३४ प्रागभावस्यानादित्वस्वीकारः। ३५ जैनः। ३६ चार्वाक । ३७ द्रव्यस्यानाद्यनन्तत्वात् । ३८ यत प्रागभावस्य नित्यत्वमायातम् । ३९ घटात् । ४० जैनस्य । ४१ तत्तस्मात् विवक्षितपर्यायेणाव्यवहितपूर्वपूर्वो यो (व्यवहित ) द्रव्यपर्यायस्तस्य निवृत्तौ। ४२ घटस्य प्रागभावः। ४३ घटस्य प्रागभावः। ४४ द्रव्यपर्यायौ आत्मा स्वरूप यस्यार्थस्य सः । कथञ्चिद्द्रव्यात्मा कथञ्चित्पर्यायात्मा । ४५ द्रव्यापेक्षया । ४६ पर्यायापेक्षया । ४७ द्रव्यपर्यायापेक्षयानादिसादीति पक्षद्वयम् ।

प्रागभावस्यानन्तत्वप्रसक्तेः[1] सर्वदा कार्यानुत्पत्तिः स्यात् । पर्यायरूपतया च सादित्वे प्रागभावा[2]त्पूर्व[3]मप्यु[4]त्पत्तिः पश्चादिव कथं निवार्येत ? न च गत्यन्तरमस्ति । 'ततो[5] न[6] भावस्वभावः प्रागभावः, तस्य भावविलक्षणत्वात्पदार्थविशेषण[7]त्वसिद्धेः ।' इत्यन्ये[8] तेपि न समीचीनवाचः, सर्वथा भावविलक्षणस्याभावस्य ग्राहकप्रमाणाभावात् । 'स्वोत्पत्तेः[9] प्राग्नासीद् घट इति प्रत्ययोऽसद्विषयः, सत्प्रत्ययविलक्षणत्वात् । यस्तु सद्विषयः, स न सत्प्रत्ययविलक्षणो, यथा सद्द्रव्यमित्यादिप्रत्ययः, सत्प्रत्ययविलक्षणश्चायं, तस्मादसद्विषयः' इत्यनुमानं प्रागभावस्य ग्राहकमिति चेन्न[10], प्रागभावादौ नास्ति प्रध्वंसाभावादिरिति प्रत्ययेन[11] व्यभिचारात्[12] । तस्याप्यसद्विषयत्वा[13]न्न दोष इति चेन्न, अभावानवस्था[14]प्रसङ्गात् । स्यान्मतं[15], भावे भूभागादौ नास्ति कुम्भादिरिति प्रत्ययो मुख्याभावविषयः प्रागभावादौ नास्ति प्रध्वंसादिरि[16]त्युपचरि[17]ताभावविषयः । ततो नाभावानवस्थेति, तदप्ययुक्तं, परमार्थतः प्रागभावादीनां साङ्कर्यप्रसङ्गात् । न ह्युपचरितेनाभावेन परस्परमभावानां[18] व्यतिरेकः सिध्येत्, सर्वत्र[19][20] मुख्या[21]भावपरिकल्पनानर्थक्यप्रसङ्गात्[22] । यदप्युक्तं[23], न भावस्वभावः प्रागभावादिः, सर्वदा भावविशेषण[24]त्वादिति, तदपि न सम्यगनुमानं, हेतोः पक्षाव्यापकत्वात्, न[25] प्रागभावः प्रध्वंसादावित्यादेरभावविशेषणस्याप्यभावस्य प्रसिद्धेः, गुणादिना व्यभिचाराच्च, तस्य सर्वदा भाव[26]विशेषणत्वेपि भावस्वभावत्वात् । रूपं पश्यामीत्यादिव्यवहारेण गुणस्य स्वतन्त्रस्यापि प्रतीतेर्न सर्वदा भावविशेषणत्व[27]मस्येति चेत्तर्ह्य[28]भावस्तत्त्वमित्यभावस्यापि स्वतन्त्रत्वप्रतीतेः शश्वद्भावविशेषणत्वं मा सिधत् । सामर्थ्या[29]त्तद्विशेष्यस्य द्रव्यादेः सम्प्रत्ययात्सदा भावविशेषणमेवाभाव इति चेत्त[30]थैव गुणादिः सन्ततं भावविशेषणमस्तु, तद्विशेष्य[31]स्य द्रव्यस्य सामर्थ्याद्गम्यमानत्वात् । किञ्च[32] प्रागभावः सादिः सान्तः परिकल्प्यते सादिरनन्तो वानादिरनन्तो वाऽनादिः सान्तो वा ? प्रथमे विकल्पे प्रागभावा[33]त्पूर्वं घटस्योपलब्धिप्रसङ्गः, तद्विरोधिनः[34] प्रागभावस्याभावात्[35] । द्वितीये प्रागभावकाले घटस्यानुपलब्धिप्रसक्तिः, तस्या[36]नन्तत्वात् । तृतीये तु सदानुपलब्धिः[37] । चतुर्थे पुनर्घटोत्पत्तौ प्रागभावस्याभावे घटोपलब्धिवदशेषकार्योपलब्धिः स्यात्, सर्वकार्याणामुत्पत्स्यमानानां प्रागभावस्यैकत्वात् । यावन्ति[38] कार्याणि तावन्तस्तत्प्रागभावाः । तत्रैकस्य प्रागभावस्य विनाशेपि शेषोत्पत्स्यमानकार्यप्रागभावानामविनाशान्न घटोपलब्धौ सर्वकार्योपलब्धिरिति चेत्तर्ह्य[39]नन्ताः प्रागभावास्ते स्वतन्त्रा[40] भावतन्त्रा वा ? स्वतन्त्राश्चेत्कथं न

---

१ विनाशरहितत्वप्रसक्ते । २ प्रागनन्तरपर्यायरूपात् । ३ अनन्तकार्यसन्ततौ । ४ घटस्य । ५ अभावस्य भावस्वभावत्वेङ्गीक्रियमाणेऽनेकदूषणप्रसङ्गो यत. । ६ प्रागभावो न भावस्वभावो भावविलक्षणत्वात् । व्यतिरेके बुद्ध्यादिवत् । ७ अभावस्य । ८ नैयायिका. । ९ भावविलक्षणस्याभावस्य ग्राहकप्रमाण दर्शयति यौगः । १० चार्वाक. । ११ प्रागभावादौ नास्ति प्रध्वंसादिरिति प्रत्ययस्य प्रध्वंसाभावाभावरूपतया सद्विषयत्वेपि सत्प्रत्ययविलक्षणत्वादित्ययं हेतुरत्र वर्तते यत । १२ सत्प्रत्ययविलक्षणत्वेपि प्रागभावादावसद्विषयत्वं नास्ति यतः । १३ अभावग्राहकत्वात् । १४ पञ्चमस्याभावस्याभावचतुष्टयाद्व्यावृत्ताऽभावान्तरपरिकल्पनानुषङ्गात् । प्रागभावादौ नास्ति प्रध्वंसादिरिति प्रत्ययस्याभावविषयत्वे सोप्यभाव. प्रकृते ( प्रागभावे ) नास्तीति प्रत्ययेनासद्विषयेण व्यावर्तयितव्य इत्यनवस्था । १५ यौगस्य । १६ इति, प्रत्ययः । १७ प्रागभावादौ प्रध्वंसाभावादिरुपचरित' । १८ चतुर्णाम् । १९ अन्यथा । २० घटादावभावेषु वा । २१ मुख्योऽभावोन्नेतरेतराभाव । २२ तथा सति घटपटादीनामैक्यं स्यात् । २३ यौगेन । २४ घटस्य प्रागभाव इत्येवंप्रकारेण । २५ पक्षाव्यापकत्वं दर्शयति । २६ घटस्य रूपमित्येवम् । २७ गुणादे । २८ घटादिविशेष्योच्चारणरहितत्वेन । २९ अभावस्तत्त्वम् । कस्य ? द्रव्यस्येति सामर्थ्यात् । ३० चार्वाक. । ३१ गुणादिविशेष्यस्य । कस्य गुणादिरिति प्रश्ने द्रव्यस्येति सामर्थ्याद्गम्यत्वात् । ३२ दूषणान्तरम् । ३३ पश्चादिव । ३४ घटविरोधिन. । ३५ ( प्रागभावात्पूर्वं प्रागभावाभावोस्ति, प्रागभावस्य सादित्वात् । ३६ प्रागभावस्य उत्पत्त्यनन्तरमविनाशित्वात् । ३७ घटस्य । ३८ यौगः । ३९ चार्वाक. । ४० अनाश्रिताः ।

भावस्वभावाः कालादिवत्[१] ? भावतन्त्राश्चेत्किमुत्पन्नभावतन्त्रा उत्पत्स्यमानभावतन्त्रा वा ? न तावदादिविकल्पः, समुत्पन्नभावकाले तत्प्रागभावविनाशात् । द्वितीयविकल्पोपि न श्रेयान्, प्रागभावकाले स्वयमसतामुत्पत्स्यमानभावानां तदाश्रयत्वायोगात्[२], अन्यथा[३] प्रध्वंसाभावस्यापि प्रध्वस्तपदार्थाश्रयत्वापत्तेः । न[४] चानुत्पन्नः प्रध्वस्तो वा[५]र्थः कस्यचिदाश्रयो नाम, अति[६]प्रसङ्गात् । य[७]दि पुनरेक एव प्रागभावो विशेषणभेदाद्भिन्न उपचर्यते घटस्य प्रागभावः पटादेर्वे[८]ति । त[९]थोत्पन्नपदार्थविशेषणतया तस्य विनाशेप्युत्पत्स्यमानार्थविशेषणत्वेनाविनाशान्नित्यत्वमपीति मतं, तदा प्रागभावादिचतुष्टयकल्पनापि मा भूत्, सर्वत्रैकस्यैवाभावस्य विशेषणभेदात्तथा भेदव्यवहारोपपत्तेः । कार्यस्यैव पूर्वेण कालेन विशिष्टोर्थः प्रागभावः, परेण विशिष्टः प्रध्वंसाभावः, नानार्थविशिष्टः स एव चेतरेतराभावः, कालत्रयेप्यत्यन्तना[१०]नास्वभावभावविशेषणोत्यन्ताभावः स्यात्, प्रत्ययभेद[११]स्यापि तथोप[१२]पत्तेः सत्तैकत्वेपि द्रव्यादिविशेषणभेदाद्भेदव्यवहारवत् । यथैव हि सत्प्रत्ययाविशेषाद्विशेषलिङ्गाभावादेकत्वं सत्तायामिष्टं भवद्भिस्तथैवासत्प्रत्ययाविशेषाद्विशेषलिङ्गाभावादसत्त्वा[१३]यामप्येकत्वमस्तु । अथ प्राग्नासीदित्यादिप्रत्ययविशेषादसत्ता चतुर्भेदेष्यते तर्हि प्रागासीत्पश्चाद्भविष्यति सम्प्रत्यस्तीति कालभेदेन, पाटलीपुत्रेस्ति चित्रकूटेऽस्तीति देशभेदेन, घटोस्ति पटोस्तीति द्रव्यभेदेन, रूपमस्ति रसोस्तीति गुणभेदेन, प्रसारणमस्ति गमनमस्तीति कर्मभेदेन च[१४] प्रत्ययविशेषसद्भावात् प्राक्सत्त्वा[१५]दयः सत्ताभेदाः किमु नेष्यन्ते ? अथ प्रत्ययविशेषात्तद्विशेषणान्येव भिद्यन्ते, त[१६]स्य तन्निमित्तकत्वात्, न तु सत्ता । ततः सैकैवेति मत तर्हि त[१७]त एवाभावभेदोपि मा भूत्, सर्वथा विशेषाभावात् । न चैकोप्यभावः क्षित्यादिविवर्तघटशब्दादिव्यतिरेकेण प्रत्यक्षतः प्रति[१८]भासते । केवलं ग[१९]तानुगतिकतया लोकः पृथिव्यादिभूतचतुष्टयविषयमेव प्रागभावादिविक[२०]ल्पमात्रवशात्प्रागभावादिव्यवहारं प्रवर्तयति द्र[२१]व्यादिविकल्पमात्राद्द्रव्यादि[२२]व्यवहारवत्, प्र[२३]माणादिप्रकृत्या[२४]दिरूप[२५]स्कन्धादिविकल्पमात्रात्तद्व्य[२६]वहारवच्च । ततो न प्रागभावः कश्चिदिह प्रतीयते प्रध्वंसाभावादिव[२७]त् । इ[२८]ति प्रागभावादिनिह्नवं कृत्वा पृथिव्यादिकार्यद्रव्यमभ्युपगच्छंश्चार्वाकोनेनोप[२९]लभ्यते, न पुनः सांख्योन्यो[३०] वा, तस्य कार्यद्रव्यानभ्युपगमात्, तिरोभावाविर्भाववत्परिणामोपगमेपि भावस्वभावप्रागभावाद्यभ्युपगमस्यापि सद्भावात् । त[३१]त्र प्रागभावस्य प्रसिद्धस्याप्यपलपनं निह्नवः । तस्मिन्क्रियमाणे कार्यद्रव्यं पृथिव्यादिकमनादि स्यात् । प्रध्वंसस्य च धर्मस्य स्वभावस्य प्रच्यवोऽपलापः । तस्मिन्विधीयमाने तदनन्ततां व्रजेत् । न चानाद्यनन्त पृथिव्यादिक प्रागभावाद्यपह्न-

---

१ तव मते सर्वदा भावविशेषणानामेवाभावत्वस्वीकारात् । २ ( स्वयमात्मलाभं प्राप्त एव पदार्थः कस्यचिदाश्रयत्वादिधर्मविशिष्ट स्यात्, सति कुड्ये चित्रमिति न्यायात् )। ३ ( स्वयमसतोपि तदाश्रयत्वं चेत् )। ४ नन्वेवमिष्टापादनमेवेत्युक्ते आह । ५ समुच्चयेत्र वाशब्द । ६ खरविषाणादेरपि प्रागभावप्रध्वंसाभावाश्रयत्वानुषङ्गात्, उत्पन्नप्रध्वस्तयोरसत्त्वेन खरविषाणरूपस्याभावस्य समानत्वात् । किञ्चैवमनुत्पन्न प्रध्वस्तो वा स्तम्भ प्रासादादेराश्रय स्यात् । ७ चार्वाक आह—हे यौग । ८ ( तथा चेत्यर्थ )। ९ ( प्रागभावादेरेकत्वेपि विशेषणभेदाद्भेदोपचारप्रकारेण )। १० सर्वथा भिन्नस्वभाव अत्यन्तनानास्वभावो भावो गन्धात्मादि । ११ प्राग्नासीद्घट प्रध्वस्तो वेत्यादि । १२ विशेषणभेदप्रकारेण । १३ अभावे । १४ ( यौगमते द्रव्यादित्रिकवृत्तित्वादेव सत्ताया सामान्यादिषु नोक्तम् ) १५ प्रागासीदित्यादय । १६ प्रत्ययविशेषस्य विशेषणनिमित्तकत्वात् । १७ अभावप्रत्ययविशेषस्य विशेषणभेदहेतुकत्वात् । १८ घटाभावादिशब्द एव श्रूयते न स्वभावः पृथग्भावेन प्रतीयते । १९ गतानामनुगतिर्यस्य स, तस्य भावस्तत्ता, तया । २० विकल्पो ज्ञानम् । २१ आदिपदेन गुणकर्मादय । २२ ( वैशेषिकमते )। २३ नैयायिकापेक्षया । २४ साख्यापेक्षया । २५ बौद्धमतापेक्षया । २६ ( क्रमेण नैयायिकसाख्यबौद्धाभिमतप्रमाणादि, प्रकृत्यादि, रूपस्कन्धादि निदर्शनं ज्ञेयम् )। २७ प्रध्वंसस्य निराकरिष्यमाणत्वात् । २८ इतो जैन आह इतीत्यादि । २९ कार्यद्रव्यमनादि स्यादित्यादिकारिकया । ३० अन्य. सत्ताद्वैतवादी । ३१ चार्वाकस्यैवोपालभ्यत्वे सति ।

वदादिनाभ्युपगन्तुं शक्यते, स्वमतविरोधाल्लौकायतिक[१]त्वहानिप्रसङ्गात् । कथं[२] पुनः प्रागभावः प्रसिद्धः, तस्योक्तदूषणविषयतया व्यवस्थित्यभावादिति चेन्न, स्याद्वादिभिरभीष्टे प्रागभावे यथोक्तदूषणा[३]नवकाशात्, नैयायिकादिभिरभिमत[४]स्य तु तस्य तैर[५]पि निराकरणात्। ऋजुसूत्र[६]नयार्पणा[७]द्धि प्रागभावस्तावत्कार्य[८]स्योपादानपरिणाम[९] एव पूर्वोऽनन्तरात्मा । न च तस्मिन्[१०] पूर्वानादिपरिणामसन्ततौ कार्यसद्भावप्रसङ्गः, प्रागभाव[११]विनाशस्य कार्यरूपतोपगमात्, कार्योत्पादः क्षयो हेतोरिति वक्ष्य[१२]माणत्वात्। प्रा[१३]गभावतत्[१४]प्रागभावादेस्तु पूर्वपूर्वपरिणामस्य सन्तत्यानादेर्विवक्षित[१५]कार्यरूपत्वाभावात् । न च तत्र[१६]ास्येतरेतरा[१७]भावः परिकल्प्यते[१८], येन तत्[१९]पक्षोपक्षिप्तदूषणावतारः स्यात्। नाप्येवं[२०] प्रागभावस्यानादित्वविरोधः, प्रागभावतत्प्रागभावादेः प्रागभावसन्तान[२१]स्यानादित्वोपगमात् । न चात्र[२२] सन्तानि[२३]भ्यस्तत्त्वान्यत्व[२४]पक्षयोः सन्तानो[२५] दूषणार्हः[२६], पूर्वपूर्वप्रागभावात्मकभावक्षणानामेवापरामृष्ट[२७]भेदानां सन्तानत्वाभिप्रायात्। सन्तानिक्षणापेक्षया[२८] तु प्रागभावस्यानादित्वाभावेपि न दोषः, तथा ऋजुसूत्र[२९]नयस्येष्टत्वात् । तथास्मिन्पक्षे पूर्वपर्यायाः सर्वेप्यनादिसततयो घटस्य प्रागभाव इति वचनेपि[३०] न प्रागनन्तरपर्यायनिवृत्ताविव तत्पूर्व[३१]पर्यायनिवृत्तावपि घटस्योत्पत्तिप्रसङ्गो, येन तस्यानादित्वं[३२] पूर्वपर्यायनिवृत्तिसंततेरप्यनादित्वादापाद्यते, घटात्पूर्वक्षणानामशेषाणामपि[३३] तत्प्रागभावरूपाणामभावे घटोत्पत्त्यभ्युपगमात्, प्रागनन्तरक्षणानिवृत्तौ तदन्यतम[३४]क्षणानिवृत्ताविव सकलतत्प्रागभाव[३५]निवृत्त्यसिद्धेर्घटोत्पत्तिप्रसङ्गासंभवात् । व्यवहार[३६]नयार्पणात्तु मृदादिद्रव्यं घटादेः प्रागभाव इति वचनेपि[३७] प्रागभावाभावस्वभावता घटस्य न दुर्घटा यतो द्रव्यस्याभावासंभवान्न जातुचिदुत्पत्तिर्घटस्य स्यात्[३८], कार्य[३९]रहितस्य पूर्वकाल[४०]विशिष्टस्य मृदादिद्रव्यस्य घटादिप्रागभावरूपतोपगमात्, तस्य[४१] च कार्योत्पत्तौ विनाशसिद्धेः, कार्यरहितताविनाशमन्तरेण कार्यसहिततयोत्पत्त्ययोगात्, कार्योत्पत्तेरेवोपादानात्मकप्रागभावक्षयस्य[४२] वक्ष्यमाणत्वात्। तथा प्रमाणा[४३]र्पणाद्द्रव्यपर्यायात्मा प्रागभावः[४४] इत्यभिधानेपि नोभयपक्षोपक्षिप्तदोषानुषङ्गः, प्रागभावस्य द्रव्यरूपतयेव पर्यायरूपतया[४५]प्यनादित्वनिरूपणात् । न[४६] चानादेरनन्ततैकान्तः

---

१ लोकव्यवहारमयतेऽभ्युपगच्छतीति लौकायतिकः । २ शङ्कते चार्वाकः ( लौकायतिकः )। ३ प्रत्यक्षतो न प्रतिभासते इत्येवम्। ४ अभावो न भावरूपस्तस्य भावविशेषणत्वादिति भावविशेषणरूपस्य ।५ स्याद्वादिभिः । ६ प्रागनन्तरपरिणामादिरूपेण चतुर्धा विकल्पे यदुक्तं दूषणं चार्वाकेण तत्सर्वं तद्विकल्पाभ्युपगमपुरस्सरं परिहरन्नाह जैनः । ७ अर्पणा विवक्षा। ८ घटस्य। ९ मृत्पिण्डरूपः । १० तथा सतीत्यर्थः। ११ मृत्पिण्डप्रध्वंसस्य । १२ द्वितीयपरिच्छेदे। १३ अथ पूर्वानादिपरिणामस्य स्वस्वपूर्वस्वरूपप्रागभावाभावरूपत्वात् कार्यरूपत्वमस्त्येव ततः कथं न तत्र कार्यसद्भाव इति चेदाह जैनः। १४ घटस्य प्रागभावो मृत्पिण्डः। मृत्पिण्डलक्षणप्रागभावस्य मृच्छकलम्। तस्यान्यदित्येवम्। १५ विवक्षितकार्यं प्रागनन्तरपरिणामनाशस्वरूपघटलक्षणम्। १६ ( प्रागभावतत्प्रागभावादौ )। १७ ( विवक्षितकार्यस्य ) १८ प्रागभावविनाशरूपताया एव व्यावर्तकत्वात् ( प्रागभावविनाशरूपतैवेतरेतराभावं व्यावर्तयति )। १९ इतरेतराभावपक्षोपक्षिप्तप्रागभाववैयर्थ्यलक्षणदूषणावतारः । २० प्रागनन्तरपरिणामस्य प्रागभावत्वप्रकारेण। २१ द्रव्यस्य। २२ एवं सति। २३ पर्यायेभ्यः। २४ तत्त्वमभेदः, अन्यत्वं तु भेदः। ( कथञ्चिदभेदभेदपक्षयोरित्यर्थः ) । २५ द्रव्यम् । २६ अभेदे सन्तानिन एव, न सन्तानः। भेदे सम्बन्धासिद्धिर्द्वयोः ? । २७ अविवक्षितभेदानाम्। २८ अनादित्वाभाव एवेष्टः। पर्यायापेक्षया सादित्वं वर्तते इति भावः । २९ क्षणध्वंसिपर्यायार्थग्राहिणः । ३० पूर्वं चार्वाकोक्ततृतीयविकल्पाभ्युपगमेपीत्यर्थः। ३१ अनन्तरपूर्वपर्यायात्पूर्वपर्यायास्तत्पूर्वपर्यायाः। ३२ घटस्य। ३३ ( प्रागनन्तरपर्यायेणापि सहितानामित्यर्थः )। ३४ पूर्वप्रागभावाना मध्ये। ३५ तत्, घटादि। ३६ व्यवहारो, द्रव्यार्थिकनयः । ३७ प्रागुक्तद्वितीयविकल्पे। ३८ ( किंतु सुघटैव )। ३९ ( मृदादिद्रव्यशब्देन )। ४० ( घटमपेक्ष्य )। ४१ (कार्यरहितस्य पूर्वकालविशिष्टस्य मृदादिद्रव्यस्य)। ४२ 'कार्योत्पत्तेरेव' इति प्रागुक्त एवकारोत्रैव ज्ञेयः। ४३ ( सकलादेशः प्रमाणाधीन इत्युक्तत्वात्प्रमाणं हि पर्यायं द्रव्यं चापेक्षते। उभय-( पर्यायद्रव्य ) मुख्यविवक्षयेत्यर्थः )। ४४ चतुर्थविकल्पोयम्। ४५ पर्यायसन्तत्यपेक्षया। ४६ प्रागभावस्यानादित्वेऽनन्तत्वं स्यादाकाशवत्। ततश्च कार्यानुत्पत्तिरेवेति दूषणे उक्ते सत्याह जैनः।

सिध्यति, भव्यजीवसंसारस्यानादित्वेपि सान्तत्वप्रसिद्धेः, अन्यथा कस्यचिन्मुक्त्ययोगात् । नापि सान्तस्य सादित्वैकान्तः,कस्यचित्संसारस्य सान्तत्वेप्यनादित्वप्रसिद्धेः । तैतो[1] न सर्वदा कार्यानुत्पत्तिः पूर्वमप्युत्पत्तिर्वा घटस्य दुर्निवारा स्यात् । तैतो[2] भावस्वभाव एव प्रागभावः । स चैकानेकै[3]स्वभावो भाववदेवेति न तदेकै[4]त्वानेकत्वैकान्तपक्षभावी दोषोवकाश लभते । न च भावस्वभावे प्रागभावे प्राग्नासीत्कार्यमिति नास्तित्वप्रत्ययो विरुध्यते, तैद[5]भावस्य भावान्तररूपत्वात् तैत्र[6] च नास्तित्वप्रत्ययाविरोधात्, घटविविक्तभूभागे घटनास्तित्वप्रत्ययवत् । तैदेवं[7] प्रसिद्धस्यैव प्रागभावस्यापलपनं निह्नवः । पैरस्य[8] प्रध्वंसाभावः कथ प्रसिद्ध इति चेन्नयप्रमाणार्पणादिति ब्रूमः[9] । तत्र ऋजुसूत्रनयार्पणात्तावदुपादेयैं[10]क्षण एवोपादानैंस्य[11] प्रध्वंसः । न चैवं[12] तैदुत्तर[13]क्षैणेषु[14] प्रध्वसस्याभावात्पुनरुज्जीवनं घटादेः प्रसज्येत, कारणस्य कार्योपमर्दनात्मकत्वाभाँवात्[15], उपादानोपमर्दनस्यैव कार्योत्पत्त्यात्मकत्वात्, प्रागभावप्रध्वसयोरुपादानोपादेयरूपतोपगमात्प्रागभावोपमर्देनेन प्रध्वसस्यात्मलाभात् । कथमभावयोरुपादानोपादेयभाव इति चेत् भावयोः कथम्? यद्भावे एव यस्यात्मलाभस्तदुपादानमितरदुपादेयमिति चेत्तर्हि प्रागभावे कारणात्मनि पूर्वक्षणवर्त्तिनि सति प्रध्वंसस्य कार्यात्मनः स्वरूपलाभोपपत्तेस्तयोरुपादानोपादेयभावोस्तु, तुँ[16]च्छयोरेवाभावयोस्तद्भावविरोधात् । तथा व्यवहाँर[17]नयादेशान्मृदादिद्रव्यं घटोत्तरकालवर्त्ति घटाकारविकल घटप्रध्वंसः । स चाँ[18]नन्तः समवतिष्ठते । तेनैं[19] घटात् पूर्वकालवर्ति मृदादिद्रव्यं घटस्य प्रागभाव एव, न पुनः प्रध्वसः, तथा घटाकारमपि तैत्तैस्यं[20][21] प्रध्वंसो मा भूत्, घटाकारविकलमिति विशेषणात् । नन्वेवं घटोत्तरकालवर्त्तिघटाकारविकैल[22]सन्तानान्तरमृदादिकमपि तैद्घट[23]प्रध्वंसः स्यादिति चेन्न, द्रव्यग्रहणात् । वर्त्तमानपर्यायाश्रयरूपमेव हि मृदादिकं तद्द्रव्यमन्वयीष्यते, न पुनः सन्तानान्तरं, तस्य स्वपर्यायमेवातीतमनागत वा प्रत्यन्वयिनस्तैं[24]द्द्रव्यत्वविरहात् । तदेवं प्रसिद्धः प्रध्वंसो वस्तुधर्मः । तस्य प्रच्यवोऽपह्नव एव चार्वाकस्य । तस्मिंश्च कार्यद्रव्यं पृथिव्यादिकमनन्तता व्रजेदिति समन्तभद्रस्वामिनामभिप्रायः । वृत्तिकारास्त्वकलङ्कदेवा एँवे[25]माचक्षते कपिलमतानुसारिणा प्रागभावानभ्युपगमे घटादेरनादित्वप्रसङ्गात् पुरुषव्यापारैं[26]नर्थक्यं स्यात् । न च पुरुषव्यापारमन्तरेण घटादि भवदुपलभ्यते जातुचिदिति कार्यद्रव्य तैदाँ[27]पादनीयम् । तँच्च[28] प्रागभावस्य निह्नवेऽनादि स्यादिति सूक्तं दूषणम्, आपाद्यैं[29]स्याप्युद्भाव्यवैं[30]द्दूषणत्वोपपत्तेः । एतेन मीमासकाना शब्दस्य प्रागभावानभ्युपगमेऽनादित्वप्रसङ्गात् पुरुषव्यापारैं[31]नर्थक्य स्यादित्युक्तं प्रतिपत्तव्यम् । शब्दस्याभिव्यैं[32]क्तौ

---

१ प्रागभावस्यानादित्वं सान्तत्वं च यतः । २ नयप्रमाणवशात. ३ ( द्रव्यापेक्षया एकस्वभाव. शक्त्यपेक्षया चानेकस्वभाव ) । ४ घटोपलब्धिवदशेषकार्योपलब्धिरित्यादिलक्षण पूर्वोक्त. । ५ कार्याभावस्य । ६ भावान्तररूपे प्रागनन्तरपर्याये । ७ नयप्रमाणार्पणाद्द्रव्यपर्यायौ व्यस्तौ समस्तौ वा प्रागभावो यत. । ८ चार्वाक. पृच्छति, परस्येति, चार्वाकस्य । ९ जैना. । १० कार्यरूपा कपालमाला । ११ घटस्य १२ उपादेयक्षणस्यैवोपादानप्रध्वंसरूपत्वे सति । १३ तस्मादुपादेयक्षणादुत्तरक्षणास्तदुत्तरक्षणास्तेषु । १४ कपालमालाखण्डेषु । १५ उपादानकारणनाशे उत्तरपर्यायरूप कार्यमुत्पद्यते, नतु कार्यनाशे कारणोत्पत्तिनियम इति भाव । १६ नि स्वभावयोर्नैयायिकाभिमतयो । १७ व्यवहारो द्रव्यार्थिक । १८ सादिरनन्त. । १९ घटाकारविकलस्य घटोत्तरकालवर्त्तिनोनन्तस्य घटप्रध्वंसत्वप्रतिपादनप्रकारेण । २० मृदादिद्रव्यम् । २१ घटस्य । २२ घटपरिणामपरिणतादन्यन्मृदादिद्रव्यं घटाकारविकलशब्देन गृह्यते । २३ ( यद्घटाकाररूप न परिणतम् ) स चासौ घटश्च तद्घट । २४ स, विवक्षितो घटादि. । २५ वक्ष्यमाणप्रकारेण । २६ घटाद्युत्पत्तौ । २७ सांख्य प्रति तत्कार्यद्रव्यमापादनीयं युक्त्या समर्थनीयमिति भाव । २८ कार्यद्रव्यम । २९ सांख्यस्य । ३० चार्वाकापेक्षावत् । ३१ व्यापारस्तात्वादीनाम् । ३२ प्रकटीकरणे ।

पुरुषव्यापारस्योपयोगान्नानर्थक्यमिति चेन्न, ततः[1] प्राक् तदावेदकप्रमाणाभावादभिव्यक्तिकल्पनानुपपत्तेः । कलशादेर्हि समन्धकारावृततनोः प्रदीपव्यापारात्पूर्वं सद्भावावेदकप्रमाणस्य स्पर्शनप्रत्यक्षादेः संभवादुपपन्ना प्रदीपेनाभिव्यक्तिकल्पना, न पुनः शब्दस्य, तदभावात्[2] । प्रत्यभिज्ञानादेस्तद्भावावेदकस्य प्रमाणस्य भावाददोष इति चेन्न, तस्य[3] विरुद्धत्वात्, शब्दस्याभिव्यक्तेः पूर्वं सर्वथा सत्त्वात्साध्याद्विपरीतेन कथञ्चि[4]त्सत्त्वेन व्याप्तत्वा[5]दन्यथा[6] प्रत्यभिज्ञायमा[7]नत्वा[8]द्यनुपपत्तेः[9] । ततोभिव्यङ्ग्य[10]विलक्षणत्वान्न शब्दस्याभिव्यक्तिकल्पना[11] युक्ता । एतेन कुम्भकारादिव्यापाराद् घटाद्यभिव्य[12]क्तिकल्पना प्रत्युक्ता । कल्पयित्वापि तदभिव्यक्तिं तस्याः[13] **प्रागभावोङ्गीकर्तव्यः[14] । तथा[15] हि । सतः शब्दस्य ताल्वादिभिरभिव्यक्तिः प्रागसती क्रियते, न पुनः शब्द एवेति स्वरुचिविरचितदर्शनप्रदर्शनमात्रम्[16]** । ननु च मीमांसकैः शब्दस्यापौरुषेयत्वप्रदर्शनान्नासौ[17] प्रागसन् क्रियते । तदभिव्यक्तिस्तु पौरुषेयी । सा प्रागसती क्रियते इति कथं स्वरुचिविरचितस्य दर्शनस्य प्रदर्शनमात्रं, प्रमाणशक्तिविरचितस्य तथा[18] दर्शनस्य प्रदर्शनादिति चेन्न, शब्दादभिन्नायास्तदभिव्यक्तेरप्यपौरुषेयत्वात् । तस्याः पौरुषेयत्वात्प्रागसत्त्वे तदभिन्नस्य शब्दस्यापि तत[19] एव प्रागसत्त्वमनुमन्यतां, विशेषा[20]भावात् । शब्दाद्भिन्नैवाभिव्यक्तिरिति चेत् **सा यदि श्रवणज्ञानोत्प[21]त्तिः,[22] सैव[23] कथं प्राक्सती यत्नतः कर्तव्या ?** तस्याः प्रागसत्त्वे शब्दस्याश्रावणत्वापत्तेर्नित्य[24]त्वविरोधः, प्रागश्रावणत्वस्वभावत्यागेनोत्तरश्रावणत्वस्वभावोत्पत्तेः कथञ्चिदनित्यत्वमन्तरेणानुपपत्तेः । अथ श्रवणज्ञानोत्पत्तेरभावेपि पूर्वं शब्दस्य श्रावणत्वमेवेष्टं,[25] किमनया श्रवणज्ञानोत्प[26]त्त्याभिव्यक्त्या ? स्यान्मतं,[27] न शब्दधर्मः श्रवणज्ञानोत्पत्तिः, तस्याः[28] कर्म[29]स्थक्रियात्वाभावात् । किं तर्हि ? पुरुषस्वभावः, कर्तृ[30]स्थक्रियात्वादिति, तदप्ययुक्तं, कर्तृ[31]वत्तस्याः प्राक्सत्त्वापत्तेरविशेषात्तद्व्यापारानर्थक्यात् । श्रवणज्ञानोत्पत्तियोग्यता शब्दस्याभिव्यक्तिरिति चेत्तर्हि **योग्यतायां समानश्चर्चः** । योग्य[32]तापि हि यदि शब्दधर्मत्वाच्छब्दादभिन्ना तदा कथं तद्वत्सती पुरुषप्रयत्नेन क्रियेत ? अथ[33] शब्दाद्भिन्ना, श्रोत्रस्वभावत्वात्तस्या इति मतिस्तथापि न सा प्रागसती श्रोत्रस्य नभोदेशलक्षणस्य सर्वदा सत्त्वात् तत्स्वभावभूताया योग्यतायाः प्रागपि सत्त्वात् । एतेना[34]त्मधर्मो योग्यता शब्दाद्भिन्नेति निरस्तं, नित्यत्वादात्मनः प्रागसत्त्वासम्भ[35]वात् । अथ[36] भिन्नाभिन्ना

---

१ पुरुषव्यापारात् । २ तद्भावावेदकस्य दर्शनप्रत्यक्षादे प्रमाणस्याभावात् । ३ प्रत्यभिज्ञानादे । ४ पुद्गलद्रव्यापेक्षया सत्त्वं शब्दस्य पर्यायापेक्षया चासत्त्वमिति । ५ शब्दस्य । ६ सर्वथा सत्त्वं चेत् । ७ दर्शनस्मरणकारणकं सङ्कलनं प्रत्यभिज्ञान तदेवेदमित्युक्तत्वात् । ८ अभिव्यञ्जकव्यापारात्पूर्वं शब्दसद्भावावेदकप्रमाणाभावेन । ९ सर्वथा विद्यमानस्य प्रमाणग्राह्यत्वाभावात् । १० शब्दो नित्य, अर्थप्रतिपत्त्यन्यथानुपपत्तेरित्यर्थापत्तिविषयत्वेन । ११ ( किन्तु सत्त्वं तु नित्यमेव तस्येति कल्पना युक्ता ) । १२ ( किन्तु सत्त्वं तु व्यापारात्पूर्वमपीत्यर्थं ) । १३ अभिव्यक्ते । १४ अन्यथा सर्वदा शब्दश्रवणप्रसङ्ग, श्रावणत्वरूपाया अभिव्यक्तेर्नित्यत्वात् । १५ तथा च सति को दोष इति दर्शयति । १६ अभिव्यक्त्यात्मकः शब्दो मीमासकमते धर्मधर्मिणोरभेदात् । १७ शब्द । १८ अभिव्यक्ति प्रागसती क्रियते, न पुन शब्द एवेति प्रकारेण । १९ पौरुषेयत्वात् । २० ( पौरुषेयतया अनित्यत्वेन ) । २१ श्रवणज्ञानोत्पत्तिरूपा । २२ तर्हीति शेषः । २३ श्रवणज्ञानोत्पत्ति शब्दे प्राक् सती असती वेति क्रमेण दूषयति जैन । २४ ( पूर्वमश्रावणत्वे पश्चाच्छ्रावणत्वे च श्रावणत्वधर्मस्योत्पादः, अश्रावणत्वस्य तु नाश इत्यनित्यत्वम् ) । २५ ( तर्हीत्यध्याहियते ) । २६ ( श्रवणज्ञानोत्पत्तिरूपया ) । २७ मीमासकस्य । २८ श्रवणज्ञानोत्पत्ते । २९ शब्द शृणोमीत्यादौ शब्द कर्मतापन्न । ३० श्रोतृजनाश्रितत्वात् । ३१ आत्मवत् तस्याः कर्तृस्थक्रियायाः । ३२ समानं चर्चं विवृणोति । ३३ यदि । ३४ योग्यताया शब्दश्रोत्रधर्मत्वनिराकरणेन । ३५ योग्यतायाः । ३६ यदि ।

श्रवणज्ञानोत्पत्तिस्तद्योग्यता चाभि[1]व्यक्तिः शब्दादिति मतं तदप्यसत्यं, पे[2]क्षद्वयोक्तदोषानुषङ्गात् सर्वे[3]था तस्याः[4] प्रागभावायोगात्, त[5]द्योगे वा श[6]ब्दवदेव श्रोत्रप्रमात्रोरपि प्रागसतोः प्रयत्नेन करणप्रसङ्गाद[7]न्यथा स्वरुचिविरचितदर्शनप्रदर्शनमात्रप्रसक्तेः। आवरणवि[8]गमोभिव्यक्तिरिति चेत् त[9]दावरणविगमः प्रा[10]क्कि[11]मभूत्? [12]भूतौ वा किं य[13]त्नेन? विशेष[14]स्याधानमभिव्यक्तिरिति चेन्ननु **विशेषाधानमपि ता[15]दृगेव, कर्मकर्तृकरणानां प्रागभावाभावात्।** [16]आवरणविगमविशेषाधानयोर्हि शब्दपुरुषश्रोत्राणां स्वरूपत्वे तेषा याज्ञिकै[17]रपि नित्यत्वोपगमात्कथं प्रागभावः सभवेत्? संभवे वा प्रयत्नकार्यत्वप्रसङ्गः[18] अभिव्यक्तिवत्। पुरुषप्रयत्नेन अभिव्यक्तिः प्रागसती क्रियते, न पुनस्तत्स्वरूपः शब्दः पुरुषः श्रोत्रं चेति स्वरुचिविरचितदर्शनप्रदर्शनमात्रम्। ए[19]वं हि कपिलमतानुसा[20]रिणा घटादेरभिव्यक्तिः प्रागसती चक्रदण्डादिभिः क्रियते न पुनर्घटा[21]दिरित्यपि शक्यं प्रदर्शयितुम्। यतोत्र[22] **न कश्चिद्विशेषहेतु[23]स्ताल्वादयो व्यञ्जका[24], न पुनश्चक्रा[25]दयोपीति,** ते[26] वा घटादेः कारका, न पुनः शब्दस्य ताल्वादयोपीति[27]। **न हि व्यञ्जकव्यापृतिर्नियमेन व्यङ्ग्यं सन्निधापय[28]ति।** सन्निधापयति च ताल्वादिव्यापृतिर्नियमेन शब्दम्। ततो ना[29]सौ ताल्वादीनां व्यङ्ग्यश्चक्रादीनां घटादिवत्। **ना[30]यं दोषः सर्वगतत्वाद्वर्णानामित्यपि वार्तं,** [31]प्रमाणबलायातत्वाभावात्, **अन्यत्रा[32]पि तथाभावानुषङ्गात्।** शक्यं हि वक्तुं, घटादीना सर्वगतत्वाच्चक्रादिव्यापारान्नियमेनोप[33]लब्धिरिति। **इष्टत्वाददोषोयं** कापिलाना[34]मिति चेन्न, **कारणव्यापारे[35]ष्वपि चोद्या[36]निवृत्तेः,** चक्रादीन्यपि कारणानि स्व[37]व्यापाराणां नियमेन सन्निधापकान्यभिव्यञ्जकानि भवन्तु, तेषा सर्वगतत्वादेवेति चोद्यस्य निवर्तयितुमशक्यत्वात्। **एतेना[38]वस्था प्रत्युक्ता।** [39]स्वव्यापारोत्पादने हि कारणाना व्यापारान्तराणि कल्पनीयानि तथा तदुत्पादनेपीत्यन[40]वस्था स्यात्, न पुनः स्वव्यापाराभि[41]व्यक्तौ, त[42]त्सन्निधिमात्रादेव तत्सिद्धे[43]रन्यथा व्यञ्जककारकयोरविशेषप्रसङ्गात्। कारणव्यापाराणा च कारणेभ्यो भेदैकान्तो वा स्यादभेदैकान्तो वा? तद्भेदै[44]कान्ते त[45]द्वतोनुपयोगः, ता[46]वतेतिकर्तव्यतास्थानात्। व्यवहारिणा[47]मभिमतकार्यसंपादनमेव हीतिकर्तव्यता। तस्याः स्था[48]न यदि व्यापारेभ्य एवैकान्ततो भिन्नेभ्यो भा[49]वाद्भवेत्तदा किं व्यापारवतान्यत्साध्य, यतस्त[50]स्योपयोगः क्वचिदुपपद्यते?

---

१ इत्यभिव्यक्तिद्वयमस्ति। २ ( श्रवणज्ञानोत्पत्तिपक्षे तद्योग्यतापक्षे च )। ३ शब्दाद्भेदाभेदप्रकारेण। ४ द्विधाभिव्यक्ते। ५ प्रागभावयोगे। ६ शब्दश्रोत्रप्रमातॄणा नित्याना धर्मोभिव्यक्ति। सा नित्या नित्यत्वात्प्रागभावायोगात्। तस्या प्रागभावयोगे शब्दश्रोत्रप्रमातॄणामपि प्रागसता प्रयत्नेन करणप्रसङ्गात्। ७ शब्दश्रोत्रप्रमातॄणा प्रागसत्त्वेपि अभिव्यक्तिरेव यत्नेन क्रियते, न तु त्रितयमिति चेत्तर्हि। ८ शब्दस्य। ९ स चासावावरणविगमश्च १० ताल्वादिव्यञ्जकव्यापारात्प्राक्। ११ अभूदेव। १२ आवरणविगमस्य। १३ कर्म (शब्द) करण ( श्रोत्र ) प्रमातॄणा ( पुरुषाणा ) प्रागभावाभावाद्भूतिसिद्धौ कि पुरुषयत्नेन। १४ श्रूयमाणत्वरूपस्य। १५ किमभूत्? भूतौ वेत्यादि। १६ भाष्ये स्थानद्वयस्थितं ( प्राक्किमभूदित्यत्र तादृगेवेत्यत्र च ) मूल भावयति। १७ न केवलं साख्यैरेव। १८ शब्दस्य। "अभिव्यक्तिवत्" इति पाठो नास्ति ख पुस्तके। १९ शब्दाभिव्यक्तिप्रकारेण। २० साख्यानाम्। २१ घटादिर्यत प्रागपि सन्। २२ वक्ष्यमाणेर्थे। २३ भेदकारणम्। २४ शब्दस्य। २५ न घटस्य व्यञ्जका, किन्तु कारका एवेति। २६ चक्रादय। २७ किन्तु व्यञ्जका एवेति। २८ न प्रकाशयति। किन्तु कारणं भवति। २९ शब्द। ३० व्यङ्ग्यत्वाभावलक्षण। ३१ वर्णाना सर्वगतत्वस्य। ३२ घटादौ। ३३ सतो घटस्य। ३४ साख्यमतमाश्रित्य मीमासकोक्तिरियम्। ३५ न केवलं कारणकार्येष्वेव। ३६ चोद्य. प्रश्न। ३७ भ्रमणादीनाम्। ३८ अनिष्टापत्त्या कारणव्यापारकरणनिराकरणेन। ३९ भ्रमणादीनामुत्पादने। ४० उत्पादनपक्षे एव। ४१ अभिव्यक्तिपक्षे नानवस्थेत्यर्थ। ४२ तस्य, कारकस्य। ४३ व्यापाराभिव्यक्तिसिद्धेः। ४४ कारणेभ्यो भेदैकान्ते। ४५ व्यापारवत कारणस्य। ४६ व्यापारमात्रेण। ४७ कारणानाम्। ४८ स्थिति। ४९ कारणात्। भिन्नेभ्य इत्यनेनान्वय.। ५० व्यापारवत कारणस्य।

तद्वतो व्यापाराणामभेदैकान्तेभिव्यक्तिवत्प्रसङ्ग[1]स्तद्वत इव व्यापाराणां सर्वदा[2] सद्भावः। तेषां[3] प्रागभावे वा व्यापाराः प्रागसन्तः क्रियन्ते, न पुनस्तदव्यतिरेकिणोपि तद्वन्त इति स्वरुचिविरचितदर्शनप्रदर्शनमात्रम्। एतेन[4]अनवस्था प्रत्युक्ता[5]। तद्विशेषैकान्ते[6] तद्वतोनुपयोगः, तावतेतिकर्तव्यतास्थानात्[7]। अभेदैकान्ते पूर्ववत्प्रसङ्गः[8]। परिणामेप्येष पर्यनुयोगः। परिणामिनो बहुधानकस्य[9] परिणामा घटादयोत्यन्तभिन्ना वा स्युरभिन्ना वा? कथञ्चिद्भेदाश्रयणे स्याद्वादानुसरणप्रसङ्गात्। तत्र परिणामानां तदभिन्नानां[10] क्रमशो वृत्तिर्मा भूत्, परिणामिनोऽक्रमत्वात्[11]। ततो भिन्नानां व्यपदेशोपि[12] मा भूत्–प्रधानस्यैते परिणामा इति, संबन्धासिद्धेरनुपकारकत्वात्। न हि नित्यं प्रधानं परिणामानामुपकारकं, तस्य[13] क्रमयौगपद्याभ्यामुपकारकत्वायोगात्। नापि परिणामेभ्यस्तस्योपकारः, तस्य तत्कार्यत्वेना[14]नित्यत्वापत्तेः। तैस्तस्योपकारेपि सर्वं[15] समानमनवस्था च। यावन्तो[16] हि परिणामास्तावन्तस्तस्योपकारा[17]स्तत्कृता[18]स्ततो यदि भिन्नास्तदा तस्येति व्यपदेशोपि मा भूत्, संबन्धासिद्धेरनुपकारकत्वात्। तद्वत[19]स्तैरुपकारै[20]रुपकारान्तरे[21]पि स एव पर्यनुयोग इत्यनवस्था। ततस्ते यद्यभिन्नास्तदा तावद्धा[22] प्रधानं भिद्येत, ते वा प्रधानैकरूपतां प्रतिपद्येरन्। इति प्रधानस्योपकाराणां चावस्थानासंभवादनवस्था। तस्या[23] भोग्या[24]भावे पुंसो भोक्तृत्वाभावादभावः[25] स्यात्, तस्य[26] तल्लक्षणत्वात्[27]। ततः प्रकृतिपुरुषतत्त्वयोरवस्थानाभावादनवस्था। इति न कपिलमतानुसरणेनापि प्रधानात्मनामशेषतो घटादीनामपि शब्दवदभिव्यङ्ग्यत्वं युक्तं कल्पयितुं, सर्वदा प्रागभावापह्नवे तदभिव्यक्तेरप्यनादित्वप्रसङ्गात्कार्यद्रव्यवत्[28]। ननु कार्यद्रव्यमसिद्धं कापिलानां, कथमनादिग्रन्थकारेणापाद्यते इति चेत्प्रमाणबलात्कार्यत्वं द्रव्यस्यापाद्य[29] तथाभिधानाददोषः। कथं कार्यत्वमापाद्यते प्रागभावानभ्युपगमवादिनं प्रतीति चेत्, कार्यं घटादिकम्, अपेक्षितपरव्यापारत्वात्, यत्तु न कार्यं तन्न तथा दृष्टं यथा गगनं, तथा च घटादिकं, तस्मात्कार्यमित्यनुमानात्। नात्रासिद्धं साधनं कादाचित्कत्वात्, तस्या[30]नपेक्षितपरव्यापारत्वे कादाचित्कत्वविरोधादाकाशवत्। तदाविर्भावस्य कादाचित्कत्वादपेक्षितपरव्यापारत्वं, न तु घटादेरिति चेत् कोयमाविर्भावो नाम? प्रागनुपलब्धस्य व्यञ्जक[31]व्यापारादुपलम्भ इति चेत् स[32] तर्हि प्रागसन् कारणैः[33] क्रियते, न पुनर्घटादि[34]रिति स्वरुचिवचनमात्रम्। अथ तस्यापि[35] प्राक्तिरोहितस्य सत एव कारणैराविर्भावान्तरमिष्यते तर्हि तस्याप्यन्यत्तस्याप्यन्यदाविर्भावनमित्यनवस्थानान्न कदाचिद् घटादेराविर्भावः स्यात्। अथाविर्भावस्योपलम्भरूपस्य तद्रूपा[36]विर्भावान्तरानपेक्षत्वात् प्रकाशस्य प्रकाशान्तरानपेक्षत्ववन्नानवस्थेति चेत् तर्हि तस्य[37] कारणादात्मलाभोभ्युपगन्तव्यः[38], ततः कार्य[39]माविर्भाव इति। तद्वद्घटादिकं[40]मपि, अपेक्षितपरव्यापारत्वाविशेषादात्मलाभे। न[41] ह्यलब्धात्मलाभस्योपलम्भः शक्यः कर्तुं, सर्वथा-

---

१ अभिव्यक्तिवाश्चासौ प्रसङ्गश्चेति तथोक्तः। २ साङ्ख्योतिप्रसङ्गं निराकुर्वन्निवार्यते जैनेन। ३ व्यापाराभिन्नानि कारणानि। ४ एतेन कारणव्यापारनिराकरणेन। ५ तर्ह्यनवस्था स्यादित्यर्थः। ६ कारणव्यापाराणा भेदैकान्ते। ७ व्यापारेभ्य एव। ८ अभिव्यक्तिवान् प्रसङ्ग इत्यर्थः। ९ बहुधानकस्य ( प्रधानस्य ) परिणामाः पर्यायाः। १० प्रधानादभिन्नानाम्। ११ ( सर्वदा सत्त्वात् )। १२ वक्ष्यमाणप्रकारेण। १३ प्रधानस्य। १४ ते परिणामाः कार्यं यस्य प्रधानस्य तत्। १५ प्राक्तनं विकल्पजालम्। १६ अनवस्था विवृणोति। १७ प्रधानस्य। १८ प्रधानकृताः। १९ उपकारवत प्रधानस्य। २० परिणामकृतैः। २१ परस्परमुपकारेपीत्यर्थः। २२ यावत्प्रकाराः परिणामास्तावत्प्रकारान्। २३ अनवस्थायाः। २४ भोग्यस्य, प्रकृतेः। २५ पुरुषाभावः। २६ पुरुषस्य। २७ भोक्तृत्वलक्षणत्वात्। २८ पृथिव्यादिवत्। २९ द्रव्यस्यापाद्यते इति तथेत्यादि पाठान्तरम्। ३० घटस्य। ३१ व्यञ्जकं, चक्रदण्डादि। ३२ ( आविर्भावः )। ३३ चक्रादिभिः। ३४ आविर्भावादभिन्न। ३५ आविर्भावस्य। ३६ तद्रूपमुपलम्भरूपम्। ३७ आविर्भावस्य। ३८ साङ्ख्यैः। ३९ न तु व्यङ्ग्यम्। ४० कार्यमेव, न तु व्यङ्ग्यम्। ४१ नन्वात्मलाभ एव घटादेर्नास्तीत्युक्ते आह जैनः।

ति[1]प्रसङ्गात् । तदेवं प्रधानपरिणामतयापीष्टं घटादिकं कार्य[2]द्रव्यमापाद्यते । तस्य च प्रागभावापह्नवेऽनादित्वप्रसङ्गात्कारणव्यापारानर्थक्यं स्यादिति सूक्तं दूषणम् । प्राक्तिरोभावस्योपगमे वा स[3] एव प्रागभावः सिद्धः, तस्य तिरोभाव इति नामान्तरकरणे दोषाभावादुत्पादस्याविर्भाव इति नामान्तरकरणवत् । ततो न मी[4]मांसकस्य सांख्यमतानुसरण युक्त सर्वथा शब्दस्य प्रागभावानभ्युपगमेऽनादित्वप्रसङ्गात् पुरुषव्यापारानर्थक्यस्य समर्थनात् । त[5]था विनाशानभ्युपगमे त[6]स्य किं[7]कृतमश्रवणम् ? स्वावरणकृतमिति चेन्न[8] तत्सारं, त[9]दात्मानमखण्डयतः क[10]स्यचिदावरणत्वायोगात् । तिरोधायकस्य कस्यचिद्वायुविशेषस्य शब्दात्मानं खण्डयत एवावरणत्वे स्वभावभेद[11]प्रसङ्गः, आवृतानावृतस्वभावयोरभेदानुपपत्तेः । तयोरभेदे वा शब्दस्य श्रुतिरश्रुतिर्वेत्येकान्तः प्रसज्येत, पुरुषव्यापारात्पूर्वमश्रुतिस्तदनन्तरं श्रुतिरिति विभागानु[12]पपत्तेः । स्यान्[13]मत, यथा घटादेरात्मानमखण्डयत्तमस्तस्यावरण तथा शब्दस्यापीति, तदसत्, त[14]स्यापि तेनात्मखण्डनोपगमात्, दृश्यस्व[15]भावस्य खण्डनात्तमसस्तदावरणत्वसिद्धेः स[16]र्वस्य परिणामित्वसाधनात् । तमसापि घटादेरखण्डने पूर्ववदुपलब्धिः किन्न भवितुमर्हति, तस्य तेनोपलभ्यतयाप्यखण्डनात् । ननु च पुरुषव्यापारात्प्राक् पश्चाच्च शब्दस्याखण्डितस्वभा[17]वत्वेपि नैकान्ततः श्रुतिः, सहकारि[18]कारणापेक्षत्वात्, स्वविज्ञानोत्पादने तदश्रुतेरपि तद्वै[19]कल्ये संभवादिति चेत् तर्हि किमय शब्दः स्व[20]विषयसंवित्तिकरणे समर्थोऽसमर्थो वा ? स्व[21]संवित्त्युत्पत्तौ कारणान्तर[22]पेक्षा मा भूत् तत्करणसमर्थस्य । अन्यथा स्वयमसमर्थस्य सहकारीन्द्रियमनोभिव्यञ्जकव्यापारलक्षणं किमस्य[23]सामर्थ्य खण्डयत्याहोस्विन्नेति पक्षद्वितयम् । तदसामर्थ्यमखण्डयदकिञ्चित्करं किं सहकारिकारणं स्या[24]त् ? तत्खण्डने वा स्वभावहानिरव्यतिरेकात् । व्यतिरेके व्यपदेशा[25]नुपपत्तिः । इति पूर्व[26]वत्सर्वं, शब्दासामर्थ्ययोः परस्परमनुपकारकत्वाविशेषा[27]त् । शब्दस्य हि तदसामर्थ्येनोपकारः क्रियमाणस्तस्मादभिन्नश्चेत् स एव कृतः स्यादिति तन्नित्यत्वहानिः । भिन्नश्चेत्सम्बन्धासिद्धिः, अनुपकारात् । त[28]दुपकारान्तरे वा स एव पर्यनुयोग इत्यनवस्था प्रधानतत्परिणामव्यतिरेकपक्षवत् । किञ्च वर्णाः सर्वे नित्य[29]सर्वगतास्तद्विपरीता वा ? न तावद्वितीयः पक्षोऽनभ्युप[30]गमात् । प्रथमपक्षे तु वर्णानां व्यापित्वान्नित्यत्वाच्च क्रमश्रुतिरनुपपन्नैव, देशकालकृतक्रमासभवात् । तदभिव्यक्ति[31]प्रतिनियमात्तेषां क्रमश्रुतिरिति चेन्न, अस्मिन्नपि पक्षे स[32]मानकरणानां तादृशा[33]मभिव्यक्तिनियमायोगात् सर्वत्र सर्वदा स[34]र्वेषां सं[35]कुला श्रुतिः स्यात् । स[36]मान हि करणं वर्णाना श्रुतौ श्रोत्रं, नीलपीतादीना रूपविशेषाणां दृष्टौ चक्षुर्वत् । ततस्तेषामेकव्यञ्ज[37]कव्यापारेपि समानदेशका[38]लानां

---

१ शशविषाणस्योपलम्भप्रस[ङ्गा]त् । २ घटादिकम् । ३ तिरोभाव । ४ द्रव्यरूपेणैव पर्यायरूपेणापि । मीमांसकमते शब्दो द्रव्यम् । ५ प्रागभावानभ्युपगमप्रकारेण । ६ शब्दस्य । ७ केन कृतम् । ८ आवरणस्वरूपं ( कर्तृ ) श्रवणस्वरूपं खण्डयदखण्डयद्वेति विकल्प्य दूषयति जैन । ९ यथा वायो । १० आवारकस्य । ११ श्रावणत्वाश्रावणत्वरूपेण । १२ सर्वथा तयोरभेदात् । १३ मीमासकस्य । १४ न केवलं शब्दस्यैव वायुना । १५ घटे । १६ ननु तमो यदि घटादेर्दृश्यस्वभावं खण्डयति तर्हि पश्चात्कथं दीपेन दृश्यते इति शङ्का निराचष्टे भावान्तरस्वभावत्वादभावस्येति । १७ श्रावणत्वरूपेण । १८ सहकारि, ताल्वादि । १९ सहकारिवैकल्ये । २० स्व , शब्दो विषयो यस्या॰ सवित्ते॰ । २१ समर्थपक्षे । २२ कारणान्तर, ताल्वादि । २३ शब्दस्य । २४ अपितु न स्यादेव । २५ शब्दस्य तत्सामर्थ्येन सह भेदे सति शब्दस्येदमसामर्थ्यमिति व्यपदेशो न स्यात् । २६ प्रधानतत्परिणामव्यतिरेकपक्षवत् । २७ प्रधानतत्परिणामाभ्याम् । २८ तस्य, उपकारस्य । २९ नित्या॰ सर्वगता । ३० मीमासकेन । ३१ पूर्वं गकार , गकारानन्तरमेव चौकार इति नियमो, न तु हेलया । ३२ श्रोत्रेणैव शब्दो गृह्यते इति समानं करणं श्रोत्ररूपं येषा ते, तेषाम् । ३३ नित्यसर्वगतानाम् । ३४ शब्दानाम् । ३५ सकीर्णा । ३६ सकीर्णश्रवणमेव दर्शयति । ३७ एकवर्णाभिव्यक्तौ । ३८ शब्दानाम् ।

कथमभिव्यक्तिनियमो नीलादिवत्[1]? क्वचिदेकत्रैकदापि च[2] सर्ववर्णाभिव्यक्तौ सर्वत्र सर्वदाभिव्यक्तिस्तेषां, स्वरूपेणाभिव्यक्तत्वात्, तत्स्वरूपस्य च व्यापिनित्यत्वात्। खण्डशस्तदभिव्यक्तौ वर्णानां व्यक्तेतराकारभेदाद्भेदप्रसक्तेः प्रत्येकमनेकत्वापत्तिरेकानेकात्मकत्वप्रसङ्गो[3] वा। सर्वात्मनाभिव्यक्तौ[4] सर्वदेशकालवर्तिप्राणिनः प्रति तेषामभिव्यक्तत्वात्[5] कथं सर्वत्र सर्वदा सर्वेषां सङ्कुला श्रुतिर्न स्याद्यतः कलकलमात्रं न भवेत्। ननु समानोपादानकारणानामभिन्नदेशकालीनां[6] समानकारणानामुत्पत्तावपि[7] तद्देशकालवर्तिसकलपुरुषाणामविकलसहकारिणां कथं न संकुला श्रुतिः स्यात्, क्रमश्रुतिर्वा न विरुध्येत? इति चेदत्रोच्यते[8], वक्तृश्रोतृविज्ञानयोस्तत्कारणकार्ययोः[9] क्रमवृत्तिमपेक्ष्य परिणामिनां[10] क्रमोत्पत्तिप्रतिपत्त्योर्न[11] किञ्चिद्विरुद्धं पश्यामः[12]। समानेपि हि शब्दानामारम्भकपुद्गले तद्देशकालवर्तिन्युपादाने[13] सहकारिणि[14] च बहिरङ्गे ताल्वादिकरणे वक्तृविज्ञानस्य वर्णोत्पत्तौ सहकारिकारणस्याऽऽन्तरस्य[15] क्रममपेक्ष्य क्रमोत्पत्तौ परिणामिनां न किञ्चिद्विरुद्धं पश्यामः, कारणक्रमानुविधायित्वात्सर्वत्र कार्यक्रमस्य, शश्वदपरिणामिनामेव[16] तथाविरोधदर्शनात्[17]। नापि श्रोतृविज्ञानस्य[18] शब्दकार्यस्य[19] क्रममपेक्ष्य वर्णक्रमप्रतिपत्तौ किञ्चिद्विरुद्धं पश्यामः, प्रमाणक्रमानुविधायित्वात्तत्फलभूतप्रमितिक्रमस्य[20] सततमपरिणामिनामेवात्मनां[21][22] तद्विरोधनिर्णयात्। तन्न संकुला श्रुतिः स्याद्वादिनां प्रसज्येत। सर्वगतानामेषां[23] क्रमो दुष्करः स्यात्। ततः क्रमोत्पत्तिप्रतिपत्त्योरन्यथानुपपत्त्या न सर्वगता वर्णा, नापि नित्याः प्रत्येतव्याः। ननु च नित्या वर्णाः, प्रत्यभिज्ञानादात्मादिवदिति चेत् क्षणिकेष्वेव करणाङ्गहारादिषु[24] प्रत्यभिज्ञानाद्विरुद्धो हेतुः। एतेन[25] बुद्धिभिर्व्यभिचारी च हेतुरुक्तः[26], बुद्धिकर्मभ्यां व्यभिचार[27] इत्यभिधानात्[28]। ननु बुद्धिकर्मणोरपि नित्यत्वोपगमान्नायं दोषः, ते अपि नित्ये इति वचनात्, तथोपगमे विरोधाभावादिति चेत् तत्क्रियैकत्वेपि[29] किमिदानीमनेकं[30] स्यात्? तथा बुद्ध्येकत्वेपि[31] न किञ्चिदनेकं स्यादित्यपि प्रतिपत्तव्यं, सर्ववर्णैकत्वप्रसङ्गात्[32]। शक्यं हि वक्तुम्, अभिव्यञ्जकभेदाद्द्वैरूप्यं[33] जलचन्द्रवत्[34]। क्वचित्प्रत्यक्षविरोधे[35] तदन्यत्राप्यविरोधः[36][37] कुतः? यथैव हि नानादेशजलप्रतिबिम्बितस्य चन्द्रस्यानेकत्वप्रतीतावपि परमार्थतश्चन्द्रैकत्वं तथैव नानादेशव्यञ्जकभेदादकारादिवर्णनानात्वप्रतीतावपि वर्णैकत्वमिति वदतः कः प्रतीघातः? प्रत्यक्षविरोधो वर्णैकत्ववचने स्यान्न पुनः क्रियाद्येकत्ववचने याज्ञिकस्येति[38] कुतो विभागः सिध्येत्? ततो[39] वर्णाद्वैतमनिच्छता न करणाङ्गहा-

---

१ हे मीमांसक यथा चित्ररूपग्रहणे नीलादिवर्णान् युगपद्गृह्णाति जनस्तद्वत्। २ हेत्वन्तरमिदम्। ३ वर्णत्वेनैकात्मकत्वं व्यक्ताव्यक्तरूपेणानेकात्मकत्वम्। ४ खण्डशो नाभिव्यक्तिः किन्तु सर्वात्मनेत्युक्तावाह जैनः। ५ सर्वदेशवर्तिनः प्रति सर्वदेशव्यापकत्वेन हेतुना, सर्वकालवर्तिनस्तु प्रति नित्यत्वहेतुनाभिव्यक्तिः स्यात्। ६ समानोपादानकारणत्वादेव। ७ जैनानामुत्पत्तिपक्षेपि। ८ इति मीमांसकेन दत्तं दूषणं जैनाः परिहरन्ति। ९ शब्दकारणकार्ययोः (वस०)। १० शब्दलक्षणपर्यायवतां पुद्गलानाम्। ११ सप्तमी। १२ जैनाः। १३ तौ, विवक्षितौ देशकालौ। १४ इन्द्रियाणि सहकारीणि। १५ शब्दोत्पत्तौ वक्तृविज्ञानं सहकारि कारणम्। १६ ननु कारणस्य क्रम एव नास्तीति कार्यं कथमनुकुर्यादित्युक्ते प्राह जैनः। १७ क्रमोत्पत्तिप्रकारेण। १८ प्रमाणरूपस्य। १९ तासः (षष्ठीतत्पुरुषः)। २० प्रमाणं श्रोतृविज्ञानं तत्फलं च शब्दस्य प्रमितिः। २१ ननु प्रमाणस्य क्रम एव नास्ति तत्कथं तं प्रमितिरनुविधत्ते इत्याह। २२ आत्मानमिति कपाठ, खपाठस्तु आत्मनामिति। २३ वर्णानामुत्पत्तिप्रतिपत्त्योः सम्बन्धी क्रमः। २४ अङ्गहारोङ्गविक्षेपः। २५ अङ्गहारादिषु विरुद्धत्वप्रकारेण। २६ प्रत्यभिज्ञानादिति। २७ हेतोः। २८ जैनग्रन्थे। २९ सैवेयं क्रिया तत्क्रिया तस्या एकत्वं नित्यता तस्मिन्। ३० अनित्यम्। ३१ (कर्मणो नित्यत्वे दोषमापाद्य बुद्ध्येकत्वे दोषमुद्दीपयति)। ३२ न किञ्चिदनेकमिति प्रतिपन्नत्वे सति। ३३ नानात्वम्। ३४ पयोभृतकुण्डादिव्यञ्जकभेदाच्चन्द्रस्य नानात्वं यथा। ३५ वर्णैकत्वे। ३६ क्रियैकत्वे। ३७ हेतोः। ३८ मीमांसकस्य। ३९ प्रत्यक्षविरोधात्।

रादिक्रियैका वक्तव्या, येन शब्दस्य नित्यत्वसाधने प्रत्यभिज्ञानं विरुद्धं न स्यात् । [१]तद[२]यं ताल्वादिव्यापारजनितश्रावणस्वभावं परित्यज्य वि[३]परीतस्वभावमासादयन्नपि नित्यश्चेन्न किञ्चिदनित्यम् । तदे[४]वमकारादिवर्णस्त्रिजगत्यामेक एवेत्यपि निरस्तं, [५]युगपद्भिन्नदेश[६]स्वभावोपलब्धेर्घटा[७]दिवत् । भानुनानेकान्त इति चेन्न, तस्य सकृद्भिन्नदेश[८]तयोपलब्धावपि भिन्नस्वभावतयोपलब्ध्यभावात् । प्रत्यासन्नेतरदेशप्रतिपत्तृजनानां स्पष्टेतरादिभिन्नस्वभावतयोपलभ्यमानेनैकपादपेन व्यभिचार इति चेन्न, तस्य भिन्नदेशतयानुपलब्धेः । नयनावरणविशेषवशात्सकृद्भिन्नदेशस्वभावतयोपलभ्यमानेन चन्द्रद्वयेन व्यभिचार इति चेन्न, भ्रान्तोपलम्भेनाभ्रान्तोपलम्भस्य व्यभिचारायोगादन्यथा सर्वहेतूनामव्यभिचारासं[९]भवात् । न च शब्दस्यापि सकृद्भिन्नदेशस्वभावतयोपलम्भो भ्रान्तः, सर्वदा बाधकाभावात् । [१०]युगपत्प्रतिनियतदे[११]शमन्द्रतारश्रुतेः कस्यचिदे[१२]कत्वे न क्वचिदनेकत्वसिद्धिः । स एवायमकार इति [१३]प्रत्यवमर्शादकारादेरेकत्वेऽङ्गहारादिक्रियाविशेषस्याप्येकत्वमस्तु स एवायमङ्गहारादिरिति प्रत्यवमर्शात् । तथा सर्वस्यार्थविशेषस्या[१४]पि । न हि [१५]कथ[१६]ञ्चित्क्वचित्प्रत्यवमर्शो न स्याद्वर्णवत् । [१७]तच्छेपविशेषबुद्धेरभिव्यञ्जकहेतुत्वप्र[१८]क्लृप्तौ स[१९]र्वं समञ्जसं प्रे[२०]क्षामहे, सर्वस्याङ्गहारादेरपि देशादिविशेषबुद्धेरभि[२१]व्यञ्जकहेतुत्वप्र[२२]क्लृप्तेः कर्तुं सुशकत्वात् । [२३]तदेतेषां[२४] पुद्गलानां करणसन्निपातोपनिपाते श्रावणस्वभावः [२५]शब्दः पूर्वापरकोट्योरसन् प्रयत्ना[२६]नन्तरीयको घटादिवदिति प्रतिपत्तव्यं, न पुनः प्राक् पश्चाच्च सन्नेवापौरुषेय इति । तस्य प्रागभाववत्प्रध्वंसस्यापि न प्रच्यवः श्रेयान् । [२७]ननु शब्दस्य पुद्गलपर्यायत्वे चक्षुषोपलम्भप्रसङ्गः, "स्पर्शरसगन्धवर्णवन्तः पुद्गलाः" इति वचनात्, अन्यथा[२८] सिद्धान्तविरोधादिति चेन्न, गन्धपरमाणुभि[२९]र्व्यभिचारात् । पुद्गलपर्याय[३०]त्वस्य गन्धपरमाणूनामदृश्यत्वान्न दर्शनमिति चेच्छब्दपुद्गलानामपि तत एव तन्मा भूत् । अथ मतमेतत्, चक्षुषोपलभ्योस्तु शब्दः, पुद्गलस्कन्धस्वभावत्वाद्घटवदिति, तदप्यपेशलं, गन्धस्यापि चक्षुरुपलभ्यत्वप्रसङ्गात्तत एव । अथ तस्यानुद्भूतरूपपुद्गलस्कन्धस्वभावत्वाच्चक्षुरुपलम्भताऽयोग्यत्वाच्च न चक्षुषा दर्शनम् । [३०]तत एव शब्दस्य तन्मा भूत् । शब्दपरमाणूनां ताल्वादिजनित[व]च्चनप्रेरितानां विस्ता[३१]रप्रसङ्ग इति चेन्न, गन्धप[३२]रमाणूनामपि तत्प्रसङ्गात् । तेषां गन्धद्र[३३]व्यस्कन्धपरिणतत्वान्न वच्चनप्रेरितानामपि विस्तारः शरीरवदिति चेत्तर्हि शब्दपरमाणूनामपि शब्दस्कन्धपरिणतत्वात्कुतो विस्तारप्रसङ्गः? [३४]तत एव न [३५]विक्षेपो गन्धपरमाणुवत् तेषां[३६] [३७]बन्धविशेषात्स्कन्धपरिणामसिद्धेः । मूर्तद्रव्येण प्रतिघातस्तेषां स्यादिति चेन्न गन्धपर-

---

१ तत् तस्मात् । प्रत्यभिज्ञानरूपो हेतुर्व्यभिचारी यत इत्यर्थः । २ अकारादिवर्णः । ३ अश्रावणत्वस्वभावम् । ४ नित्यत्वनिराकरणात् । ५ एकघटेन व्यभिचारपरिहारार्थं युगपत्पदोपादानम् । ६ उदात्तादिः स्वभावः । ७ यथा घटो नैको, युगपद्भिन्नदेशस्वभावोपलब्धेः । ८ अनेकपुरुषापेक्षया । ९ गोपालघटिकादौ धूमवत्त्वस्य भ्रान्तत्वेन व्यभिचारदर्शनात्, पर्वतधूमस्यापि व्यभिचारदर्शनप्रसङ्गात् । १० सर्वदा बाधकाभावश्च स्याद्भ्रान्तत्वं च स्यादिति सन्दिग्धतां परिहरन्नाह । ११ मन्द्रा ( उदात्ता ) तारा ( अनुदात्ता ) च श्रुतिर्यस्य स तस्य, शब्दस्य । १२ नित्यत्वे । १३ प्रत्यभिज्ञानात् । १४ एकत्वमस्तु । १५ सद्रूपापेक्षया । १६ घटादौ । १७ युगपत्प्रतिनियतदेशमन्द्रतारश्रुतेरभिव्यञ्जकहेतुत्वान्न ततः शब्दस्यानेकत्वसिद्धिरित्याशङ्कायामाहुस्तच्छेपेति । तस्माद्वर्णत्वाच्छेपोऽन्यो भिन्नदेशस्वभावलक्षणः । स चासौ विशेषश्च । तद्ग्राहिका बुद्धिः । १८ समर्थनायाम् । १९ शब्दवदङ्गहारादि । २० जैनाः । २१ एकनित्याङ्गहारादेरपि हस्तपादादयोऽभिव्यञ्जका इति । २२ नियमस्य । २३ वर्णानामनेकत्वं सिद्धं यतः । २४ शब्दरूपतया परिणमनयोग्यानाम् । २५ श्रोत्रग्रहणयोग्यपर्यायः । २६ प्रयत्नानन्तरे भवः । २७ नैयायिकः । २८ शब्दस्य स्पर्शादिसत्त्वाभावे । २९ हेतोः । ३० हेतुद्वयात् । ३१ स्वविसर्पणमर्यादामुल्लङ्घ्यापि । ३२ पवनप्रेरितानाम् । ३३ गन्धद्रव्यं कस्तूरिकादि । ३४ शब्दपरमाणूनां शब्दस्कन्धपरिणतत्वादेव । ३५ ( विकीर्णता ) । ३६ शब्दपरमाणूनां स्कन्धपरिणतत्वमसिद्धमित्युक्ते आह जैनः । ३७ बन्धगुणत्वात् ।

माणूनामपि तदनुषङ्गात् । कुड्या[1]दिनास्त्येव तत्प्रतिघात इति चेच्छब्दपरमाणुप्रतिघातोपि । मूर्तिमद्भिः शब्दपरमाणुभिः स्कन्धपरिणतैः श्रोतृकर्णपूरणप्रसङ्ग इति चेन्न, गन्धपरमाणुभिरपि घ्राणपूरणप्रसङ्गात् स्कन्धपरिणामाविशेषात् । नन्वेकश्रोत्रप्रवेशाद्योग्यदेशस्थितैरपि श्रोत्रऽन्तरैः शब्दस्याश्रवणप्रसङ्ग इति चेन्न, एकघ्राणप्रवेशात्प्रतिपन्नन्तराणां योग्यदेशस्थानामपि गन्धस्याप्यघ्राणप्रसङ्गात् । गन्धपरमाणूनां सदृशपरिणामभाजां समन्ततः प्रसर्पणाददोष इति चेत्तर्हि शब्दपरमाणूनामपि समानपरिणामभृतां नानादिक्तया विसर्पणात्स दोषो मा भूत् । शब्दस्यागमनादीनामदृष्टानामपि कल्पनाप्रसङ्ग इति चेद्गन्धपरमाणूनामपि । अथैषां प्रतिपत्तिविशेषान्यथानुपपत्त्या निश्चयनान्नागमनादीनामदृष्टपरिकल्पनेति चेच्छब्दपुद्गलानामपि यथा यत्र यदा यावतां प्रतिपत्तॄणामुपलब्धिस्तथा तत्र तदा तावतामुपलब्धियोग्यपरिणामविशेषोपगमात् । तदे[2]व शब्दस्य **पुद्गलस्वभावत्वे दर्शनविस्तारविक्षेपप्रतिघातकर्णपूरणैकश्रोत्रप्रवेशाद्युपालम्भो गन्धपरमाणुकृतप्रतिवि[3]धानतयोपेक्षामर्हति** । ननु च न पुद्गलस्वभावः शब्दः, अस्पर्शत्वात् सुखादिवदिति बाधकसद्भावान्न पुद्गलस्वभावत्वं शब्दस्येति चेन्न, हेतोरसिद्धत्वात् यतः **कर्णशष्कुल्यां कटकटायमानस्य प्रायशः प्रति[4]घातहेतोर्भवनाद्युपघा[5]तिनः शब्दस्य प्र[6]सिद्धिरस्पर्शत्वकल्पनामस्तङ्गमयति** । ननु च न पुद्गलस्वभावः शब्दः, निश्छिद्रभवनाभ्यन्तरतो निर्गमनात्, त[7]त्र बाह्यतः प्रवेशाद्व्यवधायकाक्लेदनादेश्च दर्शनात्, यस्तु पुद्गलस्वभावो, न तस्यैवं दर्शनं, यथा लोष्ठादेः, तथा दर्शनं च शब्दस्य, ततो न पुद्गलस्वभावत्वमिति चेन्न, पुद्गलस्वभावत्वेपि त[8]दविरोधात् । तस्य हि **निश्छिद्रनिर्गमनादयः सूक्ष्मस्वभावत्वात् स्नेहादिस्पर्शादिवन्न विरुध्येरन्** । कथमन्य[9]था पिहितताम्रकलशाभ्यन्तरात्तैलजलादेर्बहिर्निर्गमनं स्निग्धतादिविशेषदर्शनादनुमीयेत ? कथं वा पिहितनिश्छिद्रमृद्घटादेः सलिलाभ्यन्तरनिहितस्यान्तःशीतस्पर्शोपलम्भात्सलिलप्रवेशोनुमीयेत ? तदभेदनादिकं वा तस्य निश्छिद्रतयेक्षणात्कथमुत्प्रेक्षेत ? ततो निश्छिद्रनिर्गमनादिः स्नेहादिस्पर्शादिभिर्व्यभिचारी, न सम्यग्घेतुर्यतः शब्दस्य पुद्गलस्वभावत्वं प्रतिक्षिपेत्, त[11]स्य पुद्गलस्वभावत्वनिर्णयात्सर्वथाप्यविरोधात् । अ[12]तो य[13]त्न**जनितवर्णाद्यात्मा श्रावणमध्य[14]स्वभावः प्राक् पश्चादपि पुद्गलानां नास्तीति ता[15]वानेव ध्वनिपरिणामः सर्वैरभ्युपगन्तव्यः**, तस्य स[16]कलकालकलाव्यापित्वे मध्यवत्प्राक् पश्चाच्च श्रावणस्वभावत्वप्रसङ्गात् प्रयत्नजनितवर्णपदवाक्यात्मकै[17]त्वायोगात् । **त[18]त्प्राक्प्रध्वंसाभावप्रतिक्षेपे कौटस्थ्यं क्रमयौगपद्याभ्यां स्वा[19]कारज्ञानाद्यर्थक्रियां व्यावर्तयतीति निरुपाख्यमित्यभिप्रायः** श्रीस्वामिसमन्तभद्राचार्याणां, प्राक्प्रध्वंसाभावप्रतिक्षेपस्य कौटस्थ्येन व्याप्तत्वात्, त[20]स्य च क्रमयौगपद्याभावेन[21], तत्र तद्विरोधात्, त[22]स्यापि स्वाकारज्ञानाद्यर्थक्रियाव्यावर्तनेन[23], त[24]स्य च निरुपाख्यत्वेन[25], सर्वथानर्थक्रियाकारिणः सकलवाग्विकल्पेभ्यो

---

१ भित्त्यादिना । २ पूर्वोक्तप्रकारेण । ३ ( प्रत्युत्तरतया ) । ४ गृहे वातायनजालिकादिरहितत्वं प्रतिघातहेतुः । ५ भवनादिनोपघातो यस्य । ६ एकस्मिन्पुरुषे सोल्लुण्ठनं पठ्यमानेन्यस्य शनैः पठ्यमानस्य । ७ अभ्यन्तरे । ८ तस्य, निश्छिद्रभवनान्निर्गमनस्य तत्र प्रवेशस्य च । ९ बहिर्निर्गमने स्नेहादिर्दृष्टान्त स्पर्शादिस्तु अन्तःप्रवेशे ज्ञेयः । १० पुद्गलस्वभावो यदि बहिर्निर्गमनमन्तःप्रवेशं च न कुर्यात्तदा । ११ शब्दस्य । १२ अविरोधात् । पौद्गलिकः शब्दः कियत्कालं तिष्ठतीति प्रश्ने प्राहेदं जैनः । १३ यत्नस्ताल्वादि । १४ श्रावणवर्तमानस्वभाव इत्यर्थः । १५ यावच्छ्रवणस्वभाव । १६ कालकला, समय । १७ ताल्वादिजनितवर्णादय स्वरूपं यस्य । १८ तस्य शब्दस्य । १९ स्वाकार, शब्दाकार । २० कौटस्थ्यस्य । २१ ( कौटस्थ्यस्य च क्रमयौगपद्याभावेन व्याप्तत्वात्, यतस्तत्र कौटस्थ्ये तस्य क्रमयौगपद्यस्य विरोधोस्ति, कथञ्चिदनित्यस्यैव क्रमयौगपद्येन व्याप्तत्वात् ) । २२ क्रमयौगपद्याभावस्य । २३ व्याप्तत्वात् । २४ स्वाकारज्ञानाद्यर्थक्रियाव्यावर्तनस्य । २५ व्याप्तत्वात् ।

निष्क्रान्तत्वात् । स्यादाकूतं[1], वर्णानामानुपूर्व्यपौरुषेयीष्यते, तस्या एव प्राक्प्रध्वंसाभावानभ्युपगमात् । ततो नोपालम्भः श्रेयानिति, तदप्ययुक्तं, वर्णव्यतिरेकानुपूर्व्यसंभवात् । कथञ्चित्क्रियमाणामपि तदानुपूर्वीकल्पनां विस्तरेण प्रतिक्षेप्स्यामः, "वक्तर्यऽनाप्ते" इत्यत्र तत्प्रतिक्षेपविस्तारवचनात् । तदिह पर्याप्तं,—[2]तत्प्रबन्धेन सर्वथा प्राक्प्रध्वंसाभावनिह्नवे यथानिगदितदूषणगणप्रसङ्गस्य परिहरणासंभवात् ।

अथेतरेतराभावात्यन्ताभावानभ्युपगमवादिनां[3] दूषणमुद्भावयिषवः प्राहुराचार्याः ।—

**सर्वात्मकं तदेकं[4] स्यादन्यापोह[5]व्यतिक्रमे[6] । अन्यत्र[7]समवाये न व्यपदिश्येत सर्वथा ॥ ११ ॥**

तदित्यनेन सर्वप्रवादिनामिष्टं तत्त्वं परामृश्यते । तदेकं सर्वात्मकं स्यात्, अनिष्टात्मनापि भावादन्यापोहस्य व्यतिक्रमे । स्वसमवायिनः[8] समवाय्यन्तरे समवायोन्यत्रसमवायः, अत्यन्ताभावव्यतिक्रमः । तस्मिन् सर्वस्येष्टं[9] तत्त्वं सर्वथा न व्यपदिश्येत, स्वेष्टात्मना व्यपदेशेऽनिष्टात्मनोपि व्यपदेशप्रसङ्गात्, तेनां[10]व्यपदेशे स्वेष्टात्मनाप्यव्यपदेशापत्तेः स्वयमि[11]ष्टानिष्टात्मनोः कालत्रयेपि विशेषानुपगमात्[12] । कः पुनरन्यापोहो नाम ?

स्वभावान्तरात्[13]स्वभावव्यावृत्तिरन्यापोहः । स्वभावान्तरादिति वचनान्न स्वस्वभावाद्व्यावृत्तिरन्यापोहः, तस्याः[14] स्वापोहत्व[15]प्रसङ्गात् । अथापि[16] प्रागभावप्रध्वंसाभावयोरन्यापोहत्वप्रसक्तिरिति चेन्न, कार्यद्रव्यात्पूर्वोत्तरपरिणामयोः[17] स्वभावान्तरत्वेपि तस्य[18] तद्व्यावृत्ते[19]र्विशिष्टत्वात् । यदभावे[20] हि नियमतः कार्यस्योत्पत्तिः स प्रागभावः, यद्भावे च कार्यस्य नियता विपत्तिः स प्रध्वंसः । न चेतरेतराभावस्याभावे भावे च कार्यस्योत्पत्तिर्विपत्तिर्वा, जलस्या[21]भावेप्यनलस्यानुत्पत्तेः क्वचित्तद्भावे[22] च तस्या[23]ऽविपत्तेः[24] । क्वचिदन्धकारस्याभावे रूपज्ञानोत्पत्तेः स प्रागभावस्तस्य स्यादिति न मन्तव्यं, नियमग्रहणात् केषाञ्चिदन्धकारेपि रूपज्ञानोत्पत्तेः । तत एव नान्धकारं रूपज्ञानस्य प्रध्वंसः, तद्भावे[25] नियमतस्तद्विपत्त्य[26]प्रतीतेः । ततः सूक्तमन्यापोहलक्षण स्वभावान्तरात्स्वभावव्यावृत्तिरन्यापोह इति, तस्य[27] कालत्रयापेक्षेऽत्यन्ताभावेप्यभावादतिव्याप्त्ययोगात् । न हि घटपटयोरितरेतराभावः कालत्रयापेक्षः, कदाचित्पटस्यापि घटत्वपरिणामसंभवात्, तथा परिणामकारणसाकल्ये तद्[28]विरोधात्, पुद्गलपरिणामानियमदर्शनात्[29] । न चैव चेतनाचेतनयोः कदाचित्तादात्म्यपरिणामः, तत्त्व[30]विरोधात् । नन्वि[31]तरेतराभावस्य व्यतिक्रमे चार्वाकस्य पृथिवीतत्त्वं सकलजलाद्यात्मकमनुपज्यतां, सांख्यस्य च महदादिपरिणामात्मकमशेषतस्तदस्तु । सौगतानां तु विज्ञानमात्रमुपयतां किं[32] किमात्मकं स्यादिति कश्चित्सोपि न विपश्चित् । सौगतानामपि हि संविदो[33] ग्राह्याकारा[34]त्कथञ्चि[35]द्व्यावृत्तावनेकान्त[36]सिद्धिरन्यथा[37] संबन्धासिद्धिः, सर्वथा व्यावृत्तौ

---

१ मीमांसकस्य । २ शब्दनित्यत्वनिराकरणप्रबन्धेन । ३ बौद्धसांख्यादीनाम् । ४ इष्टं तत्त्वम् । ५ अन्यापोह, इतरेतराभाव । ६ निह्नवे । ७ अन्यत्र समवाये इति कोर्थ ? अत्यन्ताभावनिह्नवे । अन्यत्र प्रधाने चैतन्यस्य समवायेङ्गीक्रियमाणे चेतनोयमचेतनोयमिति तदेकमिष्टं तत्त्व सर्वथा भेदेन न व्यपदिश्येत । ८ स्वस्य चैतन्यस्य समवायोस्तीति समवाय्यात्मा । तस्मात् । ९ प्रधानादौ । १० अनिष्टात्मना । ११ स्वरूपेण । १२ यत एकत्रापरस्यात्यन्ताभावो व्यतिक्रान्त । १३ यथा वर्तमाने घटस्वभावात्पटस्वभावस्य व्यावृत्ति । १४ स्वस्वभावव्यावृत्ते । १५ स्वस्वभावस्य व्यावृत्तौ घटादेर्निरुपाख्यत्वं स्यात । १६ तथापीति स्वपुस्तकपाठ । १७ प्रागभावप्रध्वंसाभावरूपयो । १८ कार्यद्रव्यस्य । १९ पूर्वोत्तरपरिणामव्यावृत्तेः (न चेतरेतराभावे व्यावृत्तिवैशिष्ट्यं संभवति) । २० पूर्वोक्त व्यावृत्तिवैशिष्ट्यं विवृणोति । २१ (इतरेतराभावरूपयोर्जलानलयोर्मध्ये) । २२ जलसत्त्वे । २३ अनलस्य । २४ इति प्राक्प्रध्वंसाभावलक्षणाभावाज्जलानलयोरितरेतराभावरूपतैव, न प्राक्प्रध्वंसाभावरूपता) । २५ अन्धकारसद्भावे । २६ तस्य रूपज्ञानस्य । २७ एतल्लक्षणस्य । २८ तस्मिन्, पटस्य घटत्वपरिणामे विरोधाभावात् । २९ इन्दुकान्तात्मकपृथिव्याः सकाशादपामुत्पत्तिदर्शनात्, अद्भ्यो मुक्ताफलादिरूपपृथिव्या उत्पत्तिदर्शनात्, सूर्यकान्ताख्यपृथिव्या अग्नेरुत्पत्तिदर्शनात्, अग्नितो वाऽञ्जनादिपृथिव्युत्पत्तिदर्शनात् । ३० तत्त्वान्तरत्वविरोधादित्यर्थः । ३१ सौगत शङ्कते । ३२ (किं वस्तु किमात्मकं किंस्वरूपं स्यात्) । ३३ ता । ३४ नीलाद्याकारात् । ३५ नीलादिविशेषाकारतया । ३६ द्वैतापत्तिः । ३७ सर्वथा भेदे ।

संविद्ग्राह्याकारयोरुपकार्योपकारकभावानभ्युपगमात्सम्बन्धान्तराभावात्[1]। अव्यावृत्तावन्यतरस्वभावहानेर्न किञ्चित्स्यात्। सविदो ग्राह्याकारेनुप्रवेशे ग्राह्याकार एव स्यान्न संविदाकारः। तथा च[3] तस्याप्यभावः[4], संविदभावे ग्राह्याकारायोगात्[5]। ग्राह्याकारस्य वा सविद्यऽनुप्रवेशे संविदेव, न ग्राह्याकारः स्यात्, कस्यचित्संवेदनमात्रस्य विषयाकारविकलस्यानुपलब्धेः। ननु च 'नान्योऽनुभाव्यो[6] बुद्ध्यास्ति[7] तस्या[8] नानुभवोऽपरः[9]। ग्राह्यग्राहकवैधुर्यात्स्वयं सैव प्रकाशते' इति चेन्न, एवमपि संवित्तेः[10] स्वलक्षणप्रत्यक्षवृत्तावपि संवेद्याकारविवेकस्वभावान्तरानुपलब्धेः स्वभावव्यावृत्तिः स्वभावान्तरोत्सिद्धेति[12] कथं तल्लक्षणान्यापोह[13]व्यतिक्रमः सौगतस्य शक्यः कर्तुम्? चित्रैकज्ञानवादिनः[14] पुनः शबलविषयनिर्भासेपि[15] लोहितादीनां[16] परस्परव्यावृत्तिरभ्युपगमनीया, अन्यथा चित्रप्रतिभासासंभवात्तदन्यतमवत्[17], तदालम्बनस्यापि[18] नीलादेरभेदस्वभावत्वापत्तेर्नीलाद्यन्यतमवत्[19]। प्रतिभासभेदाभावेपि नीलादेर्भेदव्यवस्थितौ न किञ्चिदभिन्नमेकं स्यात्, निरंशस्वलक्षण[21]स्याप्यनेकत्वप्रसक्तेः। ततः पीतादिविषयस्वरूपभेदमन्विच्छता तत्प्रतिभासभेदोऽनेकविज्ञानवदेकचित्रज्ञानेप्येष्टव्यः[22]। तदिष्टौ च स्वभावान्तरात्स्वभावव्यावृत्तिः पारमार्थिकी सिध्यतीति सिद्धस्तल्लक्षणोन्यापोहः। तथा[23] चित्रज्ञानस्य[24] स्वनिर्भासेभ्यो लोहितादिभ्यो[25] विषयस्य च चित्रपटादेः स्वाकारेभ्यो नीलादिभ्यो व्यावृत्तिः सिद्धा। कुतः प्रमाणादिति चेत्, तद्वतस्तेभ्यो[26] व्यावृत्तिः, एकानेकस्वभावत्वाद् घटरूपादिवदित्यनुमानात्[27]। न हि लोहितादिनिर्भासा एव नीलाद्याकारा एव वानेकस्वभावा, न पुनरेकस्वभावं[28] तद्वेदनं बहिर्द्रव्यं चेति शक्यं वक्तुं, यतोऽसिद्धो हेतुः[29] स्यात्, तस्याप्यबाधितप्रतीतिसिद्धत्वात्। अन्यथा[30] द्रव्यमेव स्यान्न रूपादयः। एतेन[31] चित्रज्ञानमेव स्यान्न तल्लोहितादिनिर्भासा इत्युपदर्शितम्। शक्यं हि वक्तुं, स्वभावैकत्वेपि निर्भासवैलक्षण्यं करणसामग्रीभेदमनुविदध्याद्, दूरासन्नैकार्थोपनिबद्धनानादर्शननिर्भासवत्[32]। यथैव हि चित्रपटादिद्रव्यमेकस्वभावमपि चक्षुरादिकरणसामग्रीभेदाद्रूपादिविलक्षणाकारं, तदनुविधानात्[33] तथा चित्रज्ञानमपि नानान्तःकरणवासनासामग्रीभेदाद्विलक्षणलोहितादिनिर्भासम्[34]। तथानभ्युपगमे प्रतिपुरुषं विषयस्वभावभेदो वा[35] सामग्रीसंबन्धभेदात्[36]। कचिदेकत्रार्थे[37] दूरस्थपुरुषस्यान्यो हि दूरे[38] देशसामग्रीसंबन्धोन्यश्चासन्नदेशसामग्रीसंबन्धः। इति दूरासन्नानामेकत्र वस्तुन्युपनिबद्धनानादर्शनानां पुरुषाणां निर्भासभेदात्तद्विषयस्य वस्तु-

---

१ उपकार्योपकारकभावसम्बन्धमन्तरा समवायादिसम्बन्धान्तरस्याभावात्। २ (वृत्तिं विवृण्वन्नभेदपक्षं दूषयति)। ग्राह्याकारविषये। ३ ग्राहकाकारस्याभावे। ४ ग्राह्याकारस्य। ५ (ग्राह्याकाराभावे संविदोऽप्यभाव इत्युपरिष्टाज्ज्ञेयमत्र। अत्रैव हेतुमाह कस्यचिदित्यादि)। ६ ग्राह्य। ७ फलरूपाया बुद्धेः। ८ ग्राहकः। ९ तस्या बुद्धेर्ग्राहकोऽपरोनुभवो नास्ति। एतेन बुद्धेर्ग्राह्याकारो निरस्तः। १० निर्विकल्पकसवित्। ११ यसः। १२ (संविद्याकारः संवित्, न संवेद्याकारः संविदिति संवेद्याकारात्स्वभावान्तरात्स्वभावरूपस्य संविद्याकारस्य व्यावृत्तिः सिद्धा)। १३ तत्, स्वभावान्तरात्स्वभावव्यावृत्तिरिति लक्षणं यस्य। १४ यौगाचारस्य। १५ विषयस्य निर्भासो विषयनिर्भासः। शबलो विषयनिर्भासो यस्मिन्। चित्रज्ञाने इत्यर्थः। १६ ज्ञानाकाराणाम्। १७ लोहितादीनां मध्ये एकस्य चित्रज्ञानव्यपदेशो नास्ति यथा। विषयिणमपेक्ष्यायं दृष्टान्तः। १८ चित्रज्ञानालम्बनस्य। १९ विषयापेक्षोयं दृष्टान्तः। २० प्रतिभासासंभवादिति हेतोः सन्दिग्धानैकान्तिकत्वं परिहरति। २१ प्रत्यक्षस्य। २२ ज्ञानगतानां पदार्थानां परस्परं भेदप्रकारेण। २३ ज्ञानाकारेभ्यः। २४ चित्रपटादिविषयवतश्चित्रज्ञानस्य। २५ लोहितादिभ्यः। २६ अस्त्यर्थे वत्प्रत्ययः। (नीलादिवतश्चित्रपटादेरेकस्य वेदनमित्यर्थः)। २७ एकानेकस्वभावत्वादिति। २८ न केवलं भिन्नप्रतिभासानां किन्तु तस्य तद्वद्वेदनस्य बहिर्द्रव्यस्यापि च। २९ अबाधितप्रतीतिसिद्धत्वेपि न तद्वद्वेदनं बहिर्द्रव्यं वेति वक्तुं शक्यं यदि। ३० अनेकस्वभावं घटादिद्रव्यमेव नेतरे रूपादयस्तद्व्यतिरिक्ता इति दृष्टान्तेन। ३१ द्रव्यचित्रज्ञानयोः। ३२ दूरासन्नानां नराणाम्। ३३ चक्षुराद्यन्वयव्यतिरेकानुविधानात्। ३४ नानापुरुषापेक्षया। ३५ वा, अथवा प्रतिपुरुषं विषयस्वभावभेदः संपद्यते। ३६ इत्युक्ते च जैनाभिमतमेवायातम्। ३७ प्रदेशे। ३८ वृक्षादौ।

नोपि स्व[1]भावभेदोस्तु, विशेषा[2]भावात्, करणसामग्रीभेदवद्दूरादिदेशसामग्रीसंबन्धभेदस्यापि विषयस्वभावभेदमन्तरेणानुपपत्तेः । ततोन्तर्बहिश्च स्वभावभेदै[3]कान्तसिद्धेर्न क्वचिदेकत्वव्यवस्था । अन्यथा निर्भासभेदेपि क[4]स्यचिदेकरूपतोपगमे न केवलं रूपादे[5]रभेदः । किं तर्हि ? कस्यचित्क्रमशः संबन्ध्य[6]न्तरोपनिपातोपि स्वभावं न भेदयेत् । ततः क्रमवन्त्यपि का[7]र्याणि तत्स्वभावभेदं नानुमापयेयुः, क्रमशः सुखादिकार्यभेदस्य साधनधर्म[8]स्य क्वचिदे[9]कत्र स[10]मानसंबन्धोपनीतनिर्भासभेदेन व्यभिचारात् । न चैवं शक्यम[11]भ्युपगन्तुम् । ततो यावन्ति सं[12]बन्ध्यन्तराणि तावन्तः प्रत्येकं भावस्वभावभेदाः परस्परव्यावृत्ताः स[13]ह क्रमेण च प्रतिपत्तव्याः । ननु च सर्वथा संबन्धासंभवाद्भावानां पारतन्त्र्यानुपपत्तेः " पारतन्त्र्यं हि संबन्धः सिद्धे का परतन्त्रता । तस्मात्सर्वस्य भावस्य संबन्धो नास्ति तत्त्वतः " इत्यादिवचनान्न कस्यचित्संबन्ध्यन्तराणि स्वभावभेदनिबन्धनानि सन्तीति चेन्न, द्रव्यक्षेत्रकालभावप्रत्यासत्तिलक्षणस्य संबन्धस्य निराकर्तुमशक्तेः । न हि कस्यचित्केनचित्साक्षात्परम्परया वा संबन्धो नास्तीति[14], निरुपाख्यत्वप्रसङ्गात् । गु[15]णगुणिनोः पर्यायतद्वतोश्च साक्षादवि[16]ष्वग्भावाख्यसमवायासत्त्वे स्वतन्त्रस्य गुणस्य पर्यायस्य वाऽसत्त्वप्रसङ्गात् सकलगुणपर्यायरहितस्य द्रव्यस्याप्यसत्त्वापत्तिरिति त[17]योर्निरुपाख्यत्वम् । गुणानां पर्यायाणां च परस्परं स्वाश्रयैकद्रव्यसमवायसंबन्धाभावे[18]ऽनेन निरुपाख्यत्वं प्रतिपादितम् । चक्षूरूपयोः परम्परया क्षेत्रप्रत्यासत्तेरसत्त्वे योग्यदेशेप्ययोग्यदेशवद्रूपे चक्षुर्ज्ञानं न जनयेत् । ततस्त[19]द्ग्राहकानुमानोसत्त्वादसत्त्वप्रस[20]ङ्गो, रूपस्यापि चेन्द्रियप्रत्यक्षासत्त्वादसत्त्वप्रसक्तिः । इत्यु[21]भयोर्निरुपाख्यत्वम् । तथा कारणकार्यपरिणामयोः कालप्रत्यासत्तेरसत्त्वेऽनभिमतकालयोरिवाभिमतकालयोरपि कार्यकारणभावासत्त्वादुभयोर्निरुपाख्यतापत्तिः । तथा व्याप्तिव्यवहारकालवर्तिनोर्धूमादिलिङ्गाग्न्यादिलिङ्गिनोर्भावप्रत्यासत्त्यसत्त्वे क्वचित्पावकादिलिङ्गिनि ततोनुमानायोगादनुमानानुमेययोरसत्त्वप्रसङ्गान्निरुपाख्यत्वप्रसङ्गः । किं बहुना, संवेदनस्य कस्यचित्केनचिद्वेद्याद्याकारेण प्रत्यासत्तेरसत्त्वे ते[23]उभयोरसत्त्वान्निरुपाख्यत्वम् । त[24]त्प्रत्यासत्तिसद्भावे वा सिद्धश्चतुर्धापि संबन्धः, संवित्त[25]दाकारयोर्द्रव्यादिप्रत्यासत्तिचतुष्टयस्यापि भावात्परस्परं पारतन्त्र्यसिद्धेः । सिद्धस्य संविदाकारस्य[26] संवित्परतन्त्रतानिष्टौ संविदभावेपि भावप्रसङ्गात्, संविदो वा स्वा[27]कारपरतन्त्रतानुपगमे निराकारसंविदनुषङ्गात्, तथोप[28]गमेपि संविदो वेद्याकारविवेकपरतन्त्रतानभिमनने वेद्याकारात्मताप्रसङ्गात्, सर्वथा संबन्धाभावस्य च भावपरतन्त्रत्वानङ्गीकरणे स्वतन्त्र[30]स्याभावरूपत्वविरोधात् कुतस्त[31]द्व्यवस्था ? त[32]दिदं कस्यचित्सिद्धस्यासिद्धस्य वा परतन्त्रतामुपलभ्य स[33]र्वत्र सिद्धेऽसिद्धे वा का परतन्त्रतेति ब्रुवाणः कथं

१ विशदाविशदत्वलक्षणः । २ निर्भासस्वभावयो । ३ एकान्तो नियम । ४ चित्रज्ञानस्य चित्रपटादेर्वा । ५ आत्मादेः । ६ संबन्ध्यन्तरं, स्रग्वनितादि । ७ भिन्नकारणानि सुखादीनि । ८ हेतो । ९ वृक्षादौ । १० समाना, करणसामग्री । ११ यतः कार्यभेदात्कारणभेद इत्युक्तं, प्रतिभासभेदात्स्वभावभेद इति च । १२ सहकारिकारणानि । १३ युगपद्यथा, दीपादौ तैलशोषणवर्तिकादाहकज्जलमोचनान्धकारनाशनार्थप्रकाशनादय स्वभावभेदाः परस्परव्यावृत्ताः । क्रमेण यथा, घटादौ रूपादयः स्वभावभेदाः । एवं सत्यन्यापोहः समायातः । १४ अन्यथेति शेषः । १५ द्रव्यप्रत्यासत्तिलक्षणसंबन्धं दर्शयति । १६ अविष्वग्भाव, कथञ्चित्तादात्म्यलक्षण. । १७ गुणपर्याययो । १८ असत्त्वापत्तिप्रकारेण । १९ तस्य चक्षुषः । २० मयि चक्षुरस्ति, रूपज्ञानसद्भावादिति । २१ चक्षुषः । २२ चक्षूरूपयो । २३ वेद्यवेदनयो । २४ तयोर्वेद्यवेदनयोः । २५ संवेदनतद्वेद्याकारयो. । २६ ग्राह्याद्याकारस्य । २७ संविदाकारस्य । २८ वेद्याकारेण सह संबन्धानङ्गीकारे । २९ संविदो निराकारतोपगमेपि वेद्याकाराभावसंबन्धानभ्युपगमे वेद्याकारात्मता स्यात्, तच्च परस्परं विरुद्धम् । तथा हि । वेद्याकारपरतन्त्रता स्याद्वेद्याकाराभावपरतन्त्रता वा । उभयपारतन्त्र्याभावस्तु विरुद्ध एव । एवमग्रेपि परस्परविरोधो दर्शित ) । ३० वस्त्वाश्रयरहितस्य संबन्धाभावस्य । ३१ तस्य संबन्धाभावस्य । ३२ सौत्रान्तिको वैभाषिको वा । ३३ गुणगुण्यादिषु ।

न [1]परतन्त्रः? कस्यचिदसिद्धस्यापि कार्यात्मनः कारणपरतन्त्रतोपपत्तेरन्यथा कारणाभावेपि कार्योत्पत्तेर्निवारणायोगात्, [2]कुतश्चित्कस्यचिदनुत्पत्तौ शश्वत्सत्त्वप्रसङ्गात्, सदकारणवन्नित्यमिति वचनात्, [3]संवृत्त्या पारतन्त्र्योपगमेपि तद्दोषानतिवृत्तेः संवृत्तेर्मृषारूपत्वात्। तत्त्वतोपि कचित्[4]पारतन्त्र्येष्टौ सिद्धस्तात्त्विकः संबन्धः। इति न तत्प्रतिक्षेपः श्रेयान् यतः संबन्ध्य[5]न्तरापेक्षया सकृदसकृच्च सन्तानान्तर[6]भावस्वभावभेदाः[7] परस्परं व्यावृत्ता न भवेयुः। तदेवं प्रतिक्षणमनन्तपर्यायाः प्रत्येकमर्थ[8]सार्थाः, न पुनरेकस्वभावा एव भावाः क्षणमात्रस्थितयः, अन्वयस्यानारतमविच्छेदात्। क्रमशोपि विच्छेदेर्थक्रियानुपपत्तेः स्वयमसतस्तत्त्वतः क्वचिदुपकारितानुपपत्तेः कुतः कस्यात्मलाभः स्यात्? कथञ्चिदविच्छेदे पुनः [9]सं[10] सुघट एव कारणस्य स्वकार्या[11]त्मना भवतः प्रतिक्षे[12]पायोगात् स्वभावा[13]न्तरा[14]नपेक्षणवत्, [15]स्वयमुत्पित्सोरपि स्वभावान्तरापेक्षणे विनश्वरस्यापि [16]तदपेक्षणप्रसङ्गात्। एतेन[17] स्थास्नोः स्वभावान्तरानपेक्षणमुक्तं, वि[18]स्रसा परिणा[19]मिनः कारणान्तरानपेक्षोत्पादादित्रयव्यवस्थानात्तद्वि[20]शेषे एव हेतुव्यापारोपगमात्। यतश्चैवं[21] पर्यायार्थिकनयादेशात्प्रतिक्षणमनन्तपर्यायः क्रमेणाविच्छिन्नान्वयसंततिरर्थः प्रतीयते तस्मादय[22]मुत्पित्सुरेव विनश्यति जीवादिः, [23]पूर्वदुःखादिपर्यायविनाशाऽजहद्वृत्तित्वात्तदुत्तरसुखादिपर्यायोत्पादस्य। न[24]श्वर एव तिष्ठति, क[25]थञ्चिदस्यास्नोर्नाशानुपपत्तेरश्वविषाणवत्। सद्द्रव्यचेतनत्वादिना स्थास्नुरेवोत्पद्यते सर्वथाप्यस्थास्नोः कदाचिदुत्पादायोगा[26]त्तद्वत्। त[27]तः प्रतिक्षणं त्रिलक्षणं सर्वमुत्पादव्ययध्रौव्ययुक्तं सदिति [28]वचनात्। न[29]न्वेवं स्थित्यादयो जीवादेर्वस्तुनो यद्यभिन्नास्तदा स्थितिरेवोत्पत्तिविनाशौ, विनाश एव स्थित्युत्पत्ती, उत्पत्तिरेव विनाशावस्थाने इति प्राप्तम्, एकस्मादभिन्नानां स्थित्यादीनां भेदविरोधात्। तथा च कथं त्रिलक्षणता स्यात्? अथ भिन्नास्तर्हि प्रत्येकं स्थित्यादीनां त्रिलक्षणत्वप्रसङ्गः, [30]सत्त्वात्, अन्यथा तदसत्त्वापत्तेः। त[31]था चानवस्थानान्न समीहित[32]सिद्धिरिति कश्चित्सोप्यनालोचितपदार्थस्वभावः, पक्षद्वयस्यापि कथञ्चिदिष्टत्वात्। तत्र [33]तद्वतः क[34]थञ्चिदभेदोपगमे स्थित्यादीनां स्थितिरेवोत्पद्यते [35]सामर्थ्याद्विनश्यति च, विनाश एव तिष्ठति [36]सामर्थ्यादुत्पद्यते च, उत्पत्तिरेव नश्यति सामर्थ्यात्तिष्ठतीति च ज्ञायते, त्रिलक्षणाज्जीवादिपदार्थादभिन्नानां स्थित्यादीना त्रिलक्षणत्वसिद्धेः। [37]एतेनैव ततस्तेषां भेदोप[38]गमेपि प्रत्येकं त्रिलक्षणत्वसिद्धिरुक्ता। न चै[39]वमनवस्था, सर्वथा भेदपक्षे [40]तत्प्रसक्तेः, स्याद्वादपक्षे तु तदसंभवात्। येन हि [41]स्वभावेन त्रिलक्षणात्तत्त्वादभिन्नाः स्थित्यादयस्तेन

---

१ अपि तु भवत्येव परतन्त्र । अज्ञानाधीन इत्यर्थ.। २ ननु च कार्यकारणभाव एव नेष्यते तर्हि कार्यात्मनः कारणपरतन्त्रता कुत इत्युक्ते आह कुतश्चिदित्यादि। ३ सवन्धो नास्ति तत्त्वत इति वचनात्संवृत्त्या संवन्धोभ्युपगम्यते एवेति वदन्तं सौगतं प्रत्याहु'। संवृत्त्या कल्पनया। ४ कारणस्य कार्यात्मनि। ५ सहकारिकारणापेक्षया। ६ संवित्सन्तानादन्यत्संतानं संतानान्तरम्। ७ चित्रपटादिरूपाः। ८ सार्थाः समूहा.। ९ कार्यकालमप्राप्नुवतः कारणद्रव्यस्य। १० आत्मलाभः। ११ कार्यस्वरूपेण। १२ प्रतिक्षेप. कालविलम्बः। १३ कारणान्तरस्य प्रतिक्षेपकारकस्य। १४ येन कारणेन यत्कार्यं जायते तेनैव तत्कार्यं, नतु कारणान्तरेण। १५ अर्थपर्यायतया। १६ तस्य स्वभावान्तरस्य। १७ स्वयमुत्पित्सोर्विनश्वरस्य च स्वभावान्तरानपेक्षणकथनेन। १८ स्वभावेन। १९ उत्पत्तिविनाशस्थितिरूपेण परिणमत.। २० व्यञ्जनपर्याये। स्थूलो व्यञ्जनपर्यायो वाग्गम्यो नश्वर. स्थिर'। सूक्ष्मः प्रतिक्षणध्वंसी पर्यायश्चार्थसंज्ञकः। २१ कारणान्तरानपेक्षत्वप्रकारेण। २२ अर्थ.। २३ उत्पित्सुश्चेदुत्पद्यताम्। विनाश. कुत इत्याशङ्कायामाहु पूर्वेति। २४ पर्यायापेक्षयैव। २५ द्रव्यापेक्षया। २६ अश्वविषाणवत्। २७ उत्पादादिधर्मसमन्वितस्यैव विनाशादिधर्मसमन्वितत्त्वं यत। २८ मोक्षशास्त्रस्य। २९ सौगतः। ३० यत्सत्तदुत्पादव्ययध्रौव्ययुक्तं भवतीति वचनात्। ३१ असत्त्वापत्तौ सत्तामित्यर्थः। ३२ सर्वस्य त्रैलक्षण्यसिद्धिः। ३३ स्थित्यादिमतः। ३४ अन्वयरूपद्रव्यापेक्षया। ३५ नाशसामर्थ्यात्। ३६ उत्पत्तिसामर्थ्यात्। ३७ अभेदपक्षेपि स्थित्यादीना त्रिलक्षणत्वनिश्चयेन। ३८ पर्यायापेक्षया। ३९ भेदपक्षे प्रत्येकं त्रिलक्षणत्वप्रकारेण। ४० तस्या, अनवस्थायाः। ४१ द्रव्यस्वभावेन।

प्रत्येकं त्रिलक्षणाः, पर्यायार्पणात्[1]परस्परं तद्वतश्च[2] भिन्ना अपीष्यन्ते, तथा प्रतीतेर्बाधकासंभवात् । ततो निरवद्यमिदं प्रतिक्षणं त्रिलक्षणं सर्वमिति । एतेन[3] कालत्रयापेक्षयापि त्रिलक्षणमुपदर्शितं, तस्या[4]न्वितेन[5] रूपेण कालत्रयव्यापित्वादन्यथा न्नुत्व्यचैकान्ते[6] सर्वथार्थक्रियाविरोधात् कूटस्थैकान्तवत्[7] । ततो द्रव्यपर्यायात्मकं जीवादि वस्तु, क्रमयौगपद्याभ्यामर्थक्रियान्यथानुपपत्तेरिति प्रमाणोपपन्नम् । तथा च स्थितिरेव स्थास्यत्युत्पत्स्यते विनङ्क्ष्यति सामर्थ्यात्स्थितोत्पन्ना विनष्टेति गम्यते । विनाश एव स्थास्यत्युत्पत्स्यते विनङ्क्ष्यति स्थित उत्पन्नो विनष्ट इति च गम्यते । उत्पत्तिरेवोत्पत्स्यते विनङ्क्ष्यति स्थास्यतीति न कुतश्चिदुपरमति । सोत्पन्ना विनष्टा स्थितेति गम्यते । स्थित्याद्याश्रयस्य वस्तुनोऽनाद्यनन्तत्वादनुपरमसिद्धेः स्थित्यादिपर्यायाणा कालत्रयापेक्षिणामनुपरमसिद्धिः, अन्यथा[8] तस्य[9]तल्लक्षणत्वप्रसङ्गात्सत्त्वविरोधात् । एतेन[10] जीवादि वस्तु तिष्ठति स्थितं स्थास्यति, विनश्यति विनष्टं विनङ्क्ष्यति, उत्पद्यते उत्पन्नमुत्पत्स्यते चेति प्रदर्शितं[11], कथञ्चित्तदभिन्नस्थित्यादीनामन्यथा[12] स्थास्यत्यादिव्यवस्थानुपपत्तेः । तथा चैतेषां नवानामपि विकल्पानां प्रत्येकं नवविकल्पतोपपत्तेरेकाशीतिविकल्पं[13] वस्तूह्य, तदभिन्न[14]स्थित्यादिपर्यायाणामपि तावद्धा[15]विकल्पादनुपरमसिद्धिः । यथा जीवपुद्गलधर्माधर्माकाशकालविकल्पमशुद्धं[16]द्रव्यमनन्तपर्यायं[17] सह क्रमाच्च चिन्तित तथा सन्मात्रं शुद्धद्रव्यम्[18]अपि प्रतिपत्तव्य, तस्यैव[19] द्रव्यत्वविशेषणस्य[20] द्रव्यव्यवहारविषयत्वसिद्धेः[21] । तथा[22] हि । भाव[23] एव द्रवति[24] द्रोष्यत्यदुद्रुवदिति द्रव्यं[25] तथा क्षीयन्ते[26] क्षेष्यन्ते क्षिताश्चास्मिन्[27] पदार्था इति क्षेत्रं,[28] कल्यन्ते[29] कलयिष्यन्ते कलिताश्चासन्[30]आदिति काल[31]ः, भवति भविष्यत्यभूदिति भाव[32]ः पर्याय इति सत्तैव विशेष्यते द्रव्यक्षेत्रकालभावात्मना, तस्या एव तथा व्यवहारविषयत्वघटनात् । ततः[33] परस्परव्यावृत्तस्वभावानऽनन्तगुणपर्यायान्प्रतिक्षणमासादयन्ती[34] सत्तैव तिष्ठतीत्यादि[35] योज्यं, तस्या अप्येकाशीतिविकल्पत्वोपपत्तेः । तथा भेदान्[36]एव संद्रवन्तीत्यादि प्रतिपत्तव्यं क्षितान्[37] कुर्वन्ती कलयन्ती भवन्ती च सत्तैव तिष्ठतीत्यादियोजनायाः सभवात् । तथा चोक्तं[38] "सत्ता सकलपदार्था[39] सविश्वरूपा त्वनन्तपर्याया । स्थितिभङ्गोत्पादार्था सप्रतिपक्षा[40] भवत्येका[41]", इति ।

---

१ स्थित्यादिधर्मापेक्षणात् । २ स्थित्यादिमतो जीवादे । ३ एकैकक्षणे चरमऽचरं च वस्तु स्थितिजननिरोधलक्षणं भवति, पूर्वोत्तरपर्यायेष्वविच्छिन्नान्वयसन्ततिसमन्वितत्वादिति समर्थनेन । ४ जीवादे । ५ द्रव्यरूपेण । ६ निरन्वये क्षणिकैकान्ते । ७ नित्यैकान्तवत् । ८ उपरमसिद्धिश्चेत् । ९ वस्तुन । १० स्थित्यादीनां कालत्रयेपि स्थित्यादित्रयात्मकत्वप्ररूपणेन । ११ भट्टाकलङ्कदेवै । १२ जीवादे. कालत्रयेपि स्थित्यादित्रयात्मकत्वाभावे । १३ नवसु विकल्पेषु तावत्तिष्ठतीत्येतत् स्वकीयकालापेक्षया तिष्ठत्युत्पद्यते विनश्यति, स्वोत्तरकालापेक्षया तु स्थास्यत्युत्पत्स्यते विनङ्क्ष्यति, स्वपूर्वकालापेक्षया तु स्थितमुत्पन्नं विनष्टं चेति नव भेदा । अवशिष्टेषु स्थित्यादिष्वष्टसु धर्मेषु चैवमेव द्रष्टव्यम् । १४ ननु च धर्मिण एवं व्यवस्था स्याद्धर्माणा तु कथमित्याशङ्कायामाह । १५ प्रकारे धाप्रत्यय । १६ अशुद्धं व्यवहारनयापेक्षया विद्यमानभेदमशुद्धमिति भाव । १७ प्रत्येकम् । १८ शुद्धं सग्रहनयापेक्षया । अविद्यमानभेदं शुद्धमिति भाव । १९ अविवक्षितभेदस्य शुद्धस्य सन्मात्रस्य द्रव्यत्वमेव नास्तीत्युक्ते आह जैन. । २० वस । २१ ( द्रव्यं सल्लाक्षणिकमिति वचनात् )। २२ सत्त्वस्यैव द्रव्यत्वं प्रतिपादयति । २३ सत्ता । २४ पर्यायान्प्रति गच्छति । २५ सत् । २६ निवासगत्यर्थकात्क्षिरित्यस्माद्धातो. । भावा एव निवासं गच्छन्ति । २७ भावे सत्तालक्षणे । २८ सत्तैव । २९ कल्यन्ते, पूर्वोत्तरपर्यायतया प्रवर्तन्ते, परिणामं गच्छन्तीति । ३० भावात् । ३१ सन्नेव । ३२ सन्नेव । ३३ द्रव्यक्षेत्रकालभावात्मना सत्तैव विशेष्यते यत , अथ वा सन्मात्रमनन्तपर्यायं सिद्ध यत । ३४ स्वीकुर्वन्ती । ३५ आदिपदेन स्थास्यत्यादीना ग्रहणम् । ३६ जीवादीन् । ३७ निवासितान्कुर्वन्ती क्षेत्रं सतीत्यर्थ. । कलयन्ती काल सतीत्यर्थ । भवन्ती भाव सतीत्यर्थ । अत्राभेदविवक्षयेदं प्ररूपणं, सत्तैव विशिष्यते इत्यत्र तु भेदपरतया । उभयप्ररूपणं हि भेद. । ३८ ( समयसारनाम्न्यऽध्यात्मग्रन्थे )। ३९ सकलपदार्थसंस्था । ४० ( न केवलं सत्ता तिष्ठति, किन्तु प्रतिपक्षेण असत्तया, अभावेन सहिता )। ४१ एका विशेषरहितस्वरूपापेक्षया ।

तदेवं पर्यायार्थिकनयप्राधान्याद्द्रव्यार्थिकनयगुण[1]भावात्सर्वस्य स्वभावान्तरव्यावृत्तिः प्रसिद्धाऽन्यापोहव्यतिक्रममपाकरोतीति किं नः[2] प्रयासेन।

तथा केषाञ्चि[3]त्तत्त्वतोत्यन्ताभावापाकृतौ न क्वचि[4]त्किञ्चि[5]त्कथञ्चि[6]न्न[7] वर्तेत। वर्तता[8]मिति चेत्, तथा सर्वं सर्वत्र सर्वथोपलभ्येत[9]। न च ज्ञानादिकं घटादावुपलभ्यते, नापि रूपादिकमात्मादौ। न च किञ्चि[10]त्स्वात्मनेव परात्मनाप्युपलभ्येत ततः किञ्चित्स्वेष्टं तत्त्व क्वचिदनिष्टेर्थे सत्यात्मना[11]नुपलभमानैः[12] कालत्रयेपि तत्तत्र तथा नास्तीति प्रतिपद्यते एवेति सिद्धोत्यन्ताभावः। कथं[13] पुनरभावप्रतिपत्तिः? कथं च[14] न स्यात्? सर्वथा[15] भावविलक्षणस्याभावस्य वास्तवस्य ग्राहकप्रमाणाभावात्[16], प्रत्यक्षस्य रूपादिस्वलक्षणविषयत्वादभावे प्रवृत्त्ययोगात् तस्य[17] तत्कारणत्व[18]विरोधात्, तत्कारणत्वे[19] स्वलक्षणतापत्तेः, अकारणस्या[20]विषयत्वव्यवस्थितेः, प्रमाणान्तर[21]स्यापि स्वकारण[22]विषयत्वात्। तस्य[23] कार्यानुमानत्वे तावदभावस्य कारणत्वप्रसक्तिः। न चासौ युक्तिमती। स्वभावानुमानत्वेपि भावात्मकतोत्पत्तिः[24], अभावस्य स्वभावा[25]सम्भवात्[26]। असतोनुपलब्धेः[27] पर्युदासवृत्त्या वस्तुनि[28] नियमात् सर्वथाप्यभावाविषयत्वसिद्धिः। तद्विषयो[29]पि भावस्वभाव एवाभावः। कस्यचिदेकस्य[30] कैवल्यमितरस्य[31] वैकल्यमिति ब्रुवन्नपि देवानांप्रियो दुर्विदग्धबौद्धो नावधारयति, भावा[32]भावप्रतिपत्तेरभावाभ्युपगमात्। सोयं स्वय[33]मनादिवासनोद्भूतविकल्पपरिनिष्ठितः शब्दार्थस्त्रिविधो धर्मो भावाभावोभयाश्रित इति परमार्थतो भावस्योभयस्य च प्रतिपत्ते[34]रभावं प्रतिपद्यमानः कथमभावप्रतिपत्तौ प्रकृत[35]पर्यनुयोगं कुर्यात्? न[36] चेदस्वस्थः परमार्थतः, स्वपर[37]रूपादिभावाभावलक्षणत्वात्सर्वस्य निःश्रेणीपद[38]बन्धाभ्यामिव भावाभावस्वभावाभ्यां प्रतिबन्धात्[39], स्वरूपादिभिरिव पररूपादिभिरपीष्टस्य संविदद्वयस्य भावे भेदरूपत्वप्रसङ्गात् पररूपादिभिरिव स्वरूपादिभिरपि तस्याभावे स्वयं प्रकाशनविरोधात्। न किञ्चित्प्रमाणं सर्वात्मना[40] भावमभावं वा ग्रहीतुमर्हति, अनियमप्रसङ्गात्[41]। ताथागतानां हि भाव एव प्रमाणविषय इति भावप्रमेयैकान्तवादिनामभावप्रतिपत्तिरयुक्तिः[42]। अतो न भावनियमप्रतिपत्तिः,कस्यचित्क्वचित्कथञ्चिदसत्त्वासिद्धेः स्वस्वभाव[43]व्यवस्थित्ययोगात्। तेषां[44] तत्प्रमेयतो[45]

---

१ ( द्रव्यार्थिकनयोपेक्षणात् )। २ जैनानाम्। ३ साख्यानाम्। ४ जीवे। ५ रूपादि। ६ सत्यरूपेण। ७ द्वौ नञौ प्रकृतार्थं सूचयत.। ततो वर्तते एवेत्यर्थं। ८ सर्व सर्वत्र विद्यते इति सांख्यसिद्धान्तात्। ९ सर्वस्य स्वरुपस्य स्वरूपिणश्च स्वाश्रयमन्तरेणानुपलब्धिर्यतः। १० प्रधानम्। ११ सत्यस्वरूपेण। १२ स एव। १३ आह बौद्ध·। १४ ( बौद्धेन पृष्टे सति जैन· पृच्छति कथं च न स्यादिति )। १५ (जैनेन पृष्टस्योत्तर ददाति सौगत.)। १६ यतोऽभावग्रहणं न भवतीत्यर्थः। १७ प्रत्यक्षस्य। १८ तत्कारणत्वमभावकारणत्वम्। १९ तस्य अभावस्य प्रत्यक्षं प्रति कारणत्वे। २० अभावस्य। २१ अनुमानं तद्ग्राहक भविष्यतीत्युक्ते आह बौद्ध। २२ अग्निस्वलक्षणाद्धूमस्वलक्षणमुत्पद्यते। ततो धूमदर्शनम्। तस्माद्धूमविकल्पः। ततोग्न्यनुमानम्। इति परम्परया स्वकारणविषयत्वम्। २३ तस्य अनुमानस्य कार्यानुमानत्वं कथं सभाव्यते इत्याह। अभावकारण प्राप्यानुमानमुत्पद्यते तदा तदनुमानं कार्यानुमानम्। २४ अभावस्य। काकाक्षगोलकन्यायेन अभावस्येति पदमुभयत्र सबध्यते। २५ अनुपलब्धिलिङ्गोत्थानुमानमभावग्राहकमस्त्वित्याशङ्कायामाह। २६ अभावरूपलिङ्गाभावादित्यर्थ.। ततश्चानुमानानुदय एव। २७ नास्त्यत्र घटोऽनुपलब्धेरित्यनेनापि नाभावग्रहणम्। कुतः? पर्युदासत्वतः। २८ भूतले। २९ अनुपलब्धिविषय·। ३० भूतलस्य। ३१ घटादे.। ३२ यथेह भूतले घटो नास्ति, अनुपलब्धेरित्येवं भावस्य भूतलस्याभावस्य च घटाभावस्य प्रतिपत्तिर्भवति। ३३ बौद्धस्य। ३४ पञ्चमी। ३५ पूर्वोक्तप्रश्नम्। ३६ ( प्रकृतपर्यनुयोगं कुर्याच्चेत् )। ३७ सर्वं स्वरूपेण भावस्वरूपं, पररूपेण त्वभावस्वरूपम्। ३८ नि.श्रेणीपदानां बन्धाभ्या दीर्घकाष्ठाभ्यामुभाभ्या यथा। ३९ संबन्धात्। ४० स्वरूपेणेव पररूपेणापि। ४१ अयं घट एवेति नियमायोगात्। ४२ नयप्रमाणरहिता। ४३ यथा घटस्य पृथुबुध्नोदराकारस्वभावे व्यवस्था। ४४ तेषा, ताथागतानाम्। अभावस्यापि प्रमेयता प्रतिगच्छन्तं बौद्धं प्रत्याह जैन.। ४५ तत्तस्मादुक्तदूषणसद्भावादित्यर्थ. अथवा तत्, तस्य अभावस्य प्रमेयत्वस्वीकारे।

**प्रसंख्यानं प्रमाणद्वयनियमं विघटयति।भावनैरात्म्यस्य[2] प्रमाणाकारणत्वात्[3]प्रतिबन्धनियमो[4]ऽप्रेऽभूत्,**[5] प्रमाणनैरात्म्ययोस्तादात्म्यानिष्टेस्तदुत्पत्तिप्रतिबन्धस्य विरोधात्, नैरात्म्यात्प्रमाणस्योत्पत्तौ तस्य[6] भावस्वभावत्व-प्रसक्तेः, तयो[8]ः प्रतिबन्धान्तरोपगमे लिङ्गस्य त्रिविधत्व[9]विरोधात्।[10] तदप्रतिबन्धे प्रमाणान्तरसिद्धेः कथं प्रमाण-द्वयनियमविघटनं न घटेत, तदु[11]त्पत्त्यभावे प्रत्यक्षस्यानुमानस्य चानुदयात्, 'अर्थस्यासंभवेऽभावात्[12] प्रत्यक्षेऽपि[13] प्रमाणता। प्रतिबद्धस्वभावस्य[14] तद्धेतुत्वे समं द्वयम्' इति वचनात्। मानसस्य तु नास्तिताज्ञानस्य स्वकारण[15]सामग्री-वशादुत्पन्नस्याभावपरिच्छेदकत्वे तदेवं प्रमाणान्तरं,[16]प्रतिबन्धनियमाभावात्। इति यथोदितदोषं परिजिहीर्षुणा[17] वस्तुधर्मस्यैवाभावस्य प्रतिपत्तिरभ्युपगन्तव्या, तस्याः प्रतिक्षेपापायात्। ततो न भावैकान्ते समीहितसिद्धिः।

**अभावैकान्तपक्षेऽपि भावापह्नववादिनाम्[18]। बोधवाक्यं[19] प्रमाणं न केन साधनदूषणम्[20] ॥ १२ ॥**

'भावा येन[21] निरूप्यन्ते तद्रूपं नास्ति तत्त्वतः। यस्मादेकमनेकं च रूपं तेषां[22] न विद्यते'[23] इति सर्वनै-रात्म्यप्रतिज्ञानमभावैकान्तपक्षः। तस्मिन्नपि बोधस्य स्वार्थसाधनदूषणरूपस्य[24], वाक्यस्य च परार्थसाधनदूषणात्मनो[25]ऽसंभवात्तन्न प्रमाणम्। ततः केन साधनं नैरात्म्यस्य[26], स्वार्थं[27] परार्थं[28] वा? केन दूषणं बहिरन्तश्च भावस्वभा-वानाम्? इति सविस्मयं वचनम्। स्वपरपक्ष[29]साधनदूषणोपगमे तु सत्सिद्धिरविप्रतिषिद्धा। तथा हि। **बहिरन्तश्च परमार्थसत्,तदन्यतरा[31]पायेऽपि साधनदूषणप्रयोगा[32]नुपपत्तेः। इति[33] प्रकृतार्थपरिसमाप्तौ किं त्रिलक्षण-परिकल्पनया? सपक्षसत्त्वाभावेऽपि साध्याभावे[34]ऽसंभूष्णुतानियमनिर्णयैकलक्षणमात्रादेव साधनस्य साध्यसिद्धौ समर्थनत्वोपपत्तेः**, सपक्षसत्त्वस्याभावेऽपि सर्वानित्यत्वे साध्ये सत्त्वादेः साधनस्योपगमात्[37], स्वयमसिद्धधर्मिध-र्मस्यापक्षधर्मत्वेऽपि प्रमाणास्तित्वे चेष्टसाधनस्य हेतोः समर्थनात्, क्वचित्तदभावेऽपि चान्यथानुपपत्तिनियमनिश्चय-वैकल्ये हेतुत्वाघटनात्[43]। स्यादाकूतं ते—'न परमार्थतः साधनदूषणप्रयोगो नैरात्म्यवादिनः सिद्धो यतो बहि-रन्तश्च परमार्थतः सद्वस्तु साध्यते। न चासिद्धाद्धेतोः साध्यसिद्धिः, अतिप्रसङ्गात्' इति तदपि प्रलापमात्रं, तत्त्वतो नैरात्म्यस्य साध्यत्वायोगादनैरात्म्यस्य दूष्यत्वायोगवत्। **न हि संवृत्त्या साध्यसाधनव्यवस्था यु-क्तिमती,परमार्थतोपगमे नैरात्म्यस्य तत्सिद्धेरपि[45] सांवृतत्वप्रसङ्गात्,सांवृतात्साधनाद्वास्तवसिद्ध्यसंभवात्। शू-न्यसिद्धेरपरमार्थत्वे पुनरनिराकृतसद्भावस्य सर्वस्या[46]शून्यतानुषङ्गात् तत्साधनं विरुद्धमापद्येत। स्वरूपस्य**

१ प्रत्यक्षानुमानयोर्भावग्राहकत्वं यतस्ततोऽभावग्राहकं प्रमाणमन्यद्विलोक्यते। २ अभावस्य तुच्छरूपस्य, न तु भावा-न्तरस्वभावस्य। ३ प्रमाणं प्रत्यकारणत्वात्। ४ अभावग्राहकत्व प्रत्यक्षानुमानलक्षणस्य ज्ञानस्य। ५ प्रमाणद्वयनियमविघटनं कुत इत्युक्ते आह। ६ तस्मान्नैरात्म्यादुत्पत्ति प्रमाणोत्पत्ति। ७ नैरात्म्यस्य। ८ प्रमाणनैरात्म्ययो। ९ प्रतिबन्धान्तरं चतुर्थं लिङ्गं यत। लिङ्गत्रयं सर्वैरनुमतं, कारण, स्वभाव, अनुपलब्धिभेदात्। १० तयो प्रमाणनैरात्म्ययोस्त्रितयसंबन्धाभावे। ११ तस्मात्, अभावाद्। उत्पत्तिर्ज्ञानस्य। १२ अर्थस्य संभवे एव प्रत्यक्ष भवति। १३ भावरूपादर्थादुत्पन्ने प्रत्यक्षेऽनुमाने वा। १४ साध्येन सह। १५ गृहीत्वा वस्तुसद्भाव स्मृत्वा च प्रतियोगिनम्। मानसं नास्तिताज्ञानमिति तत्सामग्री। १६ प्रति-बन्धनियमं विघटयति। १७ बौद्धेन। १८ माध्यमिकानाम्। १९ बोधश्च वाक्यं च। २० स्वमतसाधनम्। परमतदूषणम्। २१ एकत्वानेकत्वेन स्वभावेन। २२ भावानाम्। २३ तत्त्वं नैकं, घटपटादिरूपतया विचित्रप्रतिभासात्। न चानेकं, तद्ग्राहकप्रमाणाभावात्। २४ स्वार्थानुमानस्य। २५ परार्थानुमानस्य। २६ बौद्धेष्टस्य। २७ स्वनिमित्तम्। २८ शिष्यप्रति-बोधार्थम्। २९ बोधवाक्यरूपयोः। ३० अन्तर्बहिस्तत्त्वस्य। ३१ ज्ञानज्ञेययोर्मध्ये। ३२ प्रयोग, अनुमानरूपोऽत्र। ३३ नन्व-नेनानुमानेन न साध्यसिद्धि, पक्षधर्मत्वादित्रयाभावादित्युक्ते बौद्धेनाह जैनः। ३४ रूपत्रयमन्तरेण साध्यसिद्धिं क्रमेण दर्शयति। ३५ साध्याभावे सतीति सप्तमी। ३६ अन्यथानुपपत्तिलक्षणादित्यर्थः। ३७ बौद्धेन। ३८ शून्यवादिना। ३९ हे सौगत। तव मते प्रमाणत्वमस्ति न वेति पृष्टः केनापि सौगत आह, प्रमाणास्तित्वमस्ति, इष्टसाधनादिति। तत्राह स्याद्वादी। अत्र स्वरूपेणासिद्धधर्मिधर्मस्येष्टसाधनस्य हेतो पक्षधर्मत्वरहिते प्रमाणास्तित्वे साध्ये समर्थनत्वमभ्युपगम्यते भवतेति पक्षधर्मत्वाभाव। ४० धर्मिणो धर्मो, धर्मिधर्मः। असिद्धश्चासौ धर्मिधर्मश्च तस्य॥ प्रमाणं धर्मि। तस्य धर्म इष्टसाधनं न भवति, संविदद्वैतापेक्षया प्रमाणस्यैवाभावात्। ४१ मैत्रीतनयत्वादौ। ४२ त्रिलक्षणाभावाभावेऽपि। ४३ सौगतस्य। ४४ माध्यमिकस्य। ४५ न केवलं साधनसिद्धे। ४६ अन्तर्बहिस्तत्त्वस्य। ४७ शून्यसाधनम्। ४८ ज्ञानस्य।

वेद्यवेदकभावादिशून्यस्य स्वतोगतेः साधनोपन्यासेन तत्र समारोपव्यवच्छेदेपि समानं[१], कुतश्चित्तत्त्वतः समारोपव्यवच्छेदे संवृत्त्या साध्यसाधनव्यवस्थितेरयोगात्, तत्समारोप[२]व्यवच्छेदस्याप्यपरमार्थत्वे पुनरव्यवच्छिन्नसमारोपस्य बाध्यबाधकभावादिशून्यस्य संवि[३]न्मात्रस्य स्वतोपि गत्यनुपपत्तेस्तद[४]शून्यत्वप्रसङ्गात्। ततो हेयोपा[५]देयोपायरहितमयम[६]ह्रीकः केवलं विक्रोशति[७] तत्त्वोपप्लववादिवत्। अथ संवृत्त्या हेयस्य सद्भावस्योपादेयस्य च शून्यस्य त[८]न्निषेधविधानोपायस्य चाभ्युपगमान्न शून्यवादिनो निर्लज्जता नापि विक्रोशमात्रमिति मतिस्तर्हि यदि संवृत्त्यास्तीति[९] स्व[१०]रूपेणेत्ययमर्थस्तदा कृतमनु[११]कूलं, केवलं व[१२]क्तात्मनो वैयात्यं[१३] सूचयति, न्यायबलान्न्यक्[१४]कृतस्यापि स्वार्थसिद्धिवि[१५]कलं प्रलपतो धार्ष्ट्यमात्रप्रसिद्धेः स्वरूपेणास्तित्वस्य संवेदनवत्सर्वभावानां स्याद्वादिभिरभीष्टत्वात् तेन[१६] तदनुकूलकरणात्सम्प्रतिप[१७]त्तेः। अथ पररूपेण नास्ति इत्ययम[१८]र्थस्तथैव[१९] स्याद्वादिना, नाम्नि[२०] विवादात्। एतद[२१]पि तादृगेव, पररूपेण ग्राह्यग्राहकाभावादिविकलसंवेदनवत्सर्वपदार्थानां नास्तित्वे विवादाभावात्। [२२]तदेतेनोभयानुभयविकल्पः प्रत्युक्तः। यदि हि संवृत्त्यास्तीति स्वपररूपाभ्यामस्ति नास्ति चेत्ययम[२३]र्थस्तदा न कश्चिद्विवादः। अथानुभयरूपेणानु[२४]भयमित्य[२५]र्थस्तदापि न कश्चिद्विवादः, तथाग्रे समर्थयिष्यमाणत्वात्। अथ त[२६]दस्ति मृषात्म[२७]नेति समानश्चर्चः, मृषात्मनास्तित्वस्य स्वपरोभयानुभयरूपास्तित्वविकल्पचतुष्टयेप्युक्तदोषानुषङ्गात्। संवृतिर्विचारानुपपत्तिरित्यप्यु[२८]क्तं, तदभावात्। न हि विचारस्याभावे कस्य[२९]चिद्विचारेणानुपपत्तिः शक्या वक्तुम्। नापि शून्यवादिनः किञ्चिन्निर्णीतमस्ति, यदाश्रित्य क्वचिदन्यत्रानिर्णीतेर्थे विचारः प्रवर्तते, तस्य[३०] सर्वत्र विप्रतिपत्तेः। तथा चोक्तं तत्त्वार्थश्लोकवार्तिके "किञ्चिन्निर्णीत[३१]माश्रित्य विचारोन्यत्र[३२] वर्तते। सर्वविप्रतिपत्तौ तु क्वचिन्नास्ति विचारणा" इति। सोयं सौगत[३३]स्तदभावात्तत्पर[३४]प्रतिपादनार्थं शास्त्रमु[३५]पदेष्टा[३६]रं वा वर्णयन्[३७] सर्वं प्रतिक्षिपतीति कथमनुन्मत्तः? स्वयमुपदिष्टं विचारप्रतिपादनार्थं शास्त्रादिकं प्रतिक्षिपन्नुन्मत्त एव स्यात्। अथ मायोपमाः स्वप्नोपमाश्च सर्वे भावा इति सुगतदेशनासद्भावान्न सर्वं प्रतिक्षिपन्नुन्मत्तः स्यादिति मतं तर्हि शौद्धोदनेरेव[३८] तावत्प्रज्ञापराधोयं लोकातिक्रान्तः कथं बभूवेत्यतिवि[३९]स्मयमास्म[४०]हे। तन्मन्ये पुनरद्यापि कीर्तय[४१]न्तीति किं बत[४२] पर[४३]मन्यत्र[४४] मोहनीयप्रकृतेः? स्वप्नादिविभ्रमवत्सर्वस्य[४५] विभ्रमाददोष इति चेत्तर्हि विभ्रमे किमविभ्रमो विभ्रमो वा? त[४६]त्राविभ्रमे कथं सर्वविभ्रमः? वि[४७]भ्रमेपि कुतोसौ[४८]? विभ्रमेपि विभ्रमे सर्वत्राविभ्रमप्रसङ्गात्। विभ्रमविभ्रमेपि विभ्रमोपगमे स एव पर्यनुयोगोनवस्था चेति दुरन्तं तमः। तदुक्तं न्यायविनिश्चये "त[४९]त्र शौद्धोदनेरेव कथं प्रज्ञापराधिनी। बभूवेति वयं तावद्बहु विस्मयमास्महे।

---

१ कथं न संवृत्त्या साध्यसाधनव्यवस्थेत्यादिप्रकारेण समानं दूषणम्। २ तस्य, नैरात्म्यज्ञानस्य। ३ नैरात्म्यज्ञानस्य। ४ तस्य बहिरन्तस्तत्त्वस्य। ५ हेयमन्तर्बहिस्तत्त्वम्। उपादेयं नैरात्म्यम्। क्रियाविशेषणमिदम्। ६ शून्यवादी। ७ पूत्कारं करोति। ८ हेयस्य निषेध। उपादेयस्य च विधानम्। तयोरुपायस्य। ९ संवृत्त्यास्तीति पदस्य। १० संवृत्तिरिति कोर्थः? स्वरूपं, पररूपम्, उभयम्, अनुभयं वा? इति विकल्पचतुष्टयं कृत्वा क्रमेण खण्डयति। ११ जैनस्य। १२ माध्यमिक। १३ धार्ष्ट्यम्। १४ तिरस्कृतस्य। १५ नैरात्म्यम्। १६ सौगतेन। १७ निश्चयप्रतिपत्ते। १८ संवृत्त्यास्तीत्यस्य। १९ स्वरूपेणास्तित्ववदेव। २० नत्वर्थे। २१ एतदपि पररूपेण नास्तित्वमपि तादृगेवानुकूलमेव। २२ तत्तस्मात्। एतेन स्वरूपपररूपाभ्या सत्त्वासत्त्वप्रतिपादनेन। २३ तृतीयो भङ्ग। २४ अवक्तव्यम्। २५ संवृत्त्यास्तीति पदस्य। २६ हेयोपादेयज्ञानम्। २७ संवृत्त्यात्मना। २८ शून्यवादिमतम्। २९ पुरुषस्य। ३० शून्यवादिन। ३१ प्रमाणादितत्त्वम्। ३२ अनिर्णीते। ३३ विचाराभावात्। ३४ तेन विचारेण परप्रतिपादनं तत्परप्रतिपादनम्। ३५ शास्त्रमुपदिशन्नुपदेष्टारं वा वर्णयन्निति खपाठ। ३६ डिग्नागाचार्यम्। ३७ गुरुशास्त्रादिकम्। ३८ सुगतस्य। ३९ क्रियाविशेषणमिदम्। ४० वयमकलङ्कदेवास्तिष्ठाम। ४१ दिग्नागादय। ४२ ( बत खेदे )। ४३ कारणम्। ४४ विना। ४५ सुगतादे। ४६ विभ्रमे ४७ विभ्रमे विभ्रमे इति द्वितीयविकल्पे। ४८ विभ्रम। ( अपितु नैव )। ४९ जलानलादौ सर्वभावे।

। १ । तत्राद्यापि जडासक्ता[1]स्तमसो नापरं परम्[2] । विभ्रमे विभ्रमे तेषां विभ्रमोपि न सिद्ध्यति । २ ।" इति । ततो नाभावैकान्तः श्रेयान्, स्वेष्टस्य[3] दृष्टबाधनाद्भावैकान्तवत् ।

परस्परनिरपेक्षभावाभावैकान्तपक्षोपि न क्षेमङ्करः, तत एवेत्यावेदयन्ति स्वामिनः ।

विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषाम् ।

भावाभावयोरेकतरप्रतिक्षेपैकान्तपक्षोपक्षिप्तदोषपरिजिहीर्षया सदसदात्मकं सर्वम[4]भ्युपगच्छ[5]तोपि वाणी विप्रतिषिध्येत, तयोः परस्परपरिहारस्थितिलक्षणत्वात् । न हि सर्वात्मना[6] कश्चिदर्थं सन्तं तथैवासन्तमाचक्षाणः[7] स्वस्थः, स्वाभ्युपेते[8]तरनिरासविधानकरणाच्छून्यावबोधवत् । यथैव हि सर्वथा शून्यमवबुध्यमानः स्वसंवेदना[9]दन्यतो[10] वा स्वाभ्युपेतं शून्यतैकान्तं निरस्यति, अनभ्युपेतं प्रमाणादिसद्भावं विधत्ते तथैव भावाभावयोस्तादात्म्यैकान्तं ब्रुवन् स्वाभ्युपेतं सदसदात्मकत्वं निरस्यति, स्वयमनभ्युपगतं तु भावैकान्तमभावैकान्तं वा विधत्ते, अ[11]भावस्य भावेनुप्रवेशाद्भावस्य वा सर्वथाऽभावे, अ[12]न्यथा भावाभावयोर्भेदप्रसङ्गात् । ततो नोभयोरैकात्म्यं श्रेयः स्याद्वादं[13] विद्विषां सदसतोः परस्परपरिहारस्थितिलक्षणविरोधात्, जात्यन्तर[14]स्यैव दर्शनेन सर्वथोभयैकात्म्यस्य बाधनात्[15]तद्वत् ।

तथा[16] सांख्यस्यैवमुभयैकात्म्यं[17] ब्रुवत[18]स्त्रैलोक्यं व्यक्ते[19]रपैति, नित्यत्वप्रतिषेधात्, अपेतमप्य[20]स्ति, विनाशप्रतिषेधादिति वा तदन्यथापेतमन्यथास्तीति स्याद्वादावलम्बन[21]मन्धसर्पबिलप्रवेशन्यायमनुसरति, त्रैलोक्यस्य व्यक्तात्मना[22]ऽपेतत्वसिद्धेः अव्यक्तात्मना[23]स्तित्वव्यवस्थितेः "हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् । सावयवं परतन्त्रं व्यक्तं[24] विपरीतमव्यक्तम्[25]" इति वचनात् । परमार्थतो व्यक्ताव्यक्तयोरेकत्वान्न स्याद्वादावलम्बनं कापिलस्येति चेन्न, तथा विरोधस्य तदवस्थानात् । प्रधानाद्वैतोपगमे तु नोभयैकात्म्यम[26]भ्युपगतं स्यात् । तथा स्वयमनभ्युपगच्छतोपि कथञ्चिदुभयात्मकतत्त्ववादप्रवेशे कथमन्धसर्पबिलप्रवेशन्यायानुसरणं न स्यात् ? यदृच्छया तदवलम्बनात् । ततो नैवमप्युभयैकान्तः सिध्यति, विरोधात् ।

अवाच्यतैकान्तेप्युक्तिर्नावाच्यमिति युज्यते ॥ १३ ॥

योपि[27] पक्षत्रयो[28]पक्षिप्तदोषजिहासया सर्वथाऽवक्तव्यं तत्त्वमवलम्बेत सोपि कथमवक्तव्यं ब्रूयात्, येनावाच्यतैकान्तेप्यवाच्यमित्युक्तिर्युज्यते । तदयुक्तौ कथं परमवबोधयेत् ? स्वसंविदा परावबोधनायोगात् । तदनवबोधने कथं परीक्षिता[29]स्य स्यात् ? तस्यापरीक्षकत्वे च कुतोन्यस्मा[30]द्विशेषः सिध्येत् ? अपरीक्षिततत्त्वाभ्युपगमस्य सर्वेषां निरङ्कुशत्वात्[31] । नैष दोषः स्वलक्षणमनिर्देश्यं प्रत्यक्षं कल्पनापोढमित्यादिवत्सर्वमवाच्यं तत्त्वमिति वचनेपि विरोधाभावात् परप्रतिपादनस्यान्यथा[32]नुपपत्तेः ।

---

१ आराधकत्वेन संसक्ताः । २ कारणम् । ३ नैरात्म्यस्य । ४ निरपेक्षभावाभावात्मकत्वम् । ५ भाट्टस्य । ६ स्वरूपेणेव पररूपेणापि । ७ भाट्ट । ८ ( स्वाभ्युपेतं निरपेक्षभावाभावात्मकत्वं, तदितर भावोऽभावो वा केवलम् । स्वाभ्युपेतस्य निरासः । इतरस्य विधानम् ) । ९ आत्मीयज्ञानात् । १० अनुमानात्परोपदेशरूपात् । ११ कुतस्तथा हि । १२ अभिन्नत्वेपि अननुप्रवेशाङ्गीकरणे । १३ प्रत्यक्षादिप्रमाणाविरुद्धानेकात्मकवस्तुप्रतिपादक श्रुतस्कन्धात्मक स्याद्वादः । १४ कथञ्चिद्भावाभावात्मकस्यैव । १५ सर्वथा भावैकान्ताऽभावैकान्तवत् । १६ भट्टनिराकरणप्रकारेण । १७ प्रकृतिमहदाद्यो । १८ विरोध इति पूर्वेणान्वय । १९ महदादीनामभिव्यक्ते सकाशात्त्रैलोक्यमपैति तिरोभवतीत्यर्थं । २० नष्टमपि कथञ्चिन्नित्यम् । २१ ब्रुवत साङ्ख्यस्येति पूर्वेण सम्बन्ध । २२ महदादिना । २३ प्रधानात्मना । २४ महदादि । २५ प्रधानम् । २६ प्रधानात्मना नित्यत्वं, महदादिरूपेणानित्यत्वमिति । २७ सौगत । २८ भावैकान्त, अभावैकान्त, उभयैकान्तेति । २९ सौगतस्य । ३० किञ्चिज्ज्ञात् । ३१ अनिराकरणात् । ३२ अवाच्यमिति वचनमन्तरेण ।

इति कस्यचिद्वचनं तदप्यसत् यदसतः समुदाहृतम् । सिद्धसाध्यव्यवस्था हि कथामार्गः। न च स्वलक्षणस्य सर्वथाप्यनिर्देश्यत्वोपगमे 'स्वलक्षणमनिर्देश्यम्' इति वचनेन तस्य निर्देश्यत्वमविरुद्धम् । अथ स्वलक्षणं नैतद्वचनेनापि निर्देश्यं स्वलक्षणसामान्यस्यैव तेन निर्देश्यत्वात् स्वलक्षणे निर्देशासंभवात्, न ह्यर्थे शब्दाः सन्ति तदात्मानो वा येन तस्मिन् प्रतिभासमाने तेपि प्रतिभासेरन्निति वचनात् । कल्पनारोपितं तु स्वलक्षणं तद्धर्मो वा निर्देश्यत्वशब्देन निर्दिश्यते, विरोधाभावादिति मतं तर्हि स्वलक्षणमज्ञेयमपि स्यात् । यथैवाक्षविषयेभिधानं नास्ति तथाक्षज्ञाने विषयोपि नैवास्ति । ततस्तत्र प्रतिभासमानेपि न प्रतिभासेत । शक्यं हि वक्तुं 'यो यत्राधेयतया नास्ति तदात्मा वा न भवति स तस्मिन् प्रतिभासमानेपि न प्रतिभासते यथाक्षविषये स्वलक्षणे शब्दः । नास्ति चाक्षज्ञाने तथाक्षविषयस्तदात्मा वा न भवति, इति । यदि पुनर्विषयसामर्थ्यादक्षज्ञानस्योत्पादात्तत्र प्रतिभासमाने स प्रतिभासत एवेति मतं तदप्यसम्यक्, करणशक्तेरपि प्रतिभासप्रसङ्गात् । तथा हि । न केवलं विषयबलाद्दृष्टेरुत्पत्तिः, अपि तु चक्षुरादिशक्तेश्च । विषयाकारानुकरणाद्दर्शनस्य तत्र विषयः प्रतिभासते, न पुनः करणं, तदाकारानुकरणादिति चेत्तर्हि तदर्थवत्करणमनुकर्तुमर्हति, न चार्थं, विशेषाभावात् । दर्शनस्य कारणान्तरसद्भावेपि विषयाकारानुकारित्वमेव सुतस्येव पित्राकारानुकरणमित्यपि वार्तं, स्वोपादानमात्रानुकरणप्रसङ्गात् । विषयस्यालम्बनप्रत्ययतया स्वोपादानस्य च समनन्तरप्रत्ययतया प्रत्यासत्तिविशेषाद्दर्शनस्य उभयाकारानुकरणेप्यनुज्ञायमाने रूपादिवदुपादानस्यापि विषयतापत्तिः, अतिशयाभावात्, वर्णादेर्वा तद्वदविषयत्वप्रसङ्गात् । दर्शनस्य तज्जन्मरूपाविशेषेपि तदध्यवसायनियमाद्बहिरर्थविषयत्वमित्यसारं, वर्णादाविवोपादानेप्यध्यवसायप्रसङ्गात्, अन्यथोभयत्राध्यवसायायोगात् । न हि रूपादावध्यवसायः संभवति, तस्य दर्शनविषयत्वोपगमात्, दर्शनस्यानध्यवसायात्मकत्वात् तस्याध्यवसायात्मकत्वे स्वलक्षणविषयत्वविरोधात् । अदोषोयं, प्रत्यक्षस्याध्यवसायहेतुत्वादित्यनिरूपिताभिधानं सौगतस्य, तत्राभिलापाभावात् । यथैव हि वर्णादावभिलापाभावस्तथा प्रत्यक्षेपि, तस्याभिलापकल्पनातोऽपोढत्वादनभिलापात्मकार्थसामर्थ्येनोत्पत्तेः । प्रत्यक्षस्य तदभावेप्यध्यवसायकल्पनायां प्रत्यक्षं किं नाध्यवस्येत् ?

---

१ प्रत्यक्षस्य कल्पनापोढस्य । अविद्यमानस्य यदुदाहरणीकृतं स्वलक्षणमनिर्देश्यमित्यादि ( ततो न भवदुक्तं समीचीनमित्यर्थः ) । २ ( असत ( असिद्धस्य ) समुदाहरण न युक्तं, किन्तु प्रसिद्धस्यैवेति दर्शयति ) । ३ सिद्धा साध्यस्य व्यवस्था यत्र । ४ दृष्टान्तक्रमा । ५ नीलादिलक्षणस्य । ६ अन्यापोहस्य । ७ निर्दिश्यतेनेनेति निर्देश. शब्दः । ८ आधेयतया । ९ अर्थे । १० शब्दा. । ११ अन्यापोहलक्षणम् । १२ निर्देश्यत्वधर्मः । १३ अथेत्यत. । १४ शून्यं संविन्मात्रं न ज्ञेयं भवति । १५ स्वलक्षणे । १६ शब्द· । १७ स्वलक्षणोर्थ. । १८ अक्षज्ञाने । १९ ( विषय । ततोऽज्ञेय इत्यर्थ ) । २० 'ज्ञाने प्रतिभासमानेपि अर्थो धर्मी स्वयं न प्रकाशते अतदाधेयत्वादतदात्मधर्मत्वाद्वा, इत्यध्याहार्यम् । २१ आधेयतया । २२ कारणं समर्थं नाकारणं विषय इति वचनात् । २३ स्वलक्षणोर्थः । २४ करणमिन्द्रियम् । २५ दर्शनस्य । २६ चक्षुरादिशक्तेश्च सकाशाद्दृष्टेरुत्पत्तिः । ततश्च विषयवच्चक्षुरादिशक्तेरपि प्रतिभास स्यात् । इति विषयज्ञानस्योत्पादादित्यस्य हेतोरनैकान्तिकतेति भाव । २७ विषयश्चाधारो, ज्ञानमाधेयम् । २८ करणस्य । २९ अभ्युपगम्यमाने ( सौगतेन ) । ३० निर्विकल्पकस्य । ३१ विशेषाभावादित्यर्थ. । ३२ अन्यथेति अध्याहार्यम् । ३३ ( उपादानवत् ) । ३४ आह सौगतः । ३५ तदुत्पत्तितादूप्याविशेषेपीत्यर्थ· । ३६ जैनः । ३७ पूर्वज्ञाने । न केवलमालम्बने एव । ३८ विकल्परूपनिश्चय· । ३९ दर्शनं, निर्विकल्पकज्ञानम् । ४० विकल्पात्मकत्वे । ४१ निर्विकल्पकरूपं स्वलक्षणं नीलादि । ४२ सौगतः । ४३ निर्विकल्पकस्य । ४४ सविकल्पकस्य हेतुत्वात् । ४५ शब्दसंसर्गाभावात् । ४६ निर्विकल्पकप्रत्यक्षस्य । ४७ प्रत्यक्षस्य । ४८ नीलादिस्वलक्षणस्य । ४९ अध्यवसायस्य हेतुत्वकल्पनायामित्यर्थ. ।

स्वलक्षणं[1] स्वयमभिलापशून्यमपि प्रत्यक्षमध्यवसायस्य हेतुर्न पुना[2] रूपादिरिति कथं सुनिरूपिताभिधानम्? यदि पुनरविकल्पकादपि प्रत्यक्षाद्विकल्पात्मनोऽध्यवसायस्योत्पत्तिः, प्रदीपादेः कज्जलादिवद्विजातीयादपि कारणात्कार्यस्योत्पत्तिदर्शनादिति मतं तदा तादृशोर्थाद्विकल्पात्मनः प्रत्यक्षस्योत्पत्तिरस्तु, तत एव तद्वत्। [3] जातिद्रव्यगुणक्रियापरिभाषा[4]कल्पनारहितादर्था[5]त्कथं जात्यादिकल्पनात्मकं प्रत्यक्षं स्यादिति चेत् प्रत्यक्षात्त-द्रहिताद्विकल्पः कथं जात्यादिकल्पनात्मकः स्यादिति समानः पर्यनुयोगः । वि[6]कल्पस्य जात्यादिविषयत्वा-ददोष इति चेन्न, प्रत्यक्षवत्तस्य जात्यादिविषयत्वविरोधात् । यथैव हि [7]प्रत्यक्षस्याभिलापसंसर्गयोग्यता नास्ति तथा तत्समनन्तरभाविनोपि विकल्पस्य, तस्याप्यभि[8]लपनेनाभिलप्यमानेन च जात्यादिना संसर्गासंभवात्, स्वोपादानसजातीयत्वात्[9] । कथमिदानीं विकल्पो जात्यादिव्यवसायीति चेन्न कथमपि । तथा हि । किञ्चि[10]त्के[11]नचिद्विशिष्टं[12] [13]गृह्यमाणं कचिद्विशेषणविशेष्यत[14]त्संबन्धव्यवस्थाग्रहणमपेक्षते दण्डिवत्, "विशेषणं विशेष्यं च संबन्धं लौकिकीं स्थिति[15]म् । गृहीत्वा संकल[16]य्यै[17]तत्तथा[18] प्रत्येति नान्यथा" इति वचनात् । न चा[19]यमियतो व्यापारान् कर्तुं समर्थः; प्रत्यक्षब[20]लोत्पत्तेरविचारकत्वात् प्रत्यक्षवत्। [21]कश्चिदाह 'नै[22]तदेवं[23] दूषणं, प्रत्यक्षादेवाध्यवसायोत्पत्त्यनभ्युपगमात्, शब्दा[24]र्थविकल्पवासनाप्रभव-त्वान्मनोविकल्पस्य तद्वासनाविकल्पस्यापि पूर्वतद्वासनाप्रभवत्वादित्यनादित्वाद्वासनाविकल्पसन्तानस्य प्रत्यक्षसतानादन्यत्वात्, विजातीयाद्विजातीयस्योदयानिष्टेः, तदिष्टौ यथोदितदूषणप्रसङ्गात्' इति, तस्या-प्येववादिनः शब्दार्थविकल्पवासनाप्रभवत्वा[25]त्तर्हि कथमक्ष[26]बुद्धेः रूपादिविषयत्वनियमः[27] सिद्ध्येत्[28] [29]मनोराज्यादिविकल्पादपि तत्सिद्धिप्रसङ्गात् । अथाक्षबुद्धि[30]सहकारिणो वासनाविशेषादुत्पन्नाद्रूपादिविकल्पा-दक्षबुद्धे रूपादिविषयत्वनियमः कथ्यते । त[31]त एवाक्षबुद्धिविपयत्व[32]नियमोप्यभिधीयताम्[33] । अन्यथा रूपादिविषयत्वनियमो[33]पि मा भूदविशेपात् । [34]रूपाद्युल्लेखि[35]त्वाद्विकल्पस्य त[36]द्बलात् त[37]दभ्युपगमे वा प्रत्य-क्षबुद्धेरभिलापसंसर्गोपि त[38]द्वदनुमीयेत, तद्विकल्पस्याभि[39]लापेनाभिलप्यमानजात्याद्युल्लेखितयोत्पत्त्यन्य-था[40]नुपपत्तेः, त[41]दनुमिताच्चाक्षबुद्ध्यभिलापसंसर्गाद्रूपाद्यभिलापसंसर्गो[42]नुमीयेत[43] । इति शब्दाद्वैतवादि-मतसिद्धिः । न च सौगतो दर्शनस्याभिलापसंसर्गमुपैति । तस्मादयं किञ्चि[44]त्पश्यन् तत्सदृशं पूर्वं दृष्टं न स्म[45]र्तुमर्हति तन्नामविशेपास्मरणात् । तदस्मरन्नैव तदभिधानं प्रतिपद्यते ।

---

१ अध्यवसायं प्रति हेतु. । २ स्वलक्षणात् । ३ सौगतः । ४ जातिक्रियागुणद्रव्यसंज्ञा पञ्चैव कल्पना । ५ स्वलक्षणात् । ६ जात्यादिविपयत्वादेव विकल्पस्य विकल्पात्मकत्वं, न तु प्रत्यक्षादुत्पन्नत्वादित्यदोष । ७ निर्विकल्पकस्य । ८ शब्देन । ९ सविकल्पकस्य । १० वस्तु । ११ जात्यादिना । १२ सत् । १३ विकल्पेन । १४ तच्छब्देन विशेषणविशे-ष्यग्रह । १५ का नाम लौकिकी स्थिति ? विशेषणं विशेष्यं च तयो सबन्ध इति लोकस्थिति । १६ संयोज्य । १७ वि-कल्पज्ञानम् । १८ विशेपणविशेष्यादिप्रकारेण । १९ विकल्प· । २० प्रत्यक्षबलादुत्पन्नस्य विकल्पस्य । प्रत्यक्षस्य क्षणिकत्वात् सविकल्पमपि क्षणिकं तस्मादविचारकम् । २१ वैभाषिक सौत्रान्तिको वा । २२ तदभावेप्यध्यवसायकल्पनायामित्यादि । २३ भवदुक्तप्रकारेण । २४ शब्दस्यार्थो जात्यादिविशिष्टस्तत्र विकल्प । २५ विकल्पात् । २६ निर्विकल्पकप्रत्यक्षस्य । २७ रूपादिरेव विषयो न तूपादानमिति । २८ वासनाप्रभवाद्विकल्पान्निर्विकल्पकस्य विषयत्वनियम सिध्यति चेत् । २९ वस. । ३० तर्हीति शेषः । इतो जैनो ब्रूते । ३१ उत्तराक्षबुद्धेर्निर्विकल्पकोपादानरूपपूर्वाक्षबुद्धि(निर्विकल्पकज्ञान)विषय-त्वनियमः । ३२ ( बौद्धेन ) । ३३ निर्विकल्पकस्य । ३४ सौगत । ३५ निर्विकल्पकस्य रूपादिनियमविषयत्वाभ्युपगमे । ३६ ( विकल्पबलात्, तद्वासनाबलाद्वा । ३७ उत्तराक्षबुद्धेरुपादानरूपपूर्वाक्षबुद्धिविषयत्वनियमाभ्युपगमे । ३८ तदभ्युपग-मवत् । ३९ शब्देन । ४० प्रत्यक्षबुद्धेरभिलापसंसर्गं विना । ४१ तेन, उक्तानुमानेन । ४२ रूपादावभिलापसंसर्गोऽस्ति रूपाद्युत्पन्नदर्शनेऽभिलापसंसर्गान्यथानुपपत्तेरित्यनुमानेन । ४३ क्षणिकतया ज्ञानकालेऽर्थस्याभावेपि ज्ञाने नीलाकारदर्शनादेव तद्विषयभूतं च नीलमेवेत्यनुमीयते यथा तथा ज्ञाने शब्दाकारदर्शनादर्थोप्यनुमीयतामिति भाव· । ४४ नीलादिकम् । ४५ अभिलापसंसर्गमन्तरेण ।

तदप्रतिपत्तौ तेन[1] तत्र योजयति । तदयोजयन्[2]नाध्यवस्यति[3]ति न किंचिद्[4]विकल्पः शब्दो वेत्यविकल्पाभिधानं[5] जगत्स्यात् । ननु[6] च नामसंश्रयस्य[7] विकल्पस्य प्रत्यात्मवेद्यत्वात् सर्वेषां[8]मभिधानस्य च श्रोत्रबुद्धौ प्रतिभासनात्कथमविकल्पाभिधानं जगदापद्येतेति चेन्न, तत्रा[9]प्यध्यवसाया[10]संभवात् । न च स्वसंवेदनेनेन्द्रियप्रत्यक्षेण वा निर्विकल्पकेन विकल्पोभिधानं वा गृहीतं नाम, अतिप्रसङ्गात्[11] । तथा हि । बहिरन्तर्वा गृहीत[12]मप्यगृहीतकल्पं[13] क्षणक्षयस्वलक्षणसंवेदनादिवत् । तथा[14] चायातमचेतनत्वं जगतः । ननु च नास्मन्मते कश्चित्किञ्चिन्नीलादिकं सुखादिकं वा संविदन्[15]पूर्वसविदितं तत्सदृशं तन्नाम[16]विशेषं च क्रमशः स्मरति, पूर्वसंविदितसंवेद्यमाननामविशेषयोः सहैव स्मरणात्, तत्[17]संस्कारयोर्दृश्यदर्शनादेव सहप्रबोधात् । ततोयं किञ्चि[18]त्पश्यन्नेव तत्सदृशं पूर्वदृष्टं स्मर्तुमर्हति, तदैव तन्नामविशेषस्मरणात्, ततस्तस्येदं नामेत्यभिधानप्रतिपत्तेः, ततस्तस्य दृश्यस्याभिधानेन योजनाद्व्यवसायघटनान्न किञ्चिद्रूपर्ण[19]मित्यपरः, तस्यापि दृश्यमाननाम्नः पूर्वदृष्टस्य च तत्[20]सदृशस्य सह स्मृतिरयुक्तैव, स्वमतविरोधात्, सह[21]स्मृतिद्वयो[22]रनभ्युपगमात्[23] कल्पनयो[24]र्बाध्यबाधकभावात् । कथमन्यथाऽश्वं विकल्पयतोपि गोदर्शने कल्पनाविरहसिद्धिः ? नाम[25]मात्रेपि सहस्मृतिरयुक्तैव, तन्नामाक्षरमात्राणा[26]मपि क्रमशोऽध्यवसानात्, अध्यवसाना[27]भावे स्मृतेरयोगात् क्षणक्षयादिवत्[28] । न च युगपत्तदध्यवसायः सम्भवति, विरोधात् । अन्यथा संकुला प्रतिपत्तिः स्यात्, नीलमिति नाम्नि नकारादीनां परस्परविविक्तानामप्रति[29]पत्तेः । किञ्चाभिलापस्य[30] पदलक्षणस्य तदंशानां च वर्णानां नामविशेषस्य स्मृ[31]तावसत्यां व्य[32]वसायः स्यात् सत्यां वा ? नाम्नो[33] नामान्तरेण विनापि स्मृतौ केवला[34]र्थव्यवसायः किं न स्यात् ? स्वा[35]भिधानविशेषापेक्षा एवार्था निश्च[36]यैर्व्यवसीयन्ते इत्येका[37]न्तस्य त्यागात्, नाम्नः[38] स्वलक्षणस्यापि स्वाभिधानविशेषानपेक्ष[39]स्यैव व्यवसायवचनात्[40] । तदवचने वा न कश्चिद्व्यवसायः स्यात्, नाम[41]तदंशानामव्यवसाये ना[42]मार्थव्यवसायायोगात् । दर्शने[43]नाव्यवसायात्मना दृष्टस्याप्यदृष्टकल्पत्वात् सकलप्रमाणाभावः, प्रत्य[44]क्षस्याभावेनुमानोत्थानाभावात् । तत एव सकलप्रमेयापायः, प्रमाणापाये प्रमेयव्यवस्थानुपपत्तेः । इत्यप्रमाणप्रमेयत्वमशेषस्यावश्यमनुषज्येत । तदुक्तं न्यायविनिश्चये

---

१ तदभिधानेन । २ पूर्वदृष्टनामाऽयोजयन् । ३ दृश्यमानम् । ४ दृश्यमाननीलादौ । ५ विकल्पश्चाभिधानं च । ते न विद्येते यत्र तत् । ६ सौगत. । ७ नाम संश्रय कारणं यस्य स तस्य । ८ नृणाम् । ९ विकल्पाभिधानयो' । १० अध्यवसायो निश्चयः । ११ निर्विकल्पकेन सविकल्पकग्रहणं चेत्तेनैव स्थिरस्थूलसाधारणाकारग्रहणं पूर्वमेव भवतु । १२ निर्विकल्पकेन विषयीकृतम् । १३ नामजात्यादियोजनासहितं न गृह्णाति यत । १४ विकल्पाभिधानासंभवे गृहीतस्याप्यगृहीतकल्पत्वे । १५ दृश्यमानेन । १६ तत्, पूर्वसविदितं च संवेद्यमाननामविशेषश्चेति द्वन्द्व' । १७ तयो पूर्वसंविदितसंवेद्यमाननामविशेषयोः संस्कारौ, तयोः । १८ नीलादि । १९ अविकल्पाभिधानं जगदिति । २० दृश्यमानसदृशस्य । २१ स्वमतविरोधं दर्शयति । २२ स्मृतिरूपयोर्वर्तमानातीतयोर्विकल्पयो. । २३ सह स्मृतिद्वयानभ्युपगमे हेतुमाह । २४ दृश्यमाननामपूर्वदृष्टयो' । २५ नीलमिति । न केवलं पूर्वदृष्टदृश्यमाननामविशेषयोरेव । २६ स्वराणाम् । २७ ( युगपत् ) २८ क्षणक्षयादावध्यवसायाभावे यथा स्मृतिर्न भवेत्, तदैव तस्य नाशात् । २९ परस्पर भिन्नत्वेनाप्रतिपत्तेर्युगपदध्यवसायो यत. । ३० स्वलक्षणरूपस्य शब्दस्य अपरतद्वाचकशब्दविशेषस्य स्मृताविति भावः । ३१ अभिलापस्य ३२ अभिलापस्य पदलक्षणस्य । ३३ शब्दरहितत्वेन । ३४ भवतु नाम केवलार्थव्यवसाय इति सौगतेनोक्ते जैन प्राह । ३५ विकल्पैः । ३६ सौगतमतवचनस्य । ३७ त्यागे हेतुमाह । ३८ शब्दरहितार्थस्य । ३९ भवन्मते स्वलक्षणनाम्नोऽभावे व्यवसायोस्तीति कृत्वा त्यागो मतस्य । ४० प्रतिपादितदोषभयान्नाम्नो व्यवसायावचने । ४१ नाम, शब्द । तदंशा, स्वरव्यञ्जनानि । ४२ नाम्नो योऽर्थस्तस्य । ४३ निर्विकल्पकज्ञानेन । ४४ निर्विकल्पकस्य सकलस्याभावेपि सविकल्पकमनुमानमस्तीत्याशङ्कायामाह ।

"अभिलापतद्दंशानामभिलापविवेकतः । अप्रमाणप्रमेयत्वमवश्यमनुषज्यते" इति, अभिलापविवेकत इत्यभिलापरहितत्वादिति व्याख्यानात् । प्रथमपक्षोपक्षिप्तदोषपरिजिहीर्षया तन्नामान्तरपरिकल्पनाया-मनवस्था । नामतदंशानामपि नामान्तरस्मृतौ हि व्यवसाये नामान्तरतदंशानामपि व्यवसायः स्वनामान्त-रस्मृतौ सत्यामित्यनवस्था स्यात् । तथा च तदेवाप्रमाणप्रमेयत्वमवश्यमनुषज्येत । अत्रापीयमेव कारिका योज्या, 'अभिलापविवेकतः' इत्यभिलापनिश्चयत इति व्याख्यानात् । प्रतिपादितदोषभयात्तदयमशब्दं सामान्यं व्यवस्यन् स्वलक्षणमपि व्यवस्येत्, सामान्यलक्षणस्वलक्षणयोर्हि भेदाभावात् । नन्वर्थक्रिया-कारिणः परमार्थसतः स्वलक्षणत्वात्, ततोन्यस्यानर्थक्रियाकारिणः संवृतिसतः सामान्यलक्षणत्वात्तयोः कथमभेदः स्यात् ? "यदेवार्थक्रियाकारि तदेव परमार्थसत् । अन्यत्संवृतिसत् प्रोक्ते ते स्वसामान्यलक्षणे" इति वचनात्, तयोरभेदे सांवृतेतरस्वभावविरोधात् । इति कश्चित्, सोपि स्वदर्शनानुरागी न परीक्षकः, स्वेनासाधारणेन रूपेण लक्ष्यमाणस्य सामान्यस्यापि स्वलक्षणत्वघटनाद्विशेषवत् । यथैव हि विशेषः स्वेनासाधारणेन रूपेण सामान्यासंभविना विसदृशपरिणामात्मना लक्ष्यते तथा सामान्यमपि स्वेनासा-धारणेन रूपेण सदृशपरिणामात्मना विशेषासंभविना लक्ष्यते इति कथं स्वलक्षणत्वेन विशेषाद्भिद्यते ? यथा च विशेषः स्वामर्थक्रियां कुर्वन् व्यावृत्तिज्ञानलक्षणामर्थक्रियाकारी तथा सामान्यमपि स्वामर्थक्रियामन्वय-ज्ञानलक्षणां कुर्वत् कथमर्थक्रियाकारि न स्यात् ? तद्वाह्यां पुनर्वाहदोहाद्यर्थक्रियां यथा न सामान्यं कर्तु-मुत्सहते तथा विशेषोपि केवलः, सामान्यविशेषात्मनो वस्तुनो गवादेस्तत्रोपयोगात् । इत्यर्थक्रियाकारित्वेनापि तयोरभेदः सिद्धः । एकस्माद्द्रव्यात्कथञ्चिदभिन्नत्वसाधनाच्च सामान्यविशेषपरिणामयोरभेदोभ्युपगन्तव्यः । तथा च सामान्यं व्यवस्यन्नपि कथञ्चित्तदभिन्नस्वलक्षणं न व्यवस्यतीति कथमुपपत्तिमत् ? अथ न द्रव्यं नापि तत्परिणामः सामान्यं विशेषो वा स्वलक्षणम् । किं तर्हि ? ततोन्यदेव किञ्चित् सर्वथा निर्देष्टुमशक्यं प्रत्यक्षबुद्धौ प्रतिभासमानं तदनुमन्यते । एवमपि जात्यन्तरं सामान्यविशेषात्मकं वस्तु स्वलक्षणमित्यायात, तस्यैव परस्परनिरपेक्षसामान्यविशेषतद्वद्भ्योन्यस्य प्रत्यक्षसंविदि प्रतिभासनात्, निरन्वयक्षणक्षयिनिरंशपरमाणुलक्षणस्य सुष्ठुप्रत्यक्षेणालक्षणात् । तत्र च व्यवसायोक्षजन्मा स्वाभिधान-विशेषनिरपेक्षः किन्न स्यात् ? यतोयं स्वलक्षणमशब्दं न व्यवस्येत् । ततः सामान्यवत्स्वलक्षणम-ध्यवस्यन्नभिलापेन योजयेत् । ततो न किञ्चित्प्रमेयमनभिलाप्यं नाम श्रुतज्ञानपरिच्छेद्यं, शब्दयो-जितस्य श्रुतविषयत्वोपपत्तेः । प्रत्यक्षस्यानभिलाप्यत्वे सोर्थे शब्दानुयोजनं दृष्टसामान्यव्यवसायो यद्यपेक्षेत सोर्थो व्यवहितो भवेत् तदिन्द्रियज्ञानात्सामान्यव्यवसायो न स्यात् । यथैव हि शब्दसंसृष्टार्थग्राहिसविकल्पकप्रत्यक्षवादिनामर्थोपयोगे सत्यपि स्मार्तशब्दानुयोजनापेक्षेऽक्षज्ञाने

१ जगत । २ स्मृतावसत्यामिति प्रथमपक्षः । ३ नामतदंशानां वर्णानां नामविशेषस्य स्मृतौ सत्यां व्यवसाय इति विकल्पः कक्षीक्रियते चेत् । ४ तन्नामान्तरपरिकल्पनायामित्यत्र । ५ अभिलापतदंशानामित्यादि । ६ सौगत । ७ शब्देन विना । ८ विकल्पग्राह्यम् । ९ अशब्दम् । १० सौगत । ११ सामान्यलक्षणस्वलक्षणयोः । १२ अनर्थक्रियाकारि । १३ प्रथमा-द्विवचनम् । १४ विशेषोर्थक्रियाकारी, सामान्यमनर्थक्रियाकारीति तयोर्भेदे सति कथमभेदः प्रतिपाद्यते जैनैरिति सौगतेनोक्ते सत्याह जैनः । १५ पुरुषलिङ्गगोर्वाहः, स्त्रीरूपगोर्दोहादि क्रिया । १६ सामान्यरहितः । १७ मिलित्वा उभयस्वरूपस्य । १८ वाहदोहाद्यर्थक्रियायाम् । १९ व्यापारात् । २० सामान्यस्वलक्षणयोः । २१ शब्देन । २२ जैन । २३ सामान्यविशेषात्म-कस्य । २४ तद्वत् सामान्यविशेषवत् । २५ सामान्यविशेषात्मके जात्यन्तरे । २६ उल्लेखेन विना घटमहमात्मना वेद्मीति प्रत्ययात् । २७ सामान्यविशेषयोरभेदो यतः । २८ प्रमेयस्य श्रुतज्ञानपरिच्छेद्यत्वं कथमित्युक्ते आह । २९ वस्तुन । ३० किञ्च । ३१ शब्दसंसर्गरहितत्वे । ३२ स्मृतेरागतम् । ३३ पूर्वमर्थदर्शनं पश्चाच्छब्दयोजनम् । ३४ स्वोत्पत्तौ दृष्टसामान्यस्य व्यवसायः । अर्थादुत्पन्नं प्रत्यक्षं तमेवार्थं गृह्णातीति बौद्धमतम् । तत्र यदा स्मार्तं शब्दव्यवसाय इत्यादि । ३५ प्रत्यक्षग्राह्योर्थः । ३६ शब्दयोजनेन । ३७ तत् ( तस्मात् ) नीलत्वम् । ३८ नैयायिकानाम् । ३९ अर्थग्रहणव्यापारे ज्ञानोत्पादनलक्षणे ।

तदर्थो[1] व्यवहितः स्यात् स्मार्तेन शब्दानुयोजनेन इति तद[2]र्थादक्षज्ञानं सविकल्पकं न स्यात्, तद[3]भावेपि भावात्तद्भावेपि चाभावादिति दूषणम् 'अर्थोपयोगेपि पुनः स्मार्त्तं शब्दानुयोजनम्। अक्ष[4]धीर्य[5]द्यपेक्षेत सो[6]र्थो व्यवहितो भवेत्' इति वचनात् समुद्भाव्यते तथै[7]व शब्दानुयोजनासहितार्थग्राहिविकल्पवादिनामपि सौगतानामिन्द्रियज्ञान[8]मुपयोगे सत्यपि विकल्पोत्[9]पत्तौ स्मार्त्तं शब्दानुयोजनं विकल्पो यद्यपेक्षेत तदातदिन्द्रियज्ञानं स्वविषयनामविशेषस्मरणेन तद्योजनेन च व्यवहितं स्यात्। तथा च नेन्द्रियज्ञानाद्व्य[10]वसायः स्यात् तद[11]भावे भावात्तद्भावेपि चाभावादिति दूषणमुद्भावनीयं, 'ज्ञा[12]नोपयोगेपि पुनः स्मार्त्तं शब्दानुयोजनं। विक[13]ल्पो यद्यपेक्षेताध्यक्षं[14] व्यवहितं भवेत्' इति वक्तुं शक्यत्वा[15]त्, [16]अर्थशब्देन प्रत्यक्षस्याभिधानाद्वा, [17]कैश्चिद्द्विषयेण विषयिणो वचनाद्धर्मकीर्ति[18]कारिकाया एव तन्मतदूषणपरत्वेन व्याख्यातुं शक्यत्वात्। यथा च प्रा[19]गजनको [20]योर्थोभिलापसंसृष्टार्थेन्द्रियबुद्धे[21]ः स पश्चादपि स्मार्तशब्दानुयोजनेपि त[22]स्योपयोगा[23]विशेषादजनक एव तेनार्थापायेपि नेत्र[24]धीः शब्दाद्वैतवादिनः स्यादिति धर्मकीर्तिदू[25]षणं, 'यः प्रागजनको बुद्धेरुपयोगाविशेषतः। स पश्चादपि तेन[26] स्यादर्थापायेपि नेत्रधीः' इति वचनात्। त[27]था यदिन्द्रियज्ञानं स्मार्तशब्दयोजनात्प्रागजनकं सामान्यव्यवसायस्य तत् पश्चादप्युप[28]योगाविशेषात् तेनेन्द्रियज्ञानव्यपायेपि सामान्यव्यवसायः स्यात्, तस्य प्रागि[29]वाजनकत्वात्, तदन्तरेणापि दर्शनमयं गौरिति निर्णयः स्यात्, '[30]यः प्रागजनको बुद्धेरुपयोगाविशेषतः। स पश्चादपि तेनाक्षबोधा[31]पायेपि [32]कल्पना' इति प्रतिपादनात्। तदेवं न दर्शनादध्यवसायः संभवति येन दर्शनस्य स्वा[33]लम्बन[34]समनन्तर[35]प्रत्ययजन्मतत्सारूप्या[36]विशेषेपि स्वविषयप्रतिनियमः[37] सिध्येत्। किञ्च सौगतानामनभिलाप्यस्य विशेष[38]स्यानुभवे कथमभिलाप्यस्य स्मृतिः? अत्यन्तभेदात् स्वलक्षणात्सामान्यस्य, सह्यविन्ध्यवत्। न हि सह्यस्यानुभवे विन्ध्यस्य स्मृतिर्युक्ता। विशेषसामान्ययोरेकत्वाध्यवसायाद्विशेषस्यानुभवे सामान्ये स्मृतिर्युक्तैवेति चेत् कुतस्तयोरेकत्वाध्यवसायः? न तावत्प्रत्यक्षा[39]त्, तस्य सामान्याविषयत्वात्, नापि त[40]त्पृष्ठभाविनो विकल्पादनुमानाद्वा, तस्य विशेषाविषयत्वात्, तदुभयविषयस्य च क[41]स्यचित्प्रमाणस्यानभ्युपगमात्। तदन्यतरविषयेण तयोरेकत्वाध्यवसायेतिप्रसङ्गा[42]त् त्रिवि[43]प्रकृष्टेतरयोरप्येकत्वाध्यवसायोक्षज्ञानात्प्रसज्येत। किं च[44] शब्दार्थयोः संबन्ध[45]स्यास्वाभावि[46]कत्वे कथमर्थमात्रं पश्य[47]न् शब्दमनुस्मरेत् शब्दं शृण्वन् तदर्थं वा? यतोयं व्यवसायः सौगतस्य सिध्येत्। न हि सह्यमात्रं पश्यन् विन्ध्यस्य स्मरेत्। स्यान्मत 'शब्दस्य विकल्प्ये[48]न तदुत्पत्तिलक्षणसंबन्धोपगमात् तस्य[49] च दृश्येनैकत्वाध्यवसायाद्विशेष-

---

१ अर्थादुत्पन्नं प्रत्यक्षं तमेवार्थं गृह्णातीति बौद्धमतम्। तत्र यदा स्मार्तं शब्दव्यवसाय इत्यादि। २ तन्नीलादि। ३ तदर्थाभावेपि। ४ सविकल्पकस्याक्षज्ञानस्य। ५ सविकल्पकज्ञानम्। ६ सविकल्पकप्रत्यक्षेण गृहीतोर्थः। ७ यथैव इत्यनेनान्वय। सौगतेन। ८ निर्विकल्पकम् (कर्तृपदम्)। ९ सविकल्पकोत्पत्तौ। १० सविकल्पक.। ११ इन्द्रियज्ञानाभावे। १२ निर्विकल्पके ज्ञाने सत्यपि। १३ निर्विकल्पकप्रत्यक्षादुत्पन्नः। १४ निर्विकल्पकम्। १५ जैनैः। १६ अर्थोपयोगेपीत्यादिकारिकामुक्तेन। १७ अर्थोपयोगेपीति श्लोके। १८ धर्मकीर्तिरेको बौद्धगुरुः। १९ स्मार्तशब्दानुयोजनात्पूर्वम्। २० अर्थशब्देन निर्विकल्पकम्। २१ सविकल्पकस्य। २२ निर्विकल्पकस्य। २३ उपयोग इन्द्रियज्ञानव्यापारः। २४ अक्षज्ञानम्। २५ न पुनर्ज्ञानोपयोगेपीति कारिकाया जैनोक्तायाः। २६ कारणेन। २७ हे सौगत यथा शब्दाद्वैतवादिनो भवता दूषणं दत्तं तथा तवापीत्याह। २८ उपयोग सामान्यव्यवसायः। २९ उत्तरकालेपि। ३० निर्विकल्पकबोध.। ३१ निर्विकल्पकज्ञानाभावेपि। ३२ विकल्प। ३३ स्वो नीलस्वलक्षणोर्थः। ३४ द्वन्द्व। ३५ उपादानभूतपूर्वक्षणज्ञानजन्म। ३६ सारूप्यं च निर्विकल्पकज्ञानात्। ३७ स्वविषयस्याध्यवसायो निश्चयः। ३८ स्वलक्षणस्य। ३९ निर्विकल्पकप्रत्यक्षात्। ४० तस्य निर्विकल्पकस्य पश्चाद्भाविनः। ४१ प्रत्यभिज्ञानस्य। ४२ अतिप्रसङ्गं वक्ति। ४३ देशकालस्वभावभेदात्त्रयो विप्रकर्षाः। ४४ सामान्यस्मृतिनिमित्तं शब्दस्मृतिरपि नोपपद्यते इत्याह। ४५ वाच्यवाचकलक्षणस्य। ४६ स्याद्वादिभिस्तु स्वाभाविकोभ्युपगम्यते। ४७ सौगत.। ४८ सामान्यार्थेन नीलादिना सह। ४९ शब्दस्य, चकाराद्विकल्पस्य दृश्येन (अर्थेन) स्वलक्षणेनैकत्वाध्यवसायोस्ति।

स्वानुभवेपि शब्दं तदर्थं वा विकल्प्यं स्मर्तुमीष्टे व्यवहारी, प्रवृत्तिदर्शनात्, इति, तदप्यसम्यक्, कुतश्चिदपि[1] दृश्यविकल्प्ययोरेकत्वाध्यवसायासंभवस्योक्तत्वात्[2]। ततः स्वत एव व्यवसायात्मकत्वमभ्युपगन्तव्यं प्रत्यक्षस्य न पुनरभिधानजात्यादियोजनापेक्षया। चक्षुरादिज्ञानस्य[3][4] कथञ्चिद्व्यवसायात्मकत्वाभावे दृष्टसजातीयस्मृतिर्न स्यात्[5][6], दानहिंसाविरतिचेतसः[7] स्वर्गादिफलजननसामर्थ्यसंवेदनवत्[8] क्षणक्षयानुभवनवद्वा। व्यवसायात्मनो मानसप्रत्यक्षाद्दृष्टसजातीयस्मृतिरिति चेन्न, अव्यवसायात्मनोऽक्षज्ञानात् समनन्तरप्रत्ययाद्व्यवसायात्मनो मनोविज्ञानस्योत्पत्तिविरोधाद्विकल्पवत्[9], निर्विकल्पात्मकत्वान्मानसप्रत्यक्षस्याभिलापसंसर्गयोग्यताप्रतिभासाभावात्[10]। अव्यवसायात्मनोप्यक्षज्ञानाददृष्टविशेषसहकारिणो[11] स्यादुत्पत्तिरिति[12] चेत्, किमेवमक्षज्ञानस्य स्वयं व्यवसायात्मन एवादृष्टविशेषादुत्पत्तिर्नेष्यते[13]? तेन[14] नीलादेर्व्यवसाये तत्क्षणक्षयस्वर्गप्रापणशक्त्यादेरपि[15] व्यवसायप्रसङ्गान्नाक्षज्ञानं व्यवसायात्मकमिष्टमिति चेत् तत[16] एव मानसप्रत्यक्षमपि[17] व्यवसायात्मकं मा भूत्। तस्य[18] क्षणक्षयाद्यविषयत्वान्न[19] तद्व्यवसायित्वमिति चेत्तत[20] एवाक्षज्ञानस्यापि तन्मा[21] भूत्। तथा[22] सति नीलादेः क्षणक्षयादिरन्यः स्यात्, तद्व्यवसायेप्यव्यवसायात् कूटात्पिशाचादिवदिति[23] चेत्तर्हि मानसप्रत्यक्षेणापि नीलादिव्यवसायेपि क्षणक्षयादेरव्यवसायात्ततो भेदोऽस्तु तद्वदेव, सर्वथा विशेषाभावात्[24]। कथञ्चिदक्षज्ञानस्य[25] व्यवसायात्मकत्वे तु मानसप्रत्यक्षकल्पनापि न स्यात्, प्रयोजनाभावात्, तत्प्रयोजनस्याक्षज्ञानादेव[26] सिद्धेः। एतेनाव्यवसायात्मकमपि मानसप्रत्यक्षं कल्पयन् प्रतिक्षिप्तः। ननु 'निर्विकल्पकादप्यक्षज्ञानादभ्यासप्रकरणबुद्धिपाटवार्थित्ववशाद्दृष्टसजातीये स्मृतिर्युक्ता, सविकल्पकप्रत्यक्षा[27]दपि तदभावे तदनुपपत्तेः प्रतिवाद्याद्युपन्यस्तसकलवर्णपदादिवत्[28] स्वोच्छ्वासादिसंख्यावद्वा[29]। न हि सविकल्पकप्रत्यक्षेण तद्व्यवसायेपि कस्यचिदभ्यासाद्यभावे पुनस्तत्स्मृतिर्नियमतः सिद्धा यतः सविकल्पकत्वप्रकल्पनं प्रत्यक्षस्य फलवत्।' इति कश्चित्[30] सोप्यप्रज्ञाकर एव, सर्वथैकस्वभावस्य[31] प्रत्यक्षस्य क्वचिदभ्यासादीनामि[32]तरेषां[33] च सकृदयोगात्। तदन्यव्यावृत्त्या[34][35] तत्र[36] तद्योग[37] इति चेन्न, स्वयमतत्स्वभावस्य[38] तदन्यव्यावृत्तिसंभवे पावकस्याशीतत्वादिव्यावृत्तिप्रसङ्गात्[39], तत्स्वभावस्य[40] तदन्यव्यावृत्तिकल्पने फलाभावात्, प्रतिनियततत्स्व-

---

१ प्रमाणात्। २ यतो दृश्य (स्वलक्षणरूपं) क्षणिकं, सामान्यं कियत्कालस्थायि। ३ स्मृतिर्भविताध्यवसायस्येति निरस्यति। ४ निर्विकल्पज्ञानस्य। ५ नीलादिग्राहकत्वप्रकारेण, न तु स्वलक्षणग्राहकत्वप्रकारेण। ६ वर्तमानकालदृष्टेन सजातीयं पूर्वदृष्टम्। तत्र स्मृतिर्न स्यात्। ७ दानं च हिंसाविरतिश्चेति द्वन्द्व। ८ व्यवसायात्मकत्वाभावे स्वर्गादिफलजननसामर्थ्ये क्षणक्षयादौ वा स्मृतिर्न यथा। ९ यथाऽव्यवसायात्मनोक्षज्ञानात्समनन्तरप्रत्ययाद्व्यवसायात्मनो विकल्पस्योत्पत्तिर्न। १० न व्यवसायात्मकं मानसप्रत्यक्षं तथापि जात्यादिविषयकमिति सौगतेनोक्ते जैन आह। ११ पञ्चमी। १२ व्यवसायात्मनो मानसप्रत्यक्षस्य। १३ सौगतेन। १४ तेन स्वयं व्यवसायात्मलक्षणेनाक्षज्ञानेन नीलादेरर्थगतक्षणक्षयलक्षणार्थस्य स्वर्गप्रापणशक्त्यादेरपि व्यवसाय इन्द्रियज्ञानस्य, तथा नास्ति लोके। १५ निरंशत्वेनाभेदात्। १६ तेन मानसप्रत्यक्षेण स्वयं व्यवसायात्मना नीलादेर्व्यवसाये तत्क्षणक्षयस्वर्गप्रापणशक्त्यादेरपीत्यादिहेतो। १७ मानसप्रत्यक्षस्य। १८ (आदिपदेन स्वर्गप्रापणशक्त्यादिर्ग्राह्य)। १९ (क्षणक्षयस्वर्गप्रापणशक्त्यादिव्यवसायित्वम्)। २० क्षणक्षयाद्यविषयत्वात्। २१ (तद्व्यवसायित्वम्)। २२ अक्षज्ञानस्यापि नीलादिविषयत्वे क्षणक्षयाद्यविषयत्वे सति। तन्मते नीलादे सकाशात्क्षणक्षयो भिन्नो न भवति, तस्य तत्स्वभावत्वात्। २३ कूटे प्रतीयमानेप्यप्रतीयमान. पिशाचस्ततोन्यो यथा। २४ इन्द्रियमानसप्रत्यक्षयो। २५ नीलादिग्राहकत्वप्रकारेण, न स्वलक्षणग्राहकत्वप्रकारेण। इति सति कथञ्चिदक्षज्ञानस्य व्यवसायात्मकत्वम्। २६ मानसप्रत्यक्षप्रयोजनस्य। २७ सविकल्पकप्रत्यक्षज्ञानवादिनाम्। २८ प्रतिवाद्याद्युपन्यस्तसकलवर्णपदादीनामभ्यासादिमन्तरेण यथा स्मृतेरनुपपत्तिः। २९ अभ्यासाद्यभावे एव। ३० प्रज्ञाकर। ३१ निरंशस्य। ३२ नीलादौ। ३३ क्षणक्षयेऽनभ्यासादीनाम्। ३४ सौगत. (प्रज्ञाकर)। ३५ प्रत्यक्षेऽभ्यासादय सन्ति, अनभ्यासादीना व्यावृत्ते.। ततोन्योनभ्यासादि। ३६ प्रत्यक्षे। ३७ अभ्यासादियोग। ३८ प्रत्यक्षस्य। ३९ न शीतस्वभावो यस्य सोतत्स्वभाव, शीतादन्यदशीतत्वं तस्य तदन्यस्य व्यावृत्ते। ४० प्रत्यक्षस्य।

भावस्यैवान्यव्यावृत्तिरूपत्वात् । सविकल्पकप्रत्यक्षज्ञानवादिनां[1] तेषामवग्रहेहावायज्ञानादनभ्यासात्मकादन्य-[2] देवाभ्यासात्मकं धारणाज्ञानं प्रत्यक्षम् । तेषां तदभावे परोपन्यस्तसकलवर्णपदादिष्ववग्रहादित्रयसद्भावेऽपि न स्मृतिः । तत्सद्भावे तु स्यादेव, सर्वत्र यथासंस्कारं स्मृत्यभ्युपगमात् क्वचिदभिलापसंस्कारादभिलापस्मृ-[3][4]तिवत् । प्रत्यक्षेऽभिलापसंस्कारविच्छेदे[5] कुतस्तद्विकल्प्याभिलापसंयोजनं[6][7][8] यतः सामान्यमभिलाप्यं स्यात् । प्रत्यक्षगृहीतमेव हि स्वलक्षणमन्यव्यावृत्तं[9][10] साधारणाकारतया[11] प्रतिभासमानं सामान्यं विकल्पाभि-लापयोजनेनाभिलाप्यमिष्यते[12][13] । न[14] च ग्राहकप्रत्यक्षस्मृतिप्रतिभासभेदाद्विषयस्वभावाभेदाभावः[15], सकृदेकार्थोपनिबद्धदर्शनप्रत्यासन्नेतरपुरुषज्ञानविषयवत् । यथा हि सकृदेकस्मिन्नर्थे पादपादावुपनि-बद्धदर्शनयोः प्रत्यासन्नविप्रकृष्टपुरुषयोर्ज्ञानाभ्यां विषयीकृते स्पष्टास्पष्टप्रतिभासभेदान्न स्वभावभेदः पादपस्य, तस्यैकत्वाव्यतिक्रमात्, तथैव ग्राहकयोः प्रत्यक्षस्मृतिप्रतिभासयोर्भेदेऽपि[16][17] स्पष्टमन्दतया न तद्विषयस्य[18] भेदः, स्वलक्षणस्यैकस्वभावत्वाभ्युपगमात् । तथा च मन्दप्रतिभासिनि स्वलक्षणे घटादौ शब्दविकल्पविषये तत्संकेतव्यवहारनियमकल्पनायामपि कथञ्चिदभिधेयत्वं[19] वस्तुनः सिद्धम् । इत्यलं प्रसङ्गेन[20], रूपादिस्वलक्षणे[21] शब्दाभावादवाच्यमेव तदिति ब्रुवाणस्य[22] प्रत्यक्षेऽर्थस्याभावात्तस्याज्ञेयत्वप्रसक्तेः[23] समर्थनात्, रूपाद्यर्थस्य कथञ्चिज्ज्ञेयत्वेऽभिलाप्यत्वस्यापि[24] साधनात्[25] प्रकृतार्थपरिसमाप्तौ[26] प्रसङ्गस्य[27] निष्प्रयोजनत्वात् पर्याप्तं प्रसङ्गेन । तस्मादवाच्यतैकान्ते यदवाच्यमित्यभिधानं तदसमञ्जसं, स्वलक्षणमनिर्देश्यमि-त्यादिवत्स्ववचनविरोधात् तदप्यसद्, यदसतः समुदाहृतमिति प्रतिपादनात् । यथैव हि स्वलक्षण-मनिर्देश्यमित्यवाच्यतैकान्ते वक्तुमशक्यं तथा प्रत्यक्षं कल्पनापोढमित्यपि, प्रत्यक्षेऽभिलापसंसर्गाभावे विकल्पानुत्पत्तिप्रसङ्गस्य निवेदितत्वात्, तत्सद्भावे[28] सविकल्पकत्वसिद्धेः ।

तदेवं स्वामिसमन्तभद्रभानवः स्फुटतरविलसदकलङ्कन्यायगभस्तिभिरपहस्तितसमस्तभावैकान्तादिपरम-तध्वान्तसन्ततयोऽपि परात्मपक्षनिराकरणसमर्थनायत्तं जयमादिशता भगवतातेन किं पुनर्मे शासनं प्रसिद्धेन न बाध्यते इति स्पष्टं पृष्टा इवाहुः ।—

**कथञ्चित्ते[29] सदेवेष्टं कथञ्चिदसदेव तत् । तथोभयमवाच्यं च नययोगान्न सर्वथा ॥ १४ ॥**

---

१ जैनानाम् । २ नीलादौ । ३ धारणारूपवासनात. । ४ नीलमिति शब्दस्मृतिवत् । ५ निर्विकल्पके विषये वा । ६ तृतीयाद्विवचनमत्र । ७ सामान्यम् । ८ शब्देन प्रतिपाद्यम् । अपि त्वनभिलाप्यमेव । तच्च न सम्यक् । ९ परस्परासं-श्लिष्टपरमाणुलक्षणम् । १० सामान्यव्यावृत्तम् । ११ गोलं गोलमिति । १२ वाच्यम् । १३ इति सामान्यद्वारेण स्वलक्ष-णमपि अभिलाप्यमिष्यते, सामान्यस्वलक्षणयोर्भेदाभावात् । १४ ग्राहकभेदात्सामान्यस्वलक्षणयोर्भेद इत्युक्ते आह जैन । १५ विषयस्वभावभेद इति पाठान्तरम् । १६ प्रत्यक्षं, निर्विकल्पम् । १७ स्मृतिः सविकल्पिका । १८ नीलक्षणक्षयस्वलक्षणस्य सामान्यस्य च । १९ सामान्यापेक्षयाभिलाप्यत्वमर्थपर्यायापेक्षयानभिलाप्यत्वं च । २० अवाच्यतैकान्तदूषणेन । २१ प्रकृ-तमुपसंहरति । २२ सौगतस्य । २३ स्वलक्षणरूपस्य प्रत्यक्षाधारतया प्रत्यक्षरूपतया चानुपलभ्यमानत्वात् । २४ नीलादि-प्रकारेण । २५ ततश्च । २६ अवाच्यतानिषेध. प्रकृतार्थः । २७ दूषणस्य । २८ अभिलापसंसर्गस्य सद्भावे । २९ सिय अत्थि णत्थि उभयं अव्वत्तव्वं पुणो य तत्तिदयं । दव्वं खु सत्तभंगं आदेसवसेण संभवदि ॥ छाया, स्यादस्ति नास्ति उभयमवक्तव्यं पुनश्च तत्त्रितयम् । द्रव्यं खलु सप्तभङ्गमादेशवशेन संभवति । अत्र द्रव्यस्यादेशवशेनोक्ता सप्तभङ्गी, स्यादस्ति द्रव्यं (१), स्यान्नास्ति द्रव्यं (२), स्यादस्ति च नास्ति च द्रव्यं (३), स्यादवक्तव्यं (४), स्यादस्ति चावक्तव्यं च द्रव्यं (५), स्यान्नास्ति चावक्तव्यं च द्रव्यं (६), स्यादस्ति च नास्ति चावक्तव्यं च द्रव्यं (७) मिति । अत्र सर्वथास्तित्वनि-षेधकोऽनेकान्तद्योतकः कथञ्चिदित्यपरनामकः स्याच्छब्दो निपातः । तत्र स्वद्रव्यक्षेत्रकालभावैरादिष्टं ( विवक्षितम् ) मस्ति द्रव्यम् । परद्रव्यक्षेत्रकालभावैरादिष्टं नास्ति द्रव्यम् । क्रमेण स्वपरद्रव्यक्षेत्रकालभावैरादिष्टमस्ति च नास्ति च द्रव्यम् । स्वद्रव्यक्षेत्रकालभावैः परद्रव्यक्षेत्रकालभावैश्च युगपदादिष्टमवक्तव्यं द्रव्यम् । स्वद्रव्यक्षेत्रकालभावैः स्वपरद्रव्यक्षेत्रकालभावैश्च युगपदादिष्टमस्ति चावक्तव्यम् । परद्रव्यक्षेत्रकालभावैर्युगपत् स्वपरद्रव्यक्षेत्रकालभावैश्चादिष्टं नास्ति चावक्तव्यं च द्रव्यम् ।

चशब्दात्सद[1]वाच्यमेव कथञ्चिदसद[2]वाच्यमेव [3]तदुभयावाच्यमेवेष्टं ते शासनमिति समुच्चीयते, '[4]प्रश्नवशादेकत्र वस्तुन्यविरोधेन विधिप्रतिषेधकल्पना[5] सप्तभङ्गी, [6]इति [7]वचनात् । नययोगादिति वचनान्न-यवाक्यानि [8]सप्तैवेति दर्शयन्ति, ततोन्यस्य [9]भङ्गस्यासंभवात् । तत्संयोगजभङ्गस्यापि [10]कथंचित्तत्रैवान्तर्भावात् कस्यचि[11]त्तु पुनरुक्तत्वाद्विधिकल्पनाया एव सत्यत्वात् [12]तयैकमेव वाक्यमिति न मन्तव्यं, प्रतिषेधकल्पनायाः सत्यत्वव्यवस्थापना[13]त् । विध्येकान्तस्य निराक[14]रणात् प्रतिषेधकल्पनैव सत्येत्यपि न [15]सम्यक्, अभावैकान्तस्य निराकरणात् । [16]तदपेक्षयापि नैकमेव वाक्यं युक्तम् । [17]सदर्थप्रतिपादनाय विधिवाक्यमसदर्थकथनार्थं तु प्रतिषे-धवाक्यमिति वाक्यद्व[18]यमेव, [19]सदसद्वर्गास्तत्त्वमिति वचनात्, प्रमेयान्तर[20]स्य शब्दविषयस्यासंभवादिति च न चेतसि [21]विधेयं, प्रधानभावार्पितसदसदात्मनो वस्तुनः प्रधानभूतै[22]कैकधर्मात्मकादर्थादर्थान्तरत्वसिद्धेः, सत्त्ववचनेनैवासत्त्ववचनेनैव वा सदसत्त्वयोः क्रमार्पितयोः प्रतिपादयितुमशक्तेः । सदसदुभय-विषयं वाक्यत्रयमेवेति चायुक्तं, सहोभ[23]यवाक्यस्यावक्तव्यत्वविषयस्य व्यवस्थितेः । तथापि वाक्यचतु-ष्टयमेवेति चायुक्तं, सदसदुभयावक्तव्यत्वविषयस्य वाक्यान्तरत्रयस्य[24]ापि भावात्—विधिकल्पना (१), प्रतिषे-धकल्पना (२), क्रमतो विधिप्रतिषेधकल्पना (३), सह विधिप्रतिषेधकल्पना च (४), विधिकल्[25]पनासहविधिप्र-तिषेधकल्पना च (५), प्रतिषेधकल्पनासहविधिप्रतिषेधकल्पना[26] च (६), क्रमाक्रमाभ्यां विधिप्रतिषेधक-ल्पना[27] (७) च सप्तभङ्गीति व्याख्यानात् । न चैवं प्रत्यक्षादिविरु[28]द्धविधि[29]प्रतिषेधकल्पनापि सप्तभङ्गी स्यादिति शक्यं वक्तुम्, [30]अविरोधेनेति वचनात् । नानावस्त्वा[31]श्रयविधिप्रतिषेधकल्पना सप्तभङ्ग्यपि प्रसज्यते इति च न चिन्त्यमेकत्र वस्तुनीति वचनात् । [32]नन्वेकत्रापि जीवादिवस्तुनि विधीयमाननिषिध्यमानानन्त-धर्मसद्भावात्तत्कल्पनानन्तभ[33]ङ्गी स्यादिति चेन्न, अनन्तानामपि सप्तभङ्गीना[34]मिष्टत्वात् तत्रैकत्वानेकत्वादिक-ल्पना[35]यामपि सप्तानामेव भङ्गानामुपपत्तेः, प्रतिपाद्यप्रश्नानां तावतामेव संभवात्, प्रश्नवशादेव सप्तभङ्गीति नियमवचनात् । सप्तविध एव तत्र प्रश्नः कुत इति चेत्, सप्तविधजिज्ञासाघटनात् । सापि सप्तविधा

---

स्वद्रव्यक्षेत्रकालभावैः परद्रव्यक्षेत्रकालभावैश्च युगपत्स्वपरद्रव्यक्षेत्रकालभावैश्चादिष्टमस्ति नास्ति चावक्तव्यं च द्रव्यम् । न चैतदनुपपन्नं, सर्वस्य वस्तुनः स्वरूपेणाशून्यत्वात्, पररूपेण शून्यत्वात्, उभयाभ्यामशून्यशून्यत्वात्, सहावाच्यत्वात्, भङ्गसंयोगार्पणायामशून्यावाच्यत्वात् ( अस्त्यवक्तव्ये ), शून्यावाच्यत्वात् ( नास्त्यवक्तव्ये ), अशून्यशून्याऽवाच्यत्वात् ( स्यादस्तिनास्त्यवक्तव्ये ) ।

१ स्यादस्ति चावक्तव्यं च । २ स्यान्नास्ति चावक्तव्यं च । ३ स्यादस्ति नास्ति चावक्तव्यमेव च । ४ च शब्दादेतेषां त्रयाणामेव समुच्चयः कुत इत्युक्ते आह प्रश्नवशादिति । ५ भेदः । ६ (तत्त्वार्थवार्तिकालङ्कारे) ७ । वार्तिककारैरकलङ्कदेवैः । ८ सप्तभङ्गी, इति वचनेन । ९ स्यात्सदसदवक्तव्यरूपस्य । १० कस्यचित् प्रथमद्वितीयचतुर्थभङ्गानां मध्ये परस्परं द्वयोर्द्वयोस्त्रयाणां च संयोगाज्जातस्य । ११ कस्यचित्तु तृतीयपञ्चमषष्ठसप्तमभङ्गानां परस्परं द्वयोर्द्वयोस्त्रयाणां चतुर्णां वा संयोगे अन्यैस्त्रिभिर्वा सहैषां यथायथं संयोगे यो भङ्गो भवति तस्य । १२ विधिकल्पनया । १३ भावैकान्ते इति कारिकाव्याख्याने । १४ प्रपञ्चतो द्वितीयपरिच्छेदे निराकरिष्यमाणत्वात् । १५ सौगतस्य पक्षः । १६ विधिकल्पनापेक्षया प्रतिषेधकल्पनापेक्षया च । १७ यौगमतमालम्ब्य शङ्केयम् । १८ निरपेक्षम् । १९ ( सद्वर्गस्तु द्रव्यगुणकर्मसामान्यविशेषसमवायरूपः, असद्वर्गश्च निरपेक्षाभावपदार्थस्येति मतं यौगम् ) । २० सदसदात्मकं विहायापरस्य प्रमेयस्यासंभवात् । २१ जैनः प्रतिवदति । २२ एकैकं सत्त्वासत्त्वादि । २३ ( युगपत्सदसदुभयवाक्यं वक्तुमशक्यमिति अवक्तव्यत्वविषयश्चतुर्थभङ्गोपि संभवति ) । २४ ( सदवक्तव्यत्वविषयस्य, असदवक्तव्यत्वविषयस्य, सदसदुभयावक्तव्यत्वविषयस्य च ) । २५ पूर्वं द्वन्द्वः पश्चाद्वसः (?) ( अस्त्यवक्तव्यम् ) । २६ नास्त्यवक्तव्यम् । २७ अस्ति नास्ति चावक्तव्यं च । २८ एकत्र वस्तुनि । २९ यथा सर्वथा सत्त्वादिकल्पना । ३० पूर्वमेवोक्तम् । ३१ नाना वस्तून्याश्रयो यस्याः सा चासौ विधिप्रतिषेधकल्पना । ३२ तटस्थो जैनः । ३३ न सप्तभङ्ग्येव । ३४ वस्तुधर्मा अनन्ताः । धर्मं धर्मं प्रति सप्तभङ्ग्यस्ति एवमनन्ताः सप्तभङ्ग्यः । न त्वनन्तभङ्गी । ३५ स्यादेकं द्रव्यापेक्षया, स्यादनेकं पर्यायापेक्षया, स्यादेकानेकं क्रमेणोभयापेक्षया, स्यादवक्तव्यमित्यादिरीत्या ।

कुत इति चेत्, सप्तधा संशयोत्पत्तेः। सप्तधैव संशयः कथमिति चेत्, तद्विषयवस्तुधर्मसप्तविधत्वात्।

तत्र[1] सत्त्वं वस्तुधर्मः, तदनुपगमे वस्तुनो वस्तुत्वायोगात् खरविषाणादिवत्। तथा[2] कथञ्चिदसत्त्वं[3], स्वरूपादिभिरिव[4] पररूपादिभिरपि वस्तुनोऽसत्त्वानिष्टौ[5] प्रतिनियत[6]स्वरूपाभावाद्वस्तुप्रतिनियमविरोधात्। एतेन[7] क्रमार्पितोभयत्वादीनां[8] वस्तुधर्मत्वं प्रतिपादितं, तदभावे क्रमेण सदसत्त्वविकल्पशब्द[9]व्यवहारस्य विरोधात्, सहावक्तव्यत्वदुत्तर[10]धर्मत्रयविकल्पशब्दव्यवहारस्य चासत्त्वप्रसङ्गात्। न चामी व्यवहारा निर्विषया एव, वस्तुप्रतिपत्तिप्रवृत्तिप्राप्तिनिश्चयात्[11] तथाविध[12]रूपादिव्यवहारवत्। तस्यापि निर्विषयत्वे सकलप्रत्यक्षादिव्यवहारापह्नवान्न कस्यचिदिष्टतत्त्वव्यवस्था स्यात्। ननु च प्रथमद्वितीयधर्म[13]वत् प्रथमतृतीयादिधर्माणां क्रमेतरार्पितानां धर्मान्तरत्वसिद्धेर्न सप्तविधधर्मनियमः सिध्येदिति चेन्न, क्रमार्पितयोः प्रथमतृतीयधर्मयोर्धर्मान्तरत्वेनाप्रतीतेः सत्त्वद्वयस्यासंभवात्, विवक्षित[14]स्वरूपादिना सत्त्वस्यैकत्वात्। तदन्य[15]स्वरूपादिना सत्त्वस्य द्वितीयस्य संभवेपि विशेषादेशा[16]त्तत्प्रतिपक्षभूतासत्त्वस्यापि परस्य भावादपरधर्मसप्तकसिद्धेः सप्तभङ्गयन्तरसिद्धेः कथमुपालम्भः ? एतेन[17] द्वितीयतृतीयधर्मयोः क्रमार्पितयोर्धर्मान्तरत्वमप्रातीतिकं व्याख्यातम्। प्रथमचतुर्थयो[18]र्द्वितीयचतुर्थयो[19]स्तृतीयचतुर्थयोश्च[20] सहितयोः कथं धर्मान्तरत्वमेवं[21] स्यादिति चेच्चतुर्थेऽवक्तव्यत्वधर्मे सत्त्वासत्त्वयोरपरामर्शात्[22]। न हि सहार्पित[23]योस्तयोरवक्तव्यशब्देनाभिधानम्। किं तर्हि ? तथार्पितयोस्तयोः सर्वथा वक्तुमशक्तेरवक्तव्यत्वस्य धर्मान्तरस्य तेन[24] प्रतिपादनमिष्यते। न च तेन[25] सहितस्य सत्त्वस्यासत्त्वस्योभयस्य वाऽप्रतीतिर्धर्मान्तरत्वासिद्धिर्वा, प्रथमे भङ्गे सत्त्वस्य प्रधानभावेन प्रतीतेः, द्वितीये पुनरसत्त्वस्य, तृतीये क्रमार्पितयोः सत्त्वासत्त्वयोः, चतुर्थेऽवक्तव्यत्वस्य, पञ्चमे सत्त्वसहित[26]स्य, षष्ठे पुनरसत्त्वोपेतस्य[27], सप्तमे क्रमवत्तदुभय[28]युक्तस्य[29] तत्र[30] शेष[31]धर्मगुणभावाध्यवसायात्। स्यान्मतम् 'अवक्तव्यत्वस्य धर्मान्तरत्वे वस्तुनि वक्तव्यत्वस्यापि धर्मान्तरस्य भावादष्टमस्य कथं सप्तविध एव धर्मः सप्तभङ्गीविषयः स्यात्' इति, तदप्ययुक्तं, सत्त्वादिभिरभिधीयमानस्य वक्तव्यत्वस्य प्रसिद्धेः, सामान्येन[32] वक्तव्यत्वस्यापि विशेषेण वक्तव्यतायामनवस्थानात्। भवतु वा वक्तव्यत्वावक्तव्यत्वयोर्धर्मयोः सिद्धिः। तथापि ताभ्यां[33] विधिप्रतिषेधकल्पनाविषयाभ्यां सत्त्वासत्त्वाभ्यामिव सप्तभङ्गयन्तरस्य प्रवृत्तेर्न तद्विषयसप्तविधधर्मनियमविघातोस्ति यतस्तद्विषयसंशयः सप्तधैव न स्यात्तद्धेतु[34]र्जिज्ञासा[35] वा तन्नि-

---

१ संशयविषयवस्तुधर्माणां मध्ये। २ ( सत्त्वस्य वस्तुधर्मत्वप्रकारेण )। ३ वस्तुधर्मः। ४ स्वद्रव्यक्षेत्रकालभावैः। ५ असत्त्वानिष्टौ सत्त्वाङ्गीकारे इत्यर्थः। ६ अयं घट एव न तु पट इत्येवम्। ७ सत्त्वासत्त्वयोर्वस्तुधर्मत्वनिरूपणेन। ८ स्यादस्तिनास्तीत्यादिपञ्चानाम्। ९ सदसत्त्वविकल्पश्चासौ शब्दव्यवहारश्चेति कर्मधारयः (द्वन्द्वो वा)। १० अवक्तव्येन सह वर्तमानं तदुत्तरधर्मत्रयं चेति कर्मधारयः। अस्त्यवक्तव्य, नास्त्यवक्तव्यमस्तिनास्ति चावक्तव्य चेति धर्मत्रयम्। ११ एभ्यो व्यवहारेभ्यः। १२ तथाविधं रूपमादि यस्य स तथोक्तः। स चासौ व्यवहारश्च। अथवा तथाविधश्चासौ रूपादिव्यवहारश्च। १३ यथास्तित्वधर्मान्नास्तित्वधर्मो धर्मान्तरम्। १४ ( अनन्तधर्माणां मध्ये विवक्षितेन स्वरूपादिना=स्वद्रव्यक्षेत्रकालभावैरित्यर्थः )। १५ ( विवक्षितादन्यत्तदन्यत् )। १६ ( तत्, तदन्यसत्त्वम् )। १७ प्रथमतृतीयधर्मयोर्धर्मान्तरत्वनिराकरणेन। १८ ( स्यादस्ति चावक्तव्यमिति )। १९ ( स्यान्नास्ति चावक्तव्यमिति )। २० ( स्यादस्ति नास्ति चावक्तव्यमिति )। २१ स्यादस्ति, स्यान्नास्ति, स्यादस्ति नास्ति चेति त्रिषु भङ्गेषु मध्येन्तर्भूतत्वप्रकारेण। २२ ( अवक्तव्यत्वधर्मे सत्त्वस्यापरामर्शे पञ्चमो भङ्गो, नास्तित्वस्य च तत्रापरामर्शे षष्ठो भङ्गो, अस्तित्वनास्तित्वोभययोस्तत्रापरामर्शे सप्तमो भङ्ग इति )। २३ अवक्तव्यत्वेन सहार्पितयोरित्यर्थः। २४ (अवक्तव्यत्वेन)। २५ तेन अवक्तव्यत्वेन सह सत्त्वस्यासत्त्वस्योभयस्य वाऽप्रतीतिरपि धर्मान्तरत्वासिद्धिर्वापि न, किन्तु प्रतीतिरेव धर्मान्तरत्वसिद्धिर्वास्त्येव ततो धर्मान्तरत्वमस्त्येव। २६। २७। २८ अवक्तव्यत्वस्य। २९ प्रधानभावेन प्रतीतेरित्यन्वयः। ३० प्रथमादौ। ३१ शेषाः असत्त्वादिषट्। ३२ सामान्याकारेण ( स्यादस्तीत्यादौ अस्तित्ववचनं सिद्धमेवेत्येवम् ) वक्तव्यत्वसिद्धावपि विशेषेण ( स्यादस्ति वक्तव्यमिति वक्तव्यत्वशब्दोच्चारणपूर्वकत्वेनैव ) वक्तव्यताया स्वीकृतायां सत्याम्। ३३ वक्तव्यत्वावक्तव्यत्वाभ्याम्। ३४ संशयहेतुः। ३५ सप्तधैव।

मिच्चः प्रश्नो वा वस्तुन्येकत्र सप्तविधवाक्यनियमहेतुः । इति सूक्ता[1] सत्त्वादिधर्मविषया गौ[2]: सप्तभङ्गी । सा च स्याद्वादामृतगर्भिणी, स्याद्वचनार्थस्य[3] कथञ्चिच्छब्देन[4] प्रतिपादनात्, तेना[5]नेकान्तस्य द्योतकेन वाचकेन वा[6] तस्याः प्रतिहतैकान्तान्धकारोदयत्वात् । न चैवं स्याच्छब्दवत्[7]कथञ्चिच्छब्देनैवानेकान्तस्य प्रतिपादनात्सदादिवचनमनर्थकमाशङ्कनीय, ततः[8] सामान्यतोनेकान्तस्य प्रतिपत्तावपि विशेषार्थिना विशेषस्यानुप्रयोगात्,सामान्योपक्रमेपि[9] विशेषार्थिना विशेषोनुप्रयोक्तव्यो, वृक्षो[10] न्यग्रोध इति यथेति वचनात् । द्योतकपक्षे तु न्यायप्राप्तं सदादिवचनं, [11]तेनोक्तस्य[12] कथञ्चिच्छब्देन द्योतनात्, तेनानुद्द्योतने[13] सर्वथैकान्तशङ्काव्यवच्छेदेनाऽनेकान्तप्रतिपत्तेरयोगात्, एवकारावचने विवक्षितार्थाप्रतिपत्तिवत् । नन्वनुक्तोपि कथञ्चिच्छब्दः सामर्थ्यात्[14]प्रतीयते, सर्वत्रैवकारवदिति चेन्न, प्रयोजकस्य[15] स्याद्वादन्यायाकौशले प्रतिपाद्याना तद[16]प्रतीतेस्तद्वचनस्य क्वचिदवश्यं भावात् । तत्कौशले वा तदप्रयोगोभीष्ट एव, सर्वस्यानेकान्तात्मनो वस्तुनः प्रमाणात् साधने[17] सर्वं सदित्यादि[18]वचनेपि, स्यात्सर्वं सदेवेत्यादिसम्प्रत्ययोत्पत्तेः । इति प्रपञ्चतोन्यत्र[19] प्ररूपितमवगन्तव्यम् ।

ननु[20] च जीवादिद्रव्यं सदेव कथञ्चिदित्यसिद्धं, दर्शनावग्रहादिविशेषव्यतिरेकेण[21] तस्यानुपलम्भात्, अश्वविषाणवदिति चेन्न, अवग्रहेहादेरन्योन्यं स्वलक्षण[22]विवेकैकान्ते जीवान्तरवत्[23] स्वात्मन्यपि[24] सन्ता[25]नभेदप्रसङ्गात् । तथा[26] च यदेव मया विषयवि[27]षयिसन्निपात[28]दशायां किञ्चिदित्यालोकितं तदेव वर्णसंस्थानादिसामान्याकारेणावगृहीतं पुनः प्रतिनियतविशेषाकारेणेहितं तदेवा[29]काङ्क्षितविशेषाकारेणा[30]वेतं, पुनः कालान्तरस्मृतिहेतुतया[31]वधारितं, तदेव कालान्तरे तदित्याकारेण स्मृतं[32], पुनस्तदेवेदमित्याकारेण प्रत्यभिज्ञातं, ततो यदित्थं[33] कार्यकृत्तदित्थं सर्वत्र सर्वदेति तर्कितं, ततस्तत्कार्यावबोधना[34]दभिनिबुद्धं[35], तदेव च शब्दयोजनया विकल्पनिरूपणया वा परार्थं स्वार्थं[36] वा श्रुतमि[37]त्यनुसन्धान[38]प्रत्ययवदहमेक एव दृष्टाऽवगृहीतेहितेत्याद्यनुसन्धान[39]बुद्धिरपि न क्वचि[40]दास्पदं बध्नीयात् । तथाविधवासनाप्रबोधा[41]दनुसंधानावबोधप्रसिद्धिरिति चेत्साऽनुसंधानवासना यद्यनुसंधीयमान[42]दर्शनादिभ्यो भिन्ना तदा सतानान्तरे दर्शनावग्रहादिष्विव स्वसंतानेपि नानुसंधानबोधमुपजनयेत्, अविशेषात् । तदभिन्ना[43] चेत्तावद्धा[44] भिद्येत, न हि भिन्ना[45]दभिन्नमभिन्नं नाम[46]ेति स्वयमभिधानात् । तथा च तत्प्रबोधात्[47]कथं दर्शनावग्रहादिष्वेकमनुसन्धानज्ञानमुत्पद्येत ?

---

१ भट्टाकलङ्कदेवैः । २ वाणी । ३ अत्र पूर्वोक्तकारिकायां स्याच्छब्दो नास्त्येव । ततः कथं गौः स्याद्वादामृतगर्भिणी स्यादित्याशङ्कायामाह । ४ कारिकायां कथञ्चिच्छब्दोस्ति । ५ कथञ्चिच्छब्देन ६। कपुस्तकेऽय 'वा'शब्दो नास्त्येव । ७ कथञ्चिच्छब्दादेवानेकान्तस्य कथनप्रकारेण । ८ कथञ्चिच्छब्दात् । ९ प्रतिपादने । १० यथा वृक्ष इति सामान्येनोक्तेपि तदनु विशेषार्थिना न्यग्रोध इत्युच्यते । ११ सदादिवचनेन । १२ अनेकान्तस्य । १३ अनेकान्तस्य । १४ वस्तुनोनेकरूपत्वसाधनसामर्थ्यात् । १५ प्रतिपादकस्य ( शिष्यान्प्रति ) । १६ स्याद्वादन्यायाप्रतीते । १७ सिद्धे सति । १८ ( इत्येतावद्वचनेपि ) । १९ श्लोकवार्तिके । २० सौगत आह । २१ किञ्चिदिदमिति निर्विकल्पकज्ञानमन्तरेणान्यत्किमपि नास्तीति तात्पर्यम् । २२ विवेको भेद । २३ यथा जीवान्तरे संतानभेद । २४ स्वाधारजीवे । २५ अन्वयविच्छेदप्रसङ्गात् । २६ सन्तानभेदे सति दूषणमादर्शयन्ति जैनाः । २७ इन्द्रियं विषयि । २८ प्रथमाक्षसन्निपातसमये एव ( योग्यक्षेत्रावस्थान सन्निपात ) । २९ यदेवेहितम् । ३० अवायज्ञानविषयीकृतम् । ३१ ( कालान्तरेप्यविस्मृतिकारणं धारणा ज्ञानविशेष ) । ३२ ( धारणाहेतुका स्मृति. ) । ३३ यद्वस्तु ईदृग्धूमादिकार्यकृत् तदित्थमग्निरूपम् । ३४ हेतो. । ३५ अनुमितम् । ३६ शब्दयोजनया परार्थं विकल्पयोजनया स्वार्थम् । ३७ श्रुतज्ञानविषयीकृतम् । ( मनोवलम्बेन मतिज्ञानरूपादर्थादर्थान्तरज्ञान श्रुतम् । यथा स्पर्शनेन्द्रियेण वायोर्मतिज्ञानविशेषे जाते वायुरयमिति, तदवलम्ब्य शीतवातेनैवं रोगा प्रजायन्ते उष्णवातेन त्वेवमित्याद्यर्थान्तरज्ञानं श्रुतम् ) । ३८ प्रत्यभिज्ञानप्रतीतिवत् । ३९ प्रत्यभिज्ञानबुद्धि· । ४० दर्शनावग्रहादौ । ४१ प्राकट्यात् । ४२ अनुसंधीयमानः, प्रत्यभिज्ञानेन विषयीक्रियमाण. । ४३ दर्शनादिभ्योऽभिन्ना । ४४ यावद्धा दर्शनादय । ४५ दर्शनावग्रहादे । ४६ ( अर्थात् अनेकभेदरूपादर्थादभिन्नं किञ्चित्स्वयमभिन्न ( अभेदरूपं ) न भवति किन्तु स्वयमपि तावद्धा· भिद्येतैव यावद्धा तदभिन्नपदार्थः इति स्वयं बौद्धैरभिहितम् ) । ४७ वासनाप्रबोधात् ।

यदि पुनस्तेभ्यः कथंञ्चिदभिन्ना वासनानुमन्यते तद्धेतुस्तदा अहमहमिकयात्मा[1] चित्रं[2] तान[1]नुभवन्ननादिनिधनः स्व[3]लक्षणप्रत्यक्षः सर्वलोकानां कचिच्चित्रविचित्तक्षणे नीलादि[4]विशेषनिर्भासवदात्मभूतान् परस्परतो विविक्तान्सहक्रमभा[5]विनो गुणपर्यायानात्मसात्कुर्वन् सन्नेव सिद्धः, तस्यै[6]व वासनेति नामान्तरकरणात् । तदेक[7]त्वाभावे नीलादिविशेषनियतदर्[8]शननानासंतानसंवेदनक्षणवच्चित्रसंवेदनं न स्यात् । क्रमवृत्तिसुखादीनामिव दर्शनावग्रहादीनामेकसतानिपतितत्वादनुसंधानमनने[9]निबन्धनत्वमनुमतमिति चेत्तर्हि संततिरात्मैव । त[10]था क्रमवृ[11]त्तीनां सुखादीनां मतिश्रुतादीनां वा तादात्म्य[12]विगमैकान्ते संततिरनेकपुरुषवन्न स्यात् । सुखा[13]दिमत्यादीनां नैर[14]न्तर्यादव्यभिचारिकार्यकारणभावाद्वास्यवासकं[15]भावाच्चापरा[16]मृष्टभेदानामेका सततिः. न पुनरनेकपुरुषे, त[17]दभावादिति चेत्तर्हि नैर[18]न्तर्यादेरविशेषात्संतानव्यतिकरोपि किन्न स्यात् ? न हि नियामकः कश्चिद्विशेषः, अन्यत्राभेदपरिणामात् । संतानि[19]नां भेदपरिणाम एव नाभेदपरिणामः, संकरप्रसङ्गादिति चेन्न, येनात्म[20]ना तेषा[21]मभेदस्ते[22]न सद्द्रव्यचेतनत्वादिना संकरस्येष्टत्वात्, तेनाप्यसंकरे हर्षविषादादिचित्रप्रतिपत्तेरयोगात् । अस्ति च सैक[23]त्रापि विषये यत्र मे हर्षः प्रागभूत्तत्रैव विषादो द्वेषो भयादिर्वा वर्तते, अहमेव च हर्षवानासं. संप्रति विषादादिमान् वर्ते नान्य इति क्रमतश्चित्रप्रतिपत्तिरबाधा । ततो जीवः सन्नेव । ए[24]वं च यथैक[25]त्र समन[26]न्तरावग्रहादिसदादिस्वभावसंकरपरिणामस्तथैव सर्वत्र चेतनाचेतनेषु संप्रत्यतीतानागतेषु, तत्स्वभावाविच्छित्तेः । अतः कथञ्चित्सदेवेष्टं जीवादि तत्त्वं, सकलबाधकाभावात् । तर्हि[27] सदेव सर्वं जीवादिवस्तु, न पुनरसदिति चेन्न, सर्वपदार्थानां परस्परमसंकरप्रतिपत्तेरसत्त्वस्यापि सिद्धेः, जीवाजीवप्रभेदाना स्वस्वभावव्यवस्थितेरन्यथा[28]नुपपत्तेः । न केवलं जीवाजीवप्रभेदाः सजातीयविजातीयव्यावृत्तिलक्षणाः, किंतु बुद्धिक्षणे[29]पि क्वचिद्ग्राह्यग्राहकयोः सिता[30]दिनिर्भासांशपरमाणुसंवित्त्[31]योपि, परस्पर[32]परिहारस्थितिलक्षणत्वादन्यथा[33] स्थूलशवला[34]वलोकनाभावात्तदेकांशवत्[35] सर्वथा परस्परमव्यावृत्तानां ग्राह्यग्राहकसितादिनिर्भासावयवपरमाणुसंवित्तीनामेकपरमाणुस्वरूपतापत्तेः । न चैकपरमाणुः स्थूलतया शबलतया वावलोकयितुं शक्यः, भ्रमप्रसङ्गात्[36] । तथा[37] च सकलचेतने[38]तरक्षणपरिणामल[39]वविशेषाः परस्परविविक्तात्मानः सिद्धाः, स्वस्वभावस्य स्वभावान्तरेण मिश्रणाभावात् । त[40]दन्योन्याभावमात्रं जगत् । अन्यथा सर्वथैकत्वप्रसङ्गात्

---

१ अशक्यविवेचनतया । २ दर्शनादीन् । ३ स्वलक्षणेन, स्वसंवेदनेन । ४ यथा चित्रवित्तिक्षणो नीलादिविशेषनिर्भासनादनुभवन्स्वलक्षणप्रत्यक्ष । आकारानात्मभूतान् परस्परतो विविक्तानात्मसात्कुर्वन् चित्रवित्तिक्षण स्वलक्षणप्रत्यक्षसर्वलोकाना यथा प्रसिद्धः । ५ सहभाविनो गुणान्, क्रमभाविन. पर्यायान् । ६ जीवस्य । ७ दर्शनावग्रहादीनामात्मना सहैकत्वाभावे । ८ नीलादिविशेषेषु नियतदर्शनं ग्रहणं येषां ते तथोक्तास्ते च ते नानासंतानसंवेदनक्षणाश्च तेषु यथा संवेदनं न तथात्मदर्शनादीनामेकत्वाभावे आत्मापि न स्यात् ते दर्शनादयोपि च न स्यु. । ९ अनुसंधानमेव मननं ज्ञानं, यः सुखी स एवाहं दु खीति । १० वासनावत् । ११ य एव सुख्यास स एवाहं दु.खी सप्रतीति क्रम । १२ आत्मना सह । १३ सौगत' । १४ कालादिव्यवधानाभावात् । १५ वास्यवासक, समर्प्यसमर्पक । १६ अज्ञातभेदानाम् । १७ कार्यकारणभाववास्यवासकभावयोरभावात् । १८ सुगतेतरचित्तक्षणानाम् । १९ चित्तक्षणानाम् । २० स्वरूपेण । २१ सतानिनाम् । २२ आत्मना सह । २३ वातातपादौ । २४ जीवस्य सत्त्वे । २५ जीवे । २६ समनन्तर., अव्यवहित. । २७ साख्यः । २८ असत्त्वं विना परस्पर भेदानुपपत्ते । २९ बौद्धाभिमते चित्रज्ञानक्षणे । ३० आदिना चित्रादिग्रह ३१ सितादिनिर्भासाश्च परमाणुसंवित्तयश्चेति द्वन्द्व. । ३२ सवित्तीना तथा सितादिनिर्भासानामपि । जीवपरिहारोऽजीवस्थितिं, घटपरिहार. पटस्थितिं, नीलपरिहारोऽनीलस्थितिं करोति । ३३ अवयवबहुत्वाभावे । ३४ शवलं चित्रम् । ३५ यथा तदेकांशस्य परस्परपरिहारस्थितिभाव । ३६ अणो· सूक्ष्मत्वात् । ३७ अणुसवित्तीना सजातीयविजातीयव्यावृत्तौ । ३८ इतरो, नीलादिप्रतिभासक्षणः। ३९ लवोंऽश । ४० तस्मात्कारणात् ।

तत्र[1]ान्वयस्य[2] विशेषापे[3]क्षणादभावो वा[4], स्वतन्त्र[5]स्य तस्य जातुचिदप्रतिभासनात्। तदिष्टमसदेव कथञ्चित्।

सर्वथा भावाऽभावोभयात्मकमेव जगदस्तु, तत्र भावस्याभावस्य च प्रमाणसिद्धत्वात् प्रतिक्षेप्तुमशक्यत्वादित्यपर[6]ः सोपि न तत्त्ववित्, सुयुक्त्यतिलङ्घनात्। न हि भावाभावैकान्तयो[7]र्निष्पर्यायमङ्गीकरणं युक्तं, यथैवास्ति तथैव नास्तीति विप्रतिषेधात्। ततः कथञ्चित्सदसदात्मकं द्रव्यपर्यायनयापेक्षया। द्रव्यनयापेक्षयैव सर्वं सत् पर्यायार्थ[8]नयापेक्षयैव च सर्वमसदात्मकं, विपर्यये तथैवासंभवात्। न हि द्रव्यनयापेक्षया सर्वमसत् संभवति, नापि पर्यायनयापेक्षया सर्वं सत्, प्रतीतिविरोधात्। भावाभावस्वभावरहितं तद्विलक्षणमेव वस्तु युक्तमित्यपि न सारं, सर्वथा[9] जात्यन्तरकल्पनायां वा तदंश[10]निबन्धनविशेषप्रतिपत्तेरत्यन्ताभावप्रसङ्गात्। न चासा[11]वस्ति, सदसदुभयात्मके वस्तुनि स्वरूपादिभिः सत्त्वस्य पररूपादिभिरसत्त्वस्य च तदंशस्य विशेष[12]प्रतिपत्तिनिबन्धनस्य सुनयप्रतीतिनिश्चितस्य प्रसिद्धेः दधिगुडचातुर्जातकादि[13]द्रव्योद्भवे पानके[14] तदंशदध्यादिविशेषप्रति[15]पत्तिवत्। न चैव जात्यन्तरमेवोभयात्मकमिति युक्तं वक्तु[16]ं, सर्वथोभयरूपत्वे वा जात्यन्तरप्रतिपत्तेरयोगात् पानकव[17]देव। न हि तत्र दध्यादय एव न पुनर्जात्यन्तरं पानकमित्यभिधातुमुचितं, पानकमिदं सुस्वादु सुरभीति सम्प्रत्ययात्। तद्वद्व[18]स्तुनि न सदाद्यंश एव प्रतीतिविषयः, तदंशिनो[19] जात्यन्तरस्य प्रतीत्यभावापत्तेः। तथा[20] चानवस्थादिदोषानुषङ्गः। येनात्मना[21] सत्त्वं तेनासत्त्वस्याभ्युपगमे येन[22] चासत्त्वं तेन कथञ्चित्सत्त्वानुमनने पुनः प्रत्येक[23]मुभयरूपोपगमादनवस्था स्यात्। त[24]थानभ्युपगमे नोभयस्वभावमशेषमिति ते[25] प्रतिज्ञाविरोधः। येनात्मना सत्त्व[26] तेनैवासत्त्वे विरोधो वैयधिकरण्यं वा शीतोष्णस्पर्शविशेष[27]वत्। संकरव्यतिकरौ च, युगपदेकत्र सत्त्वासत्त्वयोः प्रसक्तेः। परस्परविषयगमनाच्च सशयश्च, कथं सत्त्वं कथं चासत्त्वं वस्तुनीति निश्चयानुत्पत्तेः। अ[28]त एवाप्रतिपत्तिरभावश्चानुषज्यते। तत[29]ः प्रतिपादितदोषान् परिजिहीर्षुभिः सर्वं वस्तु तदिष्टं स्या[30]दुभयं, न पुनः सर्वथा, स्या[31]त्कारेण जात्यन्तरत्वस्यापि स्वीकरणात्।

तर्ह्यस्तीति न भणामि, नास्तीति च न भणामि, यदपि च भणामि तदपि न भणामीति दर्शनमस्त्विति कश्चि[32]त्सोपि पापीयान्। तथाहि। सद्भावेत[33]राभ्यामनभिलापे वस्तुनः, केवलं मूकत्वं जगतः स्यात्, विधिप्रतिषेधव्यवहारायो[34]गात्। न[35] हि सर्वा[36]त्मनानभिलाप्यस्वभावं बुद्धि[37]रध्यवस्यति। न चानध्य[38]वसेयं प्रमितं नाम, गृहीतस्यापि तादृश[39]स्याऽगृहीतकल्पत्वात्। मूर्च्छाचै[40]तन्यवदिति। न हि निर्विकल्पक-

---

१ ( व्यावृत्तिमात्रे जगति )। २ सद्रव्यादिरूपस्य सामान्यस्य। ३ व्यावृत्त्यपेक्षणात्। ४ न केवलं सर्वथैकत्वप्रसङ्ग, किन्त्वभावोपि। ५ असद्रूपनिरपेक्षस्यान्वयस्य। ६ मीमासक.। ७ निरपेक्षत्वे परस्परं विरोधात्। ८ व्यतिरेकविशेषापेक्षया। ९ जात्यन्तरम्। १० ( तस्यांशौ भावाभावलक्षणौ निबन्धनं यस्य स चासौ विशेषश्चेति समासः )। ११ अत्यन्ताभाव। १२ सदेवासदेव चेति। १३ लवङ्गतमालपत्रनागकेसरएला इति चातुर्जातकादि। १४ एकरूपता प्राप्तेपि। १५ भिन्नप्रतिपत्तिवत्। १६ भाट्टस्य। १७ पानके यथा सर्वथोभयरूपत्वे जात्यन्तरप्रतीतिर्न प्राप्नुयात्। १८ पानके यथा दध्यादिभेदस्य, जात्यन्तरस्यापि च प्रतीति। १९ सदाद्यंशिन। २० जात्यन्तरप्रतीत्यभावापत्तौ। २१ स्वरूपादिना। २२ पररूपादिना। २३ सत्त्वे असत्त्वे च। २४ सत्त्वस्यासत्त्वप्रकारेण, असत्त्वस्य सत्त्वप्रकारेण उभयरूपोपगमाभावे। २५ भाट्टस्य। २६ स्वरूपादिनैव। २७ यथा शीतोष्णयोर्वैयधिकरण्यं विरोधो वा ( युगपदनेकत्रावस्थितिर्वैयधिकरण्यम् )। २८ एकत्रैव कथं सत्त्वं कथं चासत्त्वमिति निश्चयानुत्पत्तेरेव। २९ अष्टदोषप्रसङ्गो यत। ३० कथञ्चिदेव। ३१ भवतु वस्तुन कथञ्चिदुभयत्वं, न तु जात्यन्तरत्वमित्याशङ्क्याह। ३२ सौगत.। ३३ अस्तित्वनास्तित्वाभ्याम्। ३४ शब्देन। ३५ निर्विकल्पकप्रत्यक्षेण विधिप्रतिषेधव्यवहारो भविष्यतीत्युक्ते आह। ३६ विशेषेणेव सामान्यरूपेणापि। ३७ निर्विकल्पकज्ञानम्। ३८ वस्तु। ३९ अनिश्चितस्य। ४० यथा मूर्च्छापन्नचैतन्येन गृहीतमप्यगृहीतकल्पम्।

दर्शनप्रतिभासि वस्तु व्यवतिष्ठेत येनानभिलपन्नपि तत् पश्येत्[1]। न[2] सोस्ति प्रत्ययो लोके यः शब्दानुगमादृते । अनुविद्धमिव[3]भाति सर्वं शब्दे प्रतिष्ठितम्[4] । १ । वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती । न प्रकाशः[5] प्रकाशेत सा हि प्रत्यवमर्शिनी[6] । २ । इति दर्शना[7]न्तरमप्यनालोचिततत्त्वं, सर्वात्मना[8]भिधेयत्वेपि प्रत्यक्षेतराविशेष[9]प्रसङ्गात् । चक्षुरादिशब्दादिसामग्रीभेदात्प्रत्यक्षेतरयोर्विशेष इति चेन्न, प्रत्यक्षादिव शब्दादेरपि वस्तुविशेषप्रतिपत्तेरविशेषसिद्धेः, प्रत्यक्षगोचरविशेषस्य शब्दागोचरत्वेऽनभिधेयत्वापत्तेः । प्रत्य[10]क्षात्मकशब्दगोचरत्वात्तस्या[11]प्यभिधेयत्वमेवेति चेत्तथैवानुमानागमज्ञानात्मकशब्दविषय[12]त्वमस्तु[13] । ततश्च प्रत्यक्षेतरयोः स्पष्टविशेषप्रतिभासित्वसिद्धेरविशेषप्रसङ्गः । त[14]योर्विशेषे तदा[15]त्मकशब्दयोर्भेदप्रसङ्गात्कुतः शब्दाद्वैतसिद्धिः ? स्यान्मतम् "अद्वय एव शब्दः, केवलं प्रत्यक्षोपा[16]धिः स्पष्टविशेषप्रतिभासात्मकः, शब्दाद्यु[17]पाधिः पुनरस्पष्टसामान्यावभासात्मकः, पीतेतरोपा[18]धेः स्फटिकस्य पीतेतरप्रतिभासित्ववत्" इति तदसत्, प्रत्यक्षेतरोपा[19]धीनामपि शब्दात्मकत्वे भेदा[20]सिद्धेः, त[21]दनात्मकत्वे शब्दाद्वैतव्याघातात्, तेषा[22]मवस्तुत्वे स्पष्टेतरप्रतिभासभेदनिबन्धनत्वविरोधात् । त[23]त्प्रतिभासस्याप्य[24]भेदे, स एव प्रत्यक्षेतराविशेषप्रसङ्गः । तथा[25]नभिधेयत्वेपि सत्येतरयोरभेदः स्यात् य[26]त्सत्तत्सर्वमक्षणिकं, क्षणिके क्रमयौगपद्याभ्यामर्थक्रियाविरोधादित्यादेरिव वाक्यस्य यत्सत्तत् क्षणिकमेव, नित्ये क्रमाक्रमाभ्यामर्थक्रियानुपपत्तेरित्यादेरपि वाक्यस्यासत्यत्वप्रसङ्गा[27]द्विपर्यया[28]नुषङ्गाद्वा, सर्वथार्थासंस्पर्शित्वा[29]विशेषा[30]त्, कस्यचिदनुमानवाक्यस्य कथ[31]ञ्चिदर्थसंस्पर्शित्वे सर्वथानभिधेयत्वविरोधात् । सोयं सौगतः स्वपक्षविपक्षयोस्तत्त्वातत्त्वप्रदर्शनाय यत्किञ्चि[32]त्प्रणयन् वस्तु सर्वथानभिधेयं प्रतिजाना[33]तीति किमप्येतन्महाद्भुतं, सर्वथाभिधेयरहितेनानुमानवाक्येन सत्यत्वासत्यत्वप्रदर्शनस्य प्रणेतुमशक्तेः, "साध्याभिधानात्पक्षोक्तिः पारम्पर्येण नाप्यलम्[34] । श[35]क्तस्य सू[36]चकं हेतुवचोऽशक्त[37]मपि स्वयम्" इति वचनात् । स्वयं त[38]त्कृतां वस्तुसिद्धिमुपजीवति, न त[39]द्वाच्यतां चेति स्वदृष्टिरागमात्रमनवस्थानु[40]षङ्गात्, वस्तुनोनुमानवाक्यवाच्यतानु[41]पजीवने तत्कृतायाः सिद्धेरुपजीवनासंभवा[42]त्, अनभि[43]मतप्रतिवादिवचनादपि तत्सिद्धिप्रसङ्गात्, स्वाभिधेयरहितादपि स्ववचनात्तत्त्वसिद्धिरुपजीव्यते, न पुनः परवचनादिति कथमप्यवस्थानासंभवात् । मद्वचनं व[44]स्तुदर्शनवंश[45]प्रभवं, न पुनः परवचनमिति स्वदर्शनानुरागमात्रं, न तु परीक्षाप्रधानं, सर्वस्य वचसो विवक्षाविषयत्वाविशेषात् । ततो न सर्वथाभिधेयं वस्तुतत्त्वं नाप्यनभिधेयं, बाधकसद्भावात् । किं तर्हि ? क[46]थञ्चिदवाच्यमेव [47]तवेष्टं, कथञ्चि-

---

१ अनेन जगतोन्धत्वं प्रतिपादितम् । २ शब्दाद्वैती वक्ति । ३ इवशब्दोत्र एवार्थे । ४ सत् । ५ बोध. । ६ प्रकाशहेतुभूता । ७ शब्दाद्वैतिनः । ८ सामान्यरूपेणेव विशेषरूपेणापि । ९ वाच्यविषयत्वेनोभयोरभेदप्रसङ्गात् । १० (पर.) प्रत्यक्ष इति य शब्द. स आत्मा यस्य । ११ प्रत्यक्षगोचरविशेषस्य । १२ (अनुमानागमज्ञानमात्मा यस्य । स चासौ शब्दश्च । स विषयो यस्येति । तत्त्वम्) । १३ प्रत्यक्षेतरयोरभिधेयत्वाविशेषात् । १४ प्रत्यक्षेतरयो. । १५ तदात्मकत्वं प्रत्यक्षेतरात्मकत्वम् । १६ प्रत्यक्ष उपाधिर्यस्य । १७ अयमागमज्ञानात्मक', अनुमानज्ञानात्मक. शब्द' । १८ वस' । १९ द्वन्द्व । २० भेदासिद्धौ प्रत्यक्षेतराविशेषप्रसङ्ग. । २१ शब्दानात्मकत्वे । २२ प्रत्यक्षेतरोपाधीनाम् । २३ स्पष्टेतरप्रतिभासस्य । २४ प्रत्यक्षेतराभ्या सह । २५ अवाच्यत्वेङ्गीक्रियमाणे । २६ तदेव दर्शयति । २७ अनभिधेयत्वात् । २८ अक्षणिके क्षणिकत्वप्रसङ्ग , क्षणिकेऽक्षणिकत्वप्रसङ्ग इति विपर्यय । २९ सत्येतरवाक्ययोः । ३० अनभिधेयत्वे । ३१ सामान्यार्थप्रतिपादकत्वप्रकारेण । ३२ वाक्यम् । ३३ प्रतिज्ञा करोति । ३४ साध्यं ज्ञापयितुम् । ३५ साध्यस्य । ३६ पारम्पर्येण । ३७ हेतुवच पूर्वं हेतुं समर्थयति । स हेतु. शक्तस्य सूचकः । ३८ (हेतुवच.कृताम्) । ३९ हेतुवचनस्य वाच्यताम् । ४० स्ववचनात्तत्त्वस्य सिद्धिरुपजीव्यते, न पुन परवचनादिति व्यवस्थाभावानुषङ्गात् । ४१ अनभ्युपगमे । ४२ अन्यथेत्यध्याहार्यम् । ४३ अनभिमतं च तत्प्रतिवादिवचनं चेति यसः । ४४ वस्तु क्षणिकम् । ४५ वंशः परम्परा । ४६ युगपत्स्वपरद्रव्यचतुष्टयापेक्षया । ४७ भगवतः ।

त्सदेव, कथञ्चिदसदेव, कथञ्चिदुभयमेवेति । तथा[1] चशब्दात्[2]कथञ्चित्सदवाच्यमेव, [3]सर्वथाप्यसतोनभिधेयत्वधर्मोव्यवस्थितेः, कथञ्चि[4]दसदवाच्यमेव, सर्वथा[5]पि सतोनभिलाप्यत्वस्वभावासंभवात् तद[6]भिलाप्यत्वस्यापि सद्भावात्, कथञ्चित्सदसदवाच्यमेव, स्वरूपपररूपाभ्यां सदसदात्मन एवावाच्यत्वधर्मप्रसि[7]द्धेरित्यपि भङ्गत्रय समुच्चितमाचार्यैः, 'अवक्तव्योत्तराः शेषास्त्रयो भङ्गाः स्वहेतुत' इत्यग्रे स्वय समर्थनात्, इष्ट[8] तत्प्रतिज्ञातस्य सिद्धेरप्रतिज्ञातस्य समर्थनाघटनात् कस्य[9]चित्प्रतिज्ञातस्य सामर्थ्याद्गम्यमानस्यापि प्रतिज्ञातत्वोपपत्तेः । इति साधीयसी सप्तभङ्गी प्रतिज्ञा, तथा[10] नैगमादिनययोगात् ।

तत्र प्रथमद्वितीयभङ्गयोस्तावन्नययोगमुपदर्शयन्ति स्वामिनः ।—

**सदेव सर्वं को नेच्छेत् स्वरूपादिचतुष्टयात् । असदेव वि[11]पर्यासा[12]न्न चेन्न व्यवतिष्ठते ॥ १५ ॥**

सर्वं चेतनमचेतनं वा द्रव्यं पर्यायादि वा भ्रान्तमभ्रान्तं वा स्वयमिष्टमनिष्टं वा, सदेव स्वरूपादिचतुष्टयात् को नेच्छेत् ? असदेव पररूपादिचतुष्टयात् तद्विपर्ययात्को नेच्छेत् ? अपितु लौकिकः परीक्षको वा स्याद्वादी सर्वथैकान्तवादी वा सचेतनस्तथेच्छेदेव, प्रतीतेरपह्नोतुमशक्तेः । अथ स्वयमेवं प्रतीयन्नपि कश्चित्कुनयविपर्यासि[13]तमतिर्नेच्छेत् स न क्वचिदिष्टे तत्त्वे व्यवतिष्ठेत, स्वपररूपोपादानापोहनव्यवस्थापाद्यत्वाद्वस्तुनि वस्तुत्वस्य, स्वरूपादिव पररूपादपि सत्त्वे चेतनादेरचेतनादित्वप्रसङ्गात् तत्स्वात्मवत्, पररूपादिव स्वरूपादप्यसत्त्वे सर्वथा शून्यतापत्तेः, स्व[14]द्रव्यादिव परद्रव्यादपि सत्त्वे द्रव्यप्रतिनियमविरोधात् । [15]संयोगविभागा[16]देरनेकद्रव्याश्र[17]यत्वेपि तद्[18]द्रव्यप्रतिनियमो न विरुध्यते एवेति चेन्न, त[19]स्यानेकद्रव्यगुणत्वेनानेकद्रव्यस्यैव स्वद्रव्यत्वात्, स्वा[20]नाश्रयद्रव्यान्तरस्य परद्रव्यत्वात्[21]ततोपि सत्त्वे स्वाश्रयद्रव्यप्रतिनियमे[22]मव्याघातस्य तदवस्थत्वात् । [23]तथा परद्रव्यादिव स्वद्रव्यादपि क[24]स्यचिदसत्त्वे सकलद्रव्यानाश्रयत्वप्रसङ्गादिष्टद्रव्याश्रयत्वविरो[25]धात् । त[26]था स्वक्षेत्रादिव परक्षेत्रादपि सत्त्वे कस्यचित्प्रतिनियतक्षेत्रत्वाव्यवस्थितेः। परक्षेत्रादिव स्वक्षेत्रादपि चासत्त्वे निःक्षेत्रता[27]पत्तेः। तथा स्वकालादिव परकालादपि सत्त्वे प्रतिनियतकालत्वाव्यवस्थानात् । परकालादिव स्वकालादप्यसत्त्वे सकलकालासंभवित्वप्रसङ्गात् क[28] किं[29] व्यवतिष्ठेत ? यतः स्वेष्टानिष्टतत्त्वव्यवस्था ।

न[30]न्वेवं[31] स्वरूपादीनां स्वरूपाद्यन्तरस्याभावात्कथं व्यवस्था स्यात्, भावे वानवस्थाप्रसङ्गा[32]त् । सुदूरमपि गत्वा स्वरूपाद्यन्तराभावेपि क[33]स्यचिद्व्यवस्थाया किमनया[34] प्रक्रियया स्वगृहमान्यया यथा[35]प्रतीति वस्तुव्यवस्थोपपत्तेरिति कश्चित्सोपि वस्तुस्वरूपपरीक्षानभिमुखो, वस्तुप्रतीतेरेव त[36]था प्ररूपयितुमुपक्रान्तत्वात् । अन्य[37]था नानानिरङ्कुशविप्रतिपत्तीनां निवारयितुमशक्यत्वात् । व[38]स्तुनो हि यथैवाबाधिता प्रतीतिस्तथैव

---

१ ( यथेति पाठ क्वचित् । तथा "च" इति कारिकोक्तशब्दादित्यपि भङ्गत्रयं समुच्चितमित्यग्रेणान्वय )। २ स्वरूपादिचतुष्टयापेक्षया सह युगपत्स्वपररूपादिचतुष्टयापेक्षया । ३ स्वरूपादिचतुष्टयापेक्षयेव पररूपादिचतुष्टयापेक्षयापि । ४ पररूपादिचतुष्टयापेक्षया सह युगपत्स्वपररूपादिचतुष्टयापेक्षया । ५ ( स्वरूपेणेव पररूपेणापि )। ६ तस्य सत. । ७ क्रमेण सत्यपि सदसदात्मकत्वे युगपद्वक्तुमशक्ते )। ८ कथञ्चित्ते सदेवेष्टमिति पूर्वकारिकायाम् । ९ ( भङ्गचतुष्टयसामर्थ्याद्भङ्गत्रयस्यापि सामर्थ्यसिद्धत्वम् )। १० सप्तसख्याप्रकारेण । ११ पररूपादिचतुष्टयादित्यर्थ । १२ ( न चेदेवमिति ब्रुवाण स्वेष्टतत्त्वे स्थितिं न लभेत )। १३ साख्यादि । १४ (स्व, विवक्षितम् )। १५ साख्य । १६ कुण्डवदरादौ । १७ अनेकद्रव्याण्याश्रयो येषा ते । १८ ( तैः सयोगविभागैः )। १९ ( सयोगविभागादे )। २० ( स्वस्य सयोगविभागादे )। २१ परद्रव्यात् । २२ अयं संयोगोनयोरेव द्रव्ययोर्नान्येषां द्रव्याणामिति । २३ ( सांख्यं निरस्य प्रकृतं निरूपयन्त्याचार्या । २४ सत्त्वादे. । २५ सत्त्वस्य । २६ द्रव्यप्रकारेण । २७ वस्तुन. । २८ स्वरूपादौ । २९ वस्तु । ३० नैयायिक । ३१ स्वरूपादिना सत्त्वविधानप्रकारेण । स्वरूपादीना दर्शने स्वरूपान्तरमपेक्ष्यते चेत् । ३२ ( कथं व्यवस्थेति सबन्ध )। ३३ स्वरूपादे. । ३४ स्वपररूपापेक्षया सत्त्वासत्त्वसमर्थनया । ३५ यथानैयायिकोक्तमित्यर्थ । ३६ स्वरूपादिना सत्त्वप्रकारेण । ३७ प्रतीतिवलाभावे । ३८ एवमप्यनवस्थादूषणं कथं नेति प्रश्ने सत्याह ।

स्वरूपं, न च तत्[1] ततोन्यदेव प्रतीयते येन स्वरूपान्तरमपेक्षेत[2]। तथा[3] प्रतीतौ वा तदुपगमेपि[4] नानवस्था, यत्रा[5]प्रतिपत्ति[6]स्तत्र व्यवस्थोपपत्तेः[7]। तत्र जीवस्य तावत्सामान्येनोपयोगः स्वरूपं, तस्य तल्लक्षणत्वात्, उपयोगो लक्षणम्[8], इति वचनात्। ततोन्योऽनुपयोगः पररूपम्। ताभ्यां सदसत्त्वे प्रतीयेते। तदुपयोगस्यापि विशेषतो ज्ञानस्य स्वार्थाकारव्यवसायः[9] स्वरूपम्। दर्शनस्यानाकारग्रहणं स्वरूपम्। ज्ञानस्यापि परोक्षस्या[10]वैशद्यं स्वरूपम्। प्रत्यक्षस्य वैशद्यं स्वरूपम्। दर्शनस्यापि चक्षुरचक्षुर्निमित्तस्य चक्षुराद्या[11]लोचनं स्वरूपम्। अवधिदर्शनस्यावध्या[12]लोचनं स्वरूपम्। परोक्ष[13]स्यापि मतिज्ञानस्येन्द्रियानिन्द्रियनिमित्तं स्वार्थाकारग्रहणं स्वरूपम्। अनिन्द्रिय[14]मात्रनिमित्तं श्रुतस्य स्वरूपम्। प्रत्यक्षस्यापि विकलस्यावधिमनःपर्ययलक्षणस्य मनोक्षानपेक्षं स्पष्टात्मार्थग्रहणं[15] स्वरूपम्। सकलप्रत्यक्ष[16]स्य सर्वद्रव्यपर्यायसाक्षात्करणं स्वरूपम्। ततो[17]न्यत् सर्वं तु पररूपम्। ताभ्यां सदसत्त्वे प्रतिपत्तव्ये[18]। एवमुत्तरोत्तरविशेषाणामपि स्वपररूपे तद्विद्भिरभ्यूह्ये तद्विशेषप्रतिविशेषाणामनन्तत्वात्। द्रव्यक्षेत्रकालभावविशेषाणामनेनैव[19] प्रतिद्रव्यपर्यायं स्वपररूपे प्रतिपादिते। ननु च जीवादिद्रव्याणां षण्णामपि किं स्वद्रव्यं किं वा परद्रव्यम्? यतः सदसत्त्वे व्यवतिष्ठेते, द्रव्यान्तर[20]स्यासंभवादिति चेन्न, तेषामपि शुद्धं[21] सद्द्रव्यमपेक्ष्य सत्त्वस्य तत्प्रतिपक्षमसद्भावमपेक्ष्यासत्त्वस्य च प्रतिष्ठोपपत्तेः। शुद्ध[22]द्रव्यस्य स्वपरद्रव्यव्यवस्था कथम्? तस्य[23] सकलद्रव्यक्षेत्रकालभावात्मकत्वात्, तद्व्यतिरेके[24]णान्यद्रव्याद्यभावादिति चेन्न, सकलद्रव्यक्षेत्रकालभावानपेक्ष्य सत्त्वस्य, तदभाव[25]मपेक्ष्यासत्त्वस्य च व्यवस्थितेः 'सत्ता सप्रतिपक्षा' इति वचनात्[26]। एतेन[27] सकलक्षेत्रस्य नभसोनाद्यनन्ताखिलकालस्य च सकलक्षेत्रकालात्मनः[28] प्रतिनियतक्षेत्रकालात्मनश्च स्वपररूपत्वं निश्चितम्। अतः सदसत्त्वव्यवस्था। स्वरूपादिचतुष्टयादिति ल्यब्लोपे[29] कर्मण्युपसंख्यानात् का। स्वरूपादिचतुष्टयमपेक्ष्य को नेच्छेत्सदेव सर्वमित्यर्थः। एतेन विपर्यासादिति[30] व्याख्यातम्।

ननु स्वसत्त्वस्यैव परासत्त्वस्य प्रतीतेर्न वस्तुनि स्वपररूपादिसत्त्वासत्त्वयोर्भेदो, यतः प्रथमद्वितीयभङ्गौ घटेते, तदन्यतरेण गतार्थत्वात्। तदघटने च तृतीयादिभङ्गाभावात्कुतः सप्तभङ्गीति चेन्न, स्वपररूपादिचतुष्टयापेक्षाया स्वरूपभेदात्सत्त्वासत्त्वयोरेकवस्तुनि भेदोपपत्तेः,तयोरभेदे स्वरूपादिचतुष्टयापेक्षयेव पररूपादिचतुष्टयापेक्षयापि सत्त्वप्रसङ्गात्, तदपेक्षयेव स्वरूपाद्यपेक्षयापि वाऽसत्त्वप्रसक्तेः। न चापेक्षाभेदात् कचि-

---

१ स्वरूपम्। २ नैयायिकोक्तम्। ३ स्वरूपादीना स्वरूपान्तरप्रतीतौ। ४ स्वरूपादीनां स्वरूपान्तरोपगमेपि। ५ यदैव स्वरूपान्तरे ( अपरस्वरूपे ) अप्रतिपत्तिस्तदैव स्वरूपे (तत्प्रथमे) व्यवस्थोपपत्तेः। यत्रैव यस्याप्रतिपत्तिस्तत्र तस्यानवस्था। 'यत्राप्रतीति.' इति पाठान्तरम्। ६ अप्रतिपत्तिः तृतीयस्वरूपस्य। ७ यथा=आत्मनः स्वरूपं ज्ञानम्। तस्य स्वरूपं स्वार्थाकारव्यवसायः, तृतीयस्य स्वरूपस्याप्रतीते.। ८ जीवस्य। उपयोगो, ज्ञानदर्शने। ९ स्वस्य, आत्मन। अर्थस्य, आत्मातिरिक्तस्य सर्ववस्तुनः। १० मतिश्रुताख्यस्य। ( प्रत्यक्षपरोक्षभेदाद्द्विधा ज्ञानम्। मतिश्रुते परोक्षम्। अवधिमनःपर्यये देशप्रत्यक्षे। केवलज्ञानं सकलप्रत्यक्षम् )। ११ चक्षुरादिना आलोचनं ग्रहणम्। १२ अवध्या मर्यादया। १३ (ज्ञानोत्तरभेदानां स्वरूपमाह )। १४ अनिन्द्रियं मनः। १५ आत्मग्रहणं स्वरूपव्यवसायः। १६ केवलज्ञानस्य। १७ स्वार्थाकारव्यवसायादिभ्यः। १८ ( अन्येषामपि पदार्थानाम् )। १९ स्वपरद्रव्यादिचतुष्टयापेक्षयास्तित्वनास्तित्वनिरूपणेन। २० षड्भ्यो द्रव्येभ्यः। २१ शुद्धव्यवहारभेदाद्द्वेधा द्रव्यम्। सत्सदिति शुद्धम्। भेदपुरस्सरत्वेनाभिमतं व्यवहारद्रव्यम्। २२ (पुनरपि कश्चिन्निकटवर्ती पृच्छति)। २३ शुद्धद्रव्यस्य। २४ सकलद्रव्यक्षेत्रकालभावात्मकत्वव्यतिरेकेण। २५ कतिचिद्भावानपेक्ष्येत्यर्थः। २६ कुन्दकुन्दकृते पञ्चास्तिकाये। २७ सत्तासामान्यस्य स्वपररूपप्रतिपादनेन। २८ सकलक्षेत्रं सकलकालश्चात्मा स्वरूपं यस्य तस्य। उभयस्य। २९ ( ल्यपः प्यसंज्ञा, खं तु लोपस्य जैनेन्द्रव्याकरणे। तेन ल्यब्लोपे इत्यर्थः। पञ्चम्या. 'का' संज्ञा। ल्यब्लोपे कर्मणि पञ्चमी भवतीत्यर्थः। यथा हर्म्यात्प्रेक्षते। हर्म्यमारुह्येत्यर्थः। तथैव स्वरूपादिचतुष्टयादित्यस्य स्वरूपादिचतुष्टयमपेक्ष्येत्यर्थः। अत्र इयं ( द्वितीया सबाध्य पञ्चमी जाता )। ३० पररूपादिचतुष्टयमपेक्ष्येत्यर्थ.।

द्धर्मभेदप्रतीतिर्बाध्यते, बदरापेक्षया बिल्वे स्थूलत्वस्य मातुलिङ्गापेक्षया सूक्ष्मत्वस्य च प्रतीतेर्बाधकाभावात्। सर्वस्यापेक्षिकस्यावास्तवत्वे नीलनीलतरादेः सुखसुखतरादेश्चावास्तवत्वापत्तेर्विशदविशदतरादिप्रत्यक्षस्यापि कुतस्तात्त्विकत्त्वं यतो न संविदद्वैतप्रवेशः[1] स चायुक्त एव, तद्व्यवस्थापकाभावात्।

तेतः[2] स्यात्सदसदात्मकाः पदार्थाः सर्वस्य[3] सर्वाकरणात्। न हि पटादयो घटादिवत्क्षीराद्याहरणलक्षणामर्थक्रियां कुर्वन्ति घटादिज्ञानं वा। तदुभयात्मनि[4] दृष्टान्तः सुलभः, सर्वप्रवादिनां स्वेष्टतत्त्वस्य स्वरूपेण सत्त्वेऽनिष्टरूपेणासत्त्वे च विवादाभावात् तस्यैव च दृष्टान्ततोपपत्तेः। ननु चैकत्र वस्तुनि सत्त्वमसत्त्वं च युक्तिविरुद्धं, परस्परविरुद्धयोर्धर्मयोरेकाधिकरणत्वायोगात्, शीतोष्णस्पर्शवद्भिन्नाधिकरणत्वप्रतीतेरिति चेन्न, तयोः कथञ्चिदर्पितयोर्विरुद्धत्वासिद्धेस्तथा प्रतिपत्तिसद्भावाच्च। शाब्देतरप्रत्यययोरेकवस्तुविषययोरेकात्मसमवेतयोः कारणविशेषवशात्परिवृत्तात्मनोः स्वभावभेदेपि कथञ्चिदेकत्वमस्त्येव, विच्छेदानुपलब्धेः। न हि शाब्दप्रत्यक्षवेदनयोरस्पष्टेतरप्रतिभासनस्वभावभेदोसिद्धः, प्रतीत्यपह्नवप्रसङ्गात्। नापि तयोरेकवस्तुविषयत्वमेकद्रव्याश्रयत्वं चाऽसिद्धं, तत्रानुसन्धानप्रत्ययसद्भावात्, यदेव मया श्रुतं तदेव दृश्यते, य एवाहमश्रौषं स एव पश्यामीति प्रतीतेर्बाधकाभावात्। तयोर्द्रव्यात्मनैकत्वमस्त्येव, विच्छेदस्यानुपलक्षणात्। ननूपादानोपादेयक्षणयोस्तद्भावादेवानुसधानसिद्धेर्विच्छेदानुपलम्भेपि नैकत्वसिद्धिः, एकसन्तानत्वस्यैव सिद्धेः, आत्मद्रव्यस्याभावादिति चेन्न, तदभावे तयोरुपादानोपादेयतानुपपत्तेः। उपादानस्य कार्यकालमात्मानं कथंचिदनयतश्चिरतरनिवृत्ताविवाविशेषात्कार्योत्पत्तावपि व्यपदेशानुपपत्तेस्तादृशां स्वरूपैकत्वमस्त्येव। न च सव्येतरविषाणवत्सर्वथा समानकालतोपादानोपादेययोर्यतस्तद्भावो विरुध्येत, द्रव्यसामान्यापेक्षया तयोरेकत्वमिति मननात्। विशेषापेक्षया तु नास्त्येव तादृशामेकत्वम्। न हि पौरस्त्यः पाश्चात्यः स्वभावः पाश्चात्यो वा पौरस्त्यः। नन्वेवमेकत्वं मा भूत् पूर्वापरपरिणामानां, क्रमस्यैवावस्थानादक्रमस्य तद्विरुद्धत्वादिति न मन्तव्यं यस्मान्निरपेक्षस्तत्र क्रमोपि प्रतिभासविशेषवशात्प्रकल्प्येत तदेकत्वादक्रमः किन्न स्यात्? प्रतिभासैकत्वेपि तदक्रमानुपगमे प्रतिभासविशेषवशात्क्रमः कथमभ्युपगमार्हः स्यात्? सर्वस्य यथाप्रतिभास वस्तुनः प्रतिष्ठानात्, प्रतिभासमानयोः क्रमाक्रमयोर्विरोधानवतरणाद्विरोधस्यानुपलम्भलक्षणत्वात्। न च स्वरूपादिना वस्तुनः सत्त्वे तदेव पररूपादिभिरसत्त्वस्यानुपलम्भोस्ति, येन सहानवस्थानलक्षणो विरोधः शीतोष्णस्पर्शविशेषवत्स्यात्। परस्परपरिहारस्थितिलक्षणस्तु विरोधः सहैकत्राम्रफलादौ रूपरसयोरिव सम्भवतोरेव

---

१ तत्, संविदद्वैतम्। २ सत्त्वासत्त्वयोरेकवस्तुनि भेदोपपत्तिर्यत। ३ पदार्थानां सदसदात्मकत्वाभावे सर्वं वस्तु प्रत्येकमपि सर्वं कार्यं कुर्यात्। ४ सर्वस्योभयात्मकत्वे दृष्टान्त कथमित्याशङ्कायामाह। ५ स्वपररूपाभ्यां विवक्षितयो। ६ एकत्र सत्त्वासत्त्वरूपतया। ७ आगमप्रत्यक्षज्ञानयो.। ८ शाब्दे शब्द. कारणं, प्रत्यक्षे तु इन्द्रियम्। ९ निष्पन्नात्मनो। १० आत्मद्रव्यापेक्षया। ११ विच्छेदो भेदः। १२ (अन्यथेत्यध्याहार)। १३ एकद्रव्यं जीवः। १४ विषये विषयिणि च। १५ अनुसधानं, प्रत्यभिज्ञा। १६ इत्येकविषयत्वमुभयो सिद्धम्। १७ इत्येकद्रव्या (जीव) श्रयत्वं तयो। १८ आत्मन. सकाशाच्छ्रुतप्रत्यक्षज्ञानयो.। १९ उपादानोपादेयभावात्। २० प्रत्यक्षागमज्ञानयो। २१ स्वरूपैकत्वाभावे। २२ कार्यकालं प्रति। २३ उपादानस्वरूपम्। २४ अप्राप्नुवत। २५ उपादानोपादेयभूतानाम्। २६ द्रव्यापेक्षया। २७ उपादानोपादेययो स्वरूपैकत्वे समानकालता स्यादित्युक्ते जैन आह। २८ यथा घटकपालादौ मृत्त्वम्। २९ घटकपालादिपर्यायापेक्षया। ३० उपादानोपादेयभूतानाम्। ३१ पूर्वापरपरिणामविरुद्धत्वात्। ३२ (यदीत्यर्थं स्यात्)। ३३ ('प्रतिभासातिशयवशात्' इति पाठान्तरम्)। ३४ तत् तर्हीत्यर्थं। एकत्वं, द्रव्यप्रतिभासापेक्षया। ३५ (पर्यायापेक्षया)। ३६ यथा सत्त्वपरिहारेणासत्त्वम्, असत्त्वपरिहारेण च सत्त्वम्। ३७ एकत्र वस्तुनि।

सदसत्त्वयोः स्यात्, न पुनरसंभवतोः[1] संभवद्[2]संभवतोर्वा। एतेन वध्यघातकभावोपि विरोधः फणिनकुलयोरिव बलवदबलवतोः प्रतीतः सत्त्वासत्त्वयोरशङ्कनीयः कथितः, तयोः समानबलत्वादित्येतद[3]ग्रे प्रपञ्चयिष्यते।

तदेकानेकाकारमक्रमक्रमात्मकमन्वयव्यतिरेकरूपं सामान्यविशेषात्मकं सद[4]सत्परिणामं स्थित्युत्पत्तिविनाशात्मकं स्वप्रदेशनियतं स्व[5]शरीरव्यापिनं त्रिकालगोचरमात्मानं परं वा कथञ्चित्साक्षात्[6]करोति परोक्ष[7]यति वा केशादिविवेकव्यामुग्धबुद्धि[8]वत् तादृशै[9]कचैतन्यं सुखादिभेदं वस्तु स्वतोन्यतः सजातीयविजातीयाद्विविक्तलक्षणं बिभर्ति। अन्य[10]थानवस्थानात् क्वचित्कथंचिदनियमः स्यात्। सर्वो हि लौकिकः परीक्षकश्च तावदेकमक्रमात्मकमन्वयरूपं सामान्या[11]त्मकं सत्परिणामं स्थित्यात्मकमात्मानं परं वा बहिरर्थसतो[12]नान्तराख्यं द्रव्यापेक्षया साक्षात्करोति, लिङ्ग[13]शब्दादिना परोक्षयति वा, भावापेक्ष[14]या पुनरनेकाकारं क्रमा[15]त्मकं व्यतिरेक[16]रूपं विशेषात्म[17]कमसत्परि[18]णाममुत्पत्तिविना[19]शात्मकं, क्षेत्रापेक्षया स्वप्रदेशनि[20]यतं निश्चयनयतः, स्वशरीरव्यापिन व्यवहारनयतः, कालापेक्षया त्रिकालगोचरम्। कथं पुनरीदृशमात्मान परं वा साक्षात्करोति कथं वा परोक्षयति द्रव्याद्यपेक्षयेति चेदुच्यते। साक्षात्करणयोग्यद्रव्याद्या[21]त्मना मुख्य[22]तो व्यवहारतो वा विशदज्ञानेन साक्षात्[23]करोति परोक्षज्ञान[24]योग्यद्रव्याद्यात्मना अनुमानादिप्रमाणेनाविशदेन परोक्षयति, 'प्रत्यक्षं विशदं ज्ञानं मुख्यसंव्यवहार[25]तः। परोक्षं शेषविज्ञा[26]नं प्रमा[27]णे इति सग्रहः' इति संक्षेपतः प्रत्यक्षपरोक्षयोरेव वस्तुपरिच्छित्तौ व्यापारवचनात्। कथं तर्हि[28] केशा[29]दिविवेकव्यामुग्धबुद्धिः पुरुषो दृष्टान्त. समः स्यादिति चेत् केशमशकमक्षिकादिप्रतिभासात्मना सत्त्वपरिणामं साक्षात्कुर्वन् विवेकाद्यात्मना च कु[30]तश्चिदनुमिन्वन्नुपशृण्वन्वा परोक्षयन्, अविवेका[31]दिव्यामोहप्रतिभासात्मना चासत्त्वपरिणामं कथ[32]ञ्चित्तु साक्षात्कुर्वन् परोक्षयंश्च सम एव स दृष्टान्तः तथा वैषम्याभावात्। ननु च तद्[33]वस्तु चैतन्यमेवैकमक्रमादि[34]रूपं बिभर्ति, न पुनः सुखादिभेदमनेकाकारं क्रमाद्यात्मकं, सजातीयाच्चेतनवस्तुनो विजातीयाच्चाचेतनवस्तुनो विविक्तस्वरूपम्। तमेव[35] वा बिभर्ति तादृशं[36], न पुनश्चैतन्यं[37], तत्त्व[38]तः इत्यभ्युपगमयोरेकतरा[39]नवस्थानेऽन्यतरस्याप्यनवस्थानादुभयानवस्थितिप्रसङ्गात् क्वचिद्[40]भ्युपगते रूपे कथंचित्प्रत्यक्षादिप्रकारेण स्वाभ्युपगमादिप्रकारेण च निय[41]मासंभवात्। सूक्तमीदृशं[42] न चेन्न व्यवतिष्ठते इति।

---

१ यथा पुद्गले ज्ञानदर्शनयोः। २ यथा पुद्गले रूपज्ञानयो। ३ अस्तित्वं प्रतिषेध्येनाविनाभावीत्यादिकारिकायाम्। ४ नित्यानित्यात्मकमित्यर्थं। ५ आत्मद्रव्यापेक्षया विशेषणमिदम्। यदि च पुद्गलादिकमप्यपेक्ष्य विशेषणं स्यादिदं तर्हि शरीरशब्दस्यात्रावयववाचकत्वं मान्यम्। ६ लौकिक परीक्षको वा। ७ परोक्षज्ञानेन विषयीकरोति। ८ यथा केशमशकादौ विवेकी व्यामुग्धबुद्धिश्च पुमान् केशमशकादिकं परोक्षयति साक्षात्करोति वा। ९ एकाक्रमात्मकान्वयरूपसामान्यात्मसत्परिणामस्थित्यात्मकम्। १० आत्मा एकैकमेव बिभर्त्तीति चेत्। ११ चित्स्वरूपादिना। १२ द्वन्द्वः। १३ अनुमानज्ञानशब्दज्ञानादिना। १४ पर्यायापेक्षया। १५ प्रतिक्षणध्वंसिनम्। १६ (न त्वन्वयरूपम्)। १७ (न तु सामान्यात्मकम्)। १८ (न तु पूर्ववत्सत्परिणामम्)। १९ (न तु द्रव्यापेक्षयेव स्थित्यात्मकम्। एवमिदं सर्वं विशेषणजातं द्रव्यापेक्षया यदुक्तं ततो विरुद्धम्)। २० (आत्मान परं वा साक्षात्करोति परोक्षयतीत्यनेनान्वयनीयम्)। २१ आदिपदेन क्षेत्रकालभावा। २२ (मुख्यतः प्रत्यक्षमवधिमन पर्ययकेवलज्ञानानि। व्यवहारतस्तु प्रत्यक्षं चक्षुरादिजम्)। २३ प्रत्यक्षीकरोति। २४ (स्वयं व्यवहितं लिङ्गशब्दादिना च ज्ञातुं योग्यं परोक्षद्रव्यादि)। २५ (मुख्यत्वेन प्रत्यक्षमेकमपर तु व्यवहारत. प्रत्यक्षम्)। २६ (मुख्यप्रत्यक्षादवधिमन पर्ययकेवलरूपात्, व्यवहारप्रत्यक्षाच्चाक्षुषादिरूपाच्चावशिष्टं ज्ञानमनुमानादि परोक्षम्)। २७ प्रत्यक्षपरोक्षे द्वे। २८ यद्येक पुरुषः साक्षात्करोति परोक्षयति च। २९ साक्षात्करणे परोक्षीकरणे चायं दृष्टान्त। ३० लिङ्गाच्छब्दाद्वा। ३१ अविवेकोऽभेद.। आदिपदेन एकादि। व्यामोहो विपर्ययः। ३२ योग्यदेशादिप्रकारेण। ३३ आत्मरूप कर्तृ। ३४ कर्मपदम्। ३५ सुखादिभेदम्। ३६ अनेकाकारम्। ३७ (अक्रमादिरूपम्)। ३८ इत आह जैनः। ३९ एकानेकाकारयोर्मध्ये द्रव्यस्य पर्यायस्य वा। ४० भेदरूपे अभेदरूपे वा। ४१ सुखादौ भेद एवाभेद एवेति। ४२ सदसदात्मकम्।

तदेवं प्रथमद्वितीयभङ्गौ निर्दिश्य तृतीयादिभङ्गान्निर्दिशन्ति भगवन्तः ।

**क्रमार्पितद्वयाद् द्वैतं[1], सह[2]वाच्यमशक्तितः । अवक्त[3]व्योत्तराः शेषास्त्रयो भङ्गाः स्वहेतुतः[4] ॥१६॥**

क्रमार्पितात्स्वपररूपादिचतुष्टयद्वयात्कथंचिदुभयमिति द्वैतं वस्तु, द्वाभ्यां सदसत्त्वाभ्यामित[5]स्यैव द्वीत[6]-त्वा[7]त्, स्वार्थिकस्याणो विधानाद्वैतशब्दस्य सिद्धेः । स्वपररूपादिचतुष्टयापेक्षया सह[8] वक्तुमशक्तेरवाच्यं, तथावि[9]धस्य पदस्य वाक्यस्य वा कस्यचिदभिधायकस्यासम्भवात् । सदसदुभयभङ्गास्त्वि[10]वक्तव्योत्तराः शेषाः पञ्चमषष्ठसप्तमाः, चतुर्भ्योऽन्यत्वात् । ते च स्वहेतुवशान्निर्देष्टव्याः । तद्यथा ।—कथञ्चित्सदवक्तव्यमेव, स्वरूपादिचतुष्टयापेक्षत्वे सति स[11]हवक्तुमशक्तेः । कथंचिदसदवक्तव्यमेव, पररूपादिचतुष्टयापेक्षत्वे सति सह वक्तुमशक्तेः । कथञ्चित्सदसदवक्तव्यमेव स्वपररूपादिचतुष्टयापेक्षत्वे सति सह वक्तुमशक्तेः सदसदुभयत्वधर्मेष्वन्यतमापाये वस्तुन्यवक्तव्यत्वधर्मानुपपत्तेः । [12]तेषा तत्र सतामप्यविवक्षाया केवलस्यावक्तव्यत्वस्य भङ्गस्य वचनाद्विरोधानवकाशः ।

ननु च क्रमार्पितद्वयात्तावद्वैतं वस्तु । तत्तु स्वरूपादित एव सत् पररूपादित एवासत्, न पुनस्तद्विपर्य[13]याटिति कुतोऽवसितमिति चेदुच्यते, **स्वपररूपाद्यपेक्षं सदसदात्मकं वस्तु, न विपर्यासेन, त[14]थादर्शनात्** । सकलजनसाक्षिकं हि स्वरूपादिचतुष्टयापेक्षया सत्त्वस्य पररूपादिचतुष्टयापेक्षया चासत्त्वस्य दर्शनं, तद्विपरीतप्रकारेण चादर्शनं वस्तुनीति त[15]त्प्रमाणयता तथैव वस्तु प्रतिपत्त[16]व्यं, अन्यथा प्रमाणप्रमेयव्यवस्थानुपपत्तेः । **क[17]ल्पयित्वापि त[18]ज्जन्मरूपाध्यवसायान् स्वा[19]नुपलम्भव्यावृत्तिलक्षणं दर्शनं प्रमाणयितव्य[20]म् । त[21]था हि । बुद्धिरियं[22] यया प्रत्या[23]सत्त्या कस्यचिदेवाकारमनुकरोति तया तमेवार्थं नियमेनोपलभेत नान्यथा, पारम्पर्यपरिश्रमं परिहरेत्** । न[24]नु त[25]ज्जन्म[26]तद्रूपतदध्यवसायेषु सत्सु नीलादौ दर्शनं प्रमाणमुपलभते, तदन्यतमापाये तस्य प्रमाणत्वाप्रतीतेरिति चेन्न, तदभावेपि स्वानुपलम्भव्या[27]वृत्तिसद्भावादेव प्रमाणत्वप्रसिद्धेः, तज्जन्मनश्चक्षुरादिभिर्व्यभिचारा[28]त्तद्रूपस्य[29] सन्तानान्तर[30]समानार्थविज्ञानेनानेकान्तात्, त[31]द्वयलक्षणस्य समानार्थसमनन्त[32]रप्रत्ययेनानैकान्तिकत्वात् त्रि[33]लक्षणस्यापि विभ्रमहेतु[34]फलविज्ञानैर्व्यभिचारात्, कामलाद्युपहतच-

---

१ स्यादस्ति नास्तीति । २ (सह द्वौ धर्मौ वक्तुमशक्यत्वादवाच्यं तत्त्वमिति चतुर्थो भङ्ग )। ३ (अवक्तव्यमुत्तर येषु ते । यथा स्यादस्त्यवक्तव्यम् । स्यान्नास्त्यवक्तव्यम् । स्यादस्तिनास्त्यवक्तव्यम् )। ४ सिध्यन्ति । ५ (स्वद्रव्यक्षेत्रकालभावाः, परद्रव्यक्षेत्रकालभावा इति स्वपररूपादिचतुष्टयद्वयम् । तस्मात् । क्रमेण स्वपररूपादिचतुष्टयद्वयमपेक्ष्य यदि वस्तु परीक्ष्येत तदोभयात्मक-( अस्तिनास्तिस्वरूपम् ) मेव ) । ६ प्राप्तस्य । ७ द्वैतत्वादिति वा पाठ । ८ ( सहशब्दस्य 'वक्तुं' शब्देनान्वय ) । ९ ( अस्तित्वनास्तित्वधर्मयो सहवाचकस्य ) । १० स्यादस्त्यवक्तव्यं, स्यान्नास्त्यवक्तव्यं, स्यादस्तिनास्त्यवक्तव्यमिति । ११ ( यद्यपि स्वरूपादिचतुष्टयापेक्षया स्यादस्ति तथापि युगपत्स्वपररूपादिचतुष्टयापेक्षया वक्तुमशक्यत्वादवक्तव्यमपीति हेतो स्यादस्त्यवक्तव्यमित्यर्थ । एवं स्यान्नास्त्यवक्तव्ये स्यादस्ति नास्त्यवक्तव्ये च भङ्गद्वये ज्ञेयम् )। १२ तर्हि केवलोऽवक्तव्यत्वधर्मश्चतुर्थभङ्ग कथमुत्पद्यते इत्युक्ते सत्याह । तेषा सदसदुभयत्वधर्माणाम् । १३ पररूपादिना सत् स्वरूपादिनाऽसदिति । १४ विपर्यासेनादर्शनात् । १५ दर्शनम् । १६ स्वविषयोपलम्भात्मना परविषयानुपलम्भात्मना सदसदात्मकस्यैव प्रमाणत्वसिद्धे तथा सदसदात्मकस्यैव प्रमेयत्वव्यवस्थिते । १७ तज्जन्मादिप्रकारेण प्रमाणव्यवस्था घटते । अन्यथापि प्रमाणव्यवस्थोपपद्यते एवेति सौगताशङ्कायामाह । १८ स अर्थ । १९ स्वविषयस्यानुपलम्भव्यावृत्तिरिति उपलम्भ एव लक्षणं यस्य । स्वविषये घटे अनुपलम्भव्यावृत्तिरित्यस्य कोर्थ ? स्वविषयोपलम्भ इत्यर्थ । २० सौगतेन । २१ स च स्वविषयोपलम्भ-नियमस्तज्जन्मादौ सत्येव नान्यथा इत्याशङ्कायामाह । २२ निर्विकल्पकज्ञानम् । २३ योग्यतया । २४ सौगत । २५ तदुत्पत्तिकल्पनं,तदनु योग्यता,तत आकारानुकरणं,ततो विषयनिश्चय इति । २६ प्रमाणत्वस्य तज्जन्मादिभिरन्वयव्यतिरेकौ दर्शयति सौगत । २७ स्वानुपलम्भव्यावृत्तिरिति स्वविषयोपलम्भ एव । २८ अर्थचक्षुरादिभ्यो दर्शनस्य जन्मनि सत्यपि । दर्शनमर्थं गृह्णाति न चक्षुरादीनीति । २९ नीलाकारस्य दर्शनस्य । ३० स्वसतानसतानान्तरयोरेकार्थाकारधारित्वेपि दर्शनं स्वसतान विषयीकरोति, न सतानान्तरम् । ३१ दर्शनस्य । ३२ प्राक्तनानन्तरप्रत्ययेन । ३३ दर्शनस्य । ३४ विभ्रमो हेतुर्येषा फलज्ञानाना तैः ।

क्षुषः शुक्ले शङ्खे पीताकारज्ञानादुत्पन्नस्य [1]तद्रूपस्य तदाकाराध्यवसायिनोपि ज्ञानस्य स्वसमनन्तर[2]प्रत्यये प्रमाणत्वभावात्। [3]तदनभ्युपगमे [4]स्वाभ्युपगमासिद्धेः [5]किंसाधनः [6]परमुपालभेत यतोवश्यं दर्शनं नियतस्वविषयानुपलम्भव्या[7]वृत्तिलक्षणं [8]परं विषयानुपलम्भात्मकं न प्रमाणयेत्। न हि [9]स्वयं प्रमाणानभ्युपगमे [10]स्वार्थप्रतिपत्तिः। न चाप्रति[11]पन्नमर्थं परस्मै प्रतिपादयितुमी[12]शः [13]परमुपालब्धुं वा पराभ्युपगतस्यापि प्रमाणस्य प्रतिपत्तेरयो[14]गात्, पराभ्युपगमान्तरात्[15]तत्प्रतिपत्तावनवस्थाप्रसङ्गात्। तदेकोपल[16]म्भनि[17]यमः स्वपरलक्ष[18]णाभ्यां भावाभावात्मानं प्रसाधयति। [19]तदभावे न प्रवर्तेत नापि निवर्ते[20]त प्रमाणान्तरव[21]त्। स्वस्यार्थस्य चैकस्यैवोपलम्भो [22]हीत[23]रस्यानुपलम्भः, [24]तस्य विधायक एवान्यस्य निषेधकः,[25]तत्र प्रवर्तक एव वा परत्र निवर्तक,इति [26]तदेकोपलम्भनियमात्क[27]स्यचित् प्रवृत्तिनिवृत्ती सिध्यतः। [28]तदभावे सन्तानान्तरप्रमाणादिवत् [29]प्रवर्तकान्न कश्चित्प्रवर्तेत निवर्तकाच्च न निवर्तेत,अप्रमाणात्प्रवृत्तौ निवृत्तौ वा प्रमाणान्वेषणस्य वैयर्थ्यादति[30]प्रसङ्गाच्च। ततः प्रमाणं प्रत्यक्षमन्यद्वा स्वार्थोपलम्भात्मना परार्थानुपलम्भात्मना च क्रमार्पितेन सदस[31]दात्मकं सिद्धम्। तद्वत्प्रमेयमपि। इति सर्वं वस्तु क्रमार्पितद्वयाद्वैतं को नेच्छेत्? सर्वस्य विप्रतिपत्तुमशक्तेरनिच्छतोपि तथा संप्रत्ययात्।

कथमवक्तव्यं [32]सर्वमिति चेदुच्यते, [33]निष्पर्यायं भावाभावावभि[34]धानं ना[35]ञ्जसैव विषयीकरोति, [36]शब्दशक्तिस्वाभाव्यात्, सर्वस्य पदस्यैकपदार्थविषयत्व[37]प्रसिद्धेः सदिति पदस्यासदविषयत्वात्, असदिति पदस्य च सदविषयत्वात्,अन्य[38]था तदन्यतर[39]पदप्रयोगसंशया[40]त्, गौरिति पदस्यापि दिगाद्यनेकार्थविषयतया प्रसिद्धस्य तत्त्वतोनेकत्[41]वात्सादृश्योपचारादेव तस्यैकत्वेन व्यवहरणादन्यथा सर्वस्यैकशब्दवाच्यत्वापत्तेः प्रत्ये[42]कम[43]प्यनेकशब्दप्रयोगवैफल्यात्। यथैव हि शब्दभेदाद्ध्रुवोर्थभेदस्तथार्थभेदादपि शब्दभेदः सिद्ध एव, अन्यथा वाच्यवाचकनियमव्यवहारविलोपात्। एतेनैकस्य वाक्यस्य युगपदनेकार्थविषयत्वं प्रत्याख्यातं स्यात्सदसदेव सर्वं स्वपररूपादिचतुष्टयाभ्यामिति वा[44]क्यस्यापि क्रमार्पितोभयधर्मविषयतयोररीकृतस्योपच[45]रादेवैकत्वाभिधानात्। तत्रोभयप्राधान्यस्य क्रमशो विवक्षितस्य सदसच्छब्दाभ्यां द्वन्द्ववृत्तौ तद्वाक्ये वा स्वपदार्थप्रधानाभ्यामभिधानाद्वा न दोषः, सर्वस्य वाक्यस्यैक[46]क्रियाप्रधानतयैकार्थवि-

---

१ पीताकाररूपस्य। २ प्राक्तने पीताकारज्ञाने। ३ तस्य–दर्शनस्य यत्प्रामाण्यं तस्य। ४ स्वस्य शून्यस्य। ५ सौगतः। ६ प्रतिवादिनम्। ७ नियतस्वविषयोपलम्भलक्षणमित्यर्थः। स्वविषये पटादेर्व्यावृत्तिर्लक्षणं यस्य। ८ नियतस्वविषयम्। ९ सौगतस्य। १० स्वार्थं शून्यता। ११ अज्ञातं शून्यं वा। १२ सौगतः। १३ जैनम्। १४ (सौगतः स्वयमेवाप्रतिपन्नं शून्यमर्थं परं प्रति प्रतिपादयितुं नालम्, उपालब्धुं वा परं नालं यतः पराभ्युपगतं प्रमाणं स्वयं जानात्येव न, तन्मते सर्वस्य शून्यत्वादित्यर्थः)। १५ प्रमाणप्रतिपत्तौ। १६ (सौगतमतं निरस्य स्वसिद्धान्तं निरूपयति जैनः)। उपलम्भो विषयः। १७ दर्शनस्य। १८ स्वपररूपाभ्याम्। १९ तदेकोपलम्भनियमाभावे। २० (दर्शनमात्रात्) पुमान्। २१ सन्तानान्तरज्ञानादेकोपलम्भाभावे न प्रवर्तते नापि निवर्तते नरो यथा। २२ (एकस्योपलम्भ एव)। २३ उपलम्भविषयभूतादन्यस्य। २४ उपलम्भविषयभूतस्य। २५ उपलम्भविषये। २६ तथाविधात्। २७ पुंसः। २८ एकोपलम्भनियमाभावे। २९ दर्शनात्। ३० भ्रान्तज्ञानादपि प्रवृत्तिनिवृत्तिप्रसङ्गात्। ३१ प्रमाणम्। ३२ वस्तु। ३३ क्रमरहितमित्यर्थः। ३४ वचनम्। कर्तृपदम्। ३५ एकदैव। ३६ (शब्दस्यैतादृश्येव शक्तिर्यदेकस्मिन्समये एकः शब्द एकमेव धर्ममभिधत्ते)। ३७ सर्वेषां पदानां प्रत्येकं कस्यचिदेकस्यैवार्थस्य विषयित्वप्रसिद्धेरित्यर्थः। ३८ (एकस्य पदस्यानेकार्थविषयत्वे)। ३९ (तयोः सदसतोर्मध्ये)। ४० सच्छब्दस्यास्य सदर्थो वाच्योसदर्थो वा, श्रुतस्यासच्छब्दस्य चासदर्थः सदर्थो वा वाच्य इति। न च तथा संशयो दृश्यते सदसच्छब्दवाच्यज्ञाने)। ४१ (सर्वे हि दिगाद्यर्थवाचका गोशब्दा भिन्ना इत्यर्थः)। ४२ (घटपटाद्यनेकार्थान्प्रति)। ४३ घटपटादिरूपेण। ४४ (इति जैनोक्तवाक्यस्य सप्तभङ्ग्या तृतीयभङ्गरूपस्यैकत्वेप्यनेकार्थविषयत्वं, सदसतोरुभयधर्मयोरनेनोक्तत्वादिति परेणाशङ्किते जैनः प्राह)। ४५ अत्र कालप्रत्यासत्तिरुपचारस्य निमित्तम्। ४६ क्रिया तिङ्रूपा। एकतिङ् वाक्यमिति वचनात्।

पयत्वप्रसिद्धेः। सिद्ध[1]मेकार्थनिवेदनशक्तिस्वभावत्वं शब्दस्य, वचनसूचनसामर्थ्यविशेषानतिलङ्घनात्। सदितिशब्दस्य हि सत्त्वमात्रवचने सामर्थ्यविशेषो, नासत्त्वाद्यनेकधर्मवचने, स्यादिति शब्दस्य च वाच[2]कस्यानेकान्तमात्रवचने सामर्थ्यविशेषो, न पुनरेकान्तवचने तस्यैव[3] द्योतक[4]स्याविवक्षिताशेषधर्मसूचने सामर्थ्यविशेषो, न पुनर्विवक्षितार्थवचने[5], तद्वाचक[6]शब्दप्रयोगवैयर्थ्यप्रसक्तेः। न चैवं विधि[7]वचनसूचनसामर्थ्यविशेषमतिक्रम्य प्रवर्तमानः शब्दः प्रसिद्धवृद्धव्यवहारेषूपलभ्यते यतो निष्पर्यायं भावाभावावभिदधीत[8]। स्यान्मतं 'यथासङ्केतं शब्दस्य प्रवृत्तिदर्शनात्सह सदसत्त्वधर्मयोः सकेतितः शब्दस्तद्वाचको न विरुध्यते संज्ञा[10]शब्दवत्, इति तदयुक्तं, सङ्केतानुविधाने[11]पि कर्तृकर्मणोः[12] शक्त्य[13]शक्त्योरन्यतरव्यपदेशार्ह[14]त्वादयोदारुवज्रलेखनवत्[15]। न हि यथायसो दारुलेखने कर्तुः शक्तिस्तथा वज्रलेखनेस्ति, यथा वज्रलेखने तस्या[16]शक्तिस्तथा दारुलेखनेपीति शक्यं वक्तुम्। नापि यथा दारुणः कर्मणोऽयसा लेख्यत्वे[17] शक्तिस्तथा वज्रस्या[18]स्ति यथा वा वज्रस्य तत्राशक्तिस्तथा दारुणोपीति निश्चयः, कचित्कस्य[19]चित्कर्तृकर्मणोः शक्त्[20]योरशक्त्[21]योश्च प्रतिनियततया व्यवस्थितत्वात्। तथा शब्दस्यापि सकृदेकस्मिन्नेवार्थे प्रतिपादनशक्तिर्न पुनरनेकस्मिन्, संकेतस्य[22] तच्छक्ति[23]व्यपेक्षया तत्र प्रवृत्तेः। सेनावनादिशब्दस्यापि नानेकत्रार्थे प्रवृत्तिः, करितुरगरथपदातिप्रत्यासत्तिविशेषस्यैकस्य सेनाशब्देनाभिधानात्। वनयूथपङ्क्तिमालापानकग्रामादिशब्दानामप्येतेनैवानेकार्थप्रतिपादनपरत्वं प्रत्याख्यातम्। कथमेव वृक्षाविति पदं द्व्यर्थे[24] वृक्षा इति च बह्वर्थमुपपद्यते इति चेत् केषांचि[25]देकशेषा[26]रम्भात् परेषां[27] स्वाभाविकत्वादभिधानस्ये[28]ति संगिरामहे। तत्रैकशेषपक्षे द्वाभ्यामेव वृक्षशब्दाभ्यां वृक्षद्वयस्य, बहुभिरेव च वृक्षशब्दैर्बहूनां वृक्षाणामभिधानान्नैकस्य शब्दस्य सकृदनेकार्थविषयत्वं, शिष्टलुप्तशब्दयोः[29] सारूप्यादभिधेयसाम्याच्चैकत्वोपचारादेकशब्दप्रयोगोपपत्तेः। स्वाभाविकत्वे[30] त्वभिधानस्य[31], वृक्षशब्दो द्विबहुवचनान्तः स्वभावत[32] एव स्वाभिधेयमर्थं द्वित्वबहुत्वविशिष्टमाचष्टे, तथा[33] सामर्थ्यादन्यथा शब्दव्यवहारानुपपत्तेः। ननु च वृक्षा इति प्रत्ययवती प्रकृतिः पदम्। तस्य वाच्यमनेकमेकं च स्याद्वादिभिरिष्यते, न पुनरेकमेव। तथा चोक्तम् "अनेकमेकं च पदस्य वाच्यं वृक्षा इति[34] प्रत्ययवत्प्रकृत्याः[35]" इति कश्चित्, सोप्येवं प्रष्टव्यः, किमेकमनेकं च सकृत्प्रधानभावेन पदस्य वाच्यमाहोस्विद्गुणप्रधानभावेन इति। न तावत्प्रथमः पक्षः, तथा प्रतीत्यभावात्। वृक्षद्रव्यं हि वृक्षत्वजातिद्वारेण वृक्षशब्दः प्रकाशयति ततो[36] लिङ्ग[37] संख्यां[38] चेति शाब्दी प्रतीतिः क्रमत एव। तदुक्तं "स्वार्थम-

---

१ ततथेत्यध्याहार्यम्। २ द्योतकवाचकभेदात्पक्षद्वयम्। तत्र वाचकपक्षे। ३ ( स्यादिति शब्दस्य )। ४ द्योतकपक्षे। ५ अन्यथेत्यध्याहार्यम्। ६ ( तस्य विवक्षितधर्मस्य )। ७ विधिवचनं, नियतार्थवचनम्। ८ युगपत्। ९ शब्दः। १० जैनेन्द्रे शतृशानप्रत्यययोः सदिति सञ्ज्ञा यथा यथासकेतं शतृशानावभिदधाति। ११ शब्दस्य। १२ वाचकवाच्ययो.। १३ कर्तुं शक्त्यशक्ती कर्मणो वा शक्त्यशक्ती। तयोर्मध्येन्यतरस्या। १४ विवक्षावशात्। १५ लेखनं भेदनम्। अयो यथा दारु छिनत्ति न तथा वज्रम्। १६ अयस। १७ आच्छेद्यत्वे। १८ कर्मण। १९ तयोर्मध्ये। २० लेख्यलेखनयोः। २१ अलेख्यालेखनयो ( अलेख्यत्वं कर्मण.। अलेखनत्वं कर्त्रपेक्षया )। २२ अनेकार्थप्रतिपादने शक्त्यभावेपि सकेतवशादनेकार्थप्रतिपादनं भविष्यतीत्याशङ्कायामाह। २३ सा, प्रतिपादनशक्ति.। २४ द्वावर्थौ विषयौ यस्य तत्। २५ पाणिन्यादीनाम्। २६ "स्वरूपाणामेकशेष एकविभक्तौ" इति पाणिनिसूत्रेण। २७ जैनेन्द्रकर्तृणाम्। २८ "स्वाभाविकत्वादभिधानस्यैकशेषानारम्भ" इति सूत्रं जैनेन्द्रे। २९ वृक्षश्च वृक्षश्च वृक्षावित्येकशेषे एकोवशिष्टो वृक्षशब्द, एकश्च लुप्तस्तयोः। ३० ( जैनेन्द्रमतानुसारेण )। ३१ शब्दस्य। ३२ द्रव्यापेक्षया। ३३ एकत्वद्वित्वबहुत्वविशिष्टकथनस्य सामर्थ्यात्। ३४ अनेन प्रकारेण। ३५ 'पदस्य' विशेषणम्। ३६ द्रव्यप्रकाशनानन्तरम्। ३७ नपुंसकत्वादि। ३८ एकत्वादिकाम्।

भिधाय शब्दो निरपेक्षो[1] द्रव्यमाह समवेतम्। समवेतस्य तु वचने[2] लिङ्गं संख्यां विभक्तीश्च" इति। प्रधानभावेन च वृक्षार्थः प्रतीयते, बहुत्वसंख्या तु गुणभावेनेति न कस्यचिद्विरोधः, प्रधानगुणभावपक्षस्यै[3]-वाभिमतत्वात्, स्यादिति निपातेनानेकस्य धर्मस्याकाङ्क्षणेन[4]ैकस्यैव प्रधानस्य गुणानपेक्षस्या[5]पवदनात्[6]— सर्वस्य वाचकतत्त्वस्य गुणप्रधानार्थत्वात्, वाच्यतत्त्वस्य च तथाभूतत्वात्[7]। तदुक्तम् "आकाङ्क्षिणः[8] स्यादिति[9] वै निपातो गुणानपेक्षे[10] नियमे[11]ऽपवादः[12]। गुणप्रधानार्थ[13]मिदं हि वाक्यं जिनस्य ते तद्द्विपतामपथ्यम्" इति। नन्वेवं[14] प्रधानभावेनाशेषधर्मात्मकस्य वस्तुनः प्रकाशकं प्रमाणवाक्यं कथमुपपद्येत येन सकलादेशः प्रमाणाधीनः स्यादिति चेत्कालादिभिरभेदेनाभेदोपचारेण च द्रव्यपर्याय[15]नयार्पितेन सकलस्य[16] वस्तुनः कथनादिति ब्रूमः[17]। द्रव्यार्थिक[18]नयात्तावदेकस्यैव द्रव्यस्यानन्तपर्यायात्मकस्यादेशः[19] प्रमाणवाक्यं नानेकार्थं[20], पर्यायनयाच्च सकलपर्यायाणां कालादिभिरभिन्नानामभेदोपचारादुपचरितमेकमेव वस्तु प्रमाणवाक्यस्य विषयः इति न किंचिद्वाक्यं पदवदनेकार्थं सकृत् प्रधानभावेन विभाव्यते[21], संकेतसहस्रेणापि[22] वाचकवाच्ययोः कर्तृकर्मणोः शक्त्यशक्त्योरनतिलङ्घनार्हत्वात्[23]कारणकार्यवदित्यनवद्यम्। **अन्यथाऽचाक्षुषत्वादयः शब्दादिधर्मा न भवेयुः।** शक्यं हि वक्तुं, 'रूपवच्च[24]क्षुर्ज्ञानजननशक्तियुक्तः शब्दश्चाक्षुष एव, रसवच्च रसनज्ञानजननसमर्थो रासनो[25], गन्धादिवच्च घ्राणादिज्ञानजननपटुर्घ्राणीयादिः[26]' इति न तस्या[27]चाक्षुषत्वारासनत्वाघ्राणीयत्वादयो धर्माः स्युः, [28]अश्रावणत्वादयश्च[29] रसादिधर्मा[30] न भवेयुः। **[31]अतो यावन्ति पररूपाणि[32] तावन्त्येव प्रत्यात्मं[33] स्वभावान्तराणि[34], तथा परिणामात्,** शब्दादीनामन्यथा स्वरूपायोगात्। यदि पुनश्चक्षुरादिविज्ञानोत्पादनाऽशक्त्यतिक्रमस्य सर्वदाप्यसंभवादचाक्षुषत्वादयः शब्दादिधर्मा एव श्रावणादिज्ञानजननशक्त्यनतिक्रमाच्छ्रावणत्वादिवदिति मतं तदा सदादिपदस्य सत्त्वाद्येकधर्मप्रतिपादनशक्त्यनतिक्रमात [35]प्रधानभावार्पितानेकधर्माभिधानाशक्त्यनतिलङ्घनाच्च नानेकोऽर्थः[36] सकृत्संभवतीत्यनुमन्यताम्। [37]स्यादवक्तव्यमेव सर्वं, युगपद्वक्तुमशक्तेरिति भङ्गचतुष्टयमुपपन्नम्।

**[38]द्रव्यपर्यायौ व्यस्तसमस्तौ[39] समाश्रित्य चरमभङ्गत्रयव्यवस्थानम्।** व्यस्तं[40] द्रव्यं[41] द्रव्यपर्यायौ समस्तौ सहार्पितौ समाश्रित्य स्यात्सद[42]वक्तव्यमेव सर्वमिति वाक्यस्य प्रवृत्तिः, द्रव्याश्रयणे

---

१ विभक्त्यपेक्षारहितः। २ समवेतद्रव्यकथनानन्तरमित्यर्थः। ३ द्वितीयस्य। ४ कर्तरि युडन्त्र। आकाङ्क्षकेणेत्यर्थः। ५ ( गुणभूतो धर्मोऽनेकत्वम्। तं नापेक्षते इति गुणानपेक्षस्तस्य प्रधानस्य )। ६ निराकरणात्। ७ गुणप्रधानार्थत्वात्। ८ आकाङ्क्षति वाञ्छति अनेकान्धर्मानिति आकाङ्क्षी, तस्य पुंस.। ९ ( स्यादिति निपात. अनेकेषा धर्माणामाकाङ्क्षक' (गुणभावेन) इत्यर्थ'। १० गुणोऽमुख्यः। ११ द्रव्यमेवार्थ इति। १२ निराकरोति। १३ गुणः प्रधानश्चार्थो विषयो यस्य एवंभूतं वाक्यम्। १४ सर्वस्य वाक्यस्य गुणप्रधानाभ्यामर्थवाचकत्वप्रकारेण। १५ ( कालादिभिरभेदेन द्रव्यार्थिकनयार्पितेन, अभेदोपचारेण पर्यायार्थिकनयार्पितेन चेत्यर्थ. )। १६ सपर्ययस्य। १७ वयं जैनाः। १८ एतदेव भावयति। १९ कथनम्। २० अनेकेऽर्था यस्य प्रमाणवाक्यस्य तत्। २१ पुरुषेण स्मर्येते, सकल्प्यते। २२ ( वाचकवाच्ययो. कर्तृकर्मणोः शक्त्यशक्त्योर्नातिलङ्घनं सकेतसहस्रेणापि यत इत्यर्थ )। २३ प्रमाणवाक्यस्य। २४ यथा रूपं चक्षुर्ज्ञानजननशक्तियुक्तं तथा शब्दोपि चक्षुर्ज्ञानजननशक्तियुक्तोस्तीति वक्तुं शक्यं, शक्त्यशक्त्योरतिलङ्घनात्। २५ शब्द एव। २६ शब्द एव। २७ शब्दस्य। २८ अन्यथेति पूर्वोक्तं पदमत्रोत्तरत्रापि च सबन्धनीयम्। २९ ( आदिपदेन अघ्राणत्वादय' )। ३० ( आदिपदेन रूपादिधर्मा ग्राह्या. )। ३१ स्वशक्त्यतिक्रमे चाक्षुषत्वादयः शब्दादिधर्मा भवेयुर्यतः। ३२ ( अन्यशब्दस्य वाच्यानि )। ३३ प्रतिशब्दादिकम्। ३४ वाच्यवाचकत्वलक्षणानि। ३५ द्रव्यापेक्षया। ३६ शब्दस्य विषय। ३७ ततश्चेत्यध्याहार्यम्। ३८ सत् द्रव्यम्, असन् पर्याय। ३९ व्यस्तं क्रमप्राप्तम्। समस्तं युगपत्सह अक्रम इति यावत्। ४० ( भङ्गत्रयमेव दर्शयति ग्रन्थकार. )। ४१ सदित्यागतरूपम्। ४२ ( सदित्यागतरूपस्य व्यस्तस्य द्रव्यस्याश्रयणात्त्वत्र सदिति कथनं, द्रव्यपर्याययो सहार्पितयोस्तदैवाश्रयणादवक्तव्यं चेति स्यात्सदवक्तव्यरूप पञ्चमभङ्ग. सघटते। एवमुत्तरत्रापि षष्ठसप्तमभङ्गयोर्ज्ञेयम् )।

सदंशस्य[1] सहद्रव्यपर्यायाश्रयणे वक्तुमशक्तेरवक्तव्यत्वस्य विवक्षितत्वात्। तथा व्यस्तं पर्यायं[2] समस्तौ द्रव्यपर्यायौ चाश्रित्य स्यादसदवक्तव्यमेव सर्वमिति वचनव्यवहारः। व्यस्तौ क्रमार्पितौ समस्तौ सहार्पितौ द्रव्यपर्यायौ समाश्रित्य स्यात्सदसदवक्तव्यमेव सर्वमिति शब्दप्रवृत्तिः स्याद्वादाश्रयणव्याख्यानादेवमेव चरमभङ्गत्रयस्य व्यवस्थानात्[3]। परमतापेक्षया तु सत्सामान्य[4]मन्वयि द्रव्यमाश्रित्य सदवक्तव्यमेव, स्वलक्षण[5]लक्षणं विशेषं[6] पर्यायमाश्रित्या[7]न्यापोह[8]सामान्यमसदवक्तव्यमेव[9], सामान्यविशेषौ[10] परस्परमत्यन्तभिन्नौ द्रव्यपर्यायौ समुदितौ समाश्रित्य सदसदवक्तव्य[11]मेवेति व्याख्यानमकलङ्कदेवैर्व्यधायि। तत्र[12] वस्तु[13] सत्सामान्यं[14] कथ सदप्यवक्तव्यमिति चेत्तस्य परा[15]भ्युपगमात् सतोपि वचनानुपपत्तेः।

**न खलु सर्वात्मना[16] सामान्यं वाच्यं[17], तत्प्रतिपत्तेरर्थक्रियां प्रत्यनुपयोगात्। न हि गोत्वं[18] वाहदोहादावुपयुज्यते,** स्वविषयज्ञानमात्रेपि तस्या[19]ऽसामर्थ्यात्। व्यक्तिसहितस्य सामान्यस्य तत्र[20] सामर्थ्येपि न प्रतिपन्नसकलव्यक्तिसहितस्य सामर्थ्यम्, असर्वज्ञस्य सकलव्यक्तिप्रतिपत्तेः सकृदसंभवात्। अप्रतिपन्नाखिलव्यक्तिभिः सहितस्य[21] सामर्थ्ये[22] पुनरेकव्यक्तेरप्यग्रहणे सामान्यज्ञानप्रसङ्गः[23]। कतिपयव्यक्तिसहितस्य सामर्थ्ये तस्य[24] ताभि[25]रुपकारानुपकारविकल्पद्वया[26]नतिक्रमः। प्रथम[27]विकल्पे सामान्यस्य व्यक्तिकार्यत्वप्रसङ्गः[28] तदभिन्न[29]स्योपकारस्य करणात्। ततो भिन्नस्य[30] करणे व्यपदेशा[31]सिद्धिः। तत्कृतोपकारेणापि तस्यो[32]पकारान्तरकरणे[33]ऽनवस्थानम्। द्वितीयविकल्पे[34] व्यक्तिसहभाववैयर्थ्यम्, अकिञ्चित्कर[35]सहकारिविरहात्। सामान्येन सहैकज्ञाने व्यापाराद्व्यक्तीना तत्सहकारित्वेपि किमालम्बनभावेन[36] तत्र[37] तासा[38] व्यापारोऽधिपतित्वेन[39] वा ? प्राच्यकल्पनायामेकानेकाकारं सामान्यविशेषज्ञानं स्यान्न पुनरेकसामान्यज्ञान, स्वालम्बनानुरूपत्वात्सकलविज्ञानस्य[40]। द्वितीयकल्पनायां तु व्यक्तीनामनधिगमेपि सामान्यज्ञानप्रसङ्गः। न हि रूपज्ञाने चक्षुषोधिगतस्याधिपतित्वेन व्यापारोस्त्यपूर्वस्य[41] वा। सर्वथा नित्यस्य सामान्यस्य क्रमाक्रमाभ्यामर्थक्रियाविरोधाच्च न तस्य कस्यांच्चि[42]दर्थक्रियायामुपयोगो यतस्तत्प्रतिपादनाय शब्दप्रयोगः स्यात्। ततो[43] नार्थे[44] कस्यचित्प्रवृत्ति[45]रुपपद्येत। **लक्षित[46]लक्षणयोः[47] वृत्तिः कथंचिदतादात्म्ये न भवेत्, संबन्धान्तरा[48]सिद्धेः कार्मुकादिवत्। न हि**

---

१ द्रव्याश्रयणे सदंशो विवक्षित इत्यर्थ। २ असदिति। ३ इति स्वामिसमन्तभद्राणामभिप्रायः। ४ अद्वैतापेक्षया। ५ बौद्धमतापेक्षया। ( स्वलक्षणं क्षणिकत्व लक्षणं यस्य तत् )। ६ सत्सामान्यरहितम्। ७ पराभ्युपगममात्रान्नतु परमार्थत.। ८ अन्यापोहसामान्यस्याऽसत्त्वरूपत्वेन पर्यायत्वं न विहन्यते इति भाव। ९ अन्यापोहसामान्यं यथा अगोव्यावृत्तिर्गौः। १० यौगमतापेक्षया। ११ ( सामान्यरूपेण सदवक्तव्यमेव विशेषापेक्षयाऽसदवक्तव्यमेवेत्यर्थ। कुत. ? यतो यौगमते सामान्य नित्यमेकं सर्वगतं सर्वथाऽभिन्नमस्ति। तदपेक्षया सदवक्तव्यमेव। घटपटादींस्तु यौगोऽनित्यानेव मन्यते तदाद्यपेक्षया असदवक्तव्यमेव वस्तु सर्वथा )। १२ सदवक्तव्ये एवासदवक्तव्ये एव सदसदवक्तव्ये एव च क्रमेण। १३ अद्वैतपक्षे। १४ विशेषरहितम्। १५ परेण अद्वैतवादिना। १६ व्यक्त्यपेक्षयापि सामान्यापेक्षयैव। १७ ( सर्वात्मना सामान्यमेव यदि तदा शब्देन नैव वाच्यं स्यात् )। १८ ( पुंस्त्वस्त्रीत्वानपेक्षम् )। १९ सामान्यस्य। २० स्वविषयज्ञानमात्रे। २१ सामान्यस्य। २२ स्वविषयज्ञानजनने। २३ अप्रतिपन्नत्वाविशेषात्। २४ सामान्यस्य। २५ व्यक्तिभि.। २६ तस्य ताभिरुपकार· क्रियते न वेति। २७ उपकार· सामान्यादभिन्नो भिन्नो वेति विकल्पद्वयमत्रापि। २८ व्यक्त्या कार्यत्वप्रसङ्ग.। सामान्यमपि कृतं स्यादित्यर्थ.। २९ सामान्यादभिन्नस्य। ३० उपकारस्य। ३१ अस्यायमुपकार इति। ३२ सामान्यस्य। ३३ सवन्धसिद्ध्यर्थम्। ३४ तस्य ताभिरनुपकारकरणे। ३५ अकिञ्चित्करस्य सहकारित्वाभावादित्यर्थ·। ३६ आलम्बनो विषय। ३७ एकज्ञाने। ३८ ( व्यक्तीनाम् )। ३९ अनधिगमत्वेन व्यापारोधिपतित्वम्। ४० ( तत्र ज्ञाने आलम्बनभावेन व्यक्तीनामपि व्यापृतत्वात् )। ४१ अथवा अदृष्टस्य शुभाशुभलक्षणस्याधिगतस्य रूपज्ञानेधिपतित्वेन व्यापारोस्ति नैव। ४२ वाहादिरूपाया ज्ञानादिरूपायां वा। ४३ इति, नित्यात्सामान्यात्। ४४ खण्डमुण्डादौ। ४५ सामान्यविशेषयोरसवन्धात्। ४६ सामान्यस्य साक्षादर्थक्रियायामुपयोगं परिहृत्य परम्परयापि तं परिहरति। ४७ परम्परया। ४८ ( संयोगसमवायाभ्यां व्यतिरिक्तस्य संबन्धान्तरस्य वादिमते असिद्धेः )।

यथा कार्मुकपुरुषयोः संयोगः संबन्धः सिद्धस्तथा सामान्यविशेषयोरपि । न च समवायः पदार्थान्तरभूतः[1], तत्प्रतीत्यभावात् । प्रतीयमानस्तु समवायः कथंचित्तादात्म्यमेव, अविष्वग्भावलक्षणत्वात्तस्य[2] । इति[3] शब्देन लक्षितं सामान्यं विशेषान् लक्षयति । ततस्तत्रा[4][5]र्थक्रियार्थिनः प्रवृत्तिरसंबन्धान्नोपपद्येत संयोगसमवायव्यतिरिक्तस्य संबन्धान्तरस्यासिद्धेः । विशेषणविशेष्यभावः[6] संबन्धान्तरमिति चेन्न, तस्यापि[7] स्वसंबन्धिव्यतिरेकैकान्ते संबन्धान्तरापेक्षणस्यावश्यंभावादनवस्थाप्रसङ्गात्, तस्य कथंचित्स्वसंबन्धितादात्म्ये[8] स्वसिद्धान्तविरोधात्[9] । एतेनाविनाभावः संबन्धस्तयोः[10] प्रत्युक्तः । सामान्यविशेषयोः सामान्यविशेषभाव एव संबन्ध इत्यपि मिथ्या, कथञ्चिदतादात्म्ये[11] तदनुपपत्तेः[12] सह्यविन्ध्यवत् । तन्न नित्यसर्वगतामूर्तैकरूपं सामान्यं सर्वथा व्यक्तिभ्यो भिन्नमन्यद्वा[13] वाच्यम्, अर्थक्रियायां साक्षात्परम्परया[14] वानुपयोगात् । तादृशो[15]नुपलम्भात्संकेतोऽपि[16] न सिध्येत् । न चासंकेतितमपि[17] सामान्यं वाच्यं नाम, अतिप्रसङ्गात् । सतापि[18] तादृशान्यव्यावृत्त्यात्मना[19] भवितव्यम्, अन्यथा विशेषवत्[20]स्वभावहानिप्रसङ्गात् विशेषाणां वा तद्वत्ततो[21] व्यावृत्तेः । परापर[22]सामान्ययोः परस्परं स्वाश्रयाच्च[23] कथंचिदव्यावृत्तौ स्वरूपसंकरात्प्रतिनियतस्वभावहानेरवश्यंभावाद्विशेषवत्[24] तद्वतोऽर्थस्याप्यभाव इति सर्वाभावः प्रसज्येत । सामान्यवादिनां[25] तदभ्युपगममात्रात्सदप्यवक्तव्यमेव सामान्यम् ।

तथा स्वलक्षणैकान्तवादिनां न स्वलक्षणं वाच्यं, तस्यानन्त्यात्[26]संकेताविषयत्वादनन्वया[27]च्छब्दव्यवहारायोग्यत्वात् । न चा[28]न्यापोहः[29] सर्वथार्थः शब्दस्य विकल्पस्य[30] वा, स्वविषय[31]विधिनिरपेक्षस्य गुणभावेनाप्यन्यापोहस्य शब्देन वक्तुमशक्तेर्विकल्पेन च निश्चयनायोगात् । साधन[32]वचनमेव त्रिरूप[33]लिङ्गप्रकाशकं, न ततो[34]ऽन्यद्वचनं[35], तस्य[36] विवक्षामात्रेऽपि संभावनाया एवोपगमादिति[37] चेन्न[38], तस्याप्यन्यापोहमात्रार्थत्वात्[39] 'अपोहः शब्दलिङ्गाभ्यां[40] न वस्तु[41] विधिनोच्यते' इति वचनात्, सत्यपि च साधनवचनेन नित्यत्वसमारोपव्यवच्छेदे स्वलक्षणस्यानित्यत्वासिद्धौ[42] साधनवचनानर्थक्यात् । न शब्दस्य परार्थानुमानरूपस्य विकल्पस्य वा स्वार्थानुमानज्ञानरूपस्य सर्वथान्यापोहोऽर्थः[43] श्रेयान् । यत्[44]सत्तत्सर्वमनित्यं नित्ये क्रमयौगपद्याभ्यामर्थक्रियाविरोधादिति साधनवचनेन नित्यत्वसमारोपव्यवच्छेद एव स्वलक्षणस्यानित्यत्वसिद्धिः । अतो न तस्या[45]नर्थक्यमिति चेत्क[46]थमित्थं सर्वथान्यापोहोऽर्थः

१ सामान्यविशेषव्यतिरिक्तः । २ तादात्म्यस्य । ३ उक्तप्रकारेण । ४ इति, विशेषज्ञानात् । ५ सामान्ये । ६ सामान्यवान्विशेष इति । ७ विशेषणविशेष्यभाव. सामान्यविशेषाभ्या भिन्नोऽभिन्नो वेति विकल्पद्वयं कृत्वा क्रमेण दूषयन्ति जैनाः । ८ अभेदेऽङ्गीक्रियमाणे । ९ स्वसिद्धान्तो भेदपक्षः । १० सामान्यविशेषयोः । ११ भेदे । १२ संबन्धानुपपत्तेः । १३ अभिन्नमेव वा सर्वथा । १४ शब्देन जातिराक्षिप्यते जात्या व्यक्तिस्ततः प्रवृत्तिरिति । १५ अमूर्तैकरूपस्य सामान्यस्य । १६ इदं सामान्यमिति नामापि । १७ शब्देनागृहीतम् । १८ विद्यमानेनापि सामान्येन । १९ अन्यशब्देन सामान्यान्तरं ग्राह्यम् । २० विशेषस्य विशेषान्तराद्व्यावृत्त्यभावे स्वभावहानिप्रसङ्गो यथा । २१ सामान्यस्य सामान्यान्तरादव्यावृत्तौ स्वभावहानिप्रसङ्गो यथा ततो, विशेषात् । २२ भाष्यं भावयन्नाह । २३ विशेषरूपाश्रयात् । २४ विशेषस्य यथा विशेषादव्यावृत्तौ प्रतिनियतस्वभावहानिः । २५ नैयायिकवैशेषिकसाङ्ख्यभाट्टप्राभाकराणाम् । २६ आनन्त्यादिति साधनं कथं सिद्धम् ? संकेताविषयत्वात् । तदपि कथम् ? अनन्वयात् । तदपि कथम् ? शब्दव्यवहाराविषयत्वात् । ( इति पूर्वपूर्वहेतुत्वमुत्तरोत्तरस्य ) । २७ सकेतितस्य स्वलक्षणस्य व्यवहारकालेनुगमाभावात् । २८ स्वलक्षणस्य मा भूत्, सामान्यस्य वाच्यत्वं स्यादिति बौद्धेनोक्ते आह जैनः । २९ अन्यापोहः सामान्यं बौद्धाभिमतम् । ३० ज्ञानस्य । ३१ अन्यापोहस्य विषयो गोत्वादिः । ३२ आह सौगतः । ३३ त्रिरूपलिङ्गस्यान्यस्मात्पञ्चरूपलिङ्गादितो व्यावृत्त्या अन्यापोहलक्षणस्य प्रकाशकम् । ३४ साधनवचनात् । ३५ यत्सत्तत्सर्वं क्षणिकं, घटमानयेत्यादि । ३६ अन्यद्वचनस्य । ३७ ततश्च नान्यापोह. सर्वस्य शब्दस्यार्थ इत्येतदसिद्धसाधनम् । कुतः ? साधनवचनस्यान्यापोहविषयत्वोपगमात् । ३८ जैन. प्राह । ३९ अर्थो विषयः । ४० लिङ्गशब्देनात्र लिङ्गवाचकं वचनं ( यत्सत्तत्सर्वं क्षणिकमिति ) ग्राह्यम् । ४१ वस्तु स्वलक्षणम् । ४२ केनापि प्रमाणेन । ४३ विषयः । ४४ आह सौगत. । ४५ साधनवचनस्य । ४६ इतो जैनो ब्रूते ।

समर्थ्यते, स्व[1]लक्षणक्षणक्षयस्य वि[2]धानात् । दृ[3]श्यविकल्प्ययोः स्वलक्षणसामान्ययोरेकत्वाध्यवसायात् त[4]त्क्षणक्षयस्य [5]विधिः, न पुनर्वस्तुनः[6] सर्वथा विकल्पाभिधानयोर्वस्तुसंस्पर्शाभावादिति चेन्न[7], स्वलक्षणसामान्ययोरेकत्वाध्यवसायिना विकल्पेन स्वलक्षणस्याग्रहणात्,अगृहीतेन सह सामान्यस्यैकत्वाध्यवसा(या)संभवात्, अन्यथातिप्रसङ्गात्[10] । प्रत्यक्षतः प्रमितेन स्वलक्षणेन त[11]स्यैकत्वाध्यवसानमिति चेन्नन्वेवं **विकल्पाभिधानयोर्वस्तुसंस्पर्शाभावे स्वलक्षणदर्शनस्याकृतनिर्णयस्य[12] वस्तुसन्निधेरविशेषात्किं केन प्रमितं स्यात् ? न हि मिथ्याध्यवसायेन तत्त्वव्यवस्थापनं**, संशयविपर्यासकारिणापि दर्शनेन[13] स्वलक्षणस्य प्रमितत्वप्रसङ्गात् । वस्तुसंस्पर्शाभावाविशेषेपि[14] निर्णयस्य[15] जनकं दर्शनं स्वलक्षणस्य प्रमाणं, न पुनः संशयादेरिति व[16]दन्नात्मनोनात्मज्ञतामावेदयति । ननु च निर्णयेन दर्शनवि[17]षयसमारोपस्य व्यवच्छेदात्त[18]ज्जनकं दर्शनं प्रमाणं, न तु संशयादेर्जनकं, तेन[19] तदव्यवच्छेदात्, असमारोपि[20]तांशे दर्शनस्य प्रामाण्यात् 'क्व[21]चिद्दृष्टेपि यज्ज्ञानं सामान्ये[22]ऽर्थे विकल्पकम् । असमा[23]रोपितान्यांशे त[24]न्मात्रापोहगोचरम्' इति वचनान्नोक्तोपालम्भ इति चेन्न, समारोपव्यव[25]च्छेदविकल्पस्य स्वसंवेदनव्यवस्थानेपि विकल्पान्तरापेक्षत्वप्रसङ्गान्नीलादिस्वलक्षणदर्शन[26]वन्निर्विकल्पकत्वाविशेषात्[27] । व[28]स्तुदर्शनसमारोपव्यवच्छेदयोरन्यतरस्यापि स्वतस्तत्त्वापरिनिष्ठि[29]तावितरेतराश्रयदोषः । समारोपो[30] हि येन व्यवच्छिद्यते स निश्चयः[31] । स्वरूपमनिश्चि[32]न्वन्नपि यदि स्वतः परिनि[33]ष्ठापयेत्तदा वस्तुदर्शनमपि, विशेषाभावात् । तथा च किं निश्चयापेक्षया ? वस्तु[34]दर्शनस्य निश्चयापेक्षायां वा निश्चयस्वरूपसंवेदनस्यापि निश्चयान्तरापेक्षणादनवस्था स्यात् । निश्चयाद्वस्तुदर्शनस्य परिनिष्ठितौ वस्तुदर्शनाच्च निश्चयस्वरूपस्य[35] परस्परा[36]श्रयदोषः स्यात् । ततो न विकल्पवच्छब्दस्य सर्वथान्यापोहोर्थः । एतेनातत्कार्यकारणव्या[37]वृत्तिरेकप्रत्यवमर्शादिज्ञानादेकार्थसाधने हेतुरत्यन्तभेदेपीन्द्रियादिवत्समुदितेतर[38]गुडूच्यादिवच्च ज्वरोपशमनादाविति व[39]दन्निराकृतः, सर्वथा त[40]तो व[41]स्तुनि प्रवृत्त्ययोगात् । **समयादर्शिनोपि क्वचि[42][43]दन्वयबुद्ध्यभि[44]धानव्यवहारोऽतत्कार्यकारणव्यतिरे[45]कव्यवस्थायां गुडूच्याद्युदाहरणप्रक्लृप्तिं विपर्यासयति, त[46]स्य** वस्तुभूतार्थसादृश्यपरिणामसाधनत्वात् । न हि गुडूच्यादयो ज्वरोपशमनशक्ति-

---

१ स्वलक्षणक्षणक्षयस्यापि शब्दार्थत्वादित्यर्थ । २ अस्तित्वसाधनात् । ३ सौगत । ४ नीलक्षणक्षयस्य । ५ अन्यापोहोर्थ समर्थ्यते । ६ स्वलक्षणरूपस्य । ७ जैन. । ८ दृश्यविकल्प्ययो । ९ सामान्यस्य विकल्प्यस्यान्यापोहलक्षणस्य । १० त्रिविप्रकृष्टेतरयोरप्येकत्वाध्यवसायप्रसङ्गात् । ११ सामान्यस्य, विकल्प्यस्य । १२ स्वलक्षणग्राहकप्रत्यक्षस्य । १३ निर्विकल्पकप्रत्यक्षेण । १४ स्वलक्षणदर्शनमिथ्याध्यवसाययो । १५ विकल्पस्य । १६ सौगत. ।१७ एष विषयो, नीलस्वलक्षण. । १८ निर्णयजनकम् । १९ सशयादिना दर्शनविषयसमारोपस्य व्यवच्छेदनाभावात् । २०—२१ नीलस्वलक्षणे । २२ वस ( बहुव्रीहि. ) २३ विवक्षितांशेऽक्षणिके । समारोपव्यवच्छेदकनिर्णयजनकदर्शनविषये । २४ तन्मात्रस्या ( क्षणिकस्य ) न्यस्मा ( अक्षणिकात् )दपोहो व्यावृत्तिर्गोचरो यस्य तत् । अक्षणिकाद्व्यावृत्तं क्षणिकमिति तात्पर्यम् । २५ समारोपं व्यवच्छिनत्तीति समारोपव्यवच्छेदो विकल्पस्तस्य । २६ यथा नीलादिस्वलक्षणदर्शनस्य स्वस्वरूपव्यवस्थापनार्थं विकल्पान्तरेण भाव्यं तथा समारोपव्यवच्छेदविकल्पस्यापि स्वस्वरूपव्यवस्थापनार्थं विकल्पान्तरेण भाव्यमित्यनवस्था । २७ विकल्प स्वसंवेदनं नीलादिस्वलक्षणदर्शनयो । २८ वस्तु नीलादिक्षण । तस्य दर्शनं प्रत्यक्षम् । समारोपः अक्षणिक । २९ तत्त्वापरिसमाप्तौ । ३० क्षणिके अक्षणिकस्य समारोप. । ३१ विकल्प । ३२ निश्चय. । ३३ स्वस्वरूपम् । ३४ वस्तुदर्शनस्येति पदं देहलीदीपकन्यायात् निश्चयापेक्षया इति पूर्वोक्तेपि वाक्ये सम्बध्यते । ३५ परिनिष्ठितावित्यनेनान्वय. । ३६ वस्तुदर्शनस्य स्वत स्वरूपपरिनिष्ठापने । ३७ खण्डादयो हि विशेषसमानपरिणामरहिता एव एकप्रत्यवमर्शादेकार्थहेतवो भवन्ति, अतत्कार्यकारणव्यावृत्तत्वादिन्द्रियादिवत्समुदितेतरगुडूच्यादिवच्चेत्यादि वदन्निति सबन्ध । अतत्कार्यकारणो हि गौ । ३८ समुदिता इतरे शुण्ठ्यादयो यत्र ते तथोक्ता । ते च ते गुडूच्यादयश्च । तद्वत् । ३९ बौद्ध । ४० अतत्कार्यकारणव्यावृत्तेः । ४१ कर्कादिविशेषे श्वेतघोटकादौ । ४२ अतत्कार्यकारणव्यावृत्तौ संकेतादर्शिनोपि । ४३ ( घोटकादौ ) । ४४ द्वन्द्व । ४५ व्यतिरेको, व्यावृत्तिः । ४६ गुडूच्याद्युदाहरणस्य ।

समानपरिणामाभावे ज्वरोपशमहेतवो न पुनर्दधित्र[1]पुषादयोपीति शक्यव्यवस्थं, चक्षुरादयो वा रूपज्ञानहेतवस्तज्जननशक्तिसमानपरिणामविरहिणोपि न पुना रसादय इति निर्निबन्धना व्यवस्थितिः । अतत्कार्यकारणव्यावृत्तिनिबन्धना सेति चेत्कथं तत्कारणकार्य[2]जन्यजनकशक्तिसमानपरिणामाभावेपि केषांचिदतत्कारणकार्यव्यावृत्तिः सिध्येदिति[3] प्रकृतमुदाहरणं कर्कादिव्यक्तीनामश्वत्वादिप्रत्ययं तथा समानपरिणामहेतुकं साधयति ? इति विपर्याससाधनमन्यापोहवादिनाम् । ततोमीषामन्यापोहसामान्यमसदवक्तव्यमेव । एतेन स्वलक्षणान्यापोहद्वयं सदसदवक्तव्यमेव सौगतानामापादितमुन्नेयं, स्वलक्षणस्य सतोप्यन्यापोहस्य चासतोपि वक्तुमशक्यत्वात् । इति परमतापेक्षया चरमभङ्गत्रयमुदाहृतम् ।

नन्वस्तित्वमेव वस्तुनः स्वरूपं, न पुनर्नास्तित्वं, तस्य पररूपाश्रयत्वादन्यथा[4]तिप्रसङ्गा[5]दिति वदन्तं वादि[6]नं प्रत्याहुराचार्याः ।

**अस्ति[7]त्वं प्रतिषे[8]ध्येनाविनाभाव्येकधर्मि[9]णि । विशेषणत्वात्साध[10]र्म्यं यथा भेदविवक्षया ॥ १७ ॥**

एको धर्मी जीवादिः । तत्रास्तित्वं नास्तित्वेन प्रतिषेध्येनाविनाभावि, न पुनर्भिन्नाधिकर[11]णं, विशेषणत्वात् । यथा हेतौ साधर्म्यं वैधर्म्येण भेदविवक्षया सर्वेषां हेतुवादिनां क्वचिदनुमानप्रयोगे प्रसिद्धम् । सर्वस्य नित्यत्वानित्यत्वादिसाधने हेतौ साधर्म्यस्य व्यतिरेकाविनाभाविनोऽसंभवादयुक्तमुदाहर[12]णमिति चेन्न, तत्रा[13]पि त[14]दुभयसद्भावात् । तथा हि । **सर्वमित्थमनित्थं वेति प्रति[15]ज्ञायाऽभिप्रेत्य वा प्रमेयत्वादिहेतूपादानेपि व्यतिरेकोस्त्येव, प्रमेयत्वस्य वस्तुधर्मत्वात्** । परिणामी जीवः शब्दादिर्वा नापरिणामीति वा, सर्वं चेतनमचेतनं वा विवादापन्नमित्थमनित्थं वा प्रतिज्ञाप्रयोगवादी प्रतिपाद्यानुरोधतः प्रतिज्ञाय, सौगतप्रतिपाद्याशयतोभिप्रेत्य वा प्रमेयत्वात् सत्त्वाद्वस्तुत्वादर्थक्रियाकारित्वादित्यादिहेतूनामुपादानेपि वादिप्रतिवादिप्रसिद्धे[16]रन्वयवत्खपुष्पादौ साध्य[17]धर्मनिवृत्तौ साधन[18]धर्मनिवृत्तिलक्षणो व्यतिरेकोस्त्येव । **खपुष्पादयोपि तत्र[19] व्यवहार[20]मिच्छता प्रमेयाः प्रतिपत्तव्या इति[21] न किञ्चित्[22]प्रमाणं प्रमेया[23]भावस्यापि तथाभावानुषङ्गेणाव्यवस्थाप्रसङ्गात्[24] । न चैतद्विरुद्धं स्वलक्षणमनिर्देश्यमित्यादिवत्** । न हि स्वलक्षणस्यानिर्देश्यस्या[25]प्यनिर्देश्यशब्देन निर्देशे विरोधोस्ति । नापि प्रत्यक्षं कल्पनापोढमपि कल्पनापोढत्वेन कल्पयतः किञ्चिद्विरुध्यते, सर्वथा त[26]द्व्यवहारापह्नवप्रसङ्गात् । तथैव खपुष्पादयोऽप्रमेया इति व्य[27]वहरतोपि न तेषामप्रमेयत्वं विरुध्यते, त[28]त्प्रमितौ प्रमाणाभावात्प्रमेयाभाववत् । त[29]दभावेपि खपुष्पादीनां प्रमेयत्वे

---

१ कर्कटिकादिविशेषत्रपुष । २ कारणस्य जननशक्ते कार्यं जन्यशक्ति॰ । ३ ( इति शब्दोत्र 'यतः, इत्यर्थे ) । ४ नास्तित्वस्य पररूपाश्रयत्वेपि वस्तुरूपत्वं यदि । ५ पररूपाश्रितं नास्तित्वं विवक्षितवस्तुस्वरूपं स्यादित्यतिप्रसङ्गः । ६ अद्वैतवादिनम् । ७ वस्तुनो धर्मः । ८ नास्तित्वेन । ९ जीवादौ । १० हेतौ यथा साधर्म्यं वैधर्म्येण सहाविनाभावि । ११ ( भिन्नाधिकरणमस्तित्वं नास्तित्वेन सहाविनाभावि नेत्यर्थः ) । १२ ( अयुक्तमुदाहरण, दृष्टान्तस्य हेतुदेशेषु सर्वत्राघटनात् ) । १३ ( केवलान्वयिनि हेतौ ) । १४ ( साधर्म्यवैधर्म्येति ) । १५ स्वमतापेक्षया प्रतिज्ञाय ( उक्त्वा ) बौद्धमतापेक्षयाभिप्रेत्य ( उपरिष्टात्प्रकरणादिवशेन ज्ञात्वा, बौद्धमते पक्षवचनस्यानभिप्रेतत्वात् ) । १६ जीवादितत्त्वे यथान्वयोस्ति । १७ जीवः परिणामी, प्रमेयत्वात् । यो य प्रमेय स स परिणामी यथा घट॰ । यो न परिणामी स न प्रमेयो यथा खपुष्पमिति । १८ साधनधर्मः प्रमेयत्वम् । १९ खपुष्पादौ । २० खपुष्पमिति । २१ ( इति सौगतेनाशङ्क्येत चेत्तर्हि न किञ्चिदित्याह जैन ) । २२ खपुष्पप्रमितौ । २३ अन्यथेत्यध्याहार्यम् । खपुष्पप्रमितौ प्रमाणं चेदित्यर्थ. । २४ अयं प्रमेय , असौ प्रमेयाभाव इति व्यवस्था न स्यात् । २५ अवाच्यस्य । २६ अनिर्देश्यत्वकल्पनापोढत्वव्यवहारस्य । २७ जैनस्य । २८ खपुष्पपरिच्छित्तौ । २९ प्रमाणाभावेपि ।

प्रमेयाभावस्यापि प्रमेयत्वानुषङ्गः। तथा च प्रमेयतदभावव्यवस्था कथमास्थीयेत? एतेन खपुष्पादयः प्रमेयाः शब्दविकल्पविषयत्वाद्घटादिवदित्यनुमानं[१] प्रत्युक्तं, हेतोः प्रमेयाभावेन व्यभिचारात्[२]। प्रत्यक्षानुमानाभ्यां प्रमीयमाणत्वात्प्रमेयाः खपुष्पादय इति चेन्न, असिद्धत्वात्साधनस्य। तथा हि। ते[३] न प्रत्यक्षेण प्रमीयमाणाः, तत्र[४] स्वाकारानर्पकत्वात्[५]। नाप्यनुमानेन, स्वभावकार्य[६]प्रतिबन्धाभावात्। स्वभावेन[७] केनचित्तेषां प्रतिबन्धे निस्स्वभावत्वविरोधात्, कार्येण च प्रतिबन्धेऽनर्थक्रियाकारित्वव्याघातात्[८] सन्तः खपुष्पादयो व्यवह्रियेरन्[९]। दर्शने[१०] स्वाकारमनर्पयतां[११] स्वभावकार्यप्रतिबन्धाभावे प्रमेयत्वं प्रमाणान्तर[१२]मवश्यमाकर्षति। ततो विप्रतिषिद्धमेतत् खपुष्पादीनां प्रमेयत्वं, प्रमाणद्वयनियमविरोधात्। न च प्रमाणान्तरेणापि प्रमीयमाणास्ते, प्रमाणविषयत्व[१३]धर्मस्यानाश्रयत्वात्। अन्यथा[१४] वस्तुत्वापत्तेः[१५] सद[१६]सद्व्यवस्थानुपपत्तेस्तद्व्यवहाराभावः[१७]। न[१८] च स्वलक्षणमेवान्यापोहः[१९] सर्वथा विधिनियमयो[२०]रेकतानत्वा[२१]संभवात्। पुष्प[२२]रहितं खमेव खे पुष्पाभावः, शशादय एव च विषाणरहिताः शशादिषु विषाणाभाव इत्येकविषयौ खशशादि[२३]तत्पुष्पविषाणविधिनियमौ[२४] सभवत एवेति चेन्न[२५], गगन[२६]शशादीनां भावाभावस्वभावभेदाद्विधिनियमो[२७]पलब्धेश्च, अन्यथानुभवाभावात्। शब्द[२८]विकल्पविशेषो[२९]त्संकेत[३०]विशेषापेक्षादेकत्र[३१] विषये विधिनियमयोः सभव इति चेन्न, संकेतविशेषस्य वस्तु[३२]स्वभावविशेषनिबन्धनत्वात्। तत्स्व[३३]भावभेदाभावे च संकेतविशेषानुपपत्तेरभिधानप्रत्यय[३४]विशेषोपि मा भूत्तद[३५]न्यतरवत्। नन्वनिन्द्र[३६]स्वभावेपि पदार्थे व्यवहर्तृसंकेतविशेषादिन्द्राभिधानप्रत्ययविशेषदर्शनान्न वस्तुस्वभावभेदनिबन्धनः संकेतविशेषः सिद्धो यतो वस्तुस्वभावभेदाभावे संकेतविशेषानुपपत्तिः, ततो[३७]भिधानप्रत्ययविशेषश्च न स्यात्, खं[३८]मस्ति, तत्पुष्पं नास्तीति, तस्या[३९]नादिवासनोद्भूतविकल्पपरिनिष्ठितत्वात्। इति कश्चि[४०]त्सोप्यननुभूतवस्तुस्वभावः, शब्द[४१]स्य सर्वार्थप्रतिपादनशक्तिवैचित्र्यसिद्धेः, पदार्थस्य च सर्वस्य सर्वशब्दवाच्यत्वशक्तिनानात्वात् प्रधान[४२]गुणभावादभिधानव्यवहारप्रसिद्धेः। क्वचित्पदार्थेऽनिन्द्रस्वभावेपीन्द्रशब्दवाच्यत्वशक्तिसद्भावाद्व्यवहर्तृसंकेतविशेषादिन्द्राभिधानप्रत्ययविशेषसिद्धेर्वस्तुस्वभावभेदनिबन्धन एव संकेतविशेष इति न तद[४३]भावे भवितु[४४]मुत्सहते, यतः

---

१ सौगतीयम्। २ प्रमेयाभावस्य शब्दविकल्पविषयत्वेपि प्रमेयत्वाभावो यत। ३ खपुष्पादय। ४ प्रत्यक्षे। ५ खपुष्पादीनाम्। ६ ( स्वभावहेतुना कार्यहेतुना वाविनाभावसबन्धाभावात् )। ७ लिङ्गरूपेण। ८ ( अर्थक्रियाकारित्वाभावाभावादित्यर्थं )। ९ ( सतोऽर्थक्रियाकारित्वाभावाभावलक्षणत्वात् )। १० प्रतिबन्धाभावेपि खपुष्पादीना प्रमेयत्वं स्यादित्युक्ते आह। ११ ( खपुष्पादीनाम् )। १२ प्रत्यक्षानुमानाभ्यां व्यतिरिक्तं तृतीयम्। ( न च बौद्धेन तृतीयं प्रमाणं स्वीकृतमतो दोषः )। १३ प्रमेयत्वस्य धर्मस्य। १४ ( नो चेत्प्रमाणविषयत्वरूपस्य धर्मस्य अनाश्रयत्वं तर्हि )। १५ ततश्चेत्यध्याहार्यम् ( खपुष्पादीना वस्तुत्वापत्तावित्यर्थ )। १६ स्वलक्षणं सत्, अन्यापोहस्त्वसदिति। १७ असद्व्यवहाराभावः। १८ आकाशाद्यात्मकस्वलक्षणं मुक्त्वा खपुष्पाद्यभावो न दृश्यते। खपुष्पादीनामभावाभावे च तेषा प्रमेयत्वमेवेति बौद्धेनाशङ्किते प्राहुर्जैनाः। १९ खपुष्पाभाव.। २० नियमो निषेध। २१ एकतानत्वमेकविषयत्वम्। २२ एकतानत्वाभावोऽसिद्ध इति सौगतोग्रे वदति। २३ ( तयो. खशशायो )। २४ खशशादेर्विधि, पुष्पविषाणयोर्नियमं ( प्रतिषेध. )। २५ जैन। २६ गगनापेक्षया भाव पुष्पाद्यपेक्षया चाभाव। २७ ( विधिश्च नियमश्चेति तयो. )। २८ सौगत. २९ विशेषो भेद। ३० केवलविधिमात्रे स्वस्वरूपे पुष्पाभाव, तत्स्वभावाभावे सकेत। खशब्देनेद वाच्यं पुष्पशब्देन चेदमिति सकेतः। ३१ खादौ। ३२ विधिनियमरूपवस्तुस्वभावावेकत्र। ३३ तत्, वस्तु। ३४ अभिधान शब्द। प्रत्ययो विकल्पः ( बौद्धाभिमत )। ३५ तयो खपुष्पयोर्मध्ये एकस्मिन् यथा विधिनियमौ न स्त। ३६ ( भाष्य भावयन्सौगतमुखेन शङ्कामाह )। स्थापनारूपे इन्द्रे। ३७ संकेतविशेषानुपपत्ते.। ३८ कथमभिधानप्रत्ययविशेष उत्पद्यते इत्युक्ते च सौगत प्राह। ३९ अभिधानप्रत्ययविशेषस्य। ४० सौगत। ४१ सर्वस्य। ४२ इन्द्रशब्दस्य भावरूपे इन्द्रे प्रधानभावेन वृत्तिरनिन्द्रे ( स्थापनारूपे ) च गुणभावेनेति। ४३ वस्तुस्वभावभेदाभावे। ४४ सकेतविशेष।

प्रत्ययविशेषः स्यात्[1] । कथमन्यथा[2] खपुष्पवत्खेपि नास्तीति प्रत्ययो न भवेत् ? खवद्वा खपुष्पेप्यस्तीति प्रत्ययः कुतो न स्यात् ? तयोः[3]रन्यतरत्रोभावपि प्रत्ययौ[4] कुतो न स्याताम् ? संकेतविशेषस्य सर्वथा वस्तुस्वभावभेदानपेक्षस्य संभवात्[5] । प्रतिनियतश्च[6] विधिनियमप्रत्ययविशेषः सकलबाधकविकलः संलक्ष्यते । ततो यावन्ति पररूपाणि प्रत्येकं तावन्तस्ततः[7] परावृत्तिलक्षणाः[8] स्वभावभेदाः प्रतिक्षणं प्रत्येतव्याः, स्वलक्षणमेवान्यापोह[9] इति व्यवस्थापयितुमशक्तेः, तस्य[10] संबन्ध्यन्तरापेक्षत्वात् । न च संबन्ध्यन्तराणि[11] स्वलक्षणस्य[12] स्वरूपभूतान्येव, तेषां पररूपत्वादन्यथा ततः परावृत्ते[13]रनुपपत्तेः । पररूपाण्यपि यदि संबन्ध्यन्तराणि भावस्व[14]भावभेदकानि न स्युस्तदा नित्यत्वेपि कस्यचित्[15] संबन्ध्यन्तरेषु[16] कादाचित्केषु[17] क्रमशोर्थक्रिया न वै विप्रतिपिध्येत । शक्यं[18] हि वक्तुं, क्रमवर्तीनि कारणानि[19] तत्तन्निर्वर्तनात्मकानीति[20] नित्यं[21] स्वभावं[22] न वै जहाति क्षणिकसामग्रीसन्निपतितैकतमवत्[23] । तदेतत्तदा तत्तत्कर्तुं समर्थमेकं स्वभावमविचलितं[24] बिभ्राणं सहकारिकारणानि स्वभावस्या[25]भेदकानि नानाकार्यनिबन्धनानि कादाचित्कानि प्रतीक्षते[26] इति । न चैवं वचने विषममुदाहरणं, क्षित्युदकबीजातपादिसामग्र्यामन्त्यक्षणे[27]प्राप्तायां सन्निपतितस्यैकतमस्य[28] कारणस्य शेषेषु कारणेषु यवाङ्कुरादिकार्यनिर्वर्तनात्मकेषु सत्स्वपि स्वभावाभेदस्य क्षणिकवादिनः सिद्धत्वात् । तदिमे[29]र्था[30] विधिप्रतिषेधाभ्यां संप्रतिबद्धा न प्रतिबन्धमतिवर्तन्ते वस्तुत[31] एव । ततो न संवृतिस्तद्व्यवहाराय भेदमावृत्य[32] तिष्ठतीति युक्तं[33], विधिप्रतिषेधसंबन्धशून्यस्य भेदस्य स्वलक्षणलक्षणस्य साक्षादध्यक्षतोनुपलक्षणात् तथानुमानादप्यप्रतिपत्तेर्विधेः प्रतिषेधस्य चापह्नवे व्यवहाराघटनात्, संवृतेस्त[34]मावृत्त्य स्थितिविरोधात्, परमार्थत एव भावस्या[35]नेकस्वभावस्य[36] प्रतीतेः । तद[37]नेकस्वभावाभावे विनिर्भासा[38]संभवादात्मनि परत्र चासंभविनमाकारमा[39]दर्शयतीति[40] मुग्धार्यते[41] सर्वत्रा[42]सहाय[43]रूपानुपलब्धेः । जातुचिन्निरंशरूपोपलब्धौ हि नानारूपोपलब्धिः संवृतिरात्मनि परस्मिंश्चाविद्यमानमाकारं दर्शयतीति युक्तं वक्तुं, नान्यथा[44], अतिप्रसङ्गात् । यदि पुनरनाद्यविद्योदयादखिलजनस्यासहायरूपानुपलब्धिर्जाततैमिरिकस्यैकचन्द्रानुपलब्धिवदिति मतं तदा 'गुणानां[45] सुमहद्रूपं[46] न दृष्टिपथमृच्छति । यत्तु[47] दृष्टिपथप्राप्तं तन्मायेव[48] सुतुच्छकम्[49] । ? सर्वं पुरुष एवेदं नेह नानास्ति किञ्चन । आरामं[50] तस्य पश्यन्ति न तं कश्चन पश्यति । २ ।' इत्यपि किन्न स्यात् ? सर्वथाप्यविशेषात् । तदियं संवृतिः सामान्य[51]सामानाधिकरण्य[52]विशेषणविशेष्यभावादिव्यवहारनिर्भासान्[53] बिभ्रती स्वयम[54]नेकरूपतां

---

१ वस्तुस्वभावभेदमन्तरेण । २ वस्तुस्वभावभेदनिबन्धनसंकेतविशेषं विना प्रत्ययविशेषो यदि स्यात् । ३ खपुष्पयोः । ४ विधिप्रतिषेधभूतौ ( खपुष्पयोः ) । ५ भवतो ( सौगतस्य ) मते । ६ प्रत्यय एकत्र भवतु । को दोष. ? इत्युक्ते आह । ७ अर्थमर्थं प्रति । ८ पररूपेभ्यः । ९ अन्यापोहस्य । १० संबन्धि खं, संबन्ध्यन्तरं पुष्पादि । ११ पुष्पविषाणादीनि । १२ आकाशादे । १३ व्यावृत्ते ( पुष्पस्य ) । १४ आकाशादे. । १५ आत्मन. । १६ पुत्रमित्रकलत्रादिषु । १७ सत्सु । १८ एतत्समर्थयन्नाह । १९ सहकारीणि । २० तस्य तस्य कार्यस्य । २१ आत्मादिवस्तु । २२ कार्यकरणैकस्वभावम् । २३ नानाकारणाना मध्ये एककारणं यथा कार्यकरणस्वभावं न जहाति । २४ नित्यम् । २५ नित्यस्य । २६ अन्वेषते । २७ क्षणिकरूपायाम् । २८ बीजलक्षणस्य । २९ संबन्ध्यन्तराणि वस्तुस्वभावभेदकानि यस्मात्तस्मात् । ३० खादयः । ३१ परमार्थत । ३२ भेदं स्वलक्षणनिरंशम् । ३३ इति ( सौगतोक्तम् ) न युक्तमिति संबन्ध. । ३४ स्वलक्षणं भेदम् । ३५ वस्तुन । ३६ ( विधिप्रतिषेध,सत्त्वासत्त्व,क्षणिकत्वाक्षणिकत्वाद्यनेकस्वभावस्य ) । ३७ तत्तस्मात् । ३८ विनिर्भासो भेद । ३९ विधिप्रतिषेधरूपम् । ४० संहृति । ४१ सौगतादिः । ४२ वस्तुनि । ४३ असहायो, निरंश. । ४४ अन्यथा ( निरंशरूपोपलब्ध्यभावे नानारूपोपलब्धि संवृतिरित्युच्यते ) चेत् तर्हि । ४५ सत्त्वरजस्तमसा साङ्ख्योक्तानाम् । ४६ प्रधानम् । ४७ बुद्ध्यादिकम् । ४८ इवशब्दोत्र वाक्यालङ्कारे । ४९ निस्स्वभावम् । ५० प्रपञ्चम् । ५१ इदमनेन समानमिति । ५२ नीलोत्पलादौ । ५३ इत्यादिभिन्नाकारान् । ५४ स्वस्याम् ( संवृतौ ) ।

प्रतिक्षिपन्तं[1] व्यवस्थापयति[2], तां[3]मन्तरेण सामान्यादिव्यवहारनिर्भाससंवृत्यनुपपत्तेः । तद्वद्[4]भावान्तराणामनेकान्तात्मकत्वे वास्तवी साधर्म्यवैधर्म्यादिस्थितिरविशेषेण विकल्पबुद्धेर्मिथ्यात्वं प्रतिजा[5]नन्तं प्रतिक्षिपत्येव, संवृतेः स्वरूपेऽनेकान्तात्मकत्वं, न तु ततोन्येषां[6] भावानामिति विभावयितुमशक्तेः । ततो[7] न स्वलक्षणमेवान्यापोहः[8] सम्भवति येन खपुष्पादयः प्रमेयाः स्युः । यत्पुनरेतद[9]न्यतो[10] व्यावृत्तिरनैरात्मिकैवेति[11] तन्न, चक्षुरादिज्ञानस्य निर्व्यवसायात्मकस्य स्वयमभूता[12]विशेषात्, निर्णयस्य भावस्वभावा[13]संस्पर्शिनः सर्वथा वस्तुतत्त्वापरिच्छेदादिदमित्थ[14]मेवेति स्वयम[15]एकान्ता[16]नुपपत्तेः । सोयं चक्षुरादिज्ञानाद्वस्तुतत्त्वमध्यवस्यन्सकलविकल्पाध्यवसेयामन्यव्यावृत्तिं सर्वथानात्मिकामाचक्षाणः कथमिदमेव वस्तुतत्त्वमित्थमेवेति वा स्वयं प्रतिपद्येतान्यं[17] वा प्रतिपादयेदिति सविस्मयं नश्चेतः[18] । अतोयं भावः[19] स्वभावभेदान्विधिप्रतिषेधविषयान्बिभ्राणः प्रत्यक्षेतरप्रमाणसमधिगतलक्षणः प्रतीयेत प्रमेयः, खपुष्पादयस्त्वप्रमेया इति प्रमेयत्वादिहेतावपि[20] व्यतिरेको विद्यते एव । सर्वस्य[21] परिणामित्वादौ साध्ये सपक्षेन्वयो न संभवत्येवेति चेन्न[22], अन्तर्व्याप्तिलक्षणस्य तथोपपत्ति[23]रूपस्यान्वयस्य सद्भावादन्यथा[24]नुपपत्तिरूपव्यतिरेकवत् । न हि दृष्टान्तधर्मिण्येव साधर्म्यं वैधर्म्यं वा हेतोः प्रतिपत्तव्यमिति नियमो युक्तः, सर्वस्य[25] क्षणिकत्वादिसाधने[26] सत्त्वादेरहेतुत्वप्रसङ्गात् । यतश्चैवं सर्वत्र हेतौ साधर्म्यं वैधर्म्येणाविनाभावि प्रसिद्धमुदाहरणं तस्माद्यद्विशेषणं तत्प्रतिषेध्याविनाभावि क्वचिद्धर्मिणि, यथा साधर्म्यं[27] भेद[28]विवक्षया कृतकत्वादौ, विशेषणं चास्तित्वं, ततः प्रतिषेध्यधर्मप्रतिबन्धि[29] इत्यनुमानमनवद्यमवतिष्ठते, हेतोरसिद्धताद्यनुपपत्तेः साध्यसाधनधर्मवैकल्याभावाच्च निदर्शनस्य प्रत्यक्षादिविरोधाभावाच्च[30] पक्षस्येति प्रतिपत्तव्यम् ।

भवतु तावदस्तित्वं जीवादौ नास्तित्वेनाविनाभावि । नास्तित्वं तु कथमस्तित्वाविनाभावि, खपुष्पादौ कथंचिदप्यस्तित्वासंभवादिति मन्यमानान्प्रत्याहुः ।

**नास्तित्वं प्रतिषेध्येना[31]विनाभाव्येकधर्मिणि । विशेषणत्वाद्[32]वैधर्म्यं[33] यथाऽभेदविवक्षया[34] ॥१८॥**

कृतकत्वादौ हेतौ शब्दानित्यत्वादौ[35] साधने सधर्मणि[36] साधर्म्येणाविनाभावि विशेषणं विपक्षे[37] वैधर्म्यमुदाहरणं[38] प्रसिद्धं तावत्तज्जीवादावेकधर्मिणि पररूपादिभिर्नास्तित्वं स्वरूपादिभिरस्तित्वेनाविनाभावि साधयत्येव, विशेषणत्व[39]साधनस्यानवद्यत्वात्, पक्षीकृते नास्तित्वे विशेषणत्वस्य भावादस्तित्ववत्[40], विपक्षे[41] च स्व[42]प्रतिषेध्याविनाभावरहिते क्वचिदप्यभावात्[43], तथा[44] तस्य[45] विशेषणत्वानुपपत्तेरित्यसिद्धविरुद्धानैकान्तिकत्व-

---

१ सौगतम् । २ निवारयति । ३ अनेकरूपताम् । ४ संवृतिवत् । ५ सौगतम् । ६ हेलादीनाम् । ७ वस्तुनोनेकान्तात्मकत्वं सिद्धं यतः । ८ यथा खपुष्पाभावः । ९ सौगतोक्तम् । १० अगोव्यावृत्तिर्गौर्यथा । ११ निःस्वभावा ( असत्या ) । १२ अनुत्पन्नेन ज्ञानेनाविशेषात् । १३ स्वलक्षणासंस्पर्शिनः । १४ क्षणिकमेव । १५ सौगतस्य । १६ नियमानुपपत्तेः । १७ शिष्यम् । १८ विद्यानन्दानाम् । १९ पदार्थः । २० न केवलं विशेषणहेतौ धूमादौ । २१ सौगत । २२ जैन. । २३ साध्ये सत्येव साधनमस्तीति । २४ ( अन्यथा साध्याभावे अनुपपत्तिरूप साधनम् । तच्च स व्यतिरेकश्चेति तद्वत् ) । २५ ( अन्यथेति शेषः ) । २६ सर्वं क्षणिकं सत्त्वात् । यत्सत्तत् क्षणिकं यथाऽमुकमित्यत्र सौगताभिमते । २७ वैधर्म्येणाविनाभावि । २८ व्यतिरेको भेदो वैधर्म्यमित्यर्थः ( वैधर्म्यापेक्षयैव साधर्म्यं भवतीत्यर्थ. ) । २९ ( साधर्म्यम् ) । ३० इति कालात्ययापदिष्टत्वनिराकरणम् । ३१ अस्तित्वेन । ३२ भेदकत्वात् । ३३ वैधर्म्यं साधर्म्येण सहाविनाभावि क्वचिदनुमाने । ३४ अन्वयापेक्षया । ३५ शब्दोऽनित्यः, कृतकत्वात् । यो य. कृतकः स सोऽनित्यो यथा घटः । यन्नानित्यं तन्न कृतकं यथा गगनमिति । ३६ सपक्षेण सह । ३७ नित्ये । ३८ कर्तृपदम् । ३९ ( विशेषणं च वैधर्म्यम् ) । ४० यथास्तित्वे पक्षीकृते विशेषणत्वस्य भावः । ४१ खपुष्पे । ४२ स्वेन नास्तित्वेन प्रतिषेध्यमस्तित्वम् । तदविनाभावरहिते । ४३ विशेषणहेत्वो. । ४४ स्वप्रतिषेध्याविनाभावरहितत्वप्रकारेण । ४५ नास्तित्वस्य ( खपुष्पे ) ।

दोषाभावात्, दृष्टान्तस्य[1] च साध्यसाधनवैकल्यादि[2]दोषासंभवात्, साधर्म्यस्येव[3] हेतौ भेद[4]विवक्षया, वैधर्म्यस्या[5]भेदविवक्षयाऽविनाभावित्वनिश्चयात्, तत्र भेद[6]विवक्षावदभेद[7]विवक्षायाः परमार्थसद्[8]वस्तुनिबन्धनत्वात्। भेदाभेदविवक्षयोरवस्तुनिबन्धनत्वे[9] विपर्यासोपि किं न स्यात्? शब्दानित्यत्वसाधने कृतकत्वादिहेतौ घटादिभिर्भेद[10]विवक्षा गगनादिभिरभेदविवक्षा हि विपर्यासः। स च परैर्नेष्यते[11] एव। तदिष्टौ शब्दनित्यत्वसाधनाद्धेतोर्विपर्यासः स्यात्, विरुद्धत्वोपपत्तेः। सोयं कृतकत्वादेः साधनस्याविरुद्धत्वमुपयंस्तत्र भेदाभेद[12]विवक्षयोर्विपक्षे[13]तरापेक्षयोर्वस्तुनिबन्धनत्वमुपगन्तुमर्हति। ततः समञ्जसमेतत्, यत्किञ्चिद्विशेषणं तत्सर्वमेकत्र[14] प्रतिपक्षधर्माविनाभावि यथा वैधर्म्यमभेदविवक्षया हेतौ, तथा च नास्तित्वं विशेषण[15]मित्यनुमानं, साध्य[16]सद्भावे एव साधनस्य[17] सद्भावनिश्चयात्, अन्यथा[18] व्यवहारसंकरप्रसङ्गात्, करभत्वस्य[19] करभवद्[21]दध्न्यपि सद्भावानुषङ्गात् दधित्वस्य च दध्नीव करभेपि प्रसक्तेः। दधि खादेति चोदितः करभमभिधावेत् करभवद्वा दध्यपि नाभिधावेत्, अदधित्वस्याकरभत्वस्य च क्वचिद[22]प्यभावात्। इति प्रवृत्तिनिवृत्तिलक्षणो व्यवहारः संकीर्येत, सर्वस्य सर्वथा सद्भावात्। यदि पुनर्दधनि स्वरूपेण दधित्वं न करभरूपेण करभे च स्वरूपेण करभत्वं न दधिरूपेण यतः प्रवृत्त्यादिव्यवहारसंकरः प्रसज्येतेति मतं तदा सिद्धं दधित्वमदधित्वेन[23] प्रतिषेध्येनाविनाभावि करभत्वं चाकरभत्वाविनाभावि, तद्वत्तत्सर्वं विशेषणं[25] स्वप्रतिषेध्येनाविनाभावि। इति सिद्धान्यथानुपपत्तिः, विपक्षे[26] बाधकसद्भावात्। न[27] हि स्वेच्छाप्रक्लृप्तधर्मधर्मिव्यवस्थायां परमार्थावतारः स्यात्, यतः सर्व एवायमनुमानानुमेयव्यवहारो बुद्ध्यारूढेन धर्मधर्मिन्यायेन बहिः सदसत्त्वमपेक्षते इति युक्तं भवेत्। तदसमीक्षित[28]तत्त्वार्थै[29]र्लोकप्रतीतिवशाद्भेदाभेदव्यवस्थितिस्तत्त्व[30]प्रतिपत्तये समाश्रीयते इति[31] बालाभिलापकल्पं भावस्वभावोपरोधात्[32]सर्वत्र भेदाभेदव्यवस्थितेः, अन्यथा[33] ततस्तत्त्व[34]प्रतिपत्तेरयोगात्।

ननु चास्तित्वं नास्तित्वं च विशेषणमेव, न तु विशेष्यम्। ततो न साध्यसाधन[35]धर्मयोः परमार्थसतोरधिकरणं[36] येन प्रकृतमनुमानद्वितयं[37] वास्तवं धर्मधर्मि[38]न्यायेन स्यादित्येके[39]। न तत्[40]सर्वथाभिलाप्यं, वस्तुरूपस्यानभिलाप्यत्वादिति चान्ये। जीवादेर्वस्तुनोत्यन्तमर्थान्तरमेव तत्[41], प्रतिभासभेदाद्घटपटवत्। न पुनरस्तित्वनास्तित्वात्मकं वस्तु, धर्मधर्मिसंकरप्रसङ्गादिति चापरे। तान्प्रत्याचार्याः प्राहुः।

---

१ दृष्टान्तो निरन्वय इत्युक्ते आह। व्यतिरेकलक्षणस्य। २ आदिना उभयवैकल्यसंग्रहः। ३ अन्वयदृष्टान्तस्य। ४ व्यतिरेकविवक्षया। ५ व्यतिरेकदृष्टान्तवत्। ६ अभेदोऽन्वयः। ७ साधर्म्यं तदेव वस्तु सद्वस्तु। ८ (सौगतापेक्षया)। ९ व्यतिरेकविवक्षा। १० (अनित्यत्वे साध्ये गगनादीना व्यतिरेकोस्ति तथाप्यभेदोऽन्वयोस्त्विति), अनित्यघटयोरभेदविवक्षास्ति तथापि भेदविवक्षा भवत्विति च। ११ सौगतैः। १२ व्यतिरेकान्वयविवक्षयोः। १३ भेदस्य विपक्षोऽभेदः। अभेदस्य विपक्षो भेदः। इतरः, सपक्षः। १४ जीवादौ। १५ अस्तित्वेनाविनाभावि। १६ अस्तित्वसद्भावे। १७ नास्तित्वविशेषणस्य हेतोः। १८ साध्याभावेपि साधनस्य सद्भावो यदि, अस्तित्वाभावेपि विशेषणं वा यदि। १९ कथमित्युक्ते समर्थयन्ति पूर्वोक्तम्। २० विशेषणस्य। २१ करभे इव। २२ करभे दध्नि वा। २३ करभत्वादिना। २४ नास्तित्वादि। २५ नास्तित्वमस्तित्वेनाविनाभावि, विशेषणत्वान्यथानुपपत्तेरिति हेतोः। २६ साध्यरहिते खपुष्पे। २७ ननु हेतोरन्यथानुपपत्तिसिद्धावपि धर्मधर्मिव्यवस्थायाः कल्पितत्वादनुमानस्यापि कल्पितत्वे कथं समञ्जसत्वं स्यादित्युक्ते प्राह जैनः। २८ बुद्ध्यारुढाद्धर्मधर्मिन्यायात्तत्त्वप्रतिपत्तिर्नोपपद्यते यतस्तस्मात्। २९ असमीक्षितस्तत्त्वार्थः क्षणिकरूपो यैस्तैस्तैर्जैनैः। ३० तत्त्वं, साध्यम्। ३१ बौद्धोक्तम्। ३२ भावाना पदार्थाना स्वभावो भेदाभेदलक्षणः। तस्योपरोधात् स्वीकारात्। ३३ भावस्वभावोपरोधान्न चेद्भेदाभेदव्यवस्थितिस्तदा। ३४ भेदाभेदव्यवस्थितेः। ३५ प्रतिषेध्याविनाभावित्वविशेषणत्वयोः। ३६ अस्तित्वं नास्तित्वं च। ३७ पूर्वकारिकाद्वयप्रोक्तम्। ३८ अस्तित्वं नास्तित्वं च धर्मौ, जीवादिर्धर्मी। ३९ सौगताः। ४० (अस्तित्वं नास्तित्वं च)। ४१ अस्तित्वं नास्तित्वं च।

**विधेयप्रतिषेध्यात्मा विशेष्यः शब्दगोचरः । साध्यधर्मो यथा हेतुरहेतुश्चाप्यपेक्षया ॥ १९ ॥**

विधेयम्[1]अस्तित्वम् । प्रतिषेध्य नास्तित्वम् । विधेयं च प्रतिषेध्यं च विधेयप्रतिषेध्ये । ते आत्मानौ स्वभावौ यस्य स विधेयप्रतिषेध्यात्मा[2], अर्थः सर्वो जीवादिरिति पक्षः । विशेष्यत्वादिति हेतुः, विशेष्य इति हेतुनिर्देशात्, गुरवो[3] राजमाषा न भक्षणीया इति यथा । साध्यो धर्मी[4], साध्यधर्माधारतया तस्यै[5] साध्यव्यपदेशात्[6], तथोपचारस्य[7] दृष्टान्तर्धर्मि[8]व्यवच्छेदार्थत्वात् । तस्य[9] धर्मो विवर्त उत्पत्तिमत्त्वादिः । स[10] यथा हेतुरनित्य[11]त्वसाध्यापेक्षया, नित्यत्वसाध्यापेक्षयाऽहेतुश्च, गमकत्वागमकत्वयोगात्, तथा साध्याविनाभावे[12]तरसद्भावादिति दृष्टान्तः । इत्यनुमानात्सत्त्वेतरात्मकः[13] कथंचिज्जीवाद्यर्थः सिद्ध्यत्येवं[14] । हेतोर्विशेष्यत्वस्यासिद्धिरिति चेन्न, विशेष्योसौ, शब्दगोचरत्वात् तद्वद्[15]दित्यनुमानात्तस्य विशेष्यत्वहेतोः साधनात् । शब्दगोचरत्वमसिद्धमर्थस्येति चेन्न, शब्दगोचरो जीवादिः, विशेष्यत्वात्तद्वद्[16]दित्यनुमानात्तस्य साधनात् । न चैवमितरेतरा[17]श्रयदोषः, सर्वथानभिलाप्यवस्तुवादिनः[18] प्रति शब्दगोचरत्वे साध्ये[19] विशेष्यत्वस्य हेतुत्ववचनात्, सर्वथा वाऽविशेष्यत्ववादिनः[20] प्रति शब्दगोचरत्वस्य साधनत्वाभिधानात्[21], तदुभयासत्त्ववादिनस्तु प्रति वस्तुत्व[22]स्योभयप्रसिद्धस्य हेतोः सामर्थ्यतः[23] प्रयोगात् । विधेयप्रतिषेध्यात्मकत्वस्यापि तान्[24]प्रति तत[25] एव सिद्धिः । इति समासतः कारिकार्थः समवतिष्ठते ।

ननु[26] च प्रत्यक्षबुद्धौ वस्तु स्वलक्षणमेव प्रतिभाति, न पुनरस्तित्वादिविशेषणं, तस्य[27] सकलविकल्पविकलत्वात्, विकल्प[28]बुद्धौ तद्व्यवहार[29]प्रसिद्धेरिति चेन्न, वस्तुनोस्तित्वाद्यनेकविकल्पात्मकस्य सांशस्यै[30]व प्रतीतेः । **किञ्चित्केन[31]चिद्विशिष्टं गृह्यमाणं[32] विशेषणविशेष्यतत्संबन्धलोकस्थितिसंकलनेन गृह्येत नान्यथेत्यभिनिवेशेपि[33] वस्तुनो विधिप्रतिषेधस्वभावयोः प्रत्येकं दर्शनमवश्यंभावि,** वस्तुन एव दर्शनं, न तद्विधिप्रतिषेधस्वभावयोर्विशेषणयोरिति वक्तुम्[34]अशक्तेः सदसत्स्वभावशून्यस्य स्वलक्षणस्य दर्शने तत्पृष्ठभाविविकल्पेनापि सदसत्त्वयोरध्यवसायायोगात्[35] पीतदर्शनपृष्ठभाविना विकल्पेन नीलत्वाध्यवसायायोगवत् । **ततो विधिप्रतिषेधावात्मानौ विशेष[36]स्य सविकल्प[37]कत्वं साधयतः,** सर्वथा तस्य भेदा[38]भावे सदिदमसदिदमिति प्रत्येकं दर्शनाभावानुषङ्गात्, इदमुपलभे नेदमिति विकल्पोत्पत्तिविरोधात् । **ततः सामान्यविशेषात्मकं वस्तु स्वलक्षणं,** न पुनः सकलविकल्पातीतं विशेषमात्रं[39] सामान्य[40]मात्रं वा परस्परनिरपेक्षं, तदुभयं[41] वा स्वलक्षण, तस्य तेन रूपेणाव्यवस्थितत्वात्, सामान्यविशेषात्मन एव जात्यन्तरस्य वस्तुस्वरूपत्वात् तेनैव[42] लक्ष्यमाण[43]स्य स्वलक्षणत्वप्रसिद्धेः सकलबाधकवैधुर्यात् । कः पुनर्विधेयप्रतिषेध्ययोर्धर्मी

---

१ कारिकार्थं विवृणोति । २ साध्यधर्म । ३ अत्र प्रथमान्तत्वेप्यस्य हेतुत्व यथा । गुरुत्वादित्यर्थ । ४ क्वचिद्धर्मी साध्यो भवति । ५ धर्मिण । ६ साध्यलक्षणो धर्मो धर्मिण्युपचर्यते इत्यर्थ । ७ धर्मिण साध्यत्वेनोपचारस्य । ८ एक. पक्षधर्मी एकश्च दृष्टान्तधर्मी । उपचारप्रयोजनमत्र दृष्टान्तार्थव्यवच्छेद इत्यर्थं । ९ धर्मिण । १० उत्पत्तिमत्त्वादि । ११ अनित्यत्वस्योत्पत्तिमत्त्वादिर्गमको, नित्यत्वस्य त्वगमको यत । १२ इतर. साध्यविनाभाव । १३ विधेयप्रतिषेध्यात्मा । १४ कथचित्सर्वोपि जीवादिपदार्थो विधेयप्रतिषेध्यात्मा, विशेष्यत्वात् । यथा कृतकत्वादिहेतु । यथा कृतकत्वादिहेतुरनित्यत्वसाध्यापेक्षया हेतु., नित्यत्वसाध्यापेक्षयाऽहेतुश्चेति । १५–१६ हेतुवत् । १७ शब्दगोचरत्वे विशेष्यत्वं विशेष्यत्वे च शब्दगोचरत्वमिति । १८ वौद्धान् । १९ जीवादि शब्दगोचरो, विशेष्यत्वादिति । २० शब्दाद्वैतवादिन । २१ जीवादिर्विशेष्य , शब्दगोचरत्वादिति । २२ जीवादि शब्दगोचरो विशेष्यश्च, वस्तुत्वादिति । २३ पक्षदृष्टान्तकथनसामर्थ्यत. । २४ तदुभयासत्त्ववादिनः । २५ वस्तुत्वादेव । २६ बौद्ध आह । २७ स्वलक्षणस्य । २८ सविकल्पकज्ञाने एव । २९ तत्, अस्तित्वादि । ३० विधिनिषेधादिभेदेन । ३१ अस्तित्वादिना । ३२ सत् । ३३ बौद्धस्य । ३४ सौगतेन । ३५ यस्य वस्तुनो दर्शनं तस्यैव ग्राहको विकल्पस्तत्पृष्ठभावी, न त्वन्यस्य यत । ३६ स्वलक्षणस्य । ३७ सांशत्वम् । ३८ विधिनिषेधरूपभेदयोरभावे । ३९ बौद्धं प्रति । ४० अद्वैतिनं प्रति । ४१ यौगं प्रति । ४२ जात्यन्तरेण । ४३ वस्तुनः ।

स्यादाश्रयभूतः कश्च तयोस्तेन[1] संबन्धो येन विशेषणविशेष्यभावः स्यादिति चेदुच्यते। अस्तित्वनास्तित्वयोर्धर्मि[2] सामान्यम्। तत्र[3] तादात्म्यलक्षणः संबन्धः, संबन्धा[4]न्तरकल्पनायामनवस्थाप्रसङ्गात्। तन्नैतत्[5]सारं—जात्या[6]दिमतामेतन्न संभवत्येवेति, तद[7]भावे एवा[8]संभवात्, 'विशेष[9]णविशिष्टवस्तुग्रहणस्य विशेषणं सत्त्वादिसामान्यं पूर्वं[10] गृहीत्वा तदनन्तरं विशेष्यं[11] गृह्णाति[12], ततस्[13]तत्[14]संबन्धं समवायं लोकस्थितिं च विशेषणविशेष्यव्यवहारनिबन्धनां, ततस्[15]तत्संकलनेन सदिदं वस्तु' इति प्रतीति[16]क्रमस्यैव दुर्घटत्वात्, विशेषणविशेष्यात्मकस्य सामान्यविशेषरूपस्य वस्तुनो जात्यन्तरस्य यथाक्षयोपशमं प्रत्यक्षे परोक्षे च विज्ञाने निर्बाधमनुभवात्तद्विपरीतस्य जातुचिदप्रतीतेः। तथा[17] सति नैकान्तेन दर्शनविकल्पा[18]भिधानानां विषयभेदोस्ति कथं[19]चित्प्रतिभासभेदेपि प्रत्यासन्नेतरपुरुषदर्शने[20]वत्, प्रतिभासभेदाद्विषयभेदे योगीतरप्रत्यक्षयोरेकविषय[21]योरपि विभिन्नविषयत्वप्रसङ्गात्। एतेन[22] धूमादिकृतक[23]त्वादिसाध्यधर्मिधर्मस्य साध्येतरापेक्षया हेतुत्वाहेतुत्वविशेषणात्मकस्य निदर्शनतयोपन्यस्तस्य प्रत्यक्षविषयत्वं निवेदितम्। तथा[24] हि। धूमादयः कृतकत्वादयो वा क्वचिदग्निसलिलयोर्विनाशेतरयोर्वा साधनेतरस्वभावाभ्यां साक्षात्क्रियेरन्[25], इतरथा विशेष्यप्रतिपत्तेरयोगात्। न हि धूमादीनामग्न्यादौ साध्ये साधनत्वं सलिलादावसाधनत्वं च विशेषणमप्रतिपद्य[26]मानो विशेष्यान्धूमादीन् प्रतिपद्यते नाम, नापि कृतकत्वादीनां विनश्वरत्वे साध्ये साधनत्वमविनश्वरत्वे चासाधनत्वं विशेषणमप्रतीयन् कृतकत्वादिहेतून्विशेष्यान्प्रत्येतुमीशो यतोग्न्यादिविनश्वरशब्दादीन् साध्यानपि विशेष्यान्प्रतिपद्येत। प्रत्येति च तान्। ततोवश्यं साक्षात्कुर्वीत तद्धेतून्, साध्येतरापेक्षायां सत्यां साधनेतरस्वभावाभ्यां तै[27]साक्षात्करणे विरोधाभावात्। अन[28]पेक्षायां तु विरोधः, क्वचि[29]देकत्र साध्ये हेतूनां साधनत्वेतरयोरनुपल[30]म्भात्। यतश्चैवं[31] प्रसिद्धमुदाहरणं[32], वादिप्रतिवादिनोर्बुद्धिसाम्यात् तस्माद्यदभिधेयं तद्विशेष्यम्[33]। यथोत्पत्त्यादिरपेक्षया हेतुरहेतुश्च साध्येतरयोः। तथा च, विमत्य[34]धिकरणं सत्त्वाभिधेयत्वादि, तस्मात्साध्य[35]साधन[36]धर्मविशेषणा[37]पेक्षया विशेष्यम्। इत्यनुमानादेकस्य[38] विशेषणविशेष्यात्मकत्वविरोधनिरासः[39]। यद्वा विशेष्यं तदभिलाप्यं, यथोत्पत्त्यादि, विशेष्यं चास्तित्वादिवस्तुरूपं, तस्मादभिलाप्यम्, इति वस्तुस्वरूपस्यानभिलाप्यत्वव्युदासः। यद्वा वस्तु तत्सर्वं विधेयप्रतिषेध्यात्मकं, यथोत्पत्त्यादिरपेक्षया हेतुरहेतुश्च साध्येत-

---

१ धर्मिणा। २ जीवादिर्विधेयप्रतिषेध्यात्मेति। ३ धर्मिणि विधिप्रतिषेधयो। ४ समवायादि संबन्धान्तरम्। ५ यत एवं सिद्धं तत एतन्मतं भावत्कं न सारम्। ६ सामान्यादिमता द्रव्याणामेतत् प्रत्यक्षग्रहणं न संभवतीत्यर्थ। ७ जात्यादिमतामभावे। ८ तव बौद्धस्य। ९ प्रत्यक्षग्रहणासंभवात्। १० विशेषणं सदसत्त्वे। ११ जीवादि। १२ प्रत्यक्षं कर्तृ। १३ विशेषणविशेष्यग्रहणानन्तरम्। १४ ( विशेषणविशेष्ययो सबन्धम् )। १५ लोकस्थितिग्रहणानन्तरम्। १६ ( बौद्धाभिमतस्य )। १७ प्रत्यक्षे परोक्षे च जात्यन्तरस्य निर्बाधमनुभवे सति। १८ प्रत्यक्षानुमानागमानाम्। १९ स्पष्टास्पष्टतया। २० प्रत्यासन्नेतरयो॰ पुंसोर्यै दर्शने एकपादपविषये तयोर्विषयभेदो नास्ति यथा। २१ एकः पादपो विषयो ययो॰। २२ सामान्यविशेषात्मकवस्तुनः प्रत्यक्षत्वप्रतिपादनेन। २३ साध्यमेव धर्मी तस्य धर्म॰, साध्यधर्मिधर्म। धूमादिश्च कृतकत्वादिश्च धूमादिकृतकत्वादि॰। स च स साध्यधर्मिधर्मश्चेति तस्य। २४ भाष्येण तथैव दर्शयन्त्यकलङ्कदेवाः। २५ वादिप्रतिवादिभिः। २६ सौगत॰। २७ तद्धेतुसाक्षात्करणे। २८ साध्येतरानपेक्षायाम्। २९ अग्निमत्त्वादौ। ३० विरोधानुपलम्भात्। ३१ हेतोर्हेतुत्वाहेतुत्वधर्मसाक्षात्करणप्रकारेण। ३२ हेतुरूपम्। ३३ यदभिधेयं तद्विशेष्यमित्यनया व्याप्त्या यथा जीवादेर्धर्मित्वं तथास्तित्वादिविशेषणस्यापि धर्मित्वमापादितं बोद्धव्यम्। ३४ विवादग्रहाधिकरणम्। ३५ विधेयप्रतिषेध्यात्मेति साध्यम्। ३६ विशेष्यत्वात् शब्दगोचरत्वादिति साधनम्। ३७ शब्दगोचरत्वं विशेषणम्। ३८ सत्त्वादिधर्मस्य। ३९ अपेक्षया।

रयोः, तथा च विमत्यधिकरणं सत्त्वाभिधेयत्वादि । इत्यन्त[1]दीपकं स[2]र्वत्र योज्यं साधनं वस्तु च जीवादि। तस्माद्विधेयप्रतिषेध्यात्मकम्। इति क्रमार्पितसदसत्त्वोभयात्मकत्वसाधनम्।

शेषभङ्गाः कथं नेतव्याः सूरिभिरित्याहुः।—

**शेषभङ्गाश्च नेतव्या यथोक्तन[3]ययोगतः। न च कश्चिद्विरोधोस्ति मुनीन्द्र तव शासने ॥२०॥**

**स्यादस्ति स्यान्नास्तीति भङ्गद्वयमुपयुक्तम्। तदपे[4]क्षया शेषत्वं भङ्गत्रयापेक्षं वा।** विधेयप्रतिषेध्यात्मेत्यनेने[5] तृतीयभङ्गस्य स्वप्रतिषेध्येनाविनाभाविनोऽसाधने साधने चापेक्ष्यमाणे इत्यर्थः। **यथोक्तनययोगत इति विशेषणत्वा[6]दीनाक्षिपति। तद[7]नभिला[8]प्यादयोपि क्वचिद्धर्मिणि[9] प्रत्य[10]नीकस्वभावाविनाभाविनः प्रतीयन्ते, विशे[11]षणत्वादिभ्यः। पूर्वोक्तमुदा[12]हरणम्।** यथैव हि वस्तुनोस्तित्वं नास्तित्वं तदुभयं च प्रतिषेध्येन स्वप्रत्यनीकेनाविनाभावि विशेषणत्वाद्विशेष्यत्वाच्छब्दगोचरत्वाद्वस्तुत्वाच्च साधर्म्यवद्वैधर्म्यवत्क्वचिद्धेतौ[13] हेतुत्वेतरत्ववच्च साध्यते तथैव चाऽवक्तव्यत्वं वक्तव्यत्वेन[14] प्राच्यभङ्गत्रयरू[15]पेण, सदवक्तव्यत्वमसदवक्तव्यत्वेनासदवक्तव्यत्वमपि सदवक्तव्यत्वेन, सदसदवक्तव्यत्वमपि पञ्चमषष्ठभङ्गात्मनानुभया[16]वक्तव्यत्वेनाविनाभावि साधनीयं, यथोक्ता[17]नां हेतुदाहरणरूपनयाना घटनात्। **न चैवं[18] सति किञ्चिद्विप्रतिषिद्धं[19], अन्यथैव विरोधात्।** अ[20]वक्तव्यत्वादेः स्वप्रत्यनीकस्वभावाविनाभावाभावप्रकारेणैव हि प्रत्यक्षादिविरोधः समनुभूयते, तथा सकृदप्यनुपलम्भा[21]त्। त[22]दनेन न च कश्चिद्विरोधोस्तीति मुनीन्द्र तव शासने, अन्यशासनेष्वेव विरोधसाधनादिति व्याख्यातं प्रतिपत्तव्यम्।

साम्प्रतमव्य[23]वस्थितानेकान्तात्मकं वस्तु सप्तभङ्गीविधिभागऽर्थक्रियाकारि, न पुनरन्यथेति स्वपरपक्षसाधनदूषणवचनमुपसहरन्तः प्राहुः।—

**एवं विधिनिषेधाभ्यामनवस्थि[24]तमर्थकृत्। नेति चेन्न य[25]था कार्यं बहिर[26]न्तरुपाधिभिः ॥२१॥**

एवं प्रतिपादितनीत्या सप्तभङ्गीविधौ विधिनिषेधाभ्यामनवस्थितं जीवादि वस्तु सदेवासदेव वेत्य(व्य)वस्थितमर्थकृत् कार्यकारि प्रतिपत्तव्यम्। नेति चेदेवं[27] वस्तु परैरभ्युपगम्यते तर्हि यथाभ्यु[28]पगतं कार्यं बहिरन्तरुपाधिभिः सहकार्युपादानकारणैर्निर्वर्त्त्यं तथा न स्यात्, भावाद्येकान्ते सर्वथा कार्यप्रतिक्षेपात्। तत

---

१ तस्माद्यदभिधेयं तद्विशेष्यमित्यत्र, यद्वा विशेष्यं तदभिलाप्यमित्यत्र चानुमानद्वये यथोत्पत्यादिरित्यादेरसभवात्कथं तद्वचनमित्याशङ्कायामाह। तस्माद्यदभिधेयं तद्विशेष्यमित्यत्रानुमाने यद्वा विशेष्यं तदभिलाप्यमित्यत्र, यद्वा वस्तु तत्सर्वं विधेयप्रतिषेध्यात्मकमित्यनुमाने च विमत्यधिकरणसत्त्वाभिधेयत्वादिशब्देन लब्धं जीवादिकं धर्मि(साधनं च) एकत्रोक्तं सर्वत्र योज्यम्। २ त्रिष्वप्यनुमानेषु। ३ नीयते प्राप्यतेनेनेति नयो हेत्वादि., नापर। ४ असाधनेऽपेक्ष्यमाणे तृतीयादिभङ्गस्य शेषत्वं, साधने त्वपेक्ष्यमाणे चतुर्थादिभङ्गस्य शेषत्वमिति भाव। ५ तृतीयभङ्गस्य सिद्धिर्जातेत्यभिप्रायश्चेत्तदा चतुर्थादय. शेषा ज्ञेया। ६ यथोक्तेति शब्देन विशेषणत्वाद्विशेष्यत्वादभिलाप्यत्वाद्वस्तुत्वादित्यादिहेतूनाचार्यो गृह्णाति। ७ तस्मात्। ८ चतुर्थभङ्गादय। ९ जीवादौ। १० प्रत्यनीको विरुद्ध। ११ हेतुरयम्। १२ साधर्म्यं यथा वैधर्म्येणाविनाभावि वैधर्म्यं च साधर्म्येणाविनाभावीति। १३ उत्पत्तिमत्त्वादौ। १४ (अवक्तव्यत्वप्रत्यनीकेन। एवं सर्वत्र तत्तत्प्रत्यनीकेन ज्ञेयम्)। १५ स्यादस्ति स्यान्नास्ति स्यादस्तिनास्तीति भङ्गत्रयम्। तेनाविनाभावि अवक्तव्यत्वं चतुर्थभङ्गरूपम्। १६ केवलं स्यादस्त्यवक्तव्येन स्यान्नास्त्यवक्तव्येन इत्यनुभयरूपेण। १७ पूर्वोक्ताना हेतुरूपोदाहरणरूपनयानामत्रापि संभवात्। १८ धर्माणां स्वप्रत्यनीकधर्माविनाभावित्वे साधिते सति। १९ विरुद्धम्। २० 'अन्यथा' शब्दस्यार्थं करोति। २१ वस्तुन। २२ न्यायेन। २३ अस्त्येव नास्त्येव वेत्यव्यवस्थितं तच्च तदनेकान्तात्मकं च—सर्वथा विधिरूपेण प्रतिषेधरूपेण वानवस्थितम्। २४ जीवादिवस्तु। २५ उदाहरणमिदम्। २६ बहिरन्तरुपाधि यथासख्यं सहकार्युपादानकारणैरनवस्थितं रहितं कार्यं यथार्थकृन्न तथा सर्वं जीवादिवस्तु विधिप्रतिषेधाभ्यामनवस्थितमर्थकृन्नेत्युक्ते कथंचिद्विधिप्रतिषेधावस्थितमेव कार्यकृत्। तथा कार्यमपि कारणैः सहितमेवार्थकृत्। प्रथमव्याख्यानं निषेधरूपतया द्वितीयं तु विधिरूपतयेति तात्पर्यार्थ.। २७ पूर्वोक्तप्रकारेण। २८ सदेवासदेव वेत्यनेन प्रकारेण परैरभ्युपगतम्।

एवैवं[1] व्याख्यानान्तरमुपलक्ष्यन्ते[2]। एवं प्रति[3]पक्षप्रतिक्षेपप्रकारेण विधिनिषेधाभ्यामनवस्थितं कथंचिद्विधि-प्रतिषेधावस्थितमेवार्थकृत्[4] नेति चेन्न, यथा कार्यं (च) बहिरन्तः स्यादुपाधिभिरनन्तविशेषणैर्विशिष्टं, सर्वथा निरंश[5]वस्तुनि सकलविशेषणाव्यवस्थितेः[6]। सत्त्वाद्यन्यतममात्रे एव भङ्गे समवस्थितं कुतो नार्थकृदिति चेदु[7]च्यते, सप्तभङ्गीविधौ स्याद्वादे विधिप्रतिषेधाभ्यां समारूढं वस्तु सदसदात्मकमर्थक्रियाकारि, कथंचित्सत एव सामग्रीसन्निपातिनः स्वभावातिशयोत्पत्तेः सुवर्णस्येव केयूरादिसंस्थानम्[8]। सुवर्णं हि सुवर्णत्वादिद्रव्यार्थादेशात् सदेव केयूरादिसंस्थानपर्यायार्थादेशाच्चासदिति[9] त[10]थापरिणमन-शक्तिलक्षणायाः प्रतिविशि[11]ष्टान्तःसामग्र्याः सुवर्णकारकव्यापारादिलक्षणायाश्च बहिःसामग्र्याः सन्नि-पाते केयूरादिसंस्थानात्मनो[12]त्पद्यते। ततः सदसदात्मकमेवार्थकृत्। तद्व[13]ज्जीवादिवस्तु प्रत्येयम्। नेति चेदि-त्या[14]दिनैकान्तेऽर्थक्रियां प्रतिक्षि[15]पति। न[16] तावत्सतः पुनरुत्पत्तिरस्ति, तत्कारणापेक्षानुपरमप्रसङ्गात्। न चानुत्पन्नस्य स्थितिविपत्ती, सर्वथाप्यस[17]त्त्वात्खपुष्पवत्। नाप्यसतः सर्वथोत्पत्त्यादयस्तद्वत्। तस्मान्न सदेकान्तेऽसदेकान्ते चार्थक्रिया संभवति। य[18]दि पुनः सामग्र्याः प्रा[19]गविद्यमानस्य जन्म स्यात् को दोषः स्यात्? त[20]न्निरन्वयविनाशेत[21]रपक्षयोस्तदेकान्ता[22]भावः प्रसज्येत। त[23]स्या निरन्वयवि[24]नाशे निष्कारणस्य त[25]थैवोत्पत्तिर्न स्यात्। न हि निराधारोत्पत्तिर्विपत्तिर्वा, क्रियारूपत्वात्स्थितिवत्। नैतन्मन्तव्यं 'नोत्पत्त्यादिः क्रिया, क्षणिकस्य त[26]दसंभवात्। ततोऽसिद्धो हेतुः[27]' इ[28]ति, प्रत्यक्षा-दिविरोधात्। प्रत्यक्षादिविरोधस्तावत् प्रादुर्भावादिमतश्चक्षुरादिबु[29]द्धौ प्रतिभासनात् तद्बु[30]द्ध्या प्रादु-र्भावविनाशावस्थानक्रियारहितसत्तामात्रोपगमस्य बाधनात्। अन्यथा त[31]द्विशिष्टविकल्पोपि मा भूत्। न हि दण्डपुरुषसंबन्धादर्शने दण्डीति विकल्पः स्यात्। तथाविधपूर्वतद्वासनावशात्प्रादुर्भावाद्यद[32]-र्शनेपि तद्विशिष्टविकल्प इति चेन्न, नीलसुखादेरदर्शनेपि त[33]द्विकल्पप्रसक्तेः, त[34]तस्तद्व्य[35]वस्थापनविरोधात्। निरा[36]लम्बनविज्ञानमात्रोपगमेपि संताना[37]न्तरस्वसंतानपू[38]र्वापरक्षणाज्ञानेपि तद्विकल्पोत्पत्तौ कुतस्तद्व्य[39]वस्था? [40]संवेदनाद्वैतोपगमेपि संविदद्वैताभावेपि तद्वासनाबलात्संवित्स्वरूपप्रतिभाससंभवात्कथं स्वरूपस्य स्वतो ग[41]तिः सिध्येत्[42]? सत एव संवित्स्वरूपस्य त[43]थावासनामन्तरेण स्वतो गतौ स्वसंतानपूर्वापरक्षणसताना-न्तरबहिरर्थजन्मा[44]दिक्रियाविशेषाणां सतामेव दर्शनाद्विकल्पोत्पत्तिर्युक्ता। इति नोत्पत्त्यादीनां क्रियात्वम-सिद्धं यतस्त[45]न्निराधारत्वप्रतिषेधो न सिध्येत्। ततो न प्रागसतोप्युत्पत्तिः संभवति। निरन्वयमवि[46]नाशे

---

१ वक्ष्यमाणप्रकारेण। २ उपदर्श्यन्ते। ३ प्रतिपक्षः, प्रतिषेध्यःसदाद्येकान्तः। ४ यथाभ्युपगत परैस्तथा न व्यवतिष्ठते। ५ उत्पत्तिविनाशादिपर्यायरहिते। ६ यत. सकलविशेषणैर्विशिष्टं चेत्तदा सांशत्वापत्ति.। ७ इति सौगतेनाशङ्किते जैनै-रुच्यते। ८ ( सुवर्णस्य कथंचित्सत एव केयूरादिसंस्थानरूपेणातिशयोत्पत्तिर्यथा )। ९ हेतो। १० केयूरादिसंस्थान-प्रकारेण। ११ प्रतिविशिष्टो, नियत.। १२ इति सुवर्णं सदसदात्मकम्। १३ सुवर्णवत्। १४ कारिकोक्तवाक्येन। १५ श्रीस-मन्तभद्राचार्यः। १६ ( एकान्तेऽर्थक्रियाप्रतिक्षेपमेव दर्शयति नेत्यादिना )। १७ अनुत्पन्नत्वेन। १८ बौद्ध.। १९ स्वो-त्पत्तेः प्रागविद्यमानस्य कार्यस्य। २० उत्तर कथयति जैन। २१ सतो.। २२ सदेकान्तस्य असदेकान्तस्य चाभावो भवेत्। २३ एतदेव भावयति। २४ अङ्गीक्रियमाणे। २५ पूर्वाकारप्रकारेण। २६ उत्पत्त्याद्यसंभवात्। २७ क्रियारूपत्वादिति। २८ नैतन्मन्तव्यमित्यनेनान्वय.। २९ निर्विकल्पकप्रत्यक्षे। ३० निर्विकल्पकज्ञानेन। ३१ तेन, उत्पत्त्यादिना। ३२ वस्तुनि। ३३ तस्य नीलसुखादेः। ३४ निराधारमपि तद्विकल्पप्रसक्ते। ३५ तस्य नीलसुखादेः, व्यवस्थापनं सत्तासिद्धिः। ३६ भवतु नीलविकल्पः। विरोधोप्यस्त्विति चेत्। ३७ सन्तानान्तर नीलादि। ३८ स्वसन्तानः, सुखादि.। ३९ तद्विकल्पव्यवस्था। ४० मा भूद्व्यवस्था किंतु आद्यन्तक्षणरहितमध्यक्षणमात्रे ज्ञानेऽङ्गीक्रियमाणे। ४१ विकल्पः। ४२ किन्तु वासनाबलादेव सिध्येदित्यर्थः। ४३ अद्वैतवासनाम्। ४४ आदिपदेन स्थितिविनाशौ। ४५ सा, क्रिया। ४६ सान्वयविनाशे इत्यर्थ.।

प्रागसत उत्पत्तिरित्ययमपि पक्षो न क्षेमङ्करः, स्याद्वादाश्रयणप्रसङ्गात्, [1]असत्कार्यवादविरोधात्। ततः सूक्तं 'यदेकान्तेन सदसद्वा तन्नोत्पत्तुमर्हति, व्योमवन्ध्यासुतवत्' इति। न ह्येकान्तेन सद्व्योमोत्पद्यते, नाप्ये-कान्तेनासन् वन्ध्यासुत इति न साध्यसाधनविकल[2]मुदाहरणम् । कथमिदानीमनुत्पन्नस्य गगनादेः स्थिति[3]रिति चेन्न, अनभ्युपगमात्[4] सर्वथा गगनाद्यनुत्पादस्य । केवलमिह व्योम्नो द्रव्यनयापेक्षया परप्रसिद्ध्या चोदाहरणं प्रतिपादितम् । ततो न पूर्वापरविरोधः, पूर्वं सर्वथानुत्पत्तिमतः स्थिति-प्रतिषेधसाधनात्, द्रव्यतो[5]नुत्पद्यमानस्यैव स्थितिघटनात् । ततो यदर्थक्रियाकारि तद्विधिप्रतिषेधकल्पनो-पकल्पितसप्तभङ्गीविधौ समारूढं विध्येकान्तादौ वानवस्थितं, सदाद्येकान्ते सर्वथार्थक्रियाविरोधादिति सूरि[6]-मतम् । नन्वेवं[7] सुनयार्पितस्य[8] विध्यंशस्य निषेधांशस्य चार्थक्रियाकारित्वे तेन[9] व्यभिचारी हेतुः[10], तस्य[11] सप्तभङ्गीविधावसमारूढत्वादन्यथानवस्थानात्[12], तस्यानर्थक्रियाकारित्वे सुनयस्यावस्तुविषयत्वप्रसक्तेः, वस्तु-नोर्थक्रियाकारित्वादिति कश्चित्[13] तदयुक्तं, सुनयार्पितस्यापि[14] विधेरनिराकृतप्रतिषेधस्यार्थक्रियाकारित्वादन्यथा[15] दुर्णयार्पितत्वापत्तेः । न चासौ सप्तभङ्गीविधावसमारूढः, भङ्गान्तराप्रतिक्षेपात्[16] । तथा[17] च नानवस्था नाम, विधावपि विध्यन्तरादिविकल्पनाऽभावात् । केवलं[18] विधिभङ्गे[19] नास्तित्वादिभङ्गान्तरगुणीभावाद्विधिप्राधान्यं प्रतिषेधभङ्गे चास्तित्वादिभङ्गान्तरगुणीभावात्प्रतिषेधप्रधानतेति[20] प्रमाणार्पितप्रधानरूपाशेषभङ्गात्मकवस्तु-वाक्यान्नयवाक्यस्य विशेषः प्ररूपितप्राय एव ।

यदप्याह[21] 'जीवादिवस्तुनि सत्त्वद्वारेण[22] प्रथमभङ्गात्प्रतिपन्ने द्वितीयादिभङ्गानामानर्थक्यम्, असत्त्वा-दिधर्माणामपि तदात्मनां तत[23] एव प्रतिपत्तेरन्यथा [24]तेषां वस्तुनोन्यत्वापत्तेः, विरुद्ध[25]धर्माध्यासात्[26]पटपि-शाचवत् । तथा च तस्येति[27] व्यपदेशाभावः, सबन्धाभावात् । सत्त्वादिधर्माणां धर्मिणा सहोपकार्योप-कारकभावे[28] धर्मिणोपकारो धर्माणां धर्मैर्वा धर्मिणः स्यात्? प्रथमपक्षे किमेकया शक्त्या धर्मी धर्मानु-पकुरुतेऽनेकया वा? यद्येकया स्वात्मनोनन्यया धर्मी धर्मानुपकुरुते तदैकधर्म[29]द्वारेण नानाधर्मोपकारनि-मित्तभूतशक्त्यात्मनो धर्मिणः प्रतिपत्तौ तदुपकार्यस्य सकलधर्मकलापस्य प्रतिपत्तेः सकल[30]ग्रहः स्यात्, उप-कार्याप्रतीतौ तदुपकारकप्रतीत्ययोगात् । एतेनानेकया स्वात्मनोनन्यया शक्त्या धर्मी धर्मानुपकरोतीति पक्षान्तरमपि प्रतिक्षिप्तम्[31] । धर्मी धर्मैरुपक्रियते इत्यस्मिन्नपि पक्षे किमेकोपकार्य[32]शक्त्या[33]त्माऽनेकोपकार्यश-

---

१ कथंचित्प्राक् सत एवोत्पत्तिर्जाता यत । कथम्? तथा हि । २ सर्वथा नित्यं नोत्पद्यते, सत्त्वाद्व्योमवत् । सर्वथा अनित्यं नोत्पद्यते, असत्त्वाद्वन्ध्यासुतवदिति । ३ न चानुत्पन्नस्य स्थितिविपत्ती इति पूर्वमुक्तत्वात् । ४ एकान्तेन । ५ द्रव्यार्थिकनयापेक्षयेत्यर्थ । ( न तु पर्यायनयापेक्षयाप्यनुत्पद्यमानस्य ) । ६ सूरीणां समन्तभद्राणाम् । ७ सप्तभङ्गीवि-धिसमारूढस्यैवार्थक्रियाकारित्वप्रकारेण । ८ सापेक्षो नय सुनय । ९ विध्यंशेन निषेधांशेन च । १० सर्वथार्थक्रिया-विरोधादिति । ११ विध्यंशस्य निषेधांशस्य च । १२ एकस्यैव सत्त्वस्यासत्त्वस्य च सप्तभङ्गीत्वप्राप्तौ प्रत्येकमेकस्मिन्नाग-ताना सप्तभङ्गाना सप्तभङ्गीत्वप्रकारेण । १३ सौगत । १४ केवलं सदेवासदेव वार्थक्रियाकारीति सन्देहे प्राह । १५ प्रतिषेधनिरपेक्षस्यास्तित्वस्यार्थक्रियाकारित्वं चेत्तर्हि । १६ विध्यंशस्य भङ्गान्तराप्रतिक्षेपितया सप्तभङ्गीसमालिङ्गिते वस्तुनि तादात्म्यमापन्नस्य सप्तभङ्गीविधौ समारोहणोपपत्तेरिति भाव । १७ विधे सप्तभङ्गीविधौ समारूढत्वप्रकारेण । १८ सुन-यार्पितस्य भङ्गस्य भङ्गान्तराप्रतिक्षेपितया युगपत्सर्वभङ्गाना नयविषयत्वप्राप्तेर्नयप्रमाणयोरविशेष इत्याशङ्कायामाहु· केवल-मिति । १९ अङ्गीक्रियमाणे । २० हेतो । २१ सौगत । २२ अस्तित्वप्राधान्येन । २३ प्रथमभङ्गात् । २४ असत्त्वा-दिधर्माणाम् । २५ भेदे सति । २६ धर्मिणो वस्तुन प्रतीतिस्तद्धर्माणामप्रतीतिरिति विरुद्धधर्माध्यास । २७ धर्मिण इमे धर्मा इति । २८ सति । तस्येति व्यपदेशो भविष्यतीति चेद्धे जैन तदा । २९ सत्त्वलक्षणधर्मद्वारेण । ३० सकलधर्माणां ग्रहो=धर्मधर्मिणोरैक्यं स्यात् । ३१ अनेकधर्मद्वारेण नानाधर्मोपकारनिमित्तेत्याद्यनन्तरोक्त योज्यमत्र । ३२ एका चासा-वुपकार्या च सा च शक्तिश्चेति तथोक्ता । अत्र धर्मा उपकारका· धर्मी तूपकार्यः । ३३ धर्मी ।

त्त्यात्मा वेति पक्षद्वितयमप्यनेनैव निरस्तं, सकलधर्मकलापस्योपकारकस्याप्रतिपत्तौ तदुपकार्यशक्त्या- त्मनो धर्मिणः प्रतिपत्त्यघटनात्, सकलनिश्चय[1]स्याविशेषात्। तदुक्तं "नानोपाध्यु[2]पकाराङ्गशक्त्यभिन्नात्मनो ग्रहे। सर्वात्मनोपकार्य[3]स्य को भेदः स्यादनिश्चितः ॥ १ ॥ एको[4]पकारके ग्राह्ये नोपकारास्ततोऽपरे। दृष्टे यस्मिन्नदृष्टास्ते तद्ग्रहे सकलग्रहः ॥ २ ॥" इति। यदि[5] पुनर्धर्माणामुपकारिकाः शक्तय उपकार्याश्च धर्मिणो भिन्ना एव तदा ताभिस्तस्योपकारः कश्चित्तेन वा तासां क्रियते न वेति पक्षद्वयम्। तत्र न तावदुत्तरः पक्षः, त[6]द्व्यपदेशविरोधात्। प्रथमपक्षे तु शक्तिभिः शक्तिमत उपकारेनर्थान्तरभूते स एव कृतः स्यात्। तथा च न शक्तिमानसौ, तत्कार्यत्वात्[7]। ततोर्थान्तरभूतेनवस्थाप्रसङ्गः, त[8]द्व्यपदेशसिद्ध्यर्थमुपकारान्तर- परिकल्पनात्। शक्तिमता शक्तीनामुपकारे शक्त्यन्तराणां कल्पनेनवस्थैव। तदकल्पने प्राच्यश[9]क्तीनाम- प्यव्यवस्थितिः। इति न शक्तिशक्तिमद्व्यवहारः सिध्येत्। तदप्युक्तं "धर्मोपका[10]रशक्तीनां भेदे तास्तस्य किं यदि[11]? नोपकारस्ततस्तासां तथा स्यादनवस्थितिः" इति।, त[12]दपि सर्वमपाकुर्वन्तः सूरयः प्राहुः।—

**धर्मे धर्मेन्य एवार्थो[13] धर्मिणोनन्तधर्मणः। अङ्गित्वेन्यतमान्त[14]स्य शेषान्तानां तदङ्गता[15] ॥२२॥**

धर्मी तावदनन्तधर्मा जीवादिः, प्रमेयत्वान्यथानुपपत्तेः। न[16]नु च धर्मेण व्यभिचारः, तस्यानन्तधर्म- त्वाभावेपि प्रमेयत्वसिद्धेः। तस्याप्यनन्तधर्मत्वे धर्मित्वप्रसङ्गान्न धर्मो नाम। तदभा[17]वे न धर्मीत्युभया- पायः। प्रमेयत्वस्य च साधनधर्मस्यानन्तधर्मशून्यत्वे तेनैवाने[18]कान्तः। तस्यानन्तधर्मत्वे धर्मित्वेन पक्षान्तःपातित्वान्न हेतुत्वम्। इत्युपाल[19]म्भो न श्रेयान्, धर्मस्यैव सर्वथा कस्य[20]चिदसंभवात्तेन[21] व्यभिचाराभावात साधनस्य। न हि स्वधर्म्यपेक्षया यो धर्मः सत्त्वादिः स एव स्वधर्मान्तरापेक्षो धर्मी न स्याद्यतोनन्त[22]धर्मो न भवेत्। न चैवम[23]नवस्थानं, अनाद्यनन्तत्वाद् धर्मधर्मिस्वभावभेदव्यवहारस्य वलये[24]वदभव्यसंसारवद्वा। न च धर्मिणो जीवादेरपोद्ध्रिय[25]माणो धर्मः प्रमेयः, तस्य[26] नयविशेषविषयतया प्रमाणाविषयत्वात्। इति न तेनाने[27]कान्तः। एतेन[28] प्रमेयत्वस्य[29] धर्मस्य नयविषयस्य नयत्वे[30]नाप्रमेयत्वा[31]त्तेन व्यभिचारो निरस्तः। प्रमाणविषयस्य तु प्रमेयत्वस्य हेतोः स्वधर्मापेक्षयानन्तधर्मत्वेन धर्मित्वात्पक्षत्वेपि न हेतुत्वव्याघातः, स्व[32]परा- नन्त[33]धर्मत्वे साध्येन्यथा[34]नुपपत्तिसद्भावात्। ततोनन्तधर्मा धर्मी सिध्यत्येव। तस्य धर्मे धर्मेस्तित्वादौ भिन्न एवार्थः प्रयोजनं विधाना[35]दिः प्रवृत्त्यादिर्वा तदज्ञानविच्छित्तिर्वा, न पुनरेक[36] एव येन प्रथमभङ्गादेवान- न्तधर्मात्मकस्य वस्तुनः प्रतिपत्तेः शेषधर्मानामानर्थक्यं प्रसज्येत। न च धर्मा धर्मिणोनर्थान्तरभूता एव,

---

१ सकलधर्मकलापस्य निश्चयः सकलग्रहः पूर्वोक्तदोष इति यावत्। तस्य। २ नानोपाधीना सत्त्वादिधर्माणामुपका- राङ्गभूता। सा चासौ शक्तिश्च। तया अभिन्न आत्मा स्वरूपं यस्य धर्मिण. स तस्य। ३ धर्मकलापस्य धर्मिणोपकार्यस्य। ४ सत्त्वादिधर्मे ग्राह्ये ततोऽपरे तस्मिन्दृष्टे ये न दृष्टास्ते न सन्त्येव। ततस्तद्ग्रहे सकलग्रहः। ५ हे जैन। ६ धर्मिण' शक्तय इति। ७ तत्कार्यत्वाच्छक्तिरेव स्यान्न शक्तिमान्। ८ शक्तिभि' कृतोपकारो भिन्नश्चेत्कथं शक्तिमतोयमुपकार इति व्यपदिश्येत? उपकारान्तरेण चेदनवस्था, तस्यापि भिन्नत्वात्। ९ शेषधर्माणाम्। १० धर्माणामुपकारशक्तयस्ता- साम्। ११ तास्तस्य संबन्धिन्यो हि किं भवन्ति? नैव। १२ इति यदाह बौद्ध.। १३ प्रयोजनम्। १४ अन्तो धर्म इत्यर्थः। बहुषु मध्ये एकधर्मस्य। १५ गौणता। १६ बौद्धः। १७ धर्माभावे। १८ प्रमेयत्वस्यानन्तधर्माभावेपि प्रमेय- त्वात्। १९ बौद्धस्य। २० धर्मिव्यतिरिक्तस्य। २१ धर्मेण। २२ एकधर्मोपि। २३ धर्मस्यैवानन्तधर्मात्मकधर्मित्व- प्रतिपादनेन। २४ यथा भ्रमणकाले वलयस्य पूर्वभागो य. स एवापरभागोपि भवति। २५ पृथक्क्रियमाणः। २६ धर्मस्य। २७ धर्मेण। २८ धर्महेतुवृत्त्यसंभवत्वप्रतिपादनेन। २९ हेतोः। ३० नयविषयत्वेन। ३१ प्रमाणाविषयत्वात्। ३२ स्व. प्रमेयः, परो जीवादिः। ३३ स्वपरानन्ताना धर्मत्वे। ३४ स्वपरानन्तधर्मात्मकत्वाभावे प्रमेयत्वसाधनस्यानुपपत्ति- सद्भावात्। ३५ आदिपदेन नास्तित्वादिः। ३६ अर्थः, प्रयोजनम्।

नाप्यर्थान्तरमेव येन तत्पक्षभाविदूषणप्रसङ्गः, कथंचिद्भेदाभेदात्मकत्वाद्धर्मिधर्माणां [1]तदात्मकवस्तुनो जात्यन्तरत्वाच्चित्राकारै[2]कसंवेदनवत्, [3]तत्र विरोधादेरप्यनवकाशात् । केवलमङ्गित्वे [4]प्रधानत्वेऽस्तित्वादिषु धर्मेष्वन्यतमस्यान्तस्य धर्मस्य, शेषान्ताना स्वाच्छन्दसूचितान्यधर्माणां तदङ्गतां तद्गुणभावः, [5]तथा [6]प्रतिपत्तुर्विवक्षाप्रवृत्तेरर्थित्वा[7]विशेषात् । [8]ततो भङ्गान्तरप्रयोगो युक्त एव, प्रतिधर्मं धर्मिणः कथंचित्स्वभावभेदोपपत्तेः । **यदि पुनः प्रत्युपाधि परमार्थतः स्वभावभेदो न स्यात्तदा [9]दृष्टेऽभिहिते वा प्रमाणान्[10]तरमुत्त[11]रान्तरं वा निरर्थकं स्यात्, गृहीतग्रहणात् पुनरुक्तेश्च** । तथा हि । [12]साक्षादुपलब्धे शब्दादौ क्षणिकत्वाद्यनुमानं स्वार्थं न स्यात्, धर्मिप्रतिपत्तौ कस्यचिदप्रतिपन्नस्वभावस्य [13]साध्यस्याभावात्, सर्वथा **स्वभावातिशयाभावात्** । परार्थं चानुमानं वचनात्मकं न युज्येत, धर्मिवचनमात्रादेव साध्यनिर्देशसिद्धेः, साधनधर्मोक्तिसिद्धेश्च । [14]तद्वचने पुनरुक्तताप्रसङ्गः, [15]तस्य स्वभावातिशयाभावादेव । '[16]तस्माद्दृष्ट[17]स्य भावस्य दृष्ट एवाखिलो [18]गुणः । [19]भ्रान्तेर्निश्चीयते नेति[20] साधनं सम्प्रवर्तते, इत्ये[21]तदप्यनालोचितवचनमेव, दृष्टस्य स्वभावस्य स्वभावातिशयाभावेखिलगुणदर्शनस्य विरोधात्, [22]धर्मिमात्रेप्यभ्रान्तौ साध्ये स्वभावे भ्रान्त्ययोगात् तद्भ्रान्[23]तौ वा [24]शब्दसत्त्वादावपि भ्रान्तिप्रसक्तेः कुतः साधनं सम्प्रवर्तेत यतोऽर्थनिश्च[25]यः [26]स्यात् ? शब्दसत्त्वादौ निश्चये कथमनित्यत्वादावनिश्च[27]यः ? स्वभावातिशयप्रसङ्गात्, निश्चितानिश्चि[28]तयोरेकस्वभावत्वे सर्वथातिप्रसङ्गा[29]त् । **[30]सदुत्पत्तिकृतकत्वादेः प्रत्यनी[31]कस्वभावविशेषाभावाद् यावन्ति पररूपाणि तावन्त्यस्ततस्ततो व्यावृत्तयः प्रत्येकमित्येषापि [32]कल्पना मा भूत्** । न हि किंचिदसदनुत्पत्तिमदऽकृतकादि वा वस्तुभूतमस्ति सौगतप्रसिद्धं पररूपं यतो व्यावृत्तं परमार्थतोऽस्वभावभेदमपि शब्दादिस्वलक्षण सदुत्पत्तिकृतकत्वादिस्वभावभे[33]दवत्परिकल्प्य[34]ते । पराभ्युपगमात्सिद्धमस्तीति चेन्न, तस्याप्रमाणसिद्धत्वात् । कल्पनारोपितं तदस्तीति चेत्कुतस्तत्कल्पनाप्रसूतिः ? अनाद्यविद्योदयादिति चेत्तत एव सत्त्वादिधर्मकल्पनास्तु । किमसत्त्वादिव्यावृत्त्या ? सदे[35]व किंचिद्गुणीभूतविधिस्वभाव निषेधप्राधान्यादसदुच्यते, [36]सदन्तरविविक्तस्य सत एवासत्त्वव्यपदेशात् । तथोत्पत्तिमदन्तरविविक्तमुत्पत्तिमदेव किंचिदनुत्पत्तिमत्, कृतकान्तरविविक्तं कृतकमेवाकृतकं, वस्त्वन्तरविविक्त वस्त्वेवावस्तु व्यवहृतिपथमुन्नीयते इति चेन्न[37], परमार्थतः सत्त्वादिवस्तुस्वभावभेदप्रसिद्धेः, निस्स्वभावभेदवस्तुरूपाभ्युपगमविरोधात् । **सतां हि स्वभावानां गुणप्रधानभावः स्यात् पादोत्तमाङ्गवत्, न पुनरसतां शशाश्वविषाणादीनामविशेषात् । ततः परिकल्पितव्यावृत्त्या धर्मान्[38]तरव्यवं-**

---

१ तदात्मकस्य भेदाभेदात्मकस्य । २ चित्राकारं च तदेकसवेदनं चेति । ३ भेदाभेदात्मके वस्तुनि । ४ एकस्य प्रधानधर्मस्य सबन्धित्वेन शेषधर्माणामप्रधानता । ५ गुणप्रधानभावप्रकारेण । ६ प्रतिपत्तुः । ७ प्रधानगुणभावो यत. । ८ नयप्रमाणविपयतया गृहीतागृहीतधर्मापेक्षया गृहीतत्वागृहीतत्वस्वभावभेदसिद्धे । ९ प्रत्यक्षविषयीकृते धर्मिणि । १० अनुमानादि । ११ वचनान्तरम् । १२ प्रत्यक्षेण । १३ क्षणिकत्वादिधर्मस्य । १४ धर्मिवचने । १५ शब्दादिधर्मिण । १६ सौगतमतापेक्षया निरंशत्वं यत । १७ प्रत्यक्षविषयीकृतस्य वस्तुन । १८ धर्म । १९ निरंशे शब्दादौ भ्रान्तिरस्ति यतस्तत । २० इति, हेतो । २१ भ्रान्ते. सकाशान्न निश्चीयते । अत साधन प्रवर्तते इति सौगताभिमतमपि । २२ अखिलगुणदर्शनस्य विरोध कथं प्रतिपाद्यते जैनै ? अथवा यावता दृष्टेऽर्थेखिलगुणे धर्मिमात्रे एवाभ्रान्तिर्न त्वखिलगुणे, ततस्तत्सिद्ध्यर्थमनुमानमर्थवदित्याशङ्कायामाहुर्जैना । २३ साध्यभ्रान्तौ । २४ शब्दे क्षणिकत्वभ्रान्तौ सत्त्वमपि भ्रान्त स्यात् । २५ धर्मिनिश्चय. । २६ स्वभावातिशयाभावात् । २७ स्वभावभेदरहितत्वेन । २८ साधनसाध्ययो. । २९ पटपिशाचयोरेकत्वप्रसङ्गात् । ३० सत्पदेन सत्त्वम् । यद्यपि पदार्थस्य स्वत स्वभावातिशयो नास्ति तथापि विजातीयभेदात्स्वभावातिशयो भविष्यतीत्युक्ते प्राहुर्जैना । ३१ असत्त्वानुत्पन्नत्वाकृतकत्वादे प्रत्यनीकस्वभावस्य । ३२ सौगतस्य । ३३ भेदोऽस्यास्तीति भेदवत् । ३४ बौद्धेन । ३५ सौगत शङ्कते । ३६ एकत्र वस्तुनि यत्सत्ततोन्यत्र वस्त्वन्तरे यत्सत्तत्सदन्तरम् । तेन विविक्तं रहितम् । तस्य प्रकृतस्य । ३७ जैन. । ३८ धर्मान्तरस्य, असत्त्वकृतकत्वादे. ।

स्थापनं परिफल्गुप्रायं, वस्तुस्वभावाभावप्रसङ्गात् । शक्यं हि वक्तुं, न किञ्चिद्वस्तु नामास्ति, तस्याव-स्तुव्यावृत्त्या व्यवहरणात् [१]परिकल्पितवस्तुव्यावृत्त्या चावस्तुव्यवहारसिद्धेः । परस्पराश्रयणान्नैवमिति चेत्तर्हि कल्पितासत्त्वादिव्यावृत्त्या सत्त्वादयस्तद्व्यावृत्त्या चासत्त्वादिधर्मपरिकल्पनमित्यपि मा भूत्, परस्पराश्र-यणाविशेषात् । [२]स्ववासनासामर्थ्यात्सत्त्वेतरादिकल्पनयोरुत्पत्ते[३]स्तद्व्यवहारस्यैव परस्परापेक्षत्वान्न परस्पराश्र-यण, [५]सकलधर्मधर्मिविकल्पशब्दानां स्वलक्षणाविषयत्वात् परिकल्पिततदन्यव्यावृत्तिविषयत्व[६]सिद्धेरिति चेन्न[७], तथेन्द्रियबुद्धयोपि स्वलक्षणविषया मा भूवन् । केवलं व्यावृत्तिं पश्येयुः, [८]अदृष्टे विकल्पायो-गादतिप्रसङ्गाच्च[९] । यथैव हि नीले पीतादीनामदृष्टत्वान्न तद्विकल्पोत्पत्तिर्नीलस्य, दृष्टत्वान्नीलविकल्पस्यै-वोत्पत्तिस्तथैवासत्त्वादिव्यावृत्तिमपश्यं[१०]तस्तद्वि[११]कल्पोत्पत्तिर्मा भूत्, स्वलक्षणदर्शनात्स्वलक्षणविकल्पोत्पत्तिरे-वास्तु, न चैवं, [१२]तदन्यव्यावृत्तावेव विकल्पोत्पत्तेः । यदि पुनरसत्त्वादिव्यावृत्तीनामदर्शनेपि तदनादिवास-नावशादेव तद्विकल्पोत्पत्तिरुररीक्रिय[१३]ते तदा नीलादिरूपादर्शनेपि तद्वासनासामर्थ्यादेव नीलादिविकल्पो-त्पत्तेस्ततो नीलादिरूपव्यवस्था मा भूत् । [१४]तद्वत्सुखादिव्यवस्थितिरपि कुतः संभाव्येत ? [१५]स्वसंवेदनव्यवस्था च [१६]तन्निश्चयोत्पत्ते[१७]र्दुर्घटैव । [१८]तदनुत्पत्तौ सुतरां [१९]तदव्यवस्था स्वर्गप्रापणशक्त्यादिवद्वेद्याकारविवेकवद्वा[२०] । स्वरूपस्य स्वतो गतिरित्यपि तथा निश्चयानुत्पत्तौ न सिध्येद्ब्रह्माद्वैतादिवत् । त[२१]तः कुतश्चिन्निश्चयाद्वस्तु-स्वभावभेदव्यवस्थायां सत्त्वादिनिश्चयाद्वस्तुनि परमार्थतः सत्त्वादिधर्मभेदव्यवस्थितिरभ्युपगन्तव्या, अन्यथा क्वचिदपि व्यवस्थानासिद्धेः । परमार्थतः सत्त्वादिधर्मव्यवस्थितौ च सत्यां साधीयसी सत्त्वादिसप्तभङ्गी, सुनयार्पितत्वात् ।

सम्प्रत्येकानेकत्वादिसप्तभङ्ग्यामपि [२२]तामेव प्रक्रियामतिदिशन्तः सूरयः प्राहुः ।—

**एकानेकविकल्पादावुत्तरत्रापि योजयेत् । प्रक्रियां भङ्गिनीमेनां नयैर्नयविशारदः ॥ २३ ॥**

स्यादेकमेव स्यादनेकमेवेति विकल्प आदिर्यस्य स एकानेकविकल्पादिः । तस्मिन्नुत्तरत्रापि स्याद्वादवि-शेषवि[२३]चारेपि प्रक्रियामेनामन्वादि[२४]ष्टां भङ्गिनीं सप्तभङ्गाश्रयां नयैर्यथोचितस्व[२५]रूपैर्योजयेत्—युक्तां प्रतिपादये-न्नयविशारदः स्याद्वादी, ततोन्यस्य तद्योजनेनधिकारात् । तद्यथा । स्यादेकं[२६] सद्द्रव्यनयापेक्षया । न हि सत्पर्यायनयापेक्ष[२७]या सर्व[२८]था वा सर्वमेकमेवेति युक्तं, प्रमाणविरोधात् । ननु च सद्द्रव्यनयार्पणादपि जीवा-दिद्रव्यमेकैकश एवैकं सिध्येत्, न तु [२९]नानाद्रव्यं, प्रतीतिविरोधात्, तत्रै[३०]कत्वप्रत्यभिज्ञानाभावात्

---

१ ननु चावस्त्वेव नास्ति । अतः कथमवस्तुव्यावृत्त्या वस्तुव्यवहरणमित्याशङ्कायामाह । २ आह सौगतः । ३ तयोः वस्तुकल्पनयोः । ४ सत्त्वेतरादिकल्पनयोः सिद्धावपि किं भवतीत्याशङ्क्याह । ५ सकलं सत्त्वासत्त्वादि । सकलधर्मधर्मिणां ये विकल्पा शब्दाश्च तेषाम् । ६ सकलधर्मधर्मिविकल्पशब्दा स्वलक्षणग्राहका न भवन्तीत्यर्थः । ७ जैनः । ८ निर्विक-ल्पकेनापरिगृहीते व्यावृत्तिरूपे विकल्पोपि मा भूत्, तज्जन्यत्वाद्विकल्पस्य । ९ नीले पीतविकल्पोत्पत्तिरित्यतिप्रसङ्गः । १० प्रत्यक्षात् । ११ असत्त्वादिविकल्पोत्पत्तिः । १२ तत्तस्माद्विवक्षितात् । १३ सौगतेन । १४ नीलादिरूपव्यवस्थावत् । १५ सुखादिकं स्वसंवेदनेनैव प्रतिभातीत्याह । १६ तत्, ततः अनादिवासनातो निश्चयोत्पत्तिर्या तस्याः सकाशात् । १७ अना-दिवासनावशात्सुखादिविकल्पोत्पत्तिः केन प्रतिपाद्यते यतः सुखाद्यव्यवस्थिति स्यादिति बौद्धाशङ्कायामाहुर्जैनाः । १८ तस्य स्वसंवेदनस्य ( सुखादेर्वा ) । १९ स्वर्गप्रापणशक्त्यादेर्निश्चयानुत्पत्तौ यथा तद्व्यवस्था न । वेद्याकारविवेकस्य निश्चयानुत्पत्तौ तद्व्यवस्था वा यथा न । २० सुखादिरूपादर्शने सुखादीना व्यवस्थितिर्न घटते यत । २१ वस्तुदर्शनप्रभवान्निश्चयात् । निश्चयो विकल्पः । २२ स्यादस्तीत्यादिसप्तभङ्ग्यामुक्ताम् । २३ अथवा भङ्गे भङ्गे एकत्वानेकत्वविचारेपि, घटपटादिसर्वपर्यायाणा-मेकत्वानेकत्वविचारेपि वा । २४ पुनर्निरूपिताम् । २५ एकत्वे द्रव्यार्थिकनयोनेकत्वे पर्यायनय इति । २६ सर्वं वस्तु । २७ क्षणिकत्वापेक्षया । २८ निरपेक्षत्वप्रकारेण । २९ द्रव्यषट्कमपि । ३० य एवायं जीवः स एवायमजीव इति ।

सर्वत्रैकत्वस्य[1] तन्मात्र[2]साध्यत्वादन्यथातिप्रसङ्गा[3]दिति कश्चि[4]त्। तं प्रत्येके[5] समादधते 'सदेव द्रव्यं सद्द्रव्यम्। तद्विषयो नयः सङ्ग्रहः प[6]रमः। तदपेक्षया सर्व[7]स्यैकत्ववचनाददोषः' इति। अप[8]रे तु 'सद्द्रव्यमेव नयः, नीय[9]मानत्वाद्धेतोः। तदपेक्षया सर्वमेकं, जीवादीनां षण्णां तद्भेदप्रभेदानां चानन्तानन्तानां तत्पर्यायत्वात् 'एकं द्रव्यमनन्तपर्यायम्' इति संक्षेपतस्तत्त्वोपदेशा[10]त्, त[11]स्य सर्वत्र सर्वदा विच्छेदानुपलक्षणात् प्रतीति-विरोधाभावादेकत्वप्रत्यभिज्ञानस्यापि सदेवेदमित्यबाधितस्य सर्वत्र भावात्, अ[12]भावस्यापि तत्पर्यायत्वान्न किञ्चिद्दूषणम्' इति समाचक्षते। न[13]नु च जीवादयो विशेषाः परस्परं व्यावृत्तविवर्त्ता[14]ः कथमेकं द्रव्यं विरोधा-दिति चेन्न, कथंचिदेकत्वेन विरोधाभावात् कथंचिद्विशिष्टप्रतिभासात्। **यद्यपि ते विशेषा[15]ः परस्पर-व्यावृत्तपरिणामाः कालादिभेदेपि सद्रूपा[16]विशिष्टाश्चित्रज्ञाने[17]नीलादिनिर्भासवत्।** यथा हि चित्र-प्रतिभासा[18]प्येकैव बुद्धिः, बाह्यचित्रविलक्षणत्वात्। श[19]क्यविवेचनं हि बाह्यचित्रमशक्यविवेचनाश्च बुद्धेर्नी-लाद्याकारा इति चित्रज्ञानमशक्यविवेचनं नीलादिनिर्भासभेदेप्येकमिष्यते तथा जीवादिविशेषभेदेप्येकं सद्द्रव्यं, कालभेदेपि सद्रूपादशक्यविवेचनत्वात् देशभेदेपि वा त[20]तस्तेषा विवेचयितुमशक्तेराकारभेदवत्, त[21]तस्तेषा कदाचित्क्वचित्कथंचिदपि विवेचने स्वरूपाभावप्रसङ्गात्। सा[22]मान्यविशेषस[23]मवायवत्प्राग[24]भावादिवद्वा सद्रूपाद्विवे[25]चनेपि जीवा[26]दीना नाभाव इति चेन्न[27], तेषाम[28]पि सद्विवर्तत्वात् सद्रूपे[29]विवेचनासिद्धेरन्यथा प्रमेयत्वा-योगादवस्तुत्वप्रसक्तेः सर्वथा सत्त्वाद्भिन्नस्यासत्त्वनिर्णयात्। ततो जीवादिविशेषाः कालादिभेदेपि स्यादेकं द्रव्यं, सद्रूपाविशिष्टत्वान्नीलादिनिर्भासभेदेपि ज्ञानरूपाविशि[30]ष्टत्वादेकचित्रज्ञानवत्। इति प्रथमो भङ्गः(१)।

तथा जीवादिविशेषाः **स्या[31]दनेकत्वमास्कन्दन्ति,** भेदेन[32] दर्शनात् संख्यासंख्यावद[33]र्थवत्। **न हि संख्यासंख्यावतोर्भेदेनादृष्टौ विशेषणविशेष्यविकल्पः कुण्डलिवत्[34] क्षीरोदकवत्[35]तद्भेदिनि,** यतः सौगतस्तयोरभेदं मन्येत। न[36] च भेदैकान्ते तद्वत्ता[37]स्ति, व्यपदेशनिमित्ताभावात्। सं[38]ख्यावानर्थ इति व्यपदेशनिमित्तं समवाय इति चेन्न[39], तस्य कथंचित्तादात्म्यरूपत्वे भेदैकान्तासिद्धेर्वैशेषिकमतविरोधात्। पदार्थान्तरत्वे संख्यासंख्यावतोः समवाय इति व्य[40]पदेशनिमित्ताभावः। विशेषण[41]विशेष्यभावो व्यपदेशनिमि-त्तमिति चेन्न, तस्यापि ततो भेदे व्यपदेशनिमित्तान्तरापेक्षणात्पर्यनुयोगानिवृत्तेरनवस्थाप्रसङ्गाच्च। तस्माद[42]यं **कथंचिदेव संख्यासंख्यावतोः स्वभावभेदं पश्यति, त[43]द्विशिष्टविकल्पनात्क्व[44]चिन्निर्णयेप्यन्यत्र[45] संशया[46]द्वर्णरसादिवदिति[47]**। तदेवं सर्वं सिद्धं स्यादनेकम्। इति द्वितीयो भङ्गः(२)।

---

१ प्रत्यभिज्ञानाभावे एकत्वप्रतीतिविरोध कथमित्युक्ते आह। २ तत्,प्रत्यभिज्ञानम्। ३ देवदत्तयज्ञदत्तयोरेकत्वप्रसङ्गात्। ४ जटिल•। ५ जैनविशेषा। ६ शुद्धसङ्ग्रह•। ७ द्रव्यषट्कस्य। ८ जैनविशेषा•। ९ स्वद्रव्येषु प्राप्यमाणत्वात्। १० आगमे। ११ अनन्तानन्तपर्यायत्वेप्येतदपेक्षया सर्वमेकं कुत इत्याशङ्क्याह। १२ ननु च सर्वत्र भाव कुत ? यावता अभावस्य प्रध्वंसादिरूपस्य द्रव्याद्वस्त्वन्तरत्वेन समन्तत्वेन सगतत्वादिति यौगाशङ्कायामाह। १३ सौगत। १४ कर्मधारय•। १५ जीवादय•। १६ सद्रूपेण सह विशेषं न प्राप्ता। सद्रूपरूपा इति भाव। १७ चित्रज्ञाने यथा नीलादिनिर्भासाः। १८ वस्तः। १९ बाह्यचित्रविलक्षणत्वं समर्थयन्ति। २० (सद्रूपात्)। २१ (सद्रूपात्)। २२ सौगत। २३ (वैशेषिकमते) सामान्यादित्रये सद्रूपाभावेपि तस्य स्वरूपाभावो न यथा। २४ प्रागभावो वा सत्त्वाभावरूप एवास्ति। २५ (विवेचनं पृथग्भाव•)। २६ सत्त्वात्पृथक्करणे। २७ जैन•। २८ सामान्यविशेषसमवायाभावादीनाम्। २९ (सद्रूपात्पृथक्कर्तुमशक्ते•रित्यर्थ)। ३० ज्ञानरूपेण विशेषं (भेदं) न प्राप्तत्वात्। ३१ पर्यायापेक्षया। ३२ पर्यायेण। ३३ संख्या च संख्यावांश्च संख्यासंख्यावान्। स चासावर्थश्चेति तद्वत्। ३४ कुण्डलिनि कुण्डलपुरुषयोर्भेदेनादृष्टौ विशेषणविशेष्यभावो न भवेद्यथा। ३५ यथा क्षीरोदकयोर्भेदमजानन्नभेदेन प्रवर्तते। ३६ तर्हि सर्वथा भेदएव मन्यतामिति यौगेनोक्ते प्राह। ३७ (संख्यावतः संख्या इति)। ३८ नैयायिक। ३९ जैन। ४० तथापीति शेष•। अर्थान्तरत्वादेव। ४१ समवेतयो• संख्यासंख्यावतो। ४२ सौगतो वैशेषिको वा। ४३ तद्विशिष्टस्य, संख्यावत•। विकल्पन निश्चय। ४४ संख्यावति संख्यायां वा। ४५ संख्यावति संख्याया वा। ४६ इति सर्वथा भेदोपि न स्यात्। ४७ यथैकस्मिन्मातुलिङ्गे वर्णरसौ स्त•। तयोर्मध्ये एकस्य वर्णस्य निर्णयेप्यन्यत्र रसे संशयो दृश्यते।

क्रमार्पितद्वयात्स्यादुभयम् ( ३ )। सहावक्तव्यं, वक्तुम[1]शक्तेः ( ४ )। स्यादेकावक्तव्यं, स्वलक्षण[2]स्यैकस्य वक्तुमशक्यत्वात् ( ५ )। स्यादनेकावक्तव्यं, [3]तस्यानेकस्यापि वक्तुमशक्तेः ( ६ )। तत[4] एव स्यादुभयावक्तव्यम् ( ७ )। इति सप्तभङ्गीप्रक्रियायोजनमतिदेशवच[5]नसामर्थ्यादवसीयते। तत एव चैकत्वमेकधर्मिणि स्वप्रतिषेध्येनानेकत्वेनाविनाभावि, विशेषणत्वाद्वैधर्म्याविनाभाविसाधर्म्यवद्धेतौ। अनेकत्वं स्वप्रतिषेध्येनैकत्वेनाविनाभावि, विशेषणत्वात् साधर्म्याविनाभाविवैधर्म्यवद्धेतौ। एवं तदुभयादयोपि स्वप्रतिषेध्येनाविनाभाविनो विशेषणत्वाद्विशेष्यत्वाच्छब्दगोचरत्वाद्वस्तुत्वाद्वा स्वसाध्येतरापेक्षया हेत्वहेत्वात्मकसाधनधर्मवदित्यपि [6]नययोजनमविरुद्धमवबोद्धव्यम्। विशेषणत्वा[7]देः साधनधर्मस्यापि स्वविशेष्यापेक्षया विशेषणस्य स्व[8]प्रतिषेध्येनाविनाभावित्वसिद्धेर्न तेन विशेषणत्वा[9]दिहेतोर्व्यभिचारः। नापि विशेष्यत्वस्य[10], स्वविशेषणापेक्षया विशेष्यस्यापि [11]स्वप्रतिषेध्येनाविनाभावित्वात्। शब्दगोचरत्वस्य[12] च शब्दान्तरागोचरस्य स्वप्रतिषेध्येनाविनाभावित्वात्, वस्तुत्वधर्मस्य[13] च वस्त्वशत्वेन वस्तुत्वरूपस्य तत[14] एव व्यभिचारित्वाशङ्कापि न कर्तव्या, अनेकान्तवादिनां तथाप्रतीतेर्विरोधाभावात्। एवमेकत्वानेकत्वाभ्या[15]मनवस्थितं सप्तभङ्ग्यामारूढं जीवादिवस्तु, कार्यकारित्वान्यथा[16]नुपपत्तेः। सर्वथै[17]कान्ते क्रमाक्रमाभ्यामर्थक्रियाविरोधादित्याद्यपि योजनीयम्।

प्रज्ञाधीशप्रपूज्योज्ज्व[18]लगुणनिकरोद्भूतसत्कीर्तिसम्पद्विद्या[19]नन्दोदयायाऽनवरतमखिलक्लेशनिर्णाशनाय। [20]स्ताद्गौः सामन्त[21]भद्री दिनकररुचिजित्सप्तभङ्गीविधी[22]द्धा भावाद्येकान्तचेतस्तिमिरनिरसनी वोऽकलङ्क[23]प्रकाशा ॥ १ ॥

इत्याप्तमीमांसालङ्कृतौ प्रथमः परिच्छेद[24]ः।

---

१ युगपत्। २ वाद्यपेक्षयेदं पदं जैनैर्व्यवहृतम्। ३ स्वलक्षणस्य। ४ (क्रमेण प्राप्तौ सत्या सतोरप्येकानेकयोर्युगपद् वक्तुमशक्तेरेव)। ५ कारिकाया योजयेदित्यतिदेशवचः। ६ हेतुदृष्टान्तयोजनम्। ७ विशेषणत्वादिहेतूनां स्वसाध्येनाविनाभावसमर्थनार्थमाह। ८ अविशेषणत्वादिना। ९ विशेषणस्य केवलस्य साधनाद्विशेषणत्वादिहेतुर्व्यभिचारीति चेन्न, विशेषणस्य स्वप्रतिषेध्येनाविनाभावित्वसाधनात् तेन विशेषणत्वादिहेतोरव्यभिचारात्। १० हेतोर्व्यभिचार.। ११ अविशेष्यत्वादिना। विशेषणत्वादिनेत्यर्थः। १२ हेतो। १३ हेतो.। १४ स्वप्रतिषेध्येनाविनाभावित्वादेव। १५ सर्वथैकत्वानेकत्वाभ्यामनवस्थितम्। १६ सप्तभङ्ग्यामारूढत्वमन्तरेण। १७ सदसदाद्येकान्ते। १८ प्रज्ञाधीशप्रपूज्याश्चैते उज्ज्वलगुणाश्च। तेषां निकरः। सत्कीर्तिरेव सपत् सत्कीर्तिसपत्। तन्निकरादुद्भूता सत्कीर्तिसपद्यस्य सः। १९ विद्या केवलज्ञानम्, आनन्दोनन्तसुखं (केवलज्ञानाविनाभावी। पक्षे विद्यानन्दस्वामी च)। तस्योदयाय। २० युक्ता गौ.। २१ (समन्तभद्रैराचार्यैः प्रोक्ता सामन्तभद्री)। २२ सप्तभङ्गीविधिना इद्धा दीप्ता। २३ (अकलङ्कात् अकलङ्कदेवात् (अष्टशतीनामकमूलवृत्तिकारात्) प्रकाशते इति अकलङ्कप्रकाशा (अकलङ्क प्रकाशो यस्या इति वा)। २४ अस्मिन्नधिकारे प्रथमतः सर्वज्ञसिद्धिः, कृतानुमानाद्यैः। ततोर्हत एव सर्वज्ञत्वं समर्थितम्। ततो दृष्टेष्टाभ्या परेष्टबाधनम्। ततो भावाभावोभयैकान्तानि तत्त्वानि निराकुर्वताऽभावस्वरूपं स्पष्टं दर्शितम्। ततो भावाद्यनेकान्तसमर्थनं, स्याद्वादेन परस्पर विरोध. परिहृतश्च।

# अथ द्वितीयः परिच्छेदः।

श्रोतव्याष्टसहस्री श्रुतैः किमन्यैः सहस्रसंख्यानैः।

विज्ञायते ययैव स्वसमयपरसमयसद्भावः ॥ १ ॥

अद्वैतैकान्तपक्षेऽपि दृष्टो भेदो विरुध्यते। कारकाणां क्रियायाश्च नैकं स्वस्मात्प्रजायते ॥२४॥

सदाद्येकान्तेषु दोषोद्भावनमभिहितमाचार्यैः। केवलमद्वैतैकान्ताभ्युपगमान्न तावतानेकान्तसिद्धिरिति चेन्न, प्रत्यक्षादिविरोधात्। न हि कस्यचिदभ्युपगममात्रं प्रमाणसिद्धं क्रियाकारकभेदं प्रतिरुणद्धि क्षणिकाभ्युपगमवत्। नन्विदमर्थुक्तमेव सलक्ष्यते।— 'अद्वैतं ह्येकात्म्यं, द्वाभ्यामितं द्वीत. द्वीतमेव द्वैतं,[12] न द्वैतमद्वैतमिति व्याख्यानात्। तस्यैकान्तस्तदेवेत्यभिनिवेशः। तस्य पक्षः प्रतिज्ञाभ्युपगममात्रम्। तस्मिन्नपि दृष्ट' साक्षात्कृतोनुमितश्च कारकाणां कर्त्रादीनां क्रियायाश्च स्थानगमनादिरूपाया निष्परिस्पन्दस्वभावायाः परिस्पन्दरूपायाश्च भेदः प्रत्यक्षेणानुमानेन च विरुध्यते, तदभ्युपगममात्रस्य प्रत्यक्षादिप्रमाणसिद्धक्रियाकारकभेदप्रतिरोधित्वासभवात् क्षणिकत्वाभ्युपगमवदिति तात्पर्यव्याख्यानमकलङ्कदेवानाम्'। न हि कारकभेदः प्रत्यक्षादिनाऽद्वैतेऽपि विरुध्यते, पादपस्यैकस्य युगपत्क्रमेण वा कर्त्राद्यनेककारकात्मकत्वप्रतीतेः? क्रियानानात्वमप्येकस्य तथैव न प्रतिषिध्यते, देशाद्यपेक्षया गमनागमनयोः स्थानशयनयोर्वा सकृदपि निश्चयात्। तद्वदेकमपि परब्रह्म सकलक्रियाकारकभेदात्मकतया न विरोधमध्यास्ते, तथा प्रतिभासवैचित्र्येऽप्येकत्वाव्याघाताच्चित्रज्ञानवदित्यपरः सोऽप्येवं प्रष्टव्यः।—क्रियाकारकभेदप्रपञ्चः किमजन्मा जन्मवान्वा ? न तावदजन्मा, कादाचित्कत्वात्, यस्त्वजन्मा स न कादाचित्को यथात्मा, कादाचित्कश्चायं, तस्मान्नाजन्मेति बाधकसद्भावात्। जन्मवांश्चेत्कुतो जायते इति वक्तव्यम् ? परमपुरुषादेवेति चेत्कथमद्वैतसिद्धिः ? कारणकार्ययोर्द्वैतप्रसिद्धेः। क्रियादिकार्यस्य ब्रह्मणोनन्यत्वाददद्वैतमेवेति चेत्कथं स्वस्मादेव तस्य जन्म युज्यते ? कथं च कार्यादभिन्नस्य ब्रह्मणोऽकार्यत्वम् ? यतो नित्यत्वं स्यात्। परस्माज्जायते इति चेद्द्वैतसिद्धिः, पुरुषात्परस्य क्रियाकारकभेदहेतोरभ्युपगमात्। परस्यानाद्यविद्यारूपत्वादकिंचिद्रूपस्य द्वितीयत्वायोगान्न द्वैतसिद्धिरिति चेत्कथमकिंचिद्रूपस्य कारणत्वम् ? कार्यस्याप्यकिंचिद्रूपत्वाददोष इति चेत्किमिदानीं खरविषाणादश्वविषाणस्य जन्मास्ति ? नेति चेत्कथमविद्यात्मनः कारणादविद्यात्मककार्यस्योत्पत्तिः ? माहेन्द्रादिषु मायामयादेव पावकादेस्तथाविधधूमादिजन्मदर्शनाददोष इति चेन्न, तत्रापि पावकधू-

---

१ शास्त्रे. । २ अत्र बहवोऽद्वैतपक्षाः सन्ति पुरुषाद्वैतशब्दाद्वैतविज्ञानाद्वैतादिभेदा । तेषां सर्वेषामत्र ग्रहणम्। ३ चशब्दाद्विशेषणविशेष्यसंग्रहः । ४ ग्रन्थ । ५ ब्रह्मणः । ६ सदाद्येकान्तेषु दोषोद्भावनेन कथमनेकान्तसिद्धिर्भवेत् प्रत्यर्थिनोऽद्वैतस्य वर्तमानत्वादित्याशङ्कायामाहुर्जैनाः । ७ अद्वैतैकान्ताभ्युपगमस्य । ८ कर्तृभूतम् । ९ भाष्यस्य तात्पर्योद्घाटनपूर्वकं तत्रोक्तदूषणं परिहरन्नाहाद्वैतवादी । १० अनन्तरमेव वक्ष्यमाणतात्पर्यव्याख्यानम्। ११ प्रमाणप्रमेयाभ्यामितं निश्चितम्। १२ स्वार्थेऽण्। १३ दृष्टो भेदो विरुध्यते इति कारिकातात्पर्यमाश्रित्य वृत्तिकारेणोक्तं व्याख्यानमयुक्तमेव। कुतः ? एकत्र क्रियाभेदविरोधाभावो दृष्टोऽपि विरुध्यते यत इत्युक्ते आह तदभ्युपगमेति। तेन, अद्वैतैकान्तेनाभ्युपगममात्रस्य। १४ पर एवाह ( नन्विदमित्यत आरभ्य )। १५ वृक्षस्तिष्ठति कानने कुसुमिते वृक्षं लता सश्रिता वृक्षेणाभिहतो गजो निपतितो वृक्षाय देयं जलम्। वृक्षादानय मञ्जरीं कुसुमितां वृक्षस्य शाखोन्नता, वृक्षे नीडमिदं कृतं शकुनिना हे वृक्ष किं कम्पसे। १६ एकस्यापि देवदत्तस्य। १७ परब्रह्मण.। १८ यथा प्रतिभासवैचित्र्येऽपि चित्रज्ञानस्यैकत्वम्। १९ अद्वैतैकान्तविषये। २० क्रियादिकार्यम्। २१ निस्स्वरूपस्य मिथ्यारूपस्य। २२ अकिञ्चिद्रूपात्कारणात्। २३ ( अविद्याया अपि खरविषाणादविशेषात् )। २४ ऐन्द्रजालिकादिषु ( इन्द्रजालिकादिषु ) ग्रन्थेषु। २५ असत्यरूपात्।

माद्योः सर्वथा मायामयत्वासिद्धेः। न हि तत्प्रतिभासयोर्मायारूपत्वं, स्वसंवेदनसिद्धत्वात् । नापि वहिः-सद्द्रव्यादिरूपयोर्मायास्वभावत्वं, व्यभिचारित्वाभावात् । तद्विशेषाकारयोर्मायारूपत्वमिति चेन्न, तद्विविक्त-वस्तुव्यतिरेकेण मायायाः संभवाभावात्। तथा क्रियाकारकभेदप्रपञ्चाकारविविक्तपरब्रह्मव्यतिरेकेणाविद्यायाः संभवाभावे कथं वेदान्तवादिनामविद्यातः कार्यस्याविद्यात्मनो जनने स्वस्मादेव स्वस्य जन्म न भवेत् ? तच्च प्रमाणविरुद्धं न शक्यं व्यवस्थापयितुं नैरात्म्यवत् । क्रियाकारकभेदोयं न स्वतो जायते परतो वा। अपि तु जायते एवेति[12] [13]सुषुप्तायते, प्रतिपत्त्युपायाभावात्, दृष्टेष्टविरोधप्रसङ्गात् । न हि किंचित्स्वस्मात् परस्माच्चाजायमानं जन्मवदेव दृष्टमिष्टं वा, येन तथा प्रतिपत्त्युपायरहितं ब्रुवाणः सुषुप्तमिवात्मानं नाचरेत्। तस्माद्यदृष्टविरुद्धं तन्न समञ्जसं यथा नैरात्म्यम् । विरुध्यते च तथैवाद्वैतं क्रियाकारकभेदप्रत्यक्षादिभिः[15] । एकस्मिन्नपि क्रियाकारकभेदप्रत्यक्षादेः संभवात् स्वप्नसंवेदनवत् कथमद्वैतं विरुद्ध-मिति चेन्न, स्वप्नसंवेदनस्याप्येकत्वे तद्विरोधस्य तदवस्थत्वात् । [18]तत्रान्यदेव हि क्रियाविशेषसंवेदनं स्ववासनोत्थमन्यदेव च कारकविशेषसंवेदनं प्रत्यक्षमनुमानादि वा न पुनरेकमेव, [20]तद्धेतुवासनाभेदाभावप्र-सङ्गात्, जाग्रद्दशायामिव स्वप्नादिदशायामपि [22]पुंसोनेकशक्त्यात्मकस्य क्रियाकारकविशेषप्रतिभासवैचित्र्यव्यव-स्थितेः । कस्यचिदेकरूपस्यात्मगगनादेरप्यनेकान्तवादिनामनेकक्रियाकारकविशेषप्रतिभासालम्बनत्वसिद्धे-र्विरुद्धमेतत्प्रत्यक्षादिभिरद्वैतम् । [26]न हि करोति कुम्भं कुम्भकारो दण्डादिना, भुङ्क्ते पाणिनौदनमित्यादि प्रत्यक्षं भ्रान्तं येनाद्वैतस्य विरोधकं न स्यात् । सर्वत्र क्रियाकारकादिरूपं कथंचिद्भिन्नं, भिन्नप्रतिभासित्वा-न्यथानुपपत्तेरित्यनुमानं वा नानाजीवा इत्यादिप्रवचनं वा न विभ्रमाक्रान्तं येनाद्वैतं न विरुन्ध्यात् । स्यादाकूतं 'विवादापन्नं प्रत्यक्षादि मिथ्यैव, भेदप्रतिभासित्वात् स्वप्नप्रत्यक्षादिवत्' इति तदसत्, प्रकृतानुमाने पक्ष-हेतुदृष्टान्तभेदप्रतिभासस्यामिथ्यात्वे तेनैव हेतोर्व्यभिचारात् तन्मिथ्यात्वे तस्मादनुमानात्साध्याप्रसिद्धेः । पराभ्युपगमात्पक्षादिभेदप्रतिभासस्यामिथ्यात्वे न दोष इति चेन्न, स्वपराभ्युपगमभेदप्रतिभासेन व्यभि-चारात् । तस्यापि पराभ्युपगमान्तरादमिथ्यात्वाद्दोषाभावे स एव तद्भेदप्रतिभासेन व्यभिचार इति न [30]कंचिद्व्यवतिष्ठेत[31]' । कश्चिदाह 'ब्रह्माद्वैतस्य संविन्मात्रस्य स्वतःसिद्धस्य क्रियाकारकभेदप्रत्यक्षादीनां बाधकस्य भावात्तेषां[32] भ्रान्तत्वम् । ततो न [33]तद्विरोधकत्वम्' इति तदपि न साधीयः, तथा सति बाध्यबाधकयोर्भेदात्, द्वैतसिद्धिप्रसङ्गात् । न च परोपगममात्रात्तयोर्बाध्यबाधकभावः, परमार्थतस्तदभावापत्तेः प्रतिभासमात्रवत्प्र-तिभासमात्रविशेषस्यापि सत्यत्वसिद्धेरनेकान्तव्यवस्थानात् । [37]तदेकान्ततः पुरुषाद्वैतं प्रत्यक्षादिविरुद्धमेव ।

---

१ तत्प्रतिभासयोः । २ अन्त प्रमेयापेक्षया । ३ सद्रूपाव्यभिचारित्वस्य वेदान्तिनामप्यभ्युपगमात्, अन्यथा सत्ताया अपि व्यभिचारित्वेनावस्तुत्वप्रसङ्गात् । ४ वह्निधूमयो । ५ विविक्तं पृथग्भूतम् । ६ ( प्रायः सर्वत्र 'परमब्रह्म'शब्द एव लिखितो मूलपुस्तके ) । ७ अविद्यारूपब्रह्मणः कारणभूतात् । ८ क्रियाकारकादेः । ९ स्वस्मादेव स्वजन्म । १० क्षणिकत्ववत् । ११ परः । १२ इतो जैनो दूषयति परम् । इति ( चेत्तर्हीत्यर्थ. ) । १३ अद्वैतवादी । १४ अपि तु जायते इत्युक्तप्रकारेण । १५ क्रियाकारकादिषु भेदग्राहकप्रत्यक्षादिभिः । १६ यथैकस्मिन्स्वप्नज्ञाने गजतुरगादी-नामनेकेषा प्रतिभासनं तथा परब्रह्मण्येकस्मिन् घटपटादीना प्रतिभासेप्यद्वैते न विरुद्धं किंचित् । १७ अद्वैतपक्षे उक्तदोषस्य । १८ स्वप्नसंवेदने । १९ स्ववासनोत्थम् । २० अन्यथा ( एकमेव चेत्तर्हि ) । २१ वासनाभेदाभावश्च वेदान्तिभिरपि नेष्टः । २२ ब्रह्मणः । २३ घटादिविवर्तस्वरूपस्य । २४ एकस्य निरंशस्यात्माकाशादेरनेककारकाद्यालम्बनत्वं यथा तथा ब्रह्मणोप्यने-ककारकाद्यालम्बनत्वं भविष्यतीत्याशङ्कायामाह । २५ निरंशस्य । २६ अद्वैतं प्रत्यक्षादिविरुद्धं कथं भवेत्, प्रत्यक्षादीनां भ्रान्तत्वादित्युक्ते प्राहुर्जैनाः । २७ बहिरन्तर्वा वस्तुनि । २८ कथंचिद्भेदमन्तरेण । २९ तयोः स्वपराभ्युपगमान्तरयोर्भेदः कथम् ? पराभ्युपगमान्तरमेकमभ्युपगमश्च द्वितीयो भेद इति । ३० भेदप्रतिभासे । ३१ पक्षादिमिथ्यामिथ्यात्वम् । ३२ प्रत्यक्षादीनाम् । ३३ तेषा, क्रियाकारकभेदप्रत्यक्षादीनाम् । ३४ तस्य बाध्यबाधकभावस्य । ३५ तदभावापत्तिर्यतस्तत एव । ३६ कारकादिरूपस्य । ३७ तस्मात् ।

तथास्मिन्नद्वैतैकान्ते दूषणान्तरमुपदर्शयन्तः प्राहुः ।—

**कर्मद्वैतं फलद्वैतं लोकद्वैतं च नो भवेत् । विद्याऽविद्याद्वयं न स्याद्बन्धमोक्षद्वयं तथा ॥ २५ ॥**

लौकिकं[1] वैदिकं[2] च कर्मेति वा[3] कुशलमकुशलं च कर्मानुष्ठानमिति वा पुण्यं पापं च कर्मेति वा कर्मद्वैतं न स्यात् । तदभावादिहामुत्र च श्रेयः[4]प्रत्यवायलक्षणं फलद्वैतं न स्यात्, कारणाभावे कार्यस्यानुत्पत्तेः । ततः[5] एवेहलोकपरलोकलक्षणं लोकद्वैतं न स्यात् । कर्मादिद्वैतस्यानाद्यविद्योपदर्शितत्वाददोष इति चेन्न, धर्माधर्मद्वैतस्याभावे विद्याविद्या[6]द्वयस्यासंभवाद्बन्धमोक्षद्वयवत् । पूर्वा[7]विद्योदयादेव विद्याविद्याद्वयं बन्धमोक्षद्वयं च, परमार्थतस्तदसभवात् 'न बन्धोस्ति न वै मोक्ष इत्येषा परमार्थता' इति प्रवचनात् प्रतिभासमात्रस्य परब्रह्मण एव तात्त्विकत्वादिति चेन्न[8], नैरात्म्यस्यापि तात्त्विकत्वापत्तेस्तत्[9]कल्पनाया नैष्फल्याविशेषात् । सर्वो हि **प्रमाण[10]प्रत्यनीकं स्वमनीषिकाभिरद्वैतमन्यद्वा[11] किंचित्फलमुद्दिश्यारचयेत्, अन्यथा[12] तत्प्रति प्रवर्तनायोगात्प्रेक्षा[13]वृत्तेः । तथाहि । पुण्यपापसुखदुःखेहपरलोकविद्येतरबन्धमोक्षविशेषरहितं प्रेक्षापूर्वकारिभिरनाश्रयणीयम् । यथा नैरात्म्यदर्शनम् । तथा च प्रस्तुतम्[14] ।** तस्मात्प्रेक्षापूर्वकारिभिरनाश्रयणीयम् । इति[15] न तज्जिज्ञासापि श्रेयसी ।

स्यान्मतं "न ब्रह्माद्वैतं प्रमाणप्रत्यनीकत्वात् स्वमनीषिकाभिरारचितं, तस्यानुमानादागमाद्वा प्रमाणात्प्रसिद्धेः । तथा हि । यत्[16]प्रतिभाससमानाधिकरणं तत्प्रतिभासान्तःप्रविष्टमेव । यथा प्रतिभासस्वरूपम् । प्रतिभाससमानाधिकरणं च सर्वम् । इति हेतोः परब्रह्मसिद्धिः । न चायमसिद्धः, सुखं प्रतिभासते रूपं प्रतिभासते इति सर्वत्र प्रतिभाससमानाधिकरणत्वस्य प्रतीतेरन्यथा[17] सद्भावासिद्धेः । अप्रतिभासमानस्यापि सद्भावे सर्वस्य मनोरथसिद्धिप्रसङ्गान्न किंचित्[18]दसत्स्यात् । अथ[19] प्रतिभासव्यतिरिक्तस्य प्रतिभास्यस्यार्थस्यान्तर्बहिर्वोपचारात्प्रतिभाससमानाधिकरणत्वव्यवस्थितेः प्रतिभासस्वरूपस्य[20] मुख्यतो[21]पपत्तेरसिद्धो हेतुरिति मतं तदप्यसम्यक्[22], प्रतिभास्यप्रतिभासयोस्तद्भावा[23]नुपपत्तेः । प्रतिभासस्य[24] हेतुत्वात्प्रतिभास्योर्थ इति चेन्न[25], प्रतिभासमात्रस्याहेतुकत्वात्कस्यचित्तद्धे[26]तुत्वायोगात् । तद[27]हेतुकत्वम्, अकादाचित्कत्वात्[28], अन्यथा कदाचित्तद[29]भावप्रसङ्गात् । प्रतिभासा[30]लम्बनत्वात्प्रतिभास्योर्थो भवतीति चेत्कुतस्तस्य[31] प्रतिभासालम्बनत्वम् ? प्रतिभास्यत्वादिति चेत्परस्पराश्रयणम्[32] । प्रतिभासालम्बनत्वयोग्यत्वादिति चेत्तर्हि प्रतिभासस्वरूपमेव प्रतिभास्यं, तस्यैव[33] प्रतिभासालम्बनत्वोपपत्तेः सर्वत्र प्रतिभासस्य स्वरूपालम्बनत्वात्[34] । तथा च कथं विषयस्योपचरितं प्रतिभाससमानाधिकरणत्वं यतोसिद्धो हेतुः[35] स्यात् । ततः[36] एव नानैकान्तिको

---

१ कृष्यादि । २ नित्यनैमित्तिकभेदात् । ३ वाशब्द परस्परसमुच्चये । ४ श्रेय—प्रशस्त, प्रत्यवायो—विघ्नः । ५ कारणाभावे कार्यस्यानुत्पत्तिर्यत । ६ सम्यग्ज्ञानं विद्या मिथ्याज्ञानमविद्या । ७ अनादिकालीना या अविद्य तद्वशादेव ( न तु धर्माधर्माभ्याम् ) विद्याविद्यादिभेदप्रतिभासनमिति ब्रूमो वयमद्वैतिनः । ८ जैना । ९ तयोः परब्रह्मनैरात्म्ययो । नैरात्म्यकल्पना निष्फला चेत्तर्ह्यद्वैतकल्पनापि निष्फलैव अविशेषाद्वयो कल्पनयो । १० प्रमाणविरुद्धम् । ११ सर्वथा द्वैतम् । १२ फलं विना । १३ प्रेक्षापूर्वकारिण । १४ अद्वैतम् । १५ तज्जिज्ञासैव फलमित्युक्ते आह । १६ अन्तर्बहिर्वा वस्तु । १७ प्रतिभाससमानाधिकरणत्वाभावे । १८ खरविषाणादिकमपि । १९ जैनापेक्षया शङ्का । २० ज्ञानस्य । २१ प्रतिभाससमानाधिकरणत्वस्य । २२ अद्वैतिनोच्यते । २३ प्रतिभास्यप्रतिभासकभावानुपपत्तेः । २४ जैनः । २५ अद्वैती । २६ कस्यचिदर्थस्य प्रतिभासे अहेतुत्वात् । २७ प्रतिभासस्य प्रतिभास्यार्थाहेतुकत्वम् । २८ नित्यत्वात् । २९ ( तस्य प्रतिभासस्य ) । ३० जैनः । ३१ अद्वैती । ३२ प्रतिभासालम्बनत्वे सत्यर्थस्य प्रतिभास्यत्वम्, अर्थस्य च प्रतिभास्यत्वे प्रतिभासस्य प्रतिभास्यालम्बनत्वमिति । ३३ प्रतिभासस्वरूपस्य । ३४ स्वरूप ( प्रतिभासस्य )—मालम्बनं यस्य स स्वरूपालम्बन प्रतिभासस्तत्त्वात् । ३५ प्रतिभाससमानाधिकरणत्वादिति । ३६ विषयस्योपचरितं प्रतिभाससामानाधिकरण्यं नास्ति यतः ।

विरुद्धो वा, प्रतिभासान्तरऽप्रविष्टस्य कस्यचिदपि प्रतिभाससमानाधिकरणत्वायोगाद्धेतोर्विपक्षवृत्त्यभावात् । नाश्रयासिद्धिरपि हेतोः शङ्कनीया, सर्वस्य धर्मिणः[1] परब्रह्मण एवाश्रयत्वात् 'ब्रह्मेति ब्रह्मशब्देन कृत्स्नं वस्त्वभिधीयते । प्रकृतस्यात्मकार्त्स्न्यस्य[2] वै—शब्दः स्मृतये मतः' इति श्रुतिव्याख्यानात् । ततोनवद्याद्धेतोर्भवत्येवाद्वैतसिद्धिः । तथोपनिषद्वचनादपि 'सर्वं वै खल्विदं ब्रह्म' इत्यादिश्रुतिसद्भावात्, ततस्तद्भ्रान्ति[3]निराकरणात्" इति[4] ।

तदेतत्प्रतिविधित्सवः प्राहुः ।—

**हेतोरद्वैतसिद्धिश्चेद्द्वैतं स्याद्धेतुसाध्य[5]योः । हेतुना चेद्विना सिद्धिर्द्वैतं वाङ्मात्र[6]तो न किम् ॥२६॥**

ननु च प्रतिभाससमानाधिकरणत्वाद्धेतोः सर्वस्य प्रतिभासान्तःप्रविष्टत्वेन पुरुषाद्वैतसिद्धावपि न हेतुसाध्ययोर्द्वैतं भविष्यति, तादात्म्योपगमात्[7] । न च तादात्म्ये साध्यसाधनयोस्तद्भाव[8]विरोधः, सत्त्वानि[9]त्यत्व[10]योरपि तथा[11]भावविरोधानुषङ्गात् । कल्पनाभेदादिह साध्यसाधनधर्मभेदे प्रकृतानुमानेपि कथमविद्योदयोपकल्पितहेतुसाध्ययोस्तद्भाव[12]विघातः, सर्वथा विशेषाभावा[13]दिति चेन्न[14], शब्दादौ सत्त्वानित्यत्वयोरपि कथंचि[15]त्तादात्म्यात् सर्वथा तादात्म्यासिद्धेः, तत्सिद्धौ[16] साध्यसाधनभावविरोधात् । न चासिद्धमुदाहरणं[17] नाम, अतिप्रसङ्गात्[18] । ततो न हेतोरद्वैतसिद्धिः । हेतुना विनैवागममात्रात्तत्सिद्धिरिति चेन्न, अद्वैततदागम[19]योर्द्वैतप्रसङ्गात् । यदि पुनरागमोप्यद्वयपुरुषस्वभाव एव न ततो[20] व्यतिरिक्तो येन द्वैतमनुपज्यते इति मतम्, 'ऊर्ध्वमूल[21]मधःशाख[22]मश्वत्थं[23] प्राहुरव्ययम् । छन्दांसि[24] तस्य पर्णानि यस्तं वेत्ति स वेदवित्' इति वचनात् तदा[25] ब्रह्मवत्तदागमस्याप्यसिद्धत्वं स्यात्, सर्वथाप्यसिद्धस्वभावस्य[26] सिद्धत्वविरोधात् सिद्धासिद्ध[27]योर्भेदप्रसक्तेः[28] । तदेवं[29] यदसिद्धं तन्न हितेप्सुभिरहितजिहासुभिर्वा प्रतिपत्तव्यम् । यथा शून्यतैकान्तः तथा चासिद्धमद्वैतमिति । अत्र नासिद्धो [30]हेतुः, पुरुषाद्वैतस्यानुमानादागमाद्वा सिद्धत्वायोगात् । प्रतिभाससमानाधिकरणत्वानुमानात्तत्सिद्धिरिति चेन्न, तस्य विरुद्धत्वात्[31], प्रतिभासतद्विषयाभिमतयोः कथंचिद्भेदे सति समानाधिकरणत्वस्य प्रतीतेः सर्वथा प्रतिभासान्तःप्रविष्टत्वासाधनात् स्व[32]विषयस्य । न हि शुक्लः पट इत्यादावपि सर्वथा गुणद्रव्ययोस्तादात्म्ये सामानाधिकरण्यमस्ति । सर्वथाभेदवत् प्रतिभासस्वरूपं प्रतिभासते इत्यत्रापि न प्रतिभासतत्[33]स्वरूपयोर्लक्ष्यलक्षणभूतयोः सर्वथा तादात्म्यमस्ति, प्रतिभासस्य

---

१ ग्रामारामादेः । २ आत्मा—ब्रह्म, सर्वमात्मैवेति वचनात् । ३ उपनिषद्वाक्यादद्वैतसिद्धौ ब्रह्मणो वाच्यत्वं भविष्यतीत्याशङ्कायां तन्नेत्याशयेनाह ततस्तद्भ्रान्तीति । अद्वैतभ्रान्तिनिराकरणात् । ४ ( स्यान्मतमिति पूर्वेणान्वयः ) । ५ ( हेतुः प्रतिभाससमानाधिकरणत्वादिति । साध्यं तु 'प्रतिभासान्तःप्रविष्टम्' इति । अत्र हेतुसाध्ययोः सतोर्द्वैतमेव जातं, हेतुसाध्ययोर्द्वैतरूपत्वात् ) । ६ अस्माकं जैनानामपि वाङ्मात्रत एव द्वैतं किं न स्यात् ? । ७ हेतुसाध्ययोः । ८ साध्यसाधनभावविरोधः । ९ अन्यथेति शेष । १० शब्दोऽनित्यः, सत्त्वादित्यनयोर्हेतुसाध्ययोः ( सौगतमतापेक्षयोः ) । ११ तथाभावस्य, साध्यसाधनभावस्य । १२ तस्य साध्यसाधनभावस्य । १३ (बौद्धाभिमतकल्पनाभेदभिन्नसाध्यसाधनभावेन) । १४ जैनाः प्राहुः । १५ एकधर्म्यपेक्षया ( जैनमतापेक्षयेदं समर्थनमस्ति । अत्र शङ्का तु पूर्वं बौद्धमतमादाय कृता ) । १६ सर्वथा तादात्म्यसिद्धौ । १७ 'यथा प्रतिभासस्वरूपम्' इदमपि कथंचित्तादात्म्येन वर्तते न तु सर्वथा तादात्म्येन । १८ अन्वयदृष्टान्ते वाच्ये व्यतिरेकदृष्टान्तवाच्यत्वप्रसङ्गात् । अन्वये व्यतिरेकिणो दृष्टान्तस्योदाहरणत्वं भवेत् । १९ तस्य, अद्वैतस्य साधक आगमस्तदागमः । २० ब्रह्मणः । २१ ऊर्ध्वमन्त्यावस्था ( अद्वैतावस्था ) मूलं स्वरूपं यस्य । २२ पूर्वावस्था । २३ ब्रह्म । २४ वेदाः । २५ इतः प्राह जैनः । २६ आगमस्य ब्रह्मणो वा । २७ आगमस्य सिद्धत्वं ब्रह्मणोऽसिद्धत्वं चेत्तदा । २८ इति द्वैतापत्तिर्जाता । २९ अनुमानादागमाद्वा ब्रह्मसिद्ध्यभावप्रकारेण । ३० अद्वैतमसिद्धम्, अद्वैतत्वादित्यत्र अद्वैतत्वादिति हेतुः । ३१ प्रतिभाससमानाधिकरणत्वानुमानस्य साध्यविरुद्धसाधकत्वादित्यर्थः । ३२ प्रतिभासस्य । ३३ तस्य प्रतिभासस्य स्वरूपं तत्स्वरूपम् ।

साधारणासाधारणधर्माधिकरणस्य [1]स्वस्वरूपा[2]दसाधारणधर्मात्कथंचिद्भेदप्रसिद्धेरन्यथा तत्सामानाधिकरण्यायोगात् सुवर्णं सुवर्णमिति यथा सह्यविन्ध्यवद्वा तदेवं । यत्प्रतिभाससमानाधिकरणं तत् प्रतिभासात्कथंचिदर्थान्तरं यथा प्रतिभासस्वरूपं, प्रतिभाससमानाधिकरणं च [4]सुखनीलादि सर्वमिति [5]साध्यविपरीतसाधनाद्धेतोर्नाद्वैतसिद्धिः । सर्वं वै खल्विदं ब्रह्मेत्याद्याम्नायादपि द्वैतसिद्धिरेव स्यात्, [6]सर्वस्य प्रसिद्धस्याप्रसिद्धेन ब्रह्मत्वेन विधानात्, सर्वथा प्रसिद्धस्य [7]विधानायोगादप्रसिद्धवत् । [8]क्वचिदात्मव्यक्तौ प्रसिद्धस्यैकात्म्यरूपस्य ब्रह्मत्वस्य सर्वात्मस्वऽनात्माभिमते[9]षु च विधानाद्द्वैतप्रपञ्चारोपव्यवच्छेदेपि [10]तदागमा[11]द्व्यवच्छेद्यव्यवच्छेदकसद्भावसिद्धेः कथमद्वैतसिद्धिः ? [12]आम्नायस्य परब्रह्मस्वभावत्वेपि न ततस्तदद्वैतसिद्धिः, स्वभावस्वभाववतोस्तादात्म्यैकान्तानुपपत्तेः । [13]स्वसंवेदनमेव पुरुषाद्वैतसाधनमिति चेन्नैतदपि सारं, निगदितपक्षदोषोपनिपातात् । तथा हि । तत्सिद्धिर्यदि साधनात्साध्यसाधनयो[14]स्तर्हि द्वैतं स्यात् । [15]अन्यथाऽद्वैतसिद्धिवद्द्वैतसिद्धिः कथं न स्यात् ? स्वाभिलापमात्रादर्थसिद्धौ [16]सर्वं [17]सर्वस्य सिध्येत् । न हि स्वसंवेदनमपि साधनमा[18]त्मनोनन्यदेव [19]साधनत्वविरोधात् अनुमानागमवत्साध्यस्यैव साधन[20]त्वापत्तेः [21]प्रकृतानुमानागमयोरिव स्वसंवेदनप्रत्यक्षस्यापि साधन[22]स्याभावात् । स्वतः सिद्धं ब्रह्मेत्यभ्युपगमे द्वैतमपि स्वतः सकलसाधनाभावेपि किं न सिध्येत् ? तत्त्वोपप्लवमात्रं वा ? नैरात्म्यं वा ? स्वाभिलापमात्राविशेषात् । सर्वस्य सर्वमनोरथसिद्धिरपि दुर्निवारा स्यात् । [23]एतेनैतदपि प्रत्याख्यातं यदुक्तं बृहदारण्यकवार्तिके "आत्मापि सदिदं ब्रह्म मोहात्पारोक्ष्यदूषि[24]तम् । ब्रह्मापि स तथैवात्मा [25]सद्द्वितीयतयेक्ष्यते । १ । आत्मा ब्रह्मेति पारोक्ष्य[26]सद्द्वितीयत्वबाधनात् । [27]पुमर्थे निश्चितं शास्त्रमिति सिद्धं समीहि[28]तम् । २ ।" इति, मोहस्याविद्यारूपस्याकिंचिद्रूपत्वे [29]पारोक्ष्यहेतुत्वाघटनात् सद्द्वितीयत्वदर्श[30]ननि[31]र्बन्धनत्वासंभवात् [32]तस्य वस्तुरूपत्वे द्वैतसिद्धिप्रसक्ते[33]स्तत एव पारोक्ष्यसद्द्वितीयत्वयोर्बाधनात् पुमर्थे निश्चितं शास्त्रमित्येतस्यापि द्वैतसाधनत्वात्, [34]शास्त्रपुमर्थयोर्भेदाभावे साध्यसाधनभावासंभवात् ।

[35]अद्वैतं न विना द्वैतादहेतुरिव हेतु[36]ना ।
संज्ञि[37]नः प्रतिषेधो न प्रतिषे[38]ध्यादृते क्वचित् । २७ ।

कथं पुनर्हेतुना विनाऽहेतुरिवाद्वैतं द्वैताद्विना न सिध्यतीति निश्चितमिति चेदु[39]च्यते, अद्वैतशब्दः [40]स्वाभिधेयप्रत्यनीकपरमार्थापेक्षो [41]नञ्पूर्वा[42]खण्डपदत्वादहे[43]त्वभिधानवदित्यनुमानात् । अनेकान्त-

---

१ प्रतिभासमात्रं सत्त्वादिर्वा साधारणधर्म । असाधारणधर्मस्तु ज्ञानस्वरूपमचैतन्यं चेति । २ स्वस्य ज्ञानस्य स्वरूपमेवासाधारणो धर्मस्तस्मात् । ३ ज्ञाने ज्ञानस्वरूपमसाधारणं प्रतिभासते यथा तथा घटादिसत्त्वमपि प्रतिभासते । ४ अन्तर्बहिश्च । ५ अत्र साध्यमद्वैतम् । ६ चेतनाचेतनरूपस्य । ७ आगमेन । ८ न चागमाद् द्वैतप्रपञ्चारोपव्यवच्छेदव्यवस्था भविष्यतीत्याशङ्कायामाह । ९ अचेतनेषु । १० ब्रह्मत्वसाधकात् । ११ व्यवच्छेद्य ब्रह्म । व्यवच्छेदक आगम । १२ आगमस्य । १३ स्वस्य अद्वैतस्य संवेदनं पुरुषाद्वैते साध्ये हेतु । १४ ( साधनात्तर्हीति पूर्वेणैवान्वयः ) । १५ ( साधनेन विना यदि अद्वैतसिद्धिस्तर्हीत्यर्थ. ) । १६ ( स्वेष्टम् ) । १७ वादिन । १८ ब्रह्मण । १९ अभेदपक्षे । २० अभेदपक्षस्वीकारे । २१ प्रतिभाससमानाधिकरणत्वादिति । २२ पृथक्त्वेनाभावात् । कुत ? ब्रह्मणि प्रविष्टत्वात् । २३ तत्सिद्धिर्यदीत्यादिभाष्येण । २४ पारोक्ष्यदूषितं सद्रूपमिदं ब्रह्म अयं चात्मेति भेदरूपेण मोहात्प्रतिभातीत्यर्थं । २५ ( स द्वितीय इत्यस्य भावः सद्द्वितीयता ) । २६ उभयात्मकत्वेन प्रतीति· कुतो न स्यादित्युक्ते आह । २७ तर्हि शास्त्रं किं करोतीत्युक्ते आह । पुमर्थे पुरुषप्रयोजने पारोक्ष्यसद्द्वितीयत्वनिराकरणरूपे । २८ ब्रह्मात्मनोरैक्यम् । २९ परोक्षं प्रति पारोक्ष्यम् । ३० दर्शनं प्रतीत्यर्थ. । ३१ मोहस्य । ३२ मोहस्य । ३३ द्वैतप्रसक्तेरेव । ३४ शास्त्रस्य वस्तुरूपत्वे द्वैतप्रसक्तिरेव । ३५ प्रकारान्तरेणाप्यद्वैत दूषयति । ३६ विनेत्यनेन संबन्ध । ३७ 'द्वैत' इति संज्ञावतो द्वैतरूपस्य । ३८ द्वैतादे । ३९ जैनै· । ४० स्वस्य अद्वैतस्य । ४१ नञ्,विशेषणम् । ४२ एकार्थवाचकैकपदत्वात् । ४३ यन्नञ्पूर्वाखण्डपद तत्स्वाभिधेयप्रत्यनीकपरमार्थापेक्षं यथा हेतु· स्वाभिधेयप्रत्यनीकपरमार्थापेक्ष· ।

शब्देन व्यभिचार[1] इति चेन्न, तस्यापि सम्यगेकान्तेन[2] विनानुपपद्यमानत्वात् । एवममायादिशब्देनापि न व्यभिचारस्तस्य मायादिनाऽविनाभावित्वात् । तथा नञ्पूर्वग्रहणात् केवलेन[3] शब्देन व्यभिचारो निरस्तः, पदांशेना[4]खण्डग्रहणात् । अखरविषाणादि[5]शब्देन च न । ततो नात्र किंचिदतिप्रसज्यते, तादृशो[6] नञो वस्तुप्रतिषेधनिबन्धनत्वात् । न ह्यखण्डपदविशेषणस्य नञः कश्चिदवस्तु[7]प्रतिषेधनिबन्धनत्वमुपलब्धं, पदान्तरोपहितपदविशेषण[8]स्यैव तथा[9] प्रतीतेरखरविषाणमित्यादिवत् । अत[10] एव सर्वत्र प्रतिषेध्यादृते संज्ञिनः[11] प्रतिषेधाभावः प्रत्येतव्यः । न हि खरविषाणं संज्ञि[12] किंचिदस्ति येन तस्यापि सत एव कथंचित्[13] प्रतिषेधः प्रसज्यते । ननु पुरुषाद्वैते परमार्थतः प्रतिषेधव्यवहारासंभवात् परोपगतस्य द्वैतस्य परप्रसिद्धन्यायादेवानुमानादिरूपादभावः साध्यते । न[14] च स्वपरविभागोपि तात्त्विकस्तस्याविद्याविलासाश्रयत्वात् । ततो न कश्चिद्दोष[15] इति चेन्न[16], अविद्याया एव व्यवस्थापयितुमशक्तेः । 'ननु च न वस्तुवृत्तमपेक्ष्याऽविद्या व्यवस्थाप्यते, तस्यामवस्तुभूतायां प्रमाणव्यापारायोगात् । पर[17]ब्रह्मण्यविद्यावति अविद्यारहिते च विद्याया[18] विरोधा[19]दानर्थक्याच्च नाविद्याऽस्येत्यप्यविद्यायामेव स्थित्वा प्रकल्पनात्[20], ब्रह्माधारायास्[21]त्वविद्यायाः कथमप्ययोगात्[22] । यतश्चानुभवादविद्यासीति[23] ब्रह्मानुभूतिमत्[24]तत एव प्रमाणोत्थविज्ञानबाधिता सा तदबाधने तस्या अप्यात्मत्व[25]प्रसङ्गात् । तथा ब्रह्मण्यविज्ञाते तद[26]विद्याव्यवस्थानुपपत्तेर्बाधा[27]सद्भावात् विज्ञातेपि सुतरां तद्[28]बाधनादव्यवस्थानं, अबाधिताया[29] बुद्धेर्मृषात्वायोगात् । न चाविद्यावान्नरः कथंचिदविद्यां निरूपयितुमीशश्चन्द्रद्वयादिभ्रान्तिमिव जातितैमिरिकः । तदुक्तं "ब्रह्माऽविद्यावदिष्टं चेन्ननु दोषो महानयम्[30] । निरवद्ये[31] च विद्याया आनर्थक्यं प्रसज्यते । १ । नाऽविद्याऽस्येत्यविद्यायामेव स्थित्वा प्रकल्पते । ब्रह्माधारा त्वविद्येयं न कथंचन युज्यते । २ । यतोऽनुभवतो[32]ऽविद्या ब्रह्मासीत्यनुभूतिमत् । अतो मानो[33]त्थविज्ञानध्वस्ता साप्यन्यथात्मता[34] ।३। ब्रह्मण्यविदिते बाधान्नो[35]विद्येत्युपपद्यते । नितरां चापि विज्ञाते[36] मृषा धीर्नास्त्यबाधिता ।४। अविद्यावान-

---

१ कथं व्यभिचारः ? यतोऽनेकान्तशब्दोपि नञ्पूर्वाखण्डपदोस्ति परन्तु स्वाभिधेयप्रत्यनीकपरमार्थापेक्षो न । अतो व्यभिचार' । २ सुनयार्पितेन । ३ नञ्शब्दरहितेन 'द्वैत. माया' इत्यादिना । ४ गौरश्व इत्यादि पदम् । तस्यैवैकदेशः पदांशो, यथा गू, अश् इत्यादिः । ५ अखर इति नञ्पूर्वाखण्डपदं स्वाभिधेयप्रत्यनीकपरमार्थापेक्षं, न तु अखरविषाणादिशब्दः, अखण्डपदाभावात् । अत्र पदद्वयमस्ति खरो विषाणं च । न खरविषाणमखरविषाणम् ( अखण्डशब्देन पदांशोनेकपदसमुदायश्च व्यावर्त्यते ) । ६ अखण्डपदविशेषणस्य । ७ अवस्तु खरविषाणादि । ८ विषाणपदात्पदान्तरं खरपदं तेनोपहितं संबद्धं विषाणपदं तस्य विशेषणं नञ् तस्य । ९ तथा, अवस्तुप्रतिषेधनिबन्धनत्वेन । १० प्रागुक्तैर्व्यभिचारो नास्ति यत । ११ नामवतो वस्तुन. । १२ नीरूपत्वेन खरविषाणस्य संज्ञित्वाभावः । १३ पररूपापेक्षया । १४ अद्वैते द्वैतप्रतिषेधव्यवहारो यदि न स्यात्तदा स्वपरविभागस्तात्त्विक. कथं स्यादिति जैनेनोक्ते बौद्धः प्राह । १५ प्रतिषेध्यप्रतिषेधकादिलक्षणः । १६ इतो जैनैरुच्यते । १७ वस्तुवृत्तमपेक्ष्य नावस्थाप्यते इत्येतदेव समर्थ्यते परब्रह्मणीत्यादिना परैः । १८ श्रवणमनननिदिध्यासनरूपाया. । १९ अविद्याव्यवच्छेदके ब्रह्मणि अविद्यावतीष्टे सति महान् दोष स्यादिति भाव' । २० प्रकल्पनामात्राद्व्यवस्थापयितुमशक्ते. । यथान्धकारे स्थित्वाऽन्धकारो नास्तीति वक्तुमशक्यम् । अस्याविद्यास्ति नास्तीति वा अविद्यायां स्थित्वैव प्रकल्पनेत्येवमपि अविद्या व्यवस्थापयितुमशक्येति भाव । २१ ब्रह्माधारायाः, ब्रह्मकारणिकाया' । २२ ब्रह्मप्रविष्टस्य पुंसः अविद्याया व्यवस्थापनं न घटते तदाऽविद्याविनाशादित्यर्थः । २३ अहं ब्रह्म अविद्यासीति । २४ यदैवाविद्यास्तीति ब्रह्मानुभूतिमत्तदैवाविद्या नश्यतीति भाव । यथा नेदं रजतमिति ज्ञाने विपर्ययो नश्यति । तत एव प्रमाणोत्थज्ञानबाधिता सा । २५ ब्रह्मत्वप्रसङ्गादित्यर्थः । २६ तस्मिन् । २७ अविद्यायाः । २८ ब्रह्मणि विज्ञातेप्यविद्या प्रतीयते चेत्तर्हि सा विद्यैवेति भावः । २९ अविद्याया अव्यवस्थानं कुत इत्युक्ते आह । ३० वक्ष्यमाणः । ३१ अविद्यारहिते ब्रह्मणि । ३२ यतो अविद्यावानहं पुरुषोस्मि । ब्रह्मानुभूतिमत्, विद्यावानिति । ३३ मानं प्रमाणम् । ३४ ब्रह्मता । ३५ अविद्यायाः स्वसंवेदनेन ज्ञानेन बाधासंभवादविद्यापि विद्या एवेति शेष । ३६ ब्रह्मणि ।

विद्यां तां न निरूपयितुं क्षमः। वस्तुवृत्तमतोऽपेक्ष्य नाविद्येति निरूप्यते[1]।५। वस्तुनो[2]ऽन्यत्र[3] मानानां[4] व्यापृतिर्न[5] हि युज्यते। अविद्या[6] च न वस्त्विष्टं मानाघाताऽसहिष्णुतः। ६। अविद्याया अविद्यात्वे इदमेव च लक्षणम्। मानाघातासहिष्णुत्व[7]मसाधारणमिष्यते। ७।" न चैवमप्रामाणिकायामविद्यायां कल्प्यमानायां कश्चिद्दोषः, तस्याः[8] संसारिणः स्वानुभवाश्रय[9]त्वाद्वैतवादिन एव दृष्टादृष्टा[10]र्थप्रपञ्चस्य प्रमाणबाधितस्य कल्पनायामनेकविधाया बहुविधदोषानुषङ्गात्। तदप्युक्तं "त्वत्पक्षे[11] बहु[12] कल्प्यं स्यात् सर्वं मानविरोधि च। कल्प्याऽविद्यैव मत्पक्षे[13] सा[14] चानुभवसंश्रया[15]"। १। इति कश्चित्[16] सोपि न प्रेक्षावान्, सर्वप्रमाणातीतस्वभावायाः स्वयमविद्यायाः स्वीकरणात्। न हि प्रेक्षावान् सकलप्रमाणातिक्रान्तरूपामविद्या विद्यां वा स्वीकुरुते। न च प्रमाणानामविद्याविषयत्वमयुक्तं, विद्यावदविद्याया अपि कथंचिद्वस्तुत्वात्[17]। तथा[18] विद्यात्वप्रसङ्ग[19] इति चेन्न किंचिदनिष्टं, यथा[20] यत्राविसंवादस्तथा तत्र प्रमाणतेत्यकलङ्कदेवैरप्युक्तत्वात्। बहिःप्रमेयापेक्षया तु कस्यचित्[21]संवेदनस्याविद्यात्वं बाधकप्रमाणावसेयम्। कथमप्रमाणे[22]विषयः[23]? तद्बाधकं[24] पुनरर्थान्यथात्वसाधकं[25]मेव प्रमाणमनुभूयते इति वस्तुवृत्त[26]मपेक्ष्यैवाविद्या निरूपणीया। न च कथंचिद्विद्यावतो[27]प्यात्मनः प्रतिपत्तुरविद्यावत्त्वं विरुध्यते, यतोयं[28] महान् दोषः स्यात्। नाप्यविद्याशून्यत्वे[29] कथंचिद्विद्यानर्थक्यं प्रसज्यते, तत्फलस्य सकलविद्यालक्षणस्य[30] भावात्। न चाविद्यायामेव स्थित्वाऽस्येयमविद्येति कल्प्यते, सर्वस्य[31] विद्यावस्थायामेवाविद्येतरविभागनिश्चयात् स्वप्नाद्यऽविद्यादशायां तदभावात्[32]। ततश्चात्म[33]द्वारेवाविद्या युक्तिमती। यस्मादनुभवादविद्यावानहमस्मीत्यनुभववानात्मा तत एव कथंचित् प्रमाणोत्थविज्ञानाऽबाधिता तद[34]विद्यापि सैवेत्या[35]त्मताविरोधा[36]भावात्। न चात्मनि कथंचिद[37]विदितेप्यविद्येति नोपपद्यते[38], बाधाऽविरोधात्[39]। कथंचिद्[40]विज्ञातेपि वाऽविद्येति नितरां घटते, विदितात्मन एव तद्बाधकत्व[41]विनिश्चितेः कथंचिद्बाधिताया[42] बुद्धेर्मृषात्वसिद्धेः। न च कथंचिद[43]विद्यावानेव नरस्तामविद्या निरूपयितुमक्षमः, सकल[44]प्रेक्षावद्व्यवहारविलोपात्। यदपि[45] प्रमाणाघातासहिष्णुत्वमसाधारणलक्षणमविद्यायास्तदपि प्रमाणसामर्थ्यादेव निश्चेतव्यम्। इति न प्रमाणातिक्रान्ता काचिदविद्या नाम यदभ्युपगमे ब्रह्माद्वैतं न विरुध्येत[46] द्वैतप्रतिषेधो वा द्वैताविनाभावी न भवेत्[47]। तदेतेन शब्दाद्वैतमपि निरस्तं, विज्ञानाद्यद्वैतवत्तस्यापि

---

१ यतः। अत कारणाद्वस्तुभूतमाश्रित्याऽविद्येति न कथ्यते किन्त्वविद्या अवस्तुभूतेति। २ ब्रह्मण। ३ अवस्तुनि। ४ प्रमाणानाम्। ५ प्रवृत्ति। ६ अविद्या पुनरिष्टमभिमतं वस्तु न भवति। कस्मात्? यत प्रमाणपरीक्षां न सहते। ७ मानाघातासहिष्णुत्वमेवाविद्याया अविद्यारूपत्वे लक्षणम्। ८ भवतामविद्याया.। ९ स्वानुभव आश्रयो यस्य। १० दृष्टा देशकालाद्या अदृष्टा. पुण्यपापाद्या। ११ द्वैतवादिपक्षे स्याद्वादपक्षे वा। १२ बहु स्वर्गादि। १३ ( अद्वैतिपक्षे )। १४ अविद्या। १५ ( अविद्यां ससारी स्वयमेवानुभवतीत्यर्थ. )। १६ ( अद्वैती )। १७ भेदस्य स्वग्रहणप्रकारेण। १८ भेदस्य स्वग्रहणप्रकारेण। १९ यतोऽविद्याया अपि सत्यत्वप्रसङ्ग। २० स्वग्रहणप्रकारेण। २१ शुक्तिकादौ रजतादिज्ञानस्य। २२ अन्त.प्रमेयापेक्षयाऽप्रमाणविषयत्वमविद्याया केवलम्। २३ न सर्वथा प्रमाणाविषयोऽविद्येत्यर्थ। २४ तद्बाधकं प्रमाणं किमिति पृष्टे प्राह। २५ यथाप्रतिभातस्यार्थस्यान्यथात्वसाधक वैपरीत्यसाधकम्। २६ पारमार्थ्यम्। २७ सम्यग्ज्ञानवत। २८ पूर्वोक्त। २९ अविद्यारहितत्वे सम्यग्मतिश्रुतज्ञानयुक्तत्वे इत्यर्थ। ३० सपूर्णमतिश्रुतज्ञानरूपस्य। ३१ जनस्य। ३२ अविद्येतरविभागाभावात्। ३३ आत्मा–ब्रह्म। ३४ तस्य अनुभववत आत्मनोऽविद्या। ३५ विद्यैव। अविद्याया स्वसवेदनज्ञानेन बाधनासभवात्। ३६ आत्मतालक्षणस्य विरोधत्वाभावादित्यर्थ। ३७ क्षणक्षयादिरूपेण। ३८ (कुत्रचिदज्ञानविशिष्टेप्यात्मनि अविद्योत्पत्तौ न क्षति. )। ३९ रजतज्ञानादौ बाधाया अविरोधात्। ४० चैतन्यादिरूपेण। ४१ तस्या अविद्यायाः। ४२ बाह्यप्रमेयापेक्षया। ४३ बाह्यप्रमेयापेक्षया। ४४ अन्यथेति शेष। ४५ त्वया प्राक्कथितम्। ४६–४७ काकु।

निगदित[1]दोषविषयत्वसिद्धेः प्रक्रियामात्रभेदात्, तद्व्यवस्थानुपपत्तेः,स्वपक्षे[2]तरसाधकबाधकप्रमाणाभावाविशेषात् स्वतःसिद्ध्ययोगाद्गत्यन्तराभावाच्च । इत्यलमतिप्रसङ्गिन्या संकथया, सर्वथैवाद्वैतस्य निराकरणात् ।

इष्ट[3]मद्वैतैकान्तापवारणं, पृथक्त्वैकान्ताङ्गीकरणादिति मा[4]ऽवदीधरत् । यस्मात्,—

पृथक्त्वैकान्तपक्षेपि पृथक्त्वा[5]दपृथक् तु तौ ।
पृथक्त्वे न पृथक्त्वं स्यादनेकस्थो ह्यसौ गुणः । २८ ।

पृथगेव द्रव्यादिपदार्थाः[6] प्रमाणादिपदार्थाश्च[7], पृथक्प्रत्ययविषयत्वात् सह्यविन्ध्यवदित्येकान्तः पृथक्त्वैकान्तः,सजातीयविजातीयव्यावृत्ता निरन्वयविनश्वरा बहिरन्तश्च परमाणवः इत्यभिनिवेशश्च[8] । तत्र[9] येषां[10] पृथक्त्वगुणयोगात् पृथक् पदार्था इत्याग्रहस्ते एव तावत्प्रष्टव्याः ।—किं पृथग्भूतपदार्थेभ्यः पृथक्त्वं गुणः पृथग्भूतोऽपृथग्भूतो वा ? न तावदुत्तरः पक्षो गुणगुणिनोर्भेदोप[11]गमात् । नापि प्रथमः पृथग्भूतपदार्थेभ्यः पृथक्त्वस्य[12] पृथग्भावे तेषा[13]मपृथक्त्वप्रसङ्गात् । पृथक्त्वस्य तद्[14]गुणत्वात् पृथ[15]गिति प्रत्ययस्य तदालम्बनत्वान्न तेषामपृथक्त्वप्रसङ्ग इति चेन्न, तस्य[16] कथंचित्तादात्म्या[17]पत्तेः पृथक्त्वैकान्तविरोधात् । तद्[18]गुणगुणिनो[19]स्तादात्म्ये घटपट[20]वद्व्यपदेशोपि मा भूत्, संबन्धनिबन्धनान्तराभावात् । कथंचित्तादात्म्यमेव हि तयोः संबन्धनिबन्धनं, न ततोन्यत्संभवति । समवायवृत्तिः संभवतीति चेन्न, समवायस्य कथंचिदविष्व[21]ग्भावा[22]दपरस्य प्रतिक्षेपात् । पृथक्त्व[23]मन्यद्वा पृथग्भूत[24]म[25]नंशमनेकस्थेषु निष्पर्यायं वर्तते[26] इति दुरवगाहम् । न ह्यनेकदेशस्थेषु हिमवद्विन्ध्यादिषु सकृदेकः परमाणुर्वर्तते इति संभवति । गगनाद्य[27]नंश[28]मपि वर्तते[29] इति चेन्न, तस्यानन्तप्रदेशादितयानंशत्वासिद्धेरनाश्रयतया क्वचिद्[30]वृत्त्य[31]भावा[32]च्च । सत्तैका[33] युगपदनेकत्र वर्तते इत्यप्यसिद्धं, तदनन्तपर्यायत्वसाधनात् स्वपर्यायेभ्योत्यन्तभेदासिद्धेश्च समवायवृत्त्य[34]नुपपत्तेः । द्रव्यत्वादिसामान्य[35]मपि नैकमनंशमनेकस्वव्यक्तिवृत्ति सकृत्प्रसिद्धं, तस्यापि स्वाश्रयात्मकतया कथंचित्सांशत्वानेकत्वप्रतीतेः । संयोगविभागपरत्वापरत्वान्यपि नानेकवृत्तीनि[36] युगपदुपपद्यन्ते प्रतियोग्या[37]दिसंयोगादिपरिणाम[38]प्रतीतेः सादृश्योपचारादेकत्वव्यवहारात् । द्वित्वा[39]दिरनेकद्रव्यवृत्तिर्युगपदित्यप्यप्रातीतिकं, प्रतिव्यक्ति सकलसंख्यापरिणाम[40]सिद्धेः क्वचिदेकत्र[41] तद[42]सिद्धौ परापेक्षया[43]पि तद्विशेष[44]प्रतीत्ययोगात् खरविषाणवत् । ततो न पृथक्त्वमनेकत्र युगपद्वर्तते गुणत्वाद्रूपा[45]दिवत् । न संयोगादिभिरनेकान्तः, तेषामप्यनेकद्रव्यवृत्तीनां सकृदनंशाना-

१ अद्वैतैकान्तपक्षेपीत्यादिना पूर्वमुक्तो दोषः । २ तद्व्यवस्थानुपपत्तिं स्वपक्षेत्यादिनाहुः । ३ अथ नैयायिकवैशेषिकौ शङ्केते । ४ इत्यपि सूरिर्नावधारयामास । ५ पृथक्त्वाद् गुणात् । द्रव्यगुणौ यदि अपृथक् तदा स्वमतविरोधः । पृथक्त्वे च सति द्रव्यगुणौ पृथग् न स्याता यतोसौ पृथक्त्वगुणोऽनेकस्थोस्ति । ६ वैशेषिकमतापेक्षया । ७ नैयायिकमतापेक्षया । ८ बौद्धमतापेक्षया । ९ त्रिषु मध्ये । १० वैशेषिकनैयायिकानाम् । ११ सर्वथा । १२ गुणस्य । १३ द्रव्यगुणादीना पदार्थानाम् । १४ तेषा द्रव्यादीना गुणत्वात्तद्गुणत्वात् । १५ तद्गुणत्वे हेतुमाह । १६ पृथक्त्वस्य । १७ द्रव्येण सह । १८ तादात्म्यानभ्युपगमे दूषणमाह । १९ सर्वथा भेदे । २० यथा घटपटयोर्गुणगुणित्वव्यपदेशाभाव । २१ अविष्वक्, तादात्म्यमित्यर्थ । २२ यद्येष कथंचिदविष्वग् ( तादात्म्य ) भावरूपो न स्यात्तदा अपरस्य ततोन्यप्रकारकस्य निराकरणं कृतम् । २३ पृथक्त्वादन्यद्गुणान्तरं सयोगादि । २४ पदार्थेभ्यः । २५ द्रव्यादिभ्य. पृथक्, स्वयमंशकल्पनया रहितं, तथाप्यनेकेषु युगपद्वर्तते इति परस्परं विरुद्धं, अनेकत्र वर्तमानस्य तावद्धा भेत्तुं सुशकत्वात् । इत्यादि । २६ युगपत् । २७ आदिपदेन कालदिगादिग्रहणम् । २८ एकमपि नैयायिकादिमतापेक्षया । २९ अनेकत्र हिमवद्विन्ध्यादिषु । ३० एकत्रापि पदार्थे । ३१ वृत्ति समवाय । ३२ ( आकाशस्य ) । ३३ सत्ता एका अनंशा स्वपर्यायेभ्यो भिन्ना समवायेन सर्वत्र वर्तते इत्युक्ते सत्याहुर्जैना । ३४ समवायेनापि वृत्तिर्न सत्ताया. । ३५ अपरसामान्यमित्यर्थ· । द्रव्यत्वादेरपि द्रव्यस्वभावतया द्रव्यस्यानेकत्वे तदाश्रितद्रव्यत्वादेरप्यनेकत्वप्रसिद्धेरित्यर्थ । ३६ नैयायिकैरेतानि एकत्वे सत्यनेकवृत्तीनि मतानि परंतु न जैनै. । ३७ आधारमाधारं प्रति । ३८ परिणामो भेद । अर्थद्वयधर्मत्वेन द्वौ द्वौ संयोगौ स्याता नत्वेक इत्यर्थः । ३९ निरंशत्वेपि द्वित्वादिर्गुणो घटद्वयादिषु वर्तते इति नैयायिकशङ्कायामाहुर्जैना· । ४० परिणामो भेदः । ४१ खरविषाणादौ । ४२ तस्या. संख्याया असिद्धौ । ४३ अपरसंख्येयापेक्षया । ४४ तद्विशेषो द्वित्वादि· । ४५ परमतापेक्षया सकलस्य गुणस्य निरंशत्वमस्ति यतस्ततो गुणत्वादिति सामान्ये नोक्तो हेतुः ।

मसिद्धेः । तदनेन पृथक्त्वैकान्तपक्षेपि पृथक्[1]त्ववतोः पृथक्त्वात्पृथक्त्वे तौ तद्वन्तावपृथगेव स्याताम् । त[2]था च न पृथक्त्वं नाम गुणः स्यात्, एकत्र तद्[3]वति तदनभ्युप[4]गमात् । अनेकस्थो ह्यसौ गुण इति कारिका-व्याख्यानं स्थित[5]पक्षदूषणपरं प्रकाशितं प्रतिपत्तव्यम् ।

सांप्रतं निरन्वयक्षणिकलक्षणपृथक्त्वपक्षे दूषणमाविर्भावयितुमनसः सूरयः प्राहुः ।—

**संतानः समुदायश्च साधर्म्यं च निरङ्कुश[6]ः ।**
**प्रेत्यभावश्च तत्सर्वं न स्यादेकत्वनिह्नवे । २९ ।**

जीवादिद्रव्यैक[7]त्वस्य निह्नवे संतानो न स्याद्भिन्नसंतानाभिमतक्षणवत् । यथैकस्कन्धावयवानामेकत्वप-रिणामापलापे समुदायो न स्यान्नानास्कन्धावयववत् तथा स[8]धर्मत्वाभिमतानां सदृशपरिणामैकत्वापह्नवे साधर्म्यं न स्याद्विसदृशार्थवत् । मृत्वा पुनर्भवनं प्रेत्यभावः । सोपि न स्यादुभयभवानुभाव्येकात्माऽपाकरणे न[10]नात्मवत् । चशब्दाद्दत्तग्र[11]हादि सर्वं न स्यात्तद्वत् । न[12] च त[13]दभावः शक्यः प्रतिपादयितुं, सकलबाधक-शून्यत्वेन निरङ्कु[14]शत्वात् ।

ननु चापरामृष्टभेदा[15]ः कार्यकारणक्षणा एव संतानः । स चैकत्वनिह्नवेपि घटते एवेत्यपि [16]ये समा-चक्षते तेषामपि **कार्यकारणयोः पृथक्त्वैकान्ते कार्यकालमात्मान[17]मनर्प[18]यतः कारणत्वासंभवात्तदनु-त्प[19]त्तेः कुतः संततिः ?** न[20]नु कार्यकाले स[21]तोपि कारण[22]त्वे तत्कारणत्वानभिम[23]तस्य कार्यकालमात्मानं नयतः सर्वस्य तत्कारणत्वप्रसङ्गः । का[24]र्याकारेण प्रा[25]गसतः सद्द्रव्यादिरूपेण प्राक्कार्यकाले च सतस्त[26]त्कार्यस्योत्प[27]त्तौ खरादिम[28]स्तके वि[29]षाणादेरुत्पत्तिः किन्न स्यात् ? गवादिशिरसीव तत्रापि त[30]स्य विषाणाद्याकारतया प्रागस-त्त्वस्य सद्द्रव्यादिरूपतया सत्त्वस्य चाविशेषात् । तदुत्पत्तिकारणस्य दृष्टस्यादृष्टस्य चाभावात् तत्र न तस्यो-त्पत्तिरिति व[31]चने परेषा[32]मपि प्रागसत्त्वैकान्ताविशेषेपि कार्यस्य पूर्वं सति कारणे जन्म नासतीति न किंचि-दतिप्रस[33]ज्यते, तदन्वयव्यतिरेकानुविधाननिबन्धनत्वात् तत्कारणत्वस्य[34] । न च निरन्वयक्षणिकत्वेपि कार्यस्य कारणान्वयव्यतिरेकानुविधानमसंभाव्यं, स्वकाले सति कारणे कार्यस्योत्पत्तेरसत्यनुत्पत्तेः प्रतीयमानत्वात् स्वदेशापेक्षान्वयव्यतिरेक[35]वत् । तदुक्तम् " अन्वयव्यतिरेका[36]द्यो य[37]स्य दृष्टोनुवर्तकः । स्वभावस्तस्य[38] तद्धेतुर[39]तो[40] भिन्नान्न संभवः " इति । ततोऽव्यभिचारेण कार्यकारणभूता एवापरा[41]मृष्टभेदाः क्षणाः संतानो युक्तः । इति क[42]श्चित् सोपि न प्रतीत्यनुसारी, त[43]था बुद्धेतरचि[44]त्तानामप्येकसंतानत्वप्रसङ्गात्

१ पदार्थयो. । २ एकत्वे सतीत्यर्थ । ३ पृथक्त्ववति । ४ तस्य पृथक्त्वस्य न्यायबलेन स्याद्वादिभिरस्वीकारात् । ५ स्थितः, अक्षणिक इत्यर्थ । ६ अस्खलितरूपो निर्बाध इति सर्वत्र संबन्धनीय । ७ एकत्वमनुगताकार इत्यर्थ । ८ विसदृशपदार्थवत् । ९ सधर्मत्वं सादृश्यम् । १० ( नाना जीवा यथा परस्पर परस्वरूप न परिणमन्ते ) । ११ पूर्वं दत्तस्य पश्चाद्ग्रहणं दत्तग्रह. । आदिपदेन भुक्त्वा व्रजतीत्यादिविषयो ग्राह्य । १२ सर्वं मा भवत्वित्युक्ते आह । १३ पुनर्भवदत्तग्रहाद्यऽभाव । १४ पूर्वोक्ताना सन्तानसमुदायादीनाम् । १५ भेदस्तु परस्परं वर्तते परतु ज्ञायते नेत्यर्थ । १६ बौद्धा । १७ स्वरूपम् । १८ कारणस्य । १९ कार्यानुत्पत्ते । २० सौगतशङ्का । २१ यस्य कस्यचित् । २२ अङ्गीक्रियमाणे । २३ घटादिकं प्रति रासभादे । २४ पुन सौगत एवाह । हे जैन ! । २५ उत्पत्ते प्राक् । २६ विवक्षितकार्यस्य । २७ ( एव जैनैरङ्गीक्रियमाणायाम् ) । २८ कारणरूपे । २९ कार्यस्य । ३० खरादिमस्तकावयवलक्षणकारणस्य । ३१ ( जैनानाम् ) । ३२ सौगतानाम् । ३३ विवक्षितकारणाद्विवक्षितस्य कार्यस्य यथोत्पत्तिस्तथा अविवक्षितकारणादविवक्षितकार्यस्योत्पत्तिरपि किन्नेत्याद्यतिप्रसङ्ग-शङ्काया नावकाश इत्यर्थ. । ३४ तत्, विवक्षितं कारणत्वं यस्य कार्यस्य तत्तस्य, कार्यस्येत्यर्थ. । ३५ स्वदेशस्यापेक्षा यस्य कारणस्य तत्स्वदेशापेक्षं कारणं तस्यान्वयव्यतिरेकौ यथा घटेते । स्वदेशे सति कारणे कार्यस्योत्पत्तिरसति च नास्ति यथे-त्यर्थ. । ३६ कार्यस्वभाव । ३७ कारणस्य । ३८ कार्यस्य । ३९ स कारणभूतो हेतुर्यस्य कार्यस्वभावस्य । ४० अत, कारणभूताद्यद्भिन्नमकारणं तस्मान्न संभव कार्यस्य । ४१ अपरामृष्ट., असपृक्त. । ४२ बौद्ध । ४३ अव्यभिचारेण कार्य-कारणभूतानामेकसंतानत्वप्रकारेण । ४४ बौद्धाना चित्तक्षणेभ्य. ( ज्ञानपर्यायेभ्य. ) सुगतचित्तमुत्पद्यते तदुत्पत्तिमत्त्वात्त-त्रापि कार्यकारणभावोस्तु ( यतो बौद्धचित्तानि कारणानि बुद्धचित्तं कार्यम् । )

तेषामव्यभिचारेण[1] कार्यकारणभूतत्वाविशेषात् । निरास्रवचित्तोत्पादात्पूर्वं बुद्धचित्तस्यापि[2] संतानान्तरचित्त-[3]कारणत्वाभावान्न तेषामव्यभिचारी कार्यकारणभाव इति चेन्न, यतः प्रभृति तेषां कार्यकारणभावस्तत्प्रभृतितस्तस्याव्यभिचारादन्यथा बुद्धचित्तस्यासर्वज्ञत्वप्रसङ्गात् । नाऽननुकृतान्वयव्यतिरेकं कारणं, नाकारणं[4] विषय इति वचनात् । स्यान्मतं, येषामग्राह्यग्राहकत्वे[5] सत्यऽव्यभिचारी कार्यकारणभावस्तेषामेकसंतानत्वोपगमान्न दोष इति चेत्तदप्ययुक्तं, समनन्तरप्रत्ययेनापि[6] सह बुद्धचित्तस्यैकसंतानतापायप्रसक्तेः, तस्य बुद्धचित्तेनाग्राह्यत्वे तस्यासर्ववेदित्वापत्तेः । समनन्तरप्रत्ययस्य[8] समनन्तरत्वादेव बुद्धचित्तेन सहैकसंतानत्वमिति चेत् कुतस्तस्य समनन्तरत्वम् ? तस्याव्यभिचारिकारणत्वादिति चेन्न, सर्वार्थानां तत्समनन्तरत्वप्रसङ्गात् । एकसंतानत्वे सति कारणत्वादिति[10] चेत्सोयमन्योन्यसंश्रयः । सिद्धे समनन्तरप्रत्ययत्वे तस्यैकसंतानत्वेन कारणत्वसिद्धिस्तत्सिद्धौ च समनन्तरप्रत्ययत्वसिद्धिरिति । स्याद्वादिनां[11] कस्तर्ह्येकः संतान इति चेत् **पूर्वापरकालभाविनोरपि[12] हेतुफलव्यपदेशभाजोरतिशयात्मनोरन्वयः[13] संतानः । क्वचित्क्षणान्तरे[14] नीललोहितादिनिर्भासचित्रैकसंवेदनवत्कथंचिदेकत्वमेव भवितुमर्हति[15] ।** न च साध्यविकलं चित्रज्ञानमुदाहरणं तस्यैकत्वसिद्धेः । **तदवयवपृथक्त्वकल्पनायां[16] चित्रनिर्भासो मा भूत् पृथग्वर्णान्तरविषयानेकसंतानैकक्षणवत्[17][18][19] । तत्र[20] प्रत्यासत्तिविशेषः कथंचिदैक्यात्[21]कोऽपरः स्यात् ?** देशप्रत्यासत्तेः शीतातपवातादिभिर्व्यभिचारात्[22], कालप्रत्यासत्तेरेकसमयवर्तिभिरशेषार्थैरनेकान्तात्, भावप्रत्यासत्तेरेकार्थो-[23][24]द्भूतानेकपुरुषज्ञानैरनैकान्तिकत्वाद् द्रव्यप्रत्यासत्तिरेव परिशेषात् संभाव्यते । सा चैकद्रव्यतादात्म्यलक्षणैर्वा-[25]ऽऽप्रत्यासत्तिविशेषः । इति कथंचिदैक्यमेवैकत्वव्यवहारनिबन्धनं[26] चित्रज्ञानस्य, **अन्यथा[27] वेद्यवेदकाकारयोरपि पृथक्त्वैकान्तप्रसङ्गात्[28] । तयोः स्वभावभेदेपि सहोपलम्भनियमात्कथंचिदभेदाभ्युपगमे[29] कथमेकसंतानसंविदां[30] समनन्तरोपलम्भनियमात्कथंचिदैक्यं न स्यात् ?** कालसमनन्तरोपलम्भनियमादेकसंतानत्वमेव[31][32] स्याद्देशसमनन्तरोपलम्भनियमात्[33] समुदायवत्[34], न पुनरेकद्रव्यत्वमिति चेन्न, भवतां[35] बुद्धेतरसंविदामेकसंतानत्वापत्तेः, कालसमनन्तरोपलम्भनियमस्य[36][37] भावात् पञ्चानामपि[38] च स्कन्धानामेकस्कन्धत्वप्रसङ्गात्,

---

१ एकसंतानत्वप्रसङ्गे हेतुरुच्यते तेषामित्यादि । तेषां बुद्धेतरचित्तानाम् । २ कार्यरूपस्य । ३ बौद्धचित्तेभ्य उत्पन्नं बुद्धचित्तं यदि बौद्धचित्तानि न विषयीकरोति तर्हि । ४ ज्ञानस्य कारणमेव ज्ञानस्य विषय इति बौद्धसिद्धान्तः । ५ चित्तक्षणानाम् । ६ उत्तरज्ञानक्षणः कार्यभूतः पूर्वं बुद्धचित्तक्षणं कारणभूतं गृह्णाति तदुत्पत्तिमत्त्वादिति । ७ प्राग्ज्ञानक्षणस्य । ८ उत्तरचित्तकार्यं प्रति । ९ बुद्धचित्तोत्पत्तौ सर्वार्थाना कारणत्वाविशेषात् । १० समनन्तरप्रत्ययस्य उत्तरचित्तं प्रति । ११ सौगताशङ्का । १२ जैनाः प्राहुः । १३ कार्यकारणतया उपादानोपादेयतया वा । १४ संतानलक्षणमुक्त्वा संतानस्यैकत्वमाह । संतानः कथंचिदेक एक एव, क्वचित्क्षणान्तरे ( चित्रपटादौ चित्रैकसंवेदने ) नीललोहितादिनिर्भासचित्रैकसंवेदनवदिति । १५ अन्वयद्वारा । १६ नीलपीतादिरूपाणा तदवयवानाम् । १७ पृथग्वर्णाः श्वेतादयः । १८ अनेकसंताना नानापुरुषाः । १९ एकैकक्षणवत् । २० चित्रज्ञानावयवेषु प्रत्यासत्तिविशेषाच्चित्रस्यैकत्वं स्यादित्याशङ्क्याहुर्जैनाः । २१ कथंचित्तादात्म्यात् । २२ शीतवातादीनां देशप्रत्यासत्तावपि भिन्नत्वादेकत्वाभावः । २३ ज्ञानगतस्वरूपं नीलाद्याकारो वा भावः । २४ ज्ञानलक्षणेन सह । २५ आकाराणाम् । २६ द्रव्यापेक्षया । २७ चित्रज्ञानस्य कथंचिदैक्याभावेप्येकत्वव्यवहारघटनं यदि तर्हि । २८ तथा च सति चित्रज्ञानं न स्यात् । २९ हे सौगत ! । ३० चित्रज्ञानलक्षणमेकसंतानम् । ३१ कालस्य वर्तमानस्य । ३२ चित्रज्ञानक्षणानाम् । ३३ न पुनरेकद्रव्यत्वम् । ३४ यथा समुदायस्यैकसंतानत्वम् । ३५ सौगतानाम् । ३६ एकसंतानत्वापत्तौ कालेत्यादिना हेतुमाह । ३७ समनन्तरत्वं सामीप्यम् । ३८ रूपवेदनाविज्ञानसंज्ञासंस्कारा इति पञ्च स्कन्धाः । तत्र रूपरसगन्धस्पर्शपरमाणवः सजातीयविजातीयव्यावृत्ता परस्परासंबद्धा रूपस्कन्धाः, सुखदुःखादयो वेदनास्कन्धाः, सविकल्पकनिर्विकल्पकज्ञानानि विज्ञानस्कन्धाः, ( नामकरणं, संज्ञा ), ज्ञानपुण्यपापवासना संस्कारस्कन्धाः ।

प्रदेश[1]समनन्तरोपलम्भनियमस्य भावात् । [2]प्रत्यासत्त्य[3]न्तरकल्पनायां तत्र[4] यया प्रत्यासत्त्या संतानः समुदाय[5]श्च, तयैव कथंचिदैक्यमस्तु । न[6] हि ता[7]दृशां साधर्म्यमन्यदन्य[8]त्रात्मसाङ्कर्यात्, येन कालसमनन्तरोपलम्भनियमभाजामेकसंतानत्वं व्यवतिष्ठते देशसमनन्तरोपलम्भनियमभृतां चैकस्कन्धाख्यं समुदायत्वं युज्यते, ता[9]दृशः साधर्म्यस्यैकत्वनिह्नवेऽनुपपत्तेः कथंचिदेकत्वशून्यार्थसाधर्म्यस्य संतानान्तरेषु नानासमुदायेषु च दर्शनात् । [10]एतेनैकसंतानत्वात् प्रेत्यभावव्यवहारकल्पनमपास्तं कथंचिदेकत्वापह्नवे तदयोगात् । कथमिह ज[11]न्मनो जन्मान्तरेणैकत्वं विरोधादिति चेन्न, कथंचिदेकत्वे विरोधाभावात् । [12]तथा प्रतिभासादेक[13]ज्ञाननिर्भासविशेषवत् । तथा हि । एकज्ञाननिर्भासविशेषाणां मिथः स्वभावभेदेपि यथैकत्वपरिणामः स्वभावतोऽनङ्कुशस्तथा प्रेत्यभावा[14]दिषु संतानोन्वयः परमार्थैकत्वे[15]मात्मसत्त्वजीवादिव्यपदेशभाजनं स्वभावभेदानाक्रम्य स्वामिवदनन्यत्र[16] वर्तयति । न पुनरन्यत्र जीवान्तरे तेषामशक्यविवेचनत्वाद्विरोधवैयधिकरण्यादीनामेकज्ञान[17]निर्भासविशेषैरपाकरणान्निरङ्कुशत्वसिद्धेः ।—

पृथक्त्वैकान्तपक्षे दूषणान्तरमुपदर्शयन्तः प्राहुः ।—

सदात्मना च भिन्नं चेज्ज्ञानं ज्ञेयाद् द्विधाप्यसत् ।
ज्ञानाभावे कथं ज्ञेयं बहिरन्तश्च ते द्विषाम् । ३० ।

सदात्मना सत्सामान्यात्म[18]ना भिन्नमेव ज्ञानं ज्ञेयादिति चेद्द्वि[19]धाप्यसदेव प्राप्तं ज्ञानस्यासत्त्वे ज्ञेयस्यासत्त्वप्रसङ्गात् । ततो बहिरन्तश्च न किञ्चित्कथंचिदपि ज्ञेयं नाम त्वद्द्विषां प्रतीयेत । न[20]नु सद्विशेषाद् भेदेपि ज्ञानस्य ज्ञेयान्नासत्त्वप्रसक्तिः । स[21]दन्तर[22]त्वं तु न स्यात्[23] पटान्तरा[24]द्भेदेपि पटस्य पटान्तर[25]त्वाभाववत् । सत्सामान्यं पुनः सर्वेषु सद्विशेषे[26]ष्वसत्त्वव्यावृत्ति[27]मात्रम्[28] । न च त[29]दात्मना कस्य[30]चित्कुत[31]श्चिद्भेदोऽभेदो वा विचार्यते त[31]स्य वस्तुनिष्ठत्वात् सन्मात्रस्य चावस्तुत्वात् । तदात्मना व्यावृत्तस्य ज्ञानस्य ज्ञेयात्पर[32]मार्थसत्त्वाविरोधान्न कश्चिदुपाल[33]म्भ इति चेन्न, सत्सामान्यस्याभावे सांवृ[34]तत्वे वा सद्विशेषाणा[35]मभावप्रसङ्गात् सांवृतत्वापत्तेश्च त[36]दसत्त्वव्यावृत्तेरपि वस्तुस्वभावत्वादन्यथा खरवि[37]षाणादावपि त[38]दनुषङ्गात् । तथा हि । ज्ञानज्ञे[39]ययोरसद्व्यावृत्तिर्वास्तवी सद्विशेषत्वात् । यस्य तु न सा वास्तवी स न सद्विशेषो यथा वन्ध्यासुतः । सद्विशेषौ च ज्ञानज्ञेये । इति केवलव्यतिरेकी हेतुः । तथा य[40]त्रासद्व्यावृत्तिर्वास्तवी तत्र सत्सामान्यं वस्तु, सत्सामान्यरहितेषु वन्ध्यासुतादिष्वसद्व्यावृत्तेरवास्तवत्वात्, इति वास्तवसत्सामान्यात्मना ज्ञानस्य ज्ञेया[41]द्भेदे सद्विशेषात्मनापि भेदः स्यात् । तथा च ज्ञानमसत् प्राप्तम् । त[42]दनिच्छता वि[43]षयिणो विषयात्कथंचि[44]-

---

१ अत्र हेतुमाह । २ प्रत्यासत्तिविशेषात्संतान समुदायो वा साधर्म्यं भविष्यतीत्याशङ्क्याहुर्जैना । ३ प्रागुक्तादन्यत्, प्रत्यासत्त्यन्तरम् । ४ ज्ञानस्य पूर्वोत्तरक्षणेषु एकदेशवर्तिषु परमाणुषु स्कन्धेषु च । ५ भवतीति शेष । ६ एकत्वनिह्नवे साधर्म्यं न स्यादित्येतत् श्लोकस्थपदं विवृण्वन्नाह । ७ एकसंतानभाजा ज्ञानक्षणाना परमाणूना च । ८ अन्यत्र आत्मसाकर्यात्, कथंचित्तादात्म्यं विनेत्यर्थ । ९ एकसंतानत्वनिबन्धनस्य समुदायत्वनिबन्धनस्य च । १० सतानस्य कथंचिदेकत्वसमर्थनेन । ११ वर्तमानस्य । १२ कथंचिदेकत्वेन । १३ एकज्ञानं चित्रज्ञानम् । १४ आदिशब्देन सुखादिषु । १५ कर्तृपदम् । १६ आत्मन्येव वर्तयति स्वभावभेदान् । १७ एकस्मिन् चित्रज्ञाने निर्भासा नीलपीतादिप्रतिभासविशेषास्तै । १८ सर्वं सदित्यनेन । १९ ज्ञानज्ञेयप्रकारेण । २० योगाचारः । २१ तर्हि सद्विषयत्वमेव स्यादित्याशङ्क्याह । २२ एकस्माज्ज्ञानरूपात्सतोऽपर सत् प्रमेयरूपं सदन्तरं तस्य भावस्तत्त्वं प्रमेयत्वं न स्यादित्यर्थ । २३ ज्ञानस्य । २४ घटादे । २५ पटान्तरत्वाभावो, घटाभाव । २६ क्षणिकेषु । २७ असतो व्यावृत्तिमात्रमेव सद् बौद्धमतापेक्षया । २८ सत्सामान्यात्मना । २९ ज्ञानस्य । ३० ज्ञेयात् । ३१ विचारस्य । ३२ परमार्थसत् क्षणिकम् । ३३ द्विधाप्यसत्त्वविषयक । ३४ आरोपितमात्रं कल्पितमात्रं वा सांवृतम् । ३५ क्षणिकरूपाणां घटादीनाम् । ३६ तेषु सद्विशेषेषु । ३७ अखरविषाणाद्व्यावृत्ते खरविषाणे । ३८ सत्त्वप्रसङ्गात् । ३९ अज्ञानाद्व्यावृत्त-ज्ञानमज्ञेयाच्च व्यावृत्तं ज्ञेयं, तयो । ४० ज्ञाने ज्ञेये च । ४१ अङ्गीक्रियमाणे । ४२ असत् । ४३ ज्ञानस्य । ४४ ग्राह्यग्राहकरूपेण ।

स्वभावभेदेपि सदाद्यात्मना तादात्म्यं वो[1]धाकारस्येव विषयाकाराद्, विशेषाभावात् । अन्यथा[2] ज्ञानमवस्त्वेव खपुष्पवत् । त[3]दभावे वहिरन्तर्वा ज्ञेयमेव न स्यात्, तदपेक्ष[4]त्वात् तस्य । ततः श्रेयानयमुपाल[5]म्भः पृथक्त्वैकान्तवाचां ताथागतानां वैशेषिकवत् । कि[6]ञ्च,—

सामा[7]न्यार्था गिरोन्ये[8]षां विशेषो ना[9]भिलप्यते ।
सामान्याभाव[10]तस्तेषां मृषैव सकला गिरः । ३१ ।

सामान्यमेवार्थोभिधेयो यासां ताः सामान्यार्था गिरो यतस्ताभिर्विशेषो नाभि[11]लप्यते इ[12]त्यन्ये, तेषां मृषैव सकलाः स्वयं सत्यत्वेनाभिमता अपि गिरः स्युः, सामान्यस्य वास्तवस्याभावात् । कुतः पुनः सामान्यस्यैवाभिधेयत्वमिति चेत्, विशेषा[13]णामशक्यस[14]मयत्वात् । न ह्यनन्ता विशेषाः शक्याः संकेतयितुं ततो नाभिधीयेरन्[15], असंकेतितानभिधानात् । विशेष[16]दर्शनवत्तद्बुद्धावप्रतिभासनादर्थसन्निधानानपेक्षणाच्च । न हि स्व[17]लक्षणे दर्शने यथा संके[18]तनिरपेक्षो विशेषः प्रतिभासते तथा शब्दबुद्धावपि, तस्याः[19] स्वलक्षणसंनिधानानपेक्षत्वात्, तदपेक्ष[20]त्वेऽतीतानुत्पन्नादिषु शब्दबुद्धेरभावप्रसङ्गात् । य[21]द्येवं स्वलक्षणमनभिधेयं सामान्यमवस्तू[22]च्यते इति वस्तु नोच्यते इति स्यात् । ततः किं शब्दोच्चारणेन संकेतेन वा ? गोशब्दोपि गां नाभिधत्ते यथाश्वशब्दस्य । तथा च व[23]स्तुनोनभिधाने मौनं यत्किंचिद्वा वचनमाचरेत्, विशे[24]षाभावात् । अर्थो[25]स्ति विशेषः । क[26]थं स्वार्थं नाभि[27]दधीत ? मौनाद्यत्किंचनवचनाद्वा यथार्थाभि[28]धानस्य स्वाभिधानं मुक्त्वा विशेष[29]स्यासंभवात् । न[30] वै परमार्थै[31]कतानत्वादभिधाननियमः, परमार्थैकतानत्वे श[32]ब्दानामनिबन्धना न स्यात् प्रवृत्तिरर्थेषु समयान्तरभेदिष्विति[33] वचनात् । किं[34] तूपादानविशेषा[35]दि[36]त्यपि वार्तम्, अविक[37]ल्पेपि त[38]थैव प्रसङ्गात् । शक्यं हि वक्तुम् " अविकल्पकप्रत्यक्षस्य न परमार्थैकतानत्वान्नि[39]यमो, द्विचन्द्रादिदर्शनाभाव[40]प्रसङ्गात् कि[41]न्तूपादानस्य स्ववासनाविशेषस्य भेदा[42]त् " इति । त[43]देवमवधारितात्मकं वस्तु स्वलक्षणमापनीपद्येत, [44]विकल्पेनेवाविकल्पेनाप्यवधारयितु[45]मशक्तेः । निर्वि[46]कल्पकस्यार्थसंनिधानापेक्षत्वाद्वैशद्याच्च परमार्थैकतानत्वमिति चेन्न, त[47]दनियमात् ।

१ ग्राहकाकारस्य विषयाकाराद्भेदेपि यथा सदाद्यात्मना भवताम् । २ सदाद्यात्मना तादात्म्यं नो चेत् । ३ तस्य ज्ञानस्याभावे । ४ ज्ञानापेक्षत्वाज्ज्ञेयस्य । ५ द्विधाप्यसत्त्वलक्षणः । ६ अस्माकं सौगताना सामान्यमस्त्येव परंतु शब्देन वाच्यत्वाद्वास्तवं नेत्युक्ते आहु सूरय । ७ सामान्यग्राहका इत्यर्थ । ८ सौगतानाम् । ९ यतस्ताभिः सामान्यार्थाभिर्विशेषो न वक्तुं शक्यते । शब्दैर्वक्तुं न शक्यते इत्यर्थः । १० सौगतानाम् । ११ विशेषस्यावाच्यत्वात् । १२ बौद्धा । १३ पर्यायाणाम् । १४ समयः, सकेत । १५ शब्दद्वारा । १६ व्यतिरेकदृष्टान्तोयम् । विशेषदर्शने विशेषप्रतिभासो यथा तथा शब्दबुद्धौ विशेषस्याप्रतिभास इत्यर्थः । १७ निर्विकल्पकप्रत्यक्षे । १८ संकेतः सामान्यस्य । १९ शब्दबुद्धे. । २० शब्दबुद्धौ । २१ वक्ष्यमाणप्रकारेण दूषणं स्याद्यदीत्यर्थः । २२ त्वया सौगतेन । २३ स्वलक्षणवस्तुनः । २४ अर्थशून्यत्वेन विवक्षितशब्दमौनयत्किंचिद्वचनाना परस्परम् । २५ वौद्धः । २६ जैनः । २७ गवादिशब्द । हे सौगत ! । २८ सत्यरूपस्य गोशब्दादेः । २९ अपरस्य । ३० वौद्ध । ३१ परमार्थैकविषयमाश्रित्य शब्दस्यार्थप्रतिपादकत्वनियमो न स्यादिति सौगतोक्तम् । तानशब्दोत्र विषयवाची । ३२ ईश्वरप्रधानादिशब्दानाम् । ३३ ईश्वरप्रधानादयोर्थाः पारमार्थिका न भवन्ति तथापि तत्र शब्दा प्रवर्तन्ते यतः । ३४ समयान्तरभेदिष्वर्थेषु शब्दाना प्रवृत्तिर्मा भूदिति चायुक्तं मतान्तरेषु शब्दप्रवृत्तेरुपलभ्यमानत्वात् । सा च शब्दप्रवृत्तिर्मतान्तरेषु कथं स्यादित्याशङ्कायामाह वौद्धः । ३५ वासनाविशेषनियमाच्छब्दनियमः । ३६ इतो जैनाः प्राहु । ३७ निर्विकल्पकप्रत्यक्षेपि । ३८ उपादानविशेषप्रकारेणैव । ३९ अर्थप्रकाशकत्वनियम. । ४० परमार्थैकतानत्वात्प्रत्यक्षस्य । ४१ किंत्वित्यनेन तर्हि कथं निर्विकल्पकात्प्रवृत्तिरिति वौद्धाभिप्रायः सूच्यते । तं प्रति जैनो वासनाविशेषस्य भेदादित्याद्याह । ४२ निर्विकल्पकप्रत्यक्षस्यार्थप्रकाशकत्वनियम इत्यनेन सवन्धः । ४३ तत्तस्मादेवमुक्तप्रकारेण । ४४ अन्यथेति शेषः । ४५ वस्तु । ४६ न तु शब्दस्य ४७ तस्य, अर्थसंनिधानासत्त्वस्य वैशद्यस्य च ।

तथा हि । नावश्यमिन्द्रियज्ञानमर्थ[1]संनिधानमपेक्षते विप्लवा[2]भावप्रसङ्गात् । नापि विशदा[3]त्मकमेव, दूरेपि तथा[4] प्रतिभासप्रसङ्गाद्यथाऽऽरात् । न हि आरादेवार्थे निर्विकल्पकमिन्द्रियज्ञानं[5], न पुनर्दूरे इति शक्यं वक्तुम्, इन्द्रियान्वयव्यतिरेकानुविधानाविशेषात्[6] । दूरार्थेपीन्द्रियज्ञानं[7] विशदात्मकमेव, तत्रा[8]-वैशद्यस्याशूत्पन्नानन्तर[9]विकल्पेन सहै[10]कत्वाध्यारोपा[11]देव प्रतीते[12]रिति चेन्न, आसन्नार्थेपि तदवैशद्यप्रतीतिप्रसङ्गात् । न हि तत्राविकल्पानन्तरं चिराद्विकल्पस्योत्पत्तिः, पुरोवर्तिन्यर्थेऽक्षज्ञानजविकल्पवैशद्यस्य तल्लघुवृ[13]-त्तिनिबन्धनत्वाभावप्रसङ्गात् "विमूढो लघुवृत्तेर्वा तयोरैक्यं व्यवस्यति" इति वचनविरोधात् । यदि[14] पुनरासन्नार्थे निर्विकल्पकस्य बलीयस्त्वात्तद्वैशद्ये[15]नानन्तरविकल्पा[16]वैशद्यस्याभिभवाद्वैशद्य[17]प्रतिभासो[18] न पुनर्दूरे, विपर्ययादि[19]ति मतं तदा पुरोवर्तिगोदर्शनवैशद्येनाश्वविकल्पावैशद्यस्याभिभूतिप्रसङ्गात् तत्र[20] वैशद्यप्रतीतिः किन्न स्यात् ? गोदर्शन[21]भिन्नविषयत्वादश्वविकल्पस्य नैवमिति चेन्न, नीलदर्शनविकल्पयोरपि भिन्न[22]विषयत्वात्तद्वैशद्याप्रतीतिप्रसङ्गात् । न हि तयोरभिन्नविषयत्वं, स्वलक्षणसामान्ययोस्तद्विषययोर्भेदात् । तत्र[23] दृश्यविकल्प्य[24]योरेकत्वाध्यवसायान्नीलविकल्पे वैशद्यप्रतिभास इति चेन्न, तत[25] एव दूरेपि वैशद्यप्रतिभासप्रसङ्गात् । स्यान्मतं[26], प्रत्यासन्नेर्थे विकल्प्ये[27] दृश्ये[28]स्याध्यारोपाद्विकल्पवैशद्यं दूरे तु दृश्ये विकल्प्यस्याध्यारोपाद्दर्शनावैशद्य प्रतीयते, कुतश्चि[29]द्विभ्रमात्, इति तदप्यसारं, चन्द्रार्कादावतिदूरे दृश्ये विकल्प्याध्यारोपादवैशद्यप्रतीतिप्रसङ्गात्, प्रत्यासन्नतरे च चक्षुषः करतलरेखादौ विकल्प्ये दृश्याध्यारोपाद्वैशद्यप्रसङ्गात् । यदि[30] पुनरदृष्टविशेषवशाद्दृश्यविकल्प्ययोरेकत्वाध्यारोपाविशेषेपि क्वचि[31]द्वैशद्यमवैशद्यं[32] च यथाप्रतीत्यभिधीयते तदा तत एवेन्द्रियजत्वा[33]विशेषेपि क्वचि[34]द्विशदप्रतिभासो[35]ऽन्यत्रा[36]न्यथेति नैकान्तेन दर्शनस्य[37] विशदात्मकत्वमर्थसन्निधानापेक्षत्वं वा यतः परमार्थैकतान[38]त्वान्नियमः[39] स्यात्, न पुनः शब्दबुद्धि[40]वदुपादाननियमा[41]-दिति । न[42] शब्दबुद्धेरवस्तुविषयत्वेप्युपादाननियमा[43]द्विशेषः, परार्थानुमानस्य वक्त्रऽभिप्रेतसमये[44] त्रिरूपहेतुसूचित्वादविसंवादादितर[45]वचना[46]द्विशेष इति चेन्न, तथापि क्षणभङ्गादिसाधन[47]वचनमन्यद्वा न किंचित् सत्यं स्याद्वक्त्रऽभिप्रेतमात्र[48]सूचित्वात् प्रधानेश्वरादिसाधनवाक्यवत्[49] । न हि वक्त्रभिप्रेतमात्रसूचित्वाविशेषेपि क्षणभङ्गादिसाधनं प्रतिपक्षदूषणं वा सत्यं न पुनः प्रधानेश्वरादिसाधनमिति शक्यव्यवस्थ, यतस्तदेव सवादि[50] स्यात्, सर्वथा विशेषाभावात्[51] ।

---

१ स्वलक्षणवस्तुनः । २ विप्लवो विभ्रमादिः । ३ इन्द्रियज्ञानम् । ४ विशदात्मकतया । ५ प्रवर्तते इत्यध्याहारः । ६ दूरेतरयोरर्थयो । ७ निर्विकल्पकम् । ८ इन्द्रियज्ञाने । ९ निर्विकल्पकज्ञानानन्तरोत्पन्नसविकल्पकज्ञानेन । १० इन्द्रियज्ञाने निर्विकल्पके । ११ अवैशद्यस्य । १२ तयोर्निर्विकल्पकतदनन्यसविकल्पयो । १३ सविकल्पाविकल्पयोर्ज्ञानयोर्युगपद्वृत्तिर्लघुवृत्ति, निर्विकल्पकादनन्तरमेव सविकल्पकस्योत्पत्तिर्वा लघुवृत्ति । १४ हे सौगत । १५ निर्विकल्पकवैशद्येन । १६ अनन्तरविकल्पो, विकल्पज्ञानम् । १७ विकल्पज्ञाने । १८ अविकल्पसंबन्धी । १९ निर्विकल्पस्य तत्राबलीयस्त्वात् । २० अश्वविकल्पे । २१ गोदर्शन निर्विकल्पकम् । तस्मात् । २२ नीलदर्शनस्य विषय स्वलक्षणं क्षणिकं, नीलविकल्पस्य तु स्थिरस्थूल घटादिसामान्यम् । २३ बौद्ध आह । तत्र आसन्नदेशे । २४ दृश्यं स्वलक्षणं, विकल्प्यं सामान्यम् । २५ एकत्वाध्यवसायादेव । २६ बौद्धस्य । २७ विकल्पज्ञानविषये । २८ ( निर्विकल्पज्ञानविषयो दृश्य ) । २९ दृश्यविकल्प्ययो सादृश्यग्राहकात् । ३० हे सौगत । । ३१ आसन्नार्थे । ३२ क्वचित्, दूरे इत्यर्थः । ३३ दूरासन्नज्ञानानाम् । ३४ आसन्नार्थे । ३५ दूरे । ३६ अविशदप्रतिभास । ३७ निर्विकल्पकप्रत्यक्षस्य । ३८ निर्विकल्पकप्रत्यक्षस्य । ३९ अर्थप्रकाशकत्वनियम. । ४० शब्दबुद्धौ इव शब्दबुद्धिवदित्यर्थ । ४१ पूर्ववासनानियमाच्छब्दबुद्धौ शब्दनियमः प्रधानतया प्रत्यक्षे । अर्थात् प्रत्यक्षेपि वासनाविशेषादेवार्थप्रकाशकत्वनियमो यतो न स्यात् । ४२ अत्राह बौद्धः । ४३ वासनानियमात् । ४४ अभिप्रायविषयीकृतसंकेते । ४५ यत्किंचनवचनात् पक्षमात्रवचनाद्वा । ४६ उपादाननियमाच्छब्दबुद्धेर्विशेषो न, किंतु त्रिरूपहेतुसूचितत्वादेव विशेष । कोसौ विशेष ? शब्दपरो विशेष । ४७ सर्वं क्षणिकं सत्त्वाद्विद्युदादिवदिति । ४८ अर्थशून्यत्वेन । ४९ ( प्रधानेश्वरादिसाधकं यदनुमानं तद्वाक्यवदित्यर्थः ) । ५० सत्यरूपम् । ५१ उभयत्राभिप्रायसूचित्वाविशेषात् ।

सदर्थाप्रतिपादनाद्वा न क्षणभङ्गादिसाधनवचनं विपक्षदूषणवचनं वा सत्यं, प्रसिद्धा[1]लीकवचनवत् । ननु च व्याख्या[2]तारः खल्वे[3]वं विवेचयन्ति न व्यवहर्तारः । ते हि दृश्यविकल्प्यावर्थावेकीकृत्य यथेष्टं व्यवहरन्ति । क्ष[4]णभङ्गादिसाधनवचनमन्यद्वा सत्यं, न प्रधानेश्वरादिसाधनवाक्यम् । परमार्थतस्तु न किंचिद्वचनमवितथम् । इत्यभ्युपगमेपि दृश्यविकल्प्यार्थाकारयोः कथंचिदप्यतादात्म्ये स्वलक्षणं सर्वथानवधारितलक्ष[5]णं दानादिचेतोधर्मादि[6]क्षणवत् कथं संशीतिमति[7]वर्तेत ? निर्वि[8]कल्पकदर्शनात्तदवधारणासंभवात् विकल्पानां चा[9]नर्थ[10]विषयत्वात् । सो[11]ऽयमविकल्पेतरराश्योरर्थे[12]तरविषयत्वमन्यद्वा स्वांश[13]मात्रावलम्बिना विकल्पान्तरेण प्रत्येतीति सुपरिबोधप्रज्ञो देवानांप्रियः । न ह्यविकल्पेतरराश्योरर्थानर्थविषयत्वं विशदेतरात्मत्वं वाऽनुपू[14]र्व्येतररूपत्वं वा येन[15] विकल्पान्तरेण प्रत्येति, तद्वस्तुविषयं युक्तं, तस्य विकल्पराशावनर्थवि[16]षयेनुप्रवेशात् । स्व[17]त एव विकल्पसंविदां निर्णये स्वलक्षणविषयो[18]पि विकल्पः स्यात् । परत[19]श्चेदनवस्थानादप्रतिपत्तिः । अतोऽर्थविकल्पोपि[20] मा भूदित्यन्धकल्पं जगत् स्यात्, स्वयमनिश्चयात्मनो विकल्पादर्थनिश्चयानुपपत्तेः । न चा[21]यं परोक्षबुद्धि[22]वादमतिशेते सर्वथार्थचि[22]न्तनोच्छेदाविशेषात् । यथैव ह्यप्रत्यक्षोपलम्भ[23]स्य नार्थदृष्टिः प्रसिध्यति तथा स्वयमनिश्चितात्मोपलम्भस्यापि । स्वयमनिर्णीतेन नामात्मना बुद्धिरर्थं व्यवस्थापयतीति सुव्य[24]वस्थितं तत्त्वम् । न वै स्वरूपं पररूपं वा बुद्धिरध्यवस्यति निर्विषयत्वा[25]द्भ्रान्ते[26]ः स्वप्नबुद्धिवदिति विभ्रमैकान्तवादिवचनम् । इदम[27]तो भ्रान्ततरं, बहिरन्तश्च सद्भावासिद्धेः । स्वप्नादिभ्रान्तज्ञानं हि बहिरर्थासत्त्वा[28]देव, न पुनः स्वरूपा[29]सत्त्वात्, इदं तु विभ्रमैकान्तसंवेदनं बहिरन्तरप्यर्थासत्त्वादिति कथं न त[30]दतिशेते ? न चास्य[31] स्वरूपसत्त्वं, तद्व्यवस्थानस्य विपक्ष[32]व्यवच्छेदेन प्रतिपत्तिपथमुपनेतुमशक्तेः । स्वपरस्वभावप्रतिपत्ति[33]शून्येन स्वपरपक्षसाधनदूषणव्यवस्थां प्र[34]त्येतीति किमपि महाद्भुतम् । संवृत्त्या प्रत्येतीति चायुक्तं, कथंचिदपि परमार्थप्रतिपत्त्यभावे संवृतिप्रतिपत्त्ययोगात् प[35]रमार्थविपर्ययरूपत्वात्संवृतेः । अन्यथा परमार्थस्य संवृतिरिति नामकरणमात्रमबाधाकरमेव परे[36]षामनुषज्येत । सोऽयं संवृत्त्या विभ्रमैकान्तसाधनमविभ्रमदूषणं च प्रत्येतीति परमार्थतो न प्रत्येतीति उपेक्षणीयवच[37]न एव । त[38]मन्येऽद्याप्यनुमन्यन्ते इत्यचिन्त्यमनल्पतमतमोनिबन्धनमशक्यपर्यन्तगमनमिहाद्भुतम् ।

---

१ यथा नद्यास्तीरे मोदकराशयः सन्तीति प्रसिद्धासत्यवचनं तथा सदर्थाप्रतिपादनत्वादिदमप्यसत्यम् । २ धर्मकीर्त्यादयः । ३ क्षणभङ्गादिवचनं सत्यमित्येवम् । ४ ततश्च किमित्युक्ते आह । ५ निर्विकल्पकेन निश्चयाभावात् । ६ यथा दानादिचेतोधर्मादिलक्षणयोः कथंचिदेकत्वाभावे एतदुपायमित्यनवधारितरूपत्वान्निस्सन्देहं प्रवृत्तिनिवृत्ती इत्याश्रयत्वं न स्यात्तथा प्रकृतमपि । ७ स्वलक्षणं कर्तृपदम् । ८ प्रत्यक्षसमनन्तरभाविविकल्पैः स्वलक्षणावधारणं भविष्यतीति प्रोक्ते आह विकल्पानामिति । ९ चशब्दोत्र भिन्नप्रक्रमत्वादन्ते योज्यः । १० किंचेत्यध्याहारः । स सौगतः । ११ इतरो विकल्प्यः । १२ विशदेतरात्मकत्वम् । १३ स्वकीयमंशमात्रं भागमात्रं तदवलम्बिना स्वरूपमात्रग्राहिणेत्यर्थः । तदुक्तं न्यायविनिश्चयालङ्कारे "स्वग्राह्यैकस्वभावोयं विकल्पस्त्वन्मते स्थितः । व्याहारादेः कथं तेन बहिरर्थस्य वीक्षणम्" इति । १४ अभ्रान्तभ्रान्तत्वम् । १५ करणभूतेन । १६ अस्वलक्षणविषये । १७ हे सौगत ! । विकल्पादेव । १८ विकल्पस्य यत्स्वरूपं तत्सविकल्पकं स्यात् । ततश्चैतद्विरुध्यते "सर्वे बोधाः स्वरूपे निर्विकल्पकाः" इति । स्वलक्षणविषयत्वे च "विकल्पो वास्तु निर्भासादसंवादादुपप्लवः" इति स्ववचनविरोधः । १९ विकल्पान्तराद्विकल्पसंविदां निर्णयः । २० विकल्पः । २१ मीमांसकाभिमतं ज्ञानं स्वयं परोक्षमिति । २२ चिन्तनं ग्रहणम् । २३ ( मीमांसकीयस्य ) परोक्षज्ञानस्य । २४ उपहासवचनमिदम् । २५ बुद्धेर्निर्विषयत्वात् । २६ भ्रान्तेरेव न तु परमार्थतः । २७ विभ्रमैकान्तात् । २८ भ्रान्तं कथ्यते । २९ स्वरूपस्य (भावप्रमेयापेक्षया) सत्त्वान्न भ्रान्तत्वं स्वप्नज्ञानस्य । ३० तत्स्वप्नज्ञानं कर्मपदम् । इदं कर्तृपदं प्रागुक्तम् । ३१ ज्ञानस्य । ३२ विपक्षः, अभ्रान्तस्वरूपम् । ३३ भ्रान्तसंवेदनेन । ३४ सुगतः । ३५ संवृत्त्या प्रतिपत्त्यभावः कुत इत्युक्ते आह । ३६ जैनानाम् । ३७ सुगतः । ३८ तं सुगतम् । अन्ये धर्मकीर्त्यादयः ।

एवं तर्हि मा भूत् पृथक्त्वैकान्तोऽद्वैतैकान्तवदशक्यव्यवस्थापनत्वात् । तदुभ[1]यैकात्म्यं तु श्रेय इति मन्यमानं वा[2]दिनं सर्वथा वाऽवाच्यं तत्त्वमातिष्ठमा[3]नं प्रत्याहुः ।—

विरोधान्नो[4]भयैकात्म्यं स्याद्वादन्याय[5]विद्विषाम् ।
अवाच्यतैकान्तेप्युक्तिर्नावाच्यमिति युज्यते ॥ ३२ ॥

अस्तित्वनास्तित्वैकत्वानेकत्ववत् पृथक्त्वेतरपरस्परप्रत्यनीकस्वभावद्वयसंभ[6]वोपि मा भूद्विप्रतिषे[7]धात् । न खलु सर्वात्मना[8] विरुद्धधर्मा[9]ध्यासोस्ति तदन्योन्यविधिप्रतिषेधलक्षणत्वाद्वन्ध्यासु[10]तवत् । यथैव हि वन्ध्याया विधिरेव तत्सुतप्रतिषेधः स एव वा वन्ध्याया विधिरिति वन्ध्यासुतयोरन्योन्यविधिप्रतिषेधलक्षणत्वं तथा पृथक्त्वस्वभावविधिरेव सर्वथैकत्वप्रतिषेधः स एव च तद्विधिः । इति कथमिव स्याद्वादमनिच्छतां विरुद्धधर्माध्यासः संभवेद्यतस्तदुभ[11]यैकात्म्यं तत्त्वमेकान्तवादिनः स्वीकुर्युः ? सर्वथानभिलाप्यतत्त्वाधिगमेपि यदेतदनभिलाप्यं तत्त्वमिति तद्व्याहन्यते, पूर्व[12]वत् । इत्यलं प्रपञ्चेन ।

तदेवमेकत्वा[13]द्येकान्तनिराकृतिसामर्थ्यात्तदनेकान्ततत्त्वप्रसिद्धावपि तत्प्रतिपत्तिदार्ढ्यार्थमन्यथा[14]शङ्कापाकरणार्थं च तत्स[15]प्तभङ्गीं समाविर्भावयितुकामास्तन्मूलभङ्गद्वया[16]त्मकत्व जीवादिवस्तुनः प्राहुः ।—

अनपेक्षे पृथक्त्वैक्ये ह्यवस्तु द्वयहेतुतः ।
त[17]देवैक्यं पृथक्त्वं च स्व[18]भेदैः साधनं यथा ॥ ३३ ॥

हि यस्मादवस्त्वेवानपेक्षे पृथक्त्वैक्ये ऐक्यपृथक्त्वनिरपेक्षत्वहेतुद्वयात् प्रतिपादिते प्रो[19]क्त, तस्मात्तदेवैक्यं पृथक्त्वं च जीवादिवस्तु कथंचिदेकत्वपृथक्त्वप्रत्ययहेतुद्वया[20]दवसीयते । यथा साधनं सत्त्वादि पक्षधर्मत्वसपक्षसत्त्वविपक्षासत्त्वलक्षणैर्भेदैर्विशि[21]ष्टमेकं प्रसिद्धमुभ[22]योः । त[23]त्राप्यन्वयव्यतिरेकयोरनपेक्षयोरवस्तुरूपत्वात् साधनलक्षणत्वायोगात् सापेक्षयोरेव तल्लक्षणत्वेन वस्तुस्वभावत्वसिद्धेः साम्यमुदाहरणस्य प्रतिपत्तव्यम् । किं पुनरनया कारिकया करोत्याचार्यः ? पू[24]र्वेणैवास्या[25]र्थस्य गतत्वा[26]दिति चेत्, एकत्वपृथक्त्वे नैकान्ते[27]तः स्तः प्रत्यक्षादिविरोधादिति स्पष्टयति, गतार्थस्याप्यनुमानविषयत्वप्रदर्शनात्स्पष्टत्वप्रसिद्धेः, प्र[28]माणसंप्लववादिनां गृहीतग्रहणस्यादूषणात् । तथा हि । पृथक्त्वैकत्वे तथाभू[29]ते न स्ताम्, एकत्वपृ-

१ एकत्र वस्तुनि गुणगुणिनो पृथक्त्वापृथक्त्वयोर्वा ऐकात्म्यम् । २ मीमासकं प्रति । ३ अभ्युपगच्छन्तं सौगतं प्रति । ४ पृथक्त्वापृथक्त्वयो । ५ प्रत्यक्षादिप्रमाणाबाधितस्वरूपपरस्परविरुद्धानेकधर्मात्मकजीवादिपदार्थलक्षणवस्तुप्रतिपादकनयप्रमाणवाक्यात्मकवचनसन्दर्भमयश्रुतस्कन्ध स्याद्वादः स एव न्यायस्तं विद्विषन्तीति । ६ पृथक्त्वैकान्तेतरे च ते परस्परविरुद्धप्रत्यनीकस्वभावे च, तयोर्द्वय, तस्य संभव सोप्येकधर्मिणि मा भूदिति सबन्ध । ७ विप्रतिषेधो, विरोध. । ८ धर्मापेक्षया धर्म्यऽपेक्षया च । ९ एकत्र वस्तुनि सर्वथास्तित्वनास्तित्वे विरुद्धधर्मौ । परन्तु एकत्रैव वस्तुनि कथचित् पृथक्त्वापृथक्त्वं न विरुद्धम् । १० वन्ध्याया सुतस्य च द्वन्द्वसमासोत्र ज्ञेय· । ११ उभयमस्तित्वनास्तित्वमेकत्र विरुद्धम् । १२ अस्तित्वनास्तित्वाभ्यामवाच्य तत्त्वमिति यथा व्याहन्यते । १३ आदिपदेन पृथक्त्वादि । पृथक्त्वमवस्तु, ऐक्यनिरपेक्षत्वात् । ऐक्यं केवलं वस्तु न भवति, पृथक्त्वरहितत्वादिति । १४ एकत्वादिधर्मनिराकरणेन सकलधर्मशून्योनेकान्त इत्यादिरन्यथाशङ्का । १५ भेदाभेदादिसप्तभङ्गीम् । १६ स्याद्भेद., स्यादभेद इति प्रथमं भङ्गद्वयम् । १७ परस्परं सापेक्ष सद्वस्तु भवति । १८ पक्षधर्मादिस्वभेदैर्विशिष्ट यथा साधनम् । १९ कारिकासमूहेन । २० जीवादिवस्तु सापेक्ष सदेकं भवति कथचिदेकत्वेन प्रतीयमानत्वात्सत्त्वादिसाधनवत्, तथा सापेक्षं जीवादि वस्तु पृथग्भवति कथचित्पृथक्त्वेन प्रतीयमानत्वात्तद्वदेव, इति अनुमानक्रम । २१ एतैर्भेदैर्भिन्न नानात्व प्राप्तम् । २२ वादिप्रतिवादिनो । २३ दृष्टान्ते परस्परं भेद एव धर्मधर्मिणोरिति कथं साम्यं दार्ष्टान्तिकेन दृष्टान्तस्येत्युक्ते आह तत्रेति । २४ अद्वैतैकान्तपक्षेपीत्यादिकारिकासमूहेन । २५ सर्वथा परस्परनिरपेक्षयो पृथक्त्वैकत्वयोरवस्तुत्वलक्षणस्य । २६ ज्ञातत्वात् । २७ सर्वथा । २८ गतार्थोप्यनुमानविषयश्चेत्तदानुमानमप्रमाणं स्याद्गृहीतग्राहित्वादित्युक्ते आह । एकस्मिन् प्रमाणे बहुप्रमाणप्रवृत्ति· प्रमाणसंप्लवः । प्रमाणसंप्लवं मन्यन्ते जैना यौगादयश्च । २९ परस्परनिरपेक्षे ।

थक्त्वरहितत्वाद्व्योमकुसुमादिवत् । तथा हि । सर्वथा पृथक्त्वं[1] नास्त्येव, एकत्वनिरपेक्षत्वाद्व्योमकुसुमवत् । सर्वथैकत्वं नास्ति पृथक्त्वनिरपेक्षत्वात्तद्वदिति । अत्र न हेतुद्वयमसिद्धं तदेकान्तवादिनां तथा[2]भ्युपगमात् । नाप्यनैकान्तिकं विरुद्धं वा, विपक्षे[3]वृत्त्यभावात् ।

सा[4]पेक्षत्वे हि तदेवैक्यं पृथक्त्वमित्यविरुद्धं कथंचिज्जीवादिवस्तु प्रत्यक्षादिभिरुपलभ्यते न पुनः सर्वथेति सिद्धान्यथानु[5]पपत्तिः, सपक्षविपक्ष[6]योर्भावाभावा[7]भ्यां साधन[8]वत् । न हि सपक्षे एव भावो विपक्षेऽभावनिरपेक्षो विपक्षेऽभाव एव वा सपक्षे भावानपेक्षः साधनवस्तुनो रूपं परेषां सिद्धं येन साध्यसाधनविधुरमुदाहरणं स्यात् । स्वभेदै[9]र्वा संवेदनवत् । न हि हेतुमनि[10]च्छतः संवेदनाद्वैतं पुरुषाद्वैतं वा स्वीकुर्वतोपि चित्रसंवेदनं नीलादिनिर्भासैरद्वय[11]संवेदनं वा ग्राह्यग्राहकाकारविवेकसंविदाकारैः परमब्रह्म वा तेजःशब्दज्ञानज्योतिराकारैर्विद्येतराकारैर्वा स्वभेदैः परस्परनिरपेक्षैर्विशिष्टं वस्तु सिद्धं येनोदाहरणमनव[12]द्यं न स्यात् । स्वारम्भका[13]वयवैर्वा घटादिवत् औलूक्या[14]नाम् । सत्त्वा[15]दिभिः प्रधानवद्वा कापिलानाम् । तादृ[16]शं हि साधनं स्वार्थक्रियायाः क्षीराद्याहरणादिकाया महदादिसृष्टिरूपाया वा स्ववि[17]षयज्ञानजननलक्षणाया वा सिद्धमेव । तद[18]न्तरेणापि पाठान्तरमिदं बहु संगृहीतं भवति, कारिकाया स्वभेदैः साधनं यथेत्यत्र साधनशब्देन साधनसामान्यस्याभिधानात् स्वभेदशब्देन च तत्सामान्यस्य वचनात् । यथायोगं विशेषव्याख्यानादिष्टविशेषसिद्धेर्बहुसंग्रहः ।

न[19]नु चैकत्वप्रत्ययात्पृथक्त्वप्रत्ययाच्च कथमेकत्वं पृथक्त्वं च जीवादीनामुपपन्नं तस्य निर्वि[20]षयत्वादित्यारेकायां तस्य सविषयत्वमादर्शयितुमनसः स्वामिनः प्राहुः ।—

सत्सामा[21]न्यात्तु सर्वैक्यं पृथग्द्रव्यादिभेदतः ।
भेदाभेदविवक्षायां[22]मसाधारणहेतु[23]वत् ॥ ३४ ॥

तु विशेषणे । तेन सत्सामान्यं विशेषणमाश्रित्य सर्वेषां जीवादीनामैक्यमिति नैकत्वप्रत्ययो निर्विषयः, तस्य[24] सत्सामान्यविषय[25]त्वात् । पृथक् सर्वं जीवादि द्रव्यादिपदार्थभेदमाश्रित्यानुभूयते । ततो न पृथक्त्वप्रत्ययोपि निर्विषयः, तस्य द्रव्यादिभेदविषयत्वादिति निवेदितं बोद्धव्यम् । हेतु[26]रत्र ज्ञाप[27]कः कार[28]कश्चोच्यते । स चासाधा[29]रणो यथा[30]स्वं प्रवादिभिर्विशेषेणेष्टत्वात् । स च यथा स्वभेदानां पक्षधर्मत्वा[31]दीनां स्वारम्भे[32]-

१ गुणगुणिनोरनेकत्वम् । २ एकत्वपृथक्त्वनिरपेक्षत्वप्रकारेण । ३ सर्वथा पृथक्त्वास्तित्वस्य सर्वथैकत्वास्तित्वस्य च विपक्षभूतस्याभावात्तत्र वृत्त्यभावः । ४ एतावता ग्रन्थेन पूर्वार्द्धं व्याख्याय सापेक्षत्वे इत्यादिनाऽपरार्द्धं व्याख्यायते । ५ जीवादिवस्तु कथंचिदेक भवति वस्तुत्वान्यथानुपपत्ते., तदेव कथंचिच्च पृथग्भवति वस्तुत्वान्यथानुपपत्तेरिति । ६ सप्तमी । ७ अन्वयव्यतिरेकाभ्याम् । ८ यथा साधनस्यान्यथानुपपत्ति· । एकानेकं यथा साधनमस्तीत्यर्थः । सपक्षे सत्त्व विपक्षव्यावृत्तिसापेक्षं विपक्षाद्व्यावृत्ति सपक्षसत्त्वसापेक्षा साधनवस्तुनो रूपमिति रहस्यम् । ९ प्रकारान्तरेण कथयन्ति दृष्टान्तमकलङ्कदेवाः । १० अन्वयव्यतिरेकाभ्या हेतुदृष्टान्तमनिच्छतो वादिन । ११ निरंशज्ञानम् । १२ सापेक्षत्वे इति । १३ सापेक्षैरित्यर्थ. । १४ मीमासको जैमिनीये वेदान्ती ब्रह्मवादिनि । वैशेषिके स्यादौलूक्य· शून्यवादी तु सौगते । नैयायिके त्वक्षपाद· स्यात् स्याद्वादिक आर्हते ॥ लोकायतिकचार्वाके बार्हस्पतिश्च नास्तिके । इत्यभिधानात् । १५ परस्परसापेक्षै सत्त्वरजस्तमोभि प्रधानं वस्तु एकं सिध्यति । १६ परस्परसापेक्षत्वं, भेदैर्विशिष्टत्वं वा । १७ स्वविषयो घटपटादि· । १८ उदाहरणमन्तरेणापि । १९ बौद्ध । २० एकत्वस्य प्रत्यक्षेण बाधितत्वात् पृथक्त्वस्य च सदाद्यात्मना बाधितत्वान्निर्विषयत्वमिति भावः । २१ सतोस्तित्वस्य यत्सामान्यं तत्तथा, तस्मात् । २२ विवक्षाया हेतोरेकानेकत्वम् । २३ वह्न्यादिसाध्यनिश्चये धूमादिर्मृत्पिण्डो वा घटाद्युत्पत्तौ । २४ एकत्वप्रत्ययस्य । २५ सत्सामान्यं विषयो यस्य स तत्त्वात् । २६ हेतुशब्देनात्रानुमानावयवभूतो हेतुर्ग्राह्य· । हेतुर्द्विधा, ज्ञापकः कारकश्च अतो, अर्थक्रियानिष्पादकघटादिर्मृत्पिण्डोपि वा तेन ग्राह्य । २७ धूमादिः । २८ मृत्पिण्डादि । २९ विशेषरूप· । ३० स्वरूपमनतिक्रम्येत्यर्थ । ३१ ज्ञापकहेत्वपेक्षया । ३२ स्वस्य घटादेरारम्भकावयवाना द्व्यणुकत्र्यणुकादीनाम् ( कारकापेक्षया ) ।

कावयवादीनां वा विवक्षायां पृथगेव हेतुत्वेन घटावयव्यादित्वेन वा तदभेदविवक्षायामेक एव तथा सर्वं विवादाध्यासित[1]मिति दृष्टान्तदार्ष्टान्तिक[2]घटनात् ।

**कश्चिदाह, सर्वार्थानां समानपरिणामेपि कथमैक्यं भेदानां स्वभावसाङ्कर्यानुपपत्तेः[3] ।** न हि भावाः[4] परस्परेणात्मानं मिश्रयन्ति, भेद[6]प्रतीतिविरोधात्[5] । तेषा[7]मतत्कार्य[8]कारणव्यावृत्त्या समान[9]व्यवहारभाक्त्वेपि परमार्थतोऽसंकीर्णस्वभावत्वात् । तदुक्त "सर्वे भावाः स्वभावेन स्वस्वभावव्यवस्थितेः । स्वभावपरभावाभ्या[10] यस्माद्व्यावृत्तिभागिनः । १ । तस्मा[11]द्यतो[12] यथा[13]र्थानां व्यावृत्तिस्तन्निबन्धनाः । जातिभेदाः[14] प्रकल्प्यन्ते तद्विशेषावगाहिनः । २ । ततो यो येन[15] धर्मेण विशेषः संप्रतीयते । न स शक्य[16]स्ततोन्येन, तेन[17] भिन्ना व्यवस्थितिः । ३ ।" इति ।

अत्रा[18]भिधीयते । **जीवादिभेदानामैक्यं, यथैक[19]भेदस्य स्वभावविच्छेदाभावात् ।** न हि स्वभावविच्छेदाभावादृते नीलस्वलक्षणस्य संवेदनस्य वा कस्यचिदेकस्य स्वयमिष्टस्याप्येकत्वनिबन्धनं किंचिदस्ति । नापि[20] कथंचिद्भिन्नानामपि भावानां सत्सामान्यस्वभावेन विच्छेदो[21]स्ति, तथा विच्छेदाभावस्यानुभवात् । अन्यथैकं **सदन्यदसत् स्यात्[22] । ततः[23] समञ्जसं सर्वमेकं सदविशेषादिति,** सदा[24]त्मना सर्वभावानां परस्परमिश्रणे[25]पि साङ्कर्याप्रसक्तेः चित्रैकज्ञाननीलादिनिर्भासानां संविदात्मनैकत्वेपि साङ्कर्याप्रसक्तिवत्[26] । नहि तेषामनेकत्वे चित्रज्ञानसिद्धिः सर्वथैकत्व[27]वत् । तत एव न किंचिद्भिन्नज्ञानं निरंशसंवेदनाद्वैतोपगमादिति चेन्न, तत्रापि वेद्याकारविवेकसंविदाकारयोः परोक्ष[28]प्रत्यक्षयोरेकसवेदनत्वेपि साङ्कर्यानिष्टेरन्यथा संविदाकारस्यापि परोक्षत्वप्रसङ्गात् वेद्याकारविवेकवत् । तस्य[29] वा प्रत्यक्षत्वं संविदाकारवत् स्यात् । न चैवं तद्वि[30]प्रतिपत्तिविरोधात समारोप[31]स्यापि सर्वथा[32]प्यविशेषे क्वचि[33]देवासंभवान्निश्चय[34]वत् । **तस्यैव[35] सतो द्रव्यादिभेदात् पृथक्त्वमुदाहरणं पूर्ववत्[36] ।** तथा[37] च बहिरन्तश्च भावाना सदात्मनैकत्वं द्रव्याद्यात्मना पृथक्त्वं च स्वस्वभावः सिद्धो, न पुनर[38]साधारण भिन्नं रूपम् । तेन[39] च स्वस्वभावेन व्यवस्थितेः स्वभावपरभावाभ्यां भावाः स्वभावेनानुवृत्तिव्यावृत्तिभागिनो[40], न पुनरेकान्ततो व्यावृत्तिभागिनः । तस्मा[41]द्यतो यतोर्थाना व्यावृ-

---

१ एकानेकरूपमेव । २ जीवादि दार्ष्टान्तिकम् । ३ यतो भावसाङ्कर्यानुपपत्तिर्वर्तते । ४ पदार्था । ५ अन्यथेति शेष । ६ अस्ति तु भेदप्रतीति । ७ तर्हि सर्वे भावा. समाना दृश्यन्ते कथमित्याशङ्क्याह बौद्ध. । ८ कार्यव्यावृत्तं कारण कारणव्यावृत्तं कार्यमित्यर्थ. । अतत्कार्याद्व्यावृत्तं तत्कार्यम्, अतत्कारणव्यावृत्तं कारणम् । ९ अतत्कारणकार्यव्यावृत्तिलक्षणं सामान्यम् । १० सकाशात् । ११ तस्माद्यतो यतोर्थानामित्यपि पाठ. । १२ अर्थात् । १३ अगोरूपाद्वामशवलरूपाच्च शवलानां व्यावृत्तिस्ततो व्यावृत्तिविशेषावगाहिनो जातिभेदा प्रकल्प्यन्ते न तु परमार्थतो व्यवस्थाप्यन्ते यत । १४ गौ गौ अश्वः अश्व इत्याद्या । १५ भेदलक्षणेन । १६ अन्येन स प्रत्येतु न शक्य इति सबन्ध । १७ कारणेन । १८ जैनै । १९ यथा एकभेदस्य स्वभावभेदाभावस्तथात्रापि । एकश्चासौ भेदश्च तस्य यथा स्वभावविच्छेदाभावादैक्यम् । २० ननु स्वभावविच्छेदाभावान्नीलस्वलक्षणे सवेदने चैक्यं निबन्धनमस्तु न तु भिन्नार्थाना, स्वभावविच्छेदादित्याशङ्कायामाह । २१ विच्छेदो भेद॰ । २२ न तु सर्वं सदेव स्यात् । २३ स्वभावविच्छेदाभावो यत । २४ एवमपि साङ्कर्यं स्यादित्युक्ते आहुर्जैना । २५ मिश्रणमैक्यम् । २६ निरंशसवेदनाद्वैतवादे । २७ सवेदनाद्वैतवादे । २८ वेद्याकारं परोक्षम्, इदं नील वस्तु वेद्याकारान्यथानुपपत्तेरित्यनुमानसिद्धत्वात् । सविदाकारं प्रत्यक्षमनुभवसिद्धत्वात् । २९ वेद्याकारस्य । (अन्यथेति पूर्वेण शब्देनान्वय )। ३० 'वि' उपसर्गस्य विविधोर्थोत्र ज्ञेय । वेद्याकारं प्रत्यक्ष सविदाकारं परोक्षमिति द्विविधे ( द्वे ) प्रतिपत्ती अत्र स्तस्तयोर्विरोधोस्तु । ३१ गुणकर्मणो । ३२ अभेदे । ३३ वेद्यवेदकाकारविवेके । ३४ उभयोरपि भेदे सति क्वचिदेव सविदाकारे निश्चयासभवो यथा । ३५ वेद्याद्याकारविवेकसमारोपसद्भावात्तद्विप्रतिपत्तिविरोधो न भविष्यतीत्याशङ्कायामाह । ३६ निर्भासभेदैश्चित्रज्ञानवत् । ( चित्रज्ञान यथा एकमनेकम् ) । असाधारणहेतुत्वादिति पूर्वमुक्तम् । ३७ सर्वभावानामेकत्वे पृथक्त्वे च सति । ३८ सर्वथेत्यर्थ । एकत्वनिरपेक्षपृथक्त्वेन । ३९ एकत्वानेकत्वेन । ४० सामान्यविशेषस्वरूपभाज इत्यर्थ. । ४१ अर्थात् ।

त्तिस्तन्निबन्धना भेदविशेषा एव प्रकल्प्यन्ते, न जातिविशेषाः, प्रतीतिविरोधात् । यतो यतस्त्वनुवृत्तिस्ततस्ततो जातयः प्रकल्प्यन्ते, तासामेवानुवृत्तिप्रत्ययलिङ्गत्वात् । ततो यो येन धर्मेण विशेषोऽविशेषश्च संप्रतीयते, न स शक्यस्ततोन्येन । तेन भिन्नाऽभिन्ना च व्यवस्थितिः पदार्थानां, तथा प्रतीतेर्बाधकाभावात् । ततः स्थितमेतत्, सत्सामान्यविवक्षायां सर्वेषामैक्यं, द्रव्यादिभेदविवक्षायां पृथक्त्वमेव, इतरस्याविवक्षायां गुणभावात् ।

विवक्षाऽविवक्षयोरसद्विषयत्वान्न तद्वशात्तत्त्वव्यवस्था युक्तेति मन्यमानं प्रत्याहुः सूरयः ।—

**विवक्षा चाविवक्षा च विशेष्येऽनन्तधर्मिणि ।**
**सतो विशेषणस्यात्र नासतस्तैस्तदर्थिभिः ॥ ३५ ॥**

क्रियते इति शेषः । विशेष्योर्थस्तावदनन्तधर्मा प्रागुक्तः । तत्र कस्यचिद्विशेषणस्यैकत्वस्य सत एव विवक्षा पृथक्त्वस्य च सत एव वाऽविवक्षा, न पुनरसतः क्रियते तैः प्रतिपत्तृभिरेकत्वपृथक्त्वाभ्यामर्थिभिः, सर्वथा तत्र कस्यचिदर्थित्वानर्थित्वयोरसंभवात्, तस्य सकलार्थक्रियाशक्तिशून्यत्वात् खरविषाणवत् । न हि कस्यचिद्विवक्षाविषयस्य मनोराज्यादेरसत्त्वे सर्वस्यासत्त्वं युक्तं, कस्यचित् प्रत्यक्षविषयस्य केशोण्डुकादेरसत्त्वे सर्वस्य प्रत्यक्षविषयस्यासत्त्वप्रसङ्गात् । प्रत्यक्षाभासविषयस्यासत्त्वं, न पुनः सत्यप्रत्यक्षविषयस्येति चेत् तर्ह्यसत्यविवक्षाविषयस्यासत्त्वमस्तु, सत्यविवक्षाविषयस्य तु मा भूत् । न काचिद्विवक्षा सत्या विकल्परूपत्वान्मनोराज्यादिविकल्पवदिति चेन्न, अस्यानुमानस्य सत्यत्वेऽनेनैव हेतोर्व्यभिचारात् तदसत्यत्वे साध्याप्रसिद्धेः । यतोनुमानविकल्पादर्थं परिच्छिद्य प्रवर्तमानोर्थक्रियायां न विसंवाद्यते, तद्विषयः सन्नेवेति चेत्तर्हि यतो विवक्षाविशेषादर्थं विवक्षित्वा प्रवर्तमानो न विसंवाद्यते तद्विषयः कथमसन् भवेत् ? अविवक्षाविषयोऽसन्नेवान्यथा तदनुपपत्तेरिति चेन्न, सकलवाग्गोचरातीतेनार्थस्वलक्षणेन व्यभिचारात् । सर्वस्य वस्तुनो वाच्यत्वान्नाविवक्षाविषयत्वमिति चेन्न, नाम्नस्तद्भागानां च नामान्तराभावादन्यथानवस्थानुषङ्गात् । तेषामविवक्षाविषयत्वेपि सत्त्वे कथमन्यदपि विशेषणमविवक्षाविषयत्वे सदेव न सिध्येत् ? तदेवं विधिप्रतिषेधधर्माणां सतामेव विवक्षेतराभ्यां योगस्तदर्थिभिः क्रियेत, अन्यथार्थनिष्पत्तेरभावात् । न ह्यर्थक्रियार्थिनामर्थनिष्पत्तिमनपेक्ष्य विवक्षेतराभ्यां योगः संभवति, येन तदभावेपि स स्यात् । उपचारमात्रं तु स्यात् । न चाग्निर्माणवक इत्युपचारात् पाकादावुपयुज्यते । ननु चान्यव्यावृत्तय एव

---

१ निश्चीयन्ते । २ जातिः सामान्यम् । ३ व्यावृत्तितो विशेषाणामेव प्रतीतिर्न तु जातीना, तासामनुवृत्त्या एव प्रतीते.। अतो विपर्ययात्प्रतीतिविरोध इति भाव. । ४ अनुस्यूतिः, अन्वयः । ५ सामान्यानि । ६ न तु भेदस्य । ७ पृथक्त्वधर्मेण सत्सामान्यधर्मेण च क्रमेण । ८ उक्तधर्मद्वयात् । ९ ( विवक्षा मुख्यता, अविवक्षा गौणतेति च पर्यायार्थ. ) । १० भेदाभेदव्यवस्था । ११ बौद्धम् । १२ सतो विद्यमानस्यैव विशेषणस्यास्तित्वादेर्विवक्षा चाविवक्षा च क्रियते नाविद्यमानस्य । १३ एकत्वानेकत्वविशेषणार्थिभि. । १४ धर्मे धर्मेऽन्य एवार्थ इत्यादिकारिकायाम् । १५ सर्वथा असत. । १६ असति । १७ पुंस । १८ सर्वथा असत । १९ विवक्षाविषयस्य मनोराज्यादेरसत्त्वात्कथं विवक्षावशाद्भेदाभेदव्यवस्थिति स्यादित्याशङ्क्याहुर्जैना । २० मनोराज्यादे । २१ पुनर्बौद्धो वक्ति । २२ इदमनुमानं सत्यमसत्यं वेति विकल्पद्वयं कृत्वा क्रमेण दूषयति जैनः । २३ पुनर्बौद्ध । २४ नर । २५ न सदिग्धो भवति । २६ अनुमानविकल्पविषय । २७ विद्यमान । २८ विवक्षाविषयीकृत्य । २९ पुनराह बौद्ध· । ३० भेदाभेदयोरेकतरविवक्षायामन्यतरविषयोऽसन्नेव, अविवक्षाविषयत्वात् । व्यतिरेके विवक्षाविषयवत् । ३१ सन् चेत्तर्हि । ३२ यतोर्थस्वलक्षणेऽविवक्षाविषयेपि तस्य सत्त्वं मन्यते बौद्ध. । ३३ अधुना शब्दाद्वैतवादी प्रत्यवतिष्ठते । ३४ शब्देन । ३५ जैनैर्निराक्रियते । ३६ शब्दस्य । ३७ घटनाम्नि घटसंबन्धिवर्णेषु च घटनामान्तरस्य पटनाम्न पटवर्णाना चाभावात् । ३८ शब्दतदंशानाम् । ३९ अविवक्षितम् । ४० भेदरूपमभेदरूप वा । ४१ अर्थनिष्पत्त्यभावे । ४२ विवक्षेतराभ्या योग । ४३ हे बौद्ध ! । असता धर्माणा विवक्षेतराभ्या योग· । ४४ व्यावृत्तेरेव विवक्षाऽविवक्षा च, न तु स्वलक्षणस्य, तस्योपचारादिति बौद्धमतमनूद्य निराकरोति ।

विवक्षेतराभ्यां युज्यन्ते, न वस्तुस्वभावो, यतस्तयोः सद्वि[1]षयत्वमिति चेन्न, शब्दे[2]भ्यो वस्तु[3]नि प्रवृ[4]त्ति-विरोधात् । व्यावृत्तितद्व[5]तोरेकत्वाध्यारोपात्तद्व[6]ति प्रवृत्तिरिति चेन्न, अध्यारोपस्य विकल्पत्वेनार्थाविषयत्वात् स्वा[7]विषयेण व्यावृत्तेरेकत्वारोपणायोगात् । सामा[8]न्येनार्थो[9]ध्या[10]रोपविकल्पविषय एवेति चेत्तदपि यद्यन्यव्या-वृत्ति[11]रूपं तदा व्यावृत्त्यैव व्यावृत्तेरेकत्वारोपात्कुतोर्थे प्रवृ[12]त्तिः ? तामिच्छतो[13] त[14]देकैकशः परस्परव्यावृत्त-योपि परिणा[15]मविशेषा एषितव्याः ।

योप्य[16]ाह भेद एव परमार्थसन्नर्थानां नाभेदस्तस्य संवृतिसत्त्वादन्यथा विरोधा[17]दिति । अभेद एव तात्त्वि-को भावानां न भेदस्तस्य कल्पनारोपितत्वादन्यथा विरोधानुषङ्गादिति चा[18]परः । तौ प्रति सूरयः प्राहुः।—

**प्रमाणगोचरौ सन्तौ[19] भेदाभेदौ न संवृती ।**
**तावेकत्राविरुद्धौ ते[20] गुणमुख्यविवक्षया ॥ ३६ ॥**

अभेदस्तावत्सन्नेव न पुनः संवृ[21]तिविषयः प्रमाणगोचरत्वाद्भेदवत् । भेदः सन्नेव न पुनः संवृतिः प्रमा-णगोचरत्वादभेदवत् । भेदाभेदौ सन्तावेव, न पुनः संवृती, प्रमाणगोचरत्वात्स्वेष्टतत्त्ववदित्यपि पक्षान्तर-मा[22]क्षिप्तं लक्ष्यते, तदुभयसंवृतिवादिनोपि सकलधर्मविधुरत्वमनुमन्यमौ[23]नस्य भावात् । न चात्रे[24] साध्यसाध-नधर्मविकलमुदाहरण, भेदाभेदतदुभयानुभयैकान्ताभिधायिना तत्प्रसिद्धेः स्याद्वादिवत् । त[25]थैकत्र वस्तुनि भेदाभेदौ परमार्थसन्तौ ते भगवतो न विरुद्धौ प्रमाणगोचरत्वात्स्वेष्टतत्त्ववत् । इति सामर्थ्यात् परस्परे[26]-निरपेक्षौ भेदाभेदौ विरुद्धावेव प्रमाणागोचरत्वाद्भेदैकान्तादिवत् । इति कारिकायामर्थसङ्ग्रहः ।

किं पुनः प्रमाणं यद्गोचरत्व[27]मत्र हेतुरिति चेत् प्रमाणमविसंवादि ज्ञानमनधि[28]गतार्थाधिगमलक्ष-णत्वादित्यग्रे वक्ष्यति । अ[29]धिगमो हि स्वार्थाकारव्यवसायः । स्वार्थाकारौ च कथञ्चिद्भेदा[30]भेदौ, तदन्यतरा-पायेऽर्थक्रियानुपपत्तेस्तदेकान्ते स[31]र्वथा तदयोगात्। त[32]देवं सति भेद[33]मभेदं[34] वा नान्योन्य[35]रहितं विषयी-करोति प्रमाणम् । न हि वहिरन्तर्वा स्वल[36]क्षणं सामान्यल[37]क्षणं वा तथैवोपलभामहे यथैकान्तवा-दिभिराम्ना[38]यते । इति भेदैकान्ताभावेऽभेदैकान्तासत्त्वे च परस्परनिरपेक्षतदुभयैकान्तापाकरणेऽनुभयैका-न्तापसारणे च साध्ये स्वभावानुपल[39]ब्धिः, स्वयमुपलब्धिलक्षणप्राप्तस्य तस्या[40]नुपलभ्यमानत्वसिद्धेः । न चेय[41]मसिद्धा, सूक्ष्मस्थूलाकाराणां स्थूलसूक्ष्मस्वभावव्यतिरेके[42]ण प्रत्यक्षादावप्रतिभासनात् । न हि प्रत्यक्षे स्वलक्षणं सू[43]क्ष्मं परमाणुलक्षणं प्रतिभासते स्थूलस्य घटाद्यात्मनः प्रतिभासनात् । परमाणुष्वेवात्या-

---

१ सन् विषयो ययो ( विवक्षेतरयो. ), तयोर्भाव । २ व्यावृत्तिविषयेभ्य । ३ व्यावृत्तिरेव सामान्यं तेन सामान्य-
रूपेण । ४ घटमानयेत्युक्ते घटमानयतीति प्रवृत्तेर्विरोधो भवेत् । ५ तद्वान् गौ । ६ गवि । ७ स्वलक्षणरूपेणार्थेन ।
८ व्यावृत्तिरेव सामान्य तेन सामान्यरूपेण । ९ स्वलक्षण । १० अध्यारोपो विकल्पस्तस्य विषय सामान्यलक्षणोर्थे ।
११ असामान्याद्व्यावृत्तं सामान्यरूपम् । १२ ततश्च सामान्यरूपव्यावृत्तेरध्यारोपविकल्पविषयविशेषव्यावृत्तावेव ( व्यावृत्त्य-
न्तरे ) प्रवृत्तिर्न पुन स्वलक्षणे इति भाव । १३ बौद्धेन । 'तामिच्छता' इति पाठान्तरम् । १४ तत । १५ पदार्थं पदार्थं
प्रति वस्तुधर्मा. । १६ बौद्ध । १७ एकत्र वस्तुनि । १८ अद्वैती । १९ पारमार्थिकौ । २० भगवतः। २१ संवृति कल्पना ।
२२ भेदाभेदौ संवृती इति वदतोपि वादिन । २३ शून्यवादिन सौगतस्य । २४ त्रिष्वप्यनुमानेषु । २५ अनुमानत्रयस-
द्भावप्रकारेण । २६ नैयायिकाभिमतौ । २७ अनुमानचतुष्टये । २८ अनधिगत, अपूर्व । अर्थ स्वार्थ. । अधिगमो
व्यवसाय' ( निश्चय )। २९ पूर्वोक्तं स्पष्टीकरोति । ३० पर्यायापेक्षया भेदोभेदस्तु द्रव्यापेक्षया । ३१ क्रमेण यौगपद्येन
वा । ३२ भेदाभेदयो स्वार्थाकारत्वप्रकारेण । ३३ सौगतस्य । ३४ अद्वैतिन । ३५ परस्परनिरपेक्षं यौगानुमतं वा ।
३६ भेदम् । ३७ अभेदम् । ३८ कथ्यंते । ३९ ( पूर्वोक्तपक्षचतुष्टयखण्डने साध्ये स्वभावानुपलब्धिर्हेतुरस्ति इत्यर्थ )।
४० भेदाद्येकान्तचतुष्टयस्य । ४१ स्वभावानुपलब्धि ( हेतु )। ४२ यत ( सूक्ष्माणा स्थूलस्वभावापेक्षयैव स्थूलाना च
सूक्ष्मस्वभावापेक्षयैव प्रतिभासनं, न तु तद्व्यतिरेकेणेति भाव. )। ४३ स्थूलस्वभावनिरपेक्षम् ।

सन्नासंसृष्टेषु दृष्टौ[1] प्रतिभासमानेषु कुतश्चिद्विभ्रमनिमित्तादात्मनि[2] परत्रे[3] चासन्तमेव स्थूलाकारमादर्शयन्ती संवृतिस्तान्[4] संवृणोति केशादिभ्रान्तिवदिति[5] चेन्नैवं, बहिरन्तश्च[6] प्रत्यक्षस्याभ्रान्तत्वकल्पनापोढत्वाभावप्रसङ्गात्, संव्यवहारतः परमार्थतो वा प्रत्यक्षं कल्पनापोढमभ्रान्तमिति लक्षणस्यासंभवदोषानुषङ्गात्, परमाणूनां जातुचिदध्यक्षबुद्धावप्रतिभासनात्। ते इमे परमाणवः प्रत्यक्षबुद्धावात्मानं च न समर्पयन्ति प्रत्यक्षतां च स्वीकर्तुमिच्छन्तीत्यमूल्यदानक्रयिणः स्वावयवभिन्नैकावयविवत्। न हि सोपि सूक्ष्मस्वावयवव्यतिरिक्तो महत्त्वोपेतः प्रत्यक्षे प्रतिभासते कुण्डादिव्यतिरिक्तदध्यादिवत्[11]। समवायी[12] तेभ्योनर्थान्तरमिव[13] प्रतिभासते इति चेन्न, अवयविप्रत्यक्षस्य[15] सर्वत्र भ्रान्तत्वप्रसङ्गात्[16]। तथा चाव्यभिचारित्वं प्रत्यक्षलक्षणमसंभवि स्यात्। न चैतेऽवयवा अयमवयवी समवायश्चायमनयोरिति त्रयाकारं प्रत्यक्षमनुभूयते सकृदपि, यतोसावप्यमूल्यदानक्रयी न स्यात्, प्रत्यक्षबुद्धावात्मानर्पणेन प्रत्यक्षतास्वीकरणाविशेषात्। तत[17] एव परस्परभिन्नावयवावयविनामपि प्रत्यक्षे प्रतिभासनादमूल्यदानक्रयिणावुक्तौ[18] समवायवत्[19]। सर्वं[20] वस्तु क्षणिकपरमाणुरूपं, सत्त्वात्, नित्यस्थूलरूपे[21] क्रमाक्रमाभ्यामर्थक्रियानुपपत्तेस्तदयोगादित्यनुमानेन[22] स्वलक्षणमध्यवसीयते इति चेन्न, अत्र[23] हेतोर्विरुद्धत्वात्, सत्त्वस्य कथंचिन्नित्यानित्यात्मकसूक्ष्मस्थूलात्मकत्वेन व्याप्तत्वात्, सर्वथा नित्याद्येकान्तरूपे क्रमयौगपद्याभ्यामर्थक्रियाविरोधात्सत्त्वानुपपत्तेः समर्थनात्। एतेन[24] स्थूलमेवावयवि द्रव्यं[25] सूक्ष्मावयवरहितं प्रतिभासते इति व्युदस्तं तदनुमानस्यापि विरुद्धत्वाविशेषात् प्रत्यक्षबाधितविषयत्वाच्च हेतोरतीतकालत्वाव्यवस्थितेः[26][27][28]। अत एव[29] नोपमानादावपि[30] तत्प्रतिभासनमिति[31][32] नासिद्धं सूक्ष्माद्येकान्तस्य प्रत्यक्षबुद्धावप्रतिभासनं, यतस्तत्प्रतिषेधे साध्ये स्वभावानुपलब्धिर्न सिध्येत्[33]। तत्प्रतिषेधे[34] च सिद्धः सूक्ष्माद्यनेकान्तः। तत्र[35] स्वभावान्तरस्य प्राधान्यविवक्षायामाकारान्तरस्य गुणभावः स्यात्, घटोयं परमाणवो रूपादयो वेति। घटार्थिनो हि घटविवक्षायां घटः प्रधानं परमाणवोनुमेयाः, प्रत्यक्षाश्च रूपादयो गुणीभूताः, तदनर्थित्वादविवक्षाप्रसिद्धेः। तदर्थिनां[36] तु तद्विवक्षायां त एव प्रधानं न पुनर्घटोवयवी, तद्विवक्षायाः[37] संभवाभावात्तदर्थित्वानुपपत्तेः। न[38] च तदुभयसत्त्वाविशेषादविशेषेणार्थित्व-

---

१ निर्विकल्पकप्रत्यक्षे। २ स्थूलार्थस्य विभ्रमनिमित्ताद्वासनाविशेषात्। ३ कल्पिते स्थूलार्थज्ञाने। ४ परमाणौ। ५ परमाणून्। ६ केशघम्मिल्लादिवत्। यथा केशाना समूहे एकत्वं प्रतिभासते तथापि परमार्थत एकत्वं नास्ति। ७ बहि. प्रत्यक्षं घटोयमिति। अन्त प्रत्यक्षं मानसम्। ८ निर्विकल्पकप्रत्यक्षज्ञाने। ९ मूल्यार्पणमन्तरेण ग्राहिण। १० एकोवयवी तन्त्वादिः। स्वावयवभिन्नैकावयविनो न प्रत्यक्षबुद्धावात्मानं समर्पयन्ति प्रत्यक्षता च स्वीकर्तुमिच्छन्ति यथा। ११ यथा कुण्डादिव्यतिरिक्तं दधि प्रतिभासते तथा स्वावयवव्यतिरिक्तोवयवी न प्रतिभासते। व्यतिरेके उदाहरणमिदम्। १२ कश्चित्पर। १३ अवयवेभ्य। १४ अवयवी। १५ अवयविषु। १६ अवयवभिन्नस्याभेदेन ग्रहणमिति भ्रान्तत्वम्। १७ अवयविनोऽमूल्यदानक्रयित्वसमर्थनादेव। १८ अवयवावयविनौ। १९ समवायो यथा प्रत्यक्षे न प्रतिभासते प्रत्यक्षश्च भवतीत्यमूल्यदानक्रयी। २० भाष्योक्तादिशब्दगृहीतानुमानादावपि सूक्ष्मस्थूलाकाराः स्थूलसूक्ष्मस्वभावव्यतिरेकेण न प्रतिभासन्ते इति समर्थयमान परप्रश्नमाह। २१ नित्ये स्थूलरूपे च। २२ तस्य सत्त्वस्य। २३ अनुमाने। २४ नित्याद्येकान्ते सत्त्वानुपपत्तिसमर्थनेन। २५ घटादिकम्। २६ अवयवी अवयवेभ्य. सर्वथा भिन्न. सर्वथा भिन्नप्रतिभासनादिति। २७ सर्वथा भिन्नप्रतिभासनादित्यस्य। २८ अतीतकालत्वाव्यवस्थितिशब्देन कालात्ययापदिष्टत्व ग्राह्यम्। २९ एतदनुमाननिराकरणात्। ३० आदिपदेनागमादि.। ३१ सूक्ष्मावयवरहितस्य स्थूलस्य प्रतिभासनम्। ३२ इति हेतो. सिद्धमेव सूक्ष्माद्येकान्तस्य प्रत्यक्षबुद्धावप्रतिभासनम्। ३३ अपि तु तत्प्रतिषेधे सूक्ष्माद्येकान्तस्य प्रतिषेधे साध्ये स्वभावानुपलब्धि. सिध्यत्येव। ३४ सूक्ष्माद्येकान्तनिराकरणे स्याद्वादिना किं फलमिति केनचित्पृष्टे आहुर्जैना। 'तत्प्रतिषेधे एव' इति पाठान्तरम्। ३५ कारिकायाश्चतुर्थं पदं व्याख्याति। तत्र सूक्ष्मस्थूलयोर्मध्ये। अन्यतर. स्वभाव· स्वभावान्तर तस्य। स्थूलस्य सूक्ष्मस्य वेत्यर्थः। एकस्य प्राधान्ये विवक्षिते आकारान्तरस्य, तदितरस्य स्वभावस्य गुणीभावः स्यादित्यर्थ.। ( यथा घटस्य प्राधान्ये परमाणूना ( घटावयवानां ) घटरूपादीना वा अप्राधान्यम्। घटरूपादीना घटावयवाना च प्राधान्ये घटस्याप्राधान्यमित्यर्थः )। ३६ ( घटपरमाण्वर्थिना घटरूपाद्यर्थिनां वा )। ३७ ( तस्य घटस्य )। ३८ हे सौगत।

मनार्थित्वं वा प्रसज्यते, तस्य[1] तत्सत्तामात्रानिबन्धनत्वात्, मोह[2]विशेषोदयहेतुकत्वात् तद्[3]उदयस्यापि मिथ्यादर्शना[4]दिकाला[5]दिनिमित्तकत्वात् ।

तदेवं स्यादद्वैतं, स्यात् पृथक्त्वमिति मूलभङ्गद्वयं विधि[6]प्रतिषेधकल्पनयैकवस्तुन्यविरोधेन प्रश्नवशादुपदर्शितम् । शेषभङ्गाना तु प्रक्रिया यथोदित[7]नयविशेषवचनभाक् 'एकानेकविकल्पादावुत्तरत्रापि योजयेत्' इत्या[8]द्यतिदेश[9]कारिकानिर्देशसामर्थ्यात्प्रपञ्चतो निश्चेतव्या ।

अद्वैताद्याग्रहोग्रग्रहग[10]हनविपन्निग्रहेऽलङ्घ्यवीर्याः[11], स्यात्कारामोघमन्त्रप्रणयनविधयः शुद्धसद्ध्या[12]नधीराः ।
धन्यानामादधाना धृतिमधि[13]वसतां मण्डलं जैनमग्र्यं, वाचः सामन्तभद्र्यो विदधतु विविधां सिद्धिमुद्भू[14]तमुद्राः । १ ।

इत्याप्तमीमांसालङ्कृतौ द्वितीयः परिच्छेदः[15] । २ ।



---

१ तस्य, अर्थित्वस्य । तत्सत्तामात्रानिबन्धनत्वात् किन्तु मोहोदयहेतुकत्वात् । २ मोहोदयोपि सर्वत्र विद्यते, तत एवार्थित्वमनर्थित्वं वा कुतो न प्रसज्यते इत्युक्ते आह विशेषेति । ३ तस्य, मोहविशेषस्य । ४ आदिपदेन मिथ्याज्ञानादि । ५ आदिपदेन द्रव्यक्षेत्रभावा गृहीता । ६ प्रथमभङ्गे विधिकल्पना, द्वितीये प्रतिषेधकल्पना । ७ सत्सामान्यात्तु सर्वैक्यं पृथग् द्रव्यादिभेदत इत्यादिनयविवक्षा । ८ इति पूर्वमुक्ता त्रयोविंशतितमा कारिका । ९ अतिदेश, उपदेश । १० गहना दुर्निवारा । ११ वस । बहुव्रीहि । १२ ध्यानं परीक्षा । तेन धीरा, स्थिरा । १३ पुंसाम् । १४ उद्भूता मुदं रान्ति, ददतीति तथोक्ता । इदं वृत्त द्व्यर्थम् । मन्त्रपक्षे स्यात्कारामोघमन्त्रप्रणयनविधयो वाच कर्तृभूता । १५ अस्मिन् परिच्छेदे चतुर्विंशतितमप्रभृतिसप्तविंशतितमान्ताभिश्चतसृभि. कारिकाभिरद्वैतमतं, तत पञ्चकारिकाभि योगस्य बुद्धस्य च सर्वथा पृथक्त्वमतं स्पष्टमाक्षिप्य निरसितम् । तदनन्तरं चतसृभि कारिकाभिर्द्वैताद्वैतोभयात्मक सापेक्षोनेकान्तः समर्थितस्तत्र तत्र सर्वेषां पूर्वपक्षाश्च विशदीकृत्य दर्शिता । एवं त्रयोदशकारिकाविवरणरूपेण परिच्छेदोयं समापितोस्ति ।

---

# अथ तृतीयः परिच्छेदः ।

अष्टशती प्रथितार्था साष्टसहस्री कृतापि संक्षेपात् ।
विलसदकलङ्कधिषणैः प्रपञ्चनिचितावबोद्धव्या ॥ १ ॥

नित्यत्व[1]ैकान्तपक्षे[2]ऽपि विक्रिया नोपपद्यते ।
प्रागेव[3] कारकाभावः क्व प्रमाणं[4] क्व तत्फलम्[5] ॥ ३७ ॥

सदसदेकत्वपृथक्त्वैकान्तप्रतिषेधानन्तरं नित्यत्वैकान्तप्रतिक्षेपः, प्रक्रम्यतेऽ[6]नेनेति तात्पर्यम् । तत्र नित्यत्वैकान्तः कूट[7]स्थत्वाभिनिवेशः । तस्य पक्षः प्रतिज्ञानम् । तस्मिन्नपि विविधा क्रिया परिणाम-परिस्पन्दलक्षणा नोपपद्यते । कार्योत्पत्तेः[8] प्रागेव तदुत्पत्तौ[9] वा प्रागेव कारकाभावो नोपपद्यते इति[10] कूटस्थः[11] प्रागेव कारकः स्यादात्मा भोगस्य । अथ[12] प्रागेव[13] कारकाभावस्तदा[14] विक्रियाऽ[15]पि नोपपद्यते इति शश्वदकारकः स्यात् तद[16]विशेषात् । सो[17]ऽस्त्वकारकोऽविक्रियश्चेति चेत् क्वैवं[18] प्रमाणं प्रमितिलक्षणं च तत्फलमुपपद्येत ? प्रमातुरभावे तदसंभवात् । न ह्यकारकः प्रमाता नाम, प्रमितिक्रियासाधनस्य कारकविशेषस्य स्वतन्त्रस्य प्रमातृतोपपत्तेः । सकलकार्योत्पत्तिपरिच्छित्तिक्रिययोः[19] सर्वथाप्यसाधनस्य सत्त्वासंभवादवस्तुत्वापत्तेः कथमात्मसिद्धिः परस्य[20] स्यात् ? खरविषाणादिसिद्धिप्रसङ्गात्[21] ।

ननु[22] चात्मनश्चेतनैवार्थक्रिया, न पुनः स्व[23]व्यतिरिक्तकार्यस्योत्पत्तिर्ज्ञप्तिर्वा, तस्याः प्रधानहेतुत्वात्[24] । न च चेतना पुंसोऽर्थान्तरमेव, तस्य[25] तल्लक्षणत्वात् "चैतन्यं पुरुषस्य स्वरूपम्" इति वचनात् । न चा[26]नित्या चेतना, नित्यपुरुषस्वभावत्वात् साक्षित्वा[27]दिवत्तस्याः[28], प्रधानस्वभावत्वे[29] पुरुषकल्पनावैयर्थ्यात् तदनित्यत्वप्रसङ्गाच्च सुखादिवत् । न[30] च नित्यायाश्चेतनायाः परस्या[31]र्थक्रियात्वं विरुध्यते धात्वर्थरूपायाः[32] क्रियायाः प्रतिघाताभावात्सत्तावत्[33] । ततोऽर्थक्रियास्वभावत्वादात्मनो वस्तुत्वमेव । न[34] ह्यर्थक्रियाकारणस्यैव वस्तुत्वम[35]र्थक्रियायाः स्वयमवस्तुत्वापत्तेस्तत्रार्थक्रियान्तराभावादन्यथानवस्थाप्रसङ्गात् । स्व[36]तोऽर्थक्रियाया वस्तुस्वभावत्वे

---

१ अत. साङ्ख्यमतनिर्घाटनम् । २ साङ्ख्याभिमते । ३ कार्योत्पत्ते । ४ कारणलक्षणम् । ५ कार्यलक्षणम् । ६ श्लोकेन । ७ एकरूपतया य. कालत्रयीव्यापी स कूटस्थ । अथवा कूटवन्निर्विकारो य. स्थितः स कूटस्थ उच्यते । ८ अन्यथेति शेष । ९ सुखाद्यनुभवस्य कार्यस्योत्पत्ते प्रागेव कूटस्थ आत्मा भोगस्य कारकः स्यादिति संबन्धः । प्रागेवेति शब्दस्य पञ्चम्यन्तेन सह व्याख्यानमुत्पत्स्यमानकार्यापेक्षया । तदुत्पत्ताविति सप्तम्यन्तेन पदेन तु उत्पद्यमानकार्यापेक्षया सबन्ध. । १० हे साङ्ख्य यदि कारकाभावो न तदा तत्सद्भाव । इति सति । ११ इत्युक्ते कारकसद्भाव एव न तु कारकाभाव कूटस्थे इति दूषणं दत्त साङ्ख्यमते । १२ यदि । १३ कार्योत्पत्ते. । १४ कूटस्थे आत्मनि । १५ सुखाद्यनुभवलक्षणा । १६ प्रागिवोत्पत्तावपि कारकाभावस्याविशिष्टत्वात् । १७ साङ्ख्यः । १८ किंच । १९ उत्पत्तिलक्षणाया ज्ञप्तिलक्षणायाश्चेत्यर्थ । २० साङ्ख्यस्य । २१ अवस्तुत्वापत्तावप्यात्मसिद्धिश्चेत्तर्हि । २२ साङ्ख्यः । २३ स्वपदेन चेतना । २४ प्रधानं हेतुर्यस्यास्तत्त्वात् । २५ पुंस । २६ चेतना अनित्या भविष्यतीत्याशङ्कायामाह साङ्ख्य. । २७ प्रधानात्मकत्वकार्योत्पत्तावात्मा साक्षित्वेन वर्तते इति भावः । २८ चेतनाया । २९ चेतनाया । अङ्गीक्रियमाणे । ३० ननु च नित्यायाश्चेतनायाः कथमर्थक्रियाकारित्व न विरुध्यते इत्याशङ्क्याह । ३१ साङ्ख्यस्य । ३२ चेतयते इति चेतना धात्वर्थरूपा । ३३ यथा नित्याया. सत्ताया अर्थक्रियात्वं न विरुध्यते । ३४ नन्वर्थक्रिया चेतना तत्स्वभावो जीवस्तस्यार्थक्रियास्वभावस्य कथं वस्तुत्वम् ? अर्थक्रियाकारणस्यैव वस्तुत्वादित्याशङ्क्याह । ३५ अन्यथेति शेषः । ३६ अर्थक्रियान्तरकारित्वाभावेऽपि ।

पुरुषस्यापि स्वतः शश्वदर्थक्रियास्वभावत्वान्नित्यं वस्तुत्व[1]मस्तु, विक्रियाविरहेपि नित्यकारकत्व[2]स्यापि घटनात् । इति कश्चित् सोपि न परीक्षादक्षधिषणः, प्रमाणविरोधात्, प्रत्यक्षतोनुमानादेर्वा नित्यार्थक्रियायाः[3] कदाचिदपरिच्छेदात् । स्वसंवेदनमेव नित्यचेतनार्थक्रियां[4] परिच्छिनत्तीति चेन्न, तथा[5] तद्बुद्ध्या[6]नध्यवसायात् । न हि बुद्ध्यानध्यवसितां चेतनां पुरुषश्चेतयते, बुद्धिपरिकल्पनावैयर्थ्यप्रसङ्गात्, सर्वस्य शब्दादेर्विषयस्य[7] बुद्ध्यनध्यवसितस्यैव पुंसा संवेद्यत्वसिद्धेः[8] । स्यान्मत 'न चेतना नाम विषयभूतार्थान्तरं पुंसोस्ति यां[9] बुद्ध्याध्यवसीयते तस्यास्[10]तत्स्वरूपत्वात्[11] स्वतः प्रकाशनाच्च' इति तदप्ययुक्त, तदर्थक्रियात्वायोगात् । न ह्यर्थक्रियावतः स्वरूपमेव[12] सदावस्थाय्यर्थक्रिया प्रसिद्धास्ति, तस्याः पूर्वाकारपरित्यागेनोत्तराकारोपादानेन[13] च स्वस्मिन्[14] परत्र[15] वा प्रतीतेः । सोयं **पूर्वापरस्वभावपरिहारावाप्तिलक्षणामर्थक्रियां कौटस्थ्येपि ब्रुवाणः कथमनुन्मत्तः?** सा ह्यर्थक्रियोत्पत्तिर्ज्ञप्तिर्वा । न च शश्वदवस्थिते सर्वथासौ प्रतीयते, तत्र **कारकज्ञापक[16]हेतुव्यापारासंभवात्** । न हि पुरुषस्यार्थस्योत्पत्तिश्चेतनाक्रिया येन कारकहेतोरुपादानस्य सहकारिणो[17] वा व्यापारस्तत्र भवेत् । तथोपगमे[18] वा तस्या[19]नित्यत्वानुषङ्गात्कुतः कौटस्थ्यसिद्धिः? चेतना[20] पुंसो ज्ञप्तिक्रियेत्यपि न युक्तं, यतस्तत्र ज्ञापकहेतोः प्रमातुः प्रमाणस्य च व्यापारः स्यात् । स्यान्मतं 'न पुरुषलक्षणस्यार्थस्य क्रिया चेतनाख्योत्पत्तिर्ज्ञप्तिर्वा । किं तर्हि? स्वभाव एव, तस्य[21] सर्वदा तत्स्वभावत्वात्' इति तदप्यसत्, पुंसः[22] परिणाम[23]सिद्धिप्रसङ्गात्, **परिणामविवर्तधर्मावस्थाविकाराणां स्वभावपर्यायत्वात्[24]** । ननु[25] च 'स्थितस्य धर्मिणः[26] पूर्वाकारतिरोभावेनोत्तराकाराविर्भावः परिणामः । स कथं स्वभावपर्यायः? सदावस्थितस्य स्वरूपस्य स्वभावत्वात् । एतेन विवर्तविकारावस्थानां स्वभावपर्यायत्वं व्युदस्तं, विवर्तादीना कादाचित्कत्वात् । तत एव धर्मविशेषस्य[27] न स्वभावपर्यायत्वम् । धर्मसामान्यस्यापि साधारणत्वा[28]दसत्त्वमेव[29], शश्वदनपायिनोऽसाधारणस्य स्वरूपस्य स्वभावत्वात् ।' इति कश्चित् सोपि न तत्त्ववित्, सततावस्थितस्यैकान्ततः कस्यचित्स्वभावस्यासंभवात् । स[30] हि न तावत्सकलप्रमाणेनापरिच्छिद्यमानः प्रतिष्ठा[31]मियर्त्ति, अतिप्रसङ्गात्[32] । परिच्छिद्यमानस्तु पूर्वापरिच्छिद्यमानरूपताव्यवच्छेदेन परिणामलक्षणानुसरणात् कथं न स्वभावः परिणाम एव स्याद्यतस्तत्पर्यायो न स्यात्? एतेन विवर्तादीनां स्वभावपर्यायत्वमुक्त, तद्वत्स्वभावस्यापि कथंचित्कादाचित्कत्वसिद्धेः । धर्मसामान्यस्य तु यथा साधारणत्व तथा स्वभावसामान्यस्यापि, परिणामादिसामान्यवत् । ततः परिणामादिविशेषाणां स्वभावविशेषपर्यायत्व परिणामादिसामान्यानां तु स्वभावसामान्यपर्यायता व्यवतिष्ठते । पूर्वोत्तराकारयो[33]स्तिरोभावाविर्भावौ तु नाशोत्पादावेव नामान्तरेणोक्तौ, सर्वथा तदभावे[34]

---

१ पुरुषस्य । २ आत्मन । ३ चेतनारूपायाः । ४ नित्यचेतना एवार्थक्रिया ताम् । ५ नित्यचेतनार्थक्रियाप्रकारेण । ६ तद्बुद्ध्या स्वसंवेदनेनाहं सुखी दु खी वेत्यादेरेवानित्यतया परिच्छेदान्न तु नित्यार्थक्रियाया । ७ शब्दादेर्विषयो घटादिस्तस्य । ८ इति बुद्धिकल्पनावैयर्थ्यम् । ९ चेतना । १० चेतनाया । ११ पुरुषस्वरूपत्वात् । १२ चैतन्यम् । १३ उपादानं ग्रहणम् । १४ आत्मनि । १५ घटपटादौ । १६ कारकहेतोर्ज्ञापकहेतोश्च । १७ प्रधानादे । १८ चेतनाया अर्थोत्पत्तिरूपक्रियात्वेनोपगमे । चेतनाया कारकहेतुसहकारिहेत्वाद्युपगमे वा । १९ पुरुषस्य । २० चेतनाया पूर्वमुत्पत्तिक्रियात्वं निषिध्य ज्ञप्तिक्रियात्वं निषिध्यते । २१ पुस कूटस्थस्य । २२ एवं सतीति शेष । २३ पूर्वाकारस्य त्यागे उत्तराकारपरिणमनमेव परिणाम । परिणामसिद्धौ चानित्यत्व सुतरा सिध्यति । २४ पर्यायादय एते स्वभावस्य नामान्तराणि, न तु भिन्नरूपस्य । २५ परिणामस्वभावयोर्भेद कथयन्नाह साङ्ख्यः । २६ वस्तुन । २७ सुखादे । २८ प्रधानादावपि सत्त्वप्रमेयत्वादेर्धर्मसामान्यस्य विद्यमानत्वात् । २९ स्वभावपर्यायत्वासत्त्वमेवेत्यर्थ । ३० ( सततावस्थित स्वभाव ) । ३१ ( वादिप्रतिवादिषु स्थितिं नेयर्ति ) । ३२ खरविषाणादेरपि प्रतिष्ठाप्रसङ्गात् । ३३ ननु च स्वभावपर्याययोरैक्येपि पुरुषस्य न कौटस्थ्यहानि. परिणामस्याविर्भावतिरोभावरूपत्वेन नाशोत्पादासंभवादित्युक्ते जैन. प्राह । ३४ नाशोत्पादाभावे ।

स्वभावस्यासंभवात्[1] । तदेतद्विनाशोत्पत्तिनिवारणमबुद्धिपूर्वकं[2,3] प्रत्यक्षादिविरोधात् क्षणिकैकान्तवत् । नेदमसिद्धं साधनं, पुरुषस्योत्पादव्ययध्रौव्यात्मनः स्वसंवेदनप्रत्यक्षात् स्मरणात्प्रत्यभिज्ञानादूहादनुमानाच्छ्रुताच्च प्रमाणात् सुनिश्चितासंभवद्बाधकप्रमाणात्प्रतिपत्तेः, विनाशोत्पत्तिरहितस्य जातुचिदप्रतीतेः प्रत्यक्षादिविरोधस्य निश्चयात् । एतेन क्षणिकैकान्तनिदर्शनस्य[4] साधनविकलता निरस्ता, सर्वथा स्थितिरहितस्य[5] चेतसः प्रत्यक्षादावप्रतिभासनात्तद्विरोधस्य सिद्धेः । साध्यशून्यता च न संभवति, स्थितिमात्राभिनिवेशस्येव निरन्वयक्षणिकाभिनिवेशस्यापि मिथ्याबुद्धिपूर्वकत्वात् ।

एतेनान्वयैकं[6,7] नित्यमेवेत्यपास्तं, व्यक्तस्यापि[8] नित्यत्वानुषङ्गात् नित्यादव्यतिरिक्तस्याप्यनित्यत्वे[9] चैतन्यस्याप्यनित्यत्वापत्तेः[10]। सर्वथा[11] व्यक्तस्यापि नित्यत्वे प्रमाणकारकव्यापारविरोधात्तदप्रमेयमनर्थक्रियाकारि प्रसज्येत ।

प्रमाणकारकैर्व्यक्तं[12] व्यक्तं[13] चेदिन्द्रियार्थवत्[14] ।
ते[15] च नित्ये विकार्यं किं साधोस्ते[17] शासनाद्बहिः ॥ ३८ ॥

न[16] हि प्रमाणं नित्यं नाम, तत्कृताभिव्यक्तेः प्रमितिरूपाया महदहङ्कारादौ व्यक्तात्मनि नित्यत्वप्रसङ्गात्। नापि कारकं नित्यं, तद्विहिताभिव्यक्तेरुत्पत्तिरूपायाः सातत्यप्रसक्तेः । तथा च न व्यक्तं प्रमाणकारकैरभिव्यक्तमिन्द्रियैरर्थवदिति शक्यं वक्तुं[18], पूर्वमनभिव्यक्तस्य व्यञ्जकव्यापारादभिव्यक्तिप्रतीतेः[19] । अथ मतं[20], प्रमाणकारकाणि व्यवस्थितमेव[21] भावं व्यञ्जयन्ति चक्षुरादिवत् स्वार्थम् । ततो न किञ्चिद्विप्रतिषिद्धमिति[22] तदप्यसम्यक्, सर्वथा[23] नित्यत्वेन भावस्याव्यवस्थितत्वात् कथंचिदनित्यस्यैव प्रमाणकारकव्यापारविषयत्वविनिश्चयात् । चक्षुरादयो हि स्वार्थं रूपादिकमनभिव्यक्तस्वभावपरिहारेणाभिव्यक्तस्वभावोपपादनेन च व्यञ्जयन्तः स्वयमव्यञ्जकरूपत्यागेन व्यञ्जकत्वस्वीकरणेन च व्यञ्जकव्यपदेशभाजो दृष्टाः । न चैवं[24] प्रमाणं कारकं च परैरिष्टं[25] तयोर्नित्यत्वाभ्युपगमात्[26] । तत्कृतस्य च विषयविशेषविज्ञानादेः शाश्वतत्वान्न किञ्चिद्व्यक्त्यर्थं[27] पश्यामः[28], कथंचिदपूर्वोत्पत्तौ[29] तदेकान्तविरोधात् । न ह्यनेकान्तवादिनस्तव साधोः शासनाद्बहिर्[30]विषयविशेषविज्ञानाभिलाषप्रवृत्त्यादेरुत्पत्तिः कथंचिदपूर्वा युज्यते, यतोऽस्यामभ्युपगम्यमानायां नित्यत्वैकान्तविरोधो न भवेत्, तदभावे[31] विकार्यानुपपत्तेः । न हि कथंचिदपूर्वोत्पत्त्यभावे किंचिद्व्यङ्ग्यं[32] कार्यं वा विकार्यमुपपद्यते । न[33] वै[34] किंचिद्विरुद्धं कार्यकारणभावाभ्युपगमादि[35]त्यनालोचितसिद्धान्तं[36], कार्यस्य सदसत्त्वविकल्पद्वयानतिक्रमात् । तत्र[37],

---

१ खरविषाणवत् । २ तत्, तस्मात् । ३ मिथ्याबुद्धिरबुद्धिः स्यात् । ४ निदर्शनं, दृष्टान्तः । ५ बौद्धाभिमतस्य क्षणिकस्य चेतसो विज्ञानाद्वैतस्यात्मनः । ६ वक्ष्यमाणकारिकया आत्मतत्त्वस्य नित्यत्वनिराकरणेन । ७ प्रधानम् । ८ महदादेः । ९ नित्यात्प्रधानादभिन्नस्य महदादे । १० नित्यादात्मनोऽभिन्नस्य । ११ ( यदि चेत्यध्याहार्यम् ) । १२ प्रकटम् । १३ महदादि । १४ यथेन्द्रियैः स्वार्थो व्यक्तो भवति । १५ साङ्ख्यमते ते च प्रमाणकारके नित्ये चेत्तर्हि । १६ प्रमाणकारकव्यापारविरोधो न भवति तैर्व्यक्तेरभिव्यक्तिविधानादित्याशङ्कायामाहुः । १७ हे साङ्ख्य । १८ साङ्ख्येन । १९ अत्र चाभिव्यक्तेर्नित्यत्वेन पूर्वमनभिव्यक्तस्याभावाद्व्यञ्जकव्यापारायोगात् । २० साङ्ख्यस्य । २१ अभिव्यक्तिस्वरूपाद्यभावादिति भाव. । २२ विरुद्धम् । २३ द्रव्यपर्यायापेक्षया । २४ पूर्वोत्तराकारपरिहारावाप्तिप्रकारेण । २५ साङ्ख्यैः । २६ प्रमाणकारकयोः । २७ व्यक्त्यर्थं व्यक्तिनिमित्तमित्यर्थः । २८ वयं जैना । २९ हे साङ्ख्य, विषयविशेषस्य यो ज्ञानादिस्तस्य कथंचिदपूर्वोत्पत्तावङ्गीक्रियमाणाया तु । ३० वहिः, साङ्ख्यादिमते । ३१ तस्य, अपूर्वस्याभावे । ३२ व्यञ्जयितुं योग्यम् । ३३ हे जैन । ३४ नित्यत्वपक्षे । ३५ कार्यं महदादि, कारणं प्रधानम् । ३६ इति साङ्ख्यवचनम् । ३७ विकल्पद्वयमध्ये ।

यदि सत्सर्वथा कार्यं पुंवन्नोत्पत्तुमर्हति ।
परिणाम[1]प्रक्लृप्तिश्च नित्यत्वैकान्तबाधिनी ॥ ३९ ॥

न तावत्सतः कार्यत्वं चैतन्यवत् । न हि चैतन्यं कार्यं, तत्स्वरूपस्य पुंसोपि कार्यत्वप्रसङ्गात्[2], यत[3]स्तद्वन्[4]महदादेः सत एव कार्यत्व सिद्ध्येत् । नाप्यसतः, सिद्धान्तविरोधा[5]द्गगनकुसुमादिवत् । "असद्करणादुपादान[6]ग्रहणात्सर्वसंभवाभावात् । शक्त[8]स्य शक्यकरणात् कारणभावाच्च सत्कार्यम्" इति हि सांख्यानां सिद्धान्तः । स चासतः कार्यत्वे[9] विरुध्यते एव । तथा 'यत्सर्वथाप्यसत् तन्नोत्पद्यते । यथा गगनकुसुमम् । सर्वथाप्यसच्च कार्यं कस्यचित्[10] । इत्यनुमानविरोधश्च प्रत्येयः । नापर[11]मेकान्तप्रकारान्तरमस्ति । ते[12] एव न किंचित्कार्यं, केवलं वस्तु[13]विवर्त एवेत्येकान्तोस्तीति चेन्न, तस्या[14]प्यसंभवात्, विवर्तादेः पूर्वोत्तरस्वभावप्रध्वंसोत्पत्तिलक्षणत्वात्, तथोपगमे परिणामसिद्धेरनेकान्ताश्रयणप्रसङ्गात् । तदेतत् त्रैलोक्यं[15] व्यक्ते[16]रपैति नित्यत्व[17]प्रतिषेधात्, अपेत[18]मप्यस्ति विनाशप्रतिषेधादित्यनेकान्तोक्तिरन्धसर्पविलप्रवेशन्यायमनुसरति, स्वदर्शनो[19]नपेक्षं यथोपलम्भमाश्रयस्वीकरणात् । तदेवं[20] नित्यत्वैकान्तवादिनां,—

पुण्यपापक्रिया न स्यात् प्रेत्यभावः फलं[21] कुतः ।
बन्धमोक्षौ च तेषां न येषां त्वं नासि नायकः ॥ ४० ॥

पुण्यपापक्रिया कायवाङ्मनस्कर्मलक्षणा शुभाऽशुभा । सा प्रधाने तावन्नास्ति, सर्वथा नित्यत्वा[22]त्पुरुषवत् । तदभावे[23] पुण्यपापयोः क्रिया उत्पत्तिलक्षणा नास्ति, कारणाभावे कार्यानुदयात् । ततः[24] प्रेत्यभावो जन्मान्तरलक्षणस्तत्फलं च सुखाद्यनुभवलक्षणं कुतः स्यात् ? ततो[25] बन्धमोक्षौ च यथोक्तलक्षणौ न स्तस्तेषां येषां[26] त्वमनेकान्तवादी नायको नासि । इति तात्पर्यार्थः । ततो नित्यत्वैकान्तदर्शनं नैतत् प्रेक्षापूर्वकारिभिराश्रयणीयं, पुण्यपापप्रेत्यभावबन्धमोक्षविकल्परहितत्वान्नैरात्म्यादिवत् । न चैतत् क्वचिदेकान्ते संभवति, कुशलाकुशलं कर्मेत्यत्र[27] तदसंभवस्य समर्थितत्वात् ।

सत्यमेतन्नित्यत्वैकान्ते दूषणं क्षणक्षयैकान्तस्यैव प्रातीतिकत्वादिति वदन्तं वादिनं[28] प्रत्याहुः[29] ।—

क्षणिकैकान्तपक्षेपि प्रेत्यभावाद्यसंभवः ।
प्रत्यभिज्ञा[30]द्यभावान्न कार्यारम्भः[31] कुतः फलम् ॥ ४१ ॥

क्षणिकैकान्तपक्षे चेतसः[32] कार्यारम्भो नास्ति, प्रत्यभिज्ञानस्मृतीच्छादेरभावात् सन्तानान्तरचित्तवत् ।

---

१ कारणस्य पर्यायरूपतया कल्पना । २ अन्यथेति शेष । तच्चैतन्यं स्वरूपमस्य स तत्स्वरूप· पुमान् । ३ यतो न चैतन्यं कार्यं ततो न महदादेरपि कार्यत्वमिति सबन्ध । ४ चैतन्यवत् । ५ अन्यथेति शेष । ६ असदकरणादित्यादीनामाविर्भावतिरोभावार्थं परैरनन्तर वक्ष्यमाणानां हेतूना विरोधादित्यर्थ. । ७ मृत्पिण्डे वर्तमानतयाऽसत्यपि घटे उपादानतया मृद स्वीकारात् । ८ कार्यस्य । ९ अङ्गीक्रियमाणे । १० सांख्यस्य । ११ सत्त्वासत्त्वव्यतिरिक्तम् । १२ परः । यत. सर्वथा सतोऽसतश्च कार्यत्वं नास्ति तत. । श्लोकस्यापरार्द्धं व्याख्याति । १३ वस्तु,प्रधानम् । १४ एकान्तस्य । १५ प्रधानम् । १६ व्यक्तिर्महदादिस्तस्मात् । अपैति तिरोभवति । १७ महदादिरूपेण प्रधानस्य नित्यत्वप्रतिषेधात् । १८ त्रैलोक्यं,प्रधानमपेतमपि सत्, अस्ति । १९ सर्वथा निरानपेक्षम् । २० सदेवासदेव वा उत्पद्यते विवर्त एवेत्येकान्तत्रय नास्ति (यत·) । एवमग्रे वक्ष्यमाणप्रकारेण च । २१ शुभाशुभरूपम् । २२ प्रधानस्य । २३ शुभाशुभपरिणामाभावे । पुण्यकारणाभावे पुण्यं न स्यात्, पापकारणाभावे पापं न स्यादित्यर्थं । २४ कारणाभावे कार्यानुदयात् । २५ पुण्यपापाद्यभावात् । २६ एकान्तवादिनाम् । २७ अष्टमकारिकायाम् । २८ बौद्धम् । २९ समन्तभद्रा· । ३० ( पूर्वस्मरणवर्तमानानुभूत्यो· सकलनात्मकं ज्ञानं प्रत्यभिज्ञा । ३१ कार्यादिव्यापार. । ३२ ज्ञानस्य ।

तदभावश्च प्रत्यभिज्ञातु[1]रेकस्यान्वितस्याभावात्। सन्तानः कार्यमारभते इत्यपि मिथ्या, तस्याऽवस्तु[2]त्वविरोधात् कार्यारम्भकस्य वस्तुत्वात्। चित्तक्षणानां चावस्तुतापत्तिरकार्यारम्भकत्वात्। न[3] च तत्कार्यारम्भकत्वाभावे फलं पुण्यपापलक्षणं सम्भवति। तदभावे न प्रेत्यभावो न बन्धो न च मोक्षः स्यात्। इति[4] क्षणक्षयैकान्तदर्शनमहितम्, **असंभवत्प्रेत्यभावादित्वादुच्छेदै[5]कान्तवद्ध्रौव्यै[6]कान्ताभ्युपगमवद्वा।** न हि सर्वथोच्छेदैकान्ते शून्यतालक्षणे नित्यत्वैकान्ते वा प्रेत्यभावादिः सम्भवति, यतोयं दृष्टान्तः साधनधर्मविधुरः स्यात्। नापि प्रेक्षावतां तदाश्रयणं हितत्त्वेन मतं, येन साध्यविकलः स्यात्। अथ मत[7]मेतत्, क्षणिकत्वेपि चित्तक्षणानां वासना[8]वशात्प्रत्यभिज्ञानं तदेवेदं सुखसाधनमिति स्मरणपुरस्सरमुत्पद्यते। ततो[9]भिलाषात्तत्[10]साधनाय प्रवृत्तिरिति कार्यारम्भात्पुण्यपापक्रियासिद्धेः प्रेत्यभावादिसम्भवादसंभवत्प्रेत्यभावादित्वादिति हेतुरसिद्धो न साध्यसाधनायालमिति[11], तदसत्, **भिन्न[12]कालक्षणानामसंभवद्वासनत्वादकार्यकारण[13]वत्।** पूर्वमेव चित्तमुत्तरोत्पत्तौ वासना तत्कारणत्वा[14]दिति चेन्न, निरन्वयक्षणिक[15]त्वे कारणस्यैवासंभवात्। तथा हि। **न विनष्टं[16] कारणमसत्त्वाच्चिरतरातीत[17]वत्।** समनन्तरातीतं कारणमिति चेन्न, **समनन्तरत्वेप्यभावाविशेषात्। न च पूर्वस्योत्तरं कार्यं, तद[18]सत्येव हि भावा[19]द्वस्त्वन्तर[20]वदतिक्रान्त[21]तमवद्वा,** यतः पूर्वस्य कारणत्वनिर्णयः स्यात्[22]। तदन्वयव्यतिरेकानुविधानादुत्तरं तत्[23]कार्यमिति चेन्न, तस्यासिद्धेः। **न हि समर्थेस्मिन्[24] सति स्वयमनुत्पित्सोः पश्चाद्भवतस्तत्कार्यत्वं समनन्तरत्वं वा नित्यवत्[25],** तद्भावे स्वयमभवतस्तदभावे एव भवतस्तदन्वयव्यतिरेकानुविधानविरोधात्। क्षणि[26]कैकान्ते **कारण[27]भावाविशेषेपि कार्योत्पत्तिसमयनियमावक्लृप्तौ[28] कस्य[29]चित्कौटस्थ्येपि तत्करणसमर्थसद्भावाभेदेपि कार्यजन्मनः कालनियमः किन्न स्यात्[30]? विशेषाभावात्।** यथैव हि स्वदेश[31]वत्स्वकाले सति कारणे समर्थे कार्यं जायते, नासतीति तदन्वयव्यतिरेकानुविधायी[32]ष्यते तथा स्वकालेऽनाद्यनन्ते सति समर्थे नित्ये स्वसमये[33] कार्यमुपजायमानमन्यदानुपजायमानं तदन्वयव्यतिरेकानुविधायि कथं नानुमन्यते[34]? सर्वदा समर्थे नित्ये कारणे सति स्वकाले एव कार्यं भवत्कथं तदन्वयव्यतिरेकानुविधायी[35]ति चेत्तर्हि कारणक्षणात्पूर्वं पश्चाच्चानाद्यनन्ते तदभावे विशेषशून्ये[36]पि [37]कंचिदेव तदभावसमये भवत्कार्यं कथं तदन्वयव्यतिरेकानुवि-

---

१ आत्मन। २ हे सौगत, यदि सन्तान कार्यमारभते तर्हि संतानस्यावस्तुत्वकथनं यत्तद् विरुध्यते इत्यर्थं। ३ ननु च कार्यारम्भकत्वाभावे फलं भविष्यतीति बौद्धेनाशङ्किते आह। ४ इति हेतो। ५ उच्छेदैकान्तः, शून्यतैकान्त। ६ ध्रौव्यैकान्तो, नित्यत्वैकान्त। ७ सौगतस्य। ८ नाशसन्ततिपतिताना चित्तक्षणाना पूर्वं पूर्वं विज्ञानं वासना। ९ प्रत्यभिज्ञानात्। १० तस्य सुखस्य साधनाय। ११ इति बौद्धोक्तं न सत्। १२ भिन्न. कालो येषा ते भिन्नकालाः ते च ते क्षणाश्च तेषाम्। क्षणा ज्ञानक्षणा। १३ येषा कार्यकारणसंबन्धो नास्ति तादृशाना घटपटादिक्षणाना भिन्नकालत्वेनासंभवद्वासनत्वं बौद्धैर्मन्यते यथा। १४ पूर्वंचित्तक्षणमुत्तरचित्तक्षणस्य कारणं यत। १५ सर्वेषा ज्ञानक्षणानाम्। १६ क्षणिकस्वरूपं पूर्वं चित्तं विनष्टं सन्न कारणम्। १७ (यथा चिरतरातीतं चित्तं न कारणमुत्तरस्य चित्तस्य तथा समनन्तरमपि, असत्त्वेनोभयोरविशेषादित्यर्थ)। १८ पूर्वस्याभावे। १९ उत्तरक्षणस्य। २० देवदत्तयज्ञदत्तचित्तक्षणवत्। २१ यथा अतिक्रान्ततमा (चिरतरातीना इत्यर्थं) ज्ञानक्षणा न कारणम्। २२ (अपि तु न स्यादेव)। २३ (तस्य पूर्वस्य)। २४ पूर्वस्मिन् चित्ते। २५ समर्थे सतीत्यादि पूर्वोक्तं नित्येपि योजनीयम्। नित्यविषयकमग्रे च स्पष्टीकरिष्यते। २६ सौगताभिप्रायमनूद्य दूषयति जैनः। २७ चिरतरातीतसमीपवर्तिनोः। २८ अवक्लृप्ति. कल्पना। २९ सांख्यस्य। ३० तथा च सत्यऽर्थक्रियाकारित्वात्कूटस्थमपि वस्तु स्यात्। ३१ कार्यप्रदेशे कारणरूपे सति यथा कार्यमसति च न, तथा। ३२ त्वया बौद्धेन। ३३ कार्यक्षणे। ३४ बौद्धेन। ३५ इति बौद्धेनाशङ्क्यते चेत्तर्हि। ३६ अभावरूपत्वेनाविशिष्टे इत्यर्थं। ३७ उत्तरानन्तररूपे कारणाभावसमये एव न तु पूर्वानन्तररूपे कारणाभावे नाप्युत्तरोत्तरानन्तररूपे वेति तात्पर्यम्।

धायि ? इति न कश्चिद्विशेषः[1] । तदेवम[2]न्वयव्यतिरेकानुविधानाभावा[3]विशेषेपि क्षणिकैकान्ते ए[4]व कार्यजन्मेति वचनमभिनिवेशमात्रनिबन्धनम् । **तथा चाकस्मिकत्वं स्यात्,** समर्थ कारणमनपेक्ष्य स्वयमभिमतसमये भवतः कार्य[5]स्य निर्हेतुकत्वप्रसक्तेर्नित्य[6]कार्यवत् । **उभय[7]त्राविशेषेण क[8]थंचिदनुपयोगेपि कं[9]चिद्व्यपदे[10]शकल्पनायामन्यत्रा[11]पि किं न भवेत् ?** क्षणिकस्य कारणस्य सर्वथा कार्य प्रत्युपयोगाभावेपि तस्येदं कार्यमिति व्यपदिश्यते, न पुनर्नित्यस्य ता[12]दृशे इति न किंचिन्निबन्धनमन्यत्र महामोहात् । नित्यस्य प्रतिक्षणमनेककार्यकारित्वे क्रमशोनेकस्वभावत्वसिद्धेः कथमेकत्वं स्यादिति चेत् क्षणिक[13]स्य कथमिति समः पर्यनुयोगः । स[14] हि क्षणस्थितिरेकोपि भावोनेकस्वभावश्चित्रका[15]र्यत्वान्नानार्थवत् । **न हि कारणशक्तिभेदमन्तरेण कार्यनानात्वं युक्तं रूपादिज्ञान[16]वत् ।** यथैव हि कर्कटिकादौ रूपादिज्ञानानि रूपादिस्वभावभेदनिबन्धनानि तथा क्ष[17]णस्थितेरेकस्मादपि भावात् प्रदीपादेर्वर्तिकामु[18]खदाहतैलशोषा[19]दिविचित्रकार्याणि श[20]क्तिभेदनिमित्तकानि व्यवतिष्ठन्ते । **अन्य[21]था रूपादेर्नानात्वं न सिध्येत्, च[22]क्षुरादिसामग्रीभेदात्तज्ज्ञाननिर्भासभेदोवकल्प्येत[23],** कर्कटिकादिद्रव्यं तु रूपादिस्वभावभेदरहितमेकमनंशमिति वद[24]तोपि निवारयितुमशक्तेः । च[25]क्षुरादिबुद्धौ रूपादिव्यतिरिक्तस्य द्रव्यस्याप्रतिभासनाद्रूपादयो नानैवेति चेत्तर्हि वर्तिकामुखदाहादिकार्यानुमानबुद्धिषु विचित्रतच्छक्तिव्यतिरेकेण प्रदीपक्षणस्यैकस्याप्रतिभासनान्नानाशक्तय एव किं न स्युः ?

ननु च 'शक्तिशक्तिमतोरर्थान्तरानर्थान्तरभावपक्षयोः शक्तीनामघ[26]टनान्न ताः परमार्थसत्यः संभाव्यन्ते । तत[27]स्तासामर्थान्तरभावे व्य[28]पदेशानुपपत्तिः सबन्धाभावात् । तेन[29] तासामुपकार्योपकारकभावसबन्धकल्पनायां य[30]दि शक्तिमता शक्त्यन्तरैः शक्तय उपक्रियन्ते तदानवस्था, अपरापरार्था[31]न्तरशक्तिपरिकल्पनात् । तस्य शक्तिभिरुपकारेऽनेकोपकार्यरूपता[32]पत्तिः । तदुपकार्यरूपाणां ततो भेदे तस्यानुपका[33]रात्तद्व्यपदे[34]शानुपपत्तिस्तदवस्था । [35]तै[36]स्तस्योपकारकरणेनवस्थितिरेव परापरोपकार्यरूपपरिकल्पनात् । शक्तिमतः शक्तीनामनर्थान्तरभावे शक्तिमानेव, न शक्तयो नाम अन्यत्रा[37]तद्व्यावृत्तिभ्यः कल्पिताभ्यः' इति चेन्न[38], रूपादीनामपि द्रव्यादर्थान्तरानर्थान्तरभावविकल्पयोरघटनात् परमार्थसत्त्वाभावानुषङ्गा[39]त् प्रकृ[40]तदोषोपनिपाताविशेषात्, प्रत्यक्ष[41]बुद्धौ प्रतिभासमाना रूपादयः परमार्थसन्तो न पुनरनुमानबुद्धौ प्रतिभासमानाः शक्तय इति वक्तुमशक्तेः क्ष[42]णक्षयस्वर्गप्रापणशक्त्या[43]दीनामपरमार्थसत्त्वप्रसङ्गात् ।

---

१ नित्यक्षणिकयो । २ उभयपक्षयो साम्यं यस्मात् तत्, तस्मात् । ३ नित्यक्षणिकयो । ४ न तु नित्ये । ५ कार्यस्य । ६ यथा साख्यमते नित्यं कार्यं निर्हेतुकम् । ७ क्षणिकनित्ययो पक्षयो । ८ अन्वयव्यतिरेकप्रकारेण । ९ क्षणिके । १० क्षणिकस्येदं कार्यमिति । ११ नित्येपि । १२ कार्यं प्रत्युपयोगिन । १३ क्षणिकस्य प्रतिक्षणमनेककार्यकारित्वे इत्यादि सर्वं योजनीयम् । १४ क्षणिकस्यानेकस्वभावत्वं नास्तीति कथं सम पर्यनुयोग इत्यारेकायामाहुर्जैना । १५ चित्रकार्यनिष्पादकत्वात् । १६ यथा रूपादिज्ञानाना कार्यभूताना कारणशक्तिनानात्वं विना न प्रादुर्भाव. । १७ क्षणिकात् । १८ मुखमग्रम् । १९ आदिपदेन तमोनिरसनकज्जलमोचनार्थप्रकाशनादीना ग्रहणम् । २० प्रदीपगतशक्तिभेदनिमित्तकानि । २१ शक्तिभेदो नो चेत्तर्हि । २२ तथा च किं स्यात् ? । २३ ( साख्येन ) । २४ साख्यस्य । २५ पुनराह बौद्ध । २६ शक्तिमत· शक्तयो भिन्ना अभिन्ना वेति विकल्पद्वये क्रियमाणेपि शक्तयो न घटन्ते यत । २७ शक्तिमत । २८ शक्तिमत एता शक्तय इति व्यपदेशस्य । २९ शक्तिमता । ३० शक्तिमता शक्तय उपक्रियन्ते वा शक्तिभि शक्तिमानुपक्रियते इति विकल्पद्वयं कृत्वा निवारयति बौद्ध । ३१ अर्थान्तरशब्दस्य भिन्नोर्थ । ३२ शक्तिमत । ३३ उपकार्यरूपै शक्तिमत. उपकाराकरणात् । ३४ शक्तिमत एतान्युपकार्याणीति । ३५ उपकार्यरूपै. । ३६ शक्तिमत । ३७ बौद्धमते पदार्था अतद्व्यावृत्तिरूपा एव । न ता अता । अताभ्यो व्यावृत्तय. अतद्व्यावृत्तय । ताभ्योऽतद्व्यावृत्तिभ्य । अशक्तिव्यावृत्तिभ्य इत्यर्थ. । अशक्तिव्यावृत्ता शक्तय । इति व्यावृत्तिरूपा शक्तीर्विहायान्या शक्तयो न सन्तीत्यर्थ. । ३८ जैना आहु. । ३९ रूपादीनाम् । ४० अर्थान्तरानर्थान्तरपक्षयोर्व्यपदेशानुपपत्तिरेकत्वं चेति प्रकृतदोष । ४१ निर्विकल्पके । ४२ अन्यथेति शिष्यते । ४३ अनुमानबुद्धौ प्रतिभासमानानाम् ।

क्षणक्षयादीनां प्रत्यक्षे प्रतिभातानामेव वि[2]परीतारोपव्यवच्छेदेऽनुमानव्यापाराददोष इति चेत्[3]तर्हि नाना[4]कार्य-जननशक्तीनामपि प्रत्यक्षेऽवभातानामेव समा[5]रोपव्यवच्छेदे कार्यानुमानव्यापारात्कश्चिदपि दोषो मा भूत् । नानाकार्यदर्शनात्तज्जननशक्तिरेका तादृ[6]श्यनुमीयते, न पुनर्नानाशक्तय इति चेत्तर्हि नानारूपादिज्ञाननिर्भासभेदात्ता[7]दृशैकस्वभावो द्रव्यस्य[8] व्यवस्थाप्येत, न पुनर्नानारूपादय इति समः समा[9]धिः । प्र[10]दीपक्षणस्यैकस्य वर्तिकामुखादि[11]सहकारिसामग्रीभेदात् तद्दाहा[12]दिविचित्रकार्यजननं[13] न पुनः स्वभावभेदादिति चेत्[14]तर्हि कर्कटिकादिद्रव्ये चक्षुरादिसहकारिसामग्रीभेदाद्रूपादिज्ञाननिर्भासभेदो न पुना रूपाद्यनेकस्वभावभेदादिति निश्चीयते[15] । युगपदेकार्थोपनिबद्धदृष्टीनामपि भवितव्यमेव प्रतिभासभेदेन, कारणसामग्रीभेदात्[16] । अन्यथा दर्शन[17]भेदोऽपि मा भूत् । न चैवं[18], प्रत्यासन्ने[19]तरयोर्वैशद्येतरनिर्भासोपलब्धेः । सेयमु[20]भयतः पाशारज्जुः सौगतानां, रू[21]पादिज्ञाननिर्भासभेदाद्रूपादिभेदं व्यवस्थापयतः[22] प्रदीपक्षणस्यैकस्य कार्यवैचित्र्यात् स्वभाव[23]भेदप्रसङ्गात्, त[24]स्यैकस्वभावत्वं व्यवस्थापयतो रूपादिनानात्वाव्यवस्थापनात् । स[25]कृत् कारणस्वभावभेदमन्तरेण यदि कार्यनाना[26]त्वं, क्र[27]मशोऽपि कस्य[28]चिदपेक्षितसहकारिणः कार्यसन्ततिः किं न स्यात्[29] ? स[30]हकारिणस्तद्धेतुस्वभावमभेदयन्तोऽपि कार्यहेतवः स्युः क्षणक्षयवत् । यथैव हि क्षणिकस्वलक्षणस्य नानाकार्याणि युगपदुपजनयतः सहकारिकारणानि न कञ्चिदतिशयं[31] ततो[32] भिन्नमभिन्नं वा समुपजनयन्ति । किं तर्हि ? कार्याण्येव भिन्नस्वभावानि विदधति[33] । तथैव नित्य[34]स्यापि । न[35] हि कादाचित्[36]कानि तत्[37]कर्तुं समर्थानीति स्थिरोऽर्थ[38]स्तत्[39]कारणस्वभावं जहाति तद्बुद्धिपूर्वकर्तृत्वा[40]भावात् क्षणिकसामग्रीसन्निपतितैककारणान्तरवत् । न हि क्षणिकक्षित्युदकादिसामग्र्या[41]मन्त्यक्षणप्राप्तायामङ्कुरजननसमर्थायां सत्यां तत्सन्निपतितं बीजं कारणान्तरमङ्कुरजननस्वभावं जहाति, तस्य[42] तदकार्यत्वप्रसङ्गात् । न हि हेतवः[43] परस्परमीर्ष्यावलिप्ताः क्वचिदेकत्र कार्ये येनैकस्य तत्र व्यापारेऽपरे निवर्तेरन् । क्ष[44]णिकोऽर्थः स्वान्त्यकारणसामग्रीसन्निपतितः स्वकार्यकारी तादृश[45]स्वहेतुस्वभावादुत्पन्न[46]त्वात् ,न पुनर्नित्य[47] इति[48] कल्पयित्वापि

---

१ सौगत. । २ विपरीतमक्षणिकत्वम् । ३ जैनः । ४ नाना, वर्तिकादाहादि । ५ विपरीतसमारोपः शक्त्यभावः । ६ नानाकार्यकारिणी । ७ तादृशो, रूपरसाद्यनेकज्ञानरूपकार्यजननसमर्थ एकः स्वभावः कश्चित् । ८ कर्कटिकादेः । ९ ( बौद्धस्तु रूपादीना भिन्नत्वमभिमन्यते इति तस्यैव मतविरोधस्तद्युक्त्या) । १० पुनः सौगत. । ११ आदिपदेन तैलशोषणतमोनिवारणकज्जलमोचनपदार्थप्रकाशाना ग्रहणम् । १२ तैलशोषणादि आदिपदेन । १३ स्यात् । १४ जैनः । १५ न च बौद्धैस्तथा मन्यते, रूपाद्यनेकस्वभावभेदाभिमननात् । १६ दूरादूरादितया । १७ विशदाविशदतया । १८ किन्त्वस्त्येव दर्शनभेद. । १९ दर्शनयोः । २० ततश्च । २१ पाशारज्जुत्वमेव विवृणोति । २२ सौगतस्य । २३ स्वभावभेद', शक्तिभेदः । प्रदीपक्षणस्य । २४ प्रदीपक्षणस्य । २५ किं च दूषणान्तरम् । २६ क्षणिके । २७ ( तर्हीत्यध्याहार. ) । २८ नित्यस्य । २९ ( यतस्त्वत्र बौद्धेन दूषणं दीयते । न दातव्यमित्यर्थ ) । ३० नित्ये स्वभावभेदमकुर्वता सहकारिणा नानाकार्यकारित्वं कथं स्यादित्याशङ्कायामाहुर्जैनाः । ३१ स्वभावभेदम् । ३२ ( क्षणिकस्वलक्षणात् ) । ३३ सहकारिकारणानीति कर्तृपदम् । ३४ नित्यस्यापि नानाकार्याणि क्रमेणोपजनयत सहकारिकारणानि न कंचिदित्यादि विदधतीत्येतत्पर्यन्तं वाक्यमत्र द्रष्टव्यम् । ३५ सहकारिभिरेव कार्यस्य कृतत्वात्किं नित्यपरिकल्पनया ? इत्याशङ्कायामाहु. । ३६ सहकारीणि । ३७ विवक्षितम् । ३८ नित्य. । ३९ तस्य विवक्षितकार्यस्य । ४० नित्यस्यार्थस्यैतानि ( सहकारिकारणानि ) अत्र कार्ये समर्थानि, मया नित्येन किं कर्तव्यमिति यदिद बुद्धिपूर्वकत्वं तदभावात् परमाण्वादीनामचेतनत्वात् । ४१ सहकारिरूपायाम् । ४२ बीजस्य । ४३ सहकारिण उपादानरूपाश्च । ४४ हे जैन, नित्यात् क्षणिकस्य विशेषोऽस्तीति बौद्धमतं दर्शयन्नाह जैन. । ४५ तादृश , कार्यकारिरूप. । ४६ क्षणिकार्थस्य । ४७ नित्य. कार्यकारी न, तादृशस्वहेतुस्वभावादनुत्पन्नत्वात् । ४८ जैन आह । हे सौगत ।

स्वहेतुप्रकृतिं[1] भावानां[2] स्वप्रकृतिरवश्यमन्वेष्या, तेत्स्वभाववशात् तत्कारणप्रकृतिव्यवस्थापनात्[3]। तदयमकारणोपि[4] स्वभावनियतोर्थः स्यात्।

ननु[5] च क्षणिकस्य क्षणादूर्ध्वमस्थानं स्वप्रकृति[6]र्विनश्वरत्वादन्विष्यते। विनाशस्वभावनियतत्वं च विनश्वरत्वं, न पुनः कालान्तरावस्थायिनः कदाचिन्नाशित्व[7]महेतुकत्वाद्विनाशस्य। तथा हि[8]। यद्यद्भावं[9] प्रत्यनपेक्षं तत् तद्भावनियतम्। यथान्त्यकारणसामग्री स्वकार्योत्पादनं[10] प्रत्यनपेक्षा तत्स्वभावनियता, विनाशं प्रत्यनपेक्षश्च भावः[11]। इति स्वभावहेतुः[12]। न तावदयमसिद्धः, कलशादेर्विनाशस्य मुद्गरादिहेतुभिर्व्यतिरिक्तस्याव्यतिरिक्तस्य वा करणासंभवात्, [13]तं प्रति तदनपेक्षत्वसिद्धेः[14]। घटादेर्व्यतिरिक्तस्य विनाशस्य करणे [15]तदवस्थत्वप्रसङ्गाद्विनष्ट[16] इति प्रत्ययो न स्यात्[17]। विनाशसंबन्धाद्विनष्ट इति प्रत्ययोत्पत्तौ विनाशतद्वतोः कश्चित्संबन्धो वक्तव्यः। स च न तावत्तादात्म्यलक्षणस्तयोर्[18]भेदोपगमात्। नापि तदुत्पत्तिलक्षणो[19] घटादेस्तदकारणत्वात्[20] तस्य मुद्गरादिनिमित्तकत्ववचनात्। तदुभय[21]निमित्तत्वाददोष इत्यप्यसारं, मुद्गरादिवद्[22]विनाशोत्तरकालमपि कुम्भादेरुपलम्भप्रसङ्गात्[23]। कुटादेः[24] स्वविनाशं परिणामान्तर[25]लक्षणं प्रत्युपादानकारणत्वान्न तत्काले[26] दर्शनमित्यपि न युक्तं[27], परिणामान्तर[28]स्यैव हेत्वपेक्षत्वसिद्धेः, विनाशस्य तद्व्यतिरिक्तहेत्वनपेक्षत्व[29]व्यवस्थितेः सुगतमतसिद्धिप्रसक्तेः। सुगतमतं हि न सर्वथा विनाशस्य निर्हेतुकत्वम्। किं तर्हि? कार्यजनक[30]हेतुव्यतिरिक्तहेत्वनपेक्षत्वमिति वादावसानं[31] स्यात्। विनाशतद्वतोर्विशेषणविशेष्यभावः संबन्ध[32] इत्यपि[33] मिथ्याभिधानं परस्परमसंबद्धयोस्तदनुपलब्धेः[34]। प्रागभावतद्वतोर्विशेषणविशेष्यभावोनेनैव निरस्तः। कार्यकारणयोरस्येदं कार्यमिति विशेषणविशेष्यभावः कथमित्यपि न चोद्यं, तत्र[35] तद्व्यवहारस्य[36] कार्यकारणभावनिबन्धनत्वात्, तद्व्यतिरेकेण[37] भिन्नयोर्[38]विशेषणविशेष्यभावासंभवात्। ततोनर्थान्तरं विनाशः कारणैः[39] क्रियते इति पक्षान्तर[40]मपि न सम्यक्, स्वकारणा[41]दुत्पन्नस्य कुटात्मनो[42] विनाशस्य कारणान्तराणां वैयर्थ्यात्। अन्यथा परापरकारणानुपरमः स्यात्।

इति भावाना विनाशस्वभावत्वसाधनं[43] स्थितेरपि निर्निमित्तत्वं साधयेत्[44]। तथा हि। यद्यद्भावं प्रत्यनपेक्षं तत्तद्भावनियतम्। यथा विनाशं प्रत्यन्यानपेक्षं विनश्वरम्। तथैव स्थितिं प्रत्यनपेक्षं स्थास्नु वस्तु[45]।

---

१ उत्तरकार्यजनककारणाना वर्तमानकालीनाम्। २ तस्य, कार्यभूतस्य। ३ तस्य, उत्तरक्षणकार्यस्य। ४ तत्, तस्मात्। स्वप्रकृतिरवश्यमन्वेषणीया यस्मात्। अयं नित्य । अकारणोपि, न कारणं विद्यते यस्य स तथा। स्वभावनियत', कार्यकारणस्वभावनियत । ५ बौद्ध । ६ क्षणादूर्ध्वमस्थानमेव क्षणिकस्य प्रकृतिर्लोकैरन्विष्यते ( अवलोक्यते ) यतोस्य विनाशशीलत्वात्। ७ कालान्तरावस्थायिन' कदाचिन्नाशित्वमिति नैयायिककृतलक्षण नश्वरत्वस्य। ८ विनाशं प्रति हेतुर्न कश्चिदित्येव दर्शयति बौद्ध । ९ विनाशभावम्। १० तस्य, स्वकार्यस्य। ११ पदार्थ.। १२ भावो विनाशस्वभावनियतोस्ति, विनाशं प्रत्यनपेक्षत्वादित्यत्र । १३ विनाशम्। १४ तस्य, मुद्गरस्य। १५ तस्य, घटस्य। १६ घट.। १७ विनाशस्य ततो भिन्नत्वात्। १८ विनाशतद्वतो.। १९ तस्माद्, घटाद्विनाशस्योत्पत्तिरिति। २० त विनाशं प्रति। २१ तदुभय, घटमुद्गरौ। २२ यथा मुद्गरादिर्घटविनाशोत्तरकालमपि दृश्यते । २३ विनाशकारणत्वाविशेषात्। २४ घटादे। २५ कपाललक्षणम्। २६ विनाशोत्तरकाले। २७ हे जैन, इत्यपि न युक्तम्। २८ कपालमालालक्षणस्य। २९ कपाललक्षणकार्यमुत्तरक्षण, तस्य जनको हेतु. समनन्तरो घटलक्षणस्तद्व्यतिरिक्तो हेतुर्मुद्गरादिलक्षणः, तदनपेक्षत्वस्य। ३० कार्यं कपाललक्षणं तस्य जनको हेतुरुपादानलक्षणो घट । ३१ विनाशो भिन्नहेतुक इति वादस्य नैयायिकाभिमतस्य। ३२ नैयायिक आह। ३३ बौद्ध प्राह। ३४ तस्य, विशेषणविशेष्यभावस्य। ३५ तत्र, कार्यकारणभावे। ३६ तस्य, विशेषणविशेष्यभावसंबन्धस्य । ३७ परस्परसंबन्धकार्यकारणभावव्यतिरेकेण । ३८ पदार्थयो । ३९ मुद्गरादिभि। ४० यौगिकाभिमतम्। ४१ मृत्पिण्डादे। ४२ ( घटादभिन्नस्येत्यर्थ )। ४३ क्षणिकोर्थ. सर्वो विनाशस्वभावनियतो भवितुमर्हति, नाशं प्रत्यन्यानपेक्षत्वादिति साधनम्। ४४ नित्योर्थ. स्थितिस्वभावनियतो भवितुमर्हति, तद्भाव प्रत्यन्यानपेक्षत्वादित्येवम् ( जैनाना वचनमिदम् )। ४५ वस्तु।

इति स्वभावहेतुः । न चायमसिद्धः, तद्धेतो[1]रकिञ्चित्करत्वात् तद्व्यतिरिक्ता[2]व्यतिरिक्ताकरणात् इत्यादि सर्वं समानम्[3] । न हि वस्तुनो व्यतिरिक्ता स्थितिस्तद्धेतुना क्रियते तस्या[4]स्थास्नुत्वापत्तेः । स्थितिसंबन्धात्तस्य स्थास्नुतेति चेन्न, स्थितितद्वतोः कार्यकारणभावासंभवात् सहभावात्तयोः, असहभावे स्थितेः पूर्वं तत्कारण[5]स्यास्थितिप्रसक्तेः, स्थितेरपि स्वकारणादुत्तरकालमनाश्रयत्वानुषङ्गात् । त[6]योराश्रयाश्रयिभावः संवन्ध इति चेन्न[7], अर्थान्तरभूतयोः कार्यकारणभावाभावे तद[8]भावाभ्युपगमात् कुण्डबदरवत्[9] । तद[10]व्यतिरिक्ता स्थितिस्तद्धेतु[11]ना विधीयते इत्ययमपि पक्षो न श्रेयान्, तद्वै[12]यर्थ्यात्, स्थिति[13]स्वभावस्यापि स्थितिकरणे तत्कारणानामनुपरमप्रसङ्गात्, स्वयमस्थितिस्वभावस्य स्थितिकरणायोगादनुत्पत्तिस्वभाव[14]स्योत्पत्तिकरणायोगवत् । त[15]तः स्थितिस्वभावनियतोर्थः स्यात् सर्वदा स्थितेरहेतुकत्वात् । तदेव[16]मादौ स्थितिदर्शनाच्छब्दविद्युत्प्रदीपादेरन्तेपि स्थितेरनुमानं युक्त[17]म् । अन्यथान्ते क्षयदर्शनादादौ तत्प्रतिपत्तिरसमञ्जसैव । तादृ[18]शः का[19]रणादर्शनेपि कथंचिदुपादानानुमान[20]वत् त[21]त्कार्यसन्तानस्थितिरदृष्टाप्यनुमीयेत[22] । शब्दविद्युदादेः साक्षादनुपलब्धमुपादानमनु[23]मीयते निर्णिबन्धनोत्पादप्रसङ्गभयान्न पुनस्त[24]दुत्तरकार्यमवस्तुत्वानुषङ्गभयादिति किमपि महामोहविलसितम् । शब्दादेरुत्तरकार्याकरणेपि योगिज्ञा[25]नस्य करणान्नावस्तुत्वप्रसक्तिरिति चेन्न, आस्वाद्यमानरससमानकालरूपोपादा[26]नस्य रूपाकरणेपि रसे[27]सहकारित्वप्रसङ्गात्, ततो रसाद्रूपानुमानानु[28]पपत्तेरनिष्टप्रसङ्गात् । तथा[29] दृष्टत्वान्नेहानिष्टप्र[30]सङ्ग इति चेत्, किं पुनः शब्दादेव शब्दस्योत्पत्तिरुपलब्धा[31] कदाचित्[32] ? शङ्खादिशब्दसततौ मध्यावस्थायां शब्दादेव शब्दस्योत्पत्तिर्दृष्टेति चेत् कथमुत्तरशब्दोत्पत्तिरदृष्टा ? तथैव तद्दृष्टेरिति[33] शब्दादेर्योगिज्ञानकरणवदुत्तरशब्दादिकरणमनुमीयतां, रूपोपा[34]दानाद्रूपोत्पत्ति[35]वत् । तस्मात् कथंच[36]न स्थितिमतः प्रतिक्षणं विवर्तोपि नान्यथा[37], गगनकुसुमवत् । यदि पुनः परमार्थतः कार्यकारणभावस्याभावाद्विरोध्यविरोधकभावादिवत् प्रतिक्षणं विवर्तोपि नेष्यते संविदद्वैताभ्युपगमा[38]दिति मतिस्तदा प्रभवा[39]देरयोगात् कुतः प्रेत्यभावादिः ? स्याद्वादिभिरापादित[40]स्य प्रेत्यभावपुण्यपापक्रियाबन्धमोक्षतत्फलाभाव[41]स्य स्वयमेवाभ्युपगमा[42]दितिभीतप्रलापमात्रमेत[43]दालक्ष्यते, संविदद्वैतस्य साधनासंभवात्, संविन्मात्रस्य स्व[44]कार्याकरणेऽनर्थक्रियाकारिणो वस्तुत्वविरोधा[45]न्नित्यत्ववत्,

---

१ तं प्रति हेतो., कारणस्येत्यर्थ । २ वस्तुनः स्थितिर्व्यतिरिक्ताऽव्यतिरिक्ता वेति विकल्प्य स्थितेर्निर्हेतुकत्वसाधनार्थं वदति बौद्ध. । ३ ( पूर्वोक्तम् ) । ४ वस्तुन । ५ वस्तुनः । ६ स्थितितद्वतो. । ७ सौगतो वक्ति । ८ तस्य, आश्रयाश्रयिभावस्य । ९ कुण्डस्यावयवा कारणमवयवी तु कार्यम् । एवं बदरेपि । एवं कुण्डबदरयो. स्वस्वरूपेण कार्यकारणरूपतया निष्पन्नयोराश्रयाश्रयिभावो यथा तथा प्रकृते नास्ति । १० हे यौग । ११ स्थितिहेतुना । १२ तस्य, स्थितिहेतोः । १३ स्थितिस्वभावकस्यास्थितिस्वभावकस्य वा वस्तुनः स्थिति क्रियते इति विकल्प्य क्रमेण दूषयति । १४ खरशृङ्गादे. । १५ यतो वस्तुनो व्यतिरिक्ताया अव्यतिरिक्ताया वा स्थितेरकरणम् । १६ वक्ष्यमाणप्रकारेण । शब्दविद्युदादौ सान्वया स्थितिं समर्थयन्नाह बौद्धं प्रति जैनः । १७ तव सौगतस्य स्वीकर्तुं युक्तम् । १८ आदौ स्थितिमत । १९ उत्पत्तिकारणस्य । २० शब्दविद्युदादीनामुत्पत्तिं प्रति कथंचिदुपादानानुमानं यथा त्वया सौगतेनानुमीयते । २१ तेषा, शब्दविद्युत्प्रदीपादीनाम् । २२ त्वया सौगतेन । २३ त्वया सौगतेन । २४ तस्य, शब्दविद्युदादेः । २५ कार्यस्य । २६ पूर्वरूपक्षणस्य । २७ रसोत्पादे सहकारित्वप्रसङ्गात् । २८ अस्त्यत्र मातुलिङ्गे रूपं रसान्यथानुपपत्तेरिति उत्तररूपाकरणादुत्तररससमये रूपासत्त्वान्न स्यात्तदनुमानम् । २९ सजातीयोत्तरकार्यकरणप्रकारेण । ३० रूपाननुमानरूपः । ३१ उपादानशब्दानुमानं कुर्वता सौगतेन । ३२ काकु । येन शब्दस्योपादानकारणमदृष्टमप्यनुमीयते इति शेषः । ३३ (इति चेत्तर्हीत्यर्थ.) । ३४ पूर्वरूपक्षणोपादानात् । ३५ यथोत्तररूपोत्पत्ति. । ३६ द्रव्यापेक्षया । ३७ ( अन्यथा, स्थितिमत्त्वाभावे ) । ३८ हे यौगाचार यदि तव इति पूर्वोक्ता मतिस्तदा । ३९ कार्यकारणभावादेः । ४० दर्शितस्य । ४१ दूषणस्य । ४२ ( यौगाचारैः ) । ४३ ( यौगाचारवचः ) । ४४ उत्तरक्षणसंविलक्षणं स्वकार्यम् । ४५ ( ततो न सिध्यति सविदद्वैतमित्यर्थः ) ।

तस्य स्वकार्यकरणे कार्यकारणस्वभाव[1]सिद्धेः । संविद[2]द्वैतेन भेदभ्रान्तिबाधने बाध्यबाधकभाव[3]ः । तदबोधने[4] तस्या[5]व्यवस्थितिः, प्रतिपक्षव्यवच्छेदाभावात् । संवृति[6]मात्रेण सत्यपि हेतुफल[7]भावेऽकारण[8]कार्यान्तरवत्[9]सन्ततिर्न स्यादतादात्म्याविशेषात् । न हि कार्यकारणक्षणा[10]नामकार्यकारणक्षणेभ्यस्तादात्म्याभावैकान्ते कश्चिद्विशेषो नैरन्तर्या[11]दिः संभवति, तस्य[12] भिन्नसंतानकार्यकारणक्षणेष्व[13]पि भावात् । तत्[14]स्वभावविशेषावक्लृप्तौ तादात्म्ये[15] कोऽपरितोषः ? कथंचित्तादात्म्यस्यैवैकसतानक्षणानां स्वभावविशेषस्य व्यवस्थितेरव्यभिचारिणः कार्यकारणभावस्य सुगतेतरक्षणेषु भिन्नसतानेष्वपि भावात्[16], भेद[17]तादात्म्ययोर्हि विरोध[18]स्य सर्वथाप्य[19]परिहार्यत्वात्, संविदि वेद्यवेदकाकारभेदेपि तादात्म्योपगमादन्यथैकज्ञानत्वविरोधात्, संविदा[20]कारवेद्याद्याकारविवेकयोः प्रत्यक्षपरोक्षयोर्भेदेपि संविदेकत्वाङ्गी[21]करणात्, कथं[22]चित्तादात्म्याभावे संताननियमनिबन्धनस्य स्वभावविशेषस्यानुपलब्धेः । तत्[23]संतानापेक्षया प्रेत्यभावादि मा मंस्त, क्षणक्षयैकान्ते संतानस्यैव साधयितुं दुःशक्यत्वात्, ज्ञान[24]ज्ञेययोः प्रतिक्षणं विलक्षणत्वात् । स एवाहं तदेवेदमिति प्रत्यभिज्ञानादनुसरणादभिलाषादेश्च सताननियमसिद्धिरिति चेन्न, तस्यै[25]वासभवात् । सर्वथा[26] वैलक्षण्ये पुंसोर्थस्य च न वै प्रत्यभिज्ञानादिः पुरुषान्तरवदर्थान्तरवच्च । ततः[27] कर्मफलसंबन्धोपि नानासंता[28]नवदनियमा[29]न्न युक्ति[30]मवतरति । तदनादि[31]वासनावशात्तन्नियम इति चेन्न, कथंचिदप्यतादात्म्ये[32] कार्यकारणक्षणयोस्तदघटनात्तद्वत् । तत्सूक्तं 'क्षणिकपक्षो बुद्धिमद्भिरनादरणीयः सर्वथार्थक्रियाविरोधान्नित्यत्वैकान्तवत्' । न चा[33]र्थक्रिया कार्यकारणरूपा सत्येव कारणे स्यादसत्येव वा । सत्येव कारणे यदि कार्यं, त्रैलोक्यमेकक्षणवर्त्ति स्यात्, कारणक्षणकाले एव सर्वस्योत्तरोत्तरक्षणसंतानस्य भावात्, ततः संतानाभावात्पक्षा[34]न्तरासंभवाच्च । इति स्थितमेव साधनं सर्वथार्थक्रियाविरोधादिति, साध्य च क्षणिकं, पक्षो बुद्धिमद्भिरनादरणीय इति, प्रत्यभिज्ञाद्यभावात्प्रेत्यभावाद्यसंभव इति[35] च, अस्मिन्पक्षे प्रयासाभावात् । यदि पुनरसत्येव कारणे कार्यं तदा कारणक्षणात्पूर्वं पश्चाच्चानादिरनन्तश्च कालः कार्यसहितः स्यात् कारणाभावाविशेषात् । तदविशेषेपि कार्यस्य स्वयं नियतकालत्वे नित्यस्य सर्वदा भावाविशेषेपि तत्[36]स्यादित्युक्तम् ।

---

१ ( ततोपि द्वैतप्रसक्तेर्न सविदद्वैतसिद्धिरित्यर्थ )। २ सविदद्वैतस्य भेदभ्रान्तिबाधनमबाधन वेति विकल्प्य जैनो दूषयति। ३ ( इति भेदप्रसक्ति )। ४ ( भेदभ्रान्त्यबाधने, भेदस्य सत्यत्वप्रत्यायकत्वे सतीत्यर्थ )। ५ सविदद्वैतस्य। ६ हे सौगत। ७ कार्यकारणभावे। ८ अकारणकार्यान्तरस्य सन्तानो यथा न स्यात्तद्वत्। यथा पटस्य कारण मृत्पिण्डो न भवति, मृत्पिण्डस्य कार्यं पटो न भवति। ९ यथा सवृतिमात्रेण कारणकार्याकारणकार्यान्तरयोस्तादात्म्यं न। तथा प्रतिक्षणानां परस्परं भेदोस्तीति भाव । १० सवृतिकल्पितानाम्। ११ ( नैरन्तर्य सतति । तत्प्रभृतिर्न कश्चिद्विशेषः )। १२ विशेषस्य। १३ इतरक्षणेभ्य सुगतक्षणा जायन्ते इति कार्यकारणभावो नाकारणविषय इति स्वय कथनात्। मृत्पिण्डेपि पटप्रसक्ति स्यादिति टिप्पण्यन्तरम्। १४ तेषामेकसतानकार्यकारणक्षणानाम्। १५ कार्यकारणयोः। १६ ततश्चाव्यभिचारी कार्यकारणभावः स्वभावविशेषो न भवेदिति भाव । १७ भेदतादात्म्ययोर्हि विरोध , अत आह। १८ तादात्म्ये कोऽपरितोष इति साध्ये। १९ कथंचित्प्रकारेणैव परिहार्यत्वादिति भाव । २० वेद्यवेदकाकारौ न स्त इत्यारेकायामाह। २१ अत एव भेदतादात्म्ययो कथंचिद्विरोधः । २२ सर्वथाप्यपरिहार्यत्वादित्यत्र हेत्वन्तरमाह। कथंचित्, द्रव्यपर्यायापेक्षया। २३ तत्, तस्मात्। कार्यकारणक्षणाना सततिर्न स्यादत । २४ क्षणक्षयैकान्ते। २५ प्रत्यभिज्ञानानुस्मरणाभिलाषादेश्च। २६ असभवत्वस्य भावनम्। २७ ज्ञानज्ञेययो सर्वथा वैलक्षण्ये प्रत्यभिज्ञानादिर्न भवेद्यत । २८ यथा नानासंतानस्य कर्मफलसंबन्धो युक्तिं नावतरति। २९ नियतसन्तानाभावात्। ३० ज्ञानापेक्षया। ३१ उत्तरचित्तोत्पत्तिकारणभूतप्राक्तनचित्तक्षणाख्यवासनावशात् प्रत्यभिज्ञानादिनियम. । ३२ सर्वथा भेदे इत्यर्थ । ३३ असिद्धमित्युक्ते आह जैन.। ३४ असति कारणे इति पक्षान्तरस्य। ३५ कारिकोक्तपक्ष.। ३६ तत्, कार्यम्।

किं[1] च क्षणिकपक्षे न तावत्सदेव कार्यमुत्पद्यते स्वमतविरोधा[2]दुत्पत्त्यनुपरमप्रसङ्गा[3]च्च ।

य[4]द्यसत् स[5]र्वथा कार्यं तन्मा ज[6]नि खपुष्पवत् ।
मोपादाननिया[7]मो भून्माश्वास[8]ः कार्यजन्मनि । ४२ ।

पर्यायाकारेणेव द्रव्याकारेणापि सर्वथा यद्यसत्कार्यं तदा तन्मा जनिष्ट, खपुष्पमिव । तथा हि । य[9]त् सर्वथाप्यसत्तन्न जायमानं दृष्टं, यथा खपुष्पम् । तथा च पर[10]स्य कार्यम् । इति व्यापकविरुद्धोपल[11]ब्धिः । का[12]र्यत्वं हि कथंचित्सत्त्वेन व्याप्तम् । तद्विरुद्धं सर्वथाप्यसत्त्वम् । प्रतीतं हि लोके कथंचित्सतः कार्यत्वमुपादान[13]स्योत्तरी[14]भवनात् । सदेव. कथमसत् स्याद्विरोधादिति न [15]चोद्यं स[16]कृदपि विरुद्धधर्माध्यासानिराकृतेश्चित्रवेदनवदित्युक्तप्रायम् । तथा चा[17]न्वयव्यतिरेकप्रतीतेर्भावस्वभा[18]वनिबन्धनायां किं फलमपलापेन ? तदन्यतरनिराकृतावुभयनिराकृतिरभेदात् । कथमन्वयव्य[19]तिरेकयोरभेद इति चेत् कारणस्य भावे भावस्यैव तदभावेऽभावरू[20]पत्वात् । न हि कारणस्याभावेऽभाव एव भा[21]वे भावो न[22] प्रतीयते यतस्तदभेदो न स्यात् । कथं भावस्वभावनिबन्धनान्वयव्यतिरेकप्रतीतिस्तस्या भा[23]वाभावस्वभावनिबन्धनत्वादित्यप्यनाशङ्कनीयं, स्वभावान्त[24]रस्यैवाभावव्यवहारार्हत्वात् । पा[25]वकविविक्तप्रदेशविशेष[26]स्यैव पावकाभावस्य धूमरहितदेशस्य च धूमाभावस्य प्रतीतिगोचरत्वात्, पाव[27]काभावे धूमाभावस्य च व्यतिरेकल[28]क्षणत्वात् सिद्धं व्यतिरेकप्रतीतेर्भावस्वभावनिबन्धनत्वमन्वयप्रतीतेरिव । इति निरारेकं, नीरूपस्याभावस्य प्रतिक्षेपात् । न च सर्वथाप्यसतः कार्यत्वेन्वयव्यतिरेकप्रतीतिः कार्यकारणभावव्यवस्थाहेतुः, कारणाभावे एव कार्यस्य भावाद्भावे चाभावात् । इति निवेदितप्रायम् । तन्नासत्कार्यं, सर्वथा[29]प्यनुत्पादप्रसङ्गात् खकुसुमवदिति[30] व्यवतिष्ठते, कार्यत्वकथंचित्सत्त्वयोरेव व्याप्यव्यापक[31]भावस्य प्रसिद्धेस्तथा प्रतीतेः । त[32]त एव न तादृक्[33]कारणवत्, सर्वथाऽभूतत्वा[34]द्वन्ध्यासुतवत् [35]कथंचिदस्थितानुत्पन्नत्वादिति योज्यम् । न हि सर्वथाप्यसत्कार्यमभूतं न भवति, यतः कथंचिदप्यस्थितमनु[36]त्पन्नं च न स्यात्, कथंचित्स[37]त एव

---

१ दूषणान्तरमाविर्भावयन्ति । २ बौद्धमते यतोऽसदेव कार्यमुत्पद्यते । ३ ( सत. सर्वदा सत्त्वात् ) । ४ तर्ह्यसदेव कार्यं स्यादिति को दोषः ? इत्याशङ्क्याहु. । ५ शक्तिव्यक्तिरूपेण द्रव्यपर्यायरूपेण वा । ६ तन्मा भूत् । ७ दूषणान्तरम् । घटपटादेर्मृत्पिण्डतन्त्वादि उपादानमिति नियमोपि मा भूत्सर्वथा कार्यस्याविद्यमानरूपत्वे । ८ कार्योत्पत्तावाश्वासोपि मा भूत् । ९ क्षणिकपक्षे सर्वथाऽसत् कार्यं नोत्पद्यते सर्वथाऽसत्त्वादित्येतावद्वाक्यमध्याहार्यम् । १० सौगतस्य । ११ सर्वथाप्यसत्त्वादित्ययं हेतुः । १२ एतदेव भावयति । १३ मृत्पिण्डादेः । १४ कार्यत्वेन परिणमनात् । १५ सौगतेन । १६ एकवार न किंतु बहुवार विरुद्धधर्माध्यासानिराकृतेः । यथा चित्रज्ञाने ज्ञानापेक्षयैकत्वं पीतादिनिर्भासापेक्षयानेकत्वमिति विरुद्धधर्मसाहित्यं बहुवार समर्थितम् । १७ बहुवार विरुद्धधर्माध्यासानिराकृतौ च । १८ (द्वावप्यन्वयव्यतिरेकौ भावस्वभावावेवेत्यर्थः) । १९ भावाभावयो. । २० (यद्भावे यत्कार्यं भवति तस्य कारणस्याभावे तस्यैव कार्यस्याभावरूपतया प्रतीतेरित्यर्थ ) । २१ कारणस्य । २२ द्वौ नञौ प्रकृतमर्थं सूचयत. । २३ अन्वयो भावस्वभावो, व्यतिरेकोऽभावस्वभावः । २४ वस्तुनोस्तित्वस्वभावादन्यो नास्तित्वलक्षण स्वभावः स्वभावान्तरम् । २५ नीरूपस्याभावस्य प्रतिक्षेपेपि स्वभावान्तरस्यैवाभावस्य व्यवहारार्हत्वं कुत इत्युक्ते आह । २६ पावकस्याभावः परंतु तत्प्रदेशस्य सद्भावोस्ति । एवं धूमस्याभाव. परंतु धूमरहितदेशस्य सद्भावः । २७ तथापि व्यतिरेकप्रतीतेर्भावस्वभावनिबन्धनत्वं कुत. ? इत्यारेकायामाह । २८ यत्र प्रदेशेग्निर्नास्ति तत्र धूमोपि नास्ति परंतु अग्निधूमयोरभावेपि प्रदेशसद्भावोस्तीति भावस्वभावनिबन्धनत्वं व्यतिरेकस्य । २९ पर्यायरूपेणापि । ३० इति, इत्यनुमानम् । ३१ कार्यत्वं व्याप्यं, कथंचित्सत्त्वं व्यापकम् । ३२ सर्वथाप्यसतोऽकार्यत्वादेव । ३३ तादृक्कारणवन्न कथंचिदस्ति । तादृक्, असत्कार्यं कारणवन्न भवतीत्यर्थः । ३४ असत्त्वात् । ३५ द्रव्यरूपतया । ३६ असत्कार्यं यद्द्रव्यरूपतया अस्थितमनुत्पन्नं तत्कार्यरूपतया कथमस्थितमनुत्पन्नं न स्यात् ? । ३७ द्रव्यरूपतया ।

स्थितत्वोत्पन्नत्वघटनाद्विनाश[1]घटनवत्, सत उत्पादव्ययध्रौव्ययुक्तत्वलक्षणत्वात् । न चोत्पादादित्रयरहितं वस्तु समस्ति यतः कारणे[2]वत्स्यात् निरन्वयविनाशे तत्का[3]रणस्य तद्भावायोगात् का[4]र्यस्य तद्भावायोगवत् ।

स[5]त्यपि प्रभवलक्ष[6]णे पूर्वपूर्वस्योत्तरीभवनं मृत्पिण्डस्थासकोशकुशूलादिषु सकललोकसाक्षिकं सिद्धम् । तत्र स्वमनीषिकाभिः सदृशा[7]परापरोत्पत्तिर्वि[8]प्रलम्भानवधारणा[9]वक्लृप्तिमारचयतां[10] मोपादाननियमो भूत् कारणान्त[11]रवत् तदन्वयाभावाविशेषात् सर्वथा वैलक्षण्या[12]त् । न हि मृत्पिण्डस्थासादीनां तन्तुपटादीनां च सर्वथा[13] वैलक्षण्येनान्वयाभावाविशेषेपि मृत्पिण्ड एवोपादानं स्थासस्य, स्थास एव कोशस्य, कोश एव कुशूलस्य, कुशूल एव घटस्य, न पुनस्तन्त्वादय. स्थासादीनामिति नियमनिबन्धन किमप्यस्ति, यतः पूर्वपूर्वस्योत्तरीभवनं मृत्पिण्डस्थासादिषु सकललोकसाक्षिकं न भवेत् । वैलक्ष[14]ण्यानवधारणं निबन्ध[15]नमिति चेत्तद्यदि सदृ[16]शापरापरोत्पत्तिविप्रल[17]म्भात्प्रतिपत्तृणामि[18]ष्यते तदा समसमय[19]वर्तितिलादीनां सत[20]त्योत्पद्यमानानां वैलक्षण्यानवधारणं स्यात् । त[21]तश्च परस्परभिन्नसंत[22]तीनामप्युपादान[23]त्वं प्रसज्येत विशेषाभावात् । यथै[24]व ह्येकसंतानवर्तिनः सदृशस्यापरा[25]परस्योत्पत्तिः सादृश्यमभावाव्यवधा[26]नं च बौ[27]द्धं, विप्रलम्भस्त्वनाद्यभेदवासनाहितमभेदज्ञानमन्तरङ्ग वैलक्षण्यानवधारणस्य कारणं तथा भिन्नसंततीनामपि तिलादीनामिति न विशेषः । ननु भिन्नदेशानां तेषां[28] सत्यामपि सादृश्योत्पत्तौ नाभावेनाव्य[29]वधानमन्तराले परस्परमभावस्य व्यवधायकस्य भावादिति न म[30]न्तव्यं, मृत्पिण्डस्थासादीनामेकसंतानवर्तिनामपि भिन्नदेशत्वसंभ[31]वादभावव्यवधानप्रसङ्गात् । न हि तेषा[32] काल एव भिद्यते न पुनर्देशस्त[33]स्य नित्यत्वप्र[34]सङ्गात् । सर्वस्वलक्षणानां स्वरूपमात्रदेश[35]तया देशाभावाददोष इति चेत्कथमेवं भिन्नसततितिलादीनां भिन्नदेशता ? । स्वरूपलक्षणदेशभेदादिति चेन्मृत्पिण्डादीनामपि तत[36] एव सास्तु, न चान्य[37]त्रापीत्यविशेष एव । सादृश्यविशे[38]षाद्विशेष[39] इत्यपि मिथ्या, सादृश्यस्यापि परमार्थतः कचिद[40]भावा[41]त्सामान्यवत् । अतत्कार्यकारणव्यावृत्त्या कल्पि[42]तस्य तु सादृश्यस्य को विशेष इति चि[43]न्त्यम् । वैलक्षण्यानवधारणहेतु[44]त्वमिति चेत् कृष्णतिलादि[45]षु भिन्नसंतानेष्वपि समानम् । परस्पराश्रयत्वानुषङ्गश्चैवम् । स[46]ति सादृश्यविशेषे मृत्पिण्डादिषु वैलक्षण्यानवधारणं तस्मिन् सति सादृश्यविशेषनिश्चयः । इति नैकस्यापि निर्णयः स्यात् ।

---

१ यथा विनाशोपि सत एव घटते । २ ( असत्कार्यं यत कारणयुक्त स्यात् । अपि तु न स्यादित्यर्थं ) । ३ निरन्वयविनाशकारणस्य । ४ निरन्वयविनाशिकारणकस्य । ५ हे जैन असत्कार्ये उत्पादादित्रय यदि न घटते तर्हि सत्यपि प्रभवलक्षणे उत्पादादित्रयं कथ सिद्धमित्याशङ्क्याहुर्जैना । ६ कार्यकारणलक्षणे । ७ सदृशस्यापरापरकार्यस्य । वैसादृश्येन सह । ८ अनाद्यभेदवासनोद्भूताभेदज्ञानं विप्रलम्भ । ९ अभेदकल्पनाम् । भेदस्यानवधारणाम् । १० क्षणानाम् । ११ यथा कारणान्तरस्योपादाननियमो न भवति । १२ भेदात् । १३ पर्यायरूपेणेव द्रव्यरूपेणापि । १४ सौगत आह । वैलक्षण्यस्य भेदस्यानवधारणम् । अभेदावधारणमित्यर्थ । १५ निबन्धमुपादानकारणम् । १६ सदृशस्यापरापरकार्यस्य । १७ अनाद्यभेदवासनासमुद्भूतमभेदज्ञानं विप्रलम्भ. । १८ वैलक्षण्यानवधारणम् । १९ फलान्तर्वर्तिना घुर्घुरान्तर्वर्तिनामित्यर्थ· । २० नैरन्तर्येण । २१ ( तथैवेत्यर्थ ) । २२ सुगतसौगताना घटपटादीना वा । २३ वैलक्षण्यानवधारणम् । २४ हे सौगत । २५ कार्यस्य । २६ क्षणाना मध्ये व्यवधायकान्यक्षणाभावेन क्षणाना व्यवधानाभाव इत्यर्थ । २७ कारणम् । २८ तिलादीनाम् । २९ किन्तु अभावेन व्यवधानमेव । अन्तराले अभावो वर्तते तिलेषु परस्परं यत । ३० इति बौद्धेन न वक्तव्यमित्यर्थ· । ३१ देशस्यापि बौद्धमते क्षणिकत्वात् । ३२ एकसतानवर्तिनाम् । ३३ अन्यथेति शेष· । तस्य, देशस्य । ३४ ( न च नित्यत्व कस्यचिद्बौद्धमते ) । ३५ ( स्वरूपमात्रमेव सर्वस्वलक्षणाना देशो नेतर कश्चिद्देशोर्थ· ) । अतोऽदोषो वैलक्षण्यानवधारणलक्षण· । ३६ स्वरूपलक्षणदेशभेदादेव । ३७ मृत्पिण्डादिष्वपि । ३८ न तु सादृश्यमात्रात् । ३९ तिलेभ्यो मृत्पिण्डादे । ४० वस्तुनि । ४१ सौगताभिप्रायेण । ४२ असादृश्याद्व्यावृत्ति सादृश्यमित्येवम् । ४३ त्वया सौगतेन । ४४ सादृश्यविशेष. । ४५ सदृशेषु । ४६ वैलक्षण्यानवधारणस्य हेतुरिति सादृश्यविशेषे, सति ।

नन्वनिश्चितादेव सादृश्यविशेषादभेदाध्यवसायरूपं[१] वैलक्षण्यानवधारणं निश्चीयते । ततः[२] सादृश्यविशेषानुमानान्नेतरेतराश्रयत्वं तयोः[३]रिति चेन्न, एवं यमलका[४]दिष्वपि तदनुमान[५]प्रसङ्गादन्वय[६]स्यापि तद्वत्प्रसक्तेः ।

ननु च निरन्वयस्यापि तादृशी प्रकृतिरात्मानं[७] कारणान्तरेभ्यो[८] यया[९] विशेषयतीति चेन्न, अत्यन्तविशेषा[१०]नुपलब्धेः । तद[११]विशेषा[१२]दर्शने सर्वथान्ध्यं स्यात्, विशेषाविशेषयोरदृष्टौ तद्रहितवस्तुरूपोपलम्भाभावात् । तस्मा[१३]दियं[१४]मस्य[१५] प्रकृतिर्यया[१६] पूर्वोत्तरस्वभावहानोपादानाधिकरणस्थितिं[१७] प्रतिक्षणं बिभर्ति[१८] यतोयं[१९]मुपादाननियमः सिद्धः, पूर्वोत्तरस्वभावहानोपादानमात्रे[२०] तद[२१]सिद्धेः स्थितिमात्र[२२]वत् । अथापि कथंचिदुपादाननियमः कल्प्येत, कार्य[२३]जन्मनि कथमाश्वासः ? संवृतिमात्रेणोपकल्पितादुपादाननियमात्कार्योत्पत्तावनाश्वासदर्शनात् स्वप्नवत् । तद[२४]त्यन्तासतः कार्यस्योत्पत्तेस्तन्तुभ्यः पटादिरेव न पुनः कुटादिरिति निर्हेतुको नियमः स्यात् । पूर्वपूर्वविशेषादुत्तरोत्तरनियमकल्पना[२५]यामनुपादा[२६]नेपि स्यात् तन्नियमकल्पना । तथा[२७]ऽदर्शनमहेतुरत्रैव[२८] विचारात् । न हि यत्रैवं विवादस्तदेव[२९] नियमहेतुरिति युक्तं वक्तुमविचारकत्वप्रसङ्गात् । यथा[३०]दर्शनं नियमकल्पनायां हेतावपि कथंचिदा[३१]हितविशेषतन्तूनां पटस्वभावप्रतिलम्भोपलम्भात् तद[३२]न्यतरविधिप्रतिषेधनियमनिमित्तात्ययात् । प्रतीते[३३]रलमपलापेन । न हि तन्तुतद्विशेषयोरन्यतरस्य विधौ निषेधे च नियमनिमित्तमस्ति । न हि तन्तव एवातानादिविशेषनिरपेक्षाः पटस्वभावं प्रतिलभमानाः समुपलभ्यन्ते, येन तन्तुमात्र[३४]स्यैव विधिनियमो विशेषप्र[३५]तिषेधनियमो वा स्यात् । नापि तन्तु[३६]निरपेक्षो विशेष एव पटस्वभावं स्वीकुर्वन्नुपलभ्यते यतो विशेषविधिनिय[३७]मस्तन्तु[३८]प्रतिषेधनियमो वाव[३९]तिष्ठेत । न चोपलब्ध्यनुपलब्धी मुक्त्वान्यन्निमित्तं तद्वि[४०]धिप्रतिषेधयोर्नियमेस्ति येन तदत्ययेपि तदुभयप्रतीतेरपलापः शोभेत । ननु च नास्ति तन्त्वाद्यन्वय उपलब्धिलक्षणप्राप्त[४१]स्यानुपलब्धे[४२]रिति स्वभावानुपलब्धिस्तत्[४३]प्रतिषेधनियमनिमित्तं, विशेष[४४]मात्रस्यैवोपलब्धेस्त[४५]द्विधिनियमहेतुरवा[४६]दिति चेन्न, तन्त्वाद्यन्वयवत्तद्विशेषस्यापि निरपेक्षस्यो[४७]पलब्धिलक्षणप्राप्तस्यानुपलब्धेरविशेषात्प्रतिषेधनियमप्रसङ्गात् ।

---

१ अभेदाध्यवसायो रूपं यस्य ( वैलक्षण्यानवधारणस्य ) तत् । २ वैलक्षण्यानवधारणात् । ३ सादृश्यविशेषवैलक्षण्यानवधारणयोः । ४ यमलजातेष्वपि, युगपज्जातेष्वपि । ५ स एवायं भवितुमर्हति वैलक्षण्यानवधारणात् । ६ एकसंतानोन्वयस्तस्यापि यमलजातादिषु तद्वत्, सादृश्यविशेषानुमानवत् संभवात् । ७ निरन्वयभावम् । ८ तन्त्वादिभ्यः । ९ प्रकृत्या । १० यतो भिन्नसंतानेपि सर्वथा भेदोऽभिन्नसंतानेपि सर्वथा भेदः समानो, अन्वयानङ्गीकारात् । ११ तस्याः प्रकृतेः । १२ अन्वयाभावात् । १३ यस्माद्वस्तुनोऽनुपलम्भः । १४ अनन्तर वक्ष्यमाणा । १५ कारणस्य । १६ द्रव्यरूपया । १७ ध्रौव्यरूपाम् । १८ कारणं कर्तृभूतम् । १९ उत्पादव्ययध्रौव्यात्मककारणरूपः । २० अधिकरणस्थित्यनङ्गीकारे । निरन्वयेऽङ्गीक्रियमाणे इत्यर्थः । २१ तस्य उपादाननियमस्य । २२ नित्यवत् । ( सर्वथा नित्ये यथोपादानादिनियमो न सिध्यतीत्यर्थः ) । २३ ( यद्येवं बौद्धविचारस्तर्हीत्यध्याहार्यम् ) । अधिकरणस्थित्यनङ्गीकारे अस्मादेतद्भविष्यतीत्येवंप्रकार आश्वासः कथम् ? । २४ तत्तस्मात् । २५ विवक्षितकार्योत्पत्तौ । २६ पटकार्यं प्रत्यनुपादाने मृत्पिण्डेपि । २७ सौगतो वक्ति, पूर्वक्षणा अपरामृष्टत्वेनोत्तरक्षणानुत्पादयन्तीति तथा लोके दृश्यते । अत्राह स्याद्वादी, एवं सत्यहेतुरनुपादानं सर्वं जातं तदा तन्त्वादिभ्योपि घटादिर्जायताम् । आवयोरत्रैवानुपादाने सोपादाने वा विरोधोस्ति । २८ अदर्शने । २९ अदर्शनम् । ३० अनुपादानप्रकारेण तन्नियमकल्पनायामदर्शनं हेतुः स्यादित्याशङ्कायामाह । ३१ आतानादिप्रकारेण । ३२ तन्तुसामान्यतन्तुविशेषयो । ३३ यथादर्शनं नियमकल्पनाप्रतीते । ३४ तन्तुसामान्यस्य । ३५ आहिततन्तुविशेषस्य । ३६ तन्तुसामान्यनिरपेक्षः । ३७ आहिततन्तुविशेषस्य । ३८ तन्तुसामान्यस्य । ३९ एकत्र वस्तुनि । ४० तयोस्तन्तुसामान्यतन्तुविशेषयोः । ४१ सामान्यरूपस्य तन्त्वादे । ४२ पटादौ । ४३ तस्य, तन्त्वाद्यन्वयस्य । ४४ आहिततन्तुविशेषस्य । ४५ तस्य, विशेषमात्रस्य । ४६ पटं प्रति । ४७ तन्तुसामान्यनिरपेक्षस्य ।

तस्मात्[1] उपलब्धिलक्षणप्राप्तानुपलब्धिरनन्वयस्यैव[2] न पुनरुभयरूपस्य[3]। इत्यलं प्रसङ्गेन[4]। सर्वथान्वय[5]-विशेषयोरेव प्रतिषेधनियमस्य निमित्ताभावात्[6] तदुभयरूपजात्यन्तरस्यैव विधिनियमस्य निमित्तसद्भावात् तन्निमित्तस्यार्थक्रियाकारित्वस्य सकलप्रमाणोपलम्भस्य च प्रसिद्धेर्विरोधाद्यसंभवाच्च[7]। तदेवं[8] क्षणिकैकान्तपक्षे,—

न हेतुफलभावादि[9]रन्यभावादनन्वयात्[10]।

सन्तानान्तरवत्[11] नैकः सन्तानस्तद्वतः[12] पृथक् ॥ ४२ ॥

क्षणिकैकान्तपक्षेपीति विवर्तते। तेन पूर्वोत्तरक्षणाना न हेतुफलभावो वास्यवासकभावः कर्मफलसंबन्धः प्रवृत्त्यादिर्वास्ति, सर्वथाऽनन्वये सत्यन्यभावात् सतानान्तरवत्। तेषां[13] एकसंतानत्वात्सोस्तीति चेन्न, एकसंतानस्य तद्वतः[14] पृथगसत्त्वात्, संतानिन[15] एवापरामृष्ट[16]भेदाः सन्तान इति स्वयम्[17] अभ्युपगमात् सर्वेषां[18] वैलक्षण्याविशेषात्। सन्तानसंकर[19]प्रसङ्गश्चाविशेषेणापरामृष्टभेदत्वस्य संभवात्[20], एते एवाभेदपरामर्शविषया न पुनरन्ये[21] इति विशेषनिबन्धनस्याभावात्। विलक्षणानामत्यन्तभेदेपि स्वभावतः किलासंकीर्णाः[22] संततयः कर्मफलसंबन्धादिनिबन्धनं शशविषाणस्येव वर्तुलत्वमाचरितं[23] कश्चेतनः श्रद्दधीत? प्रत्यक्षेणाप्रतीतेर्थे स्वभावस्याश्रयितुमशक्यत्वात् "प्रत्यक्षेण प्रतीतेर्थे यदि पर्यनुयुज्यते। स्वभावैः[24] उत्तरं वाच्यं दृष्टे[25] कानुपपन्नता" इति स्वयमभिधानात्। न च परस्परं विलक्षणानामेव क्षणानामत्यन्तमन्वयासत्त्वेप्यन्तर्बहिर्वा संततयोऽसंकीर्णा एव प्रत्यक्षतः प्रतीताः, तस्य[26] एकक्षण[27]गोचरतया संतानाविषयत्वात्। नाप्यनुमानतः, स्वभावस्य कार्यस्य वा तल्लिङ्गस्य प्रतिबद्ध[28]स्यानवधारणात्। प्रत्यभिज्ञानादि तद्[29]अनुमाने लिङ्गमिति चेन्न, तस्य क्वचिद्[30]अन्वया[31]सिद्धेर्व्यतिरेका[32]निश्चयाच्च। तत एव नान्यथानुपपत्तिः[33], प्रत्यभिज्ञानादेः संतानाभावे[34]ऽसंभवनियमनिश्चयायोगात्, तत्र[35] एकद्रव्य[36]प्रत्यासत्तेरेव ततः[37] प्रसिद्धेर्विरुद्धत्व[38]निर्णयात्। ततो[39] न संतानोस्ति स्वभावत एवासंकीर्णाः संतानान्तरैरिति सूक्तम्।

---

१ परस्परनिरपेक्षयो सामान्यविशेषयोरुपलब्धिर्नास्ति यस्मात्। २ अनन्वयस्यानुगमरहितस्य सामान्यमात्रस्य विशेषमात्रस्य वा। न विद्यतेन्वयो यस्य सामान्यस्य विशेषेण सह, न विद्यतेन्वय· सहावस्थान यस्य विशेषस्य सामान्येन सह इति च व्युत्पत्ति। ३ सामान्यविशेषात्मनो वस्तुन। ४ उभयात्मके वस्तुनि सामान्यप्रतिषेधनियमानिमित्तप्रतिपादनेन। ५ परस्परनिरपेक्षयो। ६ कार्यं प्रति। ७ एकरूपस्योभयरूपत्वे विरोध स्यादित्युक्ते सत्याहुर्जैना। ८ असत· कार्यत्वं न भवेदुपादाननियमश्च न भवेद्यस्मात्तस्मात्। ९ कार्यकारणभावादि। १० अनन्वये सत्यन्यत्वात्सन्तानान्तरवत्। ११ यथा सन्तानान्तरे हेतुफलभावादिर्न भवति। १२ सतानित·। १३ पूर्वोत्तरक्षणानाम्। १४ सतानित पृथक्त्वेन। १५ पूर्वोत्तरक्षणा·। १६ न परामृष्टो भेदो येषु ते ( परमार्थतस्तु भिन्नत्वेपि )। १७ बौद्धेन। १८ क्षणाना परस्परम्। १९ विवक्षितक्षणं प्रत्यविवक्षितक्षण. पूर्वो य. कश्चित् कारणं स्यादिति सतानसंकर इति भावः। २० सर्वेषा स्वसंतानवर्तिना संतानान्तरवर्तिना चाविशेषेणापरामृष्टभेदत्वस्य संभवात्। २१ संतानान्तरवर्तिन। २२ अन्यसततिभि सह। २३ स्वभावत संकीर्णाया· संततेरेव प्रत्यक्षादिना प्रसिद्धौ स्वभावतोऽसंकीर्णा इति वचन तथा न सद्यथा शशविषाणस्य वर्तुलत्वकथनम्। २४ तदेति शेष। २५ प्रत्यक्षविषयीकृतेर्थे। २६ प्रत्यक्षस्य। २७ स एकक्षण· सन्निहित·। २८ लिङ्गिना संतानेन सह। २९ तस्य, सतानस्य। ३० दृष्टान्ते। ३१ संताने सत्येव प्रत्यभिज्ञानमुत्पद्यते यथा चेति न क्वापि दृष्टान्तेऽवलोकितमित्यर्थ। ३२ नीलस्वलक्षणे संतानेऽसति प्रत्यभिज्ञानाभावोत्र व्यतिरेक। ३३ सतानोस्ति प्रत्यभिज्ञानान्यथानुपपत्तेरिति हेतुरपि न घटते इत्यर्थ। ३४ कृष्णतिलेषु सतानाभावेपि तत्सदृशोयं तिल इति प्रत्यभिज्ञानं यत उदेति। ३५ क्षणेषु। ३६ स एवायमेकसतान इति। तत्र सतानासकीर्णानुमाने। ३७ तत्र प्रत्यभिज्ञानादे सकाशादेकद्रव्यप्रत्यासत्तिरेव प्रसिध्यति यत। एवं सति सौगताना विरुद्धत्वं निर्णीयते यत इत्यर्थ। ३८ प्रत्यभिज्ञानादेर्हेतोः ( प्रत्युत· सौगतवचनस्यैव विरुद्धत्वनिर्णयात् )। ३९ प्रत्यक्षादितो न संतानसिद्धिर्यत·।

स्यान्मतम्[1],—

अन्येष्व[2]नन्य[3]शब्दोयं संवृतिर्न मृषा कथम् ?।
मुख्यार्थः[4] संवृतिर्न स्याद्विना मुख्यान्न संवृतिः ॥ ४४ ॥

संतानिभ्यो[5]ऽनन्यः संतानः, अन्यथात्मनो नामान्तरकरणात्—आत्मा संतान इति, सुखादिपरिणामेभ्यो[6] भिन्नस्य वस्तुनो व्यापकस्यात्मत्वादर्थभेदाभावात् । तथा नामान्तरकरणे च नित्यानित्यविकल्पानुपपत्ते[7]र्नान्यः संतानो वास्तवः स्यात् । नित्यविकल्पे[8] तस्य संतानिव्यापकत्वाभावो[9]ऽनेकस्वभावेन तद्व्यापकत्वे[10] तस्य[11] नित्यैकरूपत्वविरोधात् । एकस्वभावेन[12] तद्व्यापकत्वे संतानिनामेकरूपत्वापत्तेः कुतः संतानः ? अनेकव्यापिनः क्रमशः संतानत्वात् । तदनित्ये[13] विकल्पेपि न संतानः, संतानिवद्भेदादेकप्रत्यवमर्शा[14]विषयत्वात्, अपि[15] तु संवृत्त्या[16]ऽन्येष्वनन्यव्यवहारात्, अनन्य इति[17] शब्दविकल्पलक्षणत्वादेकत्व[18]मुपचरितमिति । अन्येष्वनन्यशब्दोयं संवृतिः सौगतैरभिधीयते संतानः[19] । सोपि कथं मृषा न स्यात्[20] ? । अस्तु व्यलीकोयं व्यवहारस्तथेष्टत्वादिति चेत्तर्हि व्यलीकव्यवहारेपि विशेषानुपपत्तेः संबन्ध[21]नियमाभावस्तदवस्थः, सकलसंतानिनां[22] साङ्कर्यस्यापरिहृतत्वात्, उपचरितेनैकसंतानेन केषांचिदेव स्वेष्टसंतानिनां व्याप्तेर्नियमयितु[23]मशक्तेः । यदि तु मुख्यार्थ[24] एव संतानः स्यात्तदा न संवृतिः । संवृतिरेव संतानस्तथोपचारादिति चेन्न, तस्य[25] मुख्यप्रयोजनत्वविरोधात् । मुख्य[26]प्रयोजनश्चायं[27], प्रत्यभिज्ञानादेर्मुख्यस्य कार्यस्य करणात् । उपचारस्तु नर्ते मुख्यात् । यथा[28]ग्निर्माणवकः । इति स्खलति हि तत्रा[29]नन्यप्रत्ययः, परीक्षाऽक्षमत्वात् । अत एवामुख्यार्थः[30] प्रस्तुता[31]साधनम् । न ह्यग्निर्माणवक इत्युपचारात्पाकादावादीयते[32] । तथा संतानोप्युपचरितः संतानिनियम[33]हेतुर्न स्यात् । इति तदवस्थं संतानिसाङ्कर्यं, संतानस्यैकस्य संतानिभ्यो भिन्नस्याभिन्नस्योभयरूपस्यानुभयरूपस्य चासंभवात् । तत[34] एव,—

चतुष्कोटे[35]र्विकल्पस्य सर्वान्ते[36]षूक्त्ययोगतः ।
तत्त्वान्यत्व[37]मवाच्यं चेत्तयोः संतान[38]तद्वतोः ॥ ४५ ॥

यो[39] यो धर्मस्तत्र तत्र चतुष्कोटेर्विकल्पस्य वचनायोगः । यथा सत्त्वैकत्वादिधर्मेषु । धर्मश्च संतान-

---

१ ( बौद्धस्य ) । २ भिन्नक्षणेषु । ३ अनन्ये इमे क्षणा इति शब्दो यस्य स. । संतान संवृतिरुपचार इत्यर्थः । ४ मुख्योर्थो यस्येति वसः । ५ वक्ष्यमाणदोषभयात्संतानिभ्य· संतानोनन्य एव वक्तव्य· । तथा च संतानिव्यतिरेकेण संतानाभावात्प्रागुक्त एव दोषानुषङ्ग. । ६ जैनमतापेक्षया, न तु 'बौद्धमतापेक्षया । ७ नित्यानित्यविकल्पाभ्यां संतानस्यानुपपत्तेः । ८ संतानो नित्य इति विकल्पे । ९ यतः संतानी स्वयमनित्यस्ततो नित्येन सह न व्याप्नोति । १० व्याप्नोति चेत्तर्ह्यस्थिर्थ· । ११ संतानस्य । १२ ( क्षणाना संताने व्यापकत्वमनेकस्वभावसद्भावेनैकस्वभावसद्भावेनैव वेति विकल्पद्वये द्वितीयं विकल्पमाश्रित्य दूषयन्ति ) । १३ ( संतानस्य नित्यत्वमभिमत्य अनेकस्वभावेनैकस्वभावेनेति द्विधापि प्रदूष्य संतानस्यानित्यत्वाभिमतौ सत्या दूषयन्ति ) । १४ एकप्रत्यवमर्श , प्रत्यभिज्ञानम् । १५ संतानिभ्यः संतानस्य भिन्नत्वे नित्यानित्यविकल्पाभ्यामनुपपत्तेर्दूषणमेतत्समायातं तर्हि किं स्यादित्युक्ते आह । १६ (संवृति., कल्पना) । १७ विशेषणस्य । १८ अनन्य इत्येकत्वमुपचारेणैव सौगतैर्मतम् । १९ ( सौगतैरन्येषु अयमनन्यशब्दः संवृतिरित्यभिधीयते । स एव संतानः । २० संवृतिरूपत्वात् । २१ पूर्वोत्तरक्षणाना कार्यकारणभावसंबन्धनियमस्य । २२ परस्पर भिन्नक्षणानाम् । २३ विवक्षितसंतानिष्वेव सतान· कार्यकारणादिसवन्धभाग्, न पुन. संतानान्तरवर्तिष्वविवक्षितसंतानिष्विति नियमयितुमशक्ते. । २४ मुख्योर्थो यस्य सः । २५ संतानस्य । २६ तथास्त्वित्युक्ते आह । २७ संतानः । २८ ( सत्येऽग्नौ क्वचिदसति अन्यत्र माणवके प्रयोजनवशादुपचर्यते न त्वसदेवाग्नि. ) । २९ पूर्वोत्तरक्षणेषु । ३० उपचरितसंतानः । ३१ प्रस्तुतस्यानन्यप्रत्ययस्य । ३२ माणवक. । ३३ एतस्य संतानिनोयं संतानो हेतुरिति । ३४ हे जैन यतोऽसंभवस्ततः । ३५ बौद्धाभिप्रायोयं सर्वकारिकायाम् । ३६ सर्वान्तेषु, सर्वधर्मेषु ( अन्तशब्दो धर्मवाच्यत्र ) । ३७ एकत्वानेकत्वं तत्त्वान्यत्वशब्देन । ३८ संतानतद्वतोस्तत्त्वान्यत्वलक्षणो धर्मोऽवाच्यो धर्मत्वात् । ३९ तत्त्वान्यत्वेषु धर्मेषु चतुष्कोटिविकल्पस्य वचनायोगो धर्मत्वादित्युपरिष्टाद्योज्यम् । ( कोटि , कक्षा ) ।

तद्वतोस्तत्त्व[1]मन्यत्वं च । इति तत्रा[2]वाच्यत्वसिद्धिः । प्रसिद्धं[3] हि सत्त्वैकत्वादिषु सर्वधर्मेषु सदसदुभयादिचतुष्कोटेरभिधातुमशक्यत्वात् संतानतद्वतोरपि भेदाभेदोभयानुभयचतुष्कोटेरनभिलाप्यत्वम् । सर्वो[4] हि वस्तुधर्मः सन् वा स्यादसन् वा उभयो वानुभयो वा । सत्त्वे तदुत्पत्तिविरोधादसत्त्वे पुनरुच्छेद[5]पक्षोपक्षिप्तदोषादुभये[6] चोभयदोषप्रसङ्गादनुभयपक्षेपि विकल्पानुपपत्ते[7]रित्यादि योज्यम् । तथा[8] हि । वस्तुनो धर्मस्या[9]नन्यत्वे वस्तुमात्रप्रसक्तेरन्यत्वे व्यपदेशा[10]सिद्धेरसंबन्धात्, उभये चोभयपक्षभाविदोषोऽनुभयपक्षे निरुपाख्य[11]त्वमिति । तथा[12]नभिधेयत्वं प्रसिध्यत् सर्वत्र[13] संतानसंतानिनोरपि तत्त्वान्य[14]त्वाभ्यामवाच्यत्व प्रसाधयति विशेषाभावात् । इति येषा[15]माकूतं[16] तैरपि,—

अवक्तव्य[17]चतुष्कोटि[18]विकल्पोपि न कथ्यताम्[19] ।
असर्वान्त[20]मवस्तु स्यादविशेष्य[21]विशेषणम् ॥ ४६ ॥

न हि सर्वथानभिलाप्यत्वेऽनभिलाप्यचतुष्कोटेरभिधेयत्वं युक्तं, कथंचि[22]दभिलाप्यत्वप्रसङ्गात् । ततो भवद्भि[23]रवक्तव्यचतुष्कोटिविकल्पोपि न कथनीयः । इति न परप्रत्याय[24]नं नाम । अपि[25] चैवं सति सर्वविकल्पातीतमवस्त्वेव स्यादन्यत्र वाचोयुक्तेः[26] । जात्यन्तरमेव ह्यनेकान्तात्मकं[27] सर्वथैकान्तविकल्पातीतत्वात् । सर्वविकल्पातीतमिति वाचोयुक्तावेव वस्तूक्तं स्यान्नान्यथा[28], तस्या[29]विशेषणत्वात् खपुष्पवत् । न हि सर्वथा[30]प्यसद[31]नभिलाप्य[32]मवस्त्विति वा विशेषण स्वीकुरुते यतो विशेष्यं स्यात् । न चाविशेष्यमविशेषण च किंचि[33]दध्यक्षसंविदि प्रतिभासते, स्वसंवेदनस्या[34]पि सत्त्वविशेषणविशिष्टतया विशेष्यस्यैवावभासनात् । तदुत्तरविकल्पबुद्धौ स्वस्य संवेदनमिति विशेषणविशेष्यभावोवभासते, न तु स्वरूपे तस्येति चेत्तर्हि किमविशेष्यविशेषणं संवेदनमिति स्वतः प्रतिभासते ? तथोपगमे सिद्धो विशेषणविशेष्यभावः संविदि, तत्राविशेषणविशेष्यत्वस्यैव विशेषणत्वात्, सर्वथा[35]प्यसतो विशेषणविशेष्यत्वस्य प्रतिषेधायोगात् । तथा[36] हि ।

द्रव्याद्यन्तर[37]भावेन निषेधः संज्ञिनः सतः ।
असद्भेदो न भावस्तु स्थानं विधिनिषेधयोः ॥ ४७ ॥

द्रव्यक्षेत्रकालभावान्तरैः प्रतिषेधः संज्ञिनः सतः क्रियते स्वद्रव्यक्षेत्रकालभावैर्न पुनरसतः[38], तद्विधिप्रतिषेधाविषयत्वात् । द्रव्याद्यन्तरभावेनेव स्वद्रव्यादिभावेनाप्यसत्त्वे कुतो विधिर्नाम ? । तदभावे

---

१ तत्त्वधर्म. सतानस्य । अन्यत्वधर्मो भेदधर्मो वा संतानिन· । २ तत्त्वेऽन्यत्वे च । ३ उदाहरणसमर्थनेन दार्ष्टान्तं समर्थयति बौद्ध । ४ एतत्पूर्वोक्तमेव विवृणोति । ५ उच्छेदपक्ष· शून्यपक्ष । ६ वस्तुधर्मस्य सत्त्वासत्त्वरूपत्वे । ७ एकतरप्रतिषेधेन्यतरविधानादुभयप्रतिषेधे तु निर्विषयत्वान्नीरूपत्वम् । नीरूपत्वे विकल्पानुत्पत्ति । ८ भाष्योक्तादिशब्दं विवृण्वन्नाह । ९ भेदाभेदलक्षणस्य । १० एतस्य वस्तुनोयं धर्म इति । ११ वस्तुनो नि स्वभावत्वम् । १२ चतुष्कोटेर्विकल्पस्याभिधातुमशक्यत्वप्रकारेण । १३ पदार्थेषु । १४ तत्त्वमभेद, अन्यत्वं भेद । १५ सौगतानाम् । १६ अभिप्राय । १७ क्षणिकैकान्तपक्षेपीत्यनुवर्तते । किं च । १८ स्वलक्षणं सदित्यवक्तव्यमसदित्यवक्तव्यमुभयमित्यवक्तव्यमनुभयमित्यवक्तव्यमित्यत्रावक्तव्यत्वस्यापि धर्मत्वादवाच्यत्वम् । १९ तैरपीति सबन्ध । २० सर्वधर्मैरहितम् । २१ विशेष्य जीवादिवस्तु । सर्वधर्मरहितं विशेष्यविशेषणं न भवति । २२ अन्यथेति शेष (अनभिलाप्यचतुष्कोटेरभिलाप्यत्वं चेत्तर्हीत्यर्थ) । २३ सौगतैः । २४ शिष्यादिप्रबोधनं नैवं भवितुमर्हति । २५ (कारिकोत्तरार्द्धव्याख्या) । २६ अनेकान्तप्रयोगात् । २७ वस्तु । २८ अनेकान्तमन्तरेण । २९ एकान्तपक्षोक्तसर्वविकल्पातीतस्य । ३० द्रव्यपर्यायतया । ३१ असदिति कर्तृपदम् । ३२ अनभिलाप्यमवस्त्विति वा विशेषणम् (कर्मपदम्) । ३३ वस्तु । ३४ ननु स्वसंवेदन विशेषणविशेष्यरहितमेव प्रतिभासते इत्याशङ्क्याह । ३५ हेत्वन्तरम् । ३६ कथञ्चित्सत एव प्रतिषेध दर्शयन्नाह । ३७ स्वद्रव्यादेरन्यद् द्रव्याद्यन्तरं तस्य भावस्तेन । परद्रव्यादिभावेनेत्यर्थ· । ३८ स्वद्रव्यक्षेत्रकालभावैरसत प्रतिषेधो न क्रियते ।

न प्रतिषेधस्तस्य[1] कथंचिद्विधिपूर्वकत्वात् । ततः कथंचिद[2]भिलाप्यस्य सतः प्रतिषेधादनभि[3]लाप्यत्वं युक्तम् । कथंचिद्[4]विशेषणविशेष्यात्मनश्च सतोऽविशेष्यविशेषणत्वम् । इति नैकान्ततः किंचिदनभिलाप्यमविशेष्यविशेषणं वाभ्युपे[5]ज्ञातव्यम् । **न चैत[6]द्विरुद्धं स्वलक्षणमनिर्देश्यमित्यादिवत्** । स्वलक्षणं हि स्वरूपेणासाधारणेनानिर्देश्यं नानिर्देश्यमिति शब्देन[8], तथा[9] निर्देश्यत्वादन्यथा[10] वचनविरोधात् । तथा प्रत्यक्षं कल्पनापोढमपि स्वरूपेण कल्पनापोढमेव, न कल्पनापोढमिति कल्पनापेक्षया, तस्यान्यथा[11] कल्पनापोढत्वेन कल्पनाविरोधात्, सकलविकल्पवाग्गोचरातीतस्य निरुपाख्यत्वप्रसङ्गात् । तद्वत्स्याद्वादिनां न किंचिद्विप्रतिपिद्धम् । **अ[12]भावोनभिलाप्य इत्यपि भावाभिधानादेकान्तवृ[13]त्तावेव दोषोद्भावाभिधानैरपि क[14]थंचिदभावाभिधानात्** । यथैव ह्यभाव इति भावान्तरमभिधीयतेऽनभिलाप्य इति चाभिलाप्यान्तरं तथा भावोभिलाप्य इ[15]त्यपि भावान्तराभिलाप्यान्तराभावः कथ्यते, तथा प्रतीतेः, अभावशब्दैर्भावशब्दैश्चाभावस्य भावस्य चैकान्ततोभिधाने शाब्दव्यवहारविरोधात्, त[16]स्य प्र[17]धानगुणभावेन विधिनिषेधयोरुपलम्भात्, त[18]थैव प्रवृत्तिनिवृत्त्योरविसंवादसिद्धेरन्यथा विसंवादात् । ततः सूक्तमि[19]दम् " अ[20]सद्भेदो न भावस्तु स्थानं विधिनिषेधयोः " इति कथंचित्सद्विशेषस्यैव पदार्थस्य विधिनिषेधाधिकरणत्वसमर्थनात् । त[21]था च पराभ्युपगतमेव तत्त्वं सर्वथानभिलाप्यमायातमित्यभिधीयते[22] ।—

**अवस्त्वनभिलाप्यं स्यात्[23]सर्वान्तैः परिवर्जितम् ।**
**वस्त्वेवावस्तुतां याति प्रक्रि[24]याया वि[25]पर्ययात् ॥ ४८ ॥**

सकलधर्मविधुरमधर्मिस्वभावं तावदवस्त्वेव सकलप्रमाणाविषयत्वात् । तदेवानभिलाप्यं यु[26]क्तं, न पुनर्व[27]स्तु प्रमाणपरिनिष्ठितम् । त[28]दपि सर्वान्तैः परिवर्जितमवस्तु परपरिकल्पनामात्रादभिधीयते न पुनः प्रमाणसामर्थ्यात्, कस्यचिद्वस्तुन एव स्वद्रव्याद्यपेक्षालक्षणप्रक्रियाया विपर्या[29]सादवस्तुत्वव्यवस्थितेः, स्वरूपसिद्धस्य घटस्य घटान्[30]तररूपेणाघटत्ववत् कस्यचिद्वस्तुनो वस्त्वन्[31]तररूपेणावस्तुत्वप्रतीतेः । ननु परस्परविरुद्धमिदमभिहितं वस्तुत्वेतरयोरन्योन्यपरिहारस्थितत्वादिति **चेद्भावव्यतिरे[32]कवाचिभिरपि वाक्यतामापन्नैर्भावाभि[33]धानान्नात्र[34] किंचिद्विरुद्धम्** । न ह्यब्राह्मणमानयेत्यादिशब्दैर्वाक्यत्वमुपगतैर्ब्राह्मणादिपदार्थाभाववाचिभिस्तदन्यक्षत्रियादिभावाभिधानमसिद्धं येनावस्त्वनभिलाप्यं स्यादिति शब्देन वाक्यता-

---

१ प्रतिषेधस्य । २ स्वद्रव्यादिना । ३ परद्रव्यादिना । ४ स्वद्रव्यादिचतुष्टयेन । ५ किंतु सर्वं वस्तु कथंचिदभिलाप्यं विशेष्यविशेषणसहितं चास्तीति भावः । ६ बौद्धेन । ७ अभिलाप्यस्यैवानभिलाप्यत्वं, विशेषणविशेष्यरूपस्यैवाविशेषणविशेष्यरूपत्वम् । ८ अनिर्देश्यमिति शब्देनापि अनिर्देश्यं न । ९ तस्य स्वलक्षणमनिर्देश्यमिति शब्देन निर्देश्यत्वात् । १० ( स्ववचनेनाप्यनिर्देश्यं यदि तर्हि ) । ११ कल्पनापोढमिति कल्पनापेक्षयापि यदि अपोढं तर्हि । १२ एकस्यैवाभिलाप्यानभिलाप्यादेर्भावाभावरूपस्य वाचकभेदाद्भेदस्य विद्यमानत्वात्कथं न विप्रतिषिद्धमित्याशङ्कायामाह । १३ सर्वथैकान्ते । १४ पररूपेण । १५ इति शब्देनापि । १६ शाब्दव्यवहारस्य । १७ ( यस्य भावस्य प्राधान्यमपेक्षा वा तस्य विधिर्यस्य गुणीभाव उपेक्षा वा तस्य निषेध इत्यर्थः ) । १८ प्रधानगुणभावेन विधिनिषेधयोरुपलम्भप्रकारेण । १९ समन्तभद्रस्वामिभिरत्रैव कारिकायाम् । २० विशेष, सद्भेद । स न भवतीत्यसद्भेद, सर्वथा असत् । २१ यतः समर्थनं ततो बौद्धाभ्युपगतमेव बाधितं जातम् । २२ अग्रेतनकारिकया । २३ (अन्तो धर्मः) । २४ कथंचिद्रूपायाः । २५ परापेक्षया । स्वरूपादिचतुष्टयलक्षणायाः प्रक्रियाया विपर्ययात्—पररूपादिचतुष्टयात् । तस्माद्यदवस्तु तदनभिलाप्यम् । २६ सर्वथा । २७ सर्वथानभिलाप्यं न । २८ सकलधर्मरहितस्य वस्तुनो निरुपाख्यस्य स्याद्वादिभिरनभ्युपगमादवस्त्वनभिलाप्यं स्यादिति वचनमयुक्तमित्याशङ्कायामाहुस्तदपीति । २९ परद्रव्याद्यपेक्षत्वाद्व्यत्ययात् । ३० घटान्तर पटादि । ३१ परवस्त्वपेक्षयेत्यर्थः । ३२ अभाववाचकैः शब्दैरित्यर्थः । ३३ यथा ब्राह्मणाभाव एव क्षत्रियभावः । दोषाभाव एव गुणसद्भावः । ३४ अत्र, अवस्तुत्वप्रतिपादने ।

मुपगतेन वस्तुशून्यत्ववाचिना वस्त्वन्तराभिधानं विरुध्यते[1] । अतः[2] सूक्तं 'यदवस्तु तदनभिलाप्यं यथा न किंचित्[3] । यत्पुनरभिलाप्यं तद्वस्त्वेव यथा खपुष्पाभावः[4]' इति । नात्र साध्यविकलमुदाहरणं खे पुष्पाभावस्य स्वरूपत्वात् । सुप्रतीत हि लोके अन्यस्य[5] कैवल्यमितरस्य वैकल्यं, स्वभावपरभावाभ्यां[6] भावाभावव्यवस्थितेर्भावस्य[7] । न हि वस्तुनः सर्वथा[8] भाव एव, स्वरूपेणेव पररूपेणापि भावप्रसङ्गात् । नाप्यभाव एवं, पररूपेणेव स्वरूपेणाप्यभावप्रसङ्गात् । न च स्वरूपेण भाव[9] एव पररूपेणाभावः, परात्मना चाभाव एव स्वात्मना भाव इति वक्तु युक्तं, तदपेक्षणीयनिमित्तभेदात्[10] । स्वात्मान[11] हि निमित्तमपेक्ष्य भावप्रत्ययमुपजनयति सर्वोर्थः, परात्मानं[12] त्वपेक्ष्याभावप्रत्ययम्[13] । इति एकत्वद्वित्वादिसंख्यावदेकत्र[14] वस्तुनि भावाभावयोर्भेदो व्यवतिष्ठते । न ह्येकत्र द्रव्ये द्रव्यान्तरमपेक्ष्य द्वित्वादिसंख्या प्रकाशमाना स्वात्ममात्रापेक्षैकत्वसंख्यातोनन्या[15] प्रतीयते । नापि सोभयी तद्वतो[16] भिन्नैव[17], तस्या[18]सङ्ख्येयत्वप्रसङ्गात्, सङ्ख्यासमवायादपि तथात्वासिद्धेः[19], समवायस्य[20][21] तदसंबन्धात् तस्य[22] स्वसमवायिसंबन्धकल्पनायामप्यनवस्थानुषङ्गात्[23] कथंचित्तादात्म्यमन्तरेण समवायासभवाच्च । तद्वन्न[24] भावाभावौ वस्तुनोन्यावेव, निस्स्वभावत्वप्रसक्तेः[25] । अथ सत्त्वासत्त्वाभ्यामन्यस्यापि वस्तुनो द्रव्यत्वादिस्वभावसद्भावान्न निःस्वभावत्वमिति मतं[26] तदप्यसाधीयो, द्रव्यत्वाद्रव्यत्वाभ्यामपि तस्यान्यत्वात्[27] । ताभ्यामनन्यत्वे कथंचिद्भावाभावाभ्यामप्यनन्यत्वसिद्धेः स्वभावपरभावाभ्यां वस्तुनो भावाभावव्यवस्थितिः[28] किं न स्याद्यतः खे पुष्पाभावोभिलाप्यो वस्त्वेव न भवेत् ? इति निरवद्यमुदाहरणम् ।

किं च क्षणिकैकान्तवादिनाम्,—

सर्वान्ताश्चेदवक्तव्यास्तेषां[29] किं वचनं पुनः ।
संवृतिश्चेन्[30]मृषैवैषां[31] परमार्थविपर्ययात् ॥ ४९ ॥

परेषां सर्वे धर्मा यद्यवक्तव्या एव तदा तेषां किं पुनर्वचनं धर्मदेशनारूपं परार्थानुमानलक्षणं साधनदूषणवचनं वा ? न किंचित् स्यादिति मौनमेव शरणम् । यदि पुनः संवृतिरूपं वचनमुपगम्यते तदापि मृषैव संवृतिरेषाभ्युपगन्तव्या, परमार्थविपर्ययरूपत्वात्तस्याः । इति तत्त्वतः[32] किं वचनं स्यात्[33] ? पुनरप्यवक्तव्यवादिनं[34] पर्यनुयुञ्ज्महे[35], सर्वे धर्मा यदि वाग्गोचरातीताः कथमिमेऽभिलप्यन्ते[36] ? इति, स्ववचनविरोधानुषङ्गात् सर्वदा मौनव्रतिकोहमिति प्रतिपादयन्त[37] इव परान् । संवृत्या चेत्सर्वे धर्मा इत्यव-

---

१ येन कुतो विरुध्यते ? अपि तु न विरुध्यते । २ अविरुद्धत्वादेव । ३ शून्यम् । ४ स्याद्वाद्यभ्युपगतोऽभाव· पक्षो, वस्तु भवतीति साध्यो धर्म । अभिलाप्यत्वादिति हेतु । यत्पुनरभिलाप्यं तद्वस्तु यथा खपुष्पाभाव· । अभिलाप्यं चेद तस्माद्वस्तु । अत्राभावस्य वस्तुत्वव्यवस्थापकानुमाने खपुष्पाभाव इति दृष्टान्त· । 'खपुष्पम्' इतिकपुस्तके । ५ अन्यस्य, खस्य केवलत्व ( शुद्धत्वम् ) मितरस्य, पुष्पस्य वैकल्यमिति लोके प्रसिद्धम् । ६ अर्थे स्वरूपेण भावो व्यवतिष्ठते पररूपेण चाभाव । ७ ( अर्थस्य ) । ८ सर्वथा । ९ य स्वरूपेण भावः स एव पररूपेणाभाव इति बौद्धमतम् । १० तयोर्भावाभावयो । अपेक्षणीयनिमित्तमाश्रित्य तयोर्भेदात् । ( निमित्तभेदाद्धि नैमित्तिकभेद ) । ११ स्वद्रव्यादिस्वरूपम् । १२ परद्रव्यादिचतुष्टयम् । १३ नास्तित्वज्ञानम् । १४ यथैकवस्तुन्येकत्वद्वित्वादिसंख्याया परद्रव्यादिनिमित्तमपेक्ष्य भेद । १५ द्वित्वादिसंख्या एकत्वादिभ्योऽभेदरूपा न प्रतीयते किं तु भिन्नैव । १६ सङ्ख्यावतो वस्तुन । १७ भिन्ना चेत्तर्हीति शेष । १८ संख्यावतो वस्तुन । १९ संख्या संख्यावतो भिन्नैवेत्यस्यासिद्धे । (सङ्ख्येयत्वासभवाद्वा)। २० कुतोऽसिद्धिरित्याह । २१ तत्र, समवायिनि । २२ समवायस्य । २३ वस्तुन्येकत्वादिसङ्ख्या समवायसंबन्धेन स्थितेति चेत्तर्हि समवायो वस्तुनि केन सबन्धेन स्थितः? समवायित्वमपि समवायित्वेनेत्यनवस्था । २४ संख्यावत· संख्या न भिन्ना यथा । २५ वस्तुन । २६ बौद्धस्य । २७ वस्तुन· । २८ भावाभावात्मकतासिद्धि । २९ सौगतानाम् । ३० वचनाभ्युपगम· संवृतिरूपश्चेत् । ३१ एषा संवृति । ३२ परमार्थत । ३३ अपि तु न किंचित् स्यात् । ३४ बौद्धम् । ३५ पूर्वपक्ष कुर्महे । ३६ सर्वे धर्मा अवक्तव्या इति कथमुच्यते ? । ३७ पुंसो । यथा स्ववचनविरोध· ।

क्तव्या इति चाभिलप्यन्ते भवद्भिर्न[1], विकल्पा[2]नुपपत्तेः। सं[3]वृत्येति हि स्वरूपेण पररूपेणोभयरूपेण वा तत्त्वेन मृषात्वेनेति वा विकल्पेषु नोपपद्य[4]न्ते । तत्र संवृत्या वक्तव्या इ[5]ति स्वरूपेण चेत्कथमनभिलाप्याः ? स्वरूपेणाभिलाप्यानामनभिलाप्यत्वविरोधात् । पररूपे[6]ण चे[7]त्तत्तेषां स्वरूपं स्याद्येनाभिला[8]प्याः । के[9]वलं वाचः स्खलनं गम्येत गोत्र[10]स्खलनवत् स्वरूपेणेति वक्तव्ये पररूपेणेति वचनात्, विशेष[11]रूपवत् सामान्यरूपस्यापि वक्तव्यतयाङ्गीक्रियमाणस्य [12]स्वरूपत्वात्, [13]तस्यास्वरूपत्वे विशेषरूपस्याप्यस्वरूपत्वापत्तेः स्वयं निः[14]स्वरूपत्वप्रसङ्गात् । [15]उभयपक्षेप्युभयदोषानुषङ्गः । [16]तत्त्वेन चेत्कथमवक्तव्याः ? केवलं वचःस्खलनं गम्येत, तत्त्वेन वक्तव्या इति वचने प्रस्तुते संवृत्या वक्तव्या इति वचनप्रवृत्तेः। मृषात्वेन चेत्कथमुक्ता[17]ः ? सर्वथा मृषोक्तानामनुक्तसमत्वात् । तदलमप्रतिष्ठित[18]मिथ्याविकल्पौघैः, [19]सर्वथानभिलाप्यानां सर्वधर्माणामनभिलाप्या इति वचनेनाप्यभिलाप्यत्वासंभवात्तथा परप्रत्यायनायोगात् ।

किंचेदं[20] तत्त्वम्,—

अशक्यत्वा[21]दवाच्यं किमभावात्किमबोधतः ।
आद्यन्तोक्तिद्वयं न स्यात् किं[22] व्याजेनोच्यतां स्फुटम् ॥ ५० ॥

अर्थस्यानभिलाप्यत्वमभावाद्वक्तुरशक्तेरनवबोधाद्वा? प्रकारान्तरासंभवात्। [23]ननु च मौनव्रतात्प्रयोजनाभावाद्भयाल्लज्जादेर्वाऽनभिलाप्यत्वसिद्धेः कथं प्रकारान्तरासंभव इति चेन्न,मौनव्रतादीनामशक्यत्वेन्तर्भावात् तेषां[24] [25]करणव्यापाराशक्तिनिमित्तत्वा[26]च्च । [27]न चैवमनवबोध[28]स्ततः प्रकारान्तरं न स्यात् तत्त्वावबोधे सति करणव्यापाराशक्तावप्यन्तर्जल्प[29]संभवात् । तत्त्वावबोधाभावेपि च करणव्यापारशक्तिसद्भावा[30]त् । अनवबोधाशक्यत्वयोरिह बुद्धिकरणपाटवापेक्षत्वात् प्रकारान्तरत्वमेव । न च [31]सर्वत्र तदभावो[32] युक्तः, [33]कस्यचि[34]त्क्वचिदवबोधसद्भावात् सुगतस्य प्रज्ञापारमितत्वात् क्षमामैत्रीध्यानदानवीर्यशीलप्रज्ञाकरुणोपायप्रमोदलक्षणदशबलत्वोपगमाच्च [35]कस्यचिदेव करणापाटवात् । [36]तदनेनाशक्यत्वानवबोधवचनलक्षणस्याद्यन्तोक्तिद्वयस्यासंभवो व्याख्यातः । [37]सामर्थ्यादर्थस्याभावादेवावाच्यत्वमिति किं व्याजेनावक्तव्यं तत्त्वमिति वचनरूपेण ? स्फुटमभिधीय[38]तां सर्वथार्थाभाव इति, तथा वचने वञ्चकत्वायोगादन्यथानाप्तत्वप्रस[39]क्तेः । ततो

१ ( न, इति चेन्नेत्यर्थः ) । २ वक्ष्यमाणविकल्पेष्वनुपपत्ते । कस्या ? संवृते. । ३ हे सौगत, त्वया पुन:पुनः संवृतिः कथ्यते । सा का ? सवृत्या इत्युक्ते संवृतिः स्वरूपा, पररूपा, उभयरूपा, तत्त्वरूपा, मृषारूपा वा स्यात् ? । ४ एतेषु अर्थेषु संवृतिर्नोपपद्यते । ५ इति, इत्यत्र वचने स्वरूपेण वक्तव्या इति पक्ष आश्रियेत चेत्तर्हि ते पदार्थाः कथमनभिलाप्या. ? । ६ द्वितीयपक्षश्चेत्तर्हीत्यर्थ । ७ तत, पररूपम् । तेषा, धर्माणाम् । ८ धर्मा । ९ केवलमत्र । १० गोत्रं, नाम । ११ ननु स्वरूप विशेषरूपमेव पररूपं तु सामान्यरूपमेव । ततश्च विशेषरूपेणावक्तव्यत्वसद्भावात्कथं वाच.स्खलनं गम्येत सामान्येनाभिलाप्यत्वे सति ? इत्याह । विशेष परमाणुलक्षणः । १२ यथा विशेषरूप वस्तुन: स्वरूपं तथा सामान्यरूपमपि । १३ सामान्यस्य । १४ ततश्च सर्वधर्माणा स्वपररूपाभावान्नि:स्वरूपत्वप्रसङ्ग इति भाव: । १५ संवृत्या इत्युक्ते उभयरूपेणेति पक्षेपि । १६ संवृतिस्तत्त्वरूपा इति चतुर्थपक्षे इत्यर्थः । १७ सर्वे धर्मा इति अवक्तव्या इति च । १८ ( दूषणसद्भावादप्रतिष्ठा । ) १९ सर्वे धर्मा अवक्तव्या इति चाभिलप्यन्ते इत्यस्मिन् पक्षे दूषणमाह । २० हे सौगत । २१ वक्तुरशक्ते । २२ किंवा मिषेण ? । २३ सौगतशङ्का । २४ मौनव्रतादीनाम् । २५ ( इन्द्रियं ताल्वादि च करणम् ) । २६ च, एवकारार्थे । २७ अनवबोधाशक्यत्वयोरेककारणपूर्वकत्वेनवबोधस्याशक्यत्वेन्तर्भावः स्यादित्युक्ते आह जैन. । २८ अशक्यत्वत । २९ अनेन व्यतिरेकाभावो दर्शितः । ३० अनेनान्वयाभावो दर्शित । ३१ पुरुषेषु । ३२ तयोः, बुद्धिकरणपाटवयो. । ३३ पुरुषस्य । ३४ प्रस्तावे । ३५ न तु सर्वस्य । ३६ तत् तस्मात्, सर्वत्रावबोधशक्यत्वयोरभावो युक्तो न भवति यस्मात् । ३७ इति हेतोरशक्यत्वादनवबोधादिति च हेतुद्वयेन वस्तुनोऽवाच्यत्वं न सभवतीति सामर्थ्यात्, पारिशेष्यात् । ३८ युष्माभिः ( सौगतै ) । ३९ सुगतस्य ।

**नैरात्म्यान्न विशेष्येत[1], मध्यम[2]पक्षावलम्बनात्।** को ह्यत्र विशेषोर्थस्याभावादवाच्यत्वं नैरात्म्यमिति च ? **अशक्यसमय[3]त्वादनभिलाप्यमर्थरूपमिति चेन्न, क[4]थंचिच्छक्यसंकेतत्वात्। दृ[5]श्यविकल्प्यस्वभावत्वात्परमार्थस्य प्रतिभासभेदेपीत्युक्त[6]म्।** न हि दृश्यस्वभाव एव परमार्थो न पुनर्विकल्प्यस्वभावः सामान्यं, विशेषवत्सामान्यस्यापि वस्तुरूपत्वसाधनादन्यथा प्रतीत्यभावात् सामान्यविशेषात्मनो जात्यन्तरस्य प्रत्यक्षादौ प्रति[7]भासनाच्च। न[8] चैवं दृश्यलक्षणेषु सङ्केतकरणाशक्तावपि विकल्प्ये सामान्ये क्वचिदशक्यसङ्केतत्वं येनाशक्यसमयत्वादनभिलाप्यमर्थ[9]रूप भवेत्, कथचिच्छक्यसङ्केतत्वसिद्धेः। स्या[10]न्मतं 'सङ्केतितार्थस्य शब्दविषयस्य व्यवहार[11]काले[12]ननुगमनाद्विषयिणः शब्दस्य न तद्वाचकत्वमन्यथातिप्र[13]सङ्गात्' इति, **तदेतद्विष[14]यविषयिणोर्भिन्नकालत्वं प्रत्यक्षेपि समानं,** शब्दविकल्पका[15]लवत् प्रत्यक्षप्रतिभासकालेपि विषयस्या[16]संभवात्, सभवे वा क्षणिकत्वविरोधाद्वेद्यवेद[17]कयोः समानसमयत्वप्रसङ्गाच्च। अ[18]थ भिन्नकालत्वेपि विषयात्प्रत्यक्षस्याविपरीतप्रतिपत्तिः[19], अन्यत्रापि सो[20]ऽस्त्येव। न हि शब्दादर्थं परिच्छेद्य प्रवर्तमानो विपरीतं प्रतिपद्यते प्रत्यक्षा[21]दिव प्रतिपत्ता, येन दर्शने एवाविपरीतप्रतिपत्तिर्भवति न पुनः शाब्देपीति बु[22]ध्यामहे। क्वचिद्विकल्पे विपरीतप्रतिपत्तिमुपलभ्य सर्वत्र विपरीतप्रतिपत्तिकल्पनायां क[23]चिद्दर्शनेपि विपरीतप्रतिपत्तिं समीक्ष्य स[24]र्वत्र तत्कल्पनास्तु, विशेषा[25]भावात्। **द[26]र्शनविकल्पयोः परमार्थै[27]कतानत्वाभावे न किंचित्सि[28]द्धम्। दृ[29]ष्टस्यानिर्णयाददृ[30]ष्टकल्पनाद दृष्टनिर्णयस्य प्रधाना[31]दिविकल्पाविशेषात् कु[32]तो दर्शनस्य** कल्पनापोढस्यापि परमार्थैकतानत्वम् ? न हि दृष्टे स्वलक्षणे निर्णयः[33] संभवति, त[34]स्य त[35]दविषयत्वात्। अ[36]दृष्टे तु सामान्य[37]लक्षणे निर्णयः प्रवर्तमानो न प्रधानादिविकल्पाद्विशेष्यते। इति सकलप्रमाणाभावात्प्रमेयाभावसिद्धेरवक्तव्यतैकान्तवादिनां नैरात्म्यमेवायातं, सर्वथाप्यशक्यसमयत्वेनाप्यशक्यत्वपक्षस्यासंभवादनवबोधपक्षवदभावस्यैव निर्व्याजत्वसिद्धेः। ततः क्षणक्षयैकान्तपक्षे कृतना[38]शाकृताभ्यागमप्रसङ्गः। स चोपहासास्पदमेव स्यात्। तथा हि।

**हिनस्त्यनभि[39]सन्धात्‌ न हिनस्त्यभिसंधि[40]मत्।**
**बध्यते तद्द्व[41]यापेतं चित्तं बद्धं न मुच्यते ॥ ५१ ॥**

हिंसाभिसंधिमच्चित्तं न हिनस्त्येव प्राणिनं, तस्य निरन्वयनाशात् संता[42]नस्य वासनायाश्चासंभ[43]वात्। अनभिसन्धिमदेवोत्तरं चित्तं हिनस्ति। तत एव हिंसाभिसन्धिहिंसाचित्तद्वया[44]दपेतं चित्तं बध्यते। यच्च

१ बौद्धमतम्। २ अभावपक्षावलम्बनात्। ३ समय, सङ्केत। ४ सामान्यरूपेण। ५ निर्विकल्पकज्ञानग्राह्योर्थो दृश्य॰। विकल्पज्ञानग्राह्यो घटपटादिर्विकल्प्य। ६ विरोधान्नोभयैकात्म्यमिति कारिकाया अपरार्द्धव्याख्यानावसरे प्रथमपरिच्छेदे। ७ सामान्यविशेषयोर्वस्तुरूपाविशेषात्। ८ दृश्यवद्विकल्प्येपि सङ्केतो न भविष्यतीत्याशङ्कायामाह। ९ अर्थस्य। १० बौद्धस्य। ११ घटमानयेत्यादौ। १२ अन्वयाभावात्। १३ अतीतार्थानामपि विवक्षितशब्दवाच्यत्वप्रसङ्गात्। १४ ( विषयोर्थं। विषयी तु शब्दो बोधो वा कश्चित् )। १५ यथा शब्दविकल्पकाले शब्दविषयो नास्ति। १६ क्षणिकविषयस्य। १७ ज्ञेयज्ञानयो कार्यकारणयो। १८ सौगत. क्षणिकत्वेपि विरोध परिहरन्नाह। १९ शब्देपि। २० अविपरीतप्रतिपत्ति। २१ यथा प्रत्यक्षादर्थं परिच्छेद्य प्रतिपत्ता प्रवर्तमानो हि विपरीतं न प्रतिपद्यते। २२ वय जैना। २३ शुक्तिकाशकले रजतविषयदर्शने। २४ सत्यज्ञाने। २५ दर्शनविकल्प( शब्द )यो। २६ दर्शनविकल्पयोर्भिन्नविषयत्वेधिकदूषणमाह। २७ एकलोलीभावाभावे। २८ अन्तर्वहिस्तत्त्वम्। २९ निर्विकल्पकप्रत्यक्षविषयीकृतस्य स्वलक्षणस्य। ३० अदृष्टं सामान्यम्। ३१ आदिपदेनेश्वरादि। ३२ प्रमाणात्। ३३ विकल्पज्ञानम्। ३४ निर्णयस्य। ३५ ( तत्शब्देन स्वलक्षणम्, )। ३६ निर्विकल्पकप्रत्यक्षाविषयीकृते। ३७ स्थिरस्थूले घटपटादौ। ३८ येन कृतं स न भोक्ता, येन न कृतं तस्य भोक्तृत्वाभ्यागम। ३९ हिंसाभिप्रायरहितं चित्तम्। ४० हिंसाभिप्रायसहितम्। ४१ हिंसाऽहिंसाभिप्रायरहितम्। ४२ सतानो वासना च॰स्त। तयो सद्भावे नेदं दूषणमित्युक्ते आह। ४३ अनन्तरमेवैतयोर्निराकरणात्। ४४ हिंसकाहिंसकचित्तद्वयादपेतं तृतीयं चित्तम्।

बद्धं तन्न मुच्यते, ततोन्यस्य मुक्तेः। इति[1] कोन्यः[2] प्रकाशयेन्निरन्वयात्[3] तस्यैवम्[4] संतानादेरयोगादिति-कर्तव्यतासु चिकीर्षोर्[5] विनाशात् कर्तुर[6] चिकीर्षुत्वात् तदुभय[7] विनिर्मुक्तस्य बन्धात्तद्[8] विनिर्मुक्तेश्च यम-नियमादेरविधेयत्वं[9], कुर्वतो[10] वा यत्किंचनकारित्वं प्रत्येतव्यम्[11]। न चैवमनेकान्तवादिनः, प्रतिक्षणं परि-णामान्यत्वेपि जीवद्रव्यस्यान्वयात् चिकीर्षोरेवेतिकर्तव्यतासु कर्तृत्वात्कर्तुरेव च कर्मबन्धाद्बद्धस्यैव विनिर्मुक्तेः सर्वथा विरोधाभावात्। क्षणिकवादिनामपि संतानस्यैकत्वात्पूर्वपूर्ववासनोपहितोत्तरोत्तरचित्तविशेषस्योत्पत्ते-रनुपालम्भ इति चेन्न, संतानस्यावास्तवत्वाद्वास्यवासकभावस्याप्यसंभवादव्यभिचारकार्यकारणभावस्यापि तन्नियमहेतुत्वायोगात् सुगतेतर[12]चित्तसंतानेष्वपि भावादिति निरूपितत्वात्[13] क्षणिकैकान्तवादिनाम्। किञ्च

अहेतुकत्वान्नाशस्य[14] हिंसाहेतुर्न हिंसकः।
चित्तसंततिनाशश्च मोक्षो नाष्टाङ्गहेतुकः ॥ ५२ ॥

सर्वथाप्यहेतुं विनाशमभ्युपगम्य कस्यचिद्यदि हिंसकत्वं ब्रूयात् कथमविक्लवः ? तथा निर्वाणं संतानसमूलतलप्रहाणलक्षणं सम्यक्त्वसंज्ञासंज्ञिवाक्कायकर्मान्तर्व्यायामाऽजीवस्मृति-समाधि[15]लक्षणाष्टाङ्गहेतुकं यदि ब्रूयात्तदापि कथं स्वस्थः ? तयोरहेतुकविनाशाभ्युपगमहिंसकत्वयोरष्टाङ्गहे-तुकत्वनिर्वाणवचनयोश्चान्योन्यं विप्रतिषेधात्[16] सुगतस्य सर्वज्ञत्वेतरवत्।

विरूपकार्यारम्भाय यदि हेतुसमागमः[17]।
आश्रयिभ्याम्[18]अनन्योसावविशेषाद्[19]युक्तवत्[20] ॥ ५३ ॥

विसदृशरूपं[21] विरूपं कार्यम्। तदारम्भाय हिंसाहेतोर्वधकस्य मोक्षहेतोश्चाष्टाङ्गस्य सम्यक्त्वादेः समा-गमो व्यापारो यदि ताथागतैरिष्यते तदासौ[22] हेतुसमागम एवाश्रयो, नाशोत्पादयोः[23] कारणत्वात्। स चाश्रयिभ्यां कार्यरूपाभ्यां नाशोत्पादाभ्यामनन्य[24] एव, न पुनर्भिन्नः, तयोरविशेषाद्[25]युक्तवत्[26]। यथैव[27] हि शिंशपात्ववृक्षत्वयोश्चित्रज्ञाननीलादिनिर्भासयोर्वा तादात्म्यमापन्नयोरयुक्तयोः कारणसन्निपातो न भिन्नः संभवत्येककारणकलापादेवात्मलाभादन्यथा[28] तादात्म्यविरोधात्। तथैव पूर्वाकारविनाशोत्तराकारोत्पादयोरपि,

१ एतत्। २ वसः। सौगतादित्यर्थः। ३ तस्य, बद्धस्य एवं मुक्त्यभावप्रकाशनप्रकारेण। ४ नियमेन कर्तव्यता इति-कर्तव्यता। ५ प्रथमचित्तक्षणस्य। ६ अग्रेतनस्य क्षणस्य। ७ (चिकीर्षुरचिकीर्षुश्चेत्युभयम्) तदुभयाद्विनिर्मुक्तस्तृतीयश्चित्त-क्षणः। तस्य। ८ तस्य, बद्धस्य। ९ निष्फलत्वात्। १० परिणामस्य। ११ सौगतस्य यमनियमाकरणीयत्वं कुर्वतो यत्किं-चनकारित्वं वा कुतः ? नियमेन कर्तव्यतासु चिकीर्षोः क्षणस्य विनाशात्। विनाशेपि नियमेनाकरणीयत्वं कुतः ? कर्तुर्द्वितीयक्षणस्याचिकीर्षुत्वात्। अचिकीर्षुत्वेपि यमादेरकरणीयत्व कुत ? चिकीर्षुः कर्तेति यदुभयं तद्विनिर्मुक्तस्य तृतीयस्य बद्धत्वात्। तद्बन्धेप्यकरणीयत्वं कुत. ? बद्धस्य विनिर्मुक्तेरभावाच्चेति संबन्ध। १२ इतरचित्तक्षणेभ्य. सुगतज्ञानमुत्पद्यते यतः। १३ सन्तानः समुदायश्चेति कारिकाव्याख्यानावसरे। १४ नाशः स्वयं जायते, न तु तं प्रति कस्यचिद्धेतुत्वमिति सौगतमतम्। १५ सम्यक्त्वं बुद्धधर्म.। संज्ञा रूपाद्यभिधानम्। संज्ञी रूपादिरेव। वाक्कायव्यापारस्तत्कर्म। अन्तर्व्यायामो वायुनिरोधः। अजीवो जीवाभावो नैरात्म्यम्। स्मृतिः पिटकत्रयार्थानुचिन्तनम्। ध्यानं समाधिः। १६ परस्पर विरोधात्। १७ तदेति शेषः। १८ नाशोत्पादाभ्याम्। १९ (हेतुव्यापारः)। २० नाशोत्पादयोरविशेषात् (अभेदात्)। २१ अपृथ-क्सिद्धवत्। २२ बौद्धमते सदृशं कार्यं नास्ति अन्वयाभावात्। २३ तर्ह्याश्रयः क. ? यतस्तयोराश्रयित्वं स्यादित्युक्ते आह। २४ आश्रयिणोः कार्यरूपयो.। २५ नाशोत्पादयोर्मध्ये य एव घटनाशस्य हेतुः स एव कपालोत्पादस्य। इत्येक एव हेतुस-मागम इति भाव.। तथा च बौद्धाना नाशोपि सहेतुकः स्यादिति दूषणम्। २६ अभेदात्। २७ एतदेव विवृण्वन्ति। २८ भिन्नकारणजन्यत्वं चेत्तर्हि। २९ घटविनाश एव कपालोत्पादः। ३० कारणसन्निपातस्तु भिन्न.।

नीरूपस्य[1] [2]विनाशस्यानिष्टेरुत्तरोत्पादरूपत्वाभ्युपगमात् तयो[3]र्भिन्नकारणत्वे [4]तद्विरोधान्तर्तान्तरप्रवेशानुषङ्गा-च्च । सोयं विसदृशका[5]र्योत्पादहेतुव्यतिरिक्तहेत्वभावात् पूर्वाकारविनाशस्याहेतुकत्वमु[6]पयन्नाशहेतुव्यतिरिक्त-हेत्वभावादुत्तरो[7]त्पादस्याहेतुकत्वं [8]नानुमन्यते इति कथमनाकुलः ? । [9]विसभागसंतानोत्पादनाय हेतुस-न्निधिर्न प्र[10]ध्वंसाय, पूर्वस्य [11]स्वरसतो निवृत्तेरिति चेत् [12]स पुनरुत्तरोत्पादः स्वरसतः किन्न स्यात् ? तद्धेतो[13]र्ध्याकिंचित्करत्वसमर्थनाद्विनाशहेतुवत् । स्वरसोत्पन्नमपि तदनन्तरभावित्वात्तेन [14]व्यपदिश्यते इति चेदि[15]तरत्र समानम् । [16]कार्यक्षणवत्पूर्वक्षणप्र[17]ध्वंसस्यापि हेत्वन[18]न्तरभावित्वाविशेषात्तेन [19]व्यपदेशोस्तु, [20]न वा, कार्य[21]स्यापीत्यविशेषः । पर[22]मार्थतस्तदहेतुकत्वे प्रतिपत्रभि[23]प्रायाविशेषेपि स्वतः[24]प्रहाणवादी न शक्नोत्यात्मानं न्यायमार्गमनुकारयितुं, तथा वदतस्तस्य न्यायातिक्रमात् । न च निरन्वयविनाशवा-दिनः सभागवि[25]सभागविवेकः श्रेयान्, सर्वदा वि[26]रूपकार्यत्वात्, कारणस्य कथंचिदन्वया[27]पाये सभागप्र-त्ययायोगात् । सभागवि[28]सभागावक्लृप्तिं प्रतिपत्रभिप्रायवशात्समनु[29]गच्छन् सहेतुकं विनाशं [30]ततः किं नानुजानीयात् ? न च सम[31]नन्तरक्षणयोर्नाशोत्पादौ पृथग्भूतौ मिथः [32]स्वाश्रयतो वा यौ समं स-हेतुकेतरौ [33]स्तां, प्रति[34]पत्त्यभिधान[35]भेदेपि ग्राह्यग्राहकाकारवत्, स्वभावप्रति[36]बन्धात् । न हि [37]तयोर्मिथः कार्यकारणभावः प्रतिबन्धः, सम[38]समयत्वात् " नाशोत्पादौ [39]समं यद्वन्नामोन्नामौ तुलान्तयोः " इति वच-नात् । नापि [40]स्वाश्रयेण सह कार्यकारणभावः, समनन्तरस्व[41]लक्षणक्षणाभ्या नाशोत्पादयोरर्थान्तरत्वप्रसङ्गात् । [42]तयोस्तद्धर्मत्वाद्विशेषणविशे[43]ष्यभावः संबन्ध इति चेन्न, वैशेषिकमतसिद्धेः । [44]कल्पनारोपितत्वा[45]त्तयोर्न [46]तत्सि-द्धिरिति चेत्तर्हि पूर्वक्षणविनाशोनन्तरक्षणस्वभावस्त[47]दुत्पादश्चेति सिद्धः स्वभाव[48]प्रतिबन्धः । न चैवं प्रतिप-त्त्यभिधानभेदो विरुध्यते [49]संविदि ग्राह्यग्राहकाकारयोरपि तद्विरोधप्रसङ्गात् । ततस्तद्वत्तयोरभेद एव । संज्ञा[50]च्छन्दमतिस्मृत्यादिवत् सत्यपि भेदे समकालभा[51]विनोः कथं सहकारी पुनरन्य[52]तरस्यैव

---

१ विनाशस्य नीरूपत्वादेकहेतुत्वं कथमित्युक्ते दर्श्यते हेतु । २ विनाशस्य । ३ ( तस्य, उत्पादस्य विनाशस्य च ) । ४ भिन्नकारणवादी नैयायिकस्तस्य । ५ विसदृशकार्यं कपाल । तद्धेतुर्मुद्गरादि । ६ अभ्युपगच्छन् सौगत । ७ कपालमा-लोत्पादस्य । ८ किं तु सहेतुकत्वं मन्यते । ९ अत्राह सौगत । विसभागो विसदृश ( कपालमालाक्षणकार्यम् ) । १० प्रध्वसाय हेतुसन्निधिर्न । ११ स्वभावत । १२ कपालमालाक्षणरूप । १३ उत्तरोत्पादहेतोर्घटस्य । १४ तेन कारणे-न ( घटेन ) उत्पन्नमिति व्यपदिश्यते । १५ विनाशेपि । १६ कपाललक्षणस्येव । १७ घटप्रध्वंसस्य । १८ हेतुर्मुद्गरादि । १९ मुद्गरादिना विनाशो जात इति व्यपदेशोस्तु । २० न चेत्तर्हीत्यर्थ. । २१ कार्यस्यापि सहेतुकत्वव्यपदेशो न स्यात् । २२ परमार्थतो मया उभयोरपि नाशोत्पादयोर्निर्हेतुकत्वं स्वीक्रियते परन्तु प्रतिपन्नभिप्रायवशादुत्पत्ति सहेतुका कथ्यते इति सौगतेनोक्ते आहु । २३ उभयत्र नाशोत्पादयो । २४ प्रहाणस्तु स्वत एवेति वादी सौगत । २५ इदं कार्यं सदृश-मिदं च विसदृशमिति भेद । २६ सर्वदा विसदृशमेव कार्यं यतो बौद्धमते । २७ द्रव्यरूपेणाप्यन्वयाभावे । २८ सजातीय-विजातीयलक्षणक्षणकल्पनाम् । २९ स्वीकुर्वन् सौगत । ३० ( प्रतिपन्नभिप्रायवशात् ) । ( ३१ पूर्वोत्तरक्षणयो ) । ३२ ( युगपत्स्वयमेव स्वाश्रयतो वा न पृथग्भूतौ ) । ३३ ( अपि तु न सहेतुक एकोऽपरश्च निर्हेतुक इत्यर्थ ) । ३४ परस्परत स्वाश्रयतो वा किंवत् पृथग्भूतौ न स्तामित्याह । ३५ असौ ग्राह्योऽसौ च ग्राहक इति प्रतिपत्ति-भेद । एवमभिधानभेदोपि । ३६ तादात्म्यसंबन्धादित्यर्थ । ३७ नाशोत्पादयो. । ३८ नाशोत्पादयो । ३९ भवत । ४० स्वस्य नाशस्याश्रयो घट·, उत्पादस्य च कपालादि । ४१ घटकपालाभ्या क्रमरूपाभ्याम् । ४२ तयोर्नाशोत्पादयो. तद्धर्मत्वाद्, घटकपालधर्मत्वात् । ४३ घटस्य विनाश कपालस्योत्पाद इति च । नाशोत्पादौ विशेषणे घटकपालौ तु विशेष्यरूपावत्र । ४४ पुन सौगत । ४५ वैशेषिकाभ्युपगतयो स्वाश्रयाभ्यामर्थान्तरभूतयोर्नाशोत्पादयो । ४६ वैशेषि-कमतसिद्धि. । ४७ ( य एव पूर्वक्षणविनाश स एवोत्तरक्षणकपाल-स्वभाव स एव च तदुत्पाद ) । ४८ स्वभा-वस्तादात्म्यम् ) । ४९ एकज्ञाने । ५० संज्ञाछन्दादयो बौद्धापेक्षयोदाहरणम् । मतिस्मृत्यादयोस्तु जैनमतापेक्षया । क्रमपक्षे भेदपक्षे इमे द्वे उदाहरणे । ५१ तयोर्मध्ये कस्यचित् । ५२ ( समकालभाविनोर्मध्ये कपालोत्पादस्य हेतुरहेतुस्तु नाशस्येति च पुनः कथम् ? ) ।

हेतुरहेतुर्वा स्यात्, कार्य[1]रूपादेरिव कारणम्। संज्ञा हि प्रत्यभिज्ञा, छन्द इच्छा। ते[2]नादिशब्दयो[3]र्भे-यत्र संवन्धान्निदर्शनद्वयं वादिद्वया[4]पेक्षयोच्यते। संज्ञाछन्दा[5]दिर्व[6]न्मतिस्मृत्यादिवच्च क्रमभाविनोर्नाशोत्पादयोः सत्यपि भेदे समकालभाविनोस्त[7]योर्घटकपालाश्रययोरिव सहकारी मुद्गरादिः कथं कपालोत्पादस्यैव हेतुर्न पुनर्घटविनाशस्य, तस्यैव वासौ हेतुर्न तु कपालोत्पादस्य स्यात्? कार्यरूपादि[8]स्तवकस्यैकसामग्र्यधीनस्य कारणरूपादि[9]स्तवकवत्। यत[10]श्चैवं तस्मात्कार्य[11]कारणयोरुत्पादविनाशौ न सहेतुकाहेतुकौ सहभावाद्रसादिवत्। न हि कारणरसादि[12]कलापः कार्यस्य रसस्यैव हेतुर्न पुना रूपादेरिति प्रतीतिरस्ति, यतः साध्यशून्यो दृष्टान्तः स्यात्। नाप्यसहभावो रसादीनां, येन साधनविकलः। पुरुषधिषणाभ्यामनेकान्त इति चेन्न, सौगतानां पुरुषासिद्धेः। स्याद्वादिनां तु त[13]स्यापि सहेतुकत्वात् पर्यायार्थतो धिषणावत्, द्रव्यार्थतोऽहेतुकत्वाच्च धिष[14]णायाः पुरुषवन्न ता[15]भ्यां [16]हेतोर्व्यभिचारिता, कारणानन्तरं सहभावात्। इति प्रकरणसामर्थ्या[17]त्सविशेष[18]णस्य सहभावस्य हेतुत्वाद्वा न व्यभि[19]चारः स्यात्। न चैवमसिद्धं सा[20]धनं, मुद्गरादिव्यापारानन्तरं कार्योत्पादवत् कारणविनाशस्यापि प्रतीतेः, विनष्टो घट उत्पन्नानि कपालानीति व्यवहारद्वयसद्भावात्। ततः कार्योत्पादवत्कारणविनाशः सहेतुक एवाभ्यु[21]पेयः। ननु [22]हेतोर्न त[23]स्य किंचि[24]द्भवति, न भ[25]वत्येव केव[26]लमिति चेत्तर्हि का[27]रणात्का[28]र्यस्य न किंचिद्भवति, भ[29]वत्येव केवलमिति समानं विनाशवदुत्पादस्यापि निर्हेतुकत्वापत्तेः। तस्मादयं विनाशहेतु[30]र्भावमभावीकरोतीति न पुनरकिंचि[31]त्करः। कार्योत्पत्तिहेतु[32]र्वा यद्यभावं न भावीकुर्यात् [33]भावं करोतीति कृतस्य करणायोगादकिंचित्करः स्यात्, सर्वथा[34] भावं भा[35]वीकुर्वतो व्यापारवैफल्यात्। त[36]दत[37]त्का[38]रणादिविकल्पसंहतिरुभयत्र[39] सदृशी। यथैव हि विनाशहेतोः कुटस्य तदभिन्नविनाशकरणे तत्करणादकिंचित्करत्वं, तद्भिन्नविनाशकरणे च तदु[40]पलम्भप्रसक्तिः। तथोत्पादहेतोर्भावादभिन्नोत्पादकरणेप्यकिंचित्करता, सतः करणायोगात्। सर्वथाप्यसतो भावादभिन्नस्योत्पादस्य करणेपि न किंचित् कृतं स्यात् खपुष्पसौरभवत्। सतो[41]ऽसतो[42] वार्थान्तरस्य

---

१ कार्यस्वभावादेः। सहभावस्येदमुदाहरणम्। २ तेन कारणेन। ३ संज्ञाछन्दशब्दे मतिस्मृतिशब्दे च। ४ बौद्धजैनापेक्षया यथासंख्यम्। ५ सेयं स्त्रीत्यत्र प्रत्यभिज्ञानमिच्छायामुत्पन्नायां विनश्यतीति संज्ञाछन्दयोः क्रमभावित्वम्। ६ वत्शब्दोत्र भिन्नप्रक्रमे। तेनायमर्थः, संज्ञाछन्दायोर्मतिस्मृत्याद्यो क्रमभाविनोर्नाशोत्पादयोर्भेदे सत्यप्येकसहकारिकारणपूर्वकत्वं यथा तथा घटनाशकपालमालोत्पादयोः समकालवर्तिनोरप्येकसहकारिमुद्गरकारणकत्वमित्यर्थः। ७ नाशोत्पादयोः। ८ (आदिपदेन रसादिः) यस्य। ९ रूपरसादीनां (कार्यरूपाणां) मध्ये कारणरूपो रूपरसादिरेकस्य हेतुरितरस्य नेति च यथा। १० उत्पादविनाशयोः समकालवर्तिनोरपि एकसहकारिमुद्गरकारणपूर्वकत्वप्रतिपादनप्रकारेण। ११ कार्यं कपालमाला तस्या उत्पादः सहेतुको, मुद्गरादिजन्यः। कारणं घटः, तस्य विनाशोऽहेतुको, मुद्गरादिजन्यो नेति मतं निषेधयन्ति जैनाः। १२ पूर्वरसक्षण. कारणमुत्तरस्तु कार्यमिति बौद्धमतम्। १३ पुरुषस्य। १४ द्रव्यार्थतो धिषणापि पुरुषवदहेतुकेत्यर्थः। १५ पुरुषधिषणाभ्याम्। १६ सहभावादित्यस्य। १७ कार्यविचारप्रस्तावसामर्थ्यात्। १८ कारणानन्तरमिति विशेषणसहितस्य। १९ आत्मनो नित्यत्वेन कारणाभावादित्येवं यो व्यभिचारः। २० कारणानन्तरं सहभावादिति साधनम्। २१ सौगतैः। २२ मुद्गरात्। २३ कारणक्षणस्य। २४ विनाशरूपम्। २५ न भवतीत्यस्य नश्यतीत्यर्थः। स्वयं नश्यतीत्येव वा पाठान्तरम्। २६ स्वयमेव। २७ मुद्गरादेः। २८ कपालोत्पादस्य। २९ (किन्त्वित्यध्याहार। स्वयमेव कपाल उत्पद्यते इत्यपि स्यात्। तथा च बौद्धमतविरोधः कपालोत्पादस्य सहेतुकत्वाभिमननात्)। ३० घटलक्षण.। ३१ (कारणानन्तरं सहभावादिति हेतुः)। ३२ वा यथार्थे। यथा कार्योत्पत्तिहेतुरभावं (पर्यायरूपेणाविद्यमानं) भावीकरोति, न पुनरकिंचित्करस्तथा विनाशहेतुर्भावमभावीकरोति। ३३ (तर्हीति शेषः)। ३४ द्रव्यरूपेणेव पर्यायरूपेणापि। ३५ उत्पादकारणस्य। ३६ उत्पादकारणवैफल्यं किमर्थं प्रतिपाद्यते? यावता पूर्वं विद्यमानस्य कपाललक्षणस्य भावस्य मुद्गरादिकारणेन निष्पाद्यत्वं विद्यते एवेत्याशङ्क्याहुर्जैनाः। ३७ हे बौद्ध! यथा तव विनाशपक्षे तथोत्पादपक्षेपि। ३८ विनाशो घटादिभिन्नः क्रियतेऽभिन्नो वेति विकल्प्य दूषयन्ति जैनाः। ३९ नाशे उत्पादे च। ४० तस्य, कुटस्य। ४१ घटलक्षणात्। ४२ भावात्।

जन्मनः करणे तु न सदसद्वा कृतं स्यात्। एतेनै प्रागसतोनर्थान्तरस्यार्थान्तरस्य चोत्पादस्य हेतुनो करणे तस्याकिंचित्करत्वमुपदर्शितं प्रतिपत्तव्यं, प्रागसतोनन्यस्यै सत्त्वायोगात्, ततोन्यस्य सत एव करणे वैफल्यात्। ततो यदि न विनाशार्थो हेतुसमागमस्तदोत्पादार्थोपि मा भूत्, सर्वथा विशेषाभावात्।

किं च क्षणिकैकान्तवादिना परमाणवः क्षणा उत्पद्यन्ते स्कन्धसन्ततयो वा ? प्रथमपक्षे स्थाप्यस्थापकविनाश्यविनाशकभाववद्धेतुफलभावविरोधात्कुतः सहेतुकोत्पत्तिरहेतुका वा ? स्थितिविनाशवत्। द्वितीयपक्षे तु,—

स्कन्धसन्ततयश्चैव संवृतित्वादसंस्कृताः।
स्थित्युत्पत्तिव्ययास्तेषां न स्युः खरविषाणवत् ॥ ५४ ॥

साध्याभावासंभूष्णुताविरहाद्धेतोरन्यथानुपपत्तिरनिश्चितेति न मन्तव्यं, साध्याभावे तदभावप्रसिद्धेः सौगतस्य। तथा हि। रूपवेदनाविज्ञानसंज्ञासंस्कारस्कन्धसंततयोऽसंस्कृताः संवृतित्वात्, यत्पुनः संस्कृतं तत् परमार्थसत्, यथा स्वलक्षणं, न तथा स्कन्धसंततयः, इति साध्यव्यावृत्तौ हेतोर्व्यावृत्तिनिश्चयात्। खरविषाणादौ सावृतत्वस्यासस्कृतत्वेन व्याप्तस्य प्रतिपत्तेः सिद्धान्यथानुपपत्तिः। ततः स्थित्युत्पत्तिविपत्तिरहिताः प्रतिपाद्यन्ते। तथा हि। स्कन्धसन्ततयः स्थित्युत्पत्तिविपत्तिरहिता एवासस्कृतत्वात् खरविषाणवत्। क्षेणे स्थित्युत्पत्तिविपत्तिसहितस्य स्वलक्षणस्य सस्कृतत्वोपगमादन्यथानुपपत्तिसिद्धिः साधनस्य प्रत्येया। स्याद्वादिनामपि स्थित्युत्पत्तिविपत्तिर्मत कथचित् संस्कृतत्वसिद्धेर्न व्यभिचारः। सर्वथा स्थितिमतोऽसंस्कृतस्य च कस्यचिद्वस्तुनोनुपपत्तेश्च निरवद्योय हेतुः। ततो विसभागसंतानोत्पत्तये विनाशहेतुरिति पोप्लूयते, रूपादिस्कन्धसंततेरुत्पत्तिनिषेधात् तद्विनाशस्यापि खरविषाणवदसभवात्। तथा हि। स्कन्धसततयो विनाशरहिताः स्थित्युत्पत्तिरहितत्वात्। यत् पुनर्विनाशसहितं तन्न स्थित्युत्पत्तिरहितं, यथा स्वलक्षणम्। न तथा स्कन्धसंततयः। इति स्थित्युत्पत्तिव्यया न स्युस्तेषा स्कन्धाना खरविषाणवत्। तदभावे विरूपकार्यारम्भाय हेतुसमागम इति कथन्न सुतरा प्लवते ? ततो न क्षणिकैकान्तः श्रेयान्नित्यैकान्तवत्सर्वथा विचारासहत्वात्।

१ उत्पादस्य। २ नाशोत्पादयो स्वाश्रयाद्भिन्नाभिन्नकरणे दूषणगणप्रतिपादनेन। ३ कपालात्। ४ मुद्गरादिना। ५ कार्यात्। ६ उत्पादस्य। ७ उत्पादस्य। ८ विनाशकारक। ९ तदा, तर्हि। उत्पादकारक। १० हेतुसमागमो विरूपकार्यारम्भायेति पूर्वं सौगतेनोक्तत्वादयं प्रश्नोवसरप्राप्त एव। ११ पूर्वक्षण स्थापक उत्तरक्षु स्थाप्य। उत्तरक्षणो विनाशक पूर्वक्षु विनाश्य, यद्भावे कारणस्य नियता विपत्ति स प्रध्वंस इति वचनात्। १२ यथा परमाणूना स्थाप्यस्थापकादिभावो विरुध्यते तथा हेतुफलभावोपि विरुध्यते। कार्यकारणत्वाभावे एते स्थित्युत्पत्तिव्ययधर्मा विरुध्यन्ते निरशत्वात्परमाणूनाम्। न हेतुफलभावादिरन्यभावादनन्वयादिति कार्यकारणभावस्य प्रागेव निरस्तत्वाद्वा विरोधोवगन्तव्य। १३ स्थाप्यस्थापकाभावे स्थितेरभावो विनाश्यविनाशकाभावे च विनाशस्याप्यभावो यथा। १४ स्कन्धानाम्। १५ साध्याभावसद्भावादित्यर्थ। १६ सवृतित्वादित्यस्य। १७ साध्यं विना। १८ सौगतेन। १९ तस्य, हेतो। २० रूपरसगन्धस्पर्शपरमाणवः सजातीयविजातीयव्यावृत्ता परस्परासबद्धा रूपस्कन्धा। सुखदु खादयो वेदनास्कन्धा। सविकल्पकनिर्विकल्पकज्ञानभेदा विज्ञानस्कन्धा। वृक्षादिनामानि (शब्दा) सज्ञास्कन्धा। ज्ञानपुण्यपापवासना सस्कारस्कन्धा। २१ परमार्थसन्त। २२ साध्यमसस्कृतत्वं तद्व्यावृत्तौ हेतोरपि व्यावृत्ते। २३ स्कन्धसततय। २४ अपरमार्थरूपत्वात्। २५ स्थित्युत्पत्तिविपत्तिमतोपि असस्कृतत्वस्य विद्यमानत्वाद्व्यभिचारादसाधनमित्याशङ्कायामाह। २६ सस्कृतत्वं कार्यत्वम्। २७ स्थित्युत्पत्तिविपत्तिरहितत्वमन्तरेणासस्कृतत्वानुपपत्ति। कार्यरूपत्वं स्वलक्षणादौ स्थित्यादिना व्याप्त खरविषाणादौ त्वकार्यत्वं स्थित्यादिरहितमित्यन्यथानुपपत्तिसिद्धिरित्यर्थ। २८ पदार्थस्य। २९ असस्कृतत्वादिति। ३० असस्कृतत्वादेव। ३१ विसदृशकपाललक्षणस्य। ३२ मुद्गरादि। ३३ सौगतवचो न तिष्ठतीत्यर्थः। ३४ तथा, स्थित्युत्पत्तिसहिता। ३५ स्कन्धाभावे। ३६ विरूपकार्यं कपाललक्षणम्। ३७ सौगतीयं वच।

विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषाम् ।
अवाच्यतैकान्तेऽप्युक्तिर्नावाच्यमिति युज्यते ॥ ५५ ॥

नित्यत्वेतरैकान्तद्वयमप्ययुक्तमङ्गीकर्तुं, विरोधाद्युगपज्जीवितमरणवत् । तादात्म्ये हि नित्यत्वानित्यत्वयोर्नित्यत्वमेव स्यादनित्यत्वमेव वा । तथा च नोभयैकात्म्यं, विप्रतिषेधात् । नित्यत्वानित्यत्वाभ्यामत एवानभिलाप्यमित्ययुक्तं, तदेकान्तेऽनभिलाप्योक्तेरनुपपत्तेः, सर्वथानभिलाप्यं तत्त्वमित्यभिलपत एव वचनविरोधात् सदा मौनव्रतिकोहमित्यादिवत् ।

तदेवं नित्यत्वाद्येकान्तानुपपत्तौ सामर्थ्यात्तदनेकान्तसिद्धिप्रतिपादनेपि तत्त्वोपप्लववादिदुराशयविनाशनाय तत्प्रतिपत्तिदार्ढ्याय च स्याद्वादिवादन्यायानुसरणेन नित्यत्वाद्यनेकान्तमुपदर्शयन्ति सूरयः ।—

नित्यं तत्प्रत्यभिज्ञानान्नाकस्मात्तदविच्छिदा ।
क्षणिकं कालभेदात्ते बुद्ध्यसंचरदोषतः ॥ ५६ ॥

ते भगवतोर्हतः स्याद्वादन्यायनायकस्य सर्वं जीवादितत्त्वं स्यान्नित्यमेव प्रत्यभिज्ञायमानत्वात् । नाकस्मात्तत्प्रत्यभिज्ञानं तस्याविच्छेदेनानुभवात् । निर्विषयं हि प्रत्यभिज्ञानमकस्मादिति प्रसिद्धम् । यथा तादृशे तदेवेदमिति, तत्रैव वा तादृशमिदमिति भ्रान्तं प्रत्यभिज्ञानम् । न चैवं जीवादितत्त्वे प्रत्यभिज्ञानं, बाधकाभावात्तदविच्छेदात् । प्रत्यक्षं बाधकमिति चेन्न, तस्य वर्तमानपर्यायात्मकवस्तुविषयत्वात्, पूर्वापरपर्यायव्याप्येकत्वलक्षणे प्रत्यभिज्ञानविषये प्रवृत्त्यभावात् । न च स्वस्याविषये किंचिद्बाधकं साधकं वा श्रोत्रज्ञानविषये चक्षुर्ज्ञानवत् । तत एव नानुमानं, तस्यान्यापोहमात्रगोचरत्वात्तत्रैव साधकबाधकत्वोपपत्तेः । प्रमाणान्तरं तु नानुमानादप्रत्यक्षमिष्यते क्षणिकवादिभिर्यत्प्रत्यभिज्ञानस्य बाधकं स्यात् । इति सत्यप्रत्यभिज्ञानमेव वितथप्रत्यभिज्ञानस्य बाधकम् । सादृश्यप्रत्यभिज्ञानं सम्यगेवास्य जीवादावेकत्वप्रत्यभिज्ञानस्यानाद्यविद्योदयापादितस्य भ्रान्तस्य बाधकमिति चेन्न, अस्य भ्रान्तत्वासिद्धेः, सदृशापरापरोत्पत्त्यनिश्चयात् । ननु च यत्सत्तत्सर्वं क्षणिकमक्षणिके क्रमयौगपद्याभ्यामर्थक्रियाविरोधात्सत्त्वानुपपत्तेरित्यनुमानान्निरन्वयविनाशित्वसिद्धेर्जीवादिक्षणानामेकत्वासंभवात् सादृश्यप्रत्यभिज्ञानविषयत्वोपपत्तेर्भ्रान्तमेव तत्रैकत्वप्रत्यभिज्ञानं सिद्धमविसंवादाभावादिति चेन्न, अस्यानुमानस्य विरुद्धत्वात् । तथा हि । यत्सत् तत्सर्वं कथंचिन्नित्यं, सर्वथा क्षणिके क्रमयौगपद्याभ्यामर्थक्रियाविरोधात्सत्त्वानुपपत्तेरिति । अत्र

---

१ तर्ह्यवाच्यं तत्त्वमित्याशङ्क्याह । २ एकस्मिन्नेव सति युगपत्तदुभयैकात्म्यं विरुध्यते एव । ३ विरोधादेव । ४ सौगतस्य । ५ स्ववचनविरोधात् । ६ आदिपदेनानित्यत्वोभयात्मकत्वावाच्यत्वानि ग्राह्याणि । ७ कथंचिन्नित्यं कथंचिदनित्यं कथंचिदुभयमिति । ८ तत्त्वोपप्लववादी, शून्यवादी । ९ तस्यानेकान्तस्य । १० तस्य, जीवादिवस्तुनः । ११ तत्, प्रत्यभिज्ञानमकस्मात्, कारणमन्तरा न भवति, तस्याविच्छेदेन ( स एवायमित्येवम् ) अनुभवात् । १२ अविच्छिदा इति तृतीयान्तं प्रथमान्तं वा ज्ञेयम् । प्रत्यभिज्ञानं भवतु नित्यत्वं च मा भूदिति सन्दिग्धानैकान्तिकत्वे सति नाकस्मादिति सबन्धनीयम् । १३ क्षणिकत्वसाधकमिदमनुमानम् । १४ परिणामवशात् । १५ अन्यथेति शेषः । १६ बुद्धेरसंचारोऽन्यत्राऽगमनं, स एव दोषो यतः । १७ बाधारहितत्वेन । । १८ नित्यत्वलक्षणकारणं विना । १९ तदेवेदमित्यत्र । २० भ्रान्तम् । २१ तस्य प्रत्यभिज्ञानस्य । २२ प्रत्यक्षस्य । २३ अगोव्यावृत्तिर्गौरित्येवमन्यापोहरूपं वस्तु बौद्धमते । २४ अन्यापोहमात्रे । २५ अनुमानादन्यत् परोक्षं प्रमाणान्तरं नेष्यते । २६ आह सौगतः । २७ जैनो ब्रूते । २८ एकत्वप्रत्यभिज्ञानस्य । २९ कुतस्तथा हि । ३० जीवादौ । ३१ अर्थक्रियाविरोधात् सत्त्वानुपपत्तिः । ३२ एकत्वप्रत्यभिज्ञानस्य ( किं तु विसंवादरूपत्वादेवेत्यर्थः )। ३३ बौद्धोक्तस्य । ३४ सर्वं वस्तु कथंचिन्नित्यं सत्त्वादित्युपरिष्टाज्ज्ञेयम् ।

न तावद्धेतोरनैकान्तिकत्वं, सर्वथा नित्यत्वे सत्त्वस्याभावात् सर्वथा क्षणिकत्ववत्। तदभावश्च क्रमाक्रमानुपपत्तेः। तदनुपपत्तिश्च पूर्वापरस्वभावत्यागोपादानान्वितरूपाभावात् सकृदनेकशक्त्यात्मकत्वाभावाच्च। न हि कूटस्थेर्थे पूर्वोत्तरस्वभावत्यागोपादाने स्तः, क्षणिके वान्वित रूपमस्ति, यतः क्रमः कालकृतो देशकृतो वा स्यात्। नापि युगपदनेकस्वभावत्वं, यतो यौगपद्यं, कौटस्थ्यविरोधान्निरन्वयक्षणिकत्वव्याघाताच्च। सहकारिक्रमाक्रमापेक्षायां तत्र क्रमयौगपद्यकल्पनापि न साधीयसी स्वयं तदपेक्षा क्रमेतरस्वभावत्वाभावे तदनुपपत्तेः। तत्कार्याणां तदपेक्षा, न पुनर्नित्यस्य क्षणिकस्य वेत्यपि न श्रेयान्, तेषां तदकार्यत्वप्रसङ्गात्। तत्सहितेभ्यः सहकारिभ्यः कार्याणामुत्पत्तेरन्यथानुत्पत्तेस्तत्कार्यत्वनिर्णय इति चेत्तर्हि येन स्वभावेनैकेन सहकारिणा सहभावस्तेनैव सर्वसहकारिणा यदि तस्य स्याच्चदैकक्कार्यकरणे सर्वकार्यकरणात्क्रमकार्यानुपपत्तिः, सहकार्यन्तराभावेपि च तत्सहभावात्सकृदेव सकलकार्योत्पत्तिः प्रसज्येत। स्वभावान्तरैः सह कार्यान्तरसहभावे तस्य क्रमाक्रमवृत्त्यनेकस्वभावत्वसिद्धेः कुतो नित्यमेकस्वभाव क्षणिकं वा वस्तु क्रमयौगपद्ययोर्व्यापक स्यात्? कथंचिन्नित्यस्यैव क्रमाक्रमानेकस्वभावस्य तद्व्यापकत्वप्रतीतेः। एतेन विपक्षे हेतोर्बाधकस्य व्यापकानुपलम्भस्य व्यतिरेकनिश्चयः कथंचिन्नित्ये प्रत्यक्षप्रवृत्तेः प्रदर्शितः प्रत्येयः। ततः सत्त्वं कथंचिन्नित्यमेव साधयतीति विरुद्धत्वान्न प्रत्यभिज्ञानविषयस्यैकत्वस्यापहारकं, येन सादृश्यविषयत्वात्तस्य बाधकं सिध्यद्भ्रान्ततां साधयेत्।

ननु चेदं प्रत्यभिज्ञानं नैकं प्रमाणं, तदित्युल्लेखस्य प्रत्ययस्य स्मरणत्वादिदमित्युल्लखस्य च प्रत्यक्षत्वात्। न चैताभ्यां प्रत्ययविशेषाभ्यामतीतवर्तमानविशेषमात्रगोचराभ्यामन्यत् संवेदनमेकत्वपरामर्शि समनुभूयते, यत्प्रत्यभिज्ञानं नाम प्रमाणं स्यान्नित्यत्वस्य साधकम्। अतः स्वरूपासिद्धो हेतुरिति कश्चित्, सोपि प्रतीत्यपलापी, पूर्वोत्तरविवर्तस्मरणदर्शनाभ्यामुपजनितस्य तदेकत्वसंकलनज्ञानस्य प्रत्यभिज्ञानत्वेन संवेद्यमानस्य सुप्रतीतत्वात्। न हि स्मरणमेव पूर्वोत्तरविवर्तयोरेकत्वं संकलयितुमलम्। नापि दर्शनमेव। तदुभयसंस्कारजनितं विकल्पज्ञानं तत् संकलयतीति चेत् तदेव प्रत्यभिज्ञानं सिद्धम्। न च तदकस्मादेव भवतीति निर्विषयं, बुद्ध्यसंचरदोषात्। न हि प्रत्यभिज्ञानविषयस्याविच्छिन्नस्य नित्यत्वस्याभावे बुद्धेः

---

१ तस्य, सत्त्वस्य। २ सर्वथा नित्ये क्षणिके च। ३ सर्वथा नित्ये क्षणिके वा। ४ सर्वथा नित्ये क्षणिके वा। ५ स्यादिति शेषः। ६ अनेकस्वभावत्वे स्वीकृते कौटस्थ्यविरोध.। ७ यथा युगपदनेकस्वभावत्वमेकस्य क्षणिकस्य तथा क्रमेणाप्यनेकस्वभावत्वं स्यात्तस्तत्र क्षणिकत्वव्याघात। ८ नित्यक्षणिकयो पक्षयो कार्याणाम्। ९ सहकारिकारणापेक्षया क्रमाक्रमस्वभावत्वं यदि तदा क्षणिकनित्यत्वव्याघात। १० नित्ये क्षणिके च। ११ नित्यस्य क्षणिकस्य। १२ सहकार्यपेक्षा। १३ तस्य, क्रमयौगपद्यस्य। १४ तयोर्नित्यक्षणिकयो। १५ तत्कार्याणाम्। १६ (तेन नित्येन क्षणिकेन वा)। १७ नित्य क्षणिकं वा विना। १८ नित्यस्य क्षणिकस्य च येन स्वभावेन कृत्वा एकेन सहकारिणा सहभावोस्ति तेनैव सर्वसहकारिणा सहभावो वा स्वभावान्तरैरिति विकल्पद्वयं तत्र कृत्वा क्रमेण दूषते। १९ सह। २० नित्यस्य क्षणिकस्य च। २१ सह। २२ नित्यस्य क्षणिकस्य च। २३ सर्वसहकारिणा सह नित्यस्य क्षणिकस्य चैकेन स्वभावेन सहभावात्। २४ सहकारिकारणान्तरेण। २५ नित्यक्षणिकयो। २६ व्याप्ययो। २७ सर्वथा नित्यस्य क्षणिकस्य वा विपक्ष कथंचिन्नित्यस्तत्र। २८ बौद्धप्रयुक्तस्य सत्त्वस्य। सर्वं क्षणिक सत्त्वादिति सौगत। वस्तु नित्यं सत्त्वादिति नैयायिक। जैनास्तु कथंचिन्नित्यं वस्तु सत्त्वादिति मन्यन्ते। २९ सत्त्वसाधनस्य। ३० जीवादिकं वस्तु। ३१ (इति हेतो क्षणिकत्वसाधकस्य सत्त्वहेतोर्विरुद्धत्वदर्शनात्)। ३२ सत्त्वं कर्तृ। ३३ बौद्धमते सादृश्यविषयकमेव प्रत्यभिज्ञानं तत्सदृशोय यथा। ३४ एकत्वप्रत्यभिज्ञानस्य। ३५ एकत्वप्रत्यभिज्ञानस्यैव। ३६ सत्त्वं कर्तृपदम्। ३७ (सोयं, तत्सदृशोयं, तद्विलक्षणोयं वेत्यादि संकलनरूपं ज्ञानम्)। ३८ स्मरणप्रत्यक्षाभ्या सकाशात्। ३९ प्रत्यभिज्ञायमानत्वादिति। ४० सौगत। ४१ तयो, पूर्वोत्तरविवर्तयो। ४२ अन्यथेति शेष। प्रत्यभिज्ञानरूपाया बुद्धेरसंचरदोषप्रसङ्गात्। बुद्धेरनुत्पादप्रसङ्गादिति वा। ४३ पूर्वोत्तरविवर्तव्यापिनः। ४४ प्रत्यभिज्ञानरूपाया।

संचरणं नाम, निरन्वयविना[1]शाद्बु[2]द्ध्यन्तरजननानुपपत्तेः, [3]यदेवाहमद्राक्षं तदेव स्पृशामीति पूर्वोत्तरपरि[4]णामयोरेकद्रव्यात्मकत्वेन गम[5]नासंभवात्, ततो[6]न्यस्य बुद्धिसंचरणस्येहा[7]प्रस्तुतत्वात् । तथा[8]वि[9]धैकत्ववासनावशाद्बुद्धिसंचरणं न पुनः कथंचिन्नित्यत्वादिति चेन्न, कथंचिन्नित्यत्वाभावे[10] संवेद[11]नयोर्वास्य[12]वासकभावायोगात्[13]का[14]र्यकारणभाव[15]विरोधात् । ततो बुद्धिसंचरणान्य[16]थानुपपत्तेर्नाकस्मिकं प्रत्यभिज्ञानं विच्छेदाभावाच्च । इति कथंचिन्नित्य वस्तु प्रसाध[17]यति । तथा[18] सर्वं जीवादि वस्तु कथंचित् क्षणिकं, प्रत्यभिज्ञानात् । न चैतत् क्षणिकत्वमन्तरेण भवतीत्यकस्मादुपजायते, तद्विषयस्य कथंचित्क्षणिकस्य विच्छि[19]द्ऽभावात् । न च तदविच्छिदसिद्धा, कालभेदात्, कालभेदस्य च पूर्वोत्तरपर्यायप्रवृत्तिहेतोरसिद्धौ बुद्ध्य[20]संचरणदोषात् । न[21] च तदिदमिति स्मरणदर्शनबुद्ध्योः संचरणापाये प्रत्यभिज्ञानमुदियात्, तस्य[22] पूर्वापरपर्यायबुद्धिसंचरणनिबन्धन[22]त्वात् । ननु[23] च सर्वं नित्यं सत्त्वात् क्षणिके स्वसद[24]सत्समयेर्थक्रियानुपपत्तेः सत्त्वविरोधात्, इत्यनुमानात् क्षणिकत्वस्य निराकृतेर्न प्रत्यभिज्ञानं तत्[25]साधकं, प्रधानलक्षणविषयाविच्छेद[26]सद्भावात् कालभेदा[27]सिद्धेर्बुद्ध्यसंचरणदोषानवकाशाद्बु[28]द्धेरेकत्वगमनस्य[29] संचरणस्य सिद्धेरिति चेन्न[30], सर्वथा क्षणिकत्वस्यैव बाधना[31]त्, कथंचित्क्षणिकस्य स्वसत्समये स्वासत्समये चार्थक्रियोपलब्धेः । सु[32]वर्णस्य हि प्रतिविशिष्ट[33]स्य सुवर्णद्रव्यतया सत एव, कार्याका[34]रतया चासत एव पूर्वपर्यायाविशिष्टस्योत्तरपरिणामविशेषात्मनोत्पद्यमानस्य प्रतीतिः[35] परीक्षकेतरजनसाक्षिका, स्व[36]सत्समये कार्यक[37]रणं सव्यगोविषाणस्येतरविषाणकरण[38]वन्निरस्य[39]मानं, स्वास[40]त्समये च मृतस्य शिखिनः केकायितकरणवदपाक्रिय[41]माणं स्वयमेव व्यवस्था[42]पयति । इति किं न[43]श्चिन्तया, विरोधादिदूषणस्यापि तथै[44]वापसारितत्वात् । सोयमात्मादीनां स्वसत्समये एव कर्मादीनां च स्वासत्समये एव ज्ञानसयोगादिकारणत्वमनुमन्यमानस्तथा संप्रत्य[45]यादेक[46]स्य स्वसदसत्समये एवैककार्यकरणं विरोधादिभिरभि[47]द्रवतीति[48] कथं[49] संप्रत्ययोपा[50]ध्यायः ? सम्यक्प्रतीय[51]मानेपि विरोधमनुरुध्य[52]मानः

---

१ ( क्षणिकस्य विषयस्य ) । २ ( प्रत्येकज्ञानस्य पूर्वं जातस्य क्षणिकमते निरन्वयविनाशात्तयो संकलनरूपायाः प्रत्यभिज्ञाननामिकाया बुद्धेरुत्पत्त्यसभवादित्यर्थ. ) । ३ बुद्ध्यन्तराजनन कुत इत्याह । ४ स्मरणदर्शनयो. । ५ गमनं, प्रवर्तनम् । ६ यत· क्षणिकत्वेन विषयो निरन्वयं विनष्ट । ७ यद्यपि नित्यत्वाभावे प्रत्यभिज्ञानलक्षणबुद्धिसचरणं नास्ति तथाप्यन्यबुद्धिसचरणं भविष्यतीत्याशङ्क्याह जैन । ८ नित्यत्वसाधनप्रस्तावे । ९ तदेवेदमिति । १० वासनायाः । ११ दर्शनस्मरणयो. । १२ संवेदने वास्ये । वासना वासकः । १३ बुद्धिकारणमेव वासकमित्याशङ्क्य, कथंचिन्नित्यत्वाभावे वास्यवासकभावायोगः कुत इति वाशङ्क्याह । १४ कथञ्चिन्नित्यत्वाभावे । १५ कथंचिन्नित्यत्वाभावे । १६ प्रत्यभिज्ञान कर्तृपदम् । १७ कथंचिन्नित्यत्वप्रकारेण । १८ विच्छिउत्त्यभावात् । १९ बुद्धे प्रत्यभिज्ञानरूपाया. । २० एतदेव भावयति । २१ प्रत्यभिज्ञानस्य । २२ वस. । २३ साख्य. । २४ सच्चासच्च सदसती । तयो. समय. काल सदसत्समय । स्वस्य सदसत्समयः स्वसदसत्समयस्तस्मिन् । सति क्षणिके कारणे सव्येतरविषाणवत् कार्यकारणभावो नास्ति । कारणस्य क्षणिकरूपस्यासत्समयेर्थक्रिया नास्ति, मृतस्य शिखिन केकायितमिव । २५ तस्य, क्षणिकत्वस्य । २६ प्रत्यभिज्ञानरूपबुद्धे । २७ आत्मत्वादिस्वभावस्य सर्वदा विच्छेदाभावात्कालभेदासिद्धेरिति भावः । २८ प्रत्यभिज्ञानरूपाया. । २९ तदेवेदमिति । ३० अत्राहुर्जैना·—साख्यमतं न सम्यक् । ३१ जैनै । ३२ एतदेव भावयति । ३३ पिण्डाद्याकारस्य । ३४ कटककुण्डलादिपर्यायाकारतया । ३५ क्षणिकस्य कारणस्य । ३६ स्वस्य ( क्षणिकक्षणस्य ), कारणस्य । ३७ ' कारणं ' वा पाठ· । ३८ यथा न भवति । ३९ कार्यकरणम् । ४० स्वस्य, क्षणिकस्य कारणस्य । सर्वथा क्षणिके, न तु कथंचित्क्षणिके । ४१ कार्यकरणम् । ४२ किं तु कथंचित्क्षणिकस्य स्वसत्समये स्वासत्समये च कार्यं भवत्येवेति व्यवस्थापयति । ४३ जैनानाम् । ४४ प्रतीत्या । ४५ सम्यग्ज्ञानात् । ४६ सुवर्णादिद्रव्यस्य । ४७ निराकरोति । ४८ हेतो. । ४९ सदसत्समये कार्यकारित्वेन द्रव्ये सम्यक्प्रतीयमाने । ५० सम्यग्ज्ञानस्योपाध्यायः । ५१ सदसत्समये कार्यकारित्वेन । ५२ एकत्र युगपद् द्वयो. । यौगः ( साङ्ख्यो वा ) ।

क्व[1] पुनरविरोधं बुध्येत ? द्रव्य[2]पर्याययोरभेदैकान्तप्रतीतिं स्वसमयानुरागमात्रेणाननुभूयमानामप्यविरुद्धविषयां परि[3]भाषते इति किमन्यत्कारणं महतोभिनिवेशात् ? तदेवं[4] कथंचित् क्षणिकत्वसाधने प्रत्यभिज्ञानं नानुमानविरुद्धम्। नापि प्रत्यक्षविरुद्धं सर्वस्ये[5]दानीन्तनतया प्रत्यक्षेणानुभवात्, तेन तस्यातीतानागततयानुभवनेऽनाद्यनन्तपरिणामात्मकस्या[6]नुभवप्रसङ्गाद्योगित्वापत्तेः, साम्प्रतिकतयानुभवस्यैव क्षणिकत्वानुभवरूपत्वात्, क्षणमात्रस्यैव साम्प्रतिकत्वोपपत्तेः, पूर्वोत्तरक्षणयोः साम्प्रतिकत्वेऽनाद्यनन्तक्षणसंततेरपि साम्प्रतिकत्वानुषङ्गादतीतानागतव्यवहारविलोपात्। न चैवं क्षणिकैकान्तस्य प्रत्यक्षतः प्रसिद्धेः कथंचिदक्षणिकत्वविरोधः, पर्यायाकारतयार्थस्ये[7]दानीन्तनतयानुभवविच्छेदेपि द्रव्यतया तदविच्छेदात्, तद्वि[8]च्छेदे द्रव्यत्वविरोधात्। शश्व[9]दविच्छिन्नेदानीन्तनत्वस्य द्रव्यत्वादनित्य[10]त्वैकान्तस्याव्यवस्थितेर्नित्यत्वैकान्तवत्। तद[11]एकान्तद्वयेपि परामर्श[12]प्रत्ययानुपपत्तेरनेकान्तः, स्यान्नित्यमेव सर्वं स्यादनित्यमेवेति सिद्धः।

स्थि[13]त्यभावे हि प्रमातुरन्येन[14] दृष्टं नापरः[15] प्रत्यभिज्ञातुमर्हति। पू[16]र्वोत्तरप्रमातृक्षणयोः कार्यकारणभावलक्षणे संबन्धविशेषेपि पित्रेव दृष्टं पुत्रो न प्रत्यभिज्ञातुमर्हति। त[17]योरुपादानोपादेयलक्षणः सन्नप्यतिशयः पृथक्त्वं न निराकरोति। पृथक्त्वे च पूर्वापरक्षणयोः प्रत्यवमर्शो[18] न स्यात्। य[19]देव हि पृथक्त्वं[20] तदेवान्यत्रा[21]पि प्रत्यवमर्शाभावनिबन्धनं, सर्वत्र[22] तद[23]विशेषात्। यदि पुनरेकसंततिपतितेषु[24] प्रत्यवमर्शो न पुनर्नानासंततिपतितेषु[25] पृथक्त्वाविशेषेपि वासनाविशेषसद्भावादिति मतं तदा सैवैकसंततिः क्वचिदेव[26] कुतः सिद्धौ[27] ? प्रत्यभिज्ञानादिति चेत्तर्हि एकसंतत्या प्रत्यभिज्ञानं प्रत्यभिज्ञानबलाच्चैकसंततिरिति व्यक्तमितरेतराश्रयणमेतत्। न च पक्षा[28]न्तरे समानं[29], स्थितेर[30]नुभवनात्। न ह्येकद्रव्यसिद्धेः प्रत्यभिज्ञानं प्रत्यभिज्ञानाच्चैकद्रव्यसिद्धिः स्याद्वादिभिरिष्यते, येन त[31]त्पक्षेपि परस्पराश्रयणं, भेदज्ञानाद् भेदसिद्धिवदभेदज्ञानात्[32] स्थितेरनुभवाभ्युपगमात्[33]। तद्वि[34]भ्रमकल्पनायामुत्पादविनाशयोरनाश्वासः, त[35]थानुभवनिर्णयानुपलब्धेर्[36]यथा स्वलक्षणं परिगीयते[37]। सोयं प्रतिक्षणमुत्पादविनाशौ सर्वथा स्थितिरहितौ

---

१ वस्तुनि। २ द्रव्यपर्याययोर्भेदैकान्तात् कथमेवास्य स्वसदसत्समये कार्यकरणमिति नैयायिके(साङ्ख्ये)नाशङ्किते आह। ३ नैयायिक (सांख्य)। ४ सर्वथा क्षणिकत्वबाधनं यस्मात्। ५ वस्तुन। ६ तस्य सामान्यप्रत्यक्षस्य। ७ मृत्पिण्डाख्यपर्यायस्य वर्तमानकाले इदानीन्तनतयानुभवो विद्यते, स्थासकाले तु स विच्छिद्यते। स्थासस्यापि स्ववर्तमानकाले तथा सोनुभवो विद्यते, कोशकाले तु स विच्छिद्यते। मृद्द्रव्यस्य तु मृत्पिण्डस्थासकोशादिकाले सर्वदैवेदानीं मृदिदानीं मृदित्यनुभवो न विच्छिद्यते। ८ द्रव्यतयानुभवविच्छेदे। ९ द्रव्यत्वविरोधोस्तु अनित्यैकान्तद्रव्यव्यवस्थापनादित्युक्ते आह। १० द्रव्ये। ११ तत्, तस्मात्। १२ प्रत्यभिज्ञानरूप. पूर्वोत्तरसमयवर्तिकोटिद्वयसंकलनरूपो वा परामर्शः। १३ भाष्यानुसारितया कारिकां प्रकारान्तरेण व्याख्याति। १४ क्षणेन। १५ क्षण। १६ अन्येन दृष्टमन्यक्षण कुतो न प्रत्यभिज्ञातुमर्हति ? यावता कार्यकारणभावलक्षणसंबन्धवशादन्य प्रत्यभिज्ञातुं समर्थो भविष्यतीत्याशङ्क्याह। १७ तयो पूर्वोत्तरक्षणयो. कार्यकारणादिसंबन्धे सत्यपि कुतो न ज्ञातुमर्हति ? यावता तयोरुपादानोपादेयत्वलक्षणसंबन्धविशेषे सत्युत्तरोपि प्रत्यभिज्ञातुं समर्थ.। इत्युक्ते आह। १८ पूर्वापरयोर्दर्शनस्मरणयो संकलनज्ञानम्। १९ एतदेव भावयति। २० पूर्वोत्तरक्षणयो.। २१ पितापुत्रयो। २२ पितापुत्रयो पूर्वोत्तरप्रमातृक्षणयो। २३ तस्य, पृथक्त्वस्य। २४ पूर्वोत्तरक्षणेषु। २५ पितापुत्रादिलक्षणेषु। २६ स्वकीयक्षणेष्वेव। २७ न पुन पितापुत्रादिषु। २८ स्याद्वादपक्षे। २९ इतरेतराश्रयणम्। ३० नित्य तत्प्रत्यभिज्ञानादिति कारिकापदसमर्थनम्। तदविच्छिदाइति पूर्वोक्तमेव व्याख्याति। ३१ तस्य, स्याद्वादिन। ३२ मृत्पिण्डात्स्थासोत्पत्तौ यथा भेद' प्रतिभासते तथाऽभेदोपि प्रतिभासते मृद्रूपतया यत। ३३ स्याद्वादिभिः। ३४ तस्य, अनुगताकारस्थितेरनुभवस्य। ३५ स्थितिं विना नाशोत्पादप्रकारेण। ३६ त्र्यव्यद्रूपतया निर्णयाभावात्। ३७ सौगतैः।

सकृदप्यनिश्चिन्वन्नेव स्थित्यनुभवनिर्णयं विभ्रान्तं कल्पयतीति कथं न निरात्मक[१] एव ? तत्र[२]तत्स्यात् स्वभावाविनिर्भागे[३]पि[४] न संकलनं[५] दर्शनक्षणान्तरवत्[६]। न ह्येकस्मिन्दर्शन[७]विषये क्षणेऽविनिर्भागेपि प्रत्यभिज्ञानमस्तीति। सत्य[८]मेकान्ते एवायं दोषः, सर्वथा नित्ये पौर्वापर्यायोगात् प्रत्यभिज्ञानासंभवात् । ततः क्षणिकं कालभेदात्। न चा[९]यमसिद्धः, दर्शन[१०][११]प्रत्यभिज्ञानसमययोरभेदे तदुभयाभावप्रसङ्गात्, दर्शनसमयस्या[१२]भेदे तन्निर्णयानुपपत्तेः, प्रत्यभिज्ञानसमयस्याभेदे पूर्वापरपर्यायव्याप्येकद्रव्यप्रत्यवमर्शा[१३]संभवात् । ततो दर्शनकालोऽवग्रहेहावायधारणात्मकनिर्णयहेतुर्भिन्न एव, प्रत्यभिज्ञानकालश्च पुनस्त[१४]द्दर्शनस्मरणसंकलनहेतुरिति प्रतिपत्तव्यम्। किं च पक्ष[१५]द्वयेपि ज्ञाना[१६]संचारानुषङ्गादनेका[१७]न्तसिद्धिः। न हि नित्यत्वैकान्तपक्षवत्क्षणिकैकान्तपक्षेपि ज्ञानसंचारोस्ति, तस्यानेकान्ते एव प्रतीतेः। केवल[१८]मपोद्धार[१९]कल्पनया कथंचिज्जात्यन्तरेपि वस्तुनि प्रत्यभिज्ञानादिनिबन्धने स्थित्यादयो[२०] व्यवस्था[२१]प्येरन्, सर्वथा[२२] जात्यन्तरे तद[२३]पोद्धारकल्पनानुपपत्तेः स्थित्यादिस्वभावभेदव्यवस्थानाघटनात्, सर्वथा तद्जात्य[२४]न्तरवत् । न[२५] च स्वभाव[२६]भेदोपलम्भेपि नानात्व[२७]विरोधसङ्करानवस्थानुषङ्गश्चेतसि ग्राह्यग्राहकाकार[२८]वत्। न ह्येकस्य वस्तुनः सकृदनेकस्वभावोपलम्भे[२९] नानात्वप्रसङ्गः, संविद्वेद्य[३०]वेदकाकाराणां नानाज्ञानत्वप्रसङ्गात् । तेषामशक्यविवेचनत्वादेकज्ञानत्वे[३१] स्थितिजन्मविनाशानामपि क्वचि[३२]देकवस्तुत्व[३३]मस्तु, तदविशेषात् । क्वचि[३४]देकत्र[३५] रूपरसादीनामप्यशक्यविवेचनानामेकवस्तुत्वापत्तिर्नानिष्टकारिणी, तेषां[३६] नानावस्तुत्वानिष्टेः । न[३७] चात्माकाशादीना देशाभेदेप्यशक्यविवेचनत्वं, तेषां परैकद्रव्यतादात्म्याभावात् । सत्तैक[३८]द्रव्यतादात्म्ये पुनरेकवस्तुत्व[३९]मिष्टमेव स्याद्वादिनाम् "एकं द्रव्य[४०]मनन्तपर्यायम्" इति वचनात् । ततो[४१] न वैयधिकरण्यम्। एतेनो[४२]भयदोषप्रसङ्गोपास्तो, वेद्याद्याकारात्मबोधवदुत्पादाद्यात्मवस्तुनो जात्यन्तरत्वात्, अचौरपारदारिक[४३]वच्चौरपारदारिकाभ्याम् । न[४४] चैवं[४५] विरोधप्रसङ्गः, तस्या[४६]नुपलम्भसाधनादेकत्रैकदा शीतोष्ण[४७]स्पर्शवत्, स्थित्यादिषु चोपलम्भसद्भावा-

---

१ चैतन्यशून्यः । २ नित्यत्वैकान्तपक्षे दूषणमाहुरधुना । ३ स्वभावेनाविनिर्भागो निरंशत्वं यस्मिन्तस्मिन् । स्वभावाभेदे नित्यपक्षेपीत्यर्थः । ४ न केवलं क्षणिके प्रत्यभिज्ञानाभाव. किन्तु नित्यपक्षेपीत्यपिशब्दस्यार्थ । ५ प्रत्यभिज्ञानलक्षणम्। ६ दर्शनक्षणात्, प्रमातृक्षणादन्यो विषयलक्षणः क्षणो दर्शनक्षणान्तरं, तस्मिन्यथा न संकलनम् । ७ निर्विकल्पकप्रत्यक्षविषये । ८ आशङ्क्यम् । ९ दर्शनप्रत्यभिज्ञानयो. । १० हेतुः । ११ दर्शनं वर्तमानानुभव. । १२ प्रत्यभिज्ञानसमयात् । १३ प्रत्यवमर्शः, प्रत्यभिज्ञानम् । १४ तस्य, वस्तुन. । १५ सर्वथा क्षणिकपक्षे नित्यपक्षे च । १६ ज्ञानं प्रत्यक्षादि । १७ कथंचित्क्षणिकं कथंचिच्च नित्यमिति सिद्धि. । १८ अनेकान्ते एव ज्ञानसंचारो यदि तर्हि अनेकान्तस्य प्रत्यक्षेणैव प्रतीतेस्तत्सिद्ध्यर्थं प्रत्यभिज्ञायमानत्वादित्याद्यनुमानं निरर्थकं स्यादित्युक्ते आह । १९ संदेहापन्नं प्रति । भेदकल्पनयैव । २० आदिपदेन उत्पत्तिव्ययौ । २१ स्थित्यादीनां परस्परभेदकल्पनेन । २२ परस्परनिरपेक्षे सर्वथा नित्येऽनित्ये च । २३ तयोः, कथंचिन्नित्यानित्ययो । २४ एकस्य वस्तुन. सर्वथा नित्यत्ववत्सर्वथा क्षणिकत्ववद्वा । २५ एकस्य वस्तुन उत्पादादित्रिरूपत्वे विरोधाद्यनुषङ्ग इत्युक्ते आह । २६ एकस्मिन् वस्तुनि उत्पादादिस्वभावभेदोपलम्भेपि । २७ नानात्वं, वैयधिकरण्यम् । २८ यथैकस्मिन् चेतसि ज्ञानक्षणे ग्राह्यग्राहकाकारौ न नाना, न च विरुद्धावित्यादिवत् । २९ प्रत्यक्षेण । ३० अन्यथेति शेषः । ३१ सौगतेनाङ्गीक्रियमाणे ( यदि तर्हि ) सति तु । ३२ वस्तुनि । ३३ एकत्वमित्यर्थः । ३४ यद्यशक्यविवेचनत्वात्सर्वत्रैकत्वं तर्हि रूपरसादीनामप्येकत्वमस्त्वित्याशङ्कायामाह जैन. । ३५ मातुलिङ्गादौ । ३६ रूपरसादीनाम् । ३७ एवं तर्ह्यात्माकाशादीनामप्येकवस्तुत्वमस्त्वित्याशङ्क्याह जैन. । ३८ परैकद्रव्यतादात्म्याभावः किमिति प्रतिपाद्यते । यावता सत्तालक्षणपरैकद्रव्यतादात्म्यमस्त्येवात्मादीनामित्याशङ्क्याह । सत्तालक्षणस्यैकद्रव्यस्य तादात्म्ये । ३९ आत्माकाशादीनामपि । ४० सत्तालक्षणम् । आत्माकाशादयस्तस्य पर्यायाः । ४१ यतो नानात्वं न । ४२ एकत्वपक्षे सौगतोक्तदोष. । अनेकत्वपक्षे अद्वैतवाद्युक्तदोषः । ४३ यथा चौरादचौर. पारदारिकाद्वा अपारदारिको भिन्नः । ४४ स्थित्यादेरप्येकवस्तुन्यनुपलम्भो भविष्यति । ततश्च विरोधोनुपलम्भप्रकारेण भवेदित्याशङ्कायामाह । ४५ एवं, जात्यन्तरत्वे सति । ४६ विरोधस्य । ४७ एकस्मिन्वस्तुन्येकदा शीतोष्णयोरनुपलम्भोऽनस्तत्र विरोध । यत्र वस्तुन्येकत्र स्थित्यादीनामुपलम्भस्तत्र तु न विरोधः ।

देकवस्तुन्येकदानुपलम्भासिद्धेः संविदि वेद्याद्याकारवत्[1] । एतेन संशयप्रसङ्गः प्रत्युक्तः, स्थित्याद्युपलम्भस्य[2] चलनाभावात्[3] । तत[4] एव न संकरप्रसङ्गः, स्थित्यात्मन्[5]युत्पादविनाशानुपलम्भादुत्पादविनाशयो[6]श्च स्थित्यनुपलब्धेः । एकवस्तुनि युगपत्स्थित्याद्युपलम्भात्सङ्कर इति चेन्न, परस्परमसङ्करादुत्पादादीनाम् । तद्वति[7] तु सङ्करो वस्तुलक्षण[8]मेव । एतेन व्यतिकरप्रसङ्गो व्युदस्तः, स्थित्यादीनां परस्परगमनाभावात् संविदि वेद्याद्याकारवत्[9] । तत[10] एव नानवस्था, स्थित्यात्मनि[11] जन्मविनाशानिष्टेर्जन्मात्मनि स्थितिविनाशानुपगमाद्विनाशे स्थितिजन्मानवकाशात् प्रत्येकं[12] तेषां त्रयात्मकत्वानुपगमात् । न चैवम्[13]एकान्ताभ्युपगमादनेकान्ताभावः, सम्यगेकान्तस्या[14]नेकान्तेन विरोधाभावात्, नयार्पणादेकान्तस्य प्रमाणार्पणादनेकान्तस्यैवोपदेशात्[15] तथैव[16] दृष्टेष्टाभ्यामविरुद्धस्य तस्य[17] व्यवस्थितेः ।

केन पुनरात्मना[18]ऽनुत्पादविनाशात्मकत्वात्स्थितिमात्रं[19] ? केन चात्मना विनाशोत्पादावेव ? कथं च तत् त्रयात्मकमेव वस्तु सिद्धम् ? इति भगवता पर्यनुयुक्ता इवाचार्याः प्राहुः,—

न सामान्यात्मनो[20]देति न व्येति[21] व्यक्तम्[22]अन्वयात् ।
व्येत्युदेति विशेषात्[23]ते[24] सहैकत्रो[25]दयादि सत्[26] ॥ ५७ ॥

पूर्वोत्तरपरिणामयोः साधारणः स्वभावः सामान्यात्मा द्रव्यात्मा । तेन सर्वं वस्तु नोत्पद्यते न विनश्यति च व्यक्तम्[27]अन्वयदर्शनात् । लूनपुनर्जातनखादिष्वन्वयदर्शनेन व्यभिचार[28] इति चेन्न, व्यक्तमिति विशेषणात्, प्रमाणेन[29] बाध्यमानस्यैकत्वा[30]न्वयस्याव्यक्तत्वात्[31] । न चात्रान्वयः प्रमाणविरुद्धः, सत्यप्रत्यभिज्ञानसिद्धत्वात् । ततोन्वितात्मना[32] स्थितिरेव । तथा विनश्यत्युत्पद्यते च सर्वं वस्तु विशेषा[33]नुभवात् । भ्रान्तविशेषदर्शनेन शुक्ले शङ्खे पीताद्याकारज्ञानलक्षणेन व्यभिचार[34] इति चेन्न, व्यक्तमिति विशेषणस्यानुवृत्तेः । न हि भ्रान्तं विशेषदर्शनं व्यक्तं येन तदपि पूर्वाकारविनाशा[35]जहद्वृत्तोत्तराकाराविनाभावि स्यात् । न च प्रकृते[36] विशेष[37]दर्शनमव्यक्तं बाधकाभावात् । नित्यैकान्तग्राहि प्रमाणं बाधकम्[38]इति चेन्न, तस्य निरस्तत्वात् । न चैवं[39] भिन्नप्रत्ययविषयत्वादुत्पादविनाशमात्रं स्थितिमात्रं च पदार्थान्तरतया[40]वतिष्ठते, तस्य[41] वस्त्वेकदेशत्वान्नयप्रत्यय[42]विषयत्वात्, स्थित्यादित्रयस्य समुदितस्य[43] वस्तुत्वव्यवस्थितेः,

---

१ यथैकस्यामेव संविदि युगपद् वेद्यवेदकाकारयोरुपलम्भः । २ एकत्र वस्तुनि । ३ चलिता प्रतिपत्तिश्च संशयः । ४ चलनाभावादेव । ५ द्रव्यापेक्षया । ६ पर्यायापेक्षयाभ्युपगतयोः । ७ एकवस्तुनि । ८ ततो न दूषणरूप इत्यर्थः । ९ यथा संविदि वेद्यवेदकाकाराणां परस्परगमनाभावः । १० सङ्करव्यतिकरप्रसङ्गनिराकरणेन । ११ वस्तुनि । १२ स्थितिं प्रति, विनाशं प्रति, उत्पादं प्रति च प्रत्येकम् । १३ स्थित्यादेरप्येकवस्तुन्यनुपलम्भो भविष्यति । ततश्च विरोधोऽनुपलम्भप्रकारेण भवेदित्याशङ्कायामाह । १४ परस्परसापेक्षत्वेन । १५ ( प्रमाणापेक्षया यदनेकान्तं तदेव नयार्पणापेक्षया एकान्तरूपं भवतीत्यर्थः ) । १६ नयप्रमाणप्रकारेण । १७ परस्परसापेक्षसम्यगेकान्तस्य नयस्य । १८ स्वरूपेण । १९ वस्तु । २० सत्तास्वरूपेण । २१ व्ययं न प्राप्नोति वस्तु । २२ सत्यं यथा भवति तथेत्यर्थः । २३ पर्यायापेक्षयेत्यर्थः । २४ ते भगवतः । २५ वस्तुनि । २६ सदित्युक्ते वस्तु इत्यर्थः । उत्पादव्ययध्रौव्यलक्षणं सत् । सद् द्रव्यलक्षणम् । २७ ( असत्यतयान्वयदर्शनस्य हेतुत्वं मा भूदिति व्यक्तग्रहणम् ) । २८ यतस्तत्रोत्पत्तिविनाशौ दृश्येते । २९ व्यक्तमित्युक्तेपि कुतो न व्यभिचार इत्युक्ते आह । ३० त एवैते नखादय इत्येकत्वान्वयो बाध्यते प्रमाणेन । ततश्च तत्सदृशा इमे नखादय इति घटते । ३१ असत्यत्वात् । ३२ अन्वयाकारेण । ३३ विशेषाः, पर्याया भेदा वा । नाशोत्पादरूपविशेषानुभवादेव । मृत्पिण्डे विनाशोप्यनुभूयते इत्येकानुभवविषयौ नाशोत्पादाववगन्तव्यौ । ३४ यतः शुक्ले शङ्खे पीताद्याकारलक्षणस्य भ्रान्तदर्शनविशेषस्यानुभवेपि तद्विनाशोत्पादाभावस्तत्र । ३५ किन्तु शुक्लाकारविनाशेनेह जहद्वृत्तिरेव पीताकारः । ३६ जीवादौ । ३७ उत्पादादिरूपतया भेददर्शनम् । ३८ विशेषदर्शनस्य । ३९ अन्वयदर्शनात्स्थितिप्रकारेण विशेषदर्शनादुत्पादादिप्रकारेण च । ४० जीवादिवस्तुनः सकाशात् । ४१ उत्पादविनाशमात्रस्य स्थितिमात्रस्य च । ४२ उत्पादविनाशयोः पर्यायनयविषयत्वं स्थितेस्तु द्रव्यार्थिकनयविषयत्वमिति भावः । ४३ परस्परसापेक्षत्वेन प्रकटीभूतस्य ।

तस्य[1] प्रमाणप्रत्ययगोचरत्वात्, सहैकत्रोदयादि सदिति प्रतिपादनात्[2], तथैव " उत्पादव्ययध्रौव्ययुक्तं सत् " इति सूत्रकारवचनात् । न चेदं युक्तिरहितं, तथा युक्तिसद्भावात्, चला[3]चलात्मकं वस्तु कृतकाकृतकात्मकत्वादिति । न चात्र हेतुरसिद्धः, पूर्वरूपत्यागाविनाभाविपररूपोत्पा[4]दस्यापेक्षित[5]परव्यापारत्वेन कृतकत्वसिद्धेः, सदा स्वात्मस्वभा[6]वस्यानपेक्षितपरव्यापारत्वेनाकृतकत्वनिश्चयात् । न[7] हि चेतनस्यान्य[8]स्य वा सर्व[9]थोत्पत्तिः, सदादिसामान्यस्वभावेन सत एवातिशया[10]न्तरोपलम्भाद् घटव[11]त् कथंचिदुत्पादविगमात्मक[12]त्वादि[13]त्यादि योज्यम् । नापि विनाश एव, तत एव तद्वत् । न च स्थितिरेव, विशेषाकारेणोत्पादविनाशवत एव सदादिसामान्येन स्थित्युपलम्भाद् द्रव्यघटवत् । इति हि पृथगुपपत्ति[14]र्योज्यते । सदादिसामान्येन सतस्तन्त्वादेर्घटाकारातिशयान्तरोपलम्भप्रसङ्ग इति चेन्न, स्वभा[15]वग्रहणात् । सदादिसामान्यं हि यत्स्वभावभूतं घटस्योपादानद्रव्यमसाधारणं तद्भा[16]वेन परिणमदुपलभ्यते । तेनैव[17] सतो[18]तिशयान्तराधानं[19] घटो[20] यथा प्रतिविशिष्टघटयोग्यमृद्द्रव्यादिस्वरूपेण[21], न पुनः साधारणेन[22] तन्त्वादिगतसामान्येन नापि साधारणासाधारणेन[23] पार्थिवत्वादिसामान्येनाविशिष्टघटोपादानमृदादिसामान्येन वा प्राक्सतोतिशयान्तरोपलब्धि[24]र्येन तन्त्वादेरपि घटपरिणतिप्रसङ्गः । नापि घटविनाशोत्तरकालमप्यसाधारणमृदादिसामान्यस्वभावेन सत्त्वा[25]विशेषाद्घटोत्पत्ति[26]ः प्रसज्यते, तत्प्रा[27]गभावात्मकस्य सत[28]स्तद्भावे[29]नोत्पत्तिदर्शनात्, पश्चा[30]दभावात्मक[31]स्य सतो[32]पि त[33]द्दर्शनात् । न चैवं प्रागसत एवोत्पत्तिनियमाद् घटस्य कथंचित्प्रागसत्त्वमयुक्तं, प्रागभावस्य भावस्वभावस्य पूर्वं व्यवस्थापनात् । तस्याभावस्वभावत्वे सव्येतरगोविषाणादीनां सहोत्पत्तिनियम[34]वतामुपादानसङ्कर[35]प्रसङ्गः, प्रा[36]गभावाविशेषात् । ततो यथा स्वोपादानात्सव्यविषाणस्योत्पत्तिस्तथा दक्षिणविषाणोपादानादपि तत्र तस्यो[37]त्पत्तेः प्रागभावसिद्धेः, यत्र[38] यदा यस्य[39] प्रागभावस्तत्र तदा तस्योत्पत्तिरिति[40] नियमकल्पनाया अपि तत्र भावात्[41] । स्वोपादानेतर[42]नियमश्च[43] कुतः स्यात् ? प्रागभावनियमादिति चेत्समानसमयजन्मना[44] स[45] एव कुतः ? तदुत्पत्तिनियमादिति चेत् सोपि कुतः ? स्वोपादाननियमादिति चेत् स्वोपादानेतरनियमः कुतः स्यात् ? इत्यादि पुनरावर्तते इति चक्रकम्[46] । सव्यविषाण[47]स्योत्पत्तिरिति[48] प्रत्ययविशेषादुत्पत्तिनियमोपि न श्रेयान्, कारकपक्ष[49]स्य विचारयितुमारब्धत्वात् । ज्ञापकपक्षे

---

१ समुदितस्य । २ ( प्रकृतकारिकायाम् ) । ३ चलशब्देनोत्पादविनाशाकारौ स्थितिमात्रं त्वचलशब्देन । ४ घटादिषु । ५ कालाण्वादि पर. । ६ द्रव्यरूपेण । ७ परपक्षनिराकरणे युक्तिमाह । ८ पुद्गलस्य । ९ पर्यायरूपेणेव द्रव्यरूपेणापि । १० पर्यायान्तरस्य । ११ यथा घटस्य मृद्रूपेण सतो घटलक्षणातिशयोपलम्भ । १२ सदादिसामान्यात्मना सत एव । १३ नापि विनाश एव न च स्थितिरेवेत्यनन्तरं वक्ष्यमाणद्वयमादिशब्देन लभ्यम् । १४ प्राक्तनहेतुः साध्यद्वयेपि योज्यतेनेति भाव. । १५ तन्त्वादौ पटस्वभाव एव, न तु घटस्वभाव । १६ घटस्वभावभूतमृदादिसामान्यरूपेण । १७ सदादिसामान्येन । १८ उपादानमृत्पिण्डस्य । १९ उपलभ्यते । २० तेनैव सतोतिशयान्तराधानं घटो भवतु । तथाप्यतिप्रसङ्गपरिहार. कथमित्याशङ्कायामाह । २१ प्राक्सतोतिशयान्तरोपलब्धि । २२ सर्वव्यक्तिव्यापित्वात्साधारणत्वं सदादिसामान्यस्य । २३ मृत्पिण्डतन्त्वादिव्यक्त्यपेक्षया साधारणत्वं पार्थिवत्वस्यात्तेजोवाय्वाद्यपेक्षयाऽसाधारणत्वं च । २४ घटादिरूपेण । नेति सम्बन्ध । २५ मृदादिद्रव्यस्य । २६ कपालमालया घटोपलब्धि । २७ तस्य, घटस्य । २८ मृद्रूपतया विद्यमानस्य । २९ घटभावेन । ३० घटविनाशोत्तरकालम् । ३१ प्रध्वंसाभावात्मकस्येत्यर्थ । मृदादिद्रव्यस्य । ३२ कपालरूपेण सतोपि घटस्य । ३३ तस्य, घटस्य । ३४ कार्यस्वरूपाणाम् । ३५ सव्यविषाणस्थानेऽसव्यविषाणस्य, असव्यस्थाने च सव्यस्योत्पत्तिप्रसङ्ग । ३६ ' प्रागभावाप्रागभावाविशेषात् ' इति कपुस्तकपाठ । ३७ सव्यविषाणस्य । ३८ ( सौगत आह ) यत्र, वस्तुनि । ३९ कार्यस्य । ४० जैनो वक्तीतः । ४१ तथापि दक्षिणविषाणे सव्योत्पत्ति स्यात् । ४२ अभावस्य नीरूपत्वे सति । ४३ अभावस्य भावान्तरस्वभावत्वासंभवाविशेषो यत । ४४ विषाणादीनाम् । ४५ प्रागभावनियमः । ४६ प्रागभावस्य तुच्छत्वपक्षे । ४७ विवक्षितगोमस्तकप्रदेशे । ४८ इति अनेन प्रकारेण । ४९ उत्पत्तिपक्षस्य ।

तु प्रागभावनियमोपि[1] तत्प्र[2]त्ययविशेषादेवेति नोत्पत्त्या प्रागभावावगतिः, [3]प्रागभावादप्युत्पत्तिनियमनिश्चयप्रसक्तेरितरेतराश्रयस्य दुर्निवारत्वात् । [4]ततो नोत्पत्तेः प्रागभावः कार्यस्याभावात्मकस्तस्य भावस्वभावस्यैवाबाधितप्रतीतिविषयत्वात् प्रागभा[5]वाभावस्य कार्योत्पादरूपत्वात् । तथा हि ।

कार्यो[6]त्पादः क्षयो [7]हेतोर्नि[8]यमाल्ल[9]क्षणात्पृथक् ।
न तौ जात्या[10]द्यवस्थानाद[11]नपेक्षाः खपुष्पवत् ॥ ५८ ॥

उपादानस्य पूर्वाकारेण क्षयः कार्योत्पाद एव हेतोर्नियमात्[12] । यस्तु ततो[13]ऽन्यस्तस्य न हेतोर्नियमो दृष्टो यथाऽनुपादान[14]क्षयस्यानुपादेयोत्पादस्य[15] च । नियमश्च [16]हेतोरुपादानक्षयस्योपादेयोत्पादस्य च । तस्मादुपादानक्षय एवोपादेयोत्पादः । न तावदत्रासिद्धो हेतुः कार्यकारणजन्मविनाशयोरेकहेतुकत्वनियमस्य सुप्रतीतत्वात्, [17]तयोरन्यतरस्यैव सहेतुकत्वाहेतुकत्वनियमवचनस्य निरस्तत्वात् ।

[18]ननूपादानघटविनाशस्य बलवत्पुरुषप्रेरितमुद्गराद्यभिघातादवयवक्रियोत्पत्तेरवयवविभागात्संयोगविनाशादेव [19]प्रतीतेरुपादेयकपालोत्पादस्य तु स्वारम्भकावय[20]वकर्मसंयोगविशेषादेरेव संप्रत्ययात् तयोरेकस्माद्धेतोर्नियमासंभवादसिद्धमेव साधनमिति चेन्न, [21]अस्य विनाशोत्पादकारणप्रक्रियोद्घोषणस्याप्रातीतिकत्वाद्बलवत्पुरुषप्रेरितमुद्गरादिव्यापारादेव घटविनाशकपालोत्पादयोरवलोकनात् । ततो घटावयवेषु कपालेषु क्रियैवोत्पद्यते इति [22]चेत्सैवैको हेतुस्त[23]योरस्तु । क्रियातोवयवविभागस्यैवोत्पत्तिरिति चेत्[24]स एवैकं कारणमनयोरस्तु । विभागात्तदवयवसंयोगविनाश एव दृश्यते इति चेत् स एव तयोरेकं निमित्तमस्तु । तदवयवसंयोगविनाशादवयविनो घटस्य विनाश इति चेत्स एव कपालानां तदवयवाना प्रादुर्भावः । इति कथं नैक[25]हेतुनियमः सिध्येत्? [26]महास्कन्धावयवसंयोगविनाशादपि [27]लघुस्कन्धोत्पत्तिदर्शनात् "भेदसं[28]घातेभ्य उत्पद्यन्ते" इति वचना[29]त् ।

मिथ्यैवेदं दर्शनं सूत्रकारवचनं च बाधकसद्भावादिति चेत्किं तद्बाधकम्? [30]स्वपरिमाणादणुपरिमाणकारणारब्धानि कपालानि कार्यत्वात्पटवदित्यनुमानं बाधकमिति चेन्न, एतदुदाहरणस्य साध्यविकलत्वात् । [31]तन्तवो हि किमपटाकारपरिणताः पटस्य समवायिनः पटाकारपरिणता वा? न तावदाद्यः पक्षः पटाकारापरिणतेषु तन्तुष्विह पट इति प्रत्ययासंभवात् । द्वितीयपक्षे तु न पटपरिमाणादणुपरिमाणास्तन्तवः पटस्य कारणं, तेषा पटसमानपरिमाणतया प्रतीतेः समुदितानामेवातानवितो[32]-

---

१ न केवलमुत्पत्तिनियम इत्यपिशब्दार्थ । २ तस्य, प्रागभावस्य । ३ अन्यथा । उत्पत्त्या प्रागभावावगतिश्चेत्तर्हि । ४ प्रागभावस्याभावस्वभावत्वे उपादानसङ्करप्रसङ्गो यत । ५ यथा घटस्य प्रागभावो मृत्पिण्ड । ६ घटोत्पाद. । ७ मृत्पिण्डलक्षणस्य । ८ एकहेतुनियमात् । य एव हेतु कार्योत्पादस्य स एव क्षयस्य । ९ एवमुत्पादविनाशयोरेकहेतुकत्वेऽभेद एव द्वयो स्यादित्युक्ते आह लक्षणादिति लक्षणभेदादित्यर्थ. । १० जात्याद्यवस्थानात् तौ न पृथक् । जातिः, सामान्यम् । ११ उत्पादादयो निरपेक्षा भविष्यन्तीत्युक्ते आह । १२ एकहेतुकत्वादिति यावत् । अयं व्यतिरेकी हेतु. । १३ उपादानक्षयादन्य । १४ घटस्यानुपादानं तन्तव । तेषा क्षयस्तस्याभ्यादिभिन्नहेतुकत्वम् । तन्त्वपेक्षयानुपादेयो घट । तस्योत्पाद । तस्य मृदादिरूपभिन्नहेतुकत्वम् । १५ एकहेतोर्नियमो न दृष्ट । १६ एकहेतो । १७ तयो, जन्मविनाशयोर्मध्ये जन्म, कपालमालाया उत्पाद सहेतुको, विनाशस्तु निर्हेतुक इति बौद्धोक्तस्य नियमवचनस्य । १८ यौग. । १९ घटविनाशस्य । २० अवयवकर्म, परमाण्वादिगतक्रिया । २१ बलवत्पुरुषादिस्वारम्भकावयवादिलक्षणाया प्रक्रियायाः कथनस्य । २२ सा क्रिया । २३ घटविनाशकपालोत्पादयो । २४ अवयवविभागः । २५ एकहेतु, मुद्गरादि । घटविनाशकपालोत्पादयो । २६ महास्कन्धो, घटादि· । २७ लघु, कपालमाला । २८ भेदश्च संघातश्च तदुभयं चेति, तेभ्य । महास्कन्धाना भेदेभ्यो लघुकार्याण्युत्पद्यन्ते । लघुस्कन्धाना संघातेभ्यो महाकार्याण्युत्पद्यन्ते इति भावार्थ । २९ महाशास्त्रतत्वार्थाधिगमसूत्रकर्तु· श्रीउमास्वामिन· । ३० स्वस्य, कपालस्य । ३१ ( साध्यविकलत्वं समर्थयन्ति ) तन्तव. कारणरूपाः । ३२ पटसमानपरिमाणतया प्रतीति कथमित्याशङ्क्याह । कार्योन्मुखानाम् ।

नाकाराणां पटपरि[1]णामाश्रयत्वादन्यथाति[2]प्रसङ्गात् । न हि तथाऽपरिण[3]तं तद्भवति "तद्भा[4]वः परिणामः" इति वचना[5]त् । न चैवं परिणामपरिणामिनोरभेदः स्यात्, प्रत्य[6]यभेदात्कथंचिद्भेदसिद्धेः परस्या[7]पि तद्भेदे विवादाभावात् तन्तुद्रव्यपटपर्याययोरन्वयव्यतिरेक[8]प्रत्ययविषयत्वाच्च । त[9]न्तुद्रव्यं हि प्राच्यापटाकारपरित्यागेन तन्तुत्वापरित्यागेन चापूर्वपटाकारतया परिणमदुपलभ्यते पटाकारस्तु पूर्वाकाराद्व्यतिरिक्त इति सिद्धं, सर्वथा[10] त्यक्तरूपस्यापूर्वरू[11]पवर्तिन एवोपादानत्वायोगादपरित्यक्तात्मपूर्वरूप[12]वर्तिवत् तथाऽप्र[13]तीते[14]र्द्रव्यभावप्रत्यासत्तिनिबन्धनत्वादुपादानोपादेयभावस्य । भावप्रत्यासत्तिमात्रात्त[15]द्भावे समानाकाराणामखिला[16]र्थानां तत्[17]प्रसङ्गात्, कालप्रत्यासत्ते[18]स्तद्भावे पूर्वोत्तरसमनन्तरक्षणवर्तिनामशेषार्थानां तत्प्रसक्तेः, देशप्रत्यासत्तेस्तद्भावे समानदेशा[19]नामशेषतस्तद्भावापत्तेः सद्द्रव्यत्वादिसाधारणद्रव्यप्रत्यासत्तेरपि तद्भावानियमात् । असाधार[20]णद्रव्यप्रत्यासत्तिः पूर्वाका[21]रभावविशेषप्रत्यासत्तिरेव च निबन्धनमुपादानत्वस्य स्वोपादेयं परिणा[22]मं प्रति निश्चीयते । तदुक्तं "त्यक्ता[23]त्यक्तात्म[24]रूपं यत्पूर्वापूर्वेण वर्तते । कालत्रयेपि तद्द्रव्यमुपादानमिति स्मृतम् ।१। यत्स्व[25]रूपं त्यजत्येव[26] यन्न त्यजति सर्वथा[27] । तन्नोपादानमर्थस्य क्षणिकं[28] शाश्वतं यथा ।२।" इति । ततो न तन्तुविशेषा[29]कारः पटस्योपादानं येनाल्पपरिमा[30]णादेव कारणान्महापरिमाणस्य पटस्योत्पत्ते[31]रुदाहरणं साध्यशून्यं न भवेत् । हेतु[32]श्चानैकान्तिकः, प्रशिथिलावयवमहापरिमाणकार्पासपिण्डादल्पपरिमाणनिबिडावयवकार्पासपिण्डोत्पत्तिदर्शनात् । विरुद्धश्चायं हेतुः, पुद्गलादिद्रव्यस्य महापरिमाणस्य यथासंभवं सूक्ष्मरूपेण स्थूलरूपेण वा पर्यायेण वर्तमानस्य स्वका[33]र्यारम्भकत्वदर्शनात् कार्यत्व[34]स्य महापरिमाणकारणारब्धत्वेन व्याप्तिसिद्धेः स्वपरिमाणादल्पपरिमाणकारणारब्धत्वविपरीतसाध[35]नात् । ततो नेदमनुमानं बाधकं कपालोत्पादस्य घटविनाशस्य चैकहेतु[36]त्वनियमप्रतीतेरेकस्मादेव मृदाद्युपादानात्तद्भा[37]वस्य सिद्धेरेकस्माच्च मुद्गरादिसहकारिकलापात्तत्संप्र[38]त्ययात् । इति सिध्यत्येव हेतोर्निय[39]मात्कार्योत्पाद एव पूर्वाका[40]रविनाशः ।

न चैवं सर्वथोत्पादविनाशयोरभेद एव, लक्षणा[41]त्पृथक्त्वसिद्धेः । तथा हि । **कार्यकारणयोरुत्पादविनाशौ कथं[42]चिद्भिन्नौ भिन्नलक्षणसंबन्धित्वात्सुखदुःखवत्** । नात्रासिद्धं साधनं, कार्योत्पादस्य स्वरूपलाभलक्षण[43]त्वात्कारणविनाशस्य च स्वभावप्रच्युतिलक्षणत्वात्तयोर्भिन्नलक्षणसंबन्धित्वसिद्धेः । नाप्य[44]नैकान्तिकं विरुद्धं वा,

---

१ पटपरिणामं प्रति । २ रण्डाकरण्डतन्तूनामपि पटपरिणामत्वप्रसङ्गात् । ३ पटस्वरूपेणापरिणतं पटस्वरूपं न भवति । ४ तेन तेनासाधारणेन (प्रतिविशिष्टेन) रूपेण भवनं तद्भाव. । ५ ( वाचकमुख्यस्य श्रीउमास्वामिनः ) । ६ अयं पटपरिणामः, अयं परिणामी तन्तुरित्येवम् । ७ तव यौगस्यापि । प्रत्ययभेदाद्भेदेऽङ्गीक्रियमाणे । ८ सत्सु तन्तुषु पटो नास्त्विति । ९ ( अन्वयव्यतिरेकौ स्पष्टयन्ति ) । १० पर्यायरूपेणेव द्रव्यरूपेणापि । तन्तुत्वेनापि त्यक्तरूपस्येत्यर्थ । ११ तन्तुपिण्डस्य । १२ (नित्यवादिमतेनोदाहरणम् ) यथापरित्यक्तात्मपूर्वरूपवर्तिनस्तन्तुसमूहस्य पटं प्रत्युपादानत्वायोगः । १३ उपादानोपादेयरूपस्य. । १४ द्रव्यं तन्तु । भाव पटः । तयो । १५ उपादानोपादेयभावे । १६ तन्तुपिण्डानाम् । १७ तस्य, उपादानोपादेयभावस्य । १८ तस्य, उपादानोपादेयभावस्य । १९ मृत्पिण्डादीनाम् । २० आतानवितानीभूतं तन्तुद्रव्यमसाधारणम् । २१ आतानवितानरूपः पूर्वाकारः । २२ पटलक्षणम् । २३ त्यक्तं पर्यायरूपेण, अत्यक्तं साधारणद्रव्यरूपेण । २४ पूर्वरूपमुन्दुकाद्यपेक्षया त्यक्तात्मक तन्त्वपेक्षयाऽत्यक्तात्मकम् ( अतस्तन्त्वपेक्षया पूर्वरूपेण वर्तते पटापेक्षया तु अपूर्वरूपेण वर्तते )। २५ यद्, द्रव्यम् । २६ बौद्धमतानुसारेण । २७ साङ्ख्यमतानुसारेण । २८ क्रमेणोदाहरणद्वयम् । २९ आतानवितानविशेषरहित उन्दुकाकार. । ३० तन्तुकादे. । ३१ उत्पत्तिमपेक्ष्य प्रतिपाद्यमानं पटवदिति । ३२ कार्यत्वादिति । ३३ सूक्ष्मरूपेण स्थूलरूपेण च । ३४ हेतो' । ३५ विरुद्ध' कार्यत्वादिति हेतुरित्यनेन पूर्वोक्तेनान्वयः। ३६ मुद्गरादिप्रहारो निमित्तकारणमुपादानकारणं चोभयोरेको मृत्पिण्ड. । ३७ घटविनाशकपालोत्पादभावस्य । ३८ तयोरुत्पादविनाशयो' । ३९ एकहेतुकत्वनियमादित्यर्थ. । ४० उपादानस्य क्षय । ४१ नाशोत्पादयोर्लक्षणभेदात् । ४२ पर्यायापेक्षया । ४३ वस. ( बहुव्रीहिसमास. ) । ४४ परो वक्ति, एकमृत्पिण्डे कार्यकारणयोरभेदोस्ति भवन्मतापेक्षया तथापि साधनमस्ति, अतो व्यभिचार इत्युक्ते आहुर्जैनाः ।

क्वचिदेकद्रव्येपि परिणामयोः कथंचिद्भेदमन्तरेण भिन्नलक्षणसंबन्धित्वस्यासंभवात् । न च तयोर्भेद एव, कथंचिदभेदग्राहकप्रमाणसद्भावात् । तथा हि । उत्पादविनाशौ प्रकृतौ स्यादभिन्नौ, तदभेदस्थितजातिसंख्याद्यात्मकत्वात्पुरुषवत् । नात्रासिद्धो हेतुः, मृदादिद्रव्यव्यतिरेकेण नाशोत्पादयोरभावात् । पर्यायापेक्षया नाशोत्पादौ भिन्नलक्षणसंबन्धिनौ न तौ, जात्याद्यवस्थानात्, सद्द्रव्यपृथिवीत्वादिजात्यात्मनैकत्वसंख्यात्मना शक्तिविशेषान्वयात्मना च तदभेदात् तथैव प्रत्यभिज्ञानात्, तदेव मृद्द्रव्यमसाधारणं घटाकारतया नष्टं कपालाकारतयोत्पन्नमिति प्रतीतेः सकलबाधकरहितत्वात्, य एवाहं सुख्यासं स एव च दुःखी सम्प्रतीत्येकपुरुषप्रतीतिवत् । नन्वेवमुत्पादव्ययध्रौव्याणामभेदात् कथ त्रयात्मकवस्तुसिद्धिः ? तत्सिद्धौ वा कथं तत्तादात्म्यम् ? विरोधादिति चेन्न, सर्वथा तत्तादात्म्यासिद्धेः कथचिल्लक्षणभेदात् । तथा हि । उत्पादविगमध्रौव्यलक्षणं स्याद्भिन्नमस्खलन्नानाप्रतीतेः रूपादिवत् । सर्वस्य वस्तुनो नित्यत्वसिद्धेरुत्पादविनाशप्रतीतेरस्खलत्वविशेषणमसिद्धमिति चेन्न, कथंचित्क्षणिकत्वसाधनात् । तत एव ध्रौव्यप्रतीतेरस्खलत्व सिद्धं, सर्वथा क्षणिकत्वनिराकरणात् । न चोत्पादादीनां कथंचिद्भिन्नलक्षणत्वं विरुद्धं, तदात्मनो वस्तुनो जात्यन्तरत्वेन कथंचिद्भिन्नलक्षणत्वादन्यथा तदवस्तुत्वप्रसङ्गात् । उत्पादादयो हि परस्परमनपेक्षाः खपुष्पवन्न सन्त्येव । तथा हि । उत्पादः केवलो नास्ति स्थितिविगमरहितत्वाद्वियत्कुसुमवत् । तथा स्थितिविनाशौ प्रतिपत्तव्यौ । स्थितिः केवला नास्ति, विनाशोत्पादरहितत्वात् तद्वत् । विनाशः केवलो नास्ति, स्थित्युत्पत्तिरहितत्वात् तद्वदेव । इति योजनात् सामर्थ्यादुत्पादव्ययध्रौव्ययुक्तं सदिति प्रकाशितं भवति, तदन्यतमापाये सत्त्वानुपपत्तेः । प्रत्येकमुत्पादादीना सत्त्वे त्रयात्मकत्वप्रसङ्गादनवस्थेत्यपि दूरीकृतमनेन, तेपा परस्परमनपेक्षाणामेकशः सत्त्वनिराकरणात् । किं च,—

घटमौलिसुवर्णार्थी नाशोत्पादस्थितिष्वयम् ।
शोकप्रमोदमाध्यस्थ्यं जनो याति सहेतुकम् ॥ ५९ ॥

प्रतीतिभेदमित्थं समर्थयते सकललौकिकजनस्याचार्यः । स हि घटं भङ्क्त्वा मौलिनिर्वर्तने घटमौलिसुवर्णार्थी तन्नाशोत्पादस्थितिपु विपादहर्पौदासीन्यस्थितिमयं जनः प्रतिपद्यते इति, घटार्थिनः शोकस्य घटनाशनिबन्धनत्वात्, मौल्यर्थिनः प्रमोदस्य मौल्युत्पादनिमित्तत्वात्, सुवर्णार्थिनो माध्यस्थ्यस्य सुवर्णस्थितिहेतुकत्वात्, तद्विषादादीनां[29] निर्हेतुकत्वे तदनुपपत्तेः[30], पूर्वतद्वासनामात्रनिमित्तत्वेपि[31] तन्नियमे[32]

---

१ कार्यकारणरूपयो । २ नियतपूर्वक्षणवर्तित्वं कारणलक्षणम् । नियतोत्तरक्षणवर्तित्वं कार्यलक्षणम् । ३ ( सर्वथा ) । ४ द्रव्यापेक्षया । ५ ताभ्यामुत्पादविनाशाभ्या सहाभेदेन स्थिताश्च ते जातिसंख्यादय । ते आत्मानो ययोर्नाशोत्पादयो॰ । तदभेदस्थितितज्जातीत्यादि पाठान्तरम् । ६ पुरुषनाशोत्पादौ यथा कथचिदभिन्नौ । ७ नाशोत्पादौ भिन्नौ न । ८ जात्याद्यवस्थानेपि भिन्नलक्षणसंबन्धिनौ कुतो न भवतामित्याशङ्क्याह । ९ उत्पादविनाशादिरूपा शक्ति । १० तेषामुत्पादादीनाम् । ११ यथैकस्मिन् मातुलिङ्गे रूपरसादय कथचिद्भिन्ना । १२ सांख्य । १३ उत्पादाद्यात्मन । १४ कथंचिदभिन्नलक्षणत्वादिति पाठान्तरम् । १५ ( तेषामुत्पादादीनाम् ) । १६ ( सूत्रकारवच ) । १७ तेषामुत्पादादीनाम् । १८ वस्तुन । १९ उत्पाद सन्, स्थितिरपि सती, विनाश सन्नित्येवम् । २० अङ्गीक्रियमाणे । २१ उत्पादादीनां प्रत्येकम् । २२ उत्पादादय केवला न सन्त्येवेति ग्रन्थकथनेन । २३ उत्पादादेः । २४ एको हेमघटार्थी, अन्यो हेममौल्यर्थी, तृतीय. केवल सुवर्णार्थी । २५ क्रमेण कारणभूतेषु । २६ यथाक्रमं कार्यभूतम् । २७ स्वामिसमन्तभद्र । २८ जनस्य । २९ तेषां, घटमौलिसुवर्णार्थिना क्रमेण यद्विषादहर्षौदासीन्यानि तेषाम् । ३० तेषा, विषादादीनाम् । ३१ बौद्धेनाङ्गीक्रियमाणे । अयमाशय —पराशङ्का, विषादादीना हेतवो न केचित् सन्ति किन्तु पूर्वविषादादिवासनामात्रनिमित्ताद्विषादादयो जायन्ते । इत्युक्ते बौद्धेन जैनै. पूर्वतद्वासनेत्याद्युक्तम् । ३२ तेषा, विषादादीनाम् ।

मासंभवात् । तद्वासनायाः[1] प्रबोधकप्रत्यय[2]नियमान्नियतत्वाद्विषादादिनियम इति चेत्[3] तर्हि नाशोत्पादान्वया[4] एव वासनाप्रबोधकप्रत्यया इति पारम्पर्यात्त एव शोकादिहेतवो बहिरङ्गाः । अन्तरङ्गास्तु मोहनीयप्रकृतिविशेषोदया इति, तेषां वासनेति नाममात्रं भिद्येत, नार्थः, स्याद्वादिभिर्भावमोहविशेषाणां वासनास्वभावतोपगमात् । ततः सिद्धं लौकिकानामुत्पादादित्रयात्मकं वस्तु, तत्[5]प्रतीतेर्भेदसिद्धेः । किंच,—

पयो[6]व्रतो न दध्यत्ति न पयोत्ति दधिव्रतः ।
अगोर[7]सव्रतो नोभे तस्मात्तत्त्वं त्रयात्मकम् ॥ ६० ॥

लोकोत्तरदृष्टान्तेनापि तत्र प्रतीतिनानात्वं विनाशोत्पादस्थितिसाधनं प्रत्याययति, दधि[8]पयोऽगोरसव्रतानां[9] क्षीर[10]दध्युभयवर्जनात् क्षीरात्मना नश्यद्दध्यात्मनोत्पद्यमानं गोरसस्वभावेन तिष्ठतीति, पय एव मयाद्य भोक्तव्यमिति व्रतमभ्युपगच्छतो दध्युत्पादेपि पयसः[11] सत्त्वे[12] दधिवर्जनानुपपत्तेः, दध्येव मयाद्य भोक्तव्यमिति व्रतं स्वीकुर्वतः पयस्यपि दध्नः[13] सत्त्वे पयोवर्जनायोगात्[14], अगोरसं मयाद्य भोक्तव्यमिति व्रतमङ्गीकुर्वतोनुस्यूतप्रत्ययविषयगोरसे दधिपयसोर[15]भावे तदुभयवर्जनाघटनात् । प्रतीयते च तत्तद्व्रतस्य तत्तद्वर्जनम् । ततस्तत्त्वं त्रयात्मकम् । न चैवम्[16] अनन्तात्मकत्वं वस्तुनो विरुध्यते, प्रत्येकमुत्पादादीनाम्[17] अनन्तेभ्य उत्पद्यमानविनश्यत्तिष्ठद्भ्यः कालत्रयापेक्षेभ्योर्थेभ्यो भिद्यमानानां[18] विवक्षितवस्तुनि तत्त्वतोनन्तभेदोपपत्तेः, पर[19]रूपव्यावृत्तीनाम्[20] अपि वस्तुस्वभावत्वसाधनात्[21], तदवस्तुस्वभावत्वे सकलार्थसाङ्कर्यप्रसङ्गात् । तथा[22] तत्त्वस्य त्र्यात्मकत्वसाधनेनानन्तात्मकत्वसाधने च नित्या[23]नित्योभयात्मकत्वसाधनमपि प्रकृतं न विरुध्यते, स्थित्यात्मकत्वव्यवस्थापनेन कथंचिन्नित्यत्वस्य विनाशोत्पादात्मकत्वप्रतिष्ठापनेन चानित्यत्वस्य साधनात्[24] । ततः सूक्तं सर्वं वस्तु स्यान्नित्यमेव, स्यादनित्यमेवेति । एवं स्यादुभयमेव, स्यादवक्तव्यमेव, स्यान्नित्यावक्तव्यमेव, स्यादनित्यावक्तव्यमेव, स्यादुभयावक्तव्यमेवेत्यपि योजनीयम् । यथायोगमेतत्सप्तभङ्गीव्यवस्थापनप्रक्रियामपि योजयेन्नयप्रमाणापेक्षया सदाद्येकत्वादिसप्तभङ्गीप्रक्रियावत् ।

निर[25]र्थाद्येकान्तगर्तप्रपतनविवशान्प्राणिनोऽनर्थसार्थादुद्धर्तुं नेतुमुच्चैःपदममलमलं मङ्गलानाम्[26] अलङ्घ्यम् ।
स्याद्वादन्यायवर्त्म प्रथयदवितथार्थं वचः स्वामिनोऽदः प्रेक्षा[27]वत्त्वात्प्रवृत्तं जयतु विघटिताशेषमिथ्याप्रवादम् ।१।

इत्याप्तमीमांसालंकृतौ तृतीयः परिच्छेदः । ३ ।

---

१ पुनराह सौगत. । २ घटभङ्गादिज्ञापककारणनियमात् । ३ इतो जैनः । ४ अन्वय', स्थिति' । ५ तेषामुत्पादादीनाम् । ६ पयो दुग्धमेवाहं भुञ्जे इति यस्य व्रतं नियम स न दध्यत्ति । दधि अहं भुञ्जे इति यस्य व्रतं नासौ पयोत्ति । यस्य चागोरसमहं भुञ्जे इति व्रतं नासावुभयमत्ति, यतो गोरसरूपेण तेषामेकत्वात् । तस्मात् तत्त्वं त्रयात्मकम् । ७ गोरसशब्देन दधिदुग्धद्वयं गृह्यते । ८ दधिशब्दस्याचर्यत्वात्पूर्वंनिपात । अत एव नाशादिभि सह यथासंख्यं न कर्तव्यम् । किन्त्वलङ्कारकारैर्विद्यानन्दिभिर्वक्ष्यमाणार्थ एवात्रापि द्रष्टव्यः । ९ पुंसाम् । १० इति एवं त्रयात्मकत्वेन प्रतीतिविषयीकरोतीत्यर्थ. । ११ पय स्वरूपेण नश्यति गोरसमिति साध्यं ध्येयम् । १२ अङ्गीक्रियमाणे । १३ दध्नोत्पद्यते इति साध्यमत्र । १४ अस्ति च पयोवर्जनम् । १५ गोपयसोर्भिन्नतया अगोरसान्त.पातित्वे सतीत्यर्थः । १६ एवम्, एकवस्तुनस्त्रयात्मकत्वप्रकारेण । १७ कथंभूतो घटोत्पाद. ? पटोत्पादाद्व्यावृत्त , मठोत्पादाद्व्यावृत्त , लकुटोत्पादाद्व्यावृत्त' । एवं स्थितिनाशौ चानन्तार्थस्थितिनाशाभ्यां व्यावृत्तौ । १८ व्यावृत्तानाम् । १९ नन्वेवं व्यावृत्तीनामेवानन्त्यं स्यान्न तु तदपेक्षयोत्पत्त्यादीना, तासामवस्तुरूपत्वादित्याशङ्क्याह । २० अगोव्यावृत्तिर्गौ , अपटव्यावृत्ति पट इत्यादीनाम् । २१ विवक्षा चाविवक्षा चेत्यादिकारिकाव्याख्याने तदेकैकश. परस्पर व्यावृत्तयोपि परिणामविशेषा इत्यादिना, यथावसरमन्यत्र च समर्थनात् । २२ तेन प्रकारेण । २३ एकस्मिन् वस्तुन्येव । २४ एकस्मिन्नेव वस्तुनि । २५ आशिषमाह । २६ सर्वेषा मङ्गलानां मध्ये उत्कृष्टं मङ्गलमित्यर्थ । २७ स्वामिनो विशेषणं प्रेक्षावत्त्वं ज्ञेयम् ।

# अथ चतुर्थः परिच्छेदः ।

जीयादष्टसहस्री देवागमसंगतार्थमकलङ्कम् ।
गमयन्ती सन्नयतः प्रसन्नगम्भीरपदपदवी । १ ।

**कार्यकारणनानात्वं गुणगुण्यन्यतापि च ।**
**सामान्यतद्वदन्यत्वं चैकान्तेन यदीष्यते ॥ ६१ ॥**

कार्यग्रहणात्कर्मणोऽवयविनोऽनित्यस्य गुणस्य प्रध्वंसाभावस्य च ग्रहणं, कारणवचनात् समवायिनस्तद्वतः प्रध्वसनिमित्तस्य च । गुणशब्दान्नित्यगुणप्रतिपत्तिः, गुणिवचनात्तदाश्रयस्य । सामान्याभिधानात्परापरजातिप्रत्ययः । तद्वद्वचनादर्थप्रत्यय इति । क्रियातद्वतोरवयवावयविनोर्गुणगुणिनोर्विशेषतद्वतोः सामान्यतद्वतोरभावतद्विशेष्ययोश्चान्यतैव, भिन्नप्रतिभासत्वात् सह्यविन्ध्यवदित्युक्तं भवति । न चात्रासिद्धो हेतुः, साध्यधर्मिणि भिन्नप्रतिभासत्वस्य सद्भावनिश्चयात् । तत एव न सन्दिग्धासिद्धोऽज्ञातासिद्धो वा । नाप्यन्यतरासिद्धो, वादिप्रतिवादिनोरविवादात् । भिन्नपुरुषप्रतिभासविषयेणाभिन्नेनार्थेन व्यभिचार इति चेन्नैकपुरुषापेक्षया भिन्नप्रतिभासत्वस्य हेतुत्वात् । तथापि क्रमेणैकप्रतिपत्तृभिन्नप्रतिभासविषयेणैकेन वस्तुनानेकान्त इति चेन्न, भिन्नलक्षणत्वस्यैव भिन्नप्रतिभासत्वस्य हेतुत्वात् । भिन्नं हि लक्षणं कार्यकारणयोर्गुणगुणिनोः सामान्यतद्वतोश्च प्रतिभासते । न चैकस्य वस्तुनो भिन्नलक्षणत्वेन प्रतिभासोऽस्ति, येन व्यभिचारः । तत एव न विरुद्धो हेतुः, साकल्येनैकदेशेन वा विपक्षे वृत्त्यभावात् । नापि कालात्ययापदिष्टः, पक्षस्य प्रत्यक्षागमबाधाऽभावात् । कार्यकारणयोर्गुणगुणिनोः सामान्यतद्वतोस्तादात्म्यमभिन्नदेशत्वात् । ययोरतादात्म्यं न तयोरभिन्नदेशत्वम् । यथा सह्यविन्ध्ययोः । अभिन्नदेशत्वं च प्रकृतयोः । तस्मात्तादात्म्यम् । इत्यनुमानेन पक्षस्य बाधेति चेन्न, शास्त्रीयदेशाभेदस्यासिद्धत्वात्, कार्यस्य स्वकारणदेशत्वात् कारणस्यापि स्वान्यकारणदेशत्वात् । एतेन गुणगुणिनोः सामान्यतद्वतोश्च

---

१ अकलङ्कदेवप्रतिपादितभाष्यार्थमित्यर्थ । २ समीचीनयुक्तित. । ३ पदवी, पद्धति स्थानं वा । ४ भेद. । ५ भेद. । ६ हे यौग एकान्तेन यदि सर्वथा भेद इष्यते । ७ चलनादिक्रियाया । ८ तन्त्वाद्यवयवकारणकस्य । ९ संयोगादे । १० मुद्गरादिकारणकस्य । ११ (कर्मवतो, अनित्यगुणवत , पटाद्यवयवाना चेत्यर्थ ) । १२ प्रध्वंसं प्रति घटादिरुपादानकारण, मुद्गरादि सहकारिकारणम् । १३ आकाशादौ । १४ नित्यगुणाश्रयस्याकाशादे । १५ परं सामान्यं सत्ता अपरं तु तदन्तर्हित गोत्वादि । १६ तद्वत्, द्रव्यगुणकर्मत्रिकम् । १७ द्रव्यगुणकर्मणामर्थशब्देन व्यपदेश 'द्रव्यादित्रयमेवार्थ इति काश्यपनिर्णय.' इति वचनात् । त्रिष्वेव सामान्यं वर्तते । १८ क्रिया गमनादिका । १९ तन्तुपटयोर्यथा । २० आकाशतन्महत्वयोर्यथा । २१ अभावो विशेषणरूप , प्रध्वंस । तद्वान् विशेष्य । यथा छिन्नो घट इति । २२ यथा सह्यविन्ध्यौ भिन्नौ भिन्नप्रतिभासत्वात् । २३ अन्यतायाम् । २४ भिन्नप्रतिभासेपि भेदासाधनात् । २५ यत एकस्यैव प्रतिपत्तुर्दूरदेशेन्यथा प्रतिभास समीपे चान्यथेति भेद एकत्रैव । २६ भिन्नलक्षणस्य संबन्धि यद्भिन्नप्रतिभासत्वं भिन्नलक्षणत्वमित्यर्थ । २७ एकस्य वस्तुनो भिन्नलक्षणत्वेन प्रतिभासो नास्ति यत । २८ ('वा' खपुस्तके एव न तु कपुस्तके ) । २९ सर्वथा अभेदे । ३० जैनाशङ्का । ३१ सर्वथा भेद इत्यर्थ । ३२ भेदपक्षस्य । ३३ भेदो द्विधा शास्त्रीयो लौकिकश्च । तत्र क्रमेण दूषणं निराकरोति । ३४ कार्यकारणादे । ३५ ( कार्यस्य पटादे स्वकीयं कारणं तन्तव. । तन्तूनां तु कार्पासादिः । इत्येवं सर्वेषां देशभेद एव शास्त्रापेक्षया ) ।

देशभेदस्य[1] प्रतिपादनात् लौकिकदेशाभेदस्य तु व्योमात्मादिभिर्व्यभिचाराद[2]स्या[3]नुमानस्यासमीचीनत्वात् प्रकृतपक्ष[4]बाधकत्वासंभवात् । कथंचित्तादात्म्य[5]स्य प्रत्यक्षतः प्रतीतेः सर्वथा भेदपक्षस्य बाधेति चेन्न, त[6]द्विरोधात् । तत एव भेदो मा भू[7]दिति चेन्न, भेदस्य पूर्वसिद्ध[8]त्वात् तादात्म्यस्य पूर्वसिद्धेरसिद्धेः । सिद्धौ[9] वा कार्यकारणादिविरोधात् [10]धर्मधर्मित्वाधिकरणाधेयतादिविरोधात् क्रियाव्यपदे[11]शादिभेदविरोधाच्च तयोर्न तादात्म्यं, भेदतादात्म्ययोर्वैयधिकरण्या[12]च्च परस्परविरोधा[13]च्छीतोष्णस्पर्शवत् । तयोरैकाधिकरण्ये संकरव्यतिकरापत्तिः । तदनापत्तौ पक्षद्वयोक्त[14]दोषानुषङ्गः । प्रत्येकं तद्[15]द्विरूपत्वोपगमे वाऽनवस्थानादप्रतिपत्तिरभावश्च । इति वैशेषिकस्य अवयवगुणसामान्यतद्वतां [16]व्यतिरेकैकान्तमात्रशङ्क्य प्रतिविधत्ते,—

एकस्यानेक[17]वृत्तिर्न भागाभावाद्[18]बहूनि वा ।
भागित्वाद्[19]वास्य नैकत्वं दोषो वृत्ते[20]रनार्हते[21] ॥ ६२ ॥

कार्यकारणयोर्गुणगुणिनोः सामान्यतद्वतोश्चान्यत्वमेकान्तेन यदीष्यते तदैकस्य कार्यद्र[22]व्यादेरनेकस्मिन् कारणा[23]दौ वृत्तिरेषितव्या, त[24]दनिष्टौ कार्यकारणभावादिविरोधादकार्यका[25]रणादिवत् । तद्वृत्तिश्चाभ्युपगम्यमाना प्रत्याश्र[26]यमेकदेशेन सर्वात्मना वा स्यात् ? तत्र[27] ए[28]कमनेक[29]त्र वर्तमानं प्रत्यधिकरणं न तावदेकदेशेन, निष्प्रदे[30]शत्वात् । नापि सर्वा[31]त्मना, अवयव्यादिबहुत्वप्रसङ्गात् । यावन्तो ह्यवयवास्तावन्तोऽवयविनः स्युस्तस्य प्रत्येकं सर्वात्मना वृत्तत्वात् । यावन्तश्च संयोग्यादयो गुणिनस्तावन्तः संयोगा[32]दयोनेकस्था[33] गुणाः प्रसज्यन्ते । यावन्तः सामान्यवन्तोर्थास्तावन्ति सामान्यानि भवेयुस्तत एव । अथापि[34] कथंचित्प्रदेशवत्त्वं मन्येतावयव्यादीनां त[35]त्रापि[36] वृत्तिविकल्पोनवस्था च । तथात्रा[37]वयव्या[38]दि सर्वं तदेकमेव न स्यादिति [39]वृत्तेर्दोषोऽनार्हते मते दुर्निवारः । नैकदेशेन [40]वर्तते, नापि सर्वात्मना । किं तर्हि ? वर्तते एवेति चा[41]युक्तं, प्रकारान्त[42]राभावात् ।

---

१ शास्त्रीयस्य । २ यतो व्योमात्मादिषु लौकिकदेशापेक्षया भिन्नदेशत्वाभावेपि तादात्म्याभावः । ३ तादात्म्यसाधकस्य ४ भेदपक्षः प्रकृतः । ५ कार्यकारणादिषु । ६ कथंचित्तादात्म्येन भेदस्य विरोधात् । ७ किंतु तादात्म्यमेवास्तु । ८ कार्यकारणत्वादिभेदस्य सर्वैरप्यभ्युपगमनीयत्वात्पूर्वप्रसिद्धत्वम् । ९ तादात्म्यस्य । १० अयं धर्मोयं धर्मीति वक्तुं न शक्यते तादात्म्याङ्गीकारे सति यतः । ११ इयमस्य क्रियेत्यादिविरोधात् । गुणिनः पटस्य शीतनिवारणक्रिया न तत्कारणतन्तूना नापि च तद्गुणस्य रूपादेरित्येवं च । १२ भेदस्य सर्वथा भिन्नं वस्त्वधिकरणमभेदस्य च सर्वथाऽभिन्नं वस्त्वधिकरणमिति भेदतादात्म्ययोर्वैयधिकरण्यम् । १३ भेदपक्षे संबन्धाभावः । अभेदपक्षे सर्वथैकत्वे सति कार्यकारणादिलविरोधः । यत्र भेदस्तत्र अभेदो न, यत्र चाभेदस्तत्र भेदो नेति च विरोधः परस्परस्य । १४ भेदो भेदरूपोऽभेदरूपश्च । अभेदोपि भेदरूपोऽभेदरूपश्चेति द्विरूपत्वम् । १५ तयोः, भेदतादात्म्ययोः । १६ व्यतिरेको, भेद । १७ अवयव्यादीनां मध्ये यस्य कस्यचिदेकस्य सर्वथा भेदेङ्गीक्रियमाणे स्वारम्भकेषु अवयवा ( तन्तुषु )दिष्वनेकेषु वृत्तिर्न स्यात्, भागाभावात्, निरंशत्वात् । १८ अवयविनो भागित्वमाश्रित्य वृत्तिः स्यादित्युक्ते आह बहूनीति । अवयविनोवयवेषु वृत्तिश्चेत्तर्हि बहूनि कार्याणि स्युः । १९ एकस्यैवावयविनः । २० एकस्यानेकेषु वृत्तेः । २१ मते । २२ अवयव्यादेः । २३ आदिशब्देन गुणिसामान्यवतोर्ग्रहणम् । २४ एकस्य कार्यद्रव्यादेरनेकस्मिन् कारणादौ वृत्त्यनिष्टौ । २५ तन्तुघटयोरथवा मृत्पिण्डपटयोर्यथा कार्यकारणत्वविरोधस्तथा । २६ तन्त्वादिलक्षणमाधारमाधार प्रति । २७ उभयोर्विकल्पयोर्मध्ये । २८ पटादिकार्यद्रव्यम् । २९ अधिकरणे तन्त्वादौ । ३० एकस्यावयव्यादेः । ३१ एकमनेकत्रावयवेषु सर्वात्मनापि न वर्तितुं शक्यम् । ३२ आदिशब्देन विभागद्वित्वादिसंख्यापरत्वापरत्वसामान्यगुणा एव ग्राह्या नतु रूपादयो, रूपादिविशेषगुणाना परैरनेकत्र वृत्तेरनभ्युपगमात् । ३३ अनेकावयवस्थाः । ३४ अपिशब्दोत्र भिन्नप्रक्रमे । तेन कथंचित्प्रदेशवत्त्वमपीति द्रष्टव्यम् । ३५ यदि तर्हीति शेषः । ३६ तन्तुभ्यो भेदेपि पटस्य सांशत्वे कथं तत्र स्वावयवेषु वृत्तिरेकदेशेन सर्वात्मना वेति पुनः पुन क्रियते इति पुन सति वृत्तिविकल्प अनवस्था च स्यात् । अनवस्था, अस्थितिः । ३७ अवयवेषु । ३८ आदिशब्देन गुणः सामान्यं च । एकमेकं यद्वर्तते तदनेकं स्यात् । ३९ प्रवृत्तेः । विकल्पात् । ४० अवयवी अवयवेषु । ४१ हे यौग, तवोक्तम् । ४२ एकदेशेन सर्वात्मना वेति प्रकार मुक्त्वा अन्यस्य प्रकारस्याभावात् ।

ननु च समवाय एव प्रकारान्तरं वर्तते, समवैतीति[1] संप्रत्ययात्, तद्व्यतिरेकेण[2] वृत्त्यर्थासंभवादिति[3] चेन्न, तत्रैव[4] विवादात्। एतदेव हि विचार्यते, किमेकदेशेन समवैति प्रत्याश्रयं सर्वात्मना वाऽवयवादिष्ववयव्यादिः? गत्यन्तराभावादिति। तत्र[5] च निगदितो दोषः। तदेवं कार्यगुणसामान्यानां स्वाश्रयेभ्यो[6] विवादापन्नेभ्यो नैकान्तेनान्यत्वं, तत्र[7] वृत्त्युपलब्धेः। यस्य तु यतोन्यत्वैकान्तस्तस्य तत्र न वृत्त्युपलब्धिः। यथा हिमवति विन्ध्यस्य। वृत्त्युपलब्धिश्चावयव्यादेः स्वाश्रयेषु। तस्मान्नैकान्तेनान्यत्वम्। इत्यनुमानेन[8] तन्नानात्वपक्षस्य[9] बाधितत्वात् कालात्ययापदिष्टो भिन्नप्रतिभासत्वादिति हेतुः[10]। नन्विदमनुमानमसम्यक्, स्थाल्या दध्नानैकान्तिकत्वात् ततोन्यस्यापि दध्नस्तत्र वृत्त्युपलब्धेः। [11]संयोगो हि वृत्तिरर्थान्तरभूतयोरेव प्रतीयते नान्यथेति[12] न मन्तव्यं, संयोगिनोः[13] संयोगपरिणामात्मनोः सर्वथान्यत्वासिद्धेरन्यथा तदभावप्रसङ्गात्[14]। ताभ्यां[15] भिन्नस्य संयोगस्योत्पत्तौ हि कथमेकस्य[16]ान्यत्र[17] संयोग इति व्यपदेशो यतः स[18] एव वृत्तिः स्यात्? ताभ्यां[19] तस्य[20] जननात्तथा[21] व्यपदेश इति चेन्न, कर्मणा[22] कालादिना च तज्जननात्तथा व्यपदेशप्रसङ्गात्[23]। तयोः समवायिकारणत्वा[24]त्तस्य[25] तथा[26] व्यपदेश इति चेत्कुतः समवायिकारणत्वं तयोरेव न पुनः कर्मादेरिति[27] नियमः? इह संयोगिनोः संयोग इति प्रत्ययात्तत्र तस्य समवायसिद्धेरिति[28] चेत्स तर्हि समवायः पदार्थान्तरं[29] कथमत्रैवेहेदमिति[30][31] प्रत्ययं कुर्यान्न पुनः कर्मादिषु[32] भेदाविशेषेपीति न बुद्ध्यामहे। तैरेव समवायिभिर्[33] विशेषणविशेष्यभावसिद्धेः[34] समवायस्य तत्रैवेहेदमिति प्रत्ययोत्पत्तिर्न तु कर्मादिषु, तदसिद्धेरिति[35] चेत् स[36] एव कुतः सर्वत्र[37] न स्यात्?

तादृगदृष्टविशेषनियमादिति चेत् किं विशेषणविशेष्यभावेन समवायेन संयोगेन वा? तादृगदृष्टविशेषादेव समवायविशिष्टाः[38] समवायिन[39] इति प्रत्ययस्येहेदमिति[40] विज्ञानस्यात्रेदं संयुक्तमिति बुद्धेश्च जननप्रसङ्गात्। सर्वस्य वा प्रत्ययविशेषस्यादृष्टविशेषवशवर्तित्वसिद्धेः किं पदार्थभेदप्रभेदपरिकल्पनया? इति[41] विज्ञानवादप्रवेशः स्यात्, तस्यैवादृष्टविशेषत्वसिद्धेः[42][43], चेतना[44] कर्मेति विज्ञानवादिभिरपि प्रतिपादनात्। तेषां[45] वासनाविशेष एव ह्यदृष्टम्। स[46] च पूर्वविज्ञानविशेषः[47]। इति न विज्ञानमात्राददृष्टमन्यत् स्यात्।

---

१ अवयवादिष्ववयवी समवैतीति सबन्धात्। २ समवायव्यतिरेकेण। ३ वृत्ते', वर्तनशब्दस्य। अर्थ, प्रयोजनम्। तस्यासमवात्। ४ समवाये। ५ पक्षद्वयेपि। ६ अवयविगुणिसामान्यवदर्थेभ्य। ७ तेषां कार्यगुणसामान्यानाम्। ८ केवलव्यतिरेक्यनुमानेन। ९ तेषामवयवावयव्यादीनामन्योन्यम्। १० पूर्वकारिकायां कथित.। ११ जैन. प्राह, भो यौग, इति पूर्वोक्तं त्वया न मन्तव्यम्। उभाभ्यां सबन्ध संयोग' कथ्यते। १२ अन्यथा, अनर्थान्तरभूतयोः। १३ स्थालीदध्नो। १४ तस्य, संयोगस्य। १५ ननु सयोगिनो सर्वथा भेदे संयोगाभाव इत्ययुक्तं यावता ताभ्या भिन्नस्य संयोगस्योत्पत्तेरित्युक्ते आह। १६ दध्न। १७ स्थाल्याम्। १८ संयोग। १९ संयोगिभ्याम्। २० संयोगस्य। २१ अनयो संयोग इति। २२ उत्क्षेपणादिना (यौगाभिमतेन)। २३ स्थाल्या कर्मण कालादेर्वायं संयोग इति। २४ संयोग प्रति। २५ संयोगस्य। २६ अनयोः संयोगिनोरयं संयोग इत्येवम्। २७ संयोगं प्रति समवायिकारणत्वं कर्मादेर्नेति। २८ इति हेतो' संयोगिनोर्दधिस्थाल्यो' समवायिकारणत्वमिति यौगेनोक्ते जैन. प्राह। २९ संयोगिभ्या समवायिरूपाभ्या भिन्न. पदार्थ। ३० सयोगसयोगिष्वेव। ३१ सयोगलक्षणम्। ३२ समवायस्य भेदाविशेषात्। ३३ सयोगिभि। ३४ सयोगसमवायवन्तावेतौ सयोगसंयोगिनाविति। पटसमवायवन्तस्तन्तव इति वा। ३५ तस्य, विशेषणविशेष्यभावस्य। ३६ विशेषणविशेष्यभाव.। ३७ कर्मादिष्वपि। ३८ विशेषणविशेष्यभावोयम्। ३९ तन्तवो यथा पटस्य। ४० तन्तुषु पठ. समवाय इति। ४१ इति सति हे यौग, तव। ४२ विज्ञानाद्वैतस्यैव। ४३ विज्ञनमेवादृष्टमित्यर्थ.। ४४ चतना, विज्ञानम्। कर्म, अदृष्टम्। ४५ विज्ञानवादिनाम्। ४६ वासनाविशेष.। ४७ विशेषशब्देन समनन्तरं पूर्वज्ञानमालक्ष्यते समनन्तरस्य पूर्वविज्ञानस्य प्रबोधकत्वेन वक्ष्यमाणत्वात्।

ननु च नाप्रवुद्धा वासना प्रत्ययविशेषं[1] प्रसूते सकृत्[2]सर्वप्रत्ययविशेषप्रसङ्गात्[3] । प्रवुद्धा तु तमुपजनयन्ती प्रबोधकहेतूनपेक्षते । ते च बहिर्भूता, एवार्थाः । इति न विज्ञानमात्रं तत्त्वमनुपज्यते इति चेन्न[4], विज्ञानविशेषादेव वासनाप्रबोधस्य सिद्धेः, तदभावे[5] बहिरर्थस्य सत्ता[6]मात्रेण तद[7]हेतुत्वादन्यथा[8]तिप्रसङ्गात्[9] । न च नीलादिविज्ञानादेव तद्वासना[10]प्रबोधस्तत्प्रबोधादेव नीला[11]दिज्ञानमिष्यते, यतः परस्पराश्रयः स्यात्[12], तद[13]धिपतिसमनन्तरादिविज्ञानानामेव नीलादिज्ञानजनकानां तद्वासनाप्रबोधकत्वात् तद्वासनानामपि तत्का[14]रणविज्ञानेभ्यः प्रबोधोपगमात् । इत्यनादिरयं वासनासरित्परिपतितस्तत्प्रबोधप्रत्ययसार्थस्तद्विज्ञान[15]प्रवाहश्च । इति किं बहिरर्थैः ? कल्पयित्वाप्येतान्[16]विज्ञानानि प्रतिपत्तव्यानि, तैर्विना[17] तद्व्यवहार[18]ासिद्धेः । सत्सु च तेषु बहिरर्थाभावेपि स्वप्नादिषु तद्व्यवहार[19]प्रतीतेरलं वाह्यार्थाभिनिवेशेन । ततो[20] बहिरर्थं व्यवस्थापयितुमनसा[21] नादृष्टमात्रनिमित्तो विशेषणविशेष्यत्वप्रत्ययोनुमन्तव्यः, तस्य[22] द्रव्यादिप्रत्ययवद्[23]बहिरर्थविशेषविषयत्वस्यावश्यमाश्रयणीयत्वात्[24] । तथा च[25]ानवस्थानात्[26] कुतः संयोगिभ्यां संयोगोर्थान्तरभूतः समवायवृत्त्या तयो[27]रिति व्यपदिश्येत ? स[28] एव च स्थाल्यां दध्नो वृत्तिरिति[29] न तेनानैकान्तिको हेतुः[30] स्यात् । तत[31] एव न विरुद्धः, सर्वथार्थान्तरभूत[32]स्य क्वचिद्[33]वृत्त्युपलब्धेरभावात् । ततो निरवद्यमिदमनुमानं भेदपक्षस्य बाधकम् । इति तत्र[34] प्रवर्तमानो हेतुः[35] कालात्ययापदिष्ट एव, प्रत्यक्षविरुद्धत्वाच्च पक्षस्या[36]वयवा[37]वयव्यादीनां कथंचित्तादात्म्यस्यैव साक्षात्करणात् । नन्वेवमपि[38] वृत्तेर्दोषो यथोपवर्णितः स्याद्वादिनां प्रसज्यते इति चेन्नायं प्रसङ्गोनेकान्ते, कथंचित्तादात्म्याद्वेद्यवेदकाकारज्ञानवत् । यथैव हि ज्ञानस्य वेद्यवेदकाकाराभ्यां तादात्म्यमशक्यविवेचनत्वात् किमेकदेशेन सर्वात्मना वेति विकल्पयोर्न विज्ञानस्य सावयवत्वं बहुत्वं वा प्रसज्यतेनवस्था वा, तथावयव्यादेरप्यवयवादिभ्यस्तादात्म्यमशक्यविवेचनत्वादेव नैकदेशेन प्रत्येकं सर्वात्मना[39] वा यतस्ताथागतः सर्वथा भेदे इवावयवावयव्यादीना कथंचित्तादात्म्येपि वृत्तिं दूषयेत् ।

एतेन[40] वैशेषिकोपि न कथंचित्तादात्म्ये वृत्तिविकल्पादि[41]दूषणमापादयितुमीशः, सामान्यविशेषवत्[42]तत्र[43]

---

१ नीलमिदमित्यादिकम् । २ अन्यथेति शेष । ३ वासनाऽप्रवुद्धत्वाविशेषात् । ४ सौगत आह, इति यौगोक्तं न सम्यक् । ५ तस्य, विज्ञानविशेषस्य । ६ वासनाप्रबोधं प्रति । ७ तस्य, प्रबोधस्य । ८ तदभावेपि बहिरर्थस्य सत्तामात्रेण वासनाप्रबोधहेतुत्वं यदि तर्हि । ९ पिशाचपरमाण्वादेरपि वासनाप्रबोधहेतुत्वप्रसङ्गात् । १० तस्य, नीलादिविज्ञानस्य । ११ नीलादेरर्थस्य । १२ हे यौग । १३ नेष्यते, कुतः ? इत्याह । तस्य, नीलादिज्ञानस्याधिपतिश्चक्षुरादिनिर्विकल्पकज्ञानम् । समनन्तराणि च तानि चादिविज्ञानानि चेति । १४ अधिपतिसमनन्तरादिकारणप्राक्तनविज्ञानेभ्यः । १५ तस्य, वासनाप्रबोधस्य । १६ बहिरर्थान् । १७ विज्ञानै । १८ तस्य, बहिरर्थस्य । १९ तस्य, बहिरर्थस्य । २० विज्ञानवादप्रवेशो यतः । २१ त्वया यौगेन । २२ विशेषणविशेष्यत्वप्रत्ययस्य । २३ यथा द्रव्यादिप्रत्ययस्य बहिरर्थविशेषविषयत्वम् । २४ यौगै. । २५ आश्रयणीयत्वे च । २६ संयोगसयोगिनोः स्वसमवायो न विशेषणविशेष्यभावः समायाति । स च स्वसंबन्धिभ्यो भिन्न एवेति स्वसंबन्धिसिद्ध्यर्थं संबन्धान्तरमपेक्षते । तच्च तदन्तरमित्यनवस्था । ततो विशेषणविशेष्यभावः संयोगिसंयोगसमवायै स्वसंबन्धिभिरसवद्ध संबन्धरूपो न भवति तदसंभवे समवायोपि न तथाविधः सभवति । ततश्च, तद्वशात् संयोगिनोरयं संयोग इति कथं कथ्यते इति भावः । २७ संयोगिनोः । २८ संयोगः । २९ वृत्तित्वेनाभ्युपगनसयोगस्यैव निराकृतत्वादित्यभिप्रायः । ३० वृत्त्युपलब्धेरिति हेतुः । ३१ यतो नानैकान्तिकः । ३२ कार्यस्य । ३३ कारणान्तरे तन्त्वादौ । ३४ सर्वथा भेदे । ३५ भेदसाधको भिन्नप्रतिभासत्वादिति हेतुः । ३६ अवयवावयव्यादिभेदपक्षस्य । ३७ कुतः प्रत्यक्षविरोधः ? इत्याह । ३८ बौद्धाशङ्का । ३९ इति विकल्पयो सतोरवयव्यादेः सावयवत्वं ( साशत्वम् ) बहुत्वमनवस्था च न प्रसज्यते इति पूर्वोक्तमत्रापि संबन्धनीयम् । ४० कथंचित्तादात्म्ये ताथागतस्य वृत्तिविकल्पदूषणासामर्थ्यनिरूपणेन । ४१ विरोधादिदोषा आदिशब्देन गृह्यन्ते । ४१ सामान्यमेव विशेषस्तयोरन्योन्यं तादात्म्यं यथा । ४२ कथंचित्तादात्म्ये ।

तदनवकाशात् । न ह्यपरसामान्यं व्यावृत्तिबुद्धिहेतुत्वाद्विशेषाख्यामपि लभमानमपह्नोतुं शक्यं, तस्य सामान्यैकरूपत्वेऽपरविशेषाभावप्रसङ्गात्, तदपरविशेषरूपत्वेऽपरसामान्याभावापत्तेः, तदुभयरूपत्वे सामान्यविशेषरूपयोः कथंचित्तादात्म्यस्यैवाभ्युपगमनीयत्वात्, तदेकार्थसमवायस्य कथंचिदेकद्रव्यतादात्म्यादपरस्यासंभवात्, सामान्यस्यैवानुवृत्तव्यावृत्तप्रत्ययहेतुत्वेन सामान्यविशेषोभयाकारस्येष्टत्वाच्च । न तयोराकारयोरन्यत्रैकार्थे समवायः परस्परं वा शक्यो वक्तुं, यतस्तद्वदवयवावयव्यादीनां कथंचित्तादात्म्यं वृत्तिः प्रकृतदूषणोपद्रुता स्यात्[13] । किं चावयवादिभ्योवयव्यादीनामत्यन्तभेदे[14] देशकालाभ्यामपि भेदः स्यात् ।

देशकालविशेषेपि[15] स्याद्वृत्तिर्युतसिद्धवत्[16] ।
समानदेशता न स्यान्मूर्तकारणकार्ययोः । ६ ।

नन्वात्माकाशयोरत्यन्तभेदेपि देशकालाभ्यां भेदाभावान्न ततः कार्यकारणादीनां तद्भेदः सिध्यति, यतो युतसिद्धवद्वृत्तिः स्यादिति चेन्न, तयोरपि सद्द्रव्यत्वादिना भेदाभावादत्यन्तभेदासिद्धेरभिन्नदेशकालत्वाविरोधात् । परस्यापि सर्वमूर्तिमद्द्रव्येषु युगपत्संयोगवृत्तेरभ्युपगमात् तयोरत्यन्तभेदानिष्टेर्देशकालाभ्यामभेदाविरोधे[23] तथैवावयवावयव्यादेस्ताभ्यामभेदोस्त्वविरुद्धः । स च कथंचिदभेदसाधनः स्यात् । न[25] चासौ विधास्यते, अपसिद्धान्तप्रसङ्गात् । तस्मादङ्गाङ्ग्यादेरत्यन्तभेदात् तद्देशकालविशेषेणापि वृत्तिः[28] प्रसज्येत घटवृक्षवत् । वर्णादिभिरनैकान्तिकत्वमित्ययुक्तं, तद्व्यतिरेकैकान्तानभ्युपगमात्[32] । यथैव हि वर्णरसगन्धस्पर्शाना स्वाश्रयादत्यन्तभेदो नेष्टो दृष्टो वा तथा परस्परतोपीति । नाप्येतैः[34] पक्षैकदेशैरभिर्व्यभिचारो नामातिप्रसङ्गात् । यदि पुनः कार्यकारणादीना समानदेशकालत्वमुररीक्रियते तथैव सिद्धान्तावधारणादिति मतं तदाप्यवयवावयविनोः समानदेशे[38] वृत्तिर्न भवेत्, मूर्तिमत्त्वात्खरकरभवत्, मूर्तयोः समानदेशत्वविरोधात् । वातातपयोः समानदेशत्वदर्शनादविरोध इति चेन्न, तयोः स्वावयवदेशयोरवयविनोरभ्युपगमात् । तन्तुपटयोरपि स्वावयवदेशत्वात्समानदेशत्वाभावो न दोष इति चेन्न, परमा-

---

१ तस्य, वृत्तिविकल्पादिदूषणस्य । २ व्यावृत्तिबुद्धिं प्रति । ३ अपिशब्दात्सामान्याख्यामपि । ४ अन्यथेति शेष । ५ द्रव्यत्वादिकमपरमल्पविषयत्वात् तद्व्यावृत्तेरपि हेतुत्वात् विशेषाख्यामपि लभते इति परै स्वयमेवाभिधानात् । घटे यथा घटत्वं तद्व्यावृत्तं पटत्वमपरविशेषः । ६ तस्य, अपरसामान्यस्य । अपरसामान्यमेव यो विशेष । ७ अपरसामान्यस्य सामान्यविशेषरूपत्वे । ८ ननु च तादात्म्यस्यैवाभ्युपगमनीयत्वं कथम् ? यावता सामान्यविशेषरूपयोरेकत्रार्थे समवायो भविष्यति न तु तादात्म्यमिति शङ्कायामाह । तत्, तयो सामान्यविशेषयो । ९ समवायस्य । १० भिन्ने तृतीये कस्मिंश्चित्पदार्थे । ११ सामान्याकारे विशेषाकारस्य विशेषाकारे सामान्याकारस्य च समवायः परस्पर समवाय । १२ वृत्तिविकल्पादि प्रकृतं दूषणम् । १३ अवयवावयव्यादयो देशकालाभ्या भिन्ना अत्यन्तभिन्नत्वात् । १४ अङ्गीक्रियमाणे । १५ विशेषो, भेद । १६ पृथगाश्रयाश्रयिघटपटवत् । १७ नन्ववयवावयव्यादीनामेकस्मिन्नवस्थान ( समानदेशता )-मभ्युपगच्छाम इत्युक्ते आह । समानदेशता, एकदेशकालता । १८ अवयवावयविनो. । १९ यौगशङ्का । २० ताभ्यां, देशकालाभ्याम् । २१ आत्माकाशयो. । २२ वैशेषिकस्यापि देशकालाभ्याममेदो भविष्यतीत्याशङ्कायामाह । २३ अङ्गीक्रियमाणे । २४ आत्माकाशप्रकारेण । २५ कथञ्चिदभेद एवास्त्विति यौगेनोक्ते आह जैन. । २६ यौगै । २७ अवयवावयव्यादेरभेदो नेष्यते यस्मात् । २८ भेदवृत्ति । २९ रूपरसगन्धस्पर्शै. । ३० अत्यन्तं भिन्नत्वादित्यस्य हेतो । ३१ तेषां वर्णादीनाम् । ३२ ( जैनै ) । ३३ मातुलिङ्गादिद्रव्यात् । ३४ वर्णरसगन्धस्पर्शै । ३५ पक्षीकृतैर्गुणगुण्यादिभि सहैकदेशस्वरूपैः । पक्षान्त.पातिभिरित्यर्थ । ३६ क्षित्यादि धीमद्धेतुकं कार्यत्वादित्यस्योत्पन्नपक्षैकदेशात्मसु तृणपर्वतादिषु धीमद्धेतुकत्वलक्षणसाध्याभावेपि सत्त्वात्तृणपर्वतादिभिर्व्यभिचारप्रसङ्गात् । ३७ यौगस्य । ३८ एकदेशेनाभ्युपगतो यथा तथात्र वर्णादिषु पक्षैकदेशात्मसु देशकालाभ्याम् । ३९ सन्दिग्धानैकान्तिकत्वं परिहरन्नाह । मूर्तयोरवयवावयविनो । ४० निश्चितानैकान्तिकत्वे सत्याह । ४१ स्वावयवा एव देशो ययो । ४२ परमाणूनां निरवयवत्वाद्भिन्नदेशत्वाभाव. ।

णुद्व्यणुकयोर्भिन्नदेशत्वाभावात्समानदेशत्वमपि न भवेदिति दोषोद्भावनात् । द्व्यणुकस्य परमाणुदेशत्वात्परमाणोरनंशस्याप्याश्रयान्तरस्थत्वात्तयोरसमानदेशतैवेति चेन्न, तथा लौकिकदेशापेक्षया समानदेशत्वोपगमस्य प्रसङ्गात् । स च मूर्तयोर्न भवेदिति सूक्ष्ममेव दूषणम् । कथमेवमनेकान्तवादिनामेकाकाशप्रदेशेऽसंख्येयादिपरमाणूनामवस्थानं न विरुध्यते इति चेत्, तथावगाहनविशेषादेकत्वपरिणामादिति ब्रूमहे । नह्येकं मूर्तिमद्द्रव्यमेकत्र देशेवतिष्ठमानं विरुद्धं नाम, अतिप्रसङ्गात् । संयोगमात्रेण तु स्थितानामेकत्वपरिणामनिरुत्सुकानां नैकाकाशप्रदेशेवस्थानमवगाहनविशेषाभावादनेकाकाशप्रदेशवृत्तित्वसिद्धेः । इति स्याद्वादिनां न किंचिद्विरुद्धम् । स्यान्मतम्,

आश्रयाश्रयिभावान्न स्वातन्त्र्यं समवायिनाम् ।
इत्ययुक्तः स संबन्धो न युक्तः समवायिभिः । ६ ।

समवायेन कार्यकारणादीनां परस्परं प्रतिबन्धात् कुतः स्वातन्त्र्यं यतो देशकालादिभेदेन वृत्तिरिति चेत्, स तर्हि समवायिषु समवायान्तरेण वर्तते स्वतो वा ? समवायस्य समवायान्तरेण वृत्तावनवस्थाप्रसङ्गात्, स्वतो वृत्तौ द्रव्यादेस्तथोपपत्तेः समवायवैयर्थ्यात् कार्यकारणादीनां कुतः प्रतिबन्धः ? यदि पुनरनाश्रितत्वात् प्रतिबन्धान्तरानपेक्षं इष्यते तदाप्यसंबद्धः समवायः कथं द्रव्यादिभिः सह वर्तेत, यतः पृथक्सिद्धिर्न स्यात् ? तस्मादयुक्तः संबन्धो न युक्तः समवायिभिः । न ह्यप्रतिबद्ध एव समवायिभिः समवायः संबन्धो युक्तिमान्, कालादेरपि संबन्धत्वप्रसङ्गात् । संबद्ध एव हि स्वसंबन्धिभिः संयोगः संबन्धो दृष्टस्तस्य तैः कथंचित्तादात्म्यसंबन्धात् । समवायोपि विशेषणविशेष्यभावसंबन्धात्समवायिभिः संबद्ध इति चेन्न, तस्यापि विशेषणविशेष्यभावान्तरेण स्वसंबन्धिभिः संबन्धेनवस्थाप्रसङ्गात्, अन्यथा संबन्धत्वविरोधात् । तस्य संबन्धिभिः कथंचित्तादात्म्ये कार्यकारणादीनामपि तदेवास्तु । किं समवायेन पदार्थान्तरभूतेन सत्तासामान्येनेव कल्पितेन ? फलाभावात् ।

---

१ यत्प्रतिपाद्यते तन्न भवति । २ पुनर्योगः । ३ आकाशमाश्रयान्तरम् । ४ आहात्र जैन. । परमाणुद्व्यणुकयोः शास्त्रीयदेशभेदो नास्ति यद्यपि तथापि लौकिकदेशभेदोभ्युपगतो यथा तथा समानदेशत्वमप्यस्तु कार्यकारणयोः । ५ अस्त्वेवमित्युक्ते आह जैन. । ६ कार्यकारणयो । ७ कार्यकारणयो । ८ भो जैन, मूर्तयो समानदेशे वृत्थभावप्रतिपादनप्रकारेण । ९ स्कन्धरूपाणामसंख्यातपरमाणूना मूर्तानामप्येकाकाशप्रदेशे वर्तनं सभवतीति जैनाः । १० स्कन्धरूपेण । ११ वयं जैना । १२ असख्येयपरमाणुरूपम् । १३ आकाशस्य । १४ जललवणभूतिसूचिकादीना क्रमेणैकत्रावस्थानं सभवति, न च तथा स्यादित्यतिप्रसङ्गः । १५ परमाणूनाम् । १६ केषाचित्तु स्कन्धाकारपरिणतानां परमाणूना समानदेशत्वमितरेषामसबद्धाना तु भिन्नदेशत्वमिति । १७ यौगानाम् । १८ आश्रयभावोवयवादीनामाश्रयिभावस्त्ववयव्यादीनाम् । १९ भेद. । २० तन्तुपटादीनाम् । २१ इति, इति चेत्तर्हि । अग्रे अयुक्त इत्यादिना दूषणमाह । २२ समवायलक्षण. सबन्ध. समवायिभि सहासबद्धत्वादनुपपन्नो गगनादिवद्यस्मात्तस्मादित्यर्थः । २३ पूर्वपक्षं विवृण्वन्नाह निराकरणम् । २४ समवाय । २५ समवायिषु, तन्तुपटादिषु । २६ यथा समवायस्य समवायिषु वृत्तिः स्वतस्तथा समवायिनामपि परस्परमिति । २७ सामान्यमित्यादिकारिकाव्याख्यानम् । २८ समवायस्यानाश्रितत्ववचनेपि षण्णामाश्रितत्वमन्यत्र नित्यद्रव्येभ्य इति वैशेषिकग्रन्थो न विरुध्यते एव तत्रापि तस्योपचारादाश्रितत्वकथनात् । तथा च समनन्तरं निवेदयन्ति ग्रन्थकाराः । २९ समवाय । ३० समवायिभिः । ३१ कार्यकारणादीनाम् । ३२ पृथक्सिद्धिर्भवेद्यत. । ३३ घटमानः । ३४ अनाश्रित । ३५ अन्यथेति शेष. । ३६ अप्रतिबद्धत्वाविशेषात् । समवायिभि. सह । ३७ संयोगस्य । ३८ स्वसंबन्धिभिः । ३९ सयोगपरिणामात्मकत्वादित्यर्थ । ४० विशेषणविशेष्यभावान्तरेण विना स्वयमेव स्वसंबन्धिभि सह संबन्धे सति । ४१ यौगेनाङ्गीक्रियमाणे । ४२ तादात्म्यम् ।

प्रागसतः सत्तासमवायात् कार्यस्योत्पत्तेः सफलमेव तत्[1]परिकल्पनमिति चेन्नानुत्पन्न[2]स्य सत्तासमवायासंभवात्, उत्पन्नस्यापि तद्[3]वैयर्थ्या[4]त्, स्व[5]रूपलाभस्यैव स्वरूपसत्तात्मकत्वा[6]त्, स्व[7]रूपेणासतः सत्तासंबन्धेतिप्र[8]सङ्गात् । यदि पुनरुत्पद्यमानमेव कार्यं सत्तासमवायीष्यते, प्रागस[9]तः सत्तासमवाय उत्पाद इति वचनात्, केव[10]लस्य समवायस्य सत्तासामान्यवन्नित्यत्वादुत्पाद इति ज्ञानाभिधानाहेतुत्वादिति म[11]तं तदा,—

सामान्यं समवायै[12]श्चाप्येकै[13]कत्र समाश्रितः ।
अन्तरेणाश्रयं न स्या[14]न्नाशोत्पादि[15]षु को [16]विधिः ॥ ६ ॥

येषां[17] परमार्थतः सामान्यस्याश्रितत्वमुपचारात्समवायस्य समवायिषु तत्राप्रतिबद्धत्वादसंब[18]द्धत्वं, तदुपचा[19]रनिमित्तं तु समवायिषु सत्सु तस्येहेदमिति प्रत्ययकारित्वमिति मतं तेषां प्र[20]त्येकं परिसमा[21]प्ते-राश्रयाभावे सामान्यसमवाययोरसंभवादुत्पत्तिविपत्तिमत्[22]सु कथं वृत्तिः ? क्वचिदेकत्र नित्यात्मन्याश्रये सर्वात्मना वृ[23]त्तं सामान्यं समवायश्च ता[24]वत् । 'उत्पि[25]त्सुप्रदेशे प्राग्नासीदना[26]श्रितत्वप्रसङ्गात्, नान्यतो याति सर्वात्मना पूर्वा[27]धारापरित्यागादन्यथा तदभावप्रसङ्गात्, नाप्येकदेशे[28]न, सांशत्वा[29]भावात्, स्वयमेव प[30]श्चाद्भ[31]वति स्वप्रत्य[32]यकारित्वात्, आश्रयविनाशे च न नश्यति नित्यत्वात्, प्र[33]त्येकं परिसमाप्तं च' इति व्या[34]हतमेतत् । स्यान्मतं 'सत्तासामान्यं तावद्द्रव्या[35]दिषु प्रत्येकं परिसमाप्तं, सत्प्रत्ययाविशेषात् । सर्वत्रास्ति च, सत्प्रत्ययाविच्छेदात् । समवायोपि स[36]र्वत्र विद्यते, समवायिना शश्वदविच्छेदान्नित्याना, जन्म[37]विनाशवतां तु केषांचिदुत्पित्सुदेशेषूत्पद्यमानानामेव सत्तासमवायित्वसिद्धेः 'निष्ठा[38]संबन्ध-

---

१ तस्य, सत्तासामान्यस्य । २ कार्यस्य । ३ तस्य, सत्तासमवायस्य । ४ कुतस्तद्वैयर्थ्यमित्याह । ५ उत्पन्नकार्यस्येत्यर्थ । ६ पदार्थान्तरभूता काचित्स्वरूपसत्ताया' सत्ता नास्तीत्यर्थ । ७ स्वरूपेणासत कार्यस्य सत्तासमवायात्सबन्धो भविष्यतीति कथ तद्वैयर्थ्यमित्याशेकायामाह । ८ खरविषाणादीनां सत्तासबन्धप्रसङ्गात् । ९ कार्यस्य । १० सत्तासमवाय उत्पाद इत्येतदेवास्ताम् । किमनेन प्रागसत इति विशेषणेन ? इत्याशङ्कायामाह केवलस्येति । ११ यौगस्य तव । १२ चशब्दोयं भिन्नप्रक्रम इवार्थ । तेन सामान्यमित्यस्यानन्तरं द्रष्टव्य । ततोयमर्थ प्रतिपादितो भवति सामान्यमिवेति । सामान्यं यथाऽऽश्रयमन्तरेण न स्यात्तथा समवायोप्याश्रयमन्तरेण न स्यात्, नित्यव्यक्तिषु प्रत्येकं सामान्यसमवाययो परिसमाप्तत्वादित्यर्थं । १३ एकैकासु नित्यव्यक्तिषु । १४ ततश्चेति शेष । १५ अनित्येषु कार्येषु । १६ कथं सत्त्ववर्तनमित्यर्थ. । १७ वैशेषिकाणाम् । सामान्यस्य समवायेन सबन्धत्वात्परमार्थत आश्रितत्वं समवायस्य समवायान्तरेण सबन्धाभावादुपचरिताश्रितत्वं यौगैर्मन्यते । १८ समवायस्योपचारादाश्रितत्व समवायिषु यतस्तस्मादप्रतिबद्धत्वमाश्रित्य समवायस्यासंबद्धत्वमस्तीति भावार्थ । १९ समवायस्याश्रितत्वोपचारनिमित्तम् । २० नित्यद्रव्येषु । २१ सामान्यसमवाययो । २२ अनित्येषु कार्येषु । २३ परिसमाप्तम् । २४ यौगमते । २५ उत्पद्यमानघटादिप्रदेशे । उत्पित्सुप्रदेशे प्राग्नासीदिति यौगो वक्ति आकारादिकाच्च सर्वात्मनैकदेशेन वा न यातीति च वक्ति । इत्येतद्विरुद्धम् । स्वयमेव पश्चाद्भवति आश्रयविनाशे च न नश्यतीति च विरुद्धम् । प्रत्येक परिसमाप्तमिति वक्ति एकदेशेन सर्वात्मना च न वर्तते इति च विरुद्धमिति भाव' । २६ अन्यथेति शेष । २७ पूर्वाधारो नित्यं द्रव्यम् । २८ यातीति संबन्ध' । २९ सामान्यसमवाययो । ३० तदुत्पत्त्यनन्तरम् । ३१ उत्पित्सुप्रदेशे । ३२ नित्यद्रव्यादात्माकाशादे । ३३ प्रत्याश्रयम् । ३४ ( इति, पूर्वोक्तं परस्परविरुद्धं वचो व्याहतम् । 'न याति न च तत्रास्ते न पश्चादस्ति नाशवत् । जहाति पूर्वं नाधारमहो व्यसनसन्तति ॥' इत्यत्र दर्शितदोषसमत्वमेवात्रापि ज्ञेयम् )। उत्पित्सुदेशे प्रागित्यादि योज्यमुपरित । ३५ आदिपदेन गुणकर्मणोर्ग्रहणम् । ३६ समवायिषु । ३७ अनित्याना समवायित्वं कथमित्युक्ते आह । ३८ कार्योत्पादसमवाययोरित्यर्थ ।

योरेककालत्वात्' इति वचनात्। प्रकृत[1]दूषणानवकाशः, [2]सत्तासमवाययोः प्राग[3]सत्त्वाभावात् तत्र[4]ान्यतश्चा-[5]गमनस्य सर्वात्मनैकदेशेन वानभ्युपगमात् पश्चाद्[6]भवनानिष्टेः [7]शाश्वतिकत्वाच्च' इति[8] तदेतदपि व्याहततरं, सर्वगतस्य सामान्यस्य समवायस्य चैकस्य स्वाश्रयेषु[9] प्रत्येकं परिसमाप्तेरसंभवात् [10]तद्बहुत्वापत्तेराश्रयस्व-रूपवत्। न च सर्वत्राविच्छेदात्तदेक[11]त्वं, [12]तदसिद्धेः प्रागभावा[13]दिषु सत्तासमवायासंभवाद्विच्छेदोपलम्भात्। प्रागभावादीनां सर्वदा [14]भावविशेषणत्वान्न तत्र तद्विच्छेद इति चेन्न[15]ैवमभावस्यापि सर्वगतत्वैकत्वप्रसङ्गात्, सर्वत्रासत्प्रत्ययाविशेषादविच्छेदाविशेषाच्च। यथैव हि द्रव्यादिषु सत्प्रत्ययोऽविशिष्टस्तथा पररूप[16]तोऽ-सत्प्रत्य[17]यश्च। यथा चाभाव[18]स्य शश्वद्भाव[19]परतन्त्रत्वं तथा भावस्याभावे[20]परतन्त्रत्वमपि [21]तदविच्छेदसाधनं, पररूपेणासत एव भावस्य प्रतीतेरन्यथा सर्वसाङ्कर्यप्रसङ्गाद्भावविशेषै[22]र्व्यवस्थितिविरोधात्। [23]नन्वभाव-स्यैकत्वे कार्यस्य जन्म[24]नि प्रागभावाभावे प्रध्वंसेतरेतरात्यन्ताभावानामप्यभावप्रसङ्गादनन्त[25]त्वसर्वात्मकत्वा-त्यन्ताभावापत्तिः। प्रध्वंसस्य चाभावेनुत्पन्न[26]स्य कार्यस्य प्राग[27]भावस्याप्यभावादनादित्वप्रसङ्ग[28]ः प्राक् पश्चा-दितरेतरात्यन्तविशेष[29]णानुपपत्तिश्च [30]तदभेदात्। इति कश्चित्[31] तस्यापि कथं सत्त्वैकत्वे समवायैकत्वे च [32]कस्यचित्सत्तासमवाये[33] [34]सर्वस्य स न भवेत्? तथा [35]सति भावस्योत्पत्तेः प्रागपि प्रध्वंससमयेप्यभावान्त[36]रेपि चात्यन्तसत्त्वसिद्धेः कुतः प्रागभावादिभेदस्य व्यवस्था [37]स्यात्? प्रत्ययविशेषात्तद्व्यवस्थायां सत्तासमवायस्य भेदव्यवस्थास्तु तत एव। न हि प्रध्वंसात्प्राक्कार्यस्य सत्तासमवा[38]यः प्रागभावा[39]त् पश्चादितरस्मादि[40]तरत्रेत्या-दिप्रत्ययविशेषोऽसिद्धः परीक्षकाणां, यतः सत्तासमवाययोरनेकत्वं न स्यात्। [41]यदि पुनः प्राक्कालादिवि-शेषणान्येव भिद्यन्ते समवायिनश्च, न पुनः सत्ता समवायश्चेति मतं तदा कथमभावोपि भिद्येत? तद्विशेष[42]णानामेव भेदात्। विरुद्ध[43]धर्माध्यासा[44]द्भेदे सत्तासमवायभेदोपि तत एव। ततो विश्वरूपा सत्तास्तु [45]असत्तावत्। तथा समवा[46]योपि। न चैवमेकत्वविरोधः सत्तायाः संभावनीयो, विशेषतोनेकत्वेपि सामान्यार्पणादेक[47]त्वाविरोधात्, सद्विशेषेष्वेव सत्सामान्यप्रतीतेरसद्विशेषेष्वसत्सामान्यप्रतीतिवत्।

---

१ प्रकृतं दूषणं प्राग्नासीदित्यादिलक्षणमनन्तरमेवोक्तम्। २ कुत इत्युक्ते आह। ३ कार्योत्पत्तेः प्राक्। ४ उत्पित्सुप्रदेशे। ५ सत्तासमवाययोरेव। ६ उत्पित्सुप्रदेशात्पश्चात्। ७ सत्तासमवाययोर्नित्यत्वात्। ८ स्यान्मतमित्यनेन संबन्ध.। ९ द्रव्यगुणकर्मसु। १० अन्यथेति शेष.। ११ तयो, सामान्यस्य समवायस्य च। १२ तस्य, अविच्छेदस्य। १३ अनित्य-कार्येषु। १४ भावस्य, घटादेः। यथा घटप्रागभावो मृत्पिण्ड.। १५ एवं, सत्तासमवाययोः सर्वगतत्वप्रकारेण। १६ परद्रव्यक्षेत्रकालभावापेक्षयेत्यर्थ। १७ सर्वत्र द्रव्यादिषु साधारणः। १८ चतुर्विधस्य। १९ भावाश्रितत्वम्। अघट. पटो वर्तते इत्यत्र वर्तनक्रियान्वयो भावस्यैवेति तस्यैव प्राधान्यम्। २० पटस्वरूपे घटस्वरूपाभावो वर्तते इत्यत्राभावस्यैव वर्तनक्रियान्वय इति तस्यैव प्राधान्यम्। २१ तस्य, अभावस्य। २२ घटोयं पटोयमित्येवम्। २३ यौगः। २४ सति। २५ प्रध्वंसाभावाभावेऽनन्तत्वदोषः। इतरेतराभावाभावे सर्वस्य सर्वात्मकत्वमिति दोषः। अत्यन्ताभावा-भावे सङ्करत्वदोष·। २६ मृत्पिण्डस्य प्रध्वंस विना घटो नोत्पद्यते। प्रागभावेतरेतरात्यन्ताभावानामप्यभावप्रसङ्गः स्यादिति टिप्पण्यन्तरम्। २७ मृत्पिण्डे घटस्य प्रागभावस्तस्यापि। २८ सर्वस्य कार्यस्य। २९ प्राग् नासीत् पश्चान्नासी-दित्येवम्। ३० तस्य, अभावस्य। ३१ यौगो, वैशेषिक। ३२ विवक्षितकार्यस्य। ३३ अङ्गीक्रियमाणे। ३४ अतीता-नागतकार्यस्य। ३५ सर्वस्य सत्तासमवायभवने च। ३६ अभावान्तरेणेतरेतरात्यन्ताभावौ। ३७ तवापि यौगस्य। ३८ न ह्यसिद्ध इति, सबन्ध। ३९ प्रागभावाभावानन्तर कार्यस्य सत्तासमवाय.। ४० सत्तासमवायो नासिद्ध इत्येव। ( इतरस्मादितरत्र, इतरपदार्थादितरपदार्थे। इतरेतराभावतया निदर्शनमेतदित्यर्थ. )। ४१ हे यौग। ४२ प्राक्—पश्चादित्यादीनाम्। ४३ विरुद्धधर्माणा प्राग्नासीदित्यादीनाम्। ४४ अभावभेदे। ४५ अभाववत्। ४६ विश्वरू-पोस्तु। ४७ द्रव्यगुणकर्मसु।

समवायविशेषेषु समवायसामान्यप्रतीतिश्च न विरुद्धा, संयोगविशेषेषु तत्सामान्यप्रतीतिवत्। इति सर्वं सामान्यविशेषात्मकं सिद्धम्। न च सामान्यस्य विशेषस्य चैकैकशः सामान्यविशेषात्मकत्वेऽनवस्थानम्, अन्यथा सर्वं सामान्यविशेषात्मकमिति प्रतिज्ञा हीयेत, तयोरन्योन्यात्मकत्वसिद्धेर्द्रव्यार्थार्पणया परस्परतो भेदाच्च पर्यायार्थार्पणया सापेक्षत्वमात्रस्य तयोरिष्टेः। सामान्यस्य हि स्वविशेषादपोद्धृतस्य विशेषान्तरगतैकत्वे विशेषस्य च स्वसामान्यान्निर्धारितस्य सामान्यान्तरात्मकत्वेनवस्था स्यान्नान्यथा। भिन्नस्य च सामान्यस्य विशेषाद्विशेषस्य च सामान्यादितरनिरपेक्षत्वे प्रतिज्ञाहानिः प्रसज्यते, न पुनरितरथा। इति स्याद्वादिनां सर्वं सुस्थम्। वैशेषिकाणां तु तदुभयप्रकारानभ्युपगमादुक्तदोषानुषङ्ग एव। तेषां हि,—

सर्वथानभिसंबन्धः सामान्यसमवाययोः।
ताभ्यामर्थो न संबद्धस्तानि त्रीणि खपुष्पवत्। ६।

समनुषज्यन्ते इति शेषः। तथा हि। सामान्यसमवाययोः परस्परतः संबन्धासंभवात् ताभ्यामर्थोऽपि न संबद्धः। कुतस्तयोरनभिसंबन्ध इति चेत् संयोगस्य समवायस्य चानभ्युपगमात्, सामान्यं समवायीति विशेषणविशेष्यभावस्य चासंभवादनवस्थाप्रसङ्गाच्च। तथैकार्थसमवायस्य चानवकाशात् समवायस्य क्वचिदसमवायात् संबन्धान्तरानिष्टेः सर्वथानभिसंबन्धस्तावत्सिद्ध एव। ततः परस्परतोऽनभिसंबन्धाभ्यां सामान्यसमवायाभ्यामर्थोऽपि द्रव्यगुणकर्मलक्षणो न संबद्धः शक्यते वक्तुं, यतस्तत्र सत्तासमवायः स्यात्। ततस्त्रीण्यपि नात्मानं बिभृयुः कूर्मरोमादिवत्। परस्परमसंबद्धानि ह्यर्थसमवायसामान्यानि न सन्त्येव। न चासतां कर्तृत्वम्। नापि कश्चिदात्मा संभवति यस्य कर्मत्वम्। न च कर्तृकर्मत्वाभावे तान्यात्मानं न बिभृयुरिति शक्यं वक्तुं, कर्तरि लिङो विधानात्कर्मणि विभक्तिनिर्देशाच्च। स्यान्मतं 'परस्परमसंबद्धानामपि स्वरूपसत्त्वप्रसिद्धेर्नार्थसमवायसामान्यानामसत्त्वम्। कूर्मरोमादीनां स्वरूपसत्त्वाभावाच्च विषमोऽयमुपन्यासः' इति तदयुक्तं, द्रव्यगुणकर्मणां स्वरूपसत्त्वोपगमे सत्तासमवायस्य वैयर्थ्यात्सामान्यादिवत्, सामान्यादीनां वा सत्तासंबन्धप्रसङ्गाद्द्रव्यादिवत्, तेषां[38] स्वरूपसत्त्वानुपगमे कूर्मरोमादिभ्यो विशेषाभावात् सम एवोपन्यास इति निरूपणात्। कथं चार्थान्तरभूताया सत्ताया

१ स्याद्वादिनाम्। २ सामान्यस्य सामान्यविशेषात्मकत्वं, विशेषस्य च सामान्यविशेषात्मकत्वमिति। ३ न चेति संबन्धः। ४ सामान्यविशेषयोः। ५ सामान्यमेव विशेषो, विशेष एव सामान्यमिति। ६ (द्रव्यार्थिकनयविवक्षया इत्यर्थः)। ७ (तयोः सामान्यविशेषयोरभेदरूपेणेष्टेरित्यर्थः)। ८ घटत्वादेः। ९ घटादेः। १० पृथक्कृतस्य। ११ आश्रीयमाणे। १२ पृथक्कृतस्य। १३ अन्यथा, अन्योन्यात्मकत्वप्रकारेण स्वीकारे। १४ भिन्नस्य। १५ इतरापेक्षत्वेन स्वीकारे सतीत्यर्थः। १६ पूर्वोक्तं स्याद्भिन्नं स्यादभिन्नं च सामान्यविशेषादि। १७ सामान्यविशेषयोः परस्परसापेक्षत्वप्रकारस्य। १८ संयोगादिप्रकारेण। १९ यतः संयोगो द्रव्ययोरेव। २० तत एव सामान्यसमवायाभ्याम्। २१ सामान्यसमवाययोर्मध्ये। २२ संयोगस्तु द्रव्ययोरेवेति यौगमतं यतः, अयुतसिद्धानां गुणगुण्यादीनामाधाराधेयभूतानां यः संबन्धः स समवाय इति च वैशेषिकमतं यतः। २३ (यौगे.)। २४ विशेष्यम्। २५ विशेषणम्। २६ सामान्यं समवायीति स्वतः परतो वा? न तावत्स्वतः। परतोऽनवस्थानादिदोषम्। २७ पदार्थे। २८ असंबद्धत्वात्। २९ कथंचित्तादात्म्यलक्षणस्य संबन्धान्तरस्यानिष्टत्वं यतो यौगानाम्। ३० असतः किंचित्स्वरूपासंभवात्। ३१ हेतुगर्भितविशेषणम्। ३२ आत्मा, स्वरूपम्। ३३ आत्मानमिति द्वितीयाविभक्तिनिर्देशात्। ३४ यौगस्य। ३५ द्रव्यादीनाम्। ३६ सामान्यादीनां स्वरूपसत्त्वोपगमे सत्तासमवायस्य यथा वैयर्थ्यम्। ३७ अन्यथेति शेषः। सामान्यादीनां सत्तासमवायस्य वैयर्थ्यं नो चेत्तर्हीत्यर्थः। ३८ सामान्यादीनाम्।

समवायवत्सर्वथानभिसंबद्धायां द्रव्यगुणकर्मणां सत्त्वं न पुनः कूर्मरोमादीनाम्? इति चिन्त्यम्। कथं च सत्तासामान्यं सर्वथा समवायासंबद्धं द्रव्यादिषु समवायि न पुनः समवायस्तत्र[1] समवायी समवायान्तरेणासंबद्ध इति बुध्यामहे[2]? समवायसंबद्धत्वाभावाविशेषात्, सतापि हि समवायेन सामान्यस्यासंबद्धत्वं समवायान्तरेण पुनरसता समवायस्येति[3] तत्[4]सदसत्त्वाभ्यामसंबद्धत्वस्य विशेषयितुमशक्तेः। न च कश्चित्संबन्धः स्वसंबन्धिभ्यामसंबद्ध एव तौ घटयितुमलं, संयोगस्यापि स्वसंयोगिभ्यामसंबद्धस्यैव तयोर्घटकत्वप्रसङ्गात्। न चैवमिष्यते सिद्धान्त[5]विरोधात्। ततो न कार्यकारणयोर्गुणगुणिनोः सामान्यतद्वतोर्वा[6]न्यतैकान्ते तद्भावो[7] युक्तोऽकार्यकारणादिवत्[8], समवायादर्थान्तरभावनियमाच्च। तद्वत्समवायोपि न तेषां परस्परं घटनकारी सर्वथानभिसंबद्धत्वात् तादृगर्थान्तरवत्। ततश्चासन् समवायोनर्थक्रियाकारित्वात् कूर्मरोमादिवत्। सामान्यं चासत्[9] तत एव तद्वत्। न हि तदर्थैरसंबद्धं स्वविषयज्ञानोत्पादनलक्षणामप्यर्थक्रियां कर्तुं प्रभवति यतोसिद्धो हेतुः[10] स्यात्। तथा न सन्ति द्रव्यादीनि सत्तासमवायरहितत्वाद्वत्। सामान्यादिभिर्व्यभिचार[11] इति चेन्न, तेषामपि[12] परमार्थतः सत्त्वानभ्युपगमात्[13]। न चोपचरितसद्भिर्व्यभिचारचोदनोपपत्तिमती, परमार्थसत्त्वाभावसाधनस्यातिप्रसङ्गात्[14]। इति न कार्यकारणादीनामन्यतैकान्तः श्रेयान्, प्रमाणाभावादनन्यतैकान्तवत्।

अपरैः[15] प्राह, मा भूत्कार्यकारणादीनामन्यतैकान्तः परमाणूनां तु नित्यत्वात् सर्वास्ववस्थास्वन्यत्वाभावादनन्यतैकान्त इति तं प्रति संप्रत्यभिधीयते।

**अनन्यतैकान्ते[16]णूनां संघातेपि[17] विभागवत्।**
**असंहतत्वं[18] स्याद्भूतचतुष्कं[19] भ्रान्तिरेव सा। ६७।**

यथैव हि विभागे सति परमाणवोऽसंहतात्मानस्तथा संघातकालेपि स्युः, सर्वथान्यत्वाभावात्[20] अन्यत्वे[21] तेषामनित्यत्वप्रसङ्गात्[22]। संघातकाले[23] कार्यस्योत्पत्तेस्तदसमवायिकारणस्वसंयोगस्वभावं संहतत्वं भवत्येवेति चेन्न, तेषामतिशयानुत्पत्तौ[24][25] संयोगस्यैवासंभवात्[26] पृथिव्यादिभूतचतुष्कस्यावयविलक्षणस्य भ्रान्तत्वप्रसङ्गात्। कर्मणो[27]तिशयस्य[28] प्रसूतेः संयोगः परमाणूनामिति चेन्न, कथंचिदन्यत्वाभावे[29] तद्[30]योगात्। क्षणिकत्वात्पर-

१ द्रव्यादिषु। २ सत्तासामान्यं सता समवायेनासंबद्धं समवाय पुनरसता समवायान्तरेणासंबद्ध इति विशेषो भविष्यतीत्युक्ते आहुर्जैनाः। ३ असंबद्धत्वमित्यन्वयः। ४ तयोः सामान्यसमवाययोः। विवक्षितसमवायसत्ताया सत्त्वं समवाये च समवायान्तरस्यासत्त्वं, ताभ्यामित्यर्थः। ५ संयोगस्य गुणत्वात्संयोगिनश्च गुणित्वाद्गुणगुणिनोः संयोगसंयोगिनोः समवाय इति वैशेषिकसिद्धान्तः। न तु संयोगस्य स्वसंयोगिभ्यामसंबद्धत्वमिति शेषः। ६ कार्यकारणादिमान्। ७ कार्यकारणादीनाम्। ८ कालादिवत्। ९ तत्, सामान्यम्। १० अनर्थक्रियाकारित्वादिति। ११ सामान्यादिषु सत्तासमवायरहितत्वेपि सत्त्वसद्भावाद्व्यभिचारः। १२ सामान्यसमवायविशेषाणाम्। १३ यौगमते। १४ मशकोपरितनधूमेन सत्यधूमस्य व्यभिचारप्रसङ्गात्। १५ सौगतः। परमाणूनां सर्वासु संयुक्तवियुक्तावस्थासु एकस्वरूपतैकान्त इत्यभिप्रायः। १६ स्वस्वरूपं विहाय स्कन्धरूपविकाराद्यभजने। एकस्वरूपत्वैकान्ते। १७ स्कन्धरूपत्वेपि। १८ परस्परासंबद्धत्वम्। १९ सौगतप्रतिपादितम्। २० स्वरूपान्तरपरिणमनाभावात्। २१ स्वरूपान्तरत्वेङ्गीक्रियमाणे। २२ अत्र बौद्धः कथयिष्यति, भवतु परमाणूनामनित्यत्वम्। तत्रोच्यते, अनित्यत्वं लसतु परन्तु परिणामित्वं न स्यात्, यतः स्वरूपान्तरत्वे एव परपरिणामात्मभवनं स्यात्। २३ क्षेपा परमाणूनां संयोगः। असमवायिकारणं चासौ स्वसंयोगश्च। स एव स्वभावो यस्य संहतत्वस्येति बसः। २४ परिणमनरूपोतिशयः। २५ अङ्गीक्रियमाणायाम्। २६ संयोगासंभवे च। २७ चलनात्मकक्रियाया उत्क्षेपणादेः। २८ क्रियारूपस्य परिणामस्य। २९ चलनाचलनादिरूपतया भेदाभावे। ३० तस्य, संयोगस्य।

माणूनामदोषे[1] इति चेत्तथापि कार्यकारणादेरभेदैकान्ते धारणाकर्षणादयः परमाणूनां संघातेपि मा भूवन्विभागेवत्[2]। विभक्तेभ्यः परमाणुभ्यः संहतपरमाणूनां[3] विशेषस्योत्पत्तेर्धारणाकर्षणादयः संगच्छन्ते एवाधोमुखसोदककमण्डलुवंद्वशरज्वादिवच्चेति[4] चेत्स तर्हि तेषां[5] नाहितोपि[6] विशेषो विभागैकान्तं[7] निराकरोति, तन्निराकरणे[8] परमाणुत्वविरोधादेकत्वपरिणामात्मकस्कन्धस्योत्पत्तेः[9]। प्रविभक्तपरमाणुभ्यः संहतपरमाणूनामविशिष्टत्वलक्षणानन्यत्वासंभवात्[10][11][12] सहतानां धारणाकर्षणादिसामर्थ्ये विशेषो न पुनरपरमाणुत्वं[13], येनाविशेषः कार्यकारणपरमाणूना न भवेदिति चेन्न, सर्वथा तद्विशेषे[14] तत्सामर्थ्यस्यैवायोगात्[15] प्रविभक्त[16]परमाणूनामपि तत्प्रसङ्गात्। प्रविभक्तत्वादेव न तेषा तत्सामर्थ्यमिति चेत्, तत एवान्यत्रापि[17] तन्नेष्यते, केनचिदपि विशेषान्तरेण तद्विभक्तत्वानिराकरणात्[18]। पृथिव्यादिभूतचतुष्टयस्थितिरेवं[19] विभ्रममात्रं प्राप्नोति, सर्वदा परमाणुत्वा[20]विशेषात्। इष्टत्वाददोषे[21][22] इति चेन्न प्रत्यक्षादिविरोधात्[23]। प्रत्यक्षं हि बहिर्वर्णसंस्थानाद्यात्मकं स्थवीयांसमाकारम्[24]न्तश्च हर्षाद्यनेकविवर्तात्मकमात्मानं साक्षात्कुर्वद्भ्रान्त चेत्किमन्यदभ्रान्तं यत्प्रत्यक्षलक्षणं बिभृयात्? प्रत्यक्षाभावे[25] च कुतोनुमानं न विरुध्यते? न च प्रत्यक्षादिविरोधे स्वसंवेदनमात्रमपि सिध्येत्, सर्वदा संवित्परमाणुमात्रस्यासवेदनात्। न च कार्यस्य[26] भ्रान्तौ परमाणुसिद्धिस्तत्त्वतः[27] स्यादित्युच्यते।

कार्यभ्रान्तेरणुभ्रान्तिः कार्यलिङ्गं[28] हि कारणम्[29]।
उभयाभावतस्तत्स्थं[30] गुणजातीतरच्च न। ६८।

प्रत्यक्षतः परमाणूनां प्रसिद्धेर्नाणुभ्रान्तिरिति चेन्न, तेषामप्रत्यक्षत्वात्। तथा हि। चक्षुरादिबुद्धौ स्थूलैकाकारः प्रतिभासमानः परमाणुभेदैकान्तवादं प्रतिहन्ति तद्विपरीतानुपलब्धिर्वा[31]। तत्रैतस्याभ्रान्तैकत्वादिप्रतिपत्तिरिति[32] तन्न[33], परमाणूनां चक्षुरादिबुद्धौ स्वभावमनर्पयतां कार्यलिङ्गाभावात्तत्स्वभावाभ्युपगमानुपपत्तेः[34][35][36],प्रविरलवकुलतिलकादीनां[37] जातुचित्प्रत्यक्षतोऽप्रतिपत्तावनेकाकारप्रतिभासस्य[38][39] च भ्रान्तत्वे तत्स्वभावाभ्युपगमानुपपत्तिवत्[40]। कार्यलिङ्गं[41] हि कारणं परमाणुरूपम्। तत्कथं कार्यस्य भ्रान्तौ

---

१ पूर्वोक्त। २ विभागे इव। ३ स्कन्धरूपाणाम्। ४ ऊर्ध्वमुखकमण्डलुना समत्वेपि। अधोमुखकमण्डलुमध्ये धारणं वंशरज्जौ त्वाकर्षणं यथासंख्यमुदाहृतं ज्ञेयम्। ५ सहतपरमाणूनाम्। ६ जनितः। ७ भेदैकान्तपक्षम्। ८ अणूनां विभागैकान्तनिराकरणे सति। ९ किं तु स्कन्ध एव स्यात्। १० अनेकपरमाणूनाम्। ११ प्रविभक्ताणूनामेकत्वं भिन्नं संहताणूना स्कन्धरूपाणां तु भिन्नमेकत्वमिति भाव. सौगतवचनस्यास्य। १२ परमाणूना संहतानां प्रविभक्तानां चं नाविशिष्टत्वलक्षणमेकत्वं किन्तु विशिष्टस्वलक्षणमेवैकत्व( एकत्वं द्विधा )मिति भाव। १३ परमाणुत्वं तथापि ( संहतत्वेपि ) न नश्यतीत्यर्थं। १४ तेषा, कार्यकारणपरमाणूनाम्। १५ धारणाकर्षणादे। १६ अन्यथेति शेष। १७ संहतेषु। १८ ( संहतेषु सत्स्वपि )। १९ संहतपरमाणूना सर्वथा प्रविभक्तत्वसमर्थनप्रकारेण। २० सहतविभक्तेषु। २१ अस्माकं सौगतानाम्। २२ भूतचतुष्टयस्य विभ्रममात्रत्वलक्षण। २३ संहताना स्कन्धरूपाणा विभक्ताना चाणूनां समानत्वकथनं प्रत्यक्षेण विरुध्यते यत। २४ स्थूलतरम्। २५ प्रत्यक्षं भ्रान्तिग्राहकं मास्तु। अनुमानं भविष्यतीत्याशङ्कायामाह। २६ स्कन्धरूपस्य। २७ परमार्थतः। २८ कार्यं स्कन्धरूपमेव लिङ्गं यस्य तत्कारणद्रव्यम्। २९ यत इति शेषः। ३० इति सति किं भवतीत्युक्ते आह। कार्यकारणपरमाण्वभावत। ३१ तस्मात् स्थूलैकाकाराद्विपरीत परमाणुरूपस्तदाकारस्य। ३२ सौगतपक्षमाश्रित्य वैशेषिक आह—तत्र, नित्यैकान्तनिराकरणे स्याद्वादाङ्गीकृते एतत्फल स्यात्। किम्? इत्याह—परमाणूनामेकत्वादिप्रतिपत्तिर्भ्रान्ता स्याद्वादिना स्यादिति। ३३ इति चेत्तन्नेति जैन आह। ३४ कार्यलिङ्गस्य भ्रान्तत्वात्। ३५ तत्स्वभावस्य, परमाणुत्वस्य। ३६ सौगतवैशेषिकयोः समानतयैवैतद्दूषणम्। ३७ भिन्नभिन्नानाम्। ३८ सत्याम्। ३९ निबिडाकारप्रतिभासस्य। ४० यथा सर्वथा वृक्षादर्शिनोऽनुपपत्तिः। ४१ कार्यलिङ्गाभावात्तत्स्वभावाभ्युपगमानुपपत्तेरित्येतद्व्याचष्टमाह।

भ्रान्तं न भवेत् ? पर[1]माणूनां कार्यस्य चानभ्युपगमे **तद्द्वयाभावात्तद्वृत्तयो जातिगुणक्रियादयो न स्युर्व्योम[2]कुसुमसौरभवत्** । तद्धि गुणजातिरूपादिसत्तादिस्वभावमितरच्च क्रियाविशेष[3]समवायाख्यं परमाणुवृत्ति वा स्यात् कार्यद्रव्यवृत्ति वा, न च तदुभ[4]यासंभवेभ्युपगन्तुं युक्तं, ग[5]गनकुसुमस्याभावेपि तद्वृत्तिसौरभाभ्युपगमप्रसङ्गात् । तत[6]स्तद[7]भ्युपगच्छता कार्यद्रव्यमभ्रान्तमभ्युपगन्तव्यम् । तच्च परमाणूनां परमाणुरूपतापरित्यागेनावयविरूपतोपादाने सति संभाव्यते नान्यथा[10] । तत्र तेषामनन्यतैकान्तः, कार्योत्पत्तौ कथंचिदन्यत्वोपपत्तेः । ततः सौगतवन्न वैशेषिकाणां स्वमतसिद्धिः ।

साङ्ख्यानां च कार्यकारणयोः,—

**एकत्वेन्यतराभावः शेषा[11]भावोविनाभुवः[12] ।**
**द्वि[13]त्वसंख्याविरोधश्च संवृत्तिश्चेन्मृषैव सा[14] । ६८ ।**

कार्यस्य हि महदादेः कारणस्य च प्रधानस्य परस्परमेकत्वं तादात्म्यम् । तस्मिन्नभ्युपगम्यमानेन्यतरस्याभावः स्या[15]त् । ततः शेषस्या[16]प्यविनाभुवो[17]ऽभावः । इति सर्वाभावः प्रसज्यते । यदि पुनः कार्यस्य[18] का[19]रणेनुप्रवेशात्पृथ[20]गभावेपि कारणमेकमास्ते एव नित्य[21]त्वादिति मतं तदा द्वित्वसंख्या[22]विरोधोपि, सर्वथै[23]कत्वे तदसंभवात् कार्यकारणभावादिवत्[24] । संवृतिरेव द्वित्वसंख्या तत्रेति चेत्तर्हि मृषैव सा तद्वदेव प्रसक्ता । तथा[25] च कुतः प्रधानस्याधिगतिः ? न तावत्प्रत्यक्षात्, तस्य तदविषयत्वात् । नाप्यनुमानात्, अभ्रान्तस्य लिङ्गस्याभावात् । न चागमात्, शब्दस्यापि भ्रान्तत्वोपगमात् । न च भ्रान्ताल्लिङ्गा[26]देरभ्रान्तसाध्यसिद्धिरतिप्रसङ्गात्[27] । ए[28]वं पुरुषचैतन्ययोराश्रयाश्रयिणोरेकत्वे तदन्यतराभावः । पुरुषे चैतन्यानुप्रवेशे पुरुषमात्रस्य, तस्य वा चैतन्यानुप्रवेशे चैतन्यमात्रस्य प्रसक्तेः सिद्धस्तावत्तदन्यतरस्याभावः परेषा[29]म् । ततः शेषा[30]भावस्तत्स्व[31]भावाविनाभावित्वाद्वन्ध्यासुतरूप[32]संस्थानवत् । यथैव हि बन्ध्यासुतरूपस्याभावे न तस्य संस्थानं संस्थानिस्वभावाविनाभावित्वा[33]त् । तथा पुरुषस्याश्रयस्याभावे चैतन्यस्याश्रयिणोप्यभावस्तदभावे पुरुषस्याप्यभावः, तत्[34]स्वभावाविनाभावात् । **तथा स[35]ति द्वित्वसंख्यापि न स्यात्**, पुरुषचैतन्ययोरेकत्व[36]मिति । तत्र[37] **संवृतिकल्पना शून्यत्वं नातिवर्तते, परमार्थविपर्यया-द्व्यलीकवचनार्थवत्**, परमार्थतः संख्यापाये संख्येयाव्यवस्थानात् सकलधर्म[38]शून्यस्य कस्यचिद्वस्तुनोऽसंभवात् । तत्र कार्यकारणादीनामनन्यतैका[39]न्तः संभवत्यन्यतैका[40]न्तवत् ।

---

१ तदुभयाभावोस्तु इत्याशङ्कायामाह । २ एतद्भाष्यमेव स्पष्टयति । ३ क्रिया च विशेषश्च समवायश्चेति द्वन्द्वः । ४ कार्यकारणोभयस्य । ५ अन्यथेति शेषः । ६ गुणजातीतरत्परमाणुकार्यद्रव्यलक्षणद्वयवृत्ति न भवेद्यतः । ७ तत्, गुणजात्यादि । ८ परमाणूनाम् । ९ स्कन्धरूपापेक्षया । १० कथंचिदन्यत्वोपपत्तेः । ११ ततश्चेति शेष. । १२ अविनाभावनियमात् । १३ इदं कार्यमिदं कारणमिति । १४ संवृतिः । १५ उभयो सर्वथैकत्वात् । १६ कारणस्य । १७ कार्येणाविनाभुव कारणस्याभाव., कारणस्य कार्यापेक्षत्वात् सर्वथा कार्याभावे कारणत्वासंभवात् । १८ महदादे' । १९ प्रधाने । २० उत्तरसृष्टिक्रमापेक्षया भेदाभावेपि । २१ कारणस्य । २२ विरोधो, अभावः । २३ कार्यकारणयोः । २४ कार्यकारणादेर्यथा सर्वथैकस्मिन्वस्तुन्यसंभवः । २५ द्वित्वसंख्याया मृषात्वे । २६ आदिशब्देन शब्दप्रत्यक्षयोर्ग्रहणम् । २७ गोपालघटिकाधूमादग्निप्रतिपत्तिप्रसङ्गात् । २८ कार्यकारणप्रकारेण । २९ सांख्यानाम् । ३० शेष, पुरुषः । ३१ ( तत्स्वभावस्य चैतन्यस्वभावस्य ) । ३२ रूपं, शरीरम् । ३३ संस्थानस्य । ३४ तयोः पुरुषचैतन्ययो· परस्परम् । ३५ उभयो परस्परं सर्वथानुप्रवेशे सति । ३६ इति, हेतोः । ३७ द्वित्वसंख्यायाम् । ३८ धर्माः संख्येयत्वादयः । ३९ साङ्ख्याभिमत· । ४० यौगाभिमतोन्यतैकान्तो यथा न संभवति ।

विरोधान्नोभयैकात्म्यं[1] स्याद्वादन्यायविद्विषाम् ।
अवाच्यतैकान्तेऽप्युक्तिर्नावाच्यमिति युज्यते ॥ ७० ॥

अवयवेतरादीनां[2] व्यतिरेकाव्यतिरेकैकान्तौ न वै यौगपद्येन संभविनौ विरोधात् । तथानभिलाप्यतैकान्ते स्ववचनविरोधस्तद[3]भिलाप्यत्वात् । अनभिलाप्यतैकान्तस्याप्यनभिलाप्यत्वे कुतः परप्रतिपादनम् ? तद्वचनाच्चेत्कथमनभिलाप्यतैकान्तः ? परमार्थतो न कश्चिद्वचनात्प्रतिपाद्यते[4][5] इति चेत्स्वयं[6]मवाच्यताप्रतिपत्तिः कथम् ? वस्तुनि वाच्यतानुपलब्धेश्चेत्सा[7] यदि दृश्यानुपलब्धिस्तदा सिद्धा[8] क्वचिद्वाच्यता । नो चेन्नास्ति[9] तद[10]भावनिश्चयोतिप्रसङ्गात्[11] । विकल्पप्रतिभासिन्यन्यापोहे प्रतिपन्नाया एव वाच्यतायाः स्वलक्षणे[12] प्रतिषेधाददोष इति चेन्न, वस्तुवाच्यतायाः प्रतिषेधायोगात्[13], तदन्यापोहमात्रवाच्यताया एव प्रतिषेधात् । न चान्यापोहवाच्यतैव वस्तुवाच्यता[14] तत्प्रतिषेधाविरोधात्[15] । निरस्तप्रायश्चायमवाच्यतैकान्त[16] इत्यलं प्रसङ्गेन ।

स्याद्वादाभ्युपगमे तु न दोषः, कथंचित्[17] तथाभावोपलब्धेः[18] । सर्वं हि वस्तु व्यञ्जनपर्यायात्म[19]कतया वाच्यमर्थपर्यायात्मकत्वेनावाच्यमिति स्याद्वादिभिर्व्यवस्थाप्यते, अन्यथा[20] प्रमाणाभावात् ।

तदेवमवयवावयव्यादीनामन्यतमा[21]द्येकान्तं निराकृत्याधुना तदनेकान्तं सामर्थ्यसिद्धमपि दुरा[22]शङ्कापनोदार्थं दृढतरं निश्चिचीषवः सूरयः प्राहुः ।

द्रव्यपर्याययोरैक्यं तयोरव्यतिरेकतः[23] ।
परिणामविशेषाच्च शक्तिमच्छक्तिभावतः ॥ ७१ ॥
संज्ञासंख्याविशेषाच्च[24] स्वलक्षणविशेषतः[25] ।
प्रयोजनादि[26]भेदाच्च तन्नानात्वं न सर्वथा ॥ ७२ ॥

गुणिसामान्योपादानकारणाना द्रव्यशब्दाद्ग्रहणम् । गुणव्यक्तिकार्यद्रव्याणां पर्यायशब्दात् । तदेवं द्रव्यपर्यायावेकं वस्तु, प्रतिभासभेदेप्यव्यतिरिक्तत्वात् । यत्प्रतिभासभेदेप्यव्यतिरिक्तं तदेकं, यथा वेद्यवेद[27]कज्ञानं रूपादिद्रव्यं वा मेचकज्ञानं वा । तथा च द्रव्यपर्यायौ न व्यतिरिच्येते । तस्मादेकं वस्त्विति मन्तव्यम् । पर्यायादवास्तवाद्व्यतिरिक्तमेव द्रव्यं वास्तवमेकेषा[28]म् । द्रव्यादवास्तवाद्व्यतिरिक्त एव पर्यायो वास्तवः परेषा[29]म् । ततोऽसिद्धो [30]हेतुरिति न मन्तव्य, तद[31]न्यतरापायेर्थस्या[32]नुपपत्तेः । तथा हि

---

१ ऐकात्म्यं, तादात्म्यम् । २ आदिपदेन गुणगुणिना सामान्यतद्वता च ग्रहणम् । इतरशब्देनावयवी गृह्यते । ३ तस्य, अनभिलाप्यरूपस्य सिद्धान्तस्य अनभिलाप्य इति वचनेनाभिलाप्यरूपत्वात् । ४ पदार्थ सिद्धान्तो वा । ५ किं तु संवृत्त्यैव । ६ स्वयं, स्वस्य सौगतस्य । ७ सा दृश्यानुपलब्धिरदृश्यानुपलब्धिर्वेति विकल्पद्वयं कृत्वा क्रमेण दूषयति । ८ यत्र देशे दृश्या । ९ दृश्यानुपलब्धिर्न किन्तु अदृश्या चेत्तर्हि नास्तीत्यादिसंबन्ध । १० तस्या, वाच्यतायाः । ११ परमाण्वादेरप्यभावप्रसङ्गात् । १२ निर्विकल्पकविषये । १३ यतोन्यापोहवाच्यतैव प्रतिषिद्धा न तु स्वलक्षणस्य ( वस्तुभूतस्य ) वाच्यतेत्यर्थः । १४ अन्यथेति शेष. । १५ तत्, तस्या अन्यापोहवाच्यताया । ( अन्यापोहवाच्यताया स्वयमभ्युपगमो यस्तस्य विरोधादित्यर्थः ) । १६ पञ्चचत्वारिंशत्तमकारिकातो द्विनवत्यधिकैकशततमे पत्रे । १७ नयापेक्षया । १८ अवाच्यत्वभावोपलब्धे. । १९ स्थूलो व्यञ्जनपर्याय इत्युक्तत्वात् । २० एकान्तवाच्यताऽवाच्यतारूपेण । २१ आदिशब्देनानन्यत्वमुभयमवाच्यं च ग्राह्यम् । २२ तत्त्वोपप्लववादिन. । २३ अशक्यविवेचनत्वात् । २४ संज्ञा खण्डमुण्डादि । सख्या द्वित्वादि । तयोर्विशेषात् । २५ स्वेषा द्रव्याणा प्रत्येक लक्षणभेदाच्चेत्यर्थ । २६ आदिना भिन्नकालत्वादिहेतुग्रह । २७ प्रतिभासभेदेप्यव्यतिरिक्तत्वमसिद्धं, यतः प्रतिभासभेदोस्ति । इति शङ्कापनोदार्थमिदं विशेषणम् । २८ ब्रह्माद्वैतवादिनाम् । २९ सौगतानाम् । ३० प्रतिभासभेदेप्यव्यतिरिक्तत्वादिति । ३१ तयोर्द्रव्यपर्याययोर्मध्ये । ३२ अर्थक्रियालक्षणस्य ।

न द्रव्यं केवलम्[1] अर्थक्रियानिमित्तं क्रमयौगपद्यविरोधात् केवलपर्यायवत् । पर्यायो वा न केवलो[2]र्थक्रियाहेतुस्तत एव केवलद्रव्यवत् । क्रमयौगपद्यविरोधस्तत्रा[4]सिद्ध इति चेन्न, द्रव्यस्य पर्यायस्य वा सर्वथैक[3]स्वभावस्य क्रमयौगपद्यादर्शनात्, अनेकपर्यायात्मन एव द्रव्यस्य तदुपलम्भात् । वास्तवत्वेपि द्रव्यपर्याययोर्व्य[5]तिरेकोऽसिद्धः, कुटादिद्रव्याद्रूपादिपर्यायाणां ज्ञानप्रतिभासभेदाद् घटपटादिवदिति चेन्न[6], तस्यै[7]कत्वाविरोधित्वात् । उपयोग[8]विशेषाद्रूपादिज्ञाननिर्भासभेदः स्वविषयैकत्वं न वै निराकरोति, सामग्री[9]भेदे युगपदेकार्थोपनिबद्धविशदेतरज्ञानवत्[10] । ततो नासिद्धो हेतुः । नापि विशेषण[11]विरुद्धः, प्रतिभासभेदस्य विशेषणस्याव्यतिरिक्तहेतुना विरोधा[12]सिद्धेः । स्यान्मतम्[13] 'अव्यतिरिक्तमैक्यमेवोच्यते । ततोयं साध्य[14]विशिष्टो हेतुरनित्यः शब्दो निरोध[15]धर्मकत्वादिति यथा । ततो न गमक' इति तदसत्, कथंचिद्[16]अप्यशक्यविवेचनत्वस्याव्यतिरिक्तस्य हेतुत्वेन प्रयोगात् । व्यतिरेचनं व्यतिरिक्तं[17] विवेचनमिति यावत् । न विद्यते व्यतिरिक्तमनयो[18]रित्यव्यतिरिक्तौ । तयोर्भावोऽव्यतिरिक्तत्वमशक्यविवेचनत्वम् । इति व्युत्पादनात्तयोरैक्यमेव वस्तुत्वमिति साध्यस्येष्टत्वान्न साध्यमेव हेतुर्यतो न गमकः स्यात्[19] । न चैतदसिद्धमशक्यविवेचनत्वं, विवक्षितद्रव्यपर्यायाणा द्रव्यान्तरं नेतुमशक्यत्वस्य सुप्रतीतत्वाद्वेद्यवेदकाकारज्ञानवत्[20] तदाकारयो[21]र्ज्ञानान्तरं नेतुमशक्यत्वस्यैव तस्या[22]भिमतत्वात् । तयो[23]रयुत[24]सिद्धत्वादेव[25]मिति चेत्किमिदमयुतसिद्धत्वं नाम ? न[26] तावद्देशाभेदः, पवनातपयोस्तत्प्रसङ्गात् । नापि कालाभेदस्तत एव । स्वभावाभेद इति चेन्न सर्वथा[27]सौ युक्तो विरोधात्[28] । कथंचिच्चेत्तदेवा[29]शक्यविवेचनत्वम् । स[30] एवाविष्वग्[31]भावः समवाय इति पर[32]मतसिद्धिः, अन्यथा[33] तस्या[34]घटनात् । पृथगनाश्रयाश्रयित्वं पृथगगतिमत्त्वं चायुतसिद्धत्वमित्य[35]पि नाशक्यविवेचनत्वादन्यत्प्रतिभाति । ततो न साध्यसाधनशून्यमुदाहरण[36]मपि । रूपादिद्रव्यं वेत्यप्युदाहरणमुपपन्नं, प्रतीतिसिद्धत्वात्, रूपा[37]दिद्रव्ययोः समवायस्याशक्यविवेचनत्वस्यैवाव्यतिरिक्तत्वस्य साधनस्य सद्भावादैक्यस्य चैकवस्तुत्वस्य साध्यस्य निर्णीतेः । धर्मिग्राहकप्रमाणेन[38] बाधनात्कालात्ययापदिष्टो हेतुरि[39]त्यपि न सत्यं, तेन धर्मिणोः कथंचिद्भिन्नयोरेव ग्रहणात्, सर्वथा भिन्नयोर्द्रव्यपर्यायत्वासंभवात् सह्यविन्ध्यवत्[40] । ननु द्रव्यपर्याययोर्भिन्नयोः कथमभेदो विरोधादिप्रसङ्गादिति चेन्न, तथो[41]पलम्भान्मेचकज्ञानवत् सामान्य-

---

१ पर्यायनिरपेक्षम् । २ केवले द्रव्ये पर्याये वा । ३ क्रमेण युगपद्वानेकस्वभावरहितस्य । ४ अभेद । ५ सहार्थे भा (तृतीया) कार्या । ६ इति यौगाशङ्का न सम्यगित्यर्थ. । ७ प्रतिभासभेदस्य । ८ चक्षुरादिव्यापार उपयोगः । ९ दूरनिकटदेशादि, सामग्रीभेद. । १० यथैतद्विशदेतरज्ञानयोर्निर्भासभेद स्वविषयैकत्वं न निराकरोति । ११ प्रतिभासभेदेपीति विशेषणदलम् । १२ अनन्तरोक्तन्यायेन । १३ यौगस्य । १४ साध्यसम इत्यर्थः । १५ विनाशोऽनित्यता निरोधश्चेत्येकार्थवाचका । अनित्यधर्मकत्वादित्यर्थः । १६ द्रव्यपर्यायतया । १७ भावार्थे क्तप्रत्ययान्तम् । १८ द्रव्यपर्याययोः । १९ साध्यसमत्वाभावो दर्शितोनेन । २० वेद्यवेदकाकारज्ञानयोर्ज्ञानान्तरं नेतुमशक्यविवेचनत्वं यथा । २१ वेद्यवेदकाकारज्ञानयोर्ज्ञानान्तर नेतुमशक्यत्वस्यापरं किंचिन्निमित्तं भविष्यति, न त्वशक्यविवेचनत्वमित्याशङ्कायामाह । २२ अशक्यविवेचनत्वस्य । २३ वेद्यवेदकाकारयोः। २४ अपृथक्सिद्धत्वात् । २५ द्रव्यान्तर नेतुमशक्यत्वमित्यर्थ.। २६ अयुतसिद्धत्व किं देशाभेद. कालाभेदः स्वभावाभेदो वेति विकल्पत्रय कृत्वा क्रमेण दूषयन्ति । २७ असौ द्रव्यपर्याययोः स्वभावाभेदः किं सर्वथा कथंचिद्वेति विकल्प्य क्रमेण दूषयन्ति । २८ स्वभावाभेदद्वित्वयो । युक्तत्वविरोधादिति कपुस्तकपाठः । २९ कथंचित्स्वभावाभेदरूपम् । ३० कथंचित्स्वभावाभेद एव । ३१ अपृथग्भावः । ३२ परो जैनः । ३३ कथंचित्स्वाभावे । ३४ समवायस्य । ३५ यौगवचनम् । ३६ अपिशब्दात्, न केवलं हेतु साध्यसमो न भवतीति ध्वन्यते । ३७ साधनस्य सद्भावः साध्यस्य च निर्णीति कुत इत्युक्ते आह । ३८ धर्मिणोर्द्रव्यपर्याययोर्भेदग्राहकप्रमाणेन प्रत्यक्षेण । ३९ अव्यतिरिक्तत्व हेतुः । ४० यथा सर्वथा भिन्नयोः सह्यविन्ध्ययोर्द्रव्यपर्यायत्वासंभव । ४१ भेदाभेदप्रकारेण ।

विशेषवद्वा[1] । न हि तत्र विरोधवैयधिकरण्यसंशयव्यतिकरसंकरानवस्थाऽप्रतिपत्त्यभावाः प्रसज्यन्ते, तेषां तथा[2] प्रतीत्यापसारितत्वात् । न च प्रकृतयो[3]स्तथा[4] प्रतीतिरसत्या सर्वदान्यथा प्रतीत्यभावात् । तदेवं[5] सति विरोधाद्युपालम्भश्चतुरस्रधियां[6] मनो मनागपि न प्रीणयति वर्णादेर[8]न्य[7]थाभावप्रसङ्गात् । द्रव्यमेवैकं, न वर्णादयो, विचारासहत्वाद्वर्णादेव वानेकं, न द्रव्यं नाम, तस्य विचार्यमाणस्य सर्वथानुपपत्तेरित्येकत्वानेकत्वैकान्तौ[9] नान्योन्यं विजयेते, दूषणसमाधानयोः समानत्वात्, द्वयो[10]रपि भावस्वभावप्रतिबन्धात्[11] । द्रव्यैकत्वस्य भावस्वभावस्यैकान्तिकस्य प्रत्यक्षादिविरोधात् वर्णादिपर्यायैकान्तस्वभावस्य चाबाधितप्रत्यभिज्ञा[12]ननिराकृतत्वात् सिद्धं द्रव्यपर्याययोः कथंचिदैक्यम् ।

भेदः कथं सिद्धः ? इत्युच्यते, य[13]त्परस्परविविक्तस्वभावपरिणामसंज्ञासंख्याप्रयोजनादिकं तद्भिन्नलक्षणं, यथा रूपादि, तथा च द्रव्यपर्यायौ, तस्माद्भिन्नलक्षणावित्यनुमानात् परस्परविविक्तस्वभावपरिणामौ हि द्रव्यपर्यायौ, द्रव्यस्यानाद्यनन्तैकस्वभाववैस्र[14]सिकपरिणाम[15]त्वात् पर्यायस्य च साद्यन्तानेकस्वभावपरि[15]णामत्वात् । ततो नासिद्धः परिणामविशेषादिति हेतुः[16] । एतेन शक्तिमच्छक्ति[17]भावः सिद्धः[18] कथितः । परस्परविविक्तस्वभावसंज्ञासंख्या[19]विशेषौ च द्रव्य[20]पर्यायौ, द्रव्ये द्रव्यमिति, पर्याये पर्याय इत्यन्वर्थसंज्ञायाः प्रसिद्धेः, एकं द्रव्यमित्येकत्वसंख्यायाः, पर्याया बहव इति बहुत्वसंख्यायाश्चानुपचरितायाः[21] प्रसाधनात्[22] । ततः संज्ञासंख्याविशेषाच्चे[23]त्यपि नासिद्ध साधनम् । द्रव्यस्यैकत्वान्व[24]यज्ञानादिकार्यत्वा[25]त् पर्यायस्यानेकत्वव्यावृत्तिप्रत्ययादि[26]कार्यत्वान्न तयोः परस्परविविक्तस्वभावप्रयोज[27]नत्वमसिद्धम् । द्रव्यस्य त्रिकालगोचरत्वात् पर्यायस्य वर्तमानकालत्वाद्भिन्नका[28]लत्वमपि न तयोरसिद्धं भिन्नप्र[29]तिभासवत् । त[30]तः प्रसि[31]द्धाद्धेतोर्भिन्नलक्षणत्व तयोः सिध्यत्येव । इति स्वलक्षणविशेषतस्त[32]न्नानात्वं सिद्धम् । स्वमसाधारणं लक्षणं स्वलक्षणम् । तस्य विशेषो ल[33]क्ष्याविनाभावित्वं, तत एव तस्य लक्षणत्वोपपत्तेः ।

नन्व[34]साधारणं रूपं वस्तुनो लक्षणमित्युच्यमाने सर्वं भिन्नं प्रमेयत्वादित्यनुपसंहा[35]र्यस्यापि लक्षणत्वप्रसङ्ग[36]

---

१ सामान्यमेव विशेषः । तद्वत् । २ द्रव्यपर्याययोर्मेचकज्ञानवद्विरोधादिदोषानवकाशरूपया । भेदाभेदरूपया वा । ३ द्रव्यपर्याययो । ४ भेदाभेदतया । ५ द्रव्यपर्याययोरैक्ये सति । ६ 'कविर्नूतनसन्दर्भो गमकी ( शास्त्रबोधक· ) कृतिभेदकः । वादी विजयवाग्वृत्तिर्वाग्मी स्याज्जनरञ्जक ' इत्युक्ताश्चत्वार· कवित्वादयो अस्रा अवयवा यस्या । सा धीर्येषा ते चतुरस्रधिय· । ७ अन्यथेति शेष । ८ आदिशब्देन यस्य वर्णादय पर्यायास्तस्य वर्णादिमतो द्रव्यस्य ग्रहणम् । ९ ब्रह्माद्वैतिसौगतस्वीकृतौ । १० निरपेक्षयोर्द्रव्यपर्याययो । ११ पदार्थस्वरूपसंबन्धित्वेनैकान्तद्वयस्य जैनैर्निराक्रियमाणत्वात् । १२ यदेव मया पूर्वं दृष्टं तदेव स्पृश्यते इत्यनेनाबाधितैकत्वप्रत्यभिज्ञानेन निराकृतत्वात् ( यत प्रत्यभिज्ञानेन पूर्वापरसमयवर्ती पदार्थ एक एव विषयीक्रियते । तस्यैव च नित्यत्वमनेकसमयवर्तिन एव नित्यत्वाभिमननात् ) । १३ संज्ञासंख्याविशेषाच्चेति कारिकामधुना व्याख्याति । द्रव्यपर्यायौ कथञ्चिद्भिन्नलक्षणौ परस्परविविक्तस्वभावपरिणामसंज्ञासख्याप्रयोजनादिकत्वादिति उपरिष्टाद्योज्यमत्र । १४ वैस्रसिक , स्वाभाविक· । १५ वस । १६ परिणामविशेषादिति हेतोरसिद्धत्वनिराकरणेन । १७ परस्परविविक्तस्वभावौ हि शक्तिशक्तिमन्तौ द्रव्यपर्यायाविति साध्येऽयं कारिकोक्तो हेतु । १८ शक्तयोत्र पर्याया·, शक्तिमत्तु द्रव्यम् । १९ वस । २० स्त इति संबन्ध । २१ प्रधानभूताया इत्यर्थ· । २२ प्रथमपरिच्छेदावसाने । २३ कारिकोक्तम् । २४ पर्यायेष्वनुस्यूतत्वमन्वय । २५–२६ वस· । २७ कारिकोक्तं साधनम् । २८ कारिकाया प्रयोजनादीत्यत्रादिपदेन लभ्यमेतत् साधनं भिन्नकालत्वमिति । २९ भिन्नप्रतिभासत्वमपि प्रयोजनादिभेदादित्यत्रादिशब्दपाठेन लभ्यम् । ३० परस्परविविक्तस्वभावपरिणामसंज्ञासंख्याप्रयोजनत्वादिकं सिद्धं यत । ३१ परस्परविविक्तस्वभावसंज्ञासंख्येत्यादिहेतो । ३२ तयो , द्रव्यपर्याययोर्भिन्नत्वम् । ३३ द्रव्यपर्यायरूपेण लक्ष्येण । ३४ हे जैन । ३५ सपक्षेऽन्वयद्वारेणोपसंहार्यो न भवति विपक्षे च व्यतिरेकद्वारेण न प्रदर्श्यते किन्तु पक्षे एव प्रवर्तते य सोनुपसंहार्यो हेतुः । सपक्षविपक्षरहित इत्यर्थ· । ३६ सर्वस्य पक्षीकृतत्वेन सपक्षविपक्षयोरभावेनासाधारणत्वसद्भावाल्लक्षणत्वं च । एतस्य लक्ष्यगमकत्वप्रसङ्ग· ।

इति चेन्न, कर्मतया प्रमितिजनकत्वस्य प्रमेयत्वस्यानुपसंहार्यस्यापि लक्षणत्वाविरोधात् सत्त्ववत्[1]। सद्वस्तुलक्षणम्, "उत्पादव्ययध्रौव्ययुक्तं सत्" इति वचनात्। ननु[2] च यन्न सन्न तद्वस्तु[3], यथा शशविषाणमिति विपक्षस्यासतः[4] सिद्धेर्नानुपसंहार्यं सत्त्वं[5], सपक्षविपक्षरहितस्य पक्षव्यापिनोनुपसंहार्यत्वादिति चेत् तर्त[6] एव प्रमेयत्वमप्यनुपसंहार्यं मा भूत्, खरविषाणस्यासतो भिन्नत्वानाश्रयस्य[7] कर्मत्वेन[8] प्रमित्यजनकस्याप्रमेयस्य विपक्षस्य भावात्। सर्वशब्देन[9] सतोसतश्च ग्रहणान्न तस्य[10] विपक्षत्वमिति चेत्तर्हि सद्ग्रहणेन भावस्य भावान्तरस्वभावप्रागभावादेश्च स्वीकरणात् कस्यचित्[11] तद्विपक्षत्वं[12] मा भूत्। पराभ्युपगतस्यानुत्पाद[13]व्ययध्रौव्य[14]युक्तस्य विकल्प[15]बुद्धिप्रतिभासिनो विपक्षत्वे[16] सदसद्वर्गाभावस्य[17] पराभ्युपगत[18]स्याप्रमाणविषयस्य विपक्षत्व[19]मस्तु सर्वथा विशेषा[20]भावात्। इति नानुपसंहार्यस्य संभवो, यतः पक्षव्यापिन एवासाधारणस्य वस्तुलक्षणत्वं न स्यात्, विद्यमानयोरविद्यमानयोर्वा सपक्षविपक्षयोरसतः[21] पक्षव्यापिनोसाधारणत्ववचनात्। एतेन[22] पक्षाव्यापकस्या[23]साधारणत्वं प्रत्युक्तं, तस्यासा[24]धारणैकदेशत्वाल्लक्षणत्वायोगादग्नेरुष्णत्ववत्[25]। न हि तत्[26] सकलाग्निव्यक्तिष्वस्ति प्रदीपप्रभादिष्वनुद्भूतोष्णस्पर्शेष्वभावात्। न चानुद्भूतमपि लक्षणं युक्तमप्रसिद्धत्वात्। यदि पुनरुष्णस्पर्शयोग्यत्वं पावकस्य लक्षणं स्यान्न[27] कश्चिद्दोषः[28] पक्षव्यापिनोऽसाधारणत्वसिद्धेः। एतेनो[29]विद्यमाने विपक्षेऽसतो[30]ऽसंभवत्सपक्षस्यासाधारणत्वमुपदर्शितं प्रत्येयम्। विद्यमाने च सपक्षेऽसतोऽसंभवद्विपक्षस्य पक्षव्यापिनोऽसाधारणस्य लक्षणत्वमविरुद्धं शब्दस्यानित्यत्वे[31] श्रावणत्ववत्[32]। न हि तद्[33] घटादावनित्ये सपक्षे विद्यमानेप्यस्ति। नाप्यस्य विपक्षो नित्यैकान्तः संभवति, शब्दत्व[34]स्यापि सदृशपरिणामलक्षणस्य कथंचिद[35]नित्यत्वात्, शब्दा[36]भाव[37]स्य च शब्दान्तरस्वभावस्येतरेत[38]राभावप्रध्वंसाभावरूपस्यानित्यत्वात् पक्षादन्यत्वानुपपत्तेः। [39]अशब्दात्मनोऽश्रावणत्वात् साधीय एव श्रावणत्वं शब्दस्य लक्षणं, शब्दात्मकत्वाभावेऽनुपपद्यमान[40]त्वात्। इत्यन्य[41]थानुपपद्यमानरूपं पक्षव्यापि लक्षणमनवद्यत्वात्।

तत्र[42] द्रव्यस्य लक्षणं गुणपर्ययवत्त्वं, "गुणपर्ययवद्द्रव्यम्" इति वचनात्[43], क्रमा[44]क्रमभाविविचित्रप-

---

१ यथा सत्त्वं वस्तुनो लक्षणम्। २ यौगः। ३ साधनाभावे साध्याभावरूपा विपर्ययेणात्र व्याप्तिः कृतास्ति। किमर्थम्? लक्ष्यलक्षणयोर्मध्ये एकस्याभावेऽपरस्याभावो भवतीति ज्ञापयितुम्। ४ सतो विपक्षः असत्, असतो विपक्षश्च सत्। ५ सर्वं वस्तु सत्त्वादित्यत्र। ६ जैन आह। ७ सर्वं वस्तु भिन्नं प्रमेयत्वादित्यत्र भिन्नत्वं साध्यम्। तस्यानाश्रयः खरविषाणं तस्य। ८ प्रमाणविषयतया। ९ सर्वं भिन्नं प्रमेयत्वादित्यत्र। १० खरविषाणस्य। ११ असतः। १२ तस्य सत्त्वस्य। १३ उत्पादव्ययरहितं सत्त्वमित्यभ्युपगतं साङ्ख्यैः। १४ ध्रौव्यरहितमिति सौगतैरभ्युपगतम्। १५ असत्यबुद्धिप्रतिभासिनः पराभ्युपगतस्य सत्त्वस्य। १६ पराभ्युपगतोनुत्पादव्ययध्रौव्ययुक्तो विकल्पबुद्धिप्रतिभासी कश्चित्पदार्थः सत्त्वस्य हेतोर्विपक्ष इत्यङ्गीक्रियमाणे इत्यर्थः। १७ द्रव्यगुणकर्मसामान्यविशेषसमवायाः सद्वर्गः। प्रागभावादिरसद्वर्गो वैशेषिकदर्शने। तदभावस्य नीरूपस्य। १८ परेण तत्त्वोपप्लववादिना॥ १९ प्रमेयत्वापेक्षया। २० सत्त्वप्रमेयत्वयोः। २१ अविद्यमानस्य लक्षणस्य। २२ पक्षव्यापिन एवासाधारणस्य वस्तुलक्षणत्वप्रतिपादनपरेण ग्रन्थेन। २३ हेतोः। २४ तस्य पक्षस्यैकदेशे व्यापकस्य लक्षणस्यासाधारणत्वेपि लक्षणत्वायोगादव्याप्तिसद्भावादित्यर्थः। २५ यथोष्णत्वमग्नेरसाधारणमपि न लक्षणं भवति लक्ष्यैकदेशवृत्तित्वात्। २६ तत्, उष्णत्वम्। २७ तर्हीति शेषः। २८ हेतुगतः। पक्षाव्यापित्वलक्षणः। २९ पक्षव्यापिनोऽसाधारणत्वकथनेन। ३० हेतोः। ३१ साध्ये। ३२ अत्र सपक्षविपक्षाभावेपि पक्षव्यापित्वाल्लक्षणत्वं यथा। ३३ श्रावणत्वम्। ३४ शब्दत्वं (सामान्यं) विपक्षो भविष्यतीत्याशङ्क्याह। ३५ पर्यायापेक्षया। ३६ शब्दाभावस्तर्हि विपक्षः स्यादित्याशङ्क्याह। ३७ स च शब्दाभावः शब्दान्तरस्वभावोऽशब्दरूपो वेति विकल्प्य क्रमेण दूषयन्ति। ३८ घटशब्देन यथा पटशब्दाभाव इतरेतराभावः। ३९ विकल्पद्वये द्वितीयविकल्परूपस्य शब्दाभावस्येत्यर्थः। ४० श्रावणत्वस्य। ४१ लक्ष्यं शब्दमन्तरेण। ४२ द्रव्यपर्याययोर्मध्ये इति प्रकृते। ४३ (श्रीतत्त्वार्थाधिगममोक्षशास्त्रकर्तुः)। ४४ इति वचनेपि द्रव्यस्य लक्ष्यत्वं गुणपर्ययवत्त्वस्य च लक्षणत्वं कुत इत्याशङ्क्याह साध्यद्वयेपि यथाक्रमं हेतुद्वयं योजयन्।

रिणामाभावे द्रव्यस्य लक्षयितुमशक्तेः, द्रव्यस्यापाये गुणपर्ययवत्त्वस्यानुपपत्तेः [1]कार्यद्रव्ये घटादिविशेषे[2] गुणवत्त्वस्य भावान्नवपुराणादिपर्याययोगित्वस्य च भावान्नाव्याप्तिर्लक्षणस्य । नाप्यतिव्याप्तिः, स्पर्शादिविशेषेषु[3] क्रमजन्मसु पर्यायेषु[4] स्पर्शादिसामान्येषु[5] सहभाविषु गुणेषु चाभावात्[6] । तथा पर्यायस्य तद्भावो लक्षणं, " तद्भावः परिणाम " इति वचनात् । तेन तेन प्रतिविशिष्टेन रूपेण भवनं हि परिणामः, [7]सहक्रमभाविष्वशेषपर्यायेषु तस्य[8] भावादव्याप्त्यसंभवात्, [9]तदभावे च द्रव्ये [10]तदनुपपत्तेः । इति प्रमाणसिद्धं भिन्नलक्षणत्वं[11] द्रव्यपर्याययोः कथंचिन्नानात्वं साधयति, रूपाद्युदाहरणस्यापि साध्यसाधनवैकल्याभावात्, कथंचिन्नानात्वेन व्याप्तस्य [12]भिन्नलक्षणत्वस्य परस्परविविक्तस्वभावपरि[13]णामादित्वेन साधनात् । रूपादेर्हि लक्षण रूपादिबुद्धिप्रतिभासयोग्यत्व भिन्नं प्रसिद्धं कथंचित्तन्नानात्वं चेति निरवद्यमुदाहरणम् । [14]ननु च भिन्न[15]लक्षणत्वं स्यान्ना[16]नात्वं च न स्याद्विरोधाभावात् । ततः सन्दिग्धविप[17]क्षव्या[18]वृत्तिको [19]हेतुरिति न [20]शङ्कनीयं, विरुद्धधर्माध्यासास्ख[21]लद्बुद्धिप्रतिभासभेदाभ्यां च वस्तुस्वभावभेद[22]सिद्धेः । [23]अन्यथाऽ[24]नानैकं जगत्स्यात्, तदभ्युपगमे [25]पक्षान्तरासंभवादिति, [26]विपक्षे[27] बाधकप्रमाणसद्भावान्निश्चि[28]तव्यतिरेकत्वात् साधनस्य[29] द्रव्य[30]पर्याययोः सर्वथैक[31]त्वे विरुद्धधर्माध्यासस्यास्खलद्बुद्धिप्रतिभासभेदस्य चायोगाद्भिन्नलक्षणत्वस्यानुपपत्तेः, [32]व्यापकस्य[33] [34]ग्राहकस्य चाभावे व्याप्यस्य[35] विपर्ययस्य[36] चाव्यवस्थितेः । व्यवस्थितौ वा भिन्नलक्षणत्वस्य न किंचिदेकं जगति स्यात् । नापि नाना, विरुद्धधर्माध्यासा[37]द्यभावेपि नानात्वस्य सिद्धौ [38]तस्य तत्साधन[39]त्वायोगात् । न चासाधना कस्यचित्सिद्धिरतिप्रसङ्गात् । न च नानात्वैकत्वाभ्युपगमे [40]प्रकारान्तरमस्ति, यतो जगदनानैकं न स्यात् । न हि विरुद्धधर्माध्यासेतराभ्यामन्यन्नानात्वैकत्वस्वरूपम् । नाप्यस्खलद्बुद्धिप्रतिभासभेदाभेदाभ्यामन्यत्तत्साधनं, यत्प्रकारान्तरं स्यात् । [41]ततः कारिकाद्वयेन सामान्यविशे[42]षात्मानमर्थं संहृत्य तत्रापेक्षानपेक्षैकान्तप्रतिक्षेपायाह भगवान् वास्तवमेव । इति स्यान्नाना[43]त्वमेव [44]स्वलक्षणभेदात् । स्यादेकत्वमेवाशक्यविवेचनत्वात् । स्यादुभयमेव क्रमार्पित-

---

१ कार्यद्रव्यस्य पर्यायत्वात्कथं द्रव्यलक्षणत्व घटते इत्याशङ्कयाह । २ स्थासकोशकुशूलादिषु च । ३ पर्यायमात्रेषु । ४ स्पर्शत्वादिभिरित्यर्थ । ५ केवलेषु । ६ गुणपर्ययवत्त्वलक्षणस्य । ७ स्पर्शादिसामान्यरूपसहभाविनो गुणा एव क्रमभावित्वे पर्याया उच्यन्ते । ८ तद्भावलक्षणस्य । ९ तर्ह्यतिव्याप्तिर्लक्षणस्य भविष्यतीत्याशङ्क्याह । १० तस्य, परिणामविशेषादेः । ११ परिणामविशेषादिति च । हेतुचतुष्टयरूपम् । १२ व्याप्यस्य । १३ आदिशब्देन संज्ञासंख्यालक्षणप्रयोजनानि गृह्यन्ते । नानात्वेन व्यापकेनेत्यर्थः । १४ साध्य । १५ द्रव्यपर्यायो । १६ नानात्वं, परस्परतो भेद । १७ संदिग्धा विपक्षाद्व्यावृत्तिर्यस्य स । १८ सन्दिग्धानैकान्तिक इत्यर्थः । १९ सर्वथैकत्वादिति हेतुरेकत्वसाधकोत्र । परिणामविशेषाच्च शक्तिमच्छक्तिभावत इति च हेतु । २० साध्येन । २१ पर्यायमात्रेषु । अस्खलन्ती, अबाध्यमाना । २२ कथञ्चिन्नानात्वसिद्धे । २३ विरुद्धधर्माध्यासास्खलद्बुद्धिप्रतिभासभेदाभावेपि वस्तुस्वभावे भेदसिद्धिर्यदि तदेत्यर्थ । २४ नानारहितम् । २५ विरुद्धधर्माध्यासास्खलद्बुद्धिप्रतिभासभेदौ विहाय प्रकारान्तरासंभवादित्यर्थ । २६ पक्षान्तरासंभव. कुत इत्युक्ते आह । २७ नानात्वाभावे सर्वथैकत्वे इत्यर्थ. । २८ नानात्वाभावलक्षणाद्विपक्षाद्व्यावृत्तिर्निश्चिता । २९ भिन्नलक्षणत्वस्य । ३० देहलीदीपकन्यायेनेदं पदं पूर्वेण पश्चात्तमेन च पदेन सह संयुज्यते । ३१ सर्वथैकत्व विपक्षोत्र । ३२ तयोर्विरुद्धधर्माध्यासास्खलद्बुद्धिप्रतिभासयोरभावेऽनुपपत्ति कुत इति शङ्कापनोदार्थमाह । ३३ अस्खलद्बुद्धिप्रतिभासस्य ग्राहकस्य । ३४ विरुद्धधर्माध्यासे सत्येव भिन्नलक्षणत्वम् । इति सति व्यापकत्वं विरुद्धधर्माध्यासस्य । ३५ भिन्नलक्षणत्वस्य । ३६ ग्राह्यस्य । ३७ आदिशब्देनास्खलद्बुद्धिप्रतिभासग्रहणम् । ३८ भिन्नलक्षणत्वस्य नानात्वस्य । ३९ तेन विरुद्धधर्माध्यासेन साधनत्वायोगात् । ४० विरुद्धधर्माध्यासास्खलद्बुद्धिप्रतिभासभेदौ विहाय । ४१ द्रव्यपर्याययोः कथंचिन्नानात्वमेकत्वं च सिद्धं यत. । ४२ द्रव्यपर्यायरूपमित्यर्थः । ४३ द्रव्यपर्याययोरिति सप्तस्वपि भङ्गेषु ज्ञेयम् । ४४ असाधारणस्वरूपभेदात् ।

द्वयात् । स्यादवक्तव्यमेव सहार्पितद्वयाद्धक्रमशक्यत्वात् । स्यान्नानात्वावक्तव्यमेव विरुद्धधर्माध्याससहार्पितद्वयात् । स्यादेकत्वावक्तव्यमेव, अशक्यविवेचनसहार्पितद्वयात् । स्यादुभयावक्तव्यमेव क्रमाक्रमार्पितद्वयात् । इति सप्तभङ्गीप्रक्रिया दृष्टेष्टाविरुद्धाववोद्धव्या पूर्ववत् ।

कार्यादेर्भेद एव स्फुटमिह नियतः सर्वथा कारणादे-
रित्याद्येकान्तवादोद्धततरमतयः शान्ततामाश्रयन्ति ।
प्रायो यस्योपदेशादविघटितनयान्मानमूलादलङ्घ्यात्,
स्वामी जीयात् स शश्वत्प्रथिततरयतीशोऽकलङ्कोरुकीर्तिः ॥

इत्याप्तमीमांसालंकृतौ चतुर्थः परिच्छेदः । ४ ।



१ ( तत्र क्रमार्पितद्वयादुभयरूपत्वमक्रमार्पितद्वयाच्चावक्तव्यत्वं द्वयोरपि, यतोऽक्रमेण विवक्षिते सति परस्परविरुद्धधर्मयोर्द्वयोर्युगपद्वक्तुमशक्यता ) । २ वस । उपदेशादित्यस्य विशेषणरूपम् । ३ मानं, प्रमाणम् । ४ श्रीसमन्तभद्राचार्यः । ५ अस्मिन् परिच्छेदे प्रथमं वैशेषिकमतसमतस्य भेदैकान्तस्य प्रतिविधानं दर्शितम् । तत्र तावत्पूर्वमेकषष्टितम्यां कारिकायां तत्पूर्वपक्षो दर्शितः । तथाहि, कार्यकारणादि गुणगुण्यादि च परस्पर भिन्नं, भिन्नलक्षणत्वात्, भेदेन प्रतिभासाच्च । सर्वथा तदभेदे कार्यकारणादिस्वरूपं न घटते, कार्यस्य तदुत्तरसमयवर्तित्वात् कारणस्य तत्पूर्वाव्यवहितसमयस्थायित्वात् । ययोश्च परस्परं न भेदस्तयोर्देशः कालो वा न भिद्येत, भिद्येते च देशकालौ कार्यकारणयोः । इत्येवं पूर्वपक्षं समर्थ्य तत्प्रतिविधानं द्विषष्टितमकारिकात' कृतमस्ति । यथा च, अन्यत्वैकान्तेपि एकस्य कार्यस्यानेककारणादौ प्रवृत्तिः स्वीकर्तव्या एव, तदस्वीकारे कार्यकारणभावादिविरोधात् । तद्वृत्तौ च सर्वात्मनैकदेशेन वा स्वीकारे एकस्यापि वहुत्वसभवो वहुप्रदेशित्वापत्तिर्वा । न च तथा भेदैकान्ते संभवति, तथा सति तदेकान्तविघटनात्, पूर्वं कारणदशायामनेकस्य कार्यरूपत्वे एकत्वसंभवेन सर्वथान्यत्वाघटनात् । समवायेन वृत्तिश्च न घटते, तस्य प्रागेव निराकरणात् । अदृष्टवशाद्वृत्तिकल्पने प्रत्यक्षसिद्धः स्याद्भेद एव किमिति नाङ्गीक्रियेत ? इत्यादिप्रकारेण वैशेपिको निरस्तः । सप्तषष्टितमकारिकातो बौद्ध. पराजित. । तत एकान्नसप्ततितमकारिकातः साङ्ख्यमतनिषेध. । सप्ततितमकारिकात. स्याद्वादविधाने सर्वस्य सुघटत्वदर्शनम् । इत्ययमस्य परिच्छेदस्य निष्कर्षः संभवति ।

# अथ पञ्चमः परिच्छेदः ।

स्फुटमकलङ्क[1]पदं या प्रकटयति परिष्टचेतसामसमम्[2] ।
दर्शितसमन्तभद्रं[3] साष्टसहस्री सदा जयतु ॥ १ ॥
यद्यापेक्षिक[4]सिद्धिः स्यान्न द्वयं[5] व्यवतिष्ठते ।
[6]अनापेक्षिकसिद्धौ च न सामान्यविशेषता ॥ ७३ ॥

[7]धर्मधर्मिणोरापेक्षिकी[8] सिद्धिः, प्रत्यक्ष[9]बुद्धौ तदनवभासनाद्दूरेत[10]रादिवत् । न हि प्रत्यक्षबुद्धौ धर्मो धर्मी वा प्रतिभासते, [11]तत्पृष्ठभाविविकल्पोपकल्पितत्वात्, तस्य, स्वलक्षणस्यैव तत्र प्रतिभासनात्, [12]शब्दापेक्षया[13] सत्त्वादेर्धर्मत्वेपि ज्ञेयत्वापेक्षायां धर्मित्वव्यवहरणात्, तदपेक्षया[14] ज्ञेयत्वस्य धर्मत्वेप्यभिधेय[15]-त्वापेक्षाया धर्मित्वव्यव[16]हारात्, [17]तदपेक्षया चाभिधेयत्वस्य [18]धर्मत्वे प्रमेयत्वापेक्षाया धर्मित्वप्रसिद्धेः । [19]इति न क्वचिद्धर्मो धर्मी वा व्यवतिष्ठते । [20]ततो न तात्त्विकोसौ[21] । [22]न हि नीलस्वलक्षणं संवित्स्वलक्षण वा प्रत्यक्षमवभास[23]मानं किंचिद्[24]पेक्ष्यान्यथा[25]भावमनुभवदुपलब्धम् । केवलमपेक्षा[26]बुद्धौ विशेषणविशेष्यत्वं सामान्यविशेषत्वं गुणगुणित्वं क्रियाक्रियावत्त्वं कार्यकारणत्व साध्यसाधनत्वं ग्राह्यग्राहकत्वं वा प्रकल्प्यते दूरेतरत्वादिवत् ।

[27]इति यद्यापेक्षिकसिद्धिः[28] स्यात्तदा न द्वयं व्यवतिष्ठते नीलस्वलक्षणं तत्संवेदनं चेति, तयोरप्यापेक्षिकत्वाद्विशेषणविशेष्यत्वा[29]दिवत् । तथा हि । ययोः सर्वथा परस्परापेक्षाकृता सिद्धिस्तयोर्न व्यवस्था । यथा परस्पराश्रययोः सरिति प्लवमानयोः । तथा च नीलतद्वेदनयोः सर्वथापेक्षाकृता सिद्धिः । इति [30]तद्द्वयमपि न व्यवतिष्ठते । न हि नीलं नीलवेद[31]नानपेक्षं सिध्यति, तस्यावेद्यत्वप्रसङ्गात् संविन्निष्ठत्वाच्च वस्तुव्यवस्थानस्य । नापि नीलानपेक्षं नीलवेदनं, [32]तस्य [33]तस्मादात्मलाभोप[34]गमादन्यथा निर्विषय[35]त्वापत्तेः ।

---

१ अष्टशती अकलङ्कदेवकृता तत्पदम् । २ अनुपमम् । ३ समन्तभद्रकृता मूलस्तुतिर्देवागमनामिका सा दर्शिता येन । ४ बौद्धं प्रति स्वामी प्राह । अपेक्षैव प्रयोजन येषामर्थाना तेषा सिद्धि निष्पत्तिर्वा, अथवा आपेक्षिकी चासौ सिद्धिश्च सा यदि स्यात्तदा कार्यकारणादि द्वयं युगपन्न व्यवतिष्ठते । कस्मात् ? एकेनैकस्य प्रतिहतत्वात् । अपेक्षासिद्धिर्विकल्पज्ञानेनापेक्ष्य जनिता, न तु पारमार्थिकीत्यर्थ । ५ नीलस्वलक्षणं ( ज्ञेयं कारणरूप ) नीलसंवेदनं ( ज्ञानं कार्यरूपं ) चेति द्वयम् । ६ सामान्यविशेषयोस्तर्ह्यनापेक्षिकी सिद्धिरस्त्विति यौग. । तं प्रत्याहुः । ७ बौद्ध । ८ कल्पितैव, न तु पारमार्थिकी । ९ निर्विकल्पज्ञाने । १० दूरेतरादिर्यथापेक्षिकी सिद्धिः प्रत्यक्षे निर्विकल्पके न प्रतिभासते, तत्र वस्तुन एकत्वप्रतिभासनात् । ११ तस्य, निर्विकल्पकप्रत्यक्षस्य । १२ धर्मधर्मिणोर्विकल्पमात्रोपकल्पितत्वं दर्शयन्नाह बौद्ध । १३ परार्थानुमानापेक्षया, सर्वं क्षणिकं सत्त्वादिति । १४ ज्ञेयत्वापेक्षया, सत्त्वं ज्ञेयमित्येवम् । अत्र सत्त्वादिर्धर्म. । १५ शब्दापेक्षायामित्यर्थः । १६ ज्ञेयत्वस्यैव । १७ अभिधेयत्वापेक्षया । १८ ज्ञेयस्य धर्मिण. सत्त्वादेरभिधेयत्वं धर्म । १९ इति, हेतोः । २० यतो न व्यवतिष्ठते । २१ धर्मो धर्मी वा ( किंतु कल्पित. ) । २२ धर्मधर्मिणो क्वचिद्व्यवस्थानाभावेपि तात्त्विकत्वं कुतो न स्यादित्युक्ते आह । २३ नीलस्वलक्षणस्य सवित्स्वलक्षणस्य च तात्त्विकत्वं, नापरस्य धर्मस्य धर्मिणो वत्यर्थ । २४ पीतादिकम् । २५ नीलस्वलक्षणं पीतत्वेन । २६ अपेक्षया जनिताया बुद्धौ, विकल्पबुद्धावित्यर्थ । २७ इति, एवं चेद्वदे बौद्ध । जैनो वक्ति । २८ विशेष्यविशेषणत्वादे । कार्यनिष्पत्तिं प्रति । २९ आदिपदेन सामान्यविशेषत्वादीनां ग्रहणम् । ३० तयो, नीलतद्वेदनयोर्द्वयम् । ३१ नीलज्ञाननिरपेक्षम् । ३२ नीलवेदनस्य । ३३ नीलात् । ३४ नाकारण विषय इति सौगतैरभ्युपगतत्वात् । ३५ नीलवेदनस्य ।

इत्यन्यतराभावे शेषस्याप्यभावाद्द्वयस्याव्यवस्थानं स्यात् । एतेन[1] नीलवासनातो नीलवेदनमि[2]त्यस्मिन्नपि दर्शने द्वयाव्यवस्थितिरुक्ता तयोरन्योन्यापेक्षै[3]कान्ते स्वभावतः प्रतिष्ठितस्यै[4]कतरस्याप्यभावेन्यतराभावादुभयं[5] न प्रकल्प्येत, नीलवेदनाभावे तद्वासनाविशेपस्याव्यवस्थितेरन्यथातिप्रसक्तेः[6], तद्वासनाविशेषमन्तरेण नीलवेदनस्याव्यवस्थितेरन्यथा[7] निर्निमित्तत्वापत्तेः । स्यान्मतं, नीलवेदनस्य स्वतः प्रकाशनान्नायं दोष इति तदसत्, परस्परापेक्षैकान्तविरोधात्[8], दण्डादेर्विशेषणस्य स्वबुद्धौ[9] स्वतः[10] सिद्धेः सामान्यादेरपि[11] स्वग्राहिणि ज्ञानेऽन्यानपेक्षस्य प्रतिभासनाद्विशेष्यविशेषणादेरपि तथा[12] प्रसिद्धेर्द्वयाभावा[13]नवकाशात् । ततः[14] एव दूरेतरादिदृष्टान्तोपि साध्यसाधनधर्मविकलः स्यात्, दूरासन्नभावयोरपि[15] स्वभावविवर्तविशेषाभावे[16] समानदेशादे[17]रपि प्रसङ्गात्[18] । न च समानदेशकालस्वभावयो[19]रन्योन्यापेक्षयापि दूरासन्नभावव्यवहारः, खरविषाणयोरिव तत्स्वभावशून्ययो[20]स्तदयोगात्[21] । तदिमौ[22] स्वभावतः स्तामन्यथेतरेतराश्रयदोषा[23]नुषङ्गात् । एतेन[24] स्वाश्रयशब्दाद्यपेक्षया[25] सत्त्वादेर्धर्मत्वेन स्वधर्मापेक्षायां[26] धर्मित्वं नाव्यवस्थाकारित्वेनायुक्तमिति प्रकाशितं, तथाविध[27]स्वभावविशेषाभावे परापेक्षयापि[28] धर्मधर्मिभावानुपपत्तेः, अनन्तत्वाच्च धर्माणां[29] तदपेक्षि[30]णामप्यपर्यन्तत्वात्, अन्यथा[31]भिप्रेतधर्मधर्मिणोरप्यव्यवस्थापत्तेः । इति नापेक्षैकान्तः श्रेयान् ।

योऽप्याह[32] 'धर्मधर्मिणोः सर्वथा नापेक्षिकी सिद्धिः, प्रतिनियतबुद्धिविषयत्वान्नीलादिस्वरूपवत्[33][34], सर्वथा[35]नापेक्षिकत्वाभावे प्रतिनियतबुद्धिविषयत्वानुपपत्तेः खपुष्पवत्' इति[36], तस्यानपेक्षापक्षेपि[37] नान्वयव्यतिरेकौ स्यातां, भेदाभेदयो[38]रन्योन्यापेक्षात्मकत्वाद्विशेषेतरभावस्य[39] । अन्वयो हि सामान्यं, व्यतिरेको विशेषः । तौ च परस्परापेक्षौ व्यवतिष्ठेते । तयोरनापेक्षिकसिद्धौ च न सामान्यविशेषता । प्रतिनियतबुद्धिविषययोरपि प्रतिनियतपदार्थता स्यान्नीलपीतवत्[40] । न ह्यभेदो[41] भेदनिरपेक्षः प्रतिनियतान्वयबुद्धिविषयोस्ति, नापि भेदो[42] जातुचिदभेदनिरपेक्षः प्रतिनियतव्यतिरेकबुद्धिविषयः संभाव्यते कस्यचिदे[43]कव्यक्ते[44]रपि प्रथमदर्शनकाले तद्बुद्धि[45]विषयत्वप्रसङ्गात् । तदनेन[46] प्रतिनियतबुद्धिविषयत्वस्य हेतोर्विरुद्धत्वं[47] प्रतिपादितं

---

१ द्वयाव्यवस्थानप्रतिपादनेन । २ उत्पद्यते इति शेष । ३ अङ्गीक्रियमाणे । ४ नीलवासनारूपस्य नीलरूपस्य वा । ५ नीलज्ञाननीलवासनाद्वयम् । ६ धूमलक्षणलिङ्गाभावेपि पर्वतेग्निसाधनत्वप्रसङ्गात् । ७ नीलवासनामन्तरेण नीलज्ञानस्य व्यवस्थितिश्चेत्तर्हि । ८ विरोधोऽभावार्थकः । ९ विशेषणबुद्धौ । १० विशेष्यापेक्षामन्तरेण । ११ अपिशब्देन क्रियागुणादिग्रहणम् । १२ स्वत प्रकारेण । १३ प्रतिवादिनोक्तो द्वयाभावो जैनाना नास्तीति भावः । १४ विशेषणविशेष्यसामान्यविशेषादिरूपद्वयाभावस्यानवकाशात् । १५ पदार्थयोः । १६ दूरासन्नत्वस्वभावलक्षणविवर्तविशेषस्याभावे । १७ पदार्थस्य । १८ ( दूरासन्नतादिप्रसङ्गात् ) । १९ पदार्थयोः । २० दूरासन्नत्वस्वभावशून्ययो. । २१ तस्य, दूरासन्नभावव्यवहारस्य । २२ दूरासन्नभावौ । २३ दूरेतरार्थप्रतिपत्तौ दूरेतरार्थप्रतिभासप्रतिपत्तिः, तस्या च तत्प्रतिपत्तिरिति । २४ दूरासन्नपदार्थयोः स्वभावतः स्थितिप्रतिपादनेन । २५ स्वं सत्त्वम् । तस्याश्रयभूतः शब्दो ( सत्त्वस्याश्रयः शब्दः ), यथा शब्द. क्षणिकः सत्त्वादिति । आदिशब्देन ज्ञेयत्वाभिधेयत्वप्रमेयत्वादीना ग्रहणम् । २६ अतिप्रसङ्गो भवति । स च नास्ति यत. । २७ तथाविधस्य, परमार्थतो धर्मधर्मिस्वरूपस्य । २८ धर्मधर्मित्वादिकं कल्पितमस्तीत्यादिरूपया । २९ ते, धर्मा. । ३० सर्वेषा धर्मधर्मिणां स्वत.सिद्ध्यभावे । ३१ अपिशब्दो हेत्वन्तरद्योतकः । ३२ यौगः । ३३ धर्मधर्मिणो । ३४ जैनमते नीलनीलस्वरूपयोरनापेक्षिकसिद्धिः । अत एव जैनान्प्रति सिद्धो दृष्टान्तः । ३५ प्रतिनियतबुद्धिविषयत्वं च स्यादनापेक्षिकत्वं च न स्यादिति सन्दिग्धानैकान्तिकत्वे सत्याह । ३६ इति योप्याह तस्यात्र दूषणमाह जैन. । ३७ न केवलमपेक्षापक्षे एव । ३८ विशेषसामान्ययोः । ३९ इतरत्, सामान्यम् । ४० यथा नीलपीतयोरनापेक्षिकसिद्धौ इदं नीलमिदं पीतमिति निश्चयो न स्यात् । ४१ अस्य विशेषस्येदं सामान्यमस्य सामान्यस्य चायं विशेष इति प्रतिनियतान्वयव्यतिरेकबुद्धिविषयत्वात्तयोः सामान्यविशेषयोः सामान्यविशेषरूपता स्यादित्याशङ्कायामाह । ४२ भेदो विशेष । ४३ अन्यथेति शेषः । ४४ घटादे. । ४५ तद्बुद्धिः, अन्वयबुद्धिर्व्यतिरेकबुद्धिश्च । ४६ संभाव्यते इत्यनेन । ४७ सापेक्षिकत्वसाधनात् ।

तस्य कथंचिदापेक्षिकत्वेन व्याप्तत्वात् प्रत्यक्षबुद्धिप्रतिभासित्व[1]वत्। ततो नैतौ[2]वेकान्तौ घटेते, वस्तुव्यवस्थानाभावानुषङ्गात्।

विरोधान्नोभयैकात्म्यं[3] स्याद्वादन्यायविद्विषाम्।
अवाच्यतैकान्तेऽप्युक्तिर्नावाच्यमिति युज्यते। ७४।

अनन्तरैकान्तयो[4]र्युगपद्[5]विवक्षा मा भूद्विप्रतिषेधात् सदसदेकान्तवत् स्याद्वादानाश्रयणात्। तथानभिधेयत्वैकान्तेपीति कृतं विस्तरेण, सदसत्त्वाभ्यामनभिधेयत्वैकान्तवत्।

इति कथंचिदापेक्षिकत्वेतरानेकान्तं प्रतिपक्ष[6]प्रतिक्षेपसामर्थ्यात्सिद्धमपि दुरारेका[7]पाकरणार्थमाचक्षते,—

धर्मधर्म्यविनाभावः सिध्यत्यन्योन्यवीक्षया।
न स्वरूपं[8] स्वतो ह्येतत् कारकज्ञापकाङ्ग[9]वत्। ७५।

धर्मधर्मिणोरविनाभावोन्योन्यापेक्षयैव सिध्यति, न तु स्वरूपं, तस्य [10]पूर्वसिद्धत्वात्। स्वतो[11] ह्येतत्सिद्धं सामान्यविशेषवत्। सामान्यं हि स्वतःसिद्धस्वरूपं भेदा[12]पेक्षान्वयप्रत्ययादवगम्यते। [13]विशेषोपि स्वतःसिद्धस्वरूपः सामान्यापेक्षव्यतिरेकप्रत्ययादवसीयते। न केवलं सामान्यविशेषयोः स्वलक्षण[14]मपेक्षितपरस्पराविनाभावलक्षणं स्वतःसिद्धलक्षणमपि तु धर्मधर्मिणोरपि गुणगुण्यादिरूपयोः[15], कर्तृकर्मबोध्यबोधकवत् [कारकाङ्गकर्तृ[16]कर्मवत् ज्ञापकाङ्गबोध्यबोधक[17]वच्च]। न हि कर्तृस्वरूपं कर्मा[18]पेक्षं कर्मस्वरूपं वा कर्त्रपेक्षम्, उभयासत्त्वप्रसङ्गात्[19]। नापि कर्तृत्वव्यवहारः कर्मत्वव्यवहारो वा परस्परानपेक्षः, कर्तृत्वस्य कर्मनिश्चयै[20]रवसेयत्वात्, कर्मत्वस्यापि कर्तृप्रतिपत्तिसमधिगम्यमानत्वात्। एतेन बोध्यबोधकयोः प्रमेयप्रमाणयोः स्वरूपं स्वतःसिद्धं ज्ञाप्यज्ञापकव्यवहारस्तु परस्परापेक्षासिद्ध इत्यभिहितम्। तद्वत्सकलधर्मधर्मिभूतानामर्थानां '(१) स्यादापेक्षिकी [21]सिद्धिः, तथा व्यवहारात्। (२) स्यादनापेक्षिकी पूर्वप्रसिद्धस्वरूपत्वात्। (३) स्यादुभयी क्रमार्पित[22]द्वयात्। (४) स्यादवक्तव्या, सहार्पितद्वयात्। (५) स्यादापेक्षिकी चावक्तव्या च, तथा[23] निश्चयेन सहार्पितद्वयात्। (६) स्यादनापेक्षिकी चावक्तव्या च, पूर्वसिद्धत्वसहार्पितद्वयात्। (७) स्यादुभयी[24] चावक्तव्या च, क्रमाक्रमार्पितोभयात्।' इति सप्तभङ्गीप्रक्रियां योजयेन्नयविशेषवशादविरुद्धा पूर्ववत्।

अपेक्षैकान्तादि[25]प्रबलगरलोद्रेकदलिनी प्रवृद्धानेकान्तामृतरसनिषेकानवरतम्।
प्रवृत्ता वागेषा सकल[26]विकलादेशवशतः समन्ताद्भद्रं वो दिशतु मुनिप[27]स्याऽमलमतेः॥

इत्याप्तमीमांसालंकृतौ[28] पञ्चमः परिच्छेदः।

---

१ दूरेतरादौ प्रत्यक्षबुद्धिप्रतिभासित्वं यथा कथंचिदापेक्षिकत्वेन व्याप्तम्। २ आपेक्षिकत्वानापेक्षिकत्वलक्षणौ। ३ आपेक्षिकानापेक्षिकद्वयम्। ४ आपेक्षिकत्वानापेक्षिकत्वयो। ५ ऐकात्म्ये। ६ प्रतिपक्षस्य, सर्वथापेक्षिकत्वानापेक्षिकत्वोभयरूपस्य। ७ सकलशून्यतायाः, उपप्लुततत्त्वस्य वा। ८ स्वरूपमन्योन्यवीक्षया न सिध्यति। ९ कारकस्याङ्गे, अवयवौ। ते कर्तृकर्मणी व्यवहाररूपे परस्परापेक्षे। ज्ञापकस्याङ्गे, अवयवौ तथैव परस्परापेक्षे ज्ञेये। १० धर्मधर्मिविवक्षात. प्राक्। ११ स्वकारणकलापादेव। १२ भेदो, व्यतिरेक। वस्र॰। १३ एवमेव। १४ स्वकीयस्वरूपम्। १५ स्वत सिद्धस्वरूपं ज्ञातव्यम्। १६ यथा कारकस्याङ्गे, अवयवौ। ते च ते कर्तृकर्मणी च। १७ ज्ञानस्याङ्गे (अवयवौ) वेद्यवेदकज्ञाने यथा। १८ अन्यथा कर्तृस्वरूपाभाव॰ स्यात्। १९ इतरेतराश्रयत्वेन। २० कर्मनिश्चयपूर्वकत्वेनावसेयत्वादित्यर्थ। २१ सिद्धिशब्द सप्तस्वपि भङ्गेषु वाच्य.। २२ अपेक्षानपेक्षाधर्मद्वयस्य। २३ धर्मधर्मित्वक्रमप्रकारेण। २४ आपेक्षिकी चानापेक्षिकी चावक्तव्या चेत्यर्थ। २५ यसः। २६ सकलादेशरूपः पदार्थ. प्रमाणविषय। विकलादेशरूपस्तु (वस्त्वेकाश) नयाधीन। २७ श्रीसमन्तभद्रस्वामिन। २८ अत्र सर्ववस्तूना तद्गतधर्माणां च स्यादापेक्षिकी स्यादनापेक्षिकी सिद्धिर्दर्शिता, तदेकान्तमतानि च निरसितानि।

# अथ षष्ठः परिच्छेदः ।

पुष्यदकलङ्कवृ[1]त्तिं समन्तभद्रप्रणीततत्त्[2]वा[3]र्थाम् ।
निर्जितदुर्णयवादामष्टसहस्रीमवैति सद्दृष्टिः ॥

सिद्धं चेद्धेतुतः सर्वं न प्रत्यक्षादितो ग[4]तिः ।
सिद्धं चेदागमात्सर्वं विरुद्धार्थमतान्य[5]पि । ७६ ।

इह[6] हि सकललौकिकपरीक्षकैः उपेयतत्त्वं व्यवस्थाप्योपायतत्त्वं व्यवस्थाप्यते, कृष्यादिषु प्रवर्तमानानां व्यवस्थि[7]तसस्याद्युपेयानामेव तदुपायव्यवस्थापनप्रयत्नोपलम्भात्, 'प्रयोजनमनुद्दिश्य न मन्दोपि प्रवर्तते' इति प्रसिद्धेः, मोक्षार्थिनां च प्रेक्षावतां व्यवस्थितोपेयमोक्षस्वरूपाणामेव तदुपायव्यवस्थापनव्यापारदर्शनात्, अव्यवस्थितमोक्षतत्त्वानां तदुपायव्यवस्थापनपराङ्मुखत्वाच्चार्वाकादि[8]वत् । त[9]त्र हेतुत[10] एव सर्वमुपेय[11]तत्त्वं सिद्धं, न प्रत्यक्षात्, तस्मिन्सत्यपि विप्रतिपत्तिसम्भवात्, युक्त्या यन्न घटामुपैति तदहं दृष्ट्वापि न श्रद्दधे इत्यादेरेकान्तस्य बहुलं दर्शनात्, अर्थानर्थविवेचनस्यानुमानाश्रयत्वा[12]त्तद्विप्रतिपत्तेस्तद्व्यवस्थापनायाहेत्वादि[13]वचनात् । प्रत्यक्षतदाभासयोरपि व्यवस्थितिरनुमा[14]नात्, अन्य[15]था संकर[16]व्यतिकरोपपत्तेरर्था[17]नर्थविवेचनस्य प्रत्यक्षाश्रयत्वासंभवात् । इति [18]केचित्तेषां प्रत्यक्षाद्गतिरनुमानादे[19]रिवेतोपि न स्यात् । न[20] च धर्मिणः साधनस्योदाहरणस्य च प्रत्यक्षादग[21]तौ कस्यचिदनुमानं प्रवर्तते । अनुमानान्तराच्चद्गतौ तस्यापि धर्म्यादि[22]गतिपूर्वकत्वादनुमानान्तरमपेक्षणीयमित्यनवस्था स्यात् । ततः कथंचित्साक्षात्करणमन्तरेण धर्म्यादीनां न क्वचिदनुमा[23]नं प्रवर्तेत । किं पुनः शास्त्रोपदे[24]शात् ? इति प्रत्यक्षादपि सिद्धिरभ्यस्तविषयेऽभ्युपगन्तव्या, अन्यथा शब्दे[25]लिङ्गादिप्रतिपत्तेरयोगात् परार्थानुमानरूपाणामपि शास्त्रोपदेशानामप्रवृत्तेः ।

ये त्वाहुः—'आगमादेव सर्वं सिद्धं, तमन्तरेण प्रत्यक्षेपि माणिक्यादौ यथार्थनिर्णयानुपपत्तेः, अ[26]नुमान-

---

१ ( अकलङ्कवृत्तिः, अष्टशती । सा पुष्यन्ती यस्या सा ताम् )। २ समन्तभद्रप्रणीतो देवागमोत्र मूलम् । सोपि समन्तभद्रशब्दवाच्यः स्यात्, कल्याणार्थत्वात्। तेन प्रणीतस्तत्त्वार्थो यस्या सा ताम् । ३ यथासंभवमन्योप्यर्थो विकल्प्यः। ४ गतिः, ज्ञानम् । ५ सिद्धानि भवेयुरिति शेषः । ६ इह हीत्याद्यारभ्य चार्वाकादिवदित्यन्तो ग्रन्थः कारिकाया अवतारो द्रष्टव्यः । ७ व्यवस्थितं, निश्चितम् । वसोत्र । ८ यथा चार्वाकादीनामनिश्चितमोक्षतत्त्वाना मोक्षकारणदर्शनादेर्व्यवस्थापने पराङ्मुखत्वम् । ९ एवं सति केचित्सौगता एवं हेतुवादं मन्यन्ते । १० अनुमानादेव । ११ कार्यतत्त्वम् । १२ अर्थानर्थविवेचनस्यानुमानाश्रयत्वेपि । १३ आगमादिवचनादित्यर्थः । १४ यतः प्रत्यक्षस्य निर्विकल्पकत्वम् । १५ यदि प्रत्यक्षत एव प्रत्यक्षतदाभासयोर्व्यवस्थितिस्तर्हीत्यर्थः । १६ प्रत्यक्षं, प्रत्यक्षं तदाभासं च स्यादिति संकरः । १७ प्रत्यक्षतदाभासयोरर्थानर्थौ विषयतदाभासौ । तयोर्विवेचनं तस्य । १८ ( अनुमानवादिनः सौगता. ) । १९ प्रत्यक्षादादिभूतादपि उपेयतत्त्वस्य गतिर्न स्यादिति सबन्धः । २० प्रत्यक्षाद्गतिर्मा भूदित्याशङ्कायामाह । २१ अज्ञानेङ्गीक्रियमाणे । २२ आदिशब्देन साधनोदाहरणे ग्राह्ये । २३ शिष्यादीन् प्रति । २४ अपि तु न किंचित् प्रयोजनम् । २५ शब्दादिः क्षणिकः सत्त्वादिति स्वार्थानुमाने धर्मिभूतशब्दस्य, सत्त्वादिति लिङ्गस्य च प्रतिपत्तेरयोगात् । २६ अनुमानात्सर्वं सिद्धं भविष्यतीत्याशङ्कायामाह ।

प्रतिपन्नेपि चिकित्सिता[1]दावागमापेक्षणात्, आगमबाधितपक्षस्यानुमानस्यागमकत्वा[2]च्च, पर[3]ब्रह्मणः शास्त्रा[4]देव सिद्धेः, प्रत्यक्षानुमानयोरविद्याविवर्तविषयत्वादागमविषये सन्मात्रात्मनि परमात्मन्येव प्रमाणत्वव्यवह[5]रणात्। अबाधिताश्चैते शास्त्रोपदेशाः 'सर्वं खल्विदं ब्रह्म' इत्यादयः, प्रत्यक्षानुमानयोस्तद[7]विषयत्वेन तद्बाधकत्वायोगात्' इ[6]ति, तेषां विरुद्धार्थमतान्यपि शास्त्रोपदेशेभ्यः सिध्यन्तु, विशेषाभावात्। सम्यगुपदेशेभ्यस्तत्त्वसिद्धिरिति चेत्तर्हि युक्तिरपि तत्त्वसिद्धिनिबन्धनं, त[8]त एव तेषां[9] सम्यक्त्वनिर्णयात्, अदुष्टकारणजन्यत्वबाधवर्जितत्वाभ्यां त[10]दुपगमात्। न चैते[11] युक्तिनिर[12]पेक्षाः, प[13]रस्परविरुद्धार्थतत्त्वसिद्धिप्रसङ्गात्, परब्रह्मण एवापौरुषेयादागमात्सिद्धिर्न पुनः कर्मकाण्ड[14]स्येश्वरादिप्रवादस्य चेति नियाम[15]काभावात्। कथं च श्रौत्रप्रत्यक्षस्याप्रमाणत्वे वैदिकशब्दस्य प्रतिपत्तिर्यतस्तदर्थनिश्चयः स्यात्? प्रमाण[16]त्वे कुतोनुमाना[17]भावे सवादविसवादाभ्यां प्रमाणेतरसामान्याधिगमो यतः किंचिदे[18]व श्रौत्रं प्रत्यक्षं प्रमाणं नान्यदिति व्यवतिष्ठेत? ततः कुतश्चिदागमात्तत्त्वसिद्धिमनुरु[19]ध्यमानेन प्रत्यक्षानुमानाभ्यामपि तत्त्वसिद्धिरनुमन्तव्या, अन्यथा[20] त[21]दसिद्धेः।

प्रत्यक्षानुमानाभ्यामेव तत्त्वसिद्धिर्नागमादित्य[22]परे तेपि न सत्यवादिनः, ग्रहोप[23]रागादेस्तत्फलविशेषस्य च ज्योतिःशास्त्रादेव सिद्धेः। न च प्रत्यक्षानुमानाभ्यामन्तरेणोपदेशं[24] ज्योतिर्ज्ञानादिप्रतिपत्तिः। सर्वविदः प्रत्यक्षादेव त[25]त्प्रतिपत्तिरनुमानविदां पुनरनुमानादपीति चेन्न, सर्वविदामपि योगिप्रत्यक्षात्पूर्वमुपदेशाभावे तदुत्पत्त्ययोगादनुमाना[26]भाववत्। ते हि श्रुतम[27]यीं चिन्ता[28]मयीं च भावनां प्रकर्षपर्यन्तं प्रापयन्तोतीन्द्रियप्रत्यक्षमात्मसात्कुर्वते, नान्यथा। तथानुमानविदामपि नात्यन्तपरोक्षेष्वर्थे[29]षु परोपदेशमन्तरेण साध्याविनाभाविसाधनधर्मप्रतिपत्तिः संभवति, स[30]र्वज्ञत्व[31]प्रसङ्गात्। इति चिन्तितमन्य[32]त्र। ततो नैतावप्येकान्तौ युक्तौ।

विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषाम्।
अवाच्यतैकान्तेप्युक्तिर्नावाच्यमिति युज्यते। ७७।

युक्तीतरै[33]कान्तद्वयाभ्युपगमोपि मा भूत्, विरुद्धयोरेकत्र सर्वथासंभवात्, स्याद्वादन्यायविद्विषां क[34]थंचित्तदनभ्युपगमात्। तदवा[35]च्यत्वेपि पूर्ववत् स्ववचनविरोधप्रसङ्गः।

---

१ वैद्यकशास्त्रे। २ ब्राह्मणेन सुरा पेया द्रवद्रव्यत्वात् क्षीरवदित्याद्यनुमानेषु 'न सुरां पिबेत्, न पलाण्डुं भक्षयीत' इत्याद्यागमेन पक्षबाधा यथा। ३ लौकिकतत्त्वमागमात्सिध्यति, न तु पारमार्थिकमित्याशङ्क्याह। ४ शास्त्रस्य। ५ स, आगम.। ६ इति, ये त्वाहुरिति पूर्वेण सम्बन्धः। ७ ब्रह्माद्वैतिनाम्। बौद्धसांख्यनैयायिकादीनामिति टिप्पण्यन्तरम्। ८ युक्त्या एव। ९ उपदेशानाम्। १० तस्य, सम्यक्त्वस्य। ११ उपदेशा। १२ उपदेशा सम्यक्, अदुष्टकारणजन्यत्वाद्बाधवर्जितत्वाच्चेत्यनुमाननिरपेक्षाः। १३ अन्यथेति शेषः। १४ कर्मणो यागादिक्रियाया काण्ड प्रकरणम्। १५ परब्रह्मकर्मकाण्डेश्वरादिप्रतिपादकागमानामपौरुषेयत्वाविशेषे विशेषाधायकत्वाभावात्। १६ श्रौत्रप्रत्यक्षस्य प्रमाणत्वेङ्गीक्रियमाणे च। १७ इदं श्रौत्रं प्रत्यक्षं प्रमाणं सवादकत्वात्, इदं त्वप्रमाणं विसवादकत्वादित्यनुमानाभावे श्रौत्रस्य प्रमाणेतरलक्षणं कुतो भवेत्? १८ वेदग्राहि ब्रह्मवाचकशब्दग्राहि वा। १९ अभिलषता ब्रह्माद्वैतिना। २० केवलागमप्रामाण्यं चेत्तर्हीत्यर्थः। २१ तस्य, आगमस्य। २२ वैशेषिका। सौगता। २३ ग्रहसचरणग्रहणादेः। २४ आगमं विना। २५ तस्य, ज्योतिर्ज्ञानादेः। २६ स्वार्थानुमानाभावे योगिप्रत्यक्षं नोपपद्यते यथा। २७ परार्थानुमानरूपामागमरूपा वा। २८ स्वार्थानुमानरूपाम् (आगमरूपामेव)। २९ ग्रहोपरागादिषु। ३० अन्यथा। ३१ अनुमानविदामपि। ३२ स्वकृते श्लोकवार्तिके। ३३ युक्ति, हेतुः। इतर, आगमः। ३४ कथंचित्स्वप्रकारेण। ३५ युक्तीतराभ्यामवाच्यत्वेपि।

सम्प्रति युक्तीतरानेकान्तमुपदर्शयन्ति[1]।

वक्त्र्यनाप्ते यद्धेतोः साध्यं[2] तद्धेतुसाधितम्[3]।
आप्ते वक्तरि तद्वाक्यात्[4]साध्यमागमसाधितम्। ७८।

कः पुनराप्तोनाप्तश्च? यस्मिन्[5] सति वाक्यात्साधितं साध्यमर्थतत्त्वमागमात् साधितं स्याद्धेतोस्तु[6] यत्साध्यं तद्धेतुसाधितमिति विभागः सिध्यतीति चेदुच्यते,—यो यत्राविसंवादकः स तत्राप्तस्ततो-परोनाप्तः। कः पुनरविसंवादो येनाविसंवादकः[7] स्यात्? तत्त्वप्रतिपादनमविसंवादः, तदर्थज्ञानात्[8]। तदर्थज्ञानं पुनः अस्फुट[9]व्यवसायरूपं साक्षादसाक्षाद्वा[10]वसीयते, परमार्थतः[11]तस्य[12] संशयविपर्यासानध्यवसाय-व्यवच्छेदफलत्वात्। तत्रा[13]विसंवादक एवाप्त इत्यवधार्यते। अनाप्तस्तु कदाचिदपि विसंवादक उच्यते, यथार्थ[14]ज्ञानादिगुणस्य[15] विसंवादकत्वायोगात्। तेना[16]तीन्द्रिये[17] जैमिनिरन्यो[18] वा श्रुतिमात्रावलम्बी नैवाप्तस्तदर्था[19]परिज्ञानात्तथागतवत्। नात्र निदर्शनं साधनधर्मविकलं, तथागतस्य श्रुत्यर्थधर्मापरि-ज्ञानात् 'बुद्धादेर्धर्माद्युपदेशो व्यामोहादेव केवलात्' इति स्वयमभिधानात्[20]। न चासिद्धो हेतुर्जैमिने-र्ब्रह्मादेर्वा श्रुत्यर्थपरिज्ञानस्य सर्वथाप्यसंभवात्। तद्धि प्रत्यक्षं वा श्रौतं[21] वा स्यात्? न तावत्प्रत्यक्षं तस्या[22]सर्वज्ञत्वात् श्रुतिमात्रावलम्बितत्वाच्च। न हि तादृशो[23]तीन्द्रियार्थज्ञानमस्ति दोषा[24]वरणक्षयाति-शयाभावात्। न हि प्रतिनियतदोषावरणक्षयमात्रे सत्यपि धर्माधर्मादिसाक्षात्करेणं[25] युक्तं, तस्य[26] तत्[27]प-रिक्षयातिशयहेतुकत्वेन व्यवस्थापितत्वात्। नापि[28] श्रौतं तदर्थपरिज्ञानं श्रुत्यविसंवादात्पूर्वमसिद्धेः। श्रुतेः परमार्थवित्त्वं, ततः श्रुतेरविसंवादनमित्यन्योन्यसंश्रितम्[29]। न ह्यप्रसिद्धसंवादायाः श्रुतेः परमार्थपरिज्ञानं जैमिन्यादेः संभवति, अतिप्रसङ्गात्[30]। नापि परमार्थवित्त्वमन्तरेण तत्त्वप्रतिपाद-नलक्षणमविसंवादनं[31] यतोन्योन्याश्रयणं न स्यात्। ननु[32] न श्रुतेरविसंवादात्प्रामाण्यम्। किं तर्हि? स्वत एव। ततो न दोष इति चेत्, स्वतः श्रुतेर्न वै प्रामाण्यमचेतनत्वाद् घटवत्। सन्निकर्षा[33]दिभिर-नैकान्तिकत्वमयुक्तं तत्प्रामाण्यानभ्युपगमान्[34]मुख्यरूपतः। अथापि[35] कथंचित्[36] तत्प्रमाणत्वं स्यादविसंवादकत्वात्[37]। सन्निकर्षादेरविसंवादकज्ञानकारणत्वेन तथो[38]पचारसिद्धिरिति मन्येमहि[39]। तथापि[40] श्रुतेरयुक्तमेव[41], तदभावात्[42]। तेनोपचारमात्रमपि न स्यात्, तदर्थबुद्धि[43]प्रामाण्यासिद्धेः।

---

१ कथंचिदनुमानं कथंचिन्नागम इत्यनेकान्तम्। २ उपेयतत्त्वम्। ३ स्यात्। ४ तस्य, आप्तस्य। ५ आप्ते सति। ६ यस्मिन्नाप्ते असति। ७ वक्ता ( आप्त. )। ८ तस्य शास्त्रस्योपदेशस्यार्थस्तस्य ज्ञानं ग्रहणं तस्मात्। ९ स्फुटोऽ-बाधितो व्यवसाय एव रूप यस्य ज्ञानस्य। १० स्मृतिप्रत्यभिज्ञानतर्कानुमानागमरूपं पञ्चप्रकारमसाक्षाज्ज्ञानम्। ( परोक्ष-मित्यर्थ. )। ११ स्फुटव्यवसायात्मकत्वं कुत इत्युक्ते आह। १२ तदर्थज्ञानस्य। १३ अविसवादलक्षणे सति। १४ प्रकृते कथं विसवादकत्वाभावो निश्चीयते इत्याह। १५ पुरुषस्य। १६ अविसंवादक एवाप्तो येन कारणेन। १७ धर्माद्यर्थे। १८ ब्रह्मा वेदान्तकर्ता व्यासश्च। १९ तदर्थस्य धर्मादे। २० मीमासके। २१ श्रुतेरागतम्। २२ जैमिन्यादे.। २३ असर्वज्ञस्य जैमिन्यादेः। २४ दोषा रागादय। आवरणशब्देन ज्ञानावरणादि द्रव्यकर्म गृह्यते। २५ तदर्थपरिज्ञानेन। २६ धर्माधर्मादिसाक्षात्करणस्य। २७ तयोः, दोषावरणयो। २८ तर्हि श्रुत्यविसवादात्तदर्थ-परिज्ञानं भविष्यतीत्याशङ्क्याह। २९ तर्ह्यन्योन्याश्रयदूषणमित्यर्थं। ३० अङ्गुल्यग्रे हस्तियूथशतमास्ते इत्यादिवाक्यादपि स्वविषयज्ञानप्रसङ्गात्। ३१ श्रुते। ३२ मीमांसक.। ३३ नैयायिकमते सन्निकर्षादीनामचेतनत्वेपि प्रामाण्यमभ्युपगतम्। ततस्तेन व्यभिचारस्तत्परिहारार्थमाह। ३४ जैनै। ३५ मुख्यरूपतया सन्निकर्षादीना प्रामाण्याभावेपि। ३६ उपचारेण। ३७ सत्यरूपत्वात्। ३८ तथा, प्रामाण्यप्रकारेण। ३९ वयं जैना.। ४० अविसवादज्ञानकारणत्वेनैव श्रुतिरपि प्रमाणं स्यादित्याशङ्क्याह। ४१ अविसंवादकत्वम्। ४२ अविसंवादिज्ञानकारणत्वाभावात्। ४३ तदर्थबुद्धे., श्रुत्यर्थज्ञानस्य।

न हि श्रुतिरविसंवादिज्ञानस्य कारणं येनोपचारतः प्रमाणं स्यादिति निवेदितं प्राग्–भावना[1]दिश्रुतिविषयाविसंवादकत्वनिराकृतिप्रस्तावे । आप्त[2]वचनं तु प्रमाणव्यपदेशभाक्, तत्कारणकार्य[3]त्वात् । प्रमाणकारणकं हि तत्[4], तदतीन्द्रियार्थदर्शनोत्पत्तेस्तदर्थ[5]ज्ञानोत्पादनाच्च प्रमाणकार्यकम् । नैतत् श्रुतेः संभवति, सर्वथाप्ता[6]नुक्तेः पिटकत्र[7]यवत् । वक्तृ[8]दोषात्ताहशोऽप्रामाण्यं तदभावाच्छ्रुतेः प्रामाण्यमिति चेत् कुतोयं विभागः सिध्येत् ? पिटकत्रयादेः पौरुषेयत्वस्य स्वयं सौगतादिभिरभ्युपगमाद्वेदवादिभिश्च श्रुतेरपौरुषेयत्वोपगमादिति चेत् सो[9]यमभ्युपगमानभ्युपगमाभ्यां कंचि[10]त्पौरुषेयत्वमन्यद्वा व्यवस्थापयतीति सुव्य[11]वस्थितं तत्त्वम् । एतेन[12] कर्तृस्मरणाभावा[13]दयः प्रत्युक्ताः । स[14] हि श्रुतौ कर्तृस्मरणादिमत्त्वदृष्टकर्तृकसमानत्वाद्यभावमभ्युपगममात्राद्व्यवस्थापयति तद्वा[15]वं चेतरत्रा[16]नभ्युपगमा[17]त् । न च तथा[18] तत्त्वं[19] व्यवतिष्ठते, वेदेतरयोरविशेषा[20]त् । इतरत्र बुद्धो वक्तेति चेत् तत्र[21] कमलोद्भवादिरिति कथं न समानम् ? यथैव हि पिटकत्रये बुद्धो वक्तेति सौगताः प्रतिपाद्यन्ते तथा वेदेपि ते अष्टका[22]न् काणादाः, पौराणिकाः कमलोद्भवं[23], जैनाः कालासुरं वक्तारमनुमन्यन्ते । सुदूरमपि गत्वा तदङ्गीकरणेतर[24]मात्रे व्यवतिष्ठेत श्रुतिवा[25]दी, प्रमाणबलात्तदव[26]क्तृकस्य साधयितुमशक्तेः । स्यान्मतं “ यद्वेदाध्ययनं सर्वं तदध्ययने[27]पूर्वकम् । वेदाध्ययनवाच्यत्वादधुनाध्ययनं यथेति प्रमाणाद्वेदे वक्तुरभा[28]वो, न पुनरभ्युपगममात्रात् ”इति तदे[29]युक्तं, पिटकत्रयादावपि तत एव वक्त्रभावप्रसङ्गात् । वेदाध्ययनवदितरस्यापि सर्वदाध्ययनपूर्वाध्ययनत्वप्रक्लृप्तौ न वक्त्रं वक्त्रीभवति, यतो विद्यमानवक्तृ[30]केपि भावा[31]दध्ययनवाच्यत्वस्या[32]नैकान्तिकत्वं न स्यात् । वेदविशेषणस्याध्ययनवाच्यत्वस्यान्यत्राभावान्नानैकान्तिकतेति चेत्तर्हि पिटकत्रयादिविशेषण[33]स्य वेदादावसंभवादव्यभिचारिता कथं न भवेत् ? तथा[34] च वेदवदवेद[35]स्याप्यपौरुषेयत्वं प्रामाण्यनिबन्धनं याज्ञिकाना प्रवर्तक[36] स्यान्न वा वेदेपि, विशेषाभावात्, दुर्भ[37]णनदुःश्रवणादीनामसदाद्युपलभ्यानां तदतिशयान्तराणां च शक्यक्रियत्वादितरत्रापि, [38]परोक्षाया मन्त्रशक्तेरपि दर्शना[39]त् । न ह्याथर्वणानामेव मन्त्राणा शक्तिरुपलभ्यते, न पुनः सौगतादिमन्त्राणामिति शक्यं वक्तुं, प्रमाणबाधनात् । वैदिका एव मन्त्राः

---

१ भावना श्रुत्यर्थं, विधिः, नियोगो वा श्रुत्यर्थ इत्यादिनिराकरणप्रघट्टके । २ तर्ह्याप्तवचनं कथं प्रमाणमित्युक्ते आह ।
३ कारणं च कार्यं च कारणकार्ये । तस्य प्रमाणस्य कारणकार्ये । तयोर्भावस्तस्मात् । आप्तवचनात्प्रमाणं केवलज्ञानमुत्पद्यते,
प्रमाणादाप्तवचनं जायते यतस्तत ( परस्परकार्यकारणत्वम् ) । न चान्योन्याश्रयो, बीजवृक्षादिसंततिवदनादिसिद्धत्वात्
परम्पराया । ४ अतीन्द्रियार्थप्रत्यक्षादाप्तवचनस्योत्पत्ते । ५ अतीन्द्रियार्थस्तदर्थ. । तदर्थज्ञानं, तद्विषया
बुद्धिस्तस्योत्पादनादाप्तवचनस्य प्रामाण्य शिष्यज्ञानलक्षणकार्यकारणत्वात् । ६ साक्षाद्वचनप्रकारेण संकेतप्रकारेण चानुक्ते ।
कस्या ? श्रुतेरिति संबन्ध । ७ बौद्धमते ध्यानाध्ययनानुष्ठानादिप्रतिपादकं शास्त्रं पिटकत्रयं कथ्यते । ८ वक्ता बुद्ध.
पिटकत्रयादेः । तस्य दोषात् । ९ मीमांसक । १० पिटकत्रयादौ पौरुषेयत्वं श्रुतौ चापौरुषेयत्वम् । ११ प्रमाणमन्तरेण
पौरुषेयत्वमपौरुषेयत्वं च मीमांसक· साधयतीति सत्यं व्यवस्थितमित्युपहासवचनमेतत् । १२ अभ्युपगमेत्यादिना ।
१३ वेदोऽपौरुषेय कर्तृस्मरणाभावादित्यादयो हेतव. । १४ मीमांसक । १५ तस्य, कर्तृस्मरणादिमत्त्वदृष्टकर्तृकसमान-
त्वादेरेव । १६ पिटकत्रये । १७ कर्तृस्मरणाद्यभावस्यानभ्युपगमादेव, न तु प्रमाणत्वात् । १८ अभ्युपगमानभ्युपगम-
प्रकारेण । १९ मीमांसकस्य । २० अभ्युपगमानभ्युपगममात्रत्वे । २१ वेदे । २२ कांश्चिदृषीन् कर्तॄन् । २३ ब्रह्माणम् ।
२४ अनङ्गीकरणं वेदे । २५ मीमांसक । २६ वेदस्य । २७ गुर्वध्ययनपूर्वम् । २८ प्रतिपाद्यतेऽस्माभि । २९ यन्मी-
मांसकमतम् । ३० पिटकत्रयेपि । ३१ सद्भावात् । ३२ हेतो. । ३३ वस । ३४ अव्यभिचारितायाम् । ३५ पिटकत्र-
यस्य । ३६ पिटकत्रयानुष्ठाने–ध्यानत्रयानुष्ठाने–ध्यानचैत्यवन्दनरूपे । ३७ दुर्भणनत्वादिलक्षणातिशयस्य वेदे सद्भावात्कथम.
विशेष उभयत्रेत्याशङ्क्याह । ३८ इदमप्याशङ्क्याह । ३९ इतरत्र पिटकत्रयादौ ।

परत्रोपयुक्ताः शक्तिमन्त इत्यप्ययुक्तं, प्रावचनिका[1] एव वेदेपि प्रयुक्ता इत्युपपत्तेस्तत्र[2] भूयसामुपलम्भात् समुद्राद्याकरेषु रत्नवत्। न हि कियन्त्यपि रत्नानि राजकुलादावुपलभ्यमानानि तत्रत्यान्येव, तेषां रत्नाकरादिभ्य एवानयनात् तद्वद्वत्वसिद्धेर्भूयसां तत्रोत्पत्तिदर्शनात्। तद्वत्प्रवचनैकदेशविद्यानुवादादेव[3] सकलमन्त्राणां समुद्भूतिविस्तीर्णात्, न पुनर्वेदात्तल्लवमात्रादिति युक्तमुत्पश्यामः। वेदस्यानादित्वादपौरुषेयत्वाच्च तन्मन्त्राणामेवाविसंवादकत्वं संभवतीति चायुक्तं, तदप्रसिद्धेः। सिद्धेपि तदनादित्वे[4] पौरुषेयत्वाभावे वा कथमविसंवादकत्वं प्रत्येतव्यम्? म्लेच्छव्यवहारादेस्तादृशो[5] बहुलमुपलम्भात् तेन तस्य[6] व्यभिचारात्। एतेन वेदैकदेशेन[7] स्वयमप्रमाणतयोपगतेनानादित्वस्यापौरुषेयत्वस्य चानैकान्तिकत्वमुक्तम्। किं च कारणदोषनिवृत्तेः कार्य[9]दोषाभावकल्पनायां पौरुषेयस्यैव वचनस्य दोषनिवृत्तिः कर्तुर्वीतदोषस्यापि संभवात् 'दोषावरणयोर्हानिः' इत्यादिना संसाधनात्, न पुनरपौरुषेयस्य, तदध्येतृव्याख्यातृश्रोतॄणां रागादिमत्त्वाद्वीतरागस्य कस्यचिदनभ्युपगमात्[10], सर्वथाप्यपौरुषेयस्य तदु[11]पगमेन विरोधात्। नेतरस्य[12], कथंचित्पौरुषेयस्य तद[13]विरोधात्। इति निश्शङ्कं नश्चेतः[14], त्रिविप्रकृष्टस्यापि[15] निर्णयोपायप्रतिपादनादिति। वक्तृगुणापेक्षं वचनस्याविसंवादकत्वं चक्षुर्ज्ञानवत्, विसंवादस्य तद्दोषा[16]नुविधानात्। यथैव हि चक्षुर्ज्ञानस्य ज्ञातृगुणं सम्यग्दर्शनादिकमपेक्ष्याविसंवादकत्वं, तद्दोषं[17] मिथ्यादर्शनादिकमपेक्ष्य विसंवादकत्वं चोपपद्यते तथा वक्तुर्गुणं यथार्थज्ञानादि दोषं च मिथ्याज्ञानादिकमपेक्ष्य संवादकत्वं विसंवादकत्वं चेति निश्चितं महाशास्त्रे[18]। ततो[19]ऽनाप्तवचनान्नार्थज्ञानमन्धरूपदर्शनवत्। न हि जात्यन्धो रूपं दर्शयितुमीशः परस्मै। तथानाप्तोपि नार्थं ज्ञापयितुमतिप्रसङ्गात्[20]। एवम[21]पौरुषेयस्य वचनस्य पौरुषेयस्य च गुणवद्वक्तृकस्य[22] कारणदोषाभावान्निर्दोषत्वं समानमतिशयासंभवात्[23]। तत्र[24] यदेव युक्तियुक्तं[25] तदेव प्रतिपत्तुं प्रतिपादयितुं वा शक्यं कथंचित्पौरुषेयत्वं, न तु सर्वथापौरुषेयत्वं, तस्य युक्तियुक्तत्वाभावात् तद्युक्तीनां तदाभासत्वसमर्थनात्। तत्रा[26]पौरुषेयत्वेपि वा वेदे यदेव युक्तियुक्तं तदेव प्रतिपत्तुं प्रतिपादयितुं वा शक्यं वचनमग्निर्हिमस्य भेषजं द्वादश मासाः संवत्सर इत्यादिवत्[27]। ना[28]ग्निहोत्रादिवाक्यसाधनं, तस्य युक्तियुक्तत्वविरोधात्। सिद्धे पुनराप्तवचनत्वे यथा हेतुवादस्तथाज्ञावादोपि प्रमाणं, त[29]दाप्तवचनत्वाविरोधात्। ननु चापौरुषेयत्ववदाप्तशासनमप्यशक्यव्यवस्थं,

---

१ जैनागमप्रोक्ताः। २ प्रवचने। ३ दशमं पूर्वो विद्यानुवाद। (द्वादशाङ्गरूपस्य श्रुतज्ञानस्यान्तिमो योऽङ्गस्तस्य चतुर्दश भेदाः सन्ति तेषामेव 'पूर्व' इति नाम। तत्र दशमो विद्यानुवादः पूर्वोस्ति)। ४ तस्य, वेदस्य। ५ म्लेच्छा द्वीपान्तरनिवासिनस्तेषां व्यवहारो मातृविवाहादिलक्षणः। स आदिर्यस्य नास्तिकादिव्यवहारस्य। तस्य म्लेच्छव्यवहारादेरनादित्वापौरुषेयत्वे सत्यप्यविसंवादित्वाभावात्। ६ अनादित्वादेः। ७ अग्निमीडे पुरोहितं, आपः पवित्रमित्यादिस्वरूपनिरूपकेण। ८ मीमांसकेनाग्निहोत्रं जुहुयात्स्वर्गकाम इति कार्यार्थे एव चोदनायाः प्रामाण्याभ्युपगमात्। ९ वेदस्यादुष्टकारणजन्यत्वादिति मीमांसकमतम्। १० मीमांसकेन। ११ वीतरागोपगमेन। १२ पौरुषेयस्य वचनस्य वीतरागोपगमनेन विरोधो नेति संबन्धः। १३ तेन वीतरागोपगमनेन। १४ अस्माकमकलङ्कदेवानाम्। १५ ननु देशकालस्वभावेति त्रिधा विप्रकृष्टस्य वीतरागस्य निर्णयाभावात्कथं तत्प्रतिपादनमित्याशङ्क्याह। १६ तस्य, वक्तुः। १७ तस्य, ज्ञातुः पुरुषस्य। १८ विद्यानन्दिमहोदयैरत्रैव (तत्त्वार्थे वा)। १९ वक्तुर्गुणापेक्षमेव संवादकत्वं निश्चितं यतः। २० रथ्यापुरुषस्याप्यर्थज्ञापकत्वप्रसङ्गात्। २१ संवादकवचसो वक्तृगुणापेक्षत्वप्रकारेण। २२ अपौरुषेयत्वपक्षे गुणवद्व्याख्यातृकस्येत्यर्थः। २३ अपौरुषेयपौरुषेययोर्वचनयोरुभयत्र इतरविशेषासंभवात्। २४ पौरुषेयापौरुषेययोर्वचनयोः समानत्वेपि सति। २५ नयप्रमाणात्मिका युक्तिः। २६ तत्र यदेवेत्यादिमूलग्रन्थवाक्यं प्रकारान्तरेण व्याख्यायते। २७ इत्यादि वेदवचनं युक्तियुक्तं यथा। २८ प्रतिपत्तुं प्रतिपादयितुं वा शक्यमिति संबन्धः। २९ तयोः, हेतुवादाज्ञावचनयोर्द्वयोरपि।

तस्यैव[1] ज्ञातुमशक्तेः, सरागस्यापि वीतरागवच्चेष्टोपलम्भादयमाप्त इति प्रतिपत्त्युपायासत्त्वात् तस्य शासनमिति व्यवस्थापयितुमशक्तेरित्यपरे[2] । उक्तमत्र सर्वथैकान्तवादानां[3] स्याद्वादप्रतिहतत्वादिति । युक्तिशास्त्राविरोधिवाक्त्वाद्विनिर्दोषोयमिति शक्यं निर्णेतुं, दोषवानयमिति च, दृष्टेष्टविरोधवचनत्वात्[4] । तत्रानिश्चितवचनविशेषस्य[5] कस्यचिद्वीतरागत्वेतराभ्यां संदेहेपि निश्चितवचनविशेषस्य शक्यमाप्तत्वं व्यवस्थापयितुम् । तत्राप्तिः[7] साक्षात्करणादिगुणः[6] 'सूक्ष्मान्तरितदूरार्थाः कस्यचित्प्रत्यक्षा' इत्यादिना साधितः । संप्रदायाविच्छेदो वा[7] । सर्वज्ञादागमस्तदर्थानुष्ठानात् सर्वज्ञ इति सुनिश्चितासंभवद्बाधकप्रमाणत्वात्सिद्धिः[8] प्रवचनार्थस्य, अन्यथान्धपरम्परया[9] प्रतिपत्तेः । न ह्यन्धेनाकृष्यमाणोन्धः स्वेष्टं मार्गमास्कन्दति नाम । न चैवं[10] संप्रदायाविच्छेदे परस्पराश्रयणं, कारकपक्षे बीजाङ्कुरादिवदनादित्वा[11][12]-वस्था[13]नवतारात् । ज्ञापकपक्षेपि परस्मात्[14] स्वतःसिद्धात्[15], पूर्वस्य[16] ज्ञप्तेर्नेतरेतराश्रयणं, प्रसिद्धेनाप्रसिद्धस्य[17][18] साधनात् । तदेवं स्यात्सर्वं हेतुतः सिद्धं करणा[19]प्तवचनानपेक्षणात् । स्यादागमात्सिद्धमक्षलिङ्गानपेक्षणात् । स्यादुभयतः सिद्धं, क्रमार्पितद्वयात्[20] । स्यादवक्तव्यं, सहार्पितद्वयात् । शेषभङ्गत्रयं च पूर्ववत् । इति सप्तभङ्गीप्रक्रिया योजनीया ।

नैकान्ताद्धेतुवादः प्रभवति सकलं तत्त्वमुन्नेतुम्[21]एक—
स्तद्वन्नाहेतुवादः प्रवद(भव)ति विहितो[22]शेषशङ्काकलापः ।
इत्यार्याचार्यवर्यो विदधति निपुणं[23] स्वामिनस्तत्त्वसिद्ध्यै
स्याद्वादोत्तुङ्गसौधे स्थितिम्[24]अमलधियां[25] प्रस्फुटोपायतत्त्वे । १ ।

इत्याप्तमीमांसा[26]लंकृतौ षष्ठः परिच्छेदः ।



---

१ आप्तस्य । २ मीमांसकाः । ३ वस । ४ आप्तस्यानाप्तस्य च । ५ आप्ते पुरुषविशेषे । ६ अर्थस्य साक्षात्करणादि । ७ आप्तिरिति पूर्वेणान्वयः । ८ सम्प्रदायाविच्छेद एवं सिद्ध । ९ आप्तत्वं, साक्षात्करणादिगुणः संप्रदायाविच्छेदो वा सुनिश्चितासंभवद्बाधकप्रमाणत्वात्सिद्धो न भवेच्चेत्तदेत्यर्थः । १० सर्वज्ञादागमस्तदर्थानुष्ठानात्सर्वज्ञ इति पूर्वोक्तप्रकारेण । ११ यथा वर्तमानाङ्कुरः पूर्वबीजात्पूर्वबीजं तु तत्पूर्वाङ्कुरात् पूर्वाङ्कुरोपि तत्पूर्वबीजादिति । १२ सर्वज्ञागमयो । १३ परस्पराश्रयणस्य । १४ कार्यभूतादागमात् । १५ ज्ञानपक्षेपि विचार क्रियते, स्वयमेव निष्पन्नत्वात्स्नानपानाद्यनुभवलक्षणात्, परस्मात् तोयज्ञानात् पूर्वस्य पथिकोपदेशघटचेटिकादर्दुरादिदर्शनाभ्यां जातलक्षणस्य ज्ञानस्य ज्ञप्तेः प्रामाण्यघटनात् । १६ पूर्वस्य, आगमकारणसर्वज्ञस्य । १७ आगमेन । १८ सर्वज्ञस्य । १९ करणमिन्द्रियम् । २० ( आप्तवचनानपेक्षणत्वस्याक्षलिङ्गानपेक्षणत्वस्य च हेतुद्वयस्य क्रमेणार्पणादित्यर्थ ) । २१ व्यवस्थापयितुम् । २२ ईश्वरादिविषये । २३ यथा स्यात्तथा । २४ ( विदधतीत्यस्य कर्म ) । २५ भव्यविनेयानाम् । २६ अत्राधिकारे वस्तुसिद्धिकारणानां प्रत्यक्षानुमानागमाना त्रयाणामपि प्रसङ्गानुसारेण स्यादावश्यकतेति दर्शितम् । केचित्प्रत्यक्षवादिनः, केचन केवलमनुमानवादिनः, केचन च आगमवादमेवाद्रियन्ते तेषा सर्वेषां निरासो दर्शितः । आगमवादिष्वन्यतमस्य वेदान्तिनो वेदप्रामाण्ये विशेषतो विचारः कृतो निरसिताश्च तत्प्रामाण्याय प्रयुक्ता युक्तयो विशेषतः । इति तात्पर्यमस्य परिच्छेदस्य ।

# अथ सप्तमः परिच्छेदः ।

निर्दिष्टो यः शास्त्रे[1] हेत्वागमनिर्णयः प्रपञ्चेन ।
गमयत्यष्टसहस्री संक्षेपात्तमिह सामर्थ्यात्[2] । १ ।

[3]अन्तरङ्गार्थतैकान्ते[4] बुद्धिवाक्यं[5] मृषाखिलम् ।
प्रमाणाभासमेवातस्तत्[6] प्रमाणादृते कथम् ॥ ७९ ॥

अन्तरङ्गस्यैव स्वसंविदितज्ञानस्यार्थता वस्तुता, न बहिरङ्गस्य जडस्य प्रतिभासानर्हस्ये[7]त्येकान्तोऽन्तरङ्गार्थतैकान्तः । तस्मिन्नभ्युपगम्यमानेऽखिलं बुद्धिवाक्यं हेतुवादाहेतुवादनिबन्धन[8]मुपाय[9]तत्त्वं मृषैव स्यात् । यतश्च मृषा स्यादत एव प्रमाणाभा[10]समेव, प्रमाणस्य सत्यत्वेन व्याप्तत्वात्, मृषात्वेन प्रमाणाभासस्य व्याप्तेः । तच्च प्रमाणाभासं प्रमाणादृते कथं संभवेत् ? तदसंभवे तद्व्यवहारमवास्तवमेवायं[11] स्वप्नव्यवहारमिव संवृत्त्या[12]पि कथं प्रतिपद्यते[13] ? [14]तज्जन्मकार्यप्रभवादि[15] वेद्यवेदकलक्षणमनैकान्तिकमादर्श्य संविदित्तिरेव खण्डशः[16] प्रतिभासमाना व्यवहाराय कल्प्यन्ते[17] इत्यभि[18]निवेशेपि प्रमाणं मृग्यम् । न हि प्रमाणाभावे तज्ज[19]न्मताद्रूप्यतदध्यवसायान् प्रत्येकं वेद्यवेदकलक्षणं[20] चक्षुषा समाना[21]र्थसमनन्तरवेदनेन शुक्तिकायां रजताध्यवसायेन च व्यभिचारयितुमीशः, सह[22] वा समानार्थसमनन्तरज्ञानेन[23] कामलाद्युपहतचक्षुषः शुक्ले शङ्खे पीताकारज्ञानसमनन्तरज्ञानेन वा[24] सौत्रान्तिकान्प्रति व्यभिचारि[25] प्रतिदर्शयेत्[26] । कथं वा कार्यनिमित्तकारणत्वं[27] तल्लक्षणं[28] यौगान्प्रत्यनैकान्तिकं[29] व्यवस्थापयेत्[30] ? कथं च कार्यकारणभावाख्यं प्रभवं[31] कार्त्स्न्येन[32] प्रति योग्यतां वा तल्लक्षणतया[33] व्यभिचारयेत् ? कथं च संवित्तिरेव

---

१ अत्रैव मूलग्रन्थे श्रीस्वामिकृते । २ स्वशक्तितः । ३ ननु च विज्ञानाद्वैतस्यैव वास्तवत्वात् तस्यैव व्यवस्था स्यात्, न तूपायोपेयतत्त्वयोरित्याशङ्क्याह । ४ बुद्धिः, अनुमानम् । वाक्यम्, आगम । ५ मृषा यतः । ६ तत्, प्रमाणाभासम् । ७ शिष्यस्य बुद्धिरुपाध्यायहेतुवादनिबन्धना च उपाध्यायाहेतुवादनिबन्धना च । स्वशिष्यं प्रति वाक्यमागमः । उपाध्यायहेतुवादः स आगम । तन्निबन्धनं यस्येति हेतुवादाहेतुवादनिबन्धनम् । वसोत्र । ८ आगमः । ९ बुद्धिवाक्यम् । १० तस्य, प्रमाणाभासस्य । ११ ( सौगत. ) । १२ कल्पनया । १३ जानाति । १४ आह सौगतः । तस्मादर्थाज्ज्ञानस्य जन्म । सौत्रान्तिकापेक्षयेदं वचनम् । उपलक्षणात्ताद्रूप्यतदध्यवसायौ ग्राह्यौ । अत्रैव टिप्पण्यन्तर 'योगापेक्षयेदं वचनम् । कार्ये निमित्तकारणत्वमित्यभिप्रायः' इति । तृतीया टिप्पणी 'अर्थज्ञानयोः कार्यकारणभाव इति वचनं साख्यापेक्षया' । चतुर्थी टिप्पणी 'तज्जन्म कार्यप्रभवाद्येव वेद्यवेदकलक्षणम्' । १५ आदिशब्देन योग्यता ग्राह्येति जैनापेक्षयेदं वचनम् । १६ वेद्यादिभागरूपतया । १७ विज्ञानाद्वैतवादिना । १८ ( जैन आह ) । १९ तस्मादर्थाज्जन्म । २० अर्थो वेद्य, अर्थग्राहक ज्ञानं वेदकम् । ताद्रूप्यं यथा, ज्ञानगतो नीलाकारो वेद्यो, नीलाकार ज्ञानं वेदकम् । तदध्यवसाये अध्यवसेयं वेद्यं, तदध्यवसायो वेदक. । २१ ( तज्जन्मताद्रूप्यादि ) । २२ न हि प्रमाणाभावे इत्याद्यत्रापि संबन्धनीयम् । २३ उत्तरानन्तरज्ञानेन तदुत्पत्तिताद्रूप्यद्वयं व्यभिचारि । २४ त्रितयं व्यभिचारि । २५ वेद्यवेदकम् । २६ न हि प्रमाणाभावे विज्ञानाद्वैतवादी प्रतिदर्शयेदिति संबन्धः । २७ ज्ञानस्य निमित्तकारणत्वमर्थे वर्तते । २८ ( वेद्यवेदकलक्षणम् ) । २९ चक्षुषानैकान्तिकं, यतश्चक्षुर्निमित्तकारणकं ज्ञानं कार्यम् । ३० प्रमाणाभावे इति योज्यम् । ३१ अथवाग्नेः कार्यस्यारणिकाष्ठं कारणमित्यादि कार्यकारणत्वसंज्ञं प्रभवम् ( वेद्यवेदकलक्षणम् ) । ३२ प्रभवापेक्षया साख्यान्प्रति योग्यतापेक्षया च जैनान्प्रति । ३३ वेद्यवेदकलक्षणतया ।

खण्डशः प्रतिभासमाना वेद्यवेदकादिव्यवहाराय प्रकल्पते इत्यभिनिवेशं वा विदधीत ? यतो न प्रमाणं मृगयते । किञ्चास्य विज्ञानवादिनः संविदां क्षणिकत्वमनन्यवेद्यत्वं नानासंतानत्वमिति स्वतस्तावन्न सिध्यति, भ्रान्तेः स्वप्नवत् । स्वसंवेदनात्स्वतः सिध्यतीति चेन्न, क्षणिकत्वेनानन्यवेद्यत्वेन नानासंतानत्वेन च नित्यत्वेन सर्ववेद्यत्वेनैकत्वेनेव परब्रह्मणः स्वसंवेदनाभावात् । तथात्मसंवेदनेपि व्यवसायवैकल्ये प्रमाणान्तरापेक्षयानुपलम्भकल्पत्वात्, तस्य प्रमाणान्तरानपेक्षस्यैव व्यवसायात्मनः संवेदनस्योपलम्भत्वव्यवस्थितेः, व्यवसायाभावे तु बुद्धीनामभ्यासादपि तथानुपलम्भात् । न हि तथा बुद्धयः संविद्रते यथा व्यावर्ण्यन्ते, क्षणिकत्वाद्यात्मनान्यथैव तासां प्रतिभासनाभ्याससिद्धेः । नापि परतः क्षणिकत्वादि सिध्यति, संबन्धप्रतिपत्तेरयोगात् । न हि सत्त्वादेर्लिङ्गस्य क्षणिकत्वादिना व्याप्तौ संबन्धप्रतिपत्तिः प्रत्यक्षतो युज्यते, तस्य सन्निहितविषयबलोत्पत्तेरविचारकत्वाच्च । नाप्यनुमानादनवस्थानादिति प्रागेवं प्ररूपणात् । स्वांशमात्रावलम्बिना मिथ्याविकल्पेन प्रकृततत्त्वव्यवस्थापने बहिरर्थेष्वप्यविरोधात् क्षणिकत्वादिव्यवस्थापनमस्तु सौत्रान्तिकादीनाम्, अविशेषात् । तथा हि । कथंचिदत्र वेद्यलक्षणं यदि व्यवतिष्ठेत तदा तत्प्रकृतं संविदां क्षणिकत्वादिसाधनं लैङ्गिकज्ञानेन कृतं स्यान्नान्यथा । न चानुक्तदोषं लक्षणमस्ति, वेद्यस्य विज्ञानवादिना तज्जन्मादेरनैकान्तिकत्वदोषवचनात् । संवित्क्षणिकत्वादावनुमानवेदनस्य तत्संभवे नान्यत्र बहिरर्थे तदसंभवोभिधेयः, सर्वथा विशेषाभावात् । तत्स्वपरपक्षयोः सिद्ध्यसिद्ध्यर्थं किंचित्कथंचित्कुतश्चिदवितथज्ञानमादरणीयमन्यथाऽशेषविभ्रमासिद्धेः । ननु किंचित्संविदद्वैतं कथंचित्संविदात्मना कुतश्चित्स्वतः सत्यप्रतिभासनमाद्रियत एव, स्वरूपस्य स्वतो गतिरिति वचनादिति चेन्न, स्वरूपेपि वेद्यवेदकलक्षणाभावे तदघटनात् पुरुषाद्वैतवत् । एतेन यद्ग्राह्यग्राहकाकारं तत्सर्वं विभ्रान्तं, यथा स्वप्नेन्द्रजालादिज्ञानं तथा च प्रत्यक्षादिकमिति प्रतिविहितं वेदितव्यं, भ्रान्तत्वप्रकृतानुमानज्ञानयोर्ग्राह्यग्राहकाकारयोरभ्रान्तत्वे ताभ्यामेव

१ ज्ञानाद्वैतवादिन स्वकीयज्ञानात्सर्वसंविदां क्षणिकत्वादिकं न सिध्यति, परग्राहकस्य ग्राह्यग्राहकभावघटनपूर्वकं भ्रान्तत्वाभ्युपगमादिति भाव । २ ( यथा वेदान्त्याद्यभ्युपगतेन ( नित्यत्वादिना ) । ३ संविदाम् । ४ किं च, तथा–क्षणिकत्वादिप्रकारेण । ५ संविदां स्वरूपसंवेदनेपि । ६ निर्विकल्पकत्वात्संविदाम् । ७ प्रमाणान्तरं, विकल्पज्ञानम् । ८ अभ्यासवशात्तथोपलम्भकत्वं भविष्यतीत्याशङ्कायामाह । ९ क्षणिकरूपवस्त्वनुपलम्भकत्वादिति विशेष । १० प्रतिभासन्ते । ११ परैर्वाद्धैः । १२ अक्षणिकत्वादिप्रकारेण । १३ अनुमानत । १४ लिङ्गलिङ्गिनोर्व्याप्तिज्ञानस्य । १५ सामस्त्येन । १६ सर्वं क्षणिकं सत्त्वादिति व्याप्तिप्रतिपत्ति' । १७ निर्विकल्पकत्वात् । १८ क्षणिकत्वसिद्धिरिति शेष । १९ सत्त्वमेवासि निर्दोष इत्यादिकारिकाव्याख्यानचरमभागे । २० दूषणान्तरमिदम् । वासनानिमित्तक सामान्याकारोमिथ्याविकल्पः स्वांश. ( अहमिति स्वांशनिश्चय' ) । स एव तन्मात्रं, तदवलम्बिना । २१ प्रकृत क्षणिकत्वादि । २२ बहिरर्थेपि क्षणिक इत्यर्थ । २३ योगाचारेण भवता वेद्यवेदकलक्षणमनैकान्तिकमादर्श्य यद्विघटितं क्षणिकत्वादिव्यवस्थापनं सौत्रान्तिकाद्यभिमत तत्तेषामिदानीं व्यवस्थित भवतीत्येतदत्राकूतम् । आदिनाऽक्षणिकत्वादिग्रहश्च । २४ आदिशब्देन यौगसांख्यजैना गृह्यन्ते । २५ उभयत्र योगाचारसौत्रान्तिकयोः । २६ तज्जन्मादिना योग्यतया वा । २७ संवेदनेषु । २८ संवेदनाद्वैतं यदि केनापि प्रकारेण वेद्यं भवति तदा क्षणिकत्वमनन्यवेद्यत्वं नानासंतानत्वं च कृतं स्यात् । २९ आदिशब्देनानन्यवेद्यत्वनानासंतानत्वग्रहणम् । ३० वेद्यलक्षणाभावप्रकारेण प्रकृतं कृतं न स्यादिति संबन्ध । ३१ दोषरहितम् । ३२ ज्ञानवादिनाम् । ३३ वेद्यलक्षणस्य । ३४ संवित्क्षणिकत्वादौ साध्येऽनुमानं यथा, संवित् क्षणिका, सत्त्वादिति । ३५ तस्य, वेद्यलक्षणस्य । ३६ ( अद्वैतिना ) । ३७ नियामकाभावात् । ३८ स्वपरपक्षसाधनदूषणे प्रमाणमन्तरेण न घटेते यत. । ३९ प्रत्यक्षमनुमानं वा । ४० स्वपरपक्षभूषणदूषणतया । ४१ प्रमाणान्तरात् । ४२ संविद्बहिरर्थयो. । ४३ ग्राह्यग्राहकाकाराभ्यां भ्रान्तत्वप्रकृतानुमानाभ्याम् ।

हेतोर्व्यभिचारात्[1], तद्भ्रान्तत्वे ततः[2] सर्वस्य भ्रान्तत्वप्रसिद्धेः, सर्व[3]भ्रान्तौ[4] साध्यसाधनविज्ञप्तेरसंभवात्तद्व्याप्तिविज्ञप्तिवत्[5], संभवे[6] सर्व[7]विभ्रमासिद्धेः ।

साध्यसाधनविज्ञप्तेर्यदि विज्ञप्तिमात्रता[8] ।
न[9] साध्यं न च हेतुश्च[10] प्रतिज्ञाहेतुदोषतः । ८० ।

प्रतिज्ञादोषस्तावत्स्ववचनविरोधः साध्यसाधनविज्ञानस्य विज्ञप्तिमात्रमभिलपतः प्रसज्यते । तथा हि । सहोपलम्भनियमादभेदो नीलत[11]द्धियोर्द्विचन्द्रदर्शनवदित्यत्रार्थसंविदोः सहदर्शनमुपेत्य[12]ैकत्वैकान्तं साधयन् कथमवधेयाभिलापः ? स्वोक्तधर्मधर्मिभेदवचनस्य हेतुदृष्टान्तभेदवचनस्य चाद्वैतवचनेन विरोधात्, संविदद्वैतवचनस्य च त[13]द्भेदवचनेन व्याघातात्, तद्वचन[14]ज्ञानयोश्च भेदे तदेकत्वसाधनाभिलापविरोधात्, तदभिलापे वा तद्भेदविरोधात् । इति स्ववचन[15]योर्विरोधाद्बिभ्यत् स्वाभिलाप[16]भावं वा स्ववाचा प्रदर्शयन्कथं स्वस्थः ? सदा मौनव्रतिकोहमित्यभिलापवत् स्ववचनविरोधस्यैव स्वीकरणात् । तथा[17] विज्ञानवादिनोऽप्रसिद्धविशेष्यत्वमप्रसिद्धविशेषणत्वं च प्रतिज्ञादोषः स्यात्, नीलतद्धियोर्विशेष्ययोस्तदभेदस्य च विशेषणस्य स्वयम्[18]अनिष्टेः[19] । पराभ्युपगमेन[20] प्रसङ्गसाधनस्योप[21]न्यासाददोष इति चेन्न, तस्य[22] परासिद्धेस्त[23]दभ्युपगमाप्रसिद्धेश्च प्रसङ्गसाधनासंभवात् । साधनसाध्यधर्मयोर्व्याप्यव्यापकभावसिद्धौ हि सत्यां परस्य[24] व्याप्यो[25]ऽभ्युपगमो व्यापका[26]भ्युपगमनान्तरीयको[27] यत्र[28] प्रदर्श्यते तत्प्रसङ्गसाधनम् । न चैतद्विज्ञप्तिमात्रवादिनः संभवति, विरोधात् । ननु 'स्याद्वादिनोपि तद्दोषो[29]द्भावनमयुक्तं विज्ञप्तिमात्रवादिनं प्रति, तस्य तदसिद्धेः[30], विज्ञप्तिमात्रव्यतिरेकेण दोषस्याप्यभावाद्गुणवत्[31] । स्वा[32]भ्युपगममात्रादेव तत्[33]संभवः, परस्य[34] विज्ञप्तिमात्रसाधनात्पूर्वं यथाप्रतीति वस्तुनो व्यवस्थाना[35]दिति समाधाने[36] ततः[37] एव सौगतस्या[38]पि तदेव समाधानमस्तु[39], विचारात्पूर्वं सर्वस्या[40]विचारितरमणीयेन रूपेण यथाप्रतीति साध्यसाधनव्यवहारप्रवृत्ते[41]रन्यथा विचाराप्रवृत्तेः । सिद्धे तु विज्ञप्तिमात्रे न कश्चित्साध्यसाधनव्यवहारं प्रतनोति सौगतो, नापि 'परेषां[42] तद्दोषोद्भावनेवकाशोस्ति' इति केचित्, तेपि न विचारचतुरचेतसः, किंचिन्निर्णी-

---

१ अभ्रान्तत्वपक्षे सर्वं भ्रान्तं ग्राह्यग्राहकाकारत्वादित्यस्य हेतोः । २ प्रकृतानुमानात् । ३ ननु च साध्यसाधनग्राहिकाया विज्ञप्तेरसंभवो भवतु, विज्ञप्तिमात्रव्यतिरेकेण तद्विषयभूतसाध्यसाधनयोरभावादिति कश्चित् । तं प्रत्याहुः । ४ प्रतिविहितमित्यत्र साध्ये हेत्वन्तरमेतत् । ५ प्रत्यक्षादनुमानाद्वा साध्यसाधनव्याप्तिविज्ञप्तेरसंभवो यथेत्यर्थः । ६ साध्यसाधनविज्ञप्तिसंभवे । ७ सर्वस्य, अन्तर्बाह्यतत्त्वस्य । ८ ज्ञानमात्रतैव । ९ किं तर्हीत्याह । १० चकाराद्दृष्टान्तोपि । ११ तस्य, नीलस्य । १२ अभ्युपगम्य । १३ तस्य, साध्यधर्मादेः । १४ तद्वचनं ( नीलवचनं ) च तद्वचनज्ञानं ( नीलसंवेदनं ) च तयोः । १५ अभेदभेदरूपयोः । १६ स्वस्य आत्मनो वचनाभावम् । १७ स्ववचनविरोधप्रकारेण । १८ विज्ञानाद्वैतवादिना । १९ ज्ञानं विहायापरस्याभेदस्यानभ्युपगमात् । २० जैनादिमताङ्गीकारेण । २१ साध्यधर्मादीनां दूषणोत्पादनस्य । २२ विज्ञानवादिनः । २३ तस्य, जैनादेर्योऽभ्युपगमस्तस्यासिद्धेः । २४ जैनादेः । २५ व्याप्यः, सहोपलम्भः । २६ व्यापक ऐक्यम् । २७ अविनाभावी । २८ अनुमाने । २९ प्रतिज्ञाहेतुदोषः स्यादित्यादेर्दोषस्य । ३० तद्दोषासिद्धेः । ३१ यथा विज्ञप्तिमात्रं विहाय कश्चिद्गुणो नास्ति विज्ञानमात्रवादिनः । ३२ स्वस्य, जैनस्य । ३३ तस्य, प्रतिज्ञाहेतुदोषस्य । ३४ ( ज्ञानाद्वैतिनः ) । ३५ जैनैर्दोषसंभवस्य व्यवस्थानात् । ३६ भो जैन । ३७ यथाप्रतीति वस्तुनो व्यवस्थानादेव । ३८ मम । ३९ भवता जैनाना यथा गुणदोषौ स्तस्तथास्माकं सौगतानां विज्ञप्तिमात्रं स्यात् । ४० वादिनः । ४१ ततश्चास्माकं सौगताना न प्रतिज्ञादोषः संभवतीति भावः । ४२ जैनानाम् । ( सिद्धे त्विति पूर्वेण संबन्ध. ) ।

तं[1]माश्रित्यान्यत्र[2]निर्णीतरूपे तदविनाभाविनि विचारस्य प्रवृत्तेः, सर्वविप्रतिपत्तौ[3] तु क्वचिद्विचारणानवतरणात्। इति विचारात्पूर्वमपि विचारान्तरेण निर्णीते एव साध्यसाधनव्यवहारस्तद्[4]गुणदोषस्वभावश्च निश्चीयते। न चैवं[5]मनवस्था, संसारस्यानादित्वात् क्वचित्कस्य[6]चित्कदाचिदाकाङ्क्षानिवृत्तेर्विचारान्तरानपेक्षणात्। ततो[7] युक्तमेव स्याद्वादिनः प्रतिज्ञा[8]दोषोद्भावनं हेतु[9]दोषोद्भावनं च। तथा हि। अयं पृथगनुपलम्भाद्भेदाभावमात्रं साधयेन्नीलतद्धियोः। तच्चासिद्धं, संबन्धासिद्धेरभावयोः[10] खरशृङ्ग[11]वत्। सिद्धे[12] हि धूमपावकयोः कार्यकारणभावे संबन्धे कारणाभावात्कार्यस्याभावः सिध्यति। सति च शिंशपात्ववृक्षत्वयोर्व्याप्यव्यापकभावे व्यापकाभावाद्व्याप्याभावो, नान्यथा[13]। न चैवं भेदपृथगुपलम्भयोः संबन्धः क्वचित्सिद्धो, विरोधाद्विज्ञप्तिमात्रवादिनो यतः पृथगुपल[14]म्भाभावो भेदाभावं साधयेत् इति न निश्चितो हेतुः[15]। एतेन[16]असहानुपलम्भादभेदसाधनं प्रत्युक्तं, भावाभावयोः[17] संबन्धासिद्धेरविशेषात्, तादात्म्य[18]तदुत्पत्त्यो[19]रर्थस्वभावनियमात्, तदन्य[20]व्यावृत्तेरर्थास्वभा[21]वत्वादेकत्वेन[22] भावस्वभावेन सह तदयोगात्। सिद्धेपि[23] प्रतिषे[24]धैकान्ते विज्ञप्तिमात्रं न सिध्येत्, तद[25]साधनात्। तत्सिद्धौ तदा[26]श्रयं दूषणमनुषज्येत ग्राह्यग्राह[27]कभावसिद्धिलक्षणं तद्व[28]द्बहिरर्थसिद्धिप्रसञ्जनं चाविशेषात्[29]। तदेकोप[30]लम्भनियमोप्यसिद्धः, साध्यसाधनयोरविशेषात्[31]। साध्यं हि नीलतद्धियोरेकत्वम्। तदेकोपलम्भोपि तदेव[32], ज्ञानस्यैकस्योपलम्भादिति हेत्वर्थव्याख्यानात्[33], सहशब्दस्यैकपर्यायत्वात् सहोदरो भ्रातेत्यादिवत्। तथै[34]कज्ञानग्राह्यै[35]त्वं द्रव्यपर्यायपरमाणु[36]भिरनैकान्तिकम्। द्रव्यपर्यायौ हि जैनानामेकमतिज्ञानग्राह्यौ, न च सर्वथैकत्वं प्रतिपद्येते। सौत्रान्तिकस्य च संचिता[37] रूपादिपरमाणवश्चक्षुरादिज्ञानेनैकेन ग्राह्याः, 'संचितालम्बनाः[38] पञ्च विज्ञानकायाः' इति वचनात्। न चैक्यं प्रतिपद्यन्ते। तथा योगाचारस्या[39]पि सकलविज्ञानपरमाणवः[40] सुगतज्ञानेनैकेन ग्राह्याः, न चैकत्वभाजः। इति तैरनैकान्तिकं साधन[41]मनुषज्यते। नीलतद्धियोरैक्यमनन्यवेद्यत्वात्[42] स्वसंवेदनवदित्यत्रापि परेषा[43]मनन्यवेद्यत्वमसिद्धं, नीलज्ञानादन्य[44]स्य नीलस्य वेद्यत्वात्।

---

१ साध्यमेवंविधलक्षणकं, साधनं त्वेवंविधलक्षणमिति निर्णीतम्। २ साध्ये स्थाणुपुरुषादिरूपे। ३ सर्वत्र साध्यसाधनादौ संदेहे सति। ४ तस्य, साध्यसाधनादेः। ५ विचारान्तरेण निर्णीतत्वप्रकारेण। ६ वीतरागादेः। ७ अनवस्था नास्ति यतः। ८ नीलतद्धियोरभेद इति प्रतिज्ञा। ९ सहोपलम्भनियमादिति हेतु। १० पृथगुपलम्भाभावभेदाभावयोः। ११ खरशृङ्गयोर्यथा संबन्धाभावः। १२ ननु चाभावादभावसाधनं नासिद्धमग्न्यभावाद्धूमाभावसाधनवत्, व्यापकाभावाद्व्याप्याभावसाधनवद्वा इत्याशङ्कायामाह। १३ कार्यकारणयोर्व्याप्यव्यापकयोश्च पूर्वं सद्भावासिद्धौ। १४ सहोपलम्भनियम इत्यर्थः। १५ पृथगुपलम्भाभावरूपः। १६ भेदाभावसिद्धिनिराकरणपरेण ग्रन्थेन। १७ अभेदपृथगनुपलम्भयोः। १८ अविशेषः कुतः? तादात्म्यतदुत्पत्त्योरर्थस्वभावनियमात्। १९ सहक्रमसंबन्धयोः। २० सा चासावसहानुपलम्भरूपा अन्यव्यावृत्तिश्च। तथा सहोपलम्भनियमात्सकाशाद्व्यावृत्तिश्चासहानुपलम्भः। तदन्यव्यावृत्तिरिति असहानुपलम्भ एव। २१ तुच्छाभावरूपत्वात्। २२ साध्येन। २३ साधनस्याभावरूपत्वे दूषणमुक्त्वा इदानीं साध्यस्याभावरूपत्वे दूषणमाहुः। २४ नीलतद्धियोर्भेदाभावमात्रे। २५ पृथगनुपलम्भलक्षणाद्धेतोर्विज्ञप्तिमात्रस्यासाधनात्। २६ सा, विज्ञप्तिः। २७ अनुमानं ग्राहकं विज्ञप्तिमात्रं ग्राह्यम्। २८ विज्ञप्तिवत्। २९ विज्ञप्तिमात्रबहिरर्थयोर्ग्राह्यग्राहकभावसिद्धेः। ३० स चासावेकोपलम्भश्च। ३१ अभेदात्। ३२ (एकत्वमेव)। ३३ सहोपलम्भनियमादित्यस्य हेतोरर्थस्य साध्यसमत्वात्। ३४ पूर्वोक्तप्रकारेण। ३५ नीलतद्धियोरैक्यमेव एकज्ञानग्राह्यत्वात्। ३६ द्रव्यं च पर्यायाश्च परमाणवश्चेति द्वन्द्वः। ३७ पिण्डीकृता। ३८ संचितमालम्बनं विषयो येषां पञ्चविज्ञानकायानाम्। कायः स्वरूपम्। ३९ विज्ञानाद्वैतवादिनः। ४० विज्ञानरूपा परमाणवो विज्ञानपरमाणवः। ४१ एकज्ञानग्राह्यत्वलक्षणम्। ४२ नीलस्य ज्ञानादन्यत्वाभावादनन्यवेद्यत्वम्। सहोपलम्भनियमादित्यस्यैवार्थकथनमेतत्। ४३ जैनानाम्। ४४ इन्द्रियपञ्चकापेक्षया।

एतेनैकलोलीभावेनोपलम्भः सहोपलम्भश्चित्रज्ञानाकार[1]वदशक्यविवेचनत्वं[2] साधनमसिद्धमुक्तं, नीलतद्वेदनयोरशक्यविवेचनत्वासिद्धेरन्तर्बहिर्देशतया विवेकेन प्रतीतेः । यदि पुनरेकदोपलम्भः सहोपलम्भ इति व्याख्यायते तदा एकक्षणवर्तिसंवित्तीनां[3] साकल्येन स[4]होपलम्भनि[5]यमाद्व्यभिचारी हेतुः, तासां त[6]थोत्पत्तेरेव संवेद[7]नत्वात् संविदितानामेवोत्पत्तेः । द्विचन्द्रदर्शनवदिति दृष्टान्तोपि साध्यसाधनविकलः, तथोपलम्भाभेदयोरर्थे[10] प्रतिनि[11]यमाद्भ्रान्तौ[12] त[13]दसंभवात्, संभवे तद्भ्रान्तित्वविरोधात् । ननु चासहानुपलम्भमात्रादभेदमात्रं साधनात्साध्यरूपं भ्रान्तादपि संभवति, अ[14]भावेऽभाव[15]योः संभवाविरोधात् । ततो न साध्यसाधनविकलो दृष्टान्त इति न शक्यप्रतिष्ठं, कथंचिदर्थस्वभा[16]वानवबोधप्रसङ्गा[17]त् सर्वविज्ञानस्वलक्षणक्षणक्षयविविक्तसन्ततिविभ्रमस्वभावा[18]नुमितेः साकल्येनैकत्वप्रसङ्गात्, त[20]दन्यापोहमात्राद्धेतोरन्यापोहमात्रस्यैव सिद्धेरर्थस्वभावानवबोधात् । किं च सकृदुप[21]लम्भनियमे हेत्वर्थे सति एकार्थसंगते[22]दृष्टयः परचित्तविदो वा नावश्यं तद्बु[23]द्धिं त[24]दर्थं वा संविद[25]न्तीति हेतोरसिद्धिः, नियम[26]स्यासिद्धेः । किञ्च सहोपलम्भनियमश्च स्याद्भेदश्च स्यात् । किं विप्रतिषिध्येत ? स्वहेतुप्रतिनि[27]यमसंभवात् । इति सन्दिग्धव्य[28]तिरेको हेतु[29]र्न विज्ञप्तिमात्रतां साधयेत् । त[30]स्मादयं विज्ञानवादी मिथ्यादृष्टिः परप्रत्यायनाय शास्त्रं विदधानः 'परमार्थतः संवि[31]दानो वा वचनं तत्त्वज्ञानं च प्रतिरुण[32]द्धीति न किंचिदेतत्, असाधनाङ्गवचनाददोषोद्भाव[33]नाच्च निग्रहा[34]र्हत्वात् । न ह्यस्य वचनं किंचि[35]त्साधयति दूषयति वा, यतस्तद्वचनं साधनाङ्गं दोषोद्भावनं वा स्यात् । नापि किंचित्संवेदनमस्य[36] सम्यगस्ति, येन मिथ्यादृष्टिर्न भवेत् । संविदद्वैतम[37]स्तीति चेन्न, तस्य स्वतः परतो वा ब्रह्मवदप्रतिपत्तेर्यथासंवे[38]दनं मिथ्यात्व[39]सिद्धेः । तदेवं नान्तरङ्गार्थतैकान्ते बुद्धिर्वाक्यं वा सम्यगुपायतत्त्वं संभवतीति स्थितम् ।

---

१ चित्रज्ञानाकाराणामेकलोलीभावेनोपलम्भोऽशक्यविवेचनत्वं यथा । २ नीलतद्धियोः । ३ नानापुरुषज्ञानानाम् । ४ ननु कथमेकक्षणवर्तिसवित्तीनामेकदैवोत्पत्तिर्न त्वेकदोपलम्भ ? तत एकदैवोपलम्भनियमाद्व्यभिचारित्वं स्यादित्याशङ्कायामाह । ५ नानापुरुषैः । ६ तथा, एकदात्वेन । ७ ( एकक्षणवर्तिसंवित्तीनामेकदात्वेनोत्पत्तिरेव तासामुपलम्भत्वम् । ८ अनुभूतानाम् । ९ यतः स्वलक्षणे साध्यमभेदः, साधनं—तथोपलम्भो वर्तते, न तु द्विचन्द्रदर्शने । १० वस्तुरूपे स्वलक्षणे वा । ११ निश्चयात् । १२ द्विचन्द्ररूपायाम् । १३ तयो, तथोपलम्भाभेदयोः । १४ द्विचन्द्ररूपे । १५ सहानुपलम्भाभावभेदाभावरूपयो साध्यसाधनयोः । ( अभावभावयोरिति खपाठः ) । १६ विज्ञानान्येव स्वलक्षणानि । तेषां क्षणक्षयादेः । १७ अनुमाने । १८ अनुमानज्ञाने परिच्छित्तेः । १९ अर्थस्वभावानवबोधान्यापोह-( अर्थस्वभावानवबोधाद्व्यावृत्तः अर्थस्वभावाभेदः ) मात्रादर्थस्वभावावबोधो भविष्यतीत्युक्ते आह । २० तच्च तदन्यापोहमात्रं च । २१ नीलतद्धियोः । २२ एकार्थे नर्तकीक्षणे सलग्नदृष्टयः पुरुषा । २३ एकार्थसंलग्नपुरुषबुद्धिम् । २४ परचित्तार्थम् । २५ नियमेन परचित्तार्थं न जानन्ति परचित्तविदो वा पुरुषाः । दृश्यते चायं व्यवहारस्तुष्टो राजा न ज्ञायते कुत्रेति । इत्यसिद्धत्वं हेतो । २६ व्याप्ते । २७ ज्ञानार्थयोः स्वस्वकारणप्रभवत्वादित्यर्थः । भिन्नकारणप्रभवत्वाच्च भेद एवेत्यर्थः । २८ संदिग्धो व्यतिरेको विपक्षाद्व्यावृत्तिर्यस्य स । २९ सहोपलम्भनियमरूपः । ३० विज्ञानाद्वैतसाधकेनुमाने प्रतिज्ञादृष्टान्तादिदोषो यस्मात् । ३१ जानानः । ३२ निराकरोति । ३३ बहिरर्थे । ३४ सौगतस्य । ३५ क्रमेण विज्ञानमात्रं बहिरर्थं च । ३६ विज्ञानाद्वैतवादिनः । ३७ सम्यगस्तीत्यर्थः । ३८ सांशस्य कथंचित्क्षणिकस्यैव संवेदनस्य प्रतीतिर्न तु निरंशस्य सर्वथा संवेदनं संवेदनानुरोधेन प्रतीतिमनुसृत्य निरीक्ष्यमाणे सति त्वदीयसंविदद्वैतमिथ्यात्वस्यासत्त्वस्य सिद्धिस्तथा । ३९ त्वदीयसंवेदनस्य क्षणिकत्वात् ।

बहिरङ्गार्थ[1]तैकान्ते प्रमाणाभासे[2]निह्नवात्[3] ।
सर्वेषां[4] कार्यसिद्धिः स्याद्विरुद्धार्थाभिधायिनाम् । ८३ ।

यत्[5]किंचिच्चेतस्तत्सर्वं साक्षात्परम्परया वा बहिरर्थप्रतिबद्धम् । यथाग्निप्रत्यक्षेतर[6]वेदनम् । स्वप्नदर्शनमपि चेतः[7], तथा[8] विषयाकारनिर्भासात् । साध्यदृष्टान्तौ पूर्ववद् । विवादापन्न विज्ञानं साक्षात्परम्परया वा बहिरर्थप्रतिबद्धं, विषयाकारनिर्भासात् । यथाग्निप्रत्यक्षेतरवेदनम् । तथा स्वप्न[9]दर्शनमपि विषयाकारनिर्भासम् । तत्तथा । इति बहिरङ्गार्थतैकान्तः, सर्ववेदनानां बहिर्विषयत्वाभिनिवेशात् । अत्रापि[10] लोकसमय[11]प्रति[12]बद्धानां परस्परविरुद्धश[13]ब्दबुद्धीनां स्वार्थसंबन्ध[14]ः परमार्थतः प्रसज्येत । न[15] चैवं, तृणाग्रे करिणा शतमित्यादिवचनानां स्वप्नादि[16]बुद्धीनां च स्वार्थे संबन्धाभावात् तथा संवादासिद्धेः । स्यान्मतं[17] ' द्विविधोर्थो, लौकिकोऽलौकिकश्च । यत्र लोकस्य परितोषः स लौकिकः सत्यत्वाभिमतज्ञानविषयः । यत्र न लोकस्य परितोषः शास्त्रविदां[18] तु संतोषः सोलौकिकोर्थः स्वप्नादिबुद्धिविषयः, सर्वथा[19]प्यविद्यमानस्य प्रतिभासवचनासंभवात् खर[20]विषाणानुत्पन्नप्रध्वस्तविषय[21]शब्दज्ञानानामपि लोकागोचरालौकिकार्थविषय[22]त्वात् ' इति तदेतद[23]लौकिकमेव, जाग्रत्प्रत्यया निरालम्बना एव प्रत्ययत्वात् स्वप्नप्रत्ययवदिति परार्थानुमानप्रत्ययस्यास्वार्थ[24]प्रतिबद्धत्वे तेनैव चेतस्त्वस्य विषयाकारनिर्भासस्य च हेतोर्व्यभिचारात्[25] स्वार्थ[26]प्रतिबद्धत्वे च सर्ववेदनानां सालम्बनत्वविरोधात् । अस्या[27]लौकिकार्थालम्बनत्वान्न लौकिकार्थालम्बनत्वे[28] साध्ये हेतोर्व्यभिचारो विरोधो वेति चेन्न, लौकिकालौकिको[29]र्थालम्बनशून्यत्वानुमानेन हेतोर्व्यभिचारविरोधयोस्तदवस्थत्वात् । न चैवविधा[30]र्थाना परस्परविरुद्धानां सकृत्संभव[31] इति न बहिरङ्गार्थतैकान्तः श्रेयानऽन्तरङ्गार्थतैकान्तवत् ।

---

१ बहि॰ ( ज्ञानादन्यत् ) अङ्गं शरीरं यस्य स बहिरङ्ग॰ । स चासावर्थस्तस्य भावस्तत्ता । सैवैकोऽसाधारणः स्वप्रेतरयोरन्तो धर्म । तस्मिन्नङ्गीक्रियमाणे । २ मिथ्याज्ञानस्य संशयादे । ३ बाह्यार्थ सत्य एवेति । ४ न केवलं सौगतानामपि तु जैनादीनामपि । ५ सर्वं प्रत्यक्षानुमानादि वहिरर्थप्रतिवद्धं, चेतस्त्वादिति शेष । ६ अयमग्निरिति साक्षादग्निप्रत्यक्षज्ञानम् । इतरवेदनमनुमानं परम्परयार्थसंबद्धं, पर्वतोयमग्निमान्धूमवत्त्वादिति यथा परम्परया । ७ चेतो वहिरर्थसंवद्धं विषयाकारनिष्प्रतिभासात् । ८ पूर्वानुमानप्रकारेण । ९ स्वप्नज्ञानम् । १० दूषणं ब्रूमो वयं जैना इत्यर्थ । ११ समय , संकेतः । १२ यथामनोरथं सकलजनसमाहितसंकेतसज्ञानाम् । १३ अङ्गुल्यग्रे हस्तियूथशतं भ्रान्तमास्ते इति लोकशब्दा । यत्सत्तत्क्षणिक यत्सत्तदक्षणिकम् । इत्यादिसमयशब्दा । तत्र प्रतिवद्धाना परस्परविरुद्धबुद्धीनामर्थानर्थार्थग्राहकबुद्धीनाम् । शब्दाश्च बुद्धयश्चेति द्वन्द्व । १४ विषयसंवन्ध । १५ अस्त्वेतदित्युक्ते आह । १६ आदिशब्देन मरीचिकाजलादिग्रहणम् । १७ बहिरर्थवादिन । १८ बहिरर्थैकान्तवादिनाम् । १९ कुत इत्याह । २० सर्वथाऽविद्यमानानामर्थाना प्रतिभासवचनयोरसभव किमिति प्रतिपाद्यते ? यावता भावान्तरस्वभावतया खरविषाणादीना प्रतिभासस्य खरविषाणशब्देन तु वचनस्य संभवो भविष्यतीत्याह । २१ खरविषाणो न उत्पन्नो न प्रध्वस्तो विषयो येषां ते । २२ खरविषाणादीनामलौकिकार्थविषयत्वेन सर्वथाप्यविद्यमानत्वं नास्तीति तात्पर्यम् । २३ वाचका शब्दा ग्राहकाणि च ज्ञानानि, तत्सर्वम् । २४ परार्थानुमानप्रत्यय स्वार्थप्रतिवद्धोऽस्वार्थप्रतिवद्धो वेति विकल्प्य दूषयति जैन । २५ परार्थानुमानप्रत्ययस्य चेतस्त्वेपि स्वार्थप्रतिवद्धत्वाभावाद्व्यभिचार । २६ प्रत्ययत्वादित्यनुमाने निरालम्बनरूपार्थप्रतिवद्धत्वेन बाह्यार्थप्रतिवद्धत्वादिति तात्पर्यम् । २७ परार्थानुमानप्रत्ययस्य । २८ जाग्रत्प्रत्यया लौकिकार्थालम्बना॰ प्रत्ययत्वादित्येवम् । २९ सर्वे प्रत्यया निरालम्बना लौकिकालौकिकार्थालम्बनशून्यप्रत्ययत्वादित्यर्थ । ३० लौकिकालौकिकार्थानाम् । ३१ अस्य प्रकृतानुमानस्यालौकिकार्थालम्बनत्वे स्वय लौकिकार्थालम्बनत्वेनाभिमतजाग्रत्प्रत्ययानामप्यलौकिकार्थालम्बनत्वसिद्धेर्लौकिकालौकिकार्था सकृत्प्रसज्यन्ते । तेषा च परस्परविरुद्धत्वात्सभवो न भवतीति भाव॰ ।

विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषाम् ।
अवाच्यतैकान्तेप्युक्तिर्नावाच्यमिति युज्यते । ८२ ।

अन्तर्बहिर्ज्ञेयैकान्तयोः[1] सहाभ्युपगमो विरुद्धः स्याद्वादन्यायविद्विषामेव । तदवाच्यतायामुक्तिविरोधः पूर्ववत् । स्याद्वादाश्रयणे तु न कश्चिद्दोष इत्याहुः ।

भावप्रमेयापेक्षायां प्रमाणाभासनिह्नवः ।
वहिः प्रमेयापेक्षायां प्रमाणं तन्निभं[3] च ते[4] । ८३ ।

सर्व[5]संवित्तेः स्वसंवेदन[6]स्य कथंचि[7]त् प्रमाणत्वोपपत्ते[8]स्तदपेक्षायां सर्वं प्र[9]त्यक्षं, न कश्चित्प्रमाणाभासः, सौगतानामप्यत्राविवादात्, सर्वचित्त[10]चैत्तानामात्म[11]संवेदनं प्रत्यक्षमिति वचनात् । [12]तन्निर्विकल्पकमित्ययुक्तं स्वार्थव्यवसायात्मत्वमन्तरेण प्रत्यक्षत्वानुपपत्तेः सम[13]र्थनात् । [14]तथानभ्यु[15]पगमे[16]ऽन्यत एव बुद्धेरनुमानं स्यात् । [17]तच्चायुक्तं लिङ्गा[18]भावात् । [19]तत्रार्थज्ञान[20]मलिङ्गं, तदविशेषेणा[21]सिद्धेः । [22]स्वयमप्रत्यक्षं ज्ञानं ह्यर्थपरिच्छे[23]दादनुमीयते इत्यर्थज्ञानं कर्मरूपमर्थस्य प्राकट्यं [24]तल्लिङ्गमिष्यते [25]स हि बहिर्देशसंबद्धः प्रत्यक्षमनुभूयते, [26]ज्ञाते त्वनुमानादवगच्छ[27]ति बुद्धिमिति वचनात् । [28]तच्चार्थप्राकट्यमर्थधर्मो ज्ञानधर्मो वा ? प्रथमपक्षेऽर्थपरिच्छेदकज्ञानादविशेषेणे[29]तरस्यासिद्धेर्न तल्लिङ्गम् । [30]तदविशेष[31]स्तु[32], तस्यास्वसंविदितत्वादनुमानापेक्षत्वप्रसङ्गात् । न हि ज्ञाने परिच्छेदकेऽप्रत्यक्षे तत्कृतोऽर्थपरिच्छेदः प्रत्यक्षः स्यात्, संतानान्तरज्ञानकृतार्थपरिच्छेदवत् । वहिरर्थस्य प्रत्यक्षत्वात्तद्ध[33]र्मस्य प्रत्यक्षत्वमिति चेन्न, अर्थस्यापि स्वतः प्रत्यक्षत्वासिद्धेः । [34]स्वज्ञाने प्रतिभासमानस्य प्रत्यक्षत्वे संतानान्तरज्ञानेपि साक्षात्प्रतिभासमा[35]ने प्रत्यक्षत्वप्रसङ्गः, तस्या[36]नुमेयत्वाविशेषा[37]त् । [38]बहिरर्थप्राकट्यस्य प्रमातुः स्वसंविदितत्वात्तल्लिङ्ग[39]मेव ज्ञाने प्रसिद्धमिति चेत्कथमर्थध[40]र्मः स्वसंविदितो नाम ? अर्थवत् । सोयं[41] ज्ञानमस्वसंविदितं प्राकट्यमर्थस्वरूपं

---

१ तयोः, अन्तरङ्गार्थबहिरङ्गार्थैकान्तयोः । २ सर्वं प्रमाणाभासम् । ३ प्रमाणाभासम् । ४ अर्हतः । ५ स्वरूपसंवेदनस्य । ६ सत्त्वचेतनत्वाद्याकारेण, न क्षणक्षयादिरूपेण । ७ तस्य, स्वसंवेदनस्य । ८ स्वसंवेदनप्रत्यक्षम् । ९ स्वसंवेदनापेक्षया सर्वं प्रत्यक्षमित्यत्र । १० चित्तानि ज्ञानानि । तत्र भवाश्चैत्ता हर्षादयः । ११ आत्मा, स्वरूपम् । १२ ननु च स्वसंवेदनप्रत्यक्षं निर्विकल्पकमितरच्च सविकल्पकं प्रमाणाभासमिति । तत्कथं प्रमाणाभासनिह्नव इत्याशङ्कायामाह । १३ प्रथमपरिच्छेदे विरोधान्नोभयैकात्म्यमित्यादिकारिकाव्याख्यानचरमभागे । १४ सर्वसंवित्तीनां संवेदनप्रकारेण । १५ ज्ञानस्य स्वार्थव्यवसायात्मकत्वानभ्युपगमे । १६ अर्थापत्तिलिङ्गात् । १७ तथेष्टत्वाददोष इति मीमांसकीयाशङ्कायामाहुः । तत्, अनुमानम् । १८ परोक्षज्ञानग्राहकलिङ्गाभावात् । १९ बुद्धौ । २० अर्थप्राकट्यम् । २१ लिङ्गस्य । २२ आह मीमांसकः । २३ अर्थप्राकट्यात् । २४ तस्य, परोक्षज्ञानस्य । २५ अर्थस्यासिद्धत्वेन प्राकट्यमप्यसिद्धं भविष्यतीत्याशङ्कायामाह । स, अर्थः । २६ इदं मीमांसकवचनं तल्लिङ्गमिष्यते इत्यत्र योजनीयम् । २७ प्रमातेति शेषः । २८ अत्राह जैनः । २९ अर्थप्राकट्यस्य । ३० अर्थपरिच्छेदकज्ञानादविशेषस्तु । ३१ मीमांसकमते ज्ञानस्याव्यवसायात्मकत्वादर्थस्याप्यव्यवसायात्मकत्वम् । अतोऽविशेषः । ३२ भवति । ३३ वहिरर्थधर्मस्यार्थप्रकटनस्य । ३४ अर्थस्य स्वतः प्रत्यक्षत्वं न स्याच्चेन्मा भूत्, स्वज्ञाने प्रतिभासमानस्यार्थस्य प्रत्यक्षत्वं भविष्यतीत्याशङ्कायामाह । स्वज्ञाने, परोक्षज्ञाने । ३५ अर्थे । ३६ संतानान्तरज्ञानस्य । ३७ संतानान्तरज्ञान परोक्षज्ञानमप्यनुमेयम् । ३८ प्राकट्यस्य प्रमातुर्वा स्वसंविदितत्वात् प्राकट्यस्य करणज्ञानाद्विशेषो भविष्यतीत्याह मीमांसकः । ३९ अर्थप्राकट्यम् । ४० प्राकट्यम् । ४१ एतदेव भावयति । स मीमांसकः ।

स्वसंविदितमित्याचक्षाणो विपरीतप्रज्ञः । परि[1]च्छिद्यमान[2]त्वस्य ज्ञानजस्यार्थधर्मस्यार्थ[3]ज्ञान[4]स्य कुतस्ततो[5] विशेषो येन तल्लिङ्गं[6] सिध्येत् ? पुंसः[7] स्वसंविदितत्वेन ततो विशेषे वा[8] तदन्यतरे[9]णार्थपरिसमाप्तेः किं द्वितीयेन[10] ? स्वसंविदितार्थपरिच्छेदा[11]देव स्वार्थपरिच्छित्तिसिद्धेरप्रत्यक्षज्ञानस्याकिंचित्करत्वात् । पुंसो वा स्वसंविदितार्थत्वेनार्थपरिच्छेदसिद्धेः किमनेन[12] ? तस्य करणत्वान्नाकिंचित्करत्वमात्मनः कर्तृत्वादर्थस्य च कर्मत्वात्करणत्वविरोधात्, करण[13]मन्तरेण क्रियायाः[14] संभवाभावादिति चेत्तर्हि पुंसः स्वसंवित्तौ किं करणम् ? स्वात्मैवेति[15] चेत्स एवार्थपरिच्छित्तावपि करणमस्तु, कर्तुरनन्यस्यापि कथंचिद[16]विभक्त[17]कर्तृकस्य करणस्य सिद्धे[18]र्विभक्तकर्तृकवत् । एतेना[19]र्थपरिच्छेद[20]स्यार्थधर्मस्य स्वसंवित्तौ स्वात्मनः करणत्वे करणान्तरमकिंचित्करमुक्तम् । ततः पुरुषार्थपरिच्छेदयोरन्यतरेण स्वात्मनैव[21] करणेनार्थपरिसमाप्तेः किं द्वितीयेन करणेन परोक्षज्ञानेन ? यच्चेदमर्थज्ञा[22]नं तच्चेदर्थस्वलक्षणं[23] स्याद्व्य[24]भिचारा[25]दहेतुः, अप्रत्यक्षे ज्ञाने साध्ये, तस्यार्थस्वरूपस्य तदभावेपि भावादन्यथा[26]र्थाभावप्रसङ्गात् । न[27] च ज्ञानस्याभावे[28]र्थस्याभावः । परिच्छिद्यमानत्वधर्मेण धर्मिणो[29] विशिष्टस्यार्थस्याभाव एवेति चेन्न, तस्य ज्ञाना[30]सिद्धौ प्रतिपत्तिविरोधात्, विशेषणा[31]प्रतीतौ तद्विशिष्टत्वस्य क्वचिद[32]प्रतीतेरसिद्धत्वेन हेतुत्वायोगस्याभिधानात् । एतेना[33]र्थमहं जानामीति प्रतीतेरात्मनोर्थज्ञानं स्वसंविदितमर्थप्राकट्यं ज्ञानधर्मोऽप्रत्यक्षाया लिङ्गबुद्धौ लिङ्गमित्येतदपास्तं, तस्य[34] बुद्धेर[35]प्रत्यक्षत्वे तथा प्रतीतेरयोगात् । इत्यविशिष्ट[36] एव ज्ञानानपेक्षस्वभावो[37]र्थस्तद्धेतुः[38] स्यात् । स च व्यभिचार्येव[39] । एतेने[40]न्द्रियादि[41]प्रत्यक्षं[42] प्रत्युक्तं, तस्याप्यतीन्द्रियत्वेनाप्रत्यक्षज्ञानादविशेषेणासिद्धेः । विशेषेण वा तयो[43]रन्यतरेण भावेन्द्रियादिना[44] स्वसंविदितेनार्थपरिसमाप्तेः किं द्वितीयेनाप्रत्यक्षज्ञानेन ? तस्यैव ज्ञानत्वात् । व्यभिचारी चेन्द्रियादि[45]हेतुर्ज्ञानाभावेपि भावात् कारण[46]स्येन्द्रियस्य मनसो वावश्यं कार्य[47]वत्त्वानुपपत्तेः । ततः[48] प्रत्यक्षेतरबुद्ध्यवभासस्य स्वसंवेदना[49]त्प्रत्यक्षविरुद्धं, ज्ञानस्या-

---

१ तत इति शेष । २ अर्थप्राकट्यस्य । ३ इदं विशेष्यं प्राग्भाष्यस्थं पदमेतत्तत्समनन्तराणि त्रीण्यपि विशेषणानि तदर्थकथनरूपाणि प्रत्येतव्यानि । ४ अर्थप्राकट्यस्य । ५ परोक्षज्ञानात् । ६ अर्थप्राकट्यलिङ्गम् । ७ आत्मनः अर्थप्राकट्यस्य च । ८ अङ्गीक्रियमाणे । ९ परोक्षज्ञानस्वसंविदितपुरुषयोर्मध्ये परोक्षज्ञानस्वसंविदितार्थप्राकट्ययोर्मध्ये वा । १० परोक्षज्ञानेन । ११ अर्थप्राकट्यात् । १२ द्वितीयेन परोक्षज्ञानेन । १३ करणं मा भूदित्याशङ्क्याह । १४ आत्मन. स्वरूपस्य क्रियाया अर्थपरिच्छेदरूपाया. । १५ चित्स्वरूपतया । १६ अर्थप्राकट्यस्य । १७ विभिन्नकर्तृकं कुठारलक्षणं यथा तथा । १८ कर्तुरनन्यस्य करणत्वसाधनात् । १९ अर्थप्राकट्यस्य । २० मीमांसकेनाभ्युपगम्यमाने । २१ पुरुषस्वरूपेण अर्थप्राकट्यरूपेण च । २२ अर्थप्राकट्यम् । २३ घटादिस्वरूपम् । २४ तर्हीति शेषः । २५ अविनाभावाभावादनैकान्तिकत्वादित्यर्थं । दूरव्यवहितार्थस्य ज्ञानाभावेपि भावात् । २६ परोक्षज्ञानाभावेऽभावो यद्यस्य प्राकट्यस्यापि तर्हि । २७ अस्त्वित्युक्ते आह । २८ प्रतिनियतदेशादिरूपतया ज्ञानविषयत्वधर्मस्य । २९ परिच्छिद्यमानत्वधर्मणो विशिष्टस्येति कपाठ॰ । ३० ज्ञानस्य परोक्षत्वादेवासिद्धि॰ । ३१ विशेषणाप्रतीतिरपि कुत इत्युक्ते ज्ञानासिद्धावित्यादि साधनं वक्तव्यम् । ३२ अर्थे । ३३ अर्थधर्मोर्थप्राकट्यमप्रत्यक्षज्ञाने लिङ्ग न भवतीति समर्थनग्रन्थेन । ३४ आत्मन॰ । ३५ करणज्ञानस्य । ३६ परिच्छिद्यमानत्वधर्मविशेषणरहित एव । ३७ स्वभाव, अर्थप्राकट्यम् । ३८ परोक्षज्ञानहेतु । ३९ यत्र यत्र परोक्षज्ञान तत्र तत्रार्थप्राकट्यमिति व्याप्तेरभावात् परोक्षज्ञानाभावेपि अर्थरूपदर्शनात् । ४० अर्थप्राकट्यस्य लिङ्गत्वनिराकरणपरेण ग्रन्थेन । ४१ आदिशब्देन मन. । ४२ मयि चक्षुरादीन्द्रियमस्ति रूपादिज्ञानान्यथानुपपत्तेरिति । ४३ इन्द्रियपरोक्षज्ञानयो । ४४ आदिशब्देन भावमन । ( भावेन्द्रियं भावमनो वा ज्ञानरूपमेव, लब्ध्युपयोगयोर्भावेन्द्रियत्वकथनात्, 'लब्ध्युपयोगौ भावेन्द्रियमि'ति वचनात् । ज्ञानावरणादिज्ञानरोधककर्मणां क्षयोपशमो लब्धि. । तदनन्तरमर्थपरिच्छेदाय चेतनाव्यापार उपयोगः ) । ४५ द्रव्येन्द्रियादिहेतु । ४६ ज्ञानोत्पत्तिं प्रति । ४७ अर्थपरिच्छित्तिरूपं कार्यम् । ४८ इन्द्रियादेरपि ज्ञानस्य परोक्षत्वसिद्धिर्न भवेद्यत. । ४९ पूर्वोक्तप्रतिभासस्य ।

प्रत्यक्षत्वमनुमानविरुद्धं च । तथा हि । सुखदुःखादिबुद्धेरप्रत्यक्षत्वे हर्षविषादादयोपि न स्युरात्मान्तरवत् ।

एतेन[1] प्रतिक्षणं निरंशं संवेदनं प्रत्यक्षं प्रत्युक्तं, यथाप्रतिज्ञमनुभवा[2]भावात्, यथा[3]नुभवमनभ्युपगमात्[4], स्थिरस्यात्मनः सुखदुःखादिबुद्ध्यात्मकस्य प्रत्यक्षमनुभूयमानस्य हर्षविषादादेरनुभवात् । भ्रा[5]न्तोयमनुभव इति चेन्न[6], बाधकाभावात् । सर्वत्र[7] सर्वदा[8] भ्रान्तेरप्रत्यक्षत्वाविशेषात् परोक्षज्ञानवादानुषङ्गः सौगतस्य । कथंचिद्[9]भ्रान्तावेकान्तहानेः स्याद्वादानुप्रवेशः । न केवलं निर्विकल्पकेर्थदर्शने परोक्षज्ञानादविशेषः । किं तर्हि ? तद्व्यवस्थाहेतौ विकल्पस्वसंवेदने[11]पि, वि[12]कल्पानतिवृत्तेः, सर्वथा[13] विकल्पस्य भ्रान्तत्वे बहिरिव स्वरूपेपि भ्रान्तेरप्रत्यक्षत्वाविशेषादभ्रान्तं प्रत्यक्षमिति वचनात्, कथंचिद्भ्रान्तत्वेनेकान्तसिद्धेरनिवारणात् । त[14]स्मात्स्वसंवेदनापेक्ष[15]या न किंचिज्ज्ञानं सर्वथाऽप्रमाणम् । बहिरर्थापेक्षया तु प्रमाणतदाभासव्यवस्था, तत्संवादकविसंवादकत्वात् क्व[16]चित्स्वरूपे केशमशकादिज्ञानवत् । नभसि केशादिज्ञानं हि बहिर्विसंवादकत्वात्प्रमाणाभासं स्वरूपे संवाद[17]कत्वात्प्रमाणम् । नचैवं[18] विरोधः प्रसज्यते, जीवस्यैकस्यावरणविगमविशेषात् सत्येतराभाससंवेदनपरिणामसिद्धेः कालिकादिविगमविशेषात्कनकादि[19]जात्येतरपरिणामवत् ।

न च जीवो नास्त्येवेति शक्यं वक्तुं तद्ग्राहकप्रमाणस्य भावात् । तथा हि ।

जीवशब्दः सबाह्या[20]र्थः संज्ञात्वाद्धेतुश[21]ब्दवत् ।

मा[22]यादिभ्रान्तिसंज्ञा[23]श्च मायाद्यैः [24]स्वैः प्र[25]मोक्तिवत् । ८४ ।

स्वरू[26]पव्यतिरिक्तेन शरीरेन्द्रियादिकलापेन जीवशब्दोर्थवान् । अतो न कृतः[27] प्रकृ[28]तः स्यादिति वि[29]क्लवोल्लापमात्रं, लोकरूढेः समाश्रयणात् । का पुनरियं लोकरूढिः ? यत्रायं व्यवहारो जीवो गतस्तिष्ठतीति वा । न हि शरीरेयं व्यवहारो रू[30]ढस्तस्याचेतनत्वाद्भोगा[31]धिष्ठानत्वेन रूढेः । नापीन्द्रियेषु, तेषामुपभोगसाधनत्वेन प्रसिद्धेः । न शब्दादिविषये, तस्य भोग्यत्वेन व्यवहारात् । किं तर्हि ? भोक्तर्येवात्मनि जीव इति रूढिः । शरीरादिकार्यस्य चैतन्यस्य भोक्तृत्वमयुक्तं भोगक्रिया[32]वत् ।

---

१ सुखेत्यादिग्रन्थेन । २ हर्षादीनाम् । ३ स्थिरसाशत्वप्रकारेण । ४ हेत्वन्तरमिदम् । ५ आह सौगतः । ६ जैनः । ७ सर्वथा भ्रान्त· कथंचिद्वेति विकल्प्य दूषयति जैनः । ८ कि च सर्वथायमनुभवो भ्रान्त इति पक्षे बहिरर्थे स्वरूपेपि च स्यात् । ९ स्वप्नावस्थायामिव जाग्रदवस्थायामपि। १० अर्थे एव, न स्वरूपे इत्यर्थः । ११ परोक्षज्ञानाविशेषः। १२ वक्ष्यमाणयोर्विकल्पयोरप्रेतनयोः ( विकल्पः सर्वथा भ्रान्त· कथंचिद्वेति ) । १३ विकल्पस्य भ्रान्तत्वेपि प्रत्यक्षत्वमित्युक्ते आह । १४ सर्वथा कथंचिद्वा विकल्पस्य भ्रान्तत्वमिति पक्षयोः परोक्षज्ञानाविशेषस्यानेकान्तसिद्धेरनिवारणं यस्मात् । १५ अन्त·प्रमेयापेक्षया । १६ नभसि । १७ सवादकत्वादिति पाठान्तरम् । १८ एकस्यैव प्रमाणाप्रमाणव्यवस्थारूपतया । १९ जात्य, उत्कृष्टः । २० बाह्येन जीवलक्षणेनार्थेन सह वर्तते इति सबाह्यार्थः । २१ त्रिरूपलिङ्गप्रतिपादक शब्दो हेतुशब्दः । तेन तुल्यो वर्तते इति तद्वत् । सौगतमतवच्चार्वाकस्यापि धूमादग्निं प्रतिपद्यमानस्य हेतुरस्तीति न दृष्टान्तासिद्धि. । २२ मायादिभ्रान्तिसंज्ञाभिरनैकान्तिको भविष्यति हेतुरिति शङ्कायामाह । २३ यसः । २४ स्वैरर्थैः । २५ यथा प्रमोक्ति·, प्रमाणवचन, प्रमाणेन प्रत्यक्षादिनार्थवती भवति तथा मायादिभ्रान्तिसंज्ञाश्चेत्यसौ दृष्टान्तो मायावादिन इति द्रष्टव्यः । २६ स्वरूपशब्देन जीवादय. शब्दा. परामृश्यन्ते । तेनार्थ. स्वरूपाज्जीवादिशब्दाद्व्यतिरिक्तेनेति विषयः । २७ निश्चित । २८ अनादिनिधनो जीव । २९ " विक्लवो विह्वल. स्यात्तु " इत्यमर. । ३० प्रसिद्धः । ३१ आत्मनः । ३२ भोगलक्षणा क्रिया चैतन्यस्य न घटते अचैतन्य( शरीर )कृतकार्यत्वेनाचेतनत्वात् ।

ननु सुखदुःखाद्यनुभवनं भोगक्रिया। सा ह्यत्रान्वयिनि गर्भादिमरणपर्यन्ते चैतन्ये सर्वचेतनाविशेषव्यापिनि भोक्तृत्वं, शरीरादिविलक्षणत्वात्तस्येति चेत्तदेवात्मद्रव्यमस्तु, जन्मनः पूर्वं मरणादूर्ध्वमपि तस्य सद्भावोपपत्तेरन्यथा पृथिव्यादिसमुदयशरीरेन्द्रियविषयेभ्यो वैलक्षण्यासंभवात्। न[1] तत्कार्यं[2], ततो[3]ऽत्यन्तविलक्षणमस्ति[4], रूपादिसमन्वयात्[5]। चैतन्यस्यापि सत्त्वादिसमन्वया[6]न्नात्यन्तविलक्षणत्व[7]मिति चेन्न[8], तत्त्वभेदेऽपि तस्य[9] भावात्। [10]पृथिव्यादितत्त्वभेदानामेकविकारि[11]समन्वयाभावाद्[12]भेद एव[13], [14]केषांचित् प्रागभावादिभेद[15]वदिति चेत् किमिदानीं[16] चैतन्यभूतयोरेकविकारिसमन्वयो[17]ऽस्ति? येन तत्त्वान्तर[18]त्वेन भेदो न स्यात्। तस्मादेकविकारिसमन्वयासत्त्वं वैलक्षण्यम्। तदेव च तत्त्वान्तरत्वमित्यनाद्यनन्ततां चैतन्यस्य साधयति। तादृश[19]चैतन्यविशिष्टे काये जीवव्यवहारश्चैतन्यकाययोरभेदोपचारादेव। क्षणिके चित्तसंताने जीवव्यवहार इत्यसारं तस्य निराकृत[20]त्वात्। ततः कर्तृत्वभोक्तृत्वलक्षणेनोपयोग[21]स्वभावेन जीवेन जीवशब्दः सबाह्यार्थ इति साध्यनिर्देशे सिद्धसाधनाभावः।

संज्ञा[22]त्वादिति हेतुर्विरुद्धः सबाह्यार्थत्वविरुद्धाभिप्रेतमात्र[23]सूचकत्वेन तस्य व्याप्तत्वादिति चेन्न, संज्ञायां[24] वक्त्रऽभिप्रायमात्रसूचकत्वस्य[25] प्रमाणबाधितत्वात्। तथा हि। नात्र संज्ञाभिप्रेतमात्रं सूचयति, ततो[26]ऽर्थक्रियायां नियमायोगात् तदाभास[27]वत्। न च तद्[28]योगः संज्ञायाः, तयार्थं परिच्छिद्य प्रवर्तमानस्यार्थक्रियानियमस्य दर्शनात्करणप्रतिपत्ति[29]वत्, [30]करणप्रतिपत्तीनां तदभावेऽनादरणीय[31]त्वात्। ततः[32] संज्ञा[33]त्वं जीवशब्दस्य सबाह्यार्थत्वं साधयति हेतुशब्दवत्। सर्वेण हि हेतुवादिना हेतुशब्दः सबाह्या[34]र्थोऽभ्युपगम्यते, साधनतदाभासयोरन्यथा विशेषासंभवात्, वक्त्रभिप्रायमात्रसूचकत्वादबाह्यार्थत्वा[35]विशेषात्। तद्विशेषमिच्छता[36] [37]परम्परयापि परमार्थै[38]कतानत्वं वाचः प्रतिपत्तव्यम्। क्वचिद्[39]व्यभिचारदर्शनादनाश्वासे चक्षुरादिबुद्धेरपि कथमाश्वासः? [40]तदाभासोपलब्धेस्तत्राप्यनाश्वासे कुतो धूमादेरग्न्यादिप्रतिपत्तिः? कार्यकारणभावस्य व्यभिचारदर्शनात्। न चेद[41]मसिद्धं काष्ठादिजन्मनोऽग्नेरिव मणि[42]प्रभृतेरपि भावात्। सुविवेचितं कार्यं कारणं न व्यभिचरतीति, तद्विशेषपरीक्षायां[43], सुविवेचितः शब्दोऽर्थं न व्यभिचरतीति प्रसिद्धेरितरत्र[44]ापि

---

१ ननु च पृथिव्यादिकार्यमपि चैतन्यं पृथिव्यादेरत्यन्तविलक्षणं भविष्यतीति शङ्कायामाह। २ पृथिव्यादिकार्यम्। ३ पृथिव्यादिभ्य। ४ कुत पृथिव्यादिभ्योऽत्यन्तवैलक्षण्यमस्तीत्युक्ते हेतुमाह। ५ पृथिव्यादिकार्येषु रूपादिसमन्वयदर्शनात्। ६ चैतन्यं सत्, भूतमपि सदिति सत्त्वेनोभयत्र समन्वयात्। ७ पृथिव्यादितत्त्वानाम् ( चैतन्येन सह )। ८ अत्राह जैन। ९ सत्त्वादिसमन्वयस्य। १० चार्वाक आह। ११ एको यो विकारी पृथिव्यादि। तेन परस्परं समन्वयाभावात्तदनुस्यूतताभावात्। १२ पृथिव्यादीनाम्। १३ ( सर्वथा )। १४ नैयायिकानाम्। १५ प्रागभावादिभेदाना परस्परमभावरूपैकविकारसमन्वयाभावाद्भेदो यथा सर्वथा। १६ जैन पृच्छति। १७ किन्तु नैवेत्यर्थं। १८ पृथिव्यादिसकाशादात्मन। १९ अनाद्यनन्तचैतन्यविशिष्टे काये जीवव्यवहार कथमित्याशङ्क्याह। २० अन्येष्वनन्यशब्दोऽयमित्यादिकारिकासु। २१ ज्ञानोपयोगदर्शनोपयोगपरिणामकेन। २२ सौगताशङ्का। २३ मायादिशब्दानाम्। २४ हेतुरूपाया। २५ साध्यस्य। २६ अभिप्रेतमात्रसूचिकाया सञ्ज्ञाया सकाशात्। २७ मरीचिकाया जलसञ्ज्ञा तदाभास। तद्वत्। २८ तस्य, नियमस्य। २९ इन्द्रियस्य सम्बन्धिनी प्रतिपत्ति करणज्ञानम्। तस्या सकाशाद्यथार्थपरिच्छित्ति। ३० करणप्रतिपत्तीनामर्थक्रियानियमो नास्ति नन्वित्याशङ्कायामाह। ३१ अकिंचित्करत्वात्। ३२ विरुद्धो न भवेद्यत। ३३ हेतु। ३४ पाश्चेन धूमादिलक्षणेन सह। ३५ शून्यत्वाविशेषात्। ३६ सौगतेन। ३७ अर्थानुभवपूर्विका वासना। वासनापूर्वक शब्द इति। ३८ सत्यार्थैकविषयत्वम्। ३९ मरीचिकाया जलादिलक्षणत्वस्य। ४० शुक्तिकाया रजतज्ञानस्योपलम्भात्। ४१ कार्यकारणव्यभिचारदर्शनम्। ४२ सूर्यकान्तादे। ४३ सत्याम्। ४४ शब्दे।

[1]तद्विशेषपरीक्षास्तु, विशेषा[2]भावात्। [3]वक्तुर[4]भिसन्धिवैचित्र्यादभिधानव्यभिचारोपलम्भे, तदि[5]तराध्यक्षानुमानकारणसामग्रीशक्तिवैचित्र्यं [6]पश्यतां कथ[7]माश्वासः स्यात्? [8]तस्मादय[9]मक्षलिङ्गसंज्ञा[10]दोषाविशेषेपि क्वचित्[11]प्रत्यक्षेनुमाने च परितुष्यन्न[12]न्यतमप्रद्वेषेणेश्वरायते, परीक्षाक्लेशलेशासहनात्।

ननु चाभावोपा[13]दानत्वात्तद[14]न्यतमायां संज्ञायां प्रद्वेषेण परीक्षक एव, न पुनरीश्वरायते, [15]तस्य परीक्षाऽक्षमत्वादिति चेन्न[16], [17]तस्याः [18]सर्वथा भावोपादानत्वाभावेऽभावोपादानत्वासिद्धेः। सर्वत्र भावोपा[19]दानसंभवे हि [20]समाख्यानामि[21]तरोपादानप्रक्लृप्तिः। [22]एतेनैतदपि प्रत्युक्तं यदुक्तं सौगतेन 'अनादिवासनोद्भूतविक[23]ल्पपरिनिष्ठितः। शब्दार्थस्त्रिविधो धर्मो भावाभावो[24]भयाश्रितः' इति, [25]तत्त्वतो भावाश्र[26]यत्वाभावे वासनोद्भूतभावाश्रयत्वानुपपत्तेः सर्वत्रानुभवपूर्वकत्वाद्वासनायाः परम्परया वस्तु[27]प्रतिबन्धात्। पूर्वपूर्ववासनात एवोत्तरोत्तरवासनायाः समुद्भवादनादित्वादवस्त्वाश्रयत्वमेवेति चेन्न, शब्द[28]वासनाया अप्यनादित्वे परार्था[29]नुमानशब्दवासनायाः [30]साधनस्वलक्षणदर्शननिमित्तकत्वविरो[31]धात्। त्रिरूपहेतुवचनस्य परम्परया धूमादिवद्वस्त्वा[32]श्रयत्वे हेतुशब्दवज्जीवशब्दस्य भावाश्रयत्वं युक्तम्। भावश्चा[33]त्र हर्षविषादाद्यनेकाकारविवर्तः, प्रत्यात्म वेदनीयः, प्रतिशरीरं भेदात्मकोऽप्रत्याख्यानार्हः प्रतिक्षि[34]पन्तमात्मानं प्रतिबोधयतीति कृतं प्रयासेन। तदनेन हेतोः कालात्ययापदिष्टत्वं प्रतिक्षिप्तं, पक्षस्य प्रत्यक्षादिभिरबाधितत्वात्। [35]तत्र निरति[36]शयस्यास्वसंविदि[37]तस्य सर्वशरीरेष्वभि[38]न्नस्यैकस्य प्रतिक्षणं भि[39]न्नस्य चात्मनः प्रतिभासाभावात्तस्य प्रत्याख्यानार्हत्वसाधनान्न ते[40]न जीवशब्दः सबाह्यार्थः। [41]ननु च मायादिभ्रान्तिसंज्ञाभि[42]र्बाह्यार्थाभिरनैकान्तिकं संज्ञात्वमिति चेन्न, तासामपि मायाद्यैः स्वैरर्थैः सबाह्यार्थत्वात् प्रमाणवचनव[43]त्। न हि मायादिसमाख्याः स्वार्थरहिता विशिष्ट[44]प्रतिपत्तिहेतुत्वात् प्रमाणसमाख्यावत्। भ्रान्तिसमाख्यानामबा[45]ह्यार्थत्वे [46]ततो भ्रान्तिप्रतिपत्तेरयोगात् प्रमाणत्व[47]प्रतिपत्ति[48]प्रसङ्गान्न विशिष्टप्रतिपत्तिहेतुत्वमसिद्धम्। प्रमाणशब्दस्य स्वा[49]र्थविशेषरहितत्वे[50] भ्रान्तिप्रति[51]पत्त्यनुषङ्गा[52]च्च न [53]तदसिद्धं, यतो निदर्शनं साधनधर्मविकलं स्यात्। एतेन

---

१ तस्य, शब्दस्य। २ कार्यशब्दयो। ३ रागादिमत। ४ अभिसन्धिरभिप्राय। ५ अभिधानसामग्रीतो या इतरा अक्षानुमानसामग्री। ६ सौगतानाम्। ७ प्रत्यक्षानुमानयो। ८ सर्वत्र नाश्वासो यत। ९ सौगत। १० अक्षलिङ्गसंज्ञाना स्वार्थव्यभिचारलक्षणदोषाविशेषेपि। ११ निर्विकल्पके। १२ अन्यतमे, संज्ञेयव्यभिचारिणि। १३ अन्यापोह स उपादानमाश्रयोस्या संज्ञाया। १४ अक्षलिङ्गसज्ञासु मध्ये। १५ ( प्रद्वेषेणेश्वरस्य )। १६ जैन। १७ संज्ञाया। १८ स्वरूपपररूपाभ्याम्। १९ घटलक्षणसज्ञया घटलक्षणार्थाश्रयत्वसंभवे सति पररूपेण पटादिलक्षणेनासत्त्वसंभव। स्वद्रव्यापेक्षया भावोपादानत्वे सति परद्रव्यापेक्षया अभावोपादानत्वं घटेत नान्यथेति भाव। २० सज्ञानाम्। २१ इतर, अभाव। २२ सर्वत्रेत्यादिप्रक्लृप्तिरितिपर्यन्तेन ग्रन्थेन। २३ वास्तवार्थस्यानुपपद्यमानत्वादनादिवासनोद्भूतविकल्पपरिकल्पितरूप एवार्थ। २४ घटलक्षणसज्ञाया घटलक्षणार्थाश्रयत्वसंभवे सति पररूपेण पटादिलक्षणेनासत्त्वसंभव इति भावाभावोभयाश्रित। २५ कथं प्रत्युक्तमित्याह। २६ शब्दस्य। २७ वासना अनुभवपूर्विका, अनुभवश्चार्थप्रतिबन्धक इति। २८ अस्यार्थस्याय शब्दो वाचक इत्येवंविधाया। २९ परार्थानुमानरूपशब्दवासनाया। ३० साधनं, यथा धूम। ३१ वासनाया अनादित्वादवस्त्वाश्रयत्वं यत। ३२ अङ्गीक्रियमाणे। ३३ कारिकोक्तानुमाने लोके वा। ३४ वादिनम्। ३५ निरतिशयत्वादिस्वभावेन साङ्ख्यादिकल्पितेन, प्रतिक्षणभिन्नस्वभावेन च सौगतपरिकल्पितेनात्मना जीवशब्द सबाह्यार्थो भविष्यतीत्याशङ्कायामाह। ३६ नित्यरूपस्यापरिणामिन इत्यर्थ। ३७ यौगापेक्षया। ३८ ब्रह्मवाद्यपेक्षया। ३९ सौगतापेक्षया। ४० परमताभिमतेन जीवशब्देन। ४१ बौद्धाशङ्का। ४२ इन्द्रजालादिभि। ४३ प्रमाणवचनस्य प्रमाणलक्षणो ज्ञानलक्षणो वाग्यार्थो यथा। ४४ भ्रान्तिविषया विशिष्टा असाधारणरूपा प्रतिपत्ति। 'विशेषार्थ'—इति वा पाठ। ४५ भ्रान्तिरूपार्थाभावे। ४६ भ्रान्तिसमाख्यात। ४७ विशिष्टोत्पन्नभ्रान्तिरूपाया। ४८ तथा च सर्वभ्रान्त्यभावात्सर्वबाह्याभ्युपगमस्यापि प्रमाणत्वप्रसङ्ग इत्यर्थ। ४९ स्वार्थो, ज्ञानलक्षण। ५० अङ्गीक्रियमाणे। ५१ असदर्थस्य। ५२ ततश्च प्रमाणशब्दस्य स्वार्थविशेषरहितत्वमिति भाव। ५३ तत्, विशिष्टप्रतिपत्तिहेतुत्वम्।

खरविषाणादिशब्दानामपि स्वार्थ[1]रहितत्वमपास्तं, विशिष्टप्रतिपत्ति[2]हेतुत्वाविशेषादन्यथा[3] भावशब्दत्वप्रसङ्गात्। ततो न तैरपि व्यभिचारः[4]। किञ्च,—

बुद्धिशब्दार्थ[5]संज्ञास्तास्तिस्रो बुद्ध्यादिवाचिकाः।
तुल्या बुद्ध्यादिबोधाश्च[6] त्रयस्तत्प्रतिबिम्बकाः॥ ८५॥

ये[7]प्याहुः 'अर्थाभिधानप्रत्यया[8]स्तुल्यनामान इति–जीवार्थस्य जीव इति संज्ञा, जीव इति शब्दस्य च, जीव इति बुद्धेश्चेति। तत्रा[9]र्थपदार्थक एव जीवशब्दः सबाह्यार्थः सिद्धो, न बुद्धिशब्दपदार्थकः[10]। ततो[11]ऽनेन हेतोर्व्यभिचारः, संज्ञात्वस्य सामान्येन[12] हेतुवचनात्' इति, तेऽपि[13] न सम्यगुक्तयः, सर्वत्र बुद्धिशब्दार्थसंज्ञानां तिसृणामपि स्वव्यतिरिक्तबुद्ध्यादिपदार्थवाचकत्वात्। यस्माद्धि शब्दादुच्चारितादव्यभिचारेण यत्र बोधः प्रजायते स एव तस्यार्थः स्यात्, अन्यथा शब्दव्यवहारविलोपात्। यथा[14] च जीवशब्दादर्थपदार्थकाज्जीवो न हन्तव्य इत्यत्र[15] जीवार्थस्य प्रतिबिम्बको बोधः प्रादुर्भवति तथा बुद्धिपदार्थकाज्जीव इति बुध्यत इत्यादेः[16] बुद्ध्यर्थस्य[17] प्रतिबिम्बको, जीव इत्याहेति शब्दपदार्थकाच्छब्दस्य[18] प्रतिबिम्बकः[19] स्यात्। ततस्[20]त्रयोऽर्थास्तिसृणां संज्ञानामवगम्यन्ते तत्प्रतिबिम्बकबोधानां त्रयाणामेव भावात्। तदनेना[21]चार्यो[22] हेतुव्यभिचाराशङ्कां प्रत्यस्तमयति[23], बुद्ध्यादिसंज्ञाना तिसृणामपि स्वव्यतिरिक्तवस्तुसंबन्धदर्शनात् तद्बुद्धीनां च तिसृणा तन्निर्भासनात्[24]तद्विषयतोपपत्तेः[25]। सामान्यतो जीवशब्दस्य धर्मित्वात् स्वव्यतिरिक्तार्थस्य[26] च ८
सबाह्यार्थत्वस्य साध्यत्वाद्व्यभिचारविषयस्या[27]सत्त्वादव्यभिचारी हेतुः।

ननु च विज्ञानवादिनं[28] प्रति संज्ञात्वादित्यसिद्धो हेतुः, संज्ञाया विज्ञानव्यतिरेकेणासत्त्वात्। दृष्टान्तश्च[29] साधनविकलो, हेतुशब्दस्य तदाभासवेदनादन्यस्या[30]विद्यमानत्वात्। संज्ञाभास[31]ज्ञानस्य हेतुत्वे शब्दाभास[32]स्वप्नज्ञानेन व्यभिचारी[33] हेतुः। इति कैश्चित्[34] तं प्रत्यभिधीयते।

वक्तृ[35]श्रोतृप्रमातॄणां बोधवाक्यप्रमाः पृथक्[36]।
भ्रान्तावेव[37] प्रमाभ्रान्तौ बाह्यार्थौ तादृशेतरौ॥ ८६॥

---

१ स्वार्थोऽत्राभावरूप। २ अभावरूपतया विशिष्टा असाधारणरूपा प्रतिपत्ति। ३ विशिष्टप्रतिपत्तिहेतुत्वाभावे। अभावलक्षणस्वार्थरहितत्वं यदि तर्हीत्यर्थ। ४ सज्ञात्वस्य हेतो। ५ बुद्धिश्च शब्दश्चार्थश्च तेषा सज्ञा। बुद्ध्यादेर्विषयस्य बोधा बुद्ध्यादिसंज्ञाजनितास्त्रयो बुद्ध्यादिविषयप्रतिबिम्बका यत। ६ बोधाश्चेत्यत्र च शब्दोऽपिशब्दार्थ। तेन न केवलं बुद्ध्यादिशब्दा इति समुच्चय। बुद्ध्यर्थादिप्रतिपादकत्वेन तुल्या समा इत्यर्थ.। ७ मीमासका ८ प्रत्ययो ज्ञानम्। ९ त्रयाणा जीवसज्ञात्वे सति। १० बुद्धिपदार्थक शब्दपदार्थकश्च नेत्यर्थ। ११ जीवशब्दोऽर्थपदार्थक एव सबाह्यार्थो, न तु बुद्धिशब्दपदार्थक इत्युक्त यत। १२ बुद्धिशब्दार्थादिविशेषविरहेण। १३ मीमासका। १४ ननु चार्थपदार्थकादेव जीवशब्दाज्जीवार्थकस्य प्रतिबिम्बको बोध प्रादुर्भवति, न तु बुद्धिशब्दपदार्थकाद्बुद्धिशब्दकात्। तत कथ जीवशब्दो बुद्धिशब्दपदार्थकस्तद्वाचक इत्युक्ते आह। १५ वाक्ये। १६ बुद्धिस्वरूपकाज्जीवशब्दात्। १७ ज्ञानरूपस्य। १८ जीवशब्दात्। १९ बोध। २० त्रिधापि बोध प्रादुर्भवति यत। २१ बुद्ध्यादिश्लोकेन २२ श्रीसमन्तभद्रस्वामी। २३ अस्त नयति। २४ तस्य बुद्ध्यादे। २५ ततश्चाव्यभिचारी हेतुरिति फलितम्। २६ बुद्धिशब्दपदार्थकाज्जीवशब्दात्। २७ सज्ञात्वादिति हेतो। २८ योगाचारम्। २९ हेतुशब्दवदिति। ३० हेतुशब्दस्य। ३१ सज्ञाया अवभासने यज्ज्ञान तत्सज्ञावभासज्ञानम्। जीवशब्द सबाह्यार्थ सज्ञाभास (शब्दाकार) ज्ञानत्वादिति। ३२ शब्दाभास, शब्दाकार। ३३ शब्दाकारस्वप्नज्ञाने सबाह्यार्थत्वाभावात्। ३४ योगाचार। ३५ यदा सौगत पूर्वपक्षवादी तदासौ वक्ता जैनादि। श्रोता यदा जैनादिस्तदा वक्ता सौगतादि। ३६ वक्तरि बोधो वाक्यस्य कारणं, श्रोतरि कार्यं वाक्यम्। कार्यं कारण चैतद्वाक्ययुक्तायुक्तविचारप्रमाणान्ता पृथगभ्युपगन्तव्या। वीप्सापदमेतत्। पृथक् पृथगवभासन्ते इत्यध्याहार, अन्यथैकस्मिञ्ज्ञानेऽवभासनाज्ज्ञानमेव यदवभासते तज्ज्ञानमिति वचनात्। ३७ ननु बोधवाक्यप्रमास्तिस्रो भ्रान्ता एव चेत्तर्हि प्रमाणमपि भ्रान्त स्यात्। अस्तु। को दोष इत्युक्ते आह।

वक्तुर[१]भिधेयबोधाभावे कुतो वाक्यं प्रवर्तेत ? त[२]स्याभिधेयबोधनिबन्धनत्वात् । वाक्याभावे च श्रोतुरभिधेयज्ञानासंभवस्त[३]स्य त[४]न्निमित्तकत्वात् । प्रमातुः प्रमित्यभावे च शब्दार्थयोः प्रमेययोरव्यवस्थानादि[५]ष्टतत्त्वानुपपत्तेर्वक्त्रादित्रयस्य बोधादित्रयं पृथग्भूतमुपेयम् । तथा सति न हेतोरसिद्धतादिदोषो, दृष्टान्त[६]स्य वा साध्यादिवैकल्यं प्रसज्यते । स्यान्मतं 'बहिरर्थाभावाद्वक्त्रादित्रयं न बुद्धेः पृथग्भूतं,वक्त्राद्या[७]भासाया बुद्धेरेव वक्त्रादित्वव्यवहारात्,वाक्यस्यापि बोधव्यतिरेकेणासत्त्वात्, प्रमाया बोधात्मकत्वात् । त[८]तोऽसिद्धतादिदोषः साधनस्य हेतुदृष्टान्तलक्षणस्य' इ[९]ति, त[१०]न्न, रूपादेर्ग्राहकस्य[११] तद्व्यतिरिक्तविज्ञानसंतानकलापस्य च स्वांशमा[१२]त्रावलम्बिनः प्रमाणस्य विभ्रमकल्पनायां साक[१३]ल्येनासिद्धेरन्तर्ज्ञेया[१४]भ्युपगमविरोधात् । न हि रूपादेरभिधेयस्य ग्राहकस्य वक्तुः श्रोतु[१५]श्च विभ्रमकल्पनायां व्यतिरिक्तविज्ञानसंतानकलापः स्वांशमात्रावलम्बी सिध्यति परस्परमसंचा[१६]रात्, येनाभिधानाभिधेयज्ञानभेदः स्यात् । तस्या[१७]पि विभ्रमकल्पनायां न प्रमाणसिद्धिरभ्रा[१८]न्तस्य ज्ञानस्य प्रमाणत्वव्यवस्थितेः । प्रमाणस्यापि विभ्रमकल्पनायां कथमन्त[१९]र्ज्ञेयमेव तत्त्वमित्यभ्युपगमो न विरुध्यते ? प्रमाणमन्तरेण तदभ्युपगमे सर्वस्य स्वेष्टाभ्युपगमप्रसङ्गात् । प्रमाणभ्रान्तौ बा[२०]ह्यार्थयोस्तादृशान्यादृ[२१]शयोः प्रमेययोरन्तर्ज्ञेयबहिर्ज्ञेययोरिष्टानि[२२]ष्टयोर्विवेचनस्यापि भ्रान्तत्वप्रसङ्गात् । तौ[२३] हि ग्रा[२४]हकापेक्षया बाह्यार्थौ भ्रान्तावेव ग्राहकप्रमाणभ्रान्तेः । इति कुतस्तत्र हेयोपादेयविवेकः स्यादन्तर्ज्ञेयैकान्ते ? यतस्त[२५]दभ्युपगमो न विरुद्धो भवेत् । यदि पुनः प्रमाणमभ्रान्तमिष्यते तदा बाह्यार्थोऽभ्युपगन्तव्यः, तदभावे प्रमाणतदाभासव्यवस्थित्ययोगात् । तथा हि,—

बुद्धिशब्द[२६]प्रमाणत्वं बाह्यार्थे सति, नासति ।
सत्यानृतव्यवस्थैवं[२७] युज्यतेर्थाप्त्यनाप्तिषु ॥ ८७ ॥

बुद्धेः स्व[२८]प्रतिपत्त्यर्थत्वाच्छब्दस्य परप्रतिपा[२९]दनार्थत्वात् । स्वपरप्रतिपत्त्यर्थं साधनं बुद्धिशब्दात्मकं स्व[३०]संवित्त्यैव प[३१]रप्रतिपादनायोगात् तस्याः पराप्रत्यक्षत्वात् । त[३२]स्य च सति ब[३३]हिरर्थे प्रमाणत्वमर्थप्राप्तितः सिध्येत्, असति प्रमाणाभासत्वमर्थानाप्तितः । इति[३४] सत्यानृतव्यवस्था बुद्धि[३५]शब्दयोर्युज्यते,स्वपरपक्षसाधनदूषणात्मनोस्त[३६]था प्रतीतेः । त[३७]देवं परमार्थतः सन्बहिरर्थः, साधनदूषणप्रयोगात् । इत्येक[३८]लक्षणो

---

१ वक्त्रादित्रयस्य बोधादित्रयं पृथग्भूतमुपेयमित्यस्यानन्तरम्, अन्यथाशब्दस्ततो वक्तुरभिधेयेत्यादिवाक्यं द्रष्टव्यम् । वक्तरि वाक्यं श्रोतरि बोध, प्रमातरि प्रमाणमिति युक्त्या वक्तृश्रोतृप्रमातॄणा बोधवाक्यप्रमा भिन्ना एवेति तात्पर्यार्थं इति टिप्पण्यन्तरम् । २ वाक्यस्य । ३ अभिधेयज्ञानस्य । ४ तद्, वाक्यम् । ५ इष्टं, विज्ञानम् । ६ हेतुशब्दवदित्यस्य । ७ वक्त्राद्याकाराया । ८ वक्त्रादित्रयं बुद्धे पृथग्भूतं न भवेद्यत । ९ वस । १० इति यन्मत तन्न सम्यगित्यर्थ । ११ वक्तुः श्रोतुश्च । १२ स्वांशो, ज्ञानम् । १३ रूपादीनाम् । १४ अन्तर्ज्ञेयो, ज्ञानाद्वैतम् । १५ रूपादिचत्त्वारि पदानि भिन्नानि ग्राह्याणि । १६ ज्ञानाना स्वांशमात्रावलम्बिना स्वस्वरूपागमकत्वात् । १७ स्वांशमात्रावलम्बिविज्ञानस्य । १८ सौगतमते प्रत्यक्षं कल्पनापोढमभ्रान्तमिति वचनात् । १९ ज्ञानाद्वैतम् । २० स्वग्राहिज्ञानापेक्षया ज्ञानस्य बाह्यार्थत्वम् । २१ प्रमाणाप्रमाणरूपयो । २२ ( अन्तर्ज्ञेयमिष्टं, बहिर्ज्ञेयमनिष्टं च ) । २३ अन्तर्ज्ञेयबहिर्ज्ञेयरूपार्थौ । २४ स्वज्ञानग्राहकापेक्षया । २५ अन्तर्ज्ञेयैकान्ताभ्युपगम । २६ बुद्धे शब्दस्य च प्रमाणत्वम् । २७ बाह्यार्थे सति नासतीत्येवंप्रकारेण । २८ ज्ञानस्य स्वसंवेदनप्रयोजनकत्वादित्यर्थ । २९ अयं घटोयं पट इति कथनप्रयोजनकत्वादित्यर्थ । ३० ननु च बुद्ध्यात्मकमेव स्वपरप्रतिपत्त्यर्थं भविष्यतीति किं शब्दात्मकेनेत्यत्राह । ३१ असति बहिरर्थे साधनस्येति सबन्धनीयम् । ३२ बुद्धिशब्दात्मकस्य साधनस्य । ३३ ग्राहकापेक्षया बहिरर्थे ज्ञानरूपेऽज्ञानरूपे वा । ३४ एवम् । ३५ बुद्धि स्वपरपक्षसाधनदूषणात्मिका, शब्दश्च तथाविध । ३६ अर्थप्राप्त्यनाप्तिभ्या बुद्धिशब्दयो सत्यासत्यरूपतया । ३७ सत्यानृतव्यवस्था युज्यते यस्मात् । ३८ अविनाभावरूप ।

हेतुः प्रवर्तते । न चा[१]त्रैकलक्षणमसिद्धं, सत्येव बहि[२]रर्थे परमार्थतो हेतोरुपपत्तेस्त[३]थोपपन्नत्वस्य प्रधानलक्षणस्य सद्भावात् । अन्य[४]था स्वप्नेतराविशेषात्किं केन[५] साधितं दूषितं च ? इति कुतः संतानान्तरमन्यद्वा [६]स्वसन्तानक्षणक्षयवेद्याद्याकारशून्यत्व साधयेत् ? वहिरर्थस्य[७] वास्तवस्य ग्राह्यलक्षणस्याभावे हि साधनदूषण-प्रयोगस्य हेतोः सभवे स्वप्नजाग्रदवस्थाभाविनोस्तत्प्रयोगयोर्विशेषासिद्धिः । ततः किंचिज्ज्ञप्तिमात्रं केन सहो[८]पलम्भनियमादिनानुमानेन स्वार्थेन साधितं स्यात्, परार्थेन वा वचनात्मना परं प्रति, किं वा[९] स्वसंविदद्वैतं स्वतः प्रत्यक्षत एव साधितं स्या[१०]त् ? तत्साधनस्य स्व[११]प्नवन्निर्विषयत्वात् । किं वा बहिरर्थजातं केन[१२], जडस्य प्रतिभासायोगात् इत्यादिना स्वार्थेन परार्थेन वा दूषणेन दूषितं स्यात् ? इति संतानान्तरमपि न केनचित्साधनेन साधितं स्यात् । त[१३]दनभ्युपगमे न केनचिद्दूषणेन दूषितं स्यात्, त[१४]था स्वसंतानक्षणक्षया[१५]दिकं च न केनचित् साधितं स्यात् । तदनभ्युपगमेपि न केनचिद्दूषितम् । इति न कं[१६]चिद्व्यवतिष्ठते । तैमिरिकद्वि[१७]चन्द्रदर्शनवद्भ्रान्तः स[१८]र्वो व्यवहार इत्यत्रा[१९]पि तत्त्वज्ञानं शरणं, त[२०]त एव सर्वविभ्रमव्यवस्थितेः । इ[२१]ति व्याहतमेतत् तत्त्वज्ञानात् सर्वस्य भ्रान्तत्वसाधनम्, अन्यथा[२२] बहिरर्थवदभिसंहित[२३]स्यापि सर्वविभ्रमस्य निराकरणापत्तेः, भ्रान्तादेव ज्ञानात् तस्याप्य[२४]सिद्धेः । तथा परमाण्वादि[२५]दूषणेपि प्रतिपत्तव्यं, तत्त्वज्ञानं शरणमतत्त्वज्ञानादभिसंहितस्यापि परमाण्वाद्यसत्त्वस्य निराकरणापत्तेः । अन्यथा[२६] तत्कृत[२७]मकृतं स्यादिति सर्वत्र योज्यं, सर्वस्य स्वेष्टस्य स्वयमनिष्टस्य च तत्त्वज्ञानादेव साधनदूषणोपपत्तेः । एतेन[२८] साधनदूषणप्रयोगादिति साधनमसिद्धमिती[२९]च्छन् प्रतिक्षिप्तस्त[३०]दसिद्धत्वस्य स्वयमिष्टस्य तत्सिद्धत्वस्य चानिष्टस्य साधनदूषणप्रयोगादेव व्यवस्थापनादन्यथा तदव्य[३१]वस्थितेर्यत्किंचनवादित्वप्रसङ्गात् । तदिमे विज्ञानसंतानाः सन्ति न सन्तीति तत्त्वा[३२]ऽप्रतिपत्तेर्दृष्टा[३३]पह्नुतिरनिबन्धनैव, दृश्येनात्मना[३४] कथंचित्स्कन्धाकारेणादृश्यानामपि परमाणूनां बहिरपि समवस्थाने विप्रतिषेधाभावादन्तर्ज्ञेयवत् । अदृश्या[३५] एव हि ज्ञानपरमाणवः संविन्मात्रा[३६]द्दृश्यादवस्थाप्यन्ते ना[३७]न्यथेति युक्तमुदा[३८]हरणं, बहिः परमाणूना व्यवस्थापने, त[३९]त्र पूर्वादिदिग्भागभेदेन जडरूपाणां षडंशादिकल्पनया वृ[३९]त्तिविकल्पेन वा प[४०]रपक्षोपालम्भे

---

१ अनुमाने । २ ग्राहकज्ञानापेक्षया ग्राह्यमपरं ज्ञान बहिरर्थो भवति । घटादिबहिरर्थस्तु बहिस्त्वेन प्रसिद्ध एव । ३ साध्ये सत्येव हेतुर्द्विविध —अन्यथानुपपन्नत्वलक्षणस्तथोपपन्नत्वलक्षणश्च । ४ बहिरर्थाभावेपि साधनदूषणप्रयोगो यदीत्यर्थ । ५ पुरुषेण अनुमानादिना वा । ६ भाष्यस्थितान्यद्वाशब्दस्यार्थोयम् । किं तदन्यदिति । ७ अन्तर्ज्ञेयबहिर्ज्ञेयलक्षणस्य । ८ सहोपलम्भ —अविनाभाव । ९ किं साधितं स्यादिति अत्र संबन्धो ज्ञेय । १० न किमपि साधितं स्यादिति भाव । ११ स्वप्नसाध्यवत । १२ वादिना साधनेन वा । १३ कुत इत्यादिभाष्यांश भावयन्नाह । १४ अन्यद्वा इति भाष्यांशं विवृण्वन्नाह । संतानान्तरमेव नाभ्युपगम्यते तत्कथ न केनचित्साधित स्यादित्युक्ते आह । १५ आदिशब्देन वेद्याद्याकारशून्यत्व ग्राह्यम् । १६ विज्ञप्तिमात्रसंविदद्वैतबहिरर्थजातादिषु । १७ साधनदूषणप्रयोग । १८ ज्ञानज्ञेयरूप । १९ सौगतकल्पनायाम् । २० सर्वस्य विभ्रान्तत्वसिद्धिरपि त्वदिष्टा तत्त्वज्ञानादेव, न तदन्तरेणेत्यर्थ । २१ एवं सति च तत्त्वज्ञान स्वीकृत तत एव च सर्वस्य विभ्रमसाधन मा भूत्, तत्त्वज्ञानसद्भावात् । २२ तत्त्वज्ञानस्यापि भ्रान्तत्वस्वीकारे । २३ त्वदनिष्टस्य निराकरणापत्तिर्यथा तथा अभिसंहितस्य—अभिमतस्या ( त्वदिष्टस्येत्यर्थं ) पि । २४ न केवलं बहिरर्थस्य किन्तु त्वदिष्टस्यापि । २५ परमाणव सन्ति किंतु भ्रान्ता इत्यत्र । २६ तत्त्वज्ञानं यदि शरण न स्यात् । २७ अतत्त्वज्ञाननिश्चितम् । २८ सर्वत्र योज्यमित्यादिना । २९ योगाचार । ३० तस्य साधनदूषणप्रयोगादिति हेतोरसिद्धत्वं मत स्वयमिष्टं, तस्य, तस्यैव हेतो· सिद्धि स्वयमनिष्टा, तस्यापि । ३१ इष्टानिष्टसाधनाव्यवस्थिते । ३२ सर्वज्ञानाना भ्रान्तत्वात् । ३३ दृष्टस्य—अवयव्यादिभेदयुक्तस्य बहिरर्थस्य । ३४ स्वरूपेण । ३५ दृष्टान्त विवृणोति । ३६ अदृश्यपरमाणुरूपत्वप्रकारेण । ३७ अन्तर्ज्ञेयवदिति पूर्वमुक्तम् । ३८ बहि परमाणुषु । ३९ वृत्ति संबन्ध ( अवयविरूपेण परिणामसमये ) । ४० परो जैनो वैशेषिकादिश्च तस्य पक्ष· परमाण्वादिस्तस्योपालम्भे निराकरणे ।

स्वपक्षाक्षेपात्[1], तस्योपालम्भाभासत्वसिद्धेः[2]। समानं हि दूषणं बहिःपरमाणुषु, संवित्परमाणुषु च[4]। देशतः संबन्धे षडंशत्वं दिग्भागभेदात्[5], सर्वात्मना, प्रचयस्यैकपरमाणुमात्रत्वम्[6]। प्रचयस्य परमाणुभ्यो भेदे प्रत्येकं परिसमाप्त्यैकदेशेन वा वृत्तौ प्रचयबहुत्वं सांशत्वापादनमनवस्था[10] च। न च परमाणुभिः संसृष्टैर्व्यवहितैर्वा[11] प्रचयस्योपकारे[12] संसर्गासंभवो, व्यवधानेन[13] व्यवधीयमानाभ्यां व्यवधायकस्य सजातीयस्य, विजातीयस्य वा व्यवधाने प्रकृतपर्यनुयोगोनवस्थाप्रसञ्जनं चेति स्वपक्षघातिः[14] स्यात्[15] सूक्ष्मस्थूलात्मनि बहिर्जात्यन्तरे तस्यानवकाशाच्च[16] हर्षविषादाद्यनेकाकारात्मवत्[17]। तत्रापि[18] विरोधो दूषणमिति चेत्[19] सर्वथा कथंचिद्वा? न तावदाद्यः पक्षः, सर्वथा क्वचिद्विरोधासिद्धेः शीतोष्णस्पर्शयोरपि सत्त्वाद्यात्मनाऽविरोधात्, स्वेष्टेपि तत्त्वे[21]। कथंचिद्विरोधपरिहारस्य[22] पुनरायासतामप्यशक्तेर्न द्वितीयः पक्षः संभवति। तत्साक्षात्परंपरया वा, विमत्यधिकरणभावापन्नं[23] ज्ञानं, स्वरूपव्यतिरिक्तार्थालम्बनं[24], ग्राह्यग्राहकाकारत्वात् संतानान्तरसिद्धिवत्। विप्लवज्ञानेग्राह्यग्राहकाकारत्वेन[25] व्यभिचार[26] इति चेन्न, संतानान्तरसाधनस्यापि[27] व्यभिचारप्रसङ्गात्। न हि व्यापारव्याहारनिर्भासोपि विप्लुतो[28] नास्ति, येनाव्यभिचारी हेतुः स्यात्। तदन्यत्रापि[29] वासनाभेदो गम्येत न संतानान्तरम्। यथैवं हि जाग्रद्दशाया बहिरर्थवासनाया दृढतमत्वात्तदाकारस्य ज्ञानस्य सत्यत्वाभिमानः, स्वप्नादिदशायां तु तद्वासनाया दृढत्वाभावात् तद्वेदनस्यासत्यत्वाभिमानो लोकस्य, न परमार्थतो बहिरर्थः सिध्यतीति वासनाभेदोऽभ्युपगम्यते[30], तथानुपप्लवदशायां[31] सन्तानान्तरज्ञानस्य[32] वासनाया दृढतमत्वात्सत्यताभिमानोऽन्यत्र[33] तददार्ढ्यादसत्यताव्यवहार इति वासनाभेदो गम्यतां, नतु संतानान्तरम्। तदनभ्युपगमे स्वसंतानक्षणक्षयादिसिद्धिः कथमभ्युपगम्यते? ततः सुदूरमपि गत्वा किंचिद्वेदनं[34] स्वेष्टतत्त्वावलम्बनमेषितव्यम्[35]। तदेव वेद्यवेदकाकारं बहिरर्थवेदनस्य स्वरूपव्यतिरिक्तालम्बनत्वं साधयति।

ततो बहिरर्थस्य सिद्धेः सिद्धं वक्त्रादित्रयं[36], तस्य च बोधादित्रयम्। इति न जीवशब्दस्य सबाह्यार्थत्वसाधने संज्ञात्वस्य साधनस्यासिद्धतानैकान्तिकता वा, दृष्टान्तस्य[37] वा साधनधर्मादिवैधुर्यं[38], यतो न जीव-

---

१ स्वपक्ष सौगतपक्ष। सौगतपक्षे हि ज्ञानसंताना एव, ते च क्षणिका अनन्यवेद्याश्च। तस्याक्षेपो निराकरणम्। २ एतदेव भावयन्ति। तस्य—परपक्षोपालम्भस्य। ३ परमार्थत परपक्षनिराकरणं न स्यादित्यर्थ। ४ बहि.परमाणवो जैनापेक्षया, संवित्परमाणवस्तु योगाचारापेक्षया। ५ भाष्यार्थ। ६ संतानान्तरमिष्टमत प्रतिषिध्यते जैनै.। ७ परमाणूना संबन्धे। ८ परमाणुषट्कस्य। संतानान्तरे वासनाभेदो नेष्ट। संतानान्तर पारमार्थिकं बाह्यार्थस्त्वपारमार्थिक.। ९ स्कन्धस्य बहि परमाणुप्रचयस्य संवित्परमाणुप्रचयस्य चेति संबन्ध.। १० अवस्थितिर्न स्यात्। ११ संसृष्टै परमाणुभि प्रचयस्योपकारो व्यवहितैर्वेति पक्षद्वयं कृतम्। १२ प्रथमपक्षे संसर्गासंभव एकदेशेन सर्वात्मना चेत्युक्तदूषणात्। १३ व्यवधानपक्षे। १४ स्वपक्ष—संवित्परमाणुरूपो बौद्धपक्षः। १५ सौगतीयस्यैव पक्षस्य घातिर्ननु जैनीयस्येति कथमित्युक्ते आह। १६ प्रोक्ताशेषदोषस्य। १७ एकत्रैव सूक्ष्मत्वं चेत्स्थूलत्वं कथमित्येवं प्रकारेण। १८ जीवे यथैषा वृत्तिविकल्पानवकाश। १९ सौगताशङ्का। २० जैनै. परिहार क्रियते। २१ स्वेष्टं—चित्रकज्ञानादिलक्षणं, तत्रापि सर्वथा विरोधो न संभवतीत्यर्थ। यतो ज्ञानत्वाद्यपेक्षया युगपदनेकाकारयो. परस्परविरुद्धयोस्तत्र सद्भावात्। २२ नीलपीताद्यपेक्षया न तु ज्ञानापेक्षया विरोधः, अयमेव कथंचिद्विरोध.। २३ विमतिर्विवाद। २४ स्वरूपव्यतिरिक्तो बहिरर्थ एव। अनुमानज्ञान यथा संतानान्तरलक्षणबाह्यार्थालम्बनम्। २५ विप्लवज्ञानं भ्रान्तं, यथा द्विचन्द्रज्ञानं स्वप्नज्ञान च। २६ स्वव्यतिरिक्तालम्बनत्वाभावाद्धेतो.। २७ ( १ ) स्वप्नदशाया विप्लुतव्यापारादिसाधनेन। ( २ ) व्यापारव्याहारनिर्भासस्य। ( ३ ) अस्त्यत्र बुद्धिर्व्यापारादिनिर्भासादित्यनुमानेन। २८ स्वप्नदशायाम्। अपि त्वस्त्येवेत्यर्थ। संतानान्तरसाधने हेतुरयम्। २९ ज्ञाने ग्राह्यग्राहकाकारत्वं वासनाभेदादेव, न तु बहिरर्थसद्भावादित्युक्ते आह। ३० त्वया विज्ञानाद्वैतवादिना सौगतेन। ३१ जाग्रद्दशायाम्। ३२ संतानान्तरग्राहकज्ञानस्य। ३३ स्वप्नाद्युपप्लवदशायाम्। ३४–३५ संतानान्तरस्वसंतानक्षणक्षयादिसाधनमनुमानरूपम्। ३६ वक्तृश्रोतृप्रमातृणां बोधवाक्यप्रमा पृथक् इति कारिकोक्तम्। ३७ हेतुशब्दवदिति। ३८ नेति पूर्वेण संबन्ध.। संज्ञात्वस्य हेतोरसिद्धतानैकान्तिकता च न, हेतुशब्दवदिति उक्तस्य दृष्टान्तस्य साधनधर्मादिवैधुर्यमपि नेति भावार्थ।

सिद्धिः स्यात् । तत्सिद्धौ च तेस्यार्थे परिच्छिद्य प्रवर्तमानस्य संवादविसंवादसिद्धिः सिध्यत्येव । स्यात् सर्वमभ्रान्तमेव ज्ञानं भावप्रमेये संवादापेक्षणात् । स्याद्भ्रान्तं बहिरर्थे विसंवादापेक्षणात् । स्यादुभयं, क्रमार्पिततद्द्वयात् । स्यादवक्तव्यं सहार्पिततद्द्वयात् । स्यादभ्रान्तावक्तव्यं संवादसहार्पिततद्द्वयात् । स्याद्भ्रान्तावक्तव्यं विसंवादसहार्पिततद्द्वयात् । स्यादुभयावक्तव्यमेव क्रमाक्रमार्पिततद्द्वयात् । इति पूर्ववत् सप्तभङ्गीप्रक्रिया योजयितव्या, तथैवातिदेशसामर्थ्यात् तद्विचारस्य सिद्धेः, प्रमाणनयादेशादपि प्रतिपत्तव्या ।

ज्ञानैकान्तादिपक्षे गगनफलमिव ज्ञापकोपायतत्त्वं,
संभाव्यं नैव मानात् कथमपि निपुणं भावयद्भिर्महद्भिः ।
स्याद्वादे तत्प्रसिद्धं विविधनयबलात्तत्त्वतः शुद्धबुद्धे—
रित्याज्ञातं प्रपञ्चाद्विचरतु सुचिरं स्वामिनः सद्वचःसु ॥ १ ॥

इत्याप्तमीमांसालङ्कृतौ सप्तमः परिच्छेदः ।



१ किंतु स्यादेव जीवसिद्धि । २ जीवस्य । ३ ज्ञानरूपे । ४ संवाद सत्यता । ५ पूर्ववत् । ६ एकानेकविकल्पादावुत्तरत्रापि योजयेदिति अतिदिष्टवचनबलात् । ७ सप्तभङ्गीपरीक्षाया । ८ प्रमाणात् । ९ तद्–ज्ञापकोपायतत्त्वम् । १० पुस ।

११ अस्मिन् परिच्छेदे बौद्धाभिमतस्य ज्ञानैकान्तस्योपपत्तिपूर्वकं निरास कृत । अथवा हिताहितप्राप्तिपरिहारयो साधनपूर्वकत्वात्, तत्साधनस्य ज्ञापककारकभेदाद्द्वैविध्ये, ज्ञापकमुपायतत्त्वमत्र निर्णीतम् । तत्र केचन बौद्धा हि बहिरुपेयतत्त्वमनादृत्य केवलमुपायतत्त्व ज्ञानमेव स्वीकुर्वन्ति तत्तु न समञ्जस, बहिरुपेयाभावे ज्ञापकस्योपायस्य वाऽसत्त्वापत्ते , आत्मन उपेयस्य स्वीकारेपि ज्ञानेनाभेदात्तादात्म्याद्वा आत्मार्थं तत्स्वीकारस्य वैयर्थ्यात् तस्य ज्ञानसत्त्वेन स्वत सत्त्वसिद्धेरुपायत्वेन तत्र ज्ञानस्यानुपयोगात् । किंच न बहिरर्थाभाव सिध्यति, बहिरर्थस्य ज्ञाने सत्यपि भ्रान्तत्वे ज्ञानस्वरूपस्यापि भ्रान्तत्वसाधनादुभयत्राविशेषात् । स्वप्नवद्बहिरर्थस्य दृश्यमानस्य भ्रान्तत्वे जाग्रद्विषयवदभ्रान्तत्वमपि तस्य सिध्यतु, अन्यथा स्वप्नजाग्रदृशयोरविशेषे स्वप्नविषयस्य दृष्टान्तत्वाघटनात् । किंच परप्रतिपादन विना ज्ञानाद्वैतमपि कथ सिध्येत् ? प्रतिपादनस्य च पुद्गलकृतशब्दात्मकबहिरर्थरूपत्वान्न तदद्वैतं श्रेय । बहिरर्थत्वेन शब्दस्य मिथ्यात्वे तत्प्रतिपादितस्य ज्ञानाद्वैतस्यापि मिथ्यात्वमस्तु, साधनस्य मिथ्यात्वे तेन साधितस्यापि मिथ्यात्वाविशेषात् । इत्यादिप्रकारेणात्र ज्ञानाद्वैतता निरसिता ।

# अथाष्टमः परिच्छेदः ।

ज्ञापकमुपायतत्त्वं[1] समन्तभद्राकलङ्कनिर्णीतम्[2] ।
सकलैकान्तासंभवम[3]ष्टसहस्री निवेदयति ॥ १ ॥

दैवादेवार्थ[4]सिद्धिश्चेद्दैवं पौरुषतः[5] कथम्[6] ।
दैवतश्चेदनिर्मोक्षः पौरुषं[7] निष्फलं भवेत् ॥ ८८ ॥

कारकलक्षणमुपायतत्त्वमिदानीं[8] परीक्ष्यते । तद्धि, केचिद्[9]दैवमेव दृष्टादृष्टकार्यस्य साधनमित्याचक्षते, पौरुषमेवेत्यपरे[10] । किंचिद्[11]दैवादेव किंचित्[12]पौरुषादेवेत्यन्ये[13], तदुभयसाधनत्वेनावक्तव्यमेवेति चेतरे । तत्र दैवादेव यदि सर्वस्यार्थस्य सिद्धिरुच्यते तदा दैवमपि कथं पुरुषव्यापारात् कुशलाकुशलसमाचरणलक्षणादुपपद्येत, प्रतिज्ञाहानेः । दैवान्तरादेव दैवं, न पौरुषादित्यभ्युपगमेऽनिर्मोक्षो मोक्षाभावः, पूर्वपूर्वदैवादुत्तरोत्तरदैवप्रवृत्तेरनुपरमात् । ततः[14] पौरुषं[15] निष्फलं भवेत् । पौरुषाद्दैवस्य परिक्षयान्मोक्षप्रसिद्धेर्न तन्निष्फलमिति चेत् सैव प्रतिज्ञा[16]हानिः । मोक्षकारणपौरुषस्यापि दैवकृतत्वात् परंपरया मोक्षस्यापि दैवकृतत्वोपपत्तेर्न प्रतिज्ञाहानि[17]रिति चेत् तर्हि पौरुषादेव तादृशं दैवमिति न दैवैकान्तः । एतेन[18] धर्मादेवाभ्युदयनिःश्रेयससिद्धिरित्येकान्तः प्रतिक्षिप्तो, महेश्वरसिसृक्षा[19]नर्थक्यप्रसङ्गाच्च ।

कुतः[20]स्तर्हि समीहितार्थसिद्धिरित्युच्यते । योग्यता[21] कर्म पूर्वं वा दैवमुभयमदृष्टं, पौरुषं पुनरिहचेष्टितं दृष्टम्[22] । ताभ्यामर्थसिद्धिः, तदन्यतरापायेऽघटनात् पौरुषमात्रेर्थादर्शनाद्, दैवमात्रे वा समीहा[23]नर्थक्यप्रसङ्गात् । स्वयमप्रयतमानस्य सर्वमिष्टानिष्टमदृष्टमात्रादेव, प्रयतमानस्य तु प्रयत्नाख्यात् पौरुषाद् दृष्टा[24]दिति वदन्नपि न प्रेक्षावान्, कृष्यादिषु समं प्रयतमानानां कस्यचिदेवार्थप्राप्त्यनर्थोपरमदर्श-

---

१ उपायतत्त्वं-ज्ञापकं कारकं चेति द्विविधं, तत्र ज्ञापकं प्रकाशकमुपायतत्त्वं ज्ञानं, कारकं तूपायतत्त्वमुद्योगदैवादि । २ समन्तभद्रं कलङ्करहितं यथा भवति तथा निर्णीतं, समन्ताद्भद्रं यथा भवति तथा अकलङ्कदेवैर्निर्णीतमिति अर्थद्वयमत्र ज्ञेयम् । ३ अत्र एकान्तपक्षा यथा दैवादेवार्थसिद्धिर्न पौरुषात्, पौरुषादेव वा न दैवादित्येवं, तदेव च वक्ष्यते मूलकारिकाग्रन्थेन पुरस्तादेव । ४ अर्थः—प्रयोजनम् । ५ पुरुषव्यापारात् । ६ यतो दैवमपि कार्यमेवैकप्रकारकं ततस्तदपि पौरुषात्कथं सिध्येत्, कार्यमात्रस्य दैवाधीनत्वप्रतिज्ञान्यथाविरोधादिति भाव । ७ मोक्षकारणत्वेनाभिमतम् । ८ ज्ञापकोपायतत्त्वपरीक्षानन्तरम् । ९ मीमांसका । १० सौगता । ११ स्वर्गादिकम् । १२ कृष्यादिकम् । १३ मीमांसकविशेषा । १४ मोक्षाभावो यत । १५ मोक्षनिमित्तम् । १६ दैवादेव सर्वमुत्पद्यते इति या प्रतिज्ञा सा हीयते, पौरुषान्मोक्षप्राप्तिस्वीकारात् । १७ इति मीमांसकेनाशङ्क्येत चेत्तर्हीत्थं वक्ष्यमाणमुत्तरं जैनैर्दीयते इति भाव । १८ पौरुषादेव तादृशं दैवमित्यनन्तरोक्तेन वचनेन । १९ 'अज्ञो जन्तुरनीशोयमात्मन सुखदुःखयो । ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा ॥' इत्यादिप्रकारेणोक्तवचनेन कल्पिताया महेश्वरसिसृक्षाया निष्फलत्वप्रसङ्गात्, यत सृष्ट्युत्पत्तेर्दैवाधीनत्वान्महेश्वरस्य तत्कारणत्वं कथं घटेत ? । २० जैनं दैववादी पृच्छति । दैवपौरुषयोरेकमपि कारणं नानुमन्यते तर्हि कथं समीहितसिद्धिरिति प्रष्टुरभिप्राय । २१ योग्यता ( भव्यता ), पूर्वकर्म दैवमदृष्टमिति घटकलशवत्पर्यायनामानि । २२ शुभाशुभलक्षणो व्यापार । प्रतिपाद्यते इत्यध्याहार । इहचेष्टितदृष्टपौरुषादीन्यपि पर्यायनामानि । २३ ईशेच्छात्र समीहा । २४ सर्वमिष्टानिष्टं सिध्येदित्यध्याहार ।

नादपरस्यानर्थप्राप्त्यर्थोपरमप्रतीतेः, धर्माधर्मयोरपि तन्निमित्तत्वसिद्धेः। स्वयमप्रयतमानानामर्थप्राप्त्यनर्थोपरमयोरनर्थप्राप्त्यर्थोपरमयोश्च सद्भावेपि प्रयत्नाभावे[1]नुपभोग्य[2]त्वप्रसङ्गात् पौरुषस्यापि तदनुभवकारणत्वनिश्चयात् सर्वत्र दृष्टादृष्टयोर्निमित्तत्वसिद्धिस्तयोरन्यतरस्याप्यपाये तस्यानुपपद्यमानत्वात्, मोक्षस्यापि परमपुण्यातिशयचारित्रविशेषात्मकपौरुषाभ्यामेव संभवात्। ततो न पाक्षिको[3]पि दैवैकान्तः श्रेयान्।

पौरुषादेव सिद्धिश्चेत् पौरुषं दैवतः कथम् ?।
पौरुषाच्चेदमोघं[5] स्यात्, सर्वप्राणिषु पौरुषम् ॥ ८९ ॥

पौरुषादेवार्थस्य सिद्धिरिति वदतो[6]पि कथं पौरुषं दैवतः स्यात्[7] ? प्रतिज्ञाहानिप्रसङ्गात्। तद्धि पौरुषं विना दैवसंपदा न स्यात्, 'तादृशी जायते बुद्धिर्व्यवसायश्च तादृशः। सहायास्तादृशाः सन्ति यादृशी भवितव्यता' इति प्रसिद्धेः। तत्सर्वं बुद्धिव्यवसायादिकं पौरुषं पौरुषापादितमिति चेत्तर्ह्य[8]मोघमेव सर्वप्राणिषु पौरुषं भवेत्। तथैवेति[9] चेत् तद्व्यभिचारदर्शिनो न वै श्रद्दधीरन्। स्यान्मतमेतत्[10]— पौरुषं द्विविधं, सम्यग्ज्ञानपूर्वकं मिथ्याज्ञानपूर्वकं च। तत्र मिथ्याज्ञानपूर्वकस्य पौरुषस्य व्यभिचारदर्शनेपि सम्यगवबोधनिबन्धनस्य न व्यभिचारः। ततः सफलमेव पौरुषमिति। तदसत्, दृष्टकारणसामग्रीसम्यगवबोधनिबन्धनस्यापि पौरुषस्य व्यभिचारदर्शनात्[11] कस्यचिदुपेयाप्राप्तेरदृष्ट[12]कारणकलापसम्यगवबोधस्य तु साक्षाद[13]सकल[14]विदामसंभवात् तन्निबन्धनपौरुषाभावात्। प्रमाणान्तरा[15]त्तदवबोधस्य संभवेपि किमसावदृश्यः कारणकलापः कारणश[16]क्तिविशेषः[17], पुण्यपापविशेषो वा ? प्रथमपक्षे तत्सम्यगवगमनिमित्तकस्यापि पौरुषस्य व्यभिचारदर्शना[18]न्नामोघत्वसिद्धिः। द्वितीयपक्षे तु दैवसहायादेव पौरुषात् फलसिद्धिः, दैवसदवगमनिबन्धनादेव पौरुषादुपेयप्राप्तिव्यवस्थितेः। तदपरिज्ञानपूर्वका[19]दपि कदाचित्फलोपलब्धेश्च न सम्यगवबोधनिबन्धनः पौरुषैकान्तः। इत्यसौ परित्याज्य एव दैवैकान्तवत्।

विरोधान्नोभयैका[20]त्म्यं स्याद्वादन्यायविद्विषाम्।
अवाच्यतैकान्तेप्युक्तिर्नावाच्यमिति युज्यते ॥ ९० ॥

दैवेतरयोः सहैकान्ताभ्युपगमे व्याघातादवाच्यतायां च स्ववचनविरोधात् स्याद्वादनीतिः श्रेयसी तद्द्विषां प्रमाणविरुद्धाभिधायित्वात्। कीदृशी स्याद्वादनीतिरित[21]त्रेत्याहुः—

---

१ पौरुषाभावे। २ इष्टानिष्टयोः सुखदुःखयोर्वा। ३ न केवलं प्राक्तनदैवैकान्तो न श्रेयान् किंतु स्वयमप्रयतमानस्य सर्वमिष्टानिष्टमदृष्टमात्रादेवेतिपक्षसमुद्भूतोपि न निर्दोषः। ४ पौरुषमपि पौरुषादेवोत्पद्यते इति मतं चेत्तदा। ५ सर्वं कार्यं कृतं सत्सफलं भवेत्। ६ चार्वाकस्य। ७ चेत् स्यात्तर्हि। ८ पुण्यपापसामर्थ्या। ९ पौरुषे कृतेपि तत्फलप्राप्त्यविनाभावाभावं पश्यन्तः। १० चार्वाकस्य। ११ कृष्यादिकर्मणि। १२ तर्हि अदृष्टकारणकलापस्य सम्यगवबोधात्पौरुषं सफलं भवेदिति चार्वाकशङ्कायामाह। अदृष्टः अदृश्यतां प्राप्तः, स चासौ कारणकलापश्च। अयमेवार्थश्चार्वाकपक्षे ग्राह्यः। अदृष्टं पुण्यपापलक्षणं, तच्चासौ कारणकलापश्चेत्यर्थोपि संभवति, किंतु नासावर्थश्चार्वाकोक्तवचनस्य ग्राह्यः, तेन कर्मणोऽस्वीकारात्। १३ प्रत्यक्षेण। १४ अल्पज्ञानाम्। १५ अनुमानादेः। १६ अदृष्टशब्दस्य यदुपर्यर्थद्वयं दर्शितं तदेवात्र पक्षद्वयेन विचार्येते। १७ कस्यचित्कारणस्य शक्तिविशेष एव, किंतु चक्षुरादिना द्रष्टुमशक्यः। १८ तदुदाहरणं यथा, क्षीणायुष्के पुंसि औषधशक्तिसम्यगवगमनिमित्तकस्यापि तत्पानादिपौरुषस्य नोपयोगो भवतीति तत्र तद्व्यभिचारः स्वीकर्तव्यः। १९ पूर्वं, कारणम्। तच्छब्देन दैवं परामृशन्ति। वसे कृते पौरुषादित्यर्थो निष्पद्यते। २० दैवपौरुषैकान्तयोः पृथक्पृथक्कार्यापेक्षया ऐकात्म्यं मीमांसकैरभ्युपगतम्। २१ दैवेतरैकान्तयोः पक्षे।

अबुद्धिपूर्वापेक्षायामिष्टानिष्टं स्वदैवतः ।
बुद्धिपूर्वव्यपेक्षायामिष्टानिष्टं स्वपौरुषात् ॥ ९१ ॥

ततोऽतर्कितोपस्थितमनुकूलं प्रतिकूलं वा दैवकृतं, बुद्धिपूर्वापेक्षापायात् तत्र पुरुषकारस्याप्रधानत्वात् दैवस्य प्राधान्यात् । तद्विपरीतं पौरुषापादितं बुद्धिपूर्वव्यपेक्षानपायात्, तत्र दैवस्य गुणभावात् पौरुषस्य प्रधानभावात्, न पुनरन्यतरस्याभावात् अपेक्षाकृतत्वात्तद्व्यवस्थायाः । तथापेक्षानपाये परस्परं सहायत्वेनैव दैवपौरुषाभ्यामर्थसिद्धिः । इति स्यात्सर्वं दैवकृतमबुद्धिपूर्वापेक्षातः । स्यात् पौरुषकृतं बुद्धिपूर्वापेक्षातः स्यादुभयकृतं क्रमार्पिततद्द्वयात् । स्यादवक्तव्यं सहार्पिततद्द्वयात् । स्याद्दैवकृतावक्तव्यमबुद्धिपूर्वापेक्षया सहार्पिततद्द्वयात् । स्यात्पौरुषकृतावक्तव्यं बुद्धिपूर्वापेक्षया सहार्पिततद्द्वयात् । स्यात्तदुभयावक्तव्यमेव क्रमेतरार्पिततद्द्वयात् । इति सप्तभङ्गीप्रक्रिया पूर्ववत् ।

दैवैकान्तादिपांशुप्रसरनिरसनोद्भूतसामर्थ्यवृत्तिः,
सन्मार्गव्यापिनीयं पवनततिरिवाज्ञानखेदं हरन्ती ।
बन्धं प्रध्वंसमर्द्धां सँकलमपि बलादानयन्ती नितान्तं,
नीतिः स्याद्वादिनीर्द्धा दृगवगमभृतां निर्वृतिं वः प्रदेयात् ॥ १ ॥

इत्याप्तमीमांसालङ्कृतावष्टमः परिच्छेदः ।



१ अचिन्तितोपढौकितम् । २ तर्कितोपस्थितम् । ३ दैवपुरुषार्थयोर्मध्ये । ४ कुत ? तथा हि । तयो.—दैवपौरुषयोर्व्यवस्था अन्योन्यकृता यत । ५ इतरमङ्गावप्रकारेण । ६ झटिति । ७प्रकृतिस्थित्यनुभागप्रदेशा इति चतु प्रकार समस्तं कर्मबन्धम् । ८ इद्धा–वर्धमाना । ९ दृक्–सम्यग्दर्शनम्, अवगमो–ज्ञानं, चारित्रं तूपलक्षणतयात्र ग्राह्यम् । तत्त्रयधारकाणा निर्वृति –मोक्ष, ताम् ।

# अथ नवमः परिच्छेदः ।

सम्यगवबोधपूर्वं पौरुषमपसारिताखिलानर्थम् ।

दैवोपेतमभीष्टं सर्वं संपादयत्याशु ॥ १ ॥

पापं ध्रुवं परे[3] दुःखात् पुण्यं च सुखतो यदि ।

अचेतनाकषायौ च बध्येयातां निमित्ततः ॥ ९२ ॥

द्विविधं हि दैवं, पुण्यं पापं च प्राणिनामिष्टानिष्टसाधनमुक्तं, 'सद्वेद्यशुभायुर्नामगोत्राणि पुण्यम्, इतरत् पापम्, इति वचनात् । तदास्रवनिमित्तविप्रतिपत्तिविपत्त्यर्थमिदमुक्तम् । तत्र परसंताने दुःखहेतुः पुरुषः पापमात्मन्यास्रवयति सुखहेतुः पुण्यमिति[5] परत्र सुखदुःखोत्पादनात् पुण्यपापबन्धैकान्ते कथमचेतनाः क्षीरादयः कण्टकादयो वा न बध्येरन् ? परस्मिन् सुखदुःखयोरुत्पादनात् । चेतना एव बन्धार्हा इति चेत् तर्हि वीतरागाः कथं न बध्येरन्? तन्निमित्तत्वाद्बन्धस्य । तेषामभिसन्धेरभावान्न बन्ध इति चेत्तर्हि न परत्र सुखदुःखोत्पादनं पुण्यपापबन्धहेतुरित्येकान्तः संभवति ।

पुण्यं ध्रुवं स्वतो दुःखात्पापं च सुखतो यदि ।
वीतरागो मुनिर्विद्वांस्ताभ्यां युञ्ज्यान्निमित्ततः ॥ ९३ ॥

स्वस्मिन् दुःखोत्पादनात् पुण्य सुखोत्पादनात्तु पापमिति यदीष्यते तदा वीतरागो विद्वांश्च मुनिस्ताभ्यां पुण्यपापाभ्यामात्मानं युञ्ज्यान्निमित्तसद्भावात्, वीतरागस्य कायक्लेशा[11]दिरूपदुःखोत्पत्तेर्विदुषस्तत्त्वज्ञानसंतोषलक्षणसुखोत्पत्तेस्त[12]न्निमित्तत्वात् ।

स्यान्मतं–'स्वस्मिन् दुःखस्य सुखस्य चोत्पत्तावपि वीतरागस्य तत्त्वज्ञानवतस्तद[13]भिसंधेरभावान्न पुण्यपापाभ्या योगस्तस्य तदभिसंधिनिबन्धनत्वात्' इति तर्ह्यनेकान्त[14]सिद्धिरेवायाता । आत्मसुखदुःखाभ्यां पापेतरैकान्तकृता[15]न्ते पुनरकषायस्यापि ध्रुवमेव बन्धः स्यात् । ततो न कश्चिन्मोक्तुमर्हति, तदुभयाभावासंभवा[16]त् । नहि पुण्यपापोभयबन्धाभावासंभवे मुक्तिर्नाम[17], संसृतेरभावप्रसङ्गात् । ततो नैतावेकान्तौ संभाव्येते दृष्टेष्टविरुद्धत्वात् सदाद्येकान्तवत् ।

---

१ सम्यगवबोधपूर्वत्वादि पौरुषस्य किमिति चेद्विवृतमनन्तरमेव एतत्पद्यगतं सर्वमर्थजातम् । दैवस्यापि कारणत्वमस्तीति ससाध्य, तद्दैव पुण्यं पाप चेति द्विविधमपि कथमुत्पद्यते इत्यत्र विवादपरिहारं कुर्वन्त्याचार्या अनेनाधिकारेण । २ अचेतनास्तृणकण्टकाद्य क्षीरादयश्च यथाक्रम पापपुण्यबन्धका स्यु । अकषायो-वीतरागो मुनि , परस्य शिष्यादे सुखदु खकारक । यदा परं दीक्षयति तदा दु खकृत्, यदा च पर शिक्षयति तदा सुखकृत् । अत सोपि बध्येत, न च बध्यते । ३ अन्यत्र प्राणिनि दु खोत्पादनादित्यादिसबन्ध । ४ तयो —पुण्यपापयोरास्रव , तन्निमित्त किमिति या विप्रतिपत्ति ( सदेह ) तस्या विपत्तिर्विनाश , तदर्थम् । ५ एव तर्हि । ६ सुखदु खनिमित्तत्वात् । ७ अभिसधिर्मन सकल्प । ८ स्वस्मिन्निति स्वत । सार्वविभक्तिकस्तस् । ९ पुण्यपापाभ्याम् । १० स्वस्मिन् सुखदु खोत्पादनलक्षणनिमित्तसद्भावात् । ११ त्रिकालयोगाद्यनुष्ठानेन । १२ तयो —पुण्यपापयो । १३ तदभिसधि —सुखदु खयोरुत्पादाभिसधि ( आसक्तिरिच्छा वा ) । १४ अभिप्रायोपेतसुखदु खोत्पादकत्व पुण्यपापहेतुर्भवति, तदभावे न भवतीति । १५ कृतान्ते, सिद्धान्ते अङ्गीक्रियमाणे । १६ पुण्यपापयोरभाव कदाचिदपि न स्यादित्यर्थ. । १७ अन्यथा ।

विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषाम् ।
अवाच्यतैकान्तेप्युक्तिर्नावाच्यमिति युज्यते ॥ ९४ ॥

प्रस्तुतैकान्तद्वयसिद्धान्ते व्याहतेरनभिधेयतायामनभिधेयाभिधानविरोधात् कथंचिदेवेति युक्तम् । नहि स्वस्मिन्नन्यस्मिन्वा सुखात् दुःखाच्च पुण्यमेव पापमेव वा तदुभयमेव चेति वदतामव्याहतिः संभवति नापि तथाऽवाच्यतैकान्तेऽवाच्यमित्यभिधानमविरुद्धं, यतः स्याद्वादो न युक्तः स्यात् ।

कथं स्याद्वादे पुण्यपापास्रवः स्यादित्याहुः—

विशुद्धिसंक्लेशाङ्गं चेत् स्वपरस्थं सुखासुखम् ।
पुण्यपापास्रवो युक्तो न चेद्व्यर्थस्तवार्हतः ॥ ९५ ॥

आत्मनः परस्य वा सुखदुःखयोर्विशुद्धिसंक्लेशाङ्गयोरेव पुण्यपापास्रवहेतुत्वं, न चान्यथातिप्रसङ्गात् । विशुद्धिकारणस्य विशुद्धिकार्यस्य विशुद्धिस्वभावस्य वा विशुद्ध्यङ्गस्य, संक्लेशकारणस्य संक्लेशकार्यस्य संक्लेशस्वभावस्य वा सक्लेशाङ्गस्य च, सुखस्य दुःखस्य वा तदुभयस्य वा स्वपरोभयस्थस्य पुण्यास्रवहेतुत्वं पापास्रवहेतुत्वं च यथाक्रमं प्रतिपत्तव्यम् । न चान्यथा, यथोदितप्रकारेणातिप्रसङ्गस्येष्टविपरीतेपि पुण्यपापबन्धप्रसङ्गस्य दुर्निवारत्वात् । कः पुनः संक्लेशः का वा विशुद्धिरिति चेदुच्यते,—आर्तरौद्रध्यानपरिणामः संक्लेशस्तदभावो विशुद्धिरात्मनः स्वात्मन्यवस्थानम् । तत्रार्तध्यानं चतुर्विधं, 'आर्तममनोज्ञस्य संप्रयोगे तद्विप्रयोगाय स्मृतिसमन्वारो, विपरीतं मनोज्ञस्य, वेदनायाश्च, निदानं चे'ति सूत्रचतुष्टयेन तथा प्रतिपादनात् । रौद्रध्यानं चतुर्विधं, हिंसादिनिमित्तभेदात् 'हिंसानृतस्तेयविषयसंरक्षणेभ्यो रौद्रमि'त्यत्र सूत्रे प्रकाशनात् । 'मिथ्यादर्शनाविरतिप्रमादकषाययोगा बन्धहेतवः' त एव सक्लेशपरिणामा इति न विरुध्येते तेषामार्तरौद्रध्यानपरिणामकारणत्वेन संक्लेशाङ्गत्ववचनात्, तत्कार्यहिंसादिक्रियावत् । 'कायवाङ्मनःकर्म योगः' स आस्रवः, शुभः पुण्यस्याशुभः पापस्ये'त्यपि न विरुद्धं, कायादियोगस्यापि तत्कारणकार्यत्वेन सक्लेशत्वव्यवस्थितेः । एतेन तदभावे विशुद्धिः सम्यग्दर्शनादिहेतुः धर्म्यशुक्लध्यानस्वभावा तत्कार्यविशुद्धिपरिणामात्मिका च व्याख्याता, तस्यामेवात्मन्यवस्थानसंभवात् । तदेवं विवादाध्यासिताः कायादिक्रियाः स्वपरसुखदुःखहेतवः संक्लेशकारणकार्यस्वभावाः प्राणिनामशुभफलपुद्गलसंबन्धहेतवः संक्ले-

---

१ व्याहतिर्विरोध । २ अवाच्यतायां स्वीक्रियमाणायाम्, अवाच्यमिति वचनोच्चारणासभवात् । ३ विशुद्धिसक्लेशौ अङ्गं–कारणं यस्य ( सुखदु खस्य ) तत् । ४ यदि स्वपरस्थं सुखासुखं विशुद्धिसक्लेशाङ्गं न, न तर्हि तदास्रवः । व्यर्थ, फलविहीनत्वात् । ५ विशुद्धिसक्लेशाङ्गत्वाभावप्रसङ्गात् । ६ इत पदत्रयाणामपि ( षष्ठीसमास ) । ७—८ विशेष्यपदम् । तथापि 'सुखदु ख' पदयोर्विशेषणमेव । ९ उदितं तु प्राक् 'अचेताकषायौ, वीतरागो मुनि ' इति कारिकामध्ये । १० इष्टाचेतनाद्विपरीते अचेतने कण्टकादौ ( अकषाये च ) । ११ भावान्तरस्वभावो धर्मशुक्लध्यानरूप । १२ स्वस्वरूपे । १३ उमास्वामिकृते तत्त्वार्थसूत्रे एतानि सूत्राण्युक्तानि । क्रमेण चतुर्भि सूत्रैश्चतुर्भेदाना लक्षणमुच्यते । १४ सयोगे सति तद्वियोग कथं स्यादिति स्मृतिसमन्वाहारोऽसक्तचिन्ता । १५ मनोज्ञे=इष्टविषये वियुक्ते जाते तत्सयोगायासक्तचिन्ता तद्द्वितीयमार्तध्यानम् । १६ वेदनोपस्थितौ तद्दु खानुभवस्तृतीयम् । १७ अप्राप्तैश्वर्यप्राप्तिसकल्पो निदानं चतुर्थम् । १८ सक्लेशाङ्गस्य परिणामस्य बन्धहेतुत्व भवद्भिरुक्तं सूत्रकारैरुमास्वामिभिरागमे तावन्मिथ्यादर्शनादीना बन्धहेतुत्वं प्रोक्तमिति परस्पर विरोध कथ न भवेदित्याशङ्कायामाह । १९ 'इत्यपि न विरुध्यते' इत्यपि पाठ । २० 'परिणामत्वेन' इति पाठान्तरम् । २१ तत्कार्य–सक्लेशाङ्गकार्य, तच्चासौ हिंसादिक्रिया च, तद्वत् । २२ सक्लेशाङ्ग पापास्रव उक्त । तथा चाशुभकार्यादिव्यापारस्य पापास्रवहेतुत्वं प्रतिपादयदिद सूत्रं विरुद्धमिति चेदाह । २३ तत्कार्यं चासौ विशुद्धिपरिणामश्च, स एवात्मा यस्या सा २४ विशुद्धौ सत्यामेव । २५ सक्लेशाङ्गविशुद्ध्यङ्गशब्दग्राह्यं तत्कारणकार्यस्वभावविषयं मत्त्वा विरोध परिहृतो यत । २६ बहुव्रीहितया पूर्वपदस्य विशेषणमिदम् । पुरस्तादपि विशेषणान्येव ।

शाङ्गत्वाद्विषभक्षणादिकायादिक्रियावत्[1] । तथा विवादापन्नाः कायादिक्रियाः स्वपरसुखदुःखहेतवो विशुद्धिकारणकार्यस्वरूपाः[2] प्राणिनां शुभफलपुद्गलसंबन्धहेतवो, विशुद्ध्यङ्गत्वात् पथ्याहारादिकायादिक्रियावत् । ये[3] शुभाशुभफलपुद्गलास्ते पुण्यं पापं च कर्मानेकविधम् । इति संक्षेपात्सकलशुभाशुभकर्मास्रवबन्धकारणं सूचितं भवति, विस्तरतस्तस्यास्रवबन्धाध्याये सुनिरूपितत्वात् । ततः स्यात् स्वपरस्थ सुखदुःखं पुण्यास्रवहेतुर्विशुद्ध्यङ्गत्वात् । स्यात् पापास्रवहेतुः, सक्लेशाङ्गत्वात् । स्यादुभयं, क्रमार्पिततद्द्वयात् । स्यादवक्तव्यं, सहार्पिततद्द्वयात् । स्यात् पुण्यहेतुरवक्तव्यं च, स्यात्पापहेतुरवक्तव्यं च, स्यादुभयं चावक्तव्यं च, स्वहेतुविषयात् । इति सप्तभङ्गीप्रक्रिया पूर्ववद्योजनीया ।

न किंचित्पापाय प्रभवति न वा पुण्यततये,
प्रवृद्धेद्धां शुद्धिं समधिवसतो ध्वंसविधुराम् ।
भवेत् पुण्यायैवाखिलमपि विशुद्ध्यङ्गमेपरं
मतं पापायैवेत्युदितमवताद्वो मुनिपतेः ॥ १ ॥

इत्याप्तमीमांसालङ्कृतौ नवमः परिच्छेदः ।



१ एता क्रिया यथाऽशुभफलदायिना पुद्गलाना सबन्धकारणानि भवन्ति, तद्वत् । २ सत्य । ३ अनेन ( पूर्वोक्तेन ) शुभाशुभकर्मपुद्गलसिद्धिरेव स्यान्नतु पुण्यपापकर्मसिद्धिरित्याशङ्क्याह । ४ आस्रवकारणस्य । ५ तत्त्वार्थशास्त्रे । ६ विशुद्ध्यङ्गत्वे सहार्पिततद्द्वयात् । ७ सक्लेशाङ्गत्वे सहार्पिततद्द्वयात् । ८ क्रमेण विशुद्धिसक्लेशाङ्गत्वेपि अक्रमेण सहार्पिततद्द्वयात् । ९ सुखं दुःख च । १० क्षायिकलक्षणाम् । ११ अविनश्वरीम् । १२ विशुद्ध्यङ्गादन्यत्—सक्लेशाङ्गम् । १३ स्वीकृतम् । १४ वचनम् ।

# अथ दशमः परिच्छेदः ।

श्रीमदकलङ्कविवृतां समन्तभद्रोक्तिमत्र संक्षेपात् ।
परमागमार्थविषयामष्टसहस्री प्रकाशयति ॥

अज्ञा[1]नाच्चेद्ध्रुवो बन्धो ज्ञेयानन्त्यान्न केवली[2] ।
ज्ञानस्तोकाद्विमोक्षश्चेदज्ञानाद्बहुतोन्यथा[3] ॥ ९६ ॥

प्रसज्य[4]प्रतिषेधे ज्ञानस्याभावोऽज्ञानं, पर्युदासे ततोन्यन्मिथ्याज्ञानमज्ञानम् । तत्र[5] यदि ज्ञानाभावाद् ध्रुवोवश्यंभावीबन्धः स्यात्तदा केवली न कश्चित्स्यात् । सकलवि[6]पर्ययरहितं तत्त्वज्ञानमसहायं[7] केवलम्, एव[8] तत्त्वाभ्यासान्नास्मिन्[9] मे नाहमित्यपरिशेषम्[10] । अविपर्ययाद् विशुद्धं केवलमुत्पद्यते ज्ञानमि'ति वचनात्[11] । तद्योगात्केवलीत्युच्यते[12] । स कथं[13] न स्यादिति चेत्, तदुत्पत्तेः पूर्वमशेषज्ञानाभावात्, करणजविज्ञानस्यातीन्द्रियार्थाविषयत्वादनुमानस्य चात्यन्तं परोक्षार्थागोचरत्वादागमस्यापि सामान्यतो[14]ऽविशेषार्थ[15]विषयत्वादयोगिनामशेषविशेषविषयज्ञानविरोधात् । न चाक्षलिङ्ग[16]शब्दज्ञानपरिच्छेद्य एवार्थस्ततोऽपरो[17] नास्तीति शक्यं वक्तु, ज्ञेयस्यानन्त्यात्, प्रकृ[18]तिविवर्त[19]विशेषाणां पुरुषाणां चानन्ततोपगमात्[20] ।

स्यान्मतं[21],– 'प्रकृतिपुरुषविवेकज्ञानो[22]देवागमबलभाविनः स्तोकादपि तत्त्वाभ्यासस्वात्मभावात् केवलज्ञानभृद्[23]भवेत् । स एव च तस्य[24] विमोक्षः पुनः संसाराभावादनागतबन्धनिरोधात्' इति तदप्ययुक्तं, स्तोकज्ञानापेक्षया बहोरज्ञानाद्बन्धस्य प्रसङ्गादेष्यद्बन्धरोधासंभवाद् विमोक्षानुपपत्तेः । अथ तत्त्वज्ञानेन स्तोकेना[25]पि बहोरज्ञानस्य प्रतिहतशक्तिकत्वान्न तन्निबन्धनो बन्धः सभवतीति मतं तदप्यसत्, प्रतिज्ञातविरोधात् । यत् खलु प्रतिज्ञातमज्ञानाद् ध्रुवो बन्ध इति तद्विरुध्यते । अथाखिलज्ञाना[26]भावादज्ञानादवश्यंभावी बन्धो न ज्ञानस्तोकमिश्रणा[27]दिति मतं तदप्यसम्यक्, [28]सर्वदा बन्धाभावप्रसङ्गात् सर्वस्य प्राणिनः किंचिज्ज्ञानसंभवान्मुक्तौ बन्धप्रसक्तेश्च, तत्र[29] सकलज्ञानाभावस्य बन्धहेतोः संभवात्, अ[30]संप्रज्ञातयोगावस्थायां च तदा द्रष्टुः

१ विशेष्यपदमिदम् । २ साङ्ख्यमतमुद्दिश्य वक्ति । ३ अन्यथा–बन्धप्राप्तिः स्यादित्यर्थो मूलापेक्षया । यदि पुनरित्यादि-सुखप्राप्तिरित्येतत्पर्यन्तवक्ष्यमाणभाष्यार्थापेक्षया 'अन्यथा'शब्दस्य सुतरामित्यर्थो ग्राह्य । ४ नञर्थौ प्रसज्यपर्युदासभेदाद् द्वौ । तत्र प्रसज्यप्रतिषेध सर्वथा तदभावबोधक , पर्युदासस्तु तन्निषेधपूर्वकं तत्सदृग्ग्राही भवति । एतदेवार्थद्वयमाश्रित्य क्रमेणाह । ५ द्वयो पक्षयोर्मध्ये प्रथमपक्षे । ६ सशयविपर्ययानध्यवसायरहितम् । ७ ज्ञानान्तरसाहाय्यरहितम् । ८ वक्ष्यमाणप्रकारेण । ९ अस्मिन् जगति न मे किंचन । १० परिशेषरहित यथा भवति । क्रियाविशेषणम् । ११ महाग्रन्थे प्रतिपादनात् । १२ साङ्ख्येन । १३ 'कुत ' इति कपुस्तके । १४ न विशेषात् । १५–'ऽशेषा'–इति पाठ । १६ प्रत्यक्षानुमानागमास्त्रीण्येव प्रमाणानि साङ्ख्यमते । १७ सूक्ष्मान्तरितादि । १८ ज्ञेयस्यानन्तता नास्तीत्यपि न वक्तु शक्यमित्यर्थ । १९ परिणामभेदानाम् । २० तव साङ्ख्यस्याप्यङ्गीकारात् । २१ साङ्ख्यस्य । २२ एतद्विशेष्यपदं, पुरस्तात्तु त्रीणि विशेषणपदानि । २३ पुरुष । २४ पुरुषस्य । २५ प्रकृतिपुरुषभेदपरिज्ञानमात्रेण । २६ बहुव्रीहिरुत्तरस्य विशेषणम् । २७ अज्ञानात् । २८ 'एव सति अज्ञानाद्बन्ध इत्येतन्न सम्यग्घटते', इति प्रतिज्ञाय एतद्वाक्यार्थमग्रेतनं हेतुद्वयं ज्ञातव्यम् । २९ तत्र बन्धप्रसक्तौ हेतुमाह । ३० कुतो मुक्तौ सकलज्ञानाभाव इति प्रश्ने उत्तरमिदम् । मुक्तावसंप्रज्ञातयोगो नाम निरालम्बनध्यानं साक्षात्परममोक्षहेतु साङ्ख्यमतेभिमत ।

स्वरूपेवस्थानमिति वचनात्। [1]स्वरूपं च पुंसश्चैतन्यमात्र सकलज्ञानरहितम्[2]। इति मोक्षहेतुरेव[3] बन्धहेतुः स्यात्। यदि पुनस्तत्त्वज्ञानस्य प्रागभावाद्बन्धो[4] न प्रध्वंसाभावादिति[5] मत तदा समाविर्भूततत्त्वज्ञानस्य कस्यचित् कुतश्चिद्विपर्ययज्ञानकारणादन्तरङ्गाद्बहिरङ्गाद्वा[6] विपर्ययज्ञानोत्पत्तौ तत्त्वज्ञानप्रध्वंसाद्बन्धः कथं युज्येत ? स्यान्मतं,—सकलतत्त्वज्ञानोत्पत्तौ निःशेषमिथ्याज्ञाननिवृत्तेरसम्प्रज्ञातयोगोत्पत्तौ तु तत्त्वज्ञानस्यापि नाशादशेषज्ञानाभावाख्यादज्ञानान्मोक्ष एव, ततोन्यस्मात्[7] सम्यग्ज्ञानप्रागभावप्रध्वंसरूपाद्बन्ध एवेति तदप्यसाधीयः, केवल्यभावप्रसङ्गस्याभिधानात्[8]। स्तोकतत्त्वज्ञानाप्रतिबद्धात्तथाविधादज्ञानाद्बन्ध[9][10] इत्यपि विरुद्धं, प्रवर्तकधर्महेतोः[11] स्तोकतत्त्वज्ञानात्प्रतिहताशेषाज्ञानशक्तिकात्[12] पुण्यबन्धाभावानुषङ्गात्। ततो ज्ञानाभावलक्षणादज्ञानान्नावश्यंभावी बन्ध इति पक्षः क्षेमंकरः स्तोकतत्त्वज्ञानान्मोक्ष इति पक्षवत्।

अथ[13] मिथ्याज्ञानलक्षणादज्ञानाद् ध्रुवो बन्धः स्यात्, 'धर्मेण गमनमूर्ध्वं[14] गमनमधस्ताद्भवत्यधर्मेण। ज्ञानेन चापवर्गो विपर्ययादिष्यते बन्ध' इति वचनात्[15]। विपर्ययो मिथ्याज्ञानं सहजमाहार्यं[16] चानेकविधमित्यभिमत तदप्यसत्यं, केवल्यभावप्रसक्तेः, समयान्तरश्रवणजनितानेकविधाहार्यविपर्ययस्य[17] सांख्यागमभावनाबलोद्भूततत्त्वज्ञानाद्विनाशेपि सहजस्य विपर्ययस्यानिवृत्तेः। केवलज्ञानात् प्राग् बन्धस्यावश्यभावाच्चन्निर्बन्धनमिथ्याज्ञानान्तरोद्भूतेः[18] केवलोद्भूतिविरोधात्। न चागमबलात्सकलतत्त्वज्ञानाविर्भूतिरुपपद्यते, ज्ञेयस्य विशेषतोनन्तत्वादागमाविषयत्वादनुमानाद्यविषयत्ववत्[19][20], यतः कृत्स्नमिथ्याज्ञाननिवृत्तेः केवलाविर्भावः संभाव्यते। स्तोकतत्त्वज्ञानान्मोक्ष इत्यप्यनेन निराकृतं, बहुतो मिथ्याज्ञानाद्बन्धस्य प्रसक्तेः। स्तोकतत्त्वज्ञानप्रतिहतत्वाद्बहुतो मिथ्याज्ञानान्न बन्ध इति चेत्कथमेव मिथ्याज्ञानाद्ध्रुवो बन्धः स्यात् ? कथं वा स्तोकतत्त्वज्ञानात् प्रवर्तकधर्मनिबन्धनात्पुण्यबन्धः ? इति दुरवबोधम्। एतेनान्त्यमिथ्याज्ञानान्न[21] बन्ध इत्येतदप्यपास्तं, प्रतिज्ञातविरोधाविशेषात्। रागादिदोषसहितान्मिथ्याज्ञानाद्बन्धो निर्दोषान्न बन्ध इत्यपि प्रतिज्ञातविरोधि कापिलाना, वैराग्यसहितात्तत्त्वज्ञानान्मोक्षवचनवत्[22]।

एतेनैतदपि प्रत्याख्यातं, यदुक्तं, परेण[23] 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावान्निःश्रेयस'[24] इति, मिथ्याज्ञानादवश्यं दोषोद्भूतौ दोषाच्च प्रवृत्तेर्धर्माधर्मसंज्ञिकायाः प्रादुर्भावे, ततोपि जन्मनः प्रसूतौ, ततोपि दुःखस्यैकविंशतिप्रकारस्य[26] प्रसवे, केवलिनः साक्षादशेषतत्त्वज्ञानवतोसत्त्वप्रसङ्गात्[25],

---

१ नन्वनेन स्वरूपेवस्थानमेव निरूपितं, न तत सकलज्ञानराहित्यमित्याशङ्कायामाह। २ ज्ञानं—बुद्धि तच्च प्रकृतिपरिणामात्मकं चेतनात्जीवाद्भिन्नम्। तस्य हि मुक्तावभावे सकलज्ञानाभाव सुघट। अत एव च मोक्षे बन्धप्रसक्तिरारोपिता, ज्ञानाभावस्य बन्धकारणत्वप्रतिज्ञानात्। ३ ज्ञानाभावरूपस्य चैतन्यस्वरूपावाप्तेर्मोक्षहेतुत्वं तु ध्यानरूपत्वात्, बन्धहेतुत्व च, जडरूपत्वात्। ४ स च ससारावस्थायाम्। ५ अयं तु मोक्षावस्थायाम्। ६ अन्तरङ्गं पापकर्म, बहिरङ्गं तु काचादिदोष। ७ कतिपयार्थज्ञानाभावरूपात्। ८ भाविकेवलिनश्छद्मस्थावस्थाया कतिपयज्ञानाभावरूपस्याज्ञानस्य सम्यग्ज्ञानप्रागभावप्रध्वंसरूपस्य सभवात्। ९ अप्रतिहतात्। १० सम्यग्ज्ञानप्रागभावप्रध्वंसरूपात्। ११ पुण्यस्य। १२ आगमात्। विशेष्यपदमिदमन्यानि विशेषणानि। १३ नञर्थस्य द्वितीयपक्षे। १४ स्वर्ग प्रति। १५ ईश्वरकृष्णकृतसाख्यतत्त्वकारिकाग्रन्थस्य। १६ जाततैमिरिके परिणामादिनिमित्तवशाज्जातम्। १७ केवल्यसभूतौ हेतु। समय —सिद्धान्त। १८ स—बन्धो निबन्धनं यस्य, तच्च तत् मिथ्याज्ञान च। इद हि मिथ्याज्ञानं यथा, शुक्तिकाया रजतज्ञान मरीचिकादौ जलज्ञानादि च। १९ आगमस्य तथा विशेषाविषयत्वात्। २० अनुमानस्यापि सर्वे विशेषतया न गोचरीभवति। २१ मिथ्याज्ञानं द्वेधा, सदोष निर्दोषं च। २२ एवं वचने सति वैराग्यरहितात्तत्त्वज्ञानान्मोक्ष इत्युक्तं न स्यात् तथा वचनमिदं वैराग्यसहितात्तत्त्वज्ञानान्मोक्ष इत्येतद् ज्ञानस्तोकान्मोक्ष इति प्रतिज्ञातेन विरोधि यथा तथा प्रकृतमपीति भाव। २३ नैयायिकेन। २४ 'पायादपवर्ग' इति सूत्रपाठोधुना न्यायदर्शने उपलभ्यते। न्यायदर्शनस्य आरम्भे द्वितीय सूत्रमिदम्। २५ दु खादीनामभावस्य तत्त्वज्ञाननिबन्धनत्वात्, तच्च सकलतत्त्वज्ञानं नास्ति नैयायिकानामत प्रकृतं मिथ्याज्ञानमेव स्थितमिति तात्पर्यम्। २६ ससर्ग. सुखदु खे च तथार्थेन्द्रियबुद्धय। प्रत्येकं षड्विधा ख्याता दु खसौख्यैकविंशति।

अस्मदादि[1]प्रत्यक्षानुमानोपमानागमैः प्रमाणैः सकलतत्त्वज्ञानासंभवान्निःशेषमिथ्याज्ञाननिवृत्त्ययोगात्[2] सकलज्ञेयविशेषाणामानन्त्यात्[3], सोयं प्रमाणार्थोऽपरिसंख्येयः प्रमाणभृ[4]द्भेदस्यापरिसंख्येयत्वा[5]दिति स्वयमभिधानात्। न च मिथ्याज्ञानस्य कार्त्स्न्येनानिवृत्तौ सकलदोषनिवृत्तिः। तदनिवृत्तौ च न प्रवृत्तिनिवृत्तिः। तदनपाये च न जन्मनोऽपायः। ततो नाशेषदुःखापायश्च। इति [6]गता निःश्रेयसकथा। यदि पुनरात्माद्यपवर्गपर्य[7]न्तप्रमेयतत्त्वज्ञानादपर[8]निःश्रेयसप्राप्तिरिष्यते[9] न पुनः प्रमाणादिषोडशपदार्थविशेषतत्त्वज्ञानाद् येन ज्ञानस्तोका[10]देव विमोक्षसिद्धेः केवली न स्यादिति मतं तदा बहोर्मिथ्याज्ञानाद्बन्धः किं न भवेत्? तत्त्वज्ञानेन तस्य प्रतिहतत्वादिति चेत्, [11]कथमेवं मिथ्याज्ञानाद् ध्रुवो बन्धः स्यादित्युक्तम्? दोषसहितान्मिथ्याज्ञानाद्बन्ध इति चानेन निराकृतं, योगि[12]ज्ञाना[13]त् प्राग्दोषानिवृत्तेस्तत्कारणमिथ्याज्ञानसंततेः संभवात्। एतेन[14] वैशेषिकमतमपास्तम् 'इच्छाद्वेषाभ्यां बन्ध' इति, केवल्यभा[15]वाविशेषात्।

'[16]अविद्यातृष्णाभ्यां बन्धोवश्यंभावी। दुःखे विपर्यासम[17]तिस्तृष्णा वा बन्धकारणम्। जन्मिनो यस्य ते न स्तो न स जन्मा[18]धिगच्छति।' इति ताथागतमतमपि न सम्यक्, योगिज्ञानाभावप्रसङ्गात्। [19]अयोगिनः प्रत्यक्षा[20]नुमानाभ्यामखिलतत्त्वज्ञानरूपाया विद्याया एवायोगात् तद्विशेषज्ञेयस्यानन्त्यात् स्वय'मनन्ता लोकधातवः[21]' इति वचनात्। न चाविद्यानुच्छेदे तृष्णा निवर्तते यतः सुगतः स्यात्। अथ ज्ञानस्तोकाद्विमोक्ष इष्यते, हेयोपादेयतत्त्वस्य साभ्युपायस्य[22] वेदकैः[23] सुगत इति वचनात्। तर्हि बहुतो मिथ्याज्ञानाद्बन्धः सिध्यतु, तन्निबन्धनतृष्णाया अपि संभवात्। कथमन्यथा मिथ्यावबोधतृष्णाभ्यामवश्यंभावी बन्ध इति प्रतिज्ञा न विरुध्यते?

एतेनैतदपि प्रत्याख्यातं यदुक्तं वृद्धबौद्धैः 'अविद्याप्रत्ययाः संस्काराः संस्कारप्रत्ययं विज्ञानं ज्ञानप्रत्ययं नामरूपं नामरूपप्रत्ययं षडायतनं षडायतनप्रत्ययः स्पर्शः स्पर्शप्रत्यया वेदना वेदनाप्रत्यया तृष्णा तृष्णाप्रत्ययमुपादानमुपादानप्रत्ययो भवो भवप्रत्यया जा[24]तिर्जातिप्रत्ययं जरामरणम्' इति द्वादशाङ्ग[25] प्रतीत्य[26] समुत्पादस्य[27] संभवात्, क्षणिकनिरात्मकाशुचिदुःखेषु तद्वि[28]परीतज्ञानलक्षणाविद्योदये[29] क्वचि[30]दपि ज्ञेये तत्प्रत्ययसंस्काराणां पुण्यापुण्यानेज्यप्रकाराणां शुभा[31]शुभानुभयविषयाणामवश्यंभावात्, तद्भावे च वस्तुप्रतिविज्ञप्तिलक्षणविज्ञानस्य विकल्पात्मनः संभवात्, तत्संभवे च विज्ञानसमुद्भूतरूपवेदनासंज्ञासंस्कारज्ञानलक्षणनामपृथिव्यादिभूतचतुष्टयात्मकरूपसमुदायलक्षणस्य नामरूपस्य[32] सिद्धेः, तत्सिद्धौ च चक्षु[33]रादिषडाय-

---

१ नैयायिकाभिमतान्येतान्येव प्रमाणानि। अस्मच्छब्देन तुच्छत्वं सूच्यते। एतानि, अस्मदाद्यल्पप्रयोजनसाधकानि। एभि सकलतत्त्वज्ञान न सभवेत्। २ कुत इत्याह। ३ तेषु मध्ये सूक्ष्मादीनामस्मदादिप्रत्यक्षाद्यविषयत्वादित्यर्थ। ४ प्रमाणभृज्जीव। ५ अनन्तत्वात्। ६ नष्टा। ७ आत्मशरीरेन्द्रियार्थबुद्धिमन प्रवृत्तिदोषप्रेत्यभावफलदु खापवर्गा प्रमेयम्। ८ मुक्तिर्द्विधा परापरभेदात्। अपरमुक्ति कैवल्यप्राप्तिपूर्विका सशरीरा स्थिति। सकलकर्मनिवृत्तौ शरीरविनाशे निरञ्जनरूपेण सिद्धात्मना स्थिति. परमुक्ति। ९ नैयायिकैः। १० परमुक्तिकारणात्। ११ तत्त्वज्ञानेन तस्य प्रतिहतत्वाद्बन्धो नेत्येवंप्रकारेण। १२ ननु दोषसहितान्मिथ्याज्ञानाद्बन्ध एव नास्ति तत्कथं तन्निराकरणं शोभेत इत्युक्ते आह। १३ दोषसहितान्मिथ्याज्ञानाद्बन्ध इत्युक्ते योगिज्ञानात्प्राक्कदाचनापि दोषनिवृत्तेरसभवाद्दोषसहितमिथ्याज्ञानस्य सदानुपरतिरेव। ततश्च कैवल्याभाव एव स्यादिति भाव। १४ योगिज्ञानादिति ग्रन्थेन। १५ योगिज्ञानात्प्रागिच्छाद्वेषयोरनिवृत्तेस्तत्कारणमिथ्याज्ञानसन्तते. सदा सद्भावात्। १६ सौगत। १७ अविद्यापि सैव। १८ ससारम्। १९ अस्मदादे। २० एते द्वे एव प्रमाणे सौगतानामभिमते। २१ उत्पादकादिकारणानि। २२ सकारणस्य। २३ अत स केवली। २४ जाति जन्म। २५ द्वादशकारणम्। २६ आश्रित्य। २७ ससारस्य। २८ तस्मात् क्षणिकनिरात्मकाशुचिदु खरूपाद्विपरीतता अक्षणिकसात्मकशुचिसुखरूपता। २९ सति। ३० ससारिशरीरे। ३१ प्रशस्ताप्रशस्तौदासीन्यरूपाणाम्। ३२ रूपवेदनासंज्ञासस्कारचतुष्टय नाम, पृथिव्यादिचतुष्टयं रूपम्। ३३ चक्षु श्रोत्रघ्राणस्पर्शनरसनमनासि षडायतनम्।

तनस्यात्मकृत्यक्रियाप्रवृत्तिहेतोः प्रसूतेः, तत्प्रसूतौ च तद्धेतूनां षण्णां स्पर्शकायानां रूपं चक्षुषा पश्यामीत्यादिविषयेन्द्रियविज्ञानसमूहलक्षणानां प्रादुर्भावात् तत्प्रादुर्भावे स्पर्शानुभवलक्षणाया वेदनायाः सद्भावात्, तत्सद्भावे च विषयाध्यवसानलक्षणतृष्णायाः समुत्पादात्,तत्समुत्पादे तृष्णावैपुल्यलक्षणस्योपादानस्योदयात्, तदुदये च पुनर्भवजनककर्मलक्षणभवस्य भावात्, तद्भावे चापूर्वस्कन्धप्रादुर्भावलक्षणाया जातेरुत्पादात्, तदुत्पत्तौ च स्कन्धपरिपाकप्रध्वसलक्षणजरामरणसद्भावात् केवलिनः कस्यचित्सुगतस्यासम्भवप्रसङ्गात् अन्यथा प्रतिज्ञातविरोधात्। ततः सूक्तं, यदि बन्धोयमज्ञानान्नेदानीं कश्चिन्मुच्यते, सर्वस्यैव क्वचिदज्ञानोपपत्तेर्ज्ञेयानन्त्यादिति केवलिनः प्राक् सर्वज्ञासम्भवात्। यदि पुनर्ज्ञाननिर्ह्रासो दुःखप्राप्तिरज्ञानात् सुतरां प्रसज्येत, दुःखनिवृत्तेरिव सुखप्राप्तिः। न ह्यल्पदुःखनिवृत्तेः सुखप्राप्तौ बहुतरदुःखनिवृत्तौ सुतरां सुखप्राप्तिरसिद्धा, येन ज्ञानहानेरल्पायाः परब्रह्मप्राप्तौ सकलाज्ञानात्तत्प्राप्तिः सुतरां न स्यात्। ततो नायमेकान्तः श्रेयानाभासते ज्ञानस्तोकान्मोक्ष इति, अज्ञानाद् ध्रुवो बन्ध इत्येकान्तवत्।

विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषाम्।

अवाच्यतैकान्तेऽप्युक्तिर्नावाच्यमिति युज्यते ॥ ९७ ॥

न हि सर्वात्मनैकस्यैकदा ज्ञानस्तोकान्मोक्षो बहुतश्चाज्ञानाद्बन्ध इत्येकान्तयोरविरोधः स्याद्वादन्यायविद्विषां सिध्यति, येन तदुभयैकात्म्यं स्यात्। तथाऽवाच्यतैकान्ते स्ववचनविरोधः पूर्ववत्।

कुतस्तर्हि पुण्यपापबन्धः प्राणिनां येनाबुद्धिपूर्वापेक्षायामिष्टानिष्टं स्वदैवतः स्यात्? कुतो वा मोक्षो मुनेर्यतः पौरुषादिष्टसिद्धिर्बुद्धिपूर्वा स्यात्? चार्वाकमतमेव वा 'बन्धमोक्षाभाव एव परलोकाभावा'दिति न भवेत्? इत्यारेका निराचिकीर्षवः प्राहुः—

अज्ञानान्मोहिनो बन्धो नाज्ञानाद् वीतमोहतः।

ज्ञानस्तोकाच्च मोक्षः स्यादमोहान्मोहिनोऽन्यथा ॥ ९८ ॥

मोहनीयकर्मप्रकृतिलक्षणादज्ञानाद्युक्तः कर्मबन्धः स्थित्यनुभागाख्यः स्वफलदानसमर्थः, क्रोधादिकषायैकार्थसमवायिनो मिथ्याज्ञानस्य च अज्ञानस्य च मोहनीयकर्मप्रकृतिं लक्षयतः पुंसो बन्धनिबन्धनत्वोपपत्तेः 'सकषायत्वाज्जीवः कर्मणो योग्यान्पुद्गलानादत्ते स बन्ध' इति वचनात्, ततोऽन्यतोपि बन्धा-

१ आत्मनः कर्तुं योग्या, सा चासौ क्रिया च, तस्याः प्रवृत्तिस्तस्या हेतुर्यस्तस्य। २ विषयाध्यवसानमाकाङ्क्षारूपं ज्ञानम्। ३ तत्तत्पदार्थग्रहणार्था प्रवृत्तिः। ४ पुनरुत्पत्तिजनकं च तत्कर्म च, तदेव लक्षणं यस्य (संसारस्य)। ५ मनुष्यादिदेहप्रादुर्भावस्य जीर्णता तत्प्रध्वसः। ६ द्वादशाङ्गं प्रतीत्य संसारस्य सम्भवो न स्याद्यदि। ७ अविद्यातृष्णाभ्यां बन्ध इति, द्वादशाङ्गद्वारकः समुत्पादः (संसारः) इति च यत्प्रतिज्ञातम्। ८ केवली न स्याद्यतः। ९ कारिकापरभागं विवृण्वन्नाह। १० ज्ञानमत्र इन्द्रियज्ञानम्। ११ स्तोकज्ञानाभावादित्यर्थः। १२ ब्रह्म—मोक्षः। १३ तर्हीति शेषः। १४ अनेन दृष्टान्तं समर्थयन्ति। १५ इन्द्रियजरूपायाः। १६ न भवेदिति उत्तरेण सम्बन्धनीयम्। १७ मोहसहितात्। १८ मोहरहिताज्ज्ञानस्तोकादपि मोक्षः स्यात्, मोहसद्भावे तु तथा न स्यादिति भावः। १९ बन्धश्चतुर्धा स्थित्यनुभागप्रकृतिप्रदेशभेदात्। तत्रान्त्यौ योगादात्मप्रदेशपरिस्पन्दलक्षणाद्भवतः, स्थित्यनुभागौ तु कषायतः सम्भवतः। योगनिमित्तेषु द्विधाकर्मसु नास्ति विशेषसामर्थ्यं, कषायनिमित्तककर्मस्वभावसद्भावे एव तयोरुपयोगात्। अत एव कषायस्य बन्धकारणत्वं प्राधान्यापेक्षयोक्तं, स्वफलदानसमर्थत्वं च तन्निमित्तकस्यैव प्रतिपादितम्। २० क्रोधादिकषायसंयुक्तस्य। २१ एकस्मिन्नेवात्मलक्षणेऽर्थे कषायेण सह समवायो वर्तते अतो मिथ्याज्ञानं यत्तदेवाज्ञानं जायते। २२ ज्ञापयतः। २३ मिथ्याज्ञानं पुंसो बन्धकारणमित्येव तात्पर्यार्थः। २४ मोहापेक्षां विना केवलादज्ञानाज्ज्ञानाभावरूपादेव बन्धस्वीकारे सति योऽतिप्रसङ्गः स पुरस्ताद्विद्यानन्दैरेव प्रदर्शितः।

भ्युपगमेतिप्रसङ्गात्, क्षीणोपशान्त[1]कषायस्याप्यज्ञानाद्बन्धप्रसक्तेः । [2]प्रकृतिप्रदेशबन्धस्तस्याप्यस्तीति चेन्न, तस्याभिमतेतरफलदानासमर्थत्वात् सयोगके[3]वलिन्यपि संभवादविवादापन्नत्वात्। न चात्रागममात्रं, युक्तेरपि सद्भावात् । तथा हि, विवादापन्नः प्राणिनामिष्टानिष्टफलदानसमर्थपुद्गलविशेषसंबन्धः कषायैकार्थसमवेताज्ञाननिबन्धनस्तथा[4]त्वात्पथ्येतराहारादिसंब[5]न्धवत् ।

नात्र प्रतिज्ञार्थैकदेशत्वादसिद्धो हेतुर्धर्मि[6]णानेकान्तात्, तस्य[7] प्रतिज्ञार्थधार्मिधर्मसमूहैकदेशत्वेपि प्रसिद्धत्ववचनात्, अनित्यः[8] शब्दः शब्दत्वादित्यत्रापि हेतोरसिद्धत्वविरोधात् । न चात्र विशेषं धर्मिणं[9] कृत्वा सामान्यं हेतुं ब्रुवतः कश्चिद्दोषः, प्रयत्नानन्तरीयकः शब्दो विनश्वरः, प्रयत्नानन्तरीयकत्वाद् घटवदिति यथा । न[10]नु शब्दस्य[11] धर्मित्वे प[12]क्षाव्यापको हेतुः स्यात्, समुद्रघोषादेः प्रयत्नानन्तरीयकत्वाभावात् । त[13]तोत्र प्रयत्नानन्तरीयकः शब्दो विशिष्टो धर्मीति चेत्तर्हि प्राणिनां पुद्गलविशेषसंबन्धस्य धर्मित्वे तथात्वस्य च हेतुत्वे दृष्टान्तासिद्धि[14]प्रसक्तेः प्रकृतिप्रदेशबन्धाभ्यामनैकान्ति[15]कत्वप्रसङ्गाच्च विवादापन्नत्वविशेषणमिष्टानिष्टफलदानसमर्थत्वविशेषणं च युक्तम्, इष्टानिष्टफलदानसमर्थपुद्गलविशेषसंबन्धत्वस्य हेतोः कषायैकार्थसमवेताज्ञाननिबन्धनत्वेन[16] व्याप्तस्य[17] पथ्येतराहारादिषु पुद्गलविशेष[18]संबन्धे सुप्रसिद्धत्वादुदाहरणस्य साध्यसाधनधर्मवैकल्याभावात्, हेतोश्चानन्वयत्वासंभ[19]वात्, विवादापन्नो धूमोग्निजन्मा धूमत्वान्महानसधूमवदित्यादिवत्[20] ।

न[21] चेष्टानिष्टफलदानसमर्थः कर्मबन्धः पुद्गलविशेषसंबन्धो न भवे[22]ति, पुद्गलसंबन्धेन विपच्यमानत्वाद्व्रीह्या[23]दिवत् । जीवविपा[24]किषु कर्मसु तदभावात्पक्षाव्यापको हेतुरिति चेन्न, तेषामपि सकर्मजीवसंबन्धेन

---

१ क्षीणकषायो द्वादशगुणस्थानवर्ती जीव उपशान्तकषायस्त्वेकादशगुणस्थानवर्ती । एकादशे कषाय सन्नप्यात्मनि उपशान्तो भूत्वा तिष्ठति, नहि तदा उदित्वात्मपरिणामं विकरोति, द्वादशे तु कषायसत्त्वैवात्मन सकाशात्क्षीयते । अत एवान्वर्थनामनी ते द्वेपि गुणस्थाने। उभयत्रापि केवलोत्पत्त्यभावेनाज्ञाने सत्यपि कषायोदयाभावाद्बन्धो न भवति। २ तटस्था शङ्का। योगसद्भावात्प्रकृतिप्रदेशबन्धस्तु त्रयोदशगुणस्थानपर्यन्तं भवति तदपेक्ष्याशङ्कितं, तथापि तन्निरुपयोगि दग्धरज्जुवदत सदप्यसदेवेत्युत्तरम् । ३ त्रयोदशगुणस्थानवर्तिनि । ४ कषायैकार्थसमवेताज्ञाननिबन्धनस्यैव बन्धस्य सत्यबन्धरूपत्वादित्यर्थ । ५ पथ्येतराहारादिसंबन्धो यथा कषायैकार्थसमवेताज्ञाननिबन्धन एव इष्टानिष्टफलदानसमर्थपुद्गलविशेषसंबन्धस्तथाप्रकृतोपि । ६ धर्मिण प्रतिज्ञार्थैकदेशत्वेप्यसिद्धत्वाभावो यथेत्यर्थ. । ७ धर्मिण । ८ मीमासकं प्रति । ९ विवादापन्नम् । १० मीमासक । ११ केवलस्य । १२ पक्षमात्रे हेत्वभावात् । १३ जैन । १४ धर्मिणो विवादापन्नत्वविशेषणमन्तरेण दृष्टान्तस्यापि पुद्गलविशेषसंबन्धरूपत्वाद्धर्मिण्यन्तर्भावाद् दृष्टान्तासिद्धि । १५ क्षीणोपशान्तकषायस्य । प्रकृतिप्रदेशबन्धयो पुद्गलविशेषसंबन्धरूपत्वेपि कषायैकार्थसमवेताज्ञाननिबन्धनत्वाभावाद्व्यभिचार. । १६ साध्येन सह । १७ हेतो । १८ पक्षे । १९ साध्येन सह । २० इत्यादौ यथा साध्यसाधनवैकल्याभावो हेतोश्चानन्वयत्वासभव । २१ कर्मणो हिंसादिविरतिचित्तधर्मत्वेन ( जीवपरिणामरूपत्वेन ) चेतनत्वात् कर्मबन्धस्य पुद्गलविशेषसंबन्धत्वमसिद्धमिति वदन्तं चेतनकर्मवादिनं प्रत्याहु । स च नैयायिकादिर्यो धर्माधर्मसंज्ञक जीवस्य गुणं मन्यते । २२ अपितु पुद्गलविशेषसंबन्धरूप एव भवेत् । २३ व्रीह्यादि यथा आतपजलादिसंबन्धेन विपच्यमानमऽतो पुद्गलरूपं दृष्ट, तथा । २४ कर्मणां चत्वारो भेदाः, पुद्गलविपाकी भवविपाकी, क्षेत्रविपाकी जीवविपाकी च । तद्विस्तारो हि गोमटसारे । तद्यथा, देहादीफासता पण्णासा णिमिणतावजुगलं च । थिरसुहपत्तेयदुगं अगुरुतियं पुग्गलविवाई ॥ देहादिस्पर्शान्ता पञ्चाशत् प्रकृतयः, निर्माणमातपयुगलं च स्थिरं शुभं प्रत्येकद्विकमगुरुलघु इति सर्वा पुद्गलविपाकिन्य प्रकृतय । पुद्गले–जीवशरीरे विपाकः फलोदयो यस्य कर्मणस्तत्पुद्गलविपाकि । यथा शरीरनाम कर्म । अतो देहस्यैव निर्माणं भवति न तु जीवविषये तत्साक्षात्किंचिद्विकरोति । आऊणि भवविवाई खेत्तविवाई य आणुपुव्वी य । अट्ठत्तरि अवसेसा जीवविवाई मुणेयव्वा ॥ आयूंषि भवविपाकीनि क्षेत्रविपाकीनि आनुपूर्व्याणि, अष्टसप्ततिर्जीवविपाकीनि ( कर्माणि ) मन्तव्यानि । आयु कर्म भवविपाकि, भवे—

विपच्यमानत्वात् पुद्गलसंबन्धेन विपच्यमानत्वस्य प्रसिद्धेः पुद्गलक्षेत्रभवविपाकिकर्मवत् पक्षव्यापकत्वसिद्धेः। पूर्वानुभूतविषयस्मरणेन सुखदुःखदायिषु कर्मसु तदभावात् पक्षाव्यापकत्वमस्य हेतोरित्यप्यनेन निराकृतं, परम्परया पुद्गलसंबन्धेनैव तेषां विपच्यमानत्वाच्च। न किंचित्कर्म साक्षात्परम्परया वात्मनः पुद्गलसंबन्धमन्तरेण विपच्यमानमस्ति येन पौद्गलिकं न स्यात्। ततो न कर्मबन्धस्य पुद्गलविशेषसंबन्धित्वमसिद्धम्। नापीष्टानिष्टफलदानसमर्थत्वं, दृष्टकारणव्यभिचारे शुभेतरफलानुभवनस्य स्वसंविदितस्यादृष्टहेतुत्वसिद्धेः, रूपादिज्ञानस्य चक्षुराद्यदृश्यहेतुवत्। नन्वेवमज्ञानहेतुकत्वे बन्धस्य मिथ्यादर्शनादिहेतुत्व कथं सूत्रकारोदितं न विरुध्यते इति चेत्, मिथ्यादर्शनाविरतिप्रमादकषाययोगानां कषायैकार्थसमवाय्यज्ञानाविनाभाविनामेवेष्टानिष्टफलदानसमर्थकर्मबन्धहेतुत्वसमर्थनात् मिथ्यादर्शनादीनामपि संग्रहात् संक्षेपत इति बुध्यामहे। ततो मोहिन एवाज्ञानाद्विशिष्टः कर्मबन्धो न वीतमोहादिति सूक्तम्। तथैव बुद्धेरपकर्षान्मोहनीयपरिक्षयलक्षणान्मोक्ष्यति विपर्यये विपर्यासादित्यधिगन्तव्यं, प्रकृष्टश्रुतज्ञानादेः क्षायोपशमिकात् केवलापेक्षया स्तोकादपि छद्मस्थवीतरागचरमक्षणभाविनः साक्षादार्हन्त्यलक्षणमोक्षस्य सिद्धेः। तद्विपरीतात्तु मोहवतः स्तोकज्ञानात् सूक्ष्मसाम्परायान्तानां मिथ्यादृष्ट्यादीनां कर्मसबन्ध एव। इति चिन्तितमन्यत्र।

नन्वस्तु मोहप्रकृतिभिः कामादिदोषात्मिकाभिः सहचरितादज्ञानात् पुण्यपापकर्मणोः शुभाशुभफलानुभवननिमित्तयोः प्राणिनां बन्धः। स तु कामादिप्रभवो महेश्वरनिमित्त एवेत्याशङ्कामपाकर्तुमिदमाहुः—

**कामादिप्रभवश्चित्रः कर्मबन्धानुरूपतः।**

---

नरकादिगतौ प्राप्तशरीरेऽवरोधकारणत्वादायुषो भवविपाकित्वसिद्धे। अनेनापि न कश्चित्साक्षाज्जीवे विकारो भवति, अवरोधमात्रेण तद्विकारासभवात्। आनुपूर्व्यं हि कर्म मरणानन्तर नूतनशरीरग्रहणाय मध्ये (विग्रहगतौ) गच्छतो जीवस्य, शरीरपरिमाणतोत्पादकौदारिकादिशरीराभावेपि पूर्वशरीराकारतामादधाति इति, नानेनापि जीवे साक्षात्कश्चिद्विकार उत्पाद्यते, पूर्वाकारस्य तदवस्थत्वकारणत्वेपि तावता जीवे विकृत्यसभवात्।

यत्कर्म साक्षाज्जीवे कथंचन विकार कुरुते तज्जीवविपाकि। यथा ज्ञानावरणादिर्घातिकर्मसमूह। तेन हि जीवस्य ज्ञानादिगुण एव साक्षादाक्रम्य कथंचिद्विकारं नीयते।

ता अष्टसप्ततिप्रकृतयश्चेत्थम्,—वेयणियगोदघातीणेक्कावण्णं तु णामपयडीणं। सत्तावीस चेदे अट्ठत्तरि जीववाई दु॥ वेदनीयद्वयं, गोत्रद्वय, घातिकर्माणि ज्ञानावरणादीनि सप्तचत्वारिंशत्—एवं मेलापकेन वेदनीयगोत्रघातीनामेकपञ्चाशत्, नामप्रकृतीना सप्तविंशतिश्च (वक्ष्यमाणा), एता अष्टसप्ततिर्जीवविपाकिन्य प्रकृतय। प्रकृति—कर्म। ता सप्तविंशतिप्रकृतयस्त्वेता,—तित्थयर उस्सास बादरपज्जत्तसुस्सुरादेज्ज। जसतसविहायसुभगदु चउगइ पणजाइ सगवीस॥ तीर्थकरत्वातिशयजनक तीर्थकरत्वम्, उच्छ्वासो, बादरपर्याप्तसुस्वरादेययशस्कीर्तित्रसविहायोगतिसुभगाना प्रत्येकं सप्रतिपक्षेण सह द्विकं, चतस्रो गतय पञ्च जातय (पञ्चेन्द्रियापेक्षया एकेन्द्रियादिनामिका), एवं सप्तविंशतिर्नामकर्माणि। एतैरपि जीवप्रदेशेषु जीवगुणे वा क्वचिद्विकार एवोत्पाद्यते इत्येता अपि जीवविपाकिन्य एव।

इति चतु प्रकारकर्मसु मध्ये यानि जीवविपाकीनि तेषा विपाके पुद्गलापेक्षत्वं न स्यादिति मत्वा शङ्का, यत्कथं जीवविपाकीनि पौद्गलिकानि सभवेयु [1] पुद्गलसबन्धेन तद्विपाकाभावात्। तदुत्तरं लिख्यं,—यत्तेषा जीवविपाकिनामपि सकर्मजीवे एव विपाको भवति। सकर्मजीवास्तु तदावेशात्स्यान्मूर्ता अभिमता। मूर्तत्वमेव च पौद्गलिकत्वमिति कृत्वा जीवविपाकिनामपि पुद्गलसबन्धेन विपच्यमानत्वं सुघटम्। एवं चानेन हेतुना सर्वेषामपि कर्मणां पौद्गलिकत्वं सिध्यति।

१ तस्य—पुद्गलसबन्धेन विपच्यमानत्वस्य। २ अनुभवपूर्वकत्वात्स्मरणस्य, अनुभवस्य च पुद्गलाश्रयत्वात्। ३ पुद्गलमयं कर्म चेत्तर्हि तस्य फलदानसामर्थ्यं न स्यादचेतनत्वादेरित्याशङ्क्याह। ४ चक्षुरतीन्द्रियत्वाददृश्यं तथापि रूपज्ञानात्स्वीक्रियते सर्वैर्यथा। ५ स्तोकज्ञानादपि। ६ मोहपरिक्षयाभावे। ७ दशमगुणस्थानान्तानाम्। ८ विद्यानन्दमहोदये। ९ इत पर यौग·। १० कामादि(इच्छादि)रेव प्रभव कार्यम्। ११ न तु कर्मकृत। १२ कामादीना रागादीना प्रभव उत्पाद, स तु कार्यरूपश्चित्रो नानारूप कर्मबन्धानुरूपाद् ज्ञानावरणादिकर्मकारणात्।

तत्र कर्म स्वहेतुभ्यो जीवास्ते शुद्ध्यशुद्धितः ॥ ९९ ॥

कामादिप्रभवो भावसंसारोयं नैकस्वभावेश्वरकृतस्तत्कार्यसुखदुःखादिवैचित्र्यात् । यस्य यस्य कार्यवैचित्र्यं तत्तन्नैकस्वभावकारणकृतं, यथानेकशाल्यङ्कुरादिविचित्रकार्यं शालिवीजादिकं, सुखदुःखादिकार्यवैचित्र्यं च संसारस्य तस्मान्नायमेकस्वभावेश्वरकृतः । न तावदयं हेतुरनिश्चितव्यतिरेकत्वादगमकः, साध्याभावेनुपपन्नत्वग्राहकप्रमाणसद्भावात् । न हि कारणस्यैकरूपत्वे कार्यनानात्वं युक्तं, शालिवीजाङ्कुरवत् । प्रसिद्धस्तावदेकस्वरूपाच्छालिवीजादनेकाङ्कुरकार्यायोगः, स एव दृष्टान्तः स्यात् । ततसाध्विदं विपक्षे वाधकं प्रमाणमेकस्वभावकारणकृतत्वप्रतिषेधस्य साध्यस्याभावे नियमेनैकस्वभावकारणकृतत्वेऽनेककार्यत्वस्य साधनस्य व्यावृत्तिनिश्चयजननात्, विचित्रकार्यं च स्यादेकस्वरूपकारणकृतं च स्यादिति संभावनाशङ्काव्यवच्छेदात् । कालादिना व्यभिचारी हेतुरिति चेन्न, तस्यैकस्वभावत्वैकान्तासिद्धेः । अपरिणामिनः सर्वथार्थक्रियाऽसंभवात् तल्लक्षणत्वाद्वस्तुनः सद्भावमेव तावन्न संभावयामः । सत्त्वस्यार्थक्रियया व्याप्तिरसिद्धेति न मन्तव्यं, तद्रहितस्य खपुष्पादेरसत्त्वनिश्चयात् । नन्वसतोप्यसदिति-प्रत्ययलक्षणार्थक्रियाकारित्वान्न तया सत्त्वस्य व्याप्तिरिति न शङ्कितव्यं, व्यापकस्य तदतन्निष्ठतया व्याप्याभावेपि भावाविरोधात् तद्व्याप्तेरखण्डनात् । क्रमयौगपद्याभ्यामर्थक्रियाव्याप्तिरसिद्धेति चेन्न, प्रकारान्तरेणार्थक्रियायाः संभवाभावात् । एकस्यैकामेवार्थक्रियां संपादयतो न क्रमो नापि यौगपद्यं, तस्यानेककार्यविषयत्वादिति चेन्न, तादृशस्य वस्तुनोसंभवात् । सर्वस्य बाह्यामर्थक्रिया कुर्वतोऽन्तरङ्गस्वज्ञानलक्षणार्थक्रियाकारणस्यावश्यंभावित्वादन्यथा योगिनोऽसर्वज्ञत्वप्रसङ्गात् पदार्थस्यानेकक्षणस्थायिनः क्रमेणाक्रमेण वानेककार्यकारित्वसिद्धेरेकक्षणस्थायिनोनभ्युपगमात् तथा प्रतीत्यभावाच्च । क्रमयौगपद्ययोः परिणामित्वेन व्याप्तिरसिद्धेति चेन्न, अपरिणामिनः क्षणिकस्येव नित्यस्यापि क्रमयौगपद्यविरोधात् । ततः कस्यचित्परिणामित्वाभावे क्रमयौगपद्याभावादर्थक्रियापायात् सत्त्वानुपपत्तेर्वस्तुत्वसंभावनाभाव एवेति निश्चितम् । तत्र कालदेशावस्थास्वभावभिन्नानां तनुकरणभुवनादीनां किलायं कर्तेति महच्चित्रं, प्रकृतप्रमाणवाधनात् ।

एतेनेश्वरेच्छा प्रत्युक्ता, तस्या अपि नित्यैकस्वभावायाः कार्यवैचित्र्यानुपपत्तेर्वस्तुत्वसंभावनानुपपत्तेश्चा-

---

१ स्वस्य कर्मणो, हेतू रागादिपरिणामः ( अज्ञानमोहाहंकारादिरूप )। २ शुद्धिर्भव्यत्वमशुद्धिरभव्यत्वम् । यस्मिञ्जीवे शुद्धि स्वभावोस्ति स कदाचिन्मुक्तो भवति, नाशुद्धिमाक् । ३ यस । ४ यस्य वस्तुन कारणभूतस्य, विचित्रं कार्यं यस्य तस्येत्यर्थ । ५ शालिवीजादेकरूपाच्छाल्यङ्कुरस्यैवोत्पत्तिर्न त्वन्यस्य । ६ एकस्वभावेश्वरकृतत्वलक्षणे । ७ हेतोरनुपपन्नत्व तस्य ग्राहकं प्रमाणम् । ८ एकस्वभावत्वेपि विचित्रकार्यदर्शनात् । सा च विचित्रता नवजीर्णतापेक्षया ९ एकस्वभाविन' (नित्यस्यैव क्षणिकस्यैव वा )। १० अपरिणामितया मतस्य कालादेरेव । ११ कालादे । १२ व्यापकरूपया । सह । १३ तया अर्थक्रियया । १४ इति व्यापकाभावे व्याप्याभावोत्र । १५ नैयायिक । १६ खपुष्पादे । १७ असदित्येव प्रत्ययो य सैव यार्थक्रिया । १८ अर्थक्रियया । १९ जैन । २० व्यापिकार्थक्रियैवात्र । २१ तत्–सत्त्वम् ( व्याप्यम् )। २२ एकत्रापि व्यापकावयवभूते व्याप्ये यदि व्यापकरूपं प्रवर्तते तर्हि तद्व्याप्तिरखण्डिता । अग्निधूमयोरपि न सर्वत्र व्याप्तिरस्ति । २३ वस्तुन । २४ क्रमस्य यौगपद्यस्य । २५ जैन । २६ एकामेवार्थक्रिया सपादयत । २७ इति अन्तर्बाह्यार्थभेदेनार्थक्रियाद्वैविध्यं सिद्धं सर्वत्र वस्तुनि । २८ अन्तरङ्गस्वज्ञानलक्षणार्थक्रियाकरणावश्यंभावाभावे । २९ एकक्षणस्थायित्वेन । ३० नैयायिक । व्याप्ययो । ३१ व्यापकेन सह । ३२ करणमिन्द्रियम् । आदिशब्देन गुणकर्मादिग्रह । ३३ प्रकृतप्रमाणेन कारणस्य (ईश्वररूपस्य) वाधनात् । ३४ एकस्वभावेश्वरवाधनेन । ३५ पञ्चमी । ३६ क्रमाक्रमाभ्यामर्थक्रियासंभवात् ।

विशेषात् । न चैतेना[1]र्थो[2]ः संबन्धस्तत्कृतोपकारानपेक्षणात् । न हि नित्यादेकस्वभावादीश्वरात् कश्चिदुपकारः सिसृक्षायास्तथाविधायाः संभवत्यनर्थान्तरभूतो[3], नि[4]त्यत्वविरोधात् । नाप्यर्थान्तरभूतः । संबन्धासंभवादनुपकारात्, उपकारान्तरेणनवस्था[5]प्रसङ्गात् । ततो व्यपदेशोपि मा भूत् ईश्वरस्य सि[6]सृक्षेति । तत्र समवा[7]यात्तथा व्यपदेश इति चेन्न, सर्वथैकस्वभावस्य[8] समवायित्वनिमित्तकारणत्वादिनानास्वभावविरोधात् । महेश्वरस्याभि[9]सन्धेरनित्य[10]त्वेपि समानप्रसङ्गः, पदार्थान्तरभूत[11]स्याभिसन्धेस्ते[12]न सबन्धाभावस्य त[13]त्कृतोपकारानपेक्षस्य व्यपदेशा[14]संभवस्य चाविशेषात्, सकलकार्याणामुत्पत्तिविनाशयोः स्थितौ[15] च महेश्वरा[16]भिसंधेरेकत्वे सकृदुत्पत्त्यादिप्रसङ्गाद्विचित्रत्वानुपपत्तेरिति[17] । तदनेक[18]त्वेप्यक्रमत्वेऽस्यै[19]व दोषस्योपनिपातात्, क्रम[20]वत्त्वे केषांचि[21]त्कार्याणा सकृदुत्पत्त्यादिदर्शनविरोधात् कथमनित्योभिसंधिरीशस्य स्यात्? सन्न[22]प्यसौ यदीश्वरसिसृक्षानपेक्ष[23]जन्मा तदा तन्वादयोपि तथा[24] भवेयुरिति न कार्यत्वादिहेतवः प्रयोजकाः स्युः । सिसृक्षान्तरापेक्षजन्मा चेदनवस्था । बुद्धिपूर्वकत्वादिच्छाया न दोष इति चेत्सा तर्हि बुद्धिरीश्वरस्य यदि नित्यैकस्वभावा तदा कथमनेकसिसृक्षाजननहेतुः क्रमतो युज्येत युगपद्वा? पूर्वपूर्वसिसृक्षावशादुत्तरोत्तरसिसृक्षोत्पत्तिर्नित्यैकस्वभावबोधस्यापि महेश्वरस्य न विरुद्धा तत्समानसमयानेकतन्वादिकार्योत्पत्तिश्च, पूर्वसिसृक्षातो[25] उत्तरसिसृक्षायास्तत्समानकालतन्वादिकार्याणा च भावादनादित्वात् कार्यकारणप्रवाहस्येति चेन्न, एकस्वभावस्येश्वरबोधस्यैकस्य पूर्वपूर्वसिसृक्षापेक्षाविरोधात्, त[26]दपेक्षायां स्वभावभेदादनित्यतापत्तेः[27] । अथ सि[28]सृक्षातन्वादिकार्योत्पत्तौ नेश्वरबोधः सिसृक्षान्तरमपेक्षते, त[29]त्कार्याणामेव त[30]दपेक्षत्वादिति मतं तदप्यसत्, नित्येश्वरबोधस्य त[31]दनिमित्तत्वप्रसङ्गात् । त[32]दभावे[33]भावात्तस्य तन्निमित्तत्वे सकलात्मना त[34]न्निमित्तता स्याद्, व्यतिरेका[35]भावाविशेषात् । [36]अथासर्वगतस्येश्वरबोधस्य नित्यत्वात्कालव्यतिरेकाभावेपि न देशव्यतिरेकासिद्धिः । सकलात्मना तु नित्यसर्वगतत्वात्कालदेशव्यतिरेकासिद्धिरिति मतं तर्हि दिक्कालाकाशानां तत एव सर्वोत्पत्ति[37]मन्निमित्तकारणता[38] मा भूत् ।

एतेनैवेश्वरस्य तन्निमित्तकारणत्व प्रतिक्षिप्तं, नित्येश्वरबोध[39]स्यापि तन्निमित्तत्वे सकृत् सर्वत्रोत्पित्सुकार्याणामुत्पत्तिर्न स्यात्, तस्य सर्वत्रा[40]भावात् शरीरप्रदेशवर्तिनोपि सर्वत्र बहिर्निमित्तकारणत्वे देशव्यतिरेकस्या-

---

१ ईश्वरेण । २ इच्छाया । ३ ईश्वरादनर्थान्तरभूत । अत्र 'अनर्थान्तरभूतोर्थान्तरभूतश्चे'ति पक्षद्वयं कृत्वा निरसित
क्रमेणेति विचार्यम् । 'नित्यैकस्वभावाया' इत्युपर्युक्ते पदेपि पक्षान्तरं कल्प्यम् । तद्यथा, इच्छा नित्यानित्या वा ? तत्रापि
प्रत्येकपक्षे सा पुनरेकस्वभावानेकस्वभावा वा ? इति विकल्पान्तरमूह्य, तत्क्रमेणैव चोत्तरं दत्त पुरस्तात्तत्सप्रधार्यम् । ४ ईश्व-
रस्य । ५ उपकारान्तरमीश्वराद्भिन्नमभिन्न वा ? अभेदे नित्यत्वविरोध ईश्वरस्य । भेदे सवन्धासिद्धिरित्येवंरीत्या । ६ षष्ठीप्रथमा
इतिरूपेण । ७ सिसृक्षाया । ८ ईशस्य । ९ सिसृक्षाया । १० नित्यपक्षवत् । ११ ईश्वरात् । १२ ईश्वरेण । १३ स—
ईश्वर । १४ ईश्वरस्यायमभिसधिरिति यो व्यपदेश । १५ सत्याम् । १६ इच्छाया । १७ हेतो । १८ अभिसधेरनेकत्वं
क्रमेणाक्रमेण वा ? अक्रमत्वं चेत्तर्हि तत्र पक्षे इत्यर्थ । १९ सकृदुत्पत्त्यादिप्रसङ्गरूपस्य । २० अभिसधेरेव । २१ वर्तिकादाहा-
दीनाम् । २२ विद्यमानोप्यसावभिसधिरिच्छामन्तरेण इच्छापूर्वको वा भवेत् ? । २३ अनपेक्षत्वं हि अपराया ईश्वरसिसृक्षाया
सकाशात् । २४ तत्सिसृक्षानपेक्षजन्मान । २५ इतोग्रे 'उत्तरसिसृक्षात' इत्यधिकपाठ कपुस्तके । २६ तस्या पूर्वपूर्वसि-
सृक्षाया । २७ ईश्वरबोधस्य । २८ सिसृक्षा तन्वादिकार्यं चेति द्वन्द्व । २९ सिसृक्षान्तरकार्याणाम् । ३० तस्य—ईश्वरबोध-
स्य । ३१ अनिमित्तत्वं तन्वाद्युत्पत्तौ । ३२ तस्य नित्येश्वरबोधस्य ३३ तन्वादिकार्याणाम् । ३४ तत्र तन्वादौ । ३५ नित्ये-
श्वरज्ञानस्य सकलजीवाना च व्यतिरेकाभाव समान एव यत इत्यर्थ । ३६ नन्वीश्वरज्ञानाभावे सकलकार्याणामभावो भवतु,
नतु सकलात्मनामभावे ईश्वरबोधसद्भावे । तत ईश्वरबोधस्यैव व्यतिरेक सिध्यति, नतु सकलात्मनामित्याह । ३७ सर्वो-
त्पत्तिमतो निमित्तकारणमिति षष्ठ्या विग्रह कार्यं । ३८ 'निमित्तकारणम्' इति पाठान्तरम् । ३९ असर्वगतत्वाङ्गीकारे ।
४० ईश्वरबोधस्य ।

प्यभावात् कथमन्वयमात्रेण तत्[1]कारणत्वं युक्तम् ?[2] नित्येश्वरज्ञानस्य सर्वगतत्वेप्ययमेव दोषः । तस्यानित्यासर्वगतत्वात् कालदेशव्यतिरेकसिद्धेस्तन्वादौ निमित्तकारणत्वसिद्धिरिति चेन्न, ईश्वरस्य कदाचित्क्वचिद्बोधवैधुर्ये सकलवेदित्वविरोधात् । यदि पुनरपरापरसर्वार्थज्ञानस्याविच्छेदात् सदाशेषवेदित्वमविरुद्धं तदा कुतो व्यतिरेकस्तस्य सिध्येत् ? कथं चानित्यस्य बोधस्येश्वरबोधान्तरानपेक्षस्योत्पत्तिर्न पुनः सिसृक्षातन्वा[3]दिकार्याणामिति विशेष[4]हेतोर्विना प्रतिपद्येमहि ? तस्य बोधान्तरापेक्षायामनवस्थानं तदवस्थम् । स्यान्मतं,—पूर्वपूर्वबोधसिसृक्षावशादुत्तरोत्तरबोधसिसृक्षातन्वादिकार्याणामुत्पत्तेरनादित्वात्कार्यकारणभावस्य बीजाङ्कुरादिवदयमदोष इति नैतत्सारमीश्वरकल्पनानर्थक्यप्रसङ्गात् । तद्भावे भावाद्बोधादिकार्याणां तत्कारणत्वसिद्धेर्नानर्थक्यमिति चेन्न, व्यतिरेका[6]सिद्धेः, अन्वयमात्रेण कारणत्वे तदकारणत्वाभिमतानाम्[7]अपि तत्प्रसङ्गात् । न चैकस्वभावाद्बोधात्कामादिकार्यवैचित्र्यं क्रमतोपि युज्यते महेश्वरसिसृक्षाभ्यामि[8]ति, किमनया[9] चिन्तया ? तयोरेकस्वभावत्वेपि कर्मवैचित्र्यात्कामादिप्रभववैचित्र्यमिति चेद्युक्तमेतत् किंतु नेश्वरेच्छाभ्यां किंचित्[10], तावतार्थ[11]परिसमाप्तेः[12], सति कर्मवैचित्र्ये कामादिप्रभववैचित्र्यस्य भावादसत्यभावात् 'कामादिप्रभवश्चित्रः कर्मबन्धानुरूपतः' इत्यस्यैव दर्शनस्य प्रमाणसिद्धत्वात्, अनिश्चितान्वयव्यतिरेकयोरीश्वरेच्छयोः कारणत्वपरिकल्पनायामतिप्रसङ्गात्[13] । एतेन[14] विरम्यप्रवृत्तिसन्निवेशविशेषादिभ्यः[15] पृथिव्या[16]देर्बुद्धिमत्कारणपूर्वकत्वसाधनेनेश्वरप्रार्पणं[17] प्रत्युक्तं, धर्माधर्माभ्यामेवात्मनः शरीरेन्द्रियबुद्धीच्छादिकार्यजननस्य सिद्धेः, बुद्धिमत्कारणपूर्वकत्वमन्तरेणापि विरम्यप्रवृत्ति[18]सन्निवेशविशेषकार्यत्वाचेतनोपादानत्वार्थक्रियाकारित्वादीनां साधनानामुपपत्तेस्ततः[19] पृथिव्यादेर्बुद्धिमत्कारणपूर्वकत्वासिद्धेः ।

ननु[20] प्राक्[21]कार्यकरणोत्पत्तेरात्मनो धर्माधर्मयोश्च स्वयमचेतनत्वाद्विचित्रोपभोगयोग्यतनुकरणादिसंपादनकौशला[22]संभवात् तन्निमित्तमात्मान्तरं, मृत्पिण्डकुलालवदिति चेन्न, एवमपि[23] प्रकृतसाधनव्यतिरेका[24]निश्चयात् । तथा हि, तनुकरणभुवनादिकं विवादापन्नं बुद्धिमत्कारणपूर्वकं, विरम्य प्रवृत्तेः सन्निवेशविशिष्टत्वादचेतनोपादानत्वादर्थक्रियाकारित्वात्कार्यत्वाद्वा घटवदिति साधनमुच्यते, ते[25]स्यात्मान्तरमीश्वराख्यं बुद्धिमत्कारणमन्तरेणाचेतनस्यात्मनो[26]ऽनीशस्य धर्माधर्मयोश्चाचेतनयोर्विचित्रोपभोगयोग्यतनुकरणभुवनादिनिर्मापणकौशलासंभवात्तन्निमित्तकारणमात्मान्तरं बुद्धिमत्कारणमेषितव्यमित्यनेन[27] व्यतिरेकः समर्थ्यते । कुलालमन्तरेण मृत्पिण्डदण्डादेः स्वयमचेतनस्य घटादिनिष्पादनकौशलासंभववदिति वैधर्म्यदृष्टान्तप्रदर्शनम् । सत्येव कुलाले मृत्पिण्डादेर्घटादिसंपादनसामर्थ्यदर्शनादिति चान्वयसमर्थनमभिधीयते[28] ।

---

१ तत्–तन्वादिकार्यं प्रति । २ ईश्वरज्ञानं तद्बोधान्तरानपेक्षं तत्सापेक्षं वा ? इति विकल्प्य पक्षद्वये दोष उद्भाव्यते । ३ ईश्वरबोधान्तरानपेक्षाणाम् । अनित्येश्वरबोधे सिसृक्षातन्वादौ चेत्युभयत्र । ४ अनवस्थालक्षण । ५ आदिना सिसृक्षातन्वादिग्रहणम् । ६ कालेनापि देशेनापि । ७ सकलात्मनाम् । ८ एकस्वभावाभ्या कार्यवैचित्र्यं न भवेद्यथा । ९ महेश्वरबोधात्कार्यं न भवतीत्यनया । १० प्रयोजनम् । ११ अर्थोत्र कार्यम् । १२ ग्रन्थकृतानन्तरमेवोक्तस्य । १३ सकलात्मनामेव कारणत्वापत्तिरत्रातिप्रसङ्ग । १४ महेश्वरसिसृक्षयोरेकस्वभावत्वेपि कर्मवैचित्र्यात्कामादिवैचित्र्यमिति प्रतिविधानेन । १५ हेतुभ्य । १६ कार्यस्य । १७ साध्यम् । १८ अनुक्रमेण वर्तन विरम्यप्रवृत्ति' । १९ विरम्यप्रवृत्त्यादिभ्यो हेतुभ्य । २० नैयायिक । २१ शरीरेन्द्रियोत्पत्ते पूर्वम् । २२ कुशल एव कौशल । स्वार्थेण्, यथा द्वीतमेव द्वैतमिति । २३ आत्मान्तरान्वेषणेपि । २४ विरम्यप्रवृत्त्यादीना प्रकृतसाधनाना यो व्यतिरेकस्तस्यानिश्चयात् । सति ईशे कार्यं नासतीत्येवं व्यतिरेकोत्र । २५ तस्य व्यतिरेक समर्थ्यते इति उत्तरपदेन क्रियाकारकसबन्ध । २६ नैयायिकमते आत्मा न तु स्वरूपेण चेतन किंतु पूर्वमचेतन एव पश्चाच्चेतनागुणेन समवायाच्चेतनो भवति । २७ सतीश्वरे विरम्यप्रवृत्त्यादिसाधनं स्यान्नासतीत्यनेन । २८ नैयायिकेन ।

न[1] चैतदभिधातुं शक्यमन्यथानुपपत्तेरभावात् । बुद्धिमता कारणेन विना विरम्य प्रवृत्त्यादेरसंभवादन्यथानुपपत्तिरस्त्येवेति चेन्न, तस्या[2]पि वितनुकरणस्य तत्कृतेरसंभवात् कालादि[3]वत् ता[4]दृशोपि निमित्तभावे कर्मणामचेतनत्वेपि[5] तन्निमित्तत्वमप्रतिषिद्धं,सर्वथा दृष्टान्तव्यतिक्रमात् । यथैव हि कुलालादिः सतनुकरणः कुम्भादेः प्रयोजको दृष्टान्तस्तनुकरणभुवनादीनामशरीरेन्द्रियेश्वरप्रयोजकत्वकल्पनया व्यतिक्रम्यते, तथा कर्मणामचेतनानामपि तन्निमित्तत्वकल्पनया बुद्धिमान[6]पि दृष्टान्[7]तो व्यतिक्रम्यतां[8],विशेषाभावात्[9] ।

स्यान्[10]मतं—'सशरीरस्यापि बुद्धीच्छाप्रयत्नवत एव कुलालादेः कारकप्र[11]योक्तृत्वं दृष्टं, कुटादिकार्यं कर्तुमबुध्यमानस्य तददर्शनाद्, तद्बुद्धिमतोपीच्छापाये तदनुपलब्धेस्तदिच्छावतोपि प्रयत्नाभावे तदनुपलम्भात् । तद्वद्वितनुकरणस्यापि बुद्धिमतः स्रष्टुमिच्छतः प्रयत्नवतः श[12]श्वदीश्वरस्य समस्तकारकप्रयोक्तृत्वोपपत्तेर्न दृष्टान्तव्यतिक्रमः, स[13]शरीरत्वेतरयोः कारकप्रयुक्तिं प्रत्यनङ्ग[14]त्वात् । न हि सर्वथा दृष्टान्तदार्ष्टान्तिकयोः सा[15]म्यमस्ति तद्विशे[16]षविरोधा'दिति तदयुक्तं, वितनुकरणस्य बुद्धीच्छाप्रयत्नानुपप[17]त्तेर्मुक्तात्मवत्, शरीरा[18]द्बहिः संसार्यात्मवत्, कालादि[19]वच्चेति । शरीरेन्द्रियाद्युत्पत्तेः पूर्वमात्मना व्यभिचा[20]रं इति चेन्न, तस्यापि बुद्धीच्छाप्रयत्नरहितत्वोपगमादन्यथा स्वमते[21]विरोधात् । [22]परेषां तु तस्य सशरीर[23]स्यैव बुद्ध्यादिमत्त्वाभ्युपगमान्न तेनानेकान्तः । ननु[24] चेश्वरस्य धर्मित्वे तदप्रतिपत्तावाश्रयासिद्धो हेतुरिति चेन्न, प्रसङ्ग[25]साधनेवश्यमाश्रयस्यानन्वेषणीयत्वात् तत्प्रतिपत्ति[26]सद्भावाच्च । ननु यतः प्रमाणादीश्वरस्यास्सद्विलक्षण[27]स्य धर्मिणः प्रतिपत्तिस्तेनैव हेतु[28]र्बाध्यते इति चेन्न, आत्मान्त[29]रस्य सामान्येनेश्वराभिधानस्य धर्मित्वात् सकलकारकप्रयोक्तृत्वेन बुद्ध्या[30]दिमत्त्वेन च तस्य विवादापन्नत्वात् ।

अथ 'तन्वादिकार्या[31]णि विवादापन्नानि चेतनाधिष्ठितानि, विरम्यप्रवृत्त्यादिभ्यो वास्यादिवदित्यनुमानात् समस्तकारकप्रयोक्तृत्वं बुद्ध्यादिसंपन्नत्वं चेस्यश्वर साध्यते । त[32]तोऽशरीरेन्द्रियत्वम्, अनाद्यनन्ततन्वादिकार्यसंताननिमित्तकारण[33]स्यानाद्यनन्तत्वसिद्धेरनाद्यनन्तस्य शरीरत्वविरोधात् । अशरीरत्वमपि तस्याना-

---

१ अत्राहुर्जैना । २ ईश्वरस्तनुकरणभुवनादिनिमित्तकारणं न भवति, विगततनुकरण( इन्द्रिय )त्वान्मुक्तात्मवत् । ३ अयं दृष्टान्तोग्रेतनवाक्येन सह योजनीय । कालो यथा वितनुकरणत्वात्तन्वाद्युत्पत्तौ कारणं न भवति तथेश्वरोपीति भाव । ४ईश्वरस्य । ५ अपिशब्दो भिन्नक्रमे, तेन कर्मणामपीति कर्तव्योन्वय । ६ न केवल सतनुकरण एवेति ध्वन्यतेऽपिना । ७ घटकरणे कुम्भकार एव । ८ कर्मणा तन्वादिकार्योत्पत्तौ कारणत्वकल्पनापेक्षया । ९ सतनुकरणत्वं कुलाले कर्तृत्वेन निराक्रियता, न पुनर्वितनुकरणे बुद्धिमत्त्वमित्यत्र न्यायस्य समानत्वात् । १० यौगम् । ११ कारकाणा दण्डादीनाम् । १२ सदाशिवलक्षणस्य । १३ ईश्वरस्याशरीरत्वान्न कारकप्रयोक्तृत्वं कुलालस्य तु सशरीरत्वात्तत्कारकप्रयोक्तृत्वं सभवतीति प्रश्ने सत्याह । १४ किंतु इच्छादीनामेव तदङ्ग ( कारण ) त्वात् । १५ कुलालस्य ईश्वरवज्ज्ञानचिकीर्षाप्रयत्नवत्त्वेनैव दृष्टान्तत्व, न तु शरीरसत्त्वासत्त्वाभ्याम् । १६ यदि तयो सर्वथा साम्यं स्यात्तर्हि तयोर्मध्ये विशेषो ( भेद ) नैव स्यात् । तथा चेदं दार्ष्टान्तिकमयं तु दृष्टान्त इति द्वैतभावोपि कथं स्यात् ? । १७ ईश्वरो बुद्धीच्छाप्रयत्नवान्न, वितनुकरणत्वान्मुक्तात्मवदित्यनुमानात्तदभावे तदभावोवसेय । १८ यौगमतेनात्मानं व्यापकं मत्वा दोषोयमुद्भावित । शरीराद्बहिर्नात्मनि बुद्ध्यादि तिष्ठति तन्मतानुसारम् । १९ कालादौ च वितनुकरणत्वादेव न बुद्ध्याद्यस्ति । २० आत्मनस्तदा वितनुकरणत्वेपि बुद्धीच्छाप्रयत्नदर्शनात् ( नैयायिकाशङ्का ) । २१ स्वमतं यौगमतं, व्यापकापेक्षया । २२ जैनानाम् । २३ विग्रहगता ( पूर्वशरीरत्यागानन्तरं प्राक् चोत्तरशरीरग्रहणात् ) कार्मणतैजसशरीरसद्भावात् । २४ ईश्वरो धर्मी किं प्रमाणप्रतिपन्नो न वेति विकल्प्य यौगो जैनं पृच्छति । २५ अनिष्टापादनसमये । २६ ईश्वरस्य स्वयं सम्मतत्वात् । २७ अकर्तृत्वादिविशिष्टस्य । २८ वितनुकरणत्वादिति । २९ पूर्वं संसारापन्नस्यैव कस्यचिदात्मन कदाचित्कर्मनाशे सति । ३० सर्वस्रष्टिकर्तृत्वबुद्ध्यादिसपन्नत्वाभ्या द्वाभ्या विशेषणाभ्या युक्तत्वं तस्येश्वरस्य नैव निर्विवाद सिध्यति, आत्मान्तरस्य मुक्तत्वेपि यौगैस्तथाऽस्वीकारात् । ३१ करणानि । ३२ समस्तकारकप्रयोक्तृत्वबुद्ध्यादिसपन्नत्वाभ्याम् । ३३ ईशस्य ।

द्यनन्तमस्तु बुद्धीच्छाप्रयत्नवत् ।' इति मतं तदयुक्तं, प्रमाणबाधनात् । तथा हि, नेश्वरेऽशरीरत्वमनाद्यनन्तमशरीरत्वात्, परमसिद्धा कायकरणोत्पत्तेः पूर्वमसदाद्यशरीरत्ववत् । नेश्वरबुद्ध्यादयो नित्या बुद्ध्यादित्वादसदादिबुद्ध्यादिवदिति । एतेनागमात् 'अपाणिपाद[2]' इत्यादेरीश्वरस्याशरीरत्वसाधनं प्रत्याख्यातं, तस्य[3] युक्ति[4]बाधितत्वात् । तत एव सशरीरो महेश्वरोऽस्त्विति चेन्न, तच्छरीरस्यापि बुद्धिमत्कारणापूर्वकत्वे[5] तेनैव कार्यत्वादिहेतूनां व्यभिचारात्[6] । तस्य बुद्धिमत्कारणपूर्वकत्वे वाऽपरापरशरीरकल्पनायामनवस्थाप्रसङ्गात् पूर्वपूर्वस्वशरीरेणोत्तरोत्तरस्वशरीरोत्पत्तौ भवस्य[7] निमित्तकारणत्वे[8] सर्वसंसारिणां तथा प्रसिद्धेरीश्वरकल्पनावैयर्थ्यात्, स्वोपभोग्यभवनाद्युत्पत्तावपि[9] तेषां[10]मेव निमित्तकारणत्वोपपत्तेः । इति न कार्यत्वाचेतनोपादानत्वसन्निवेशविशिष्टत्वहेतवो गमकाः[11] स्युः । स्थित्वाप्रवर्तनार्थक्रियादि[12] चेतनाधिष्ठानादिति नियमे पुनरीश्वरादे[13]रपि मा भूत्[14] । अन्यथे[15]श्वरदिक्कालाकाशाश्चेतनाधिष्ठिताः[16] स्युः, सर्वकार्येषु क्रमजन्मसु स्थित्वा प्रवर्तनादर्थक्रियाकारित्वाद्वास्यादिवदिति न्यायात् । तथा[17] चेश्वरोपीश्वरान्तरेणाधिष्ठित इत्यनवस्था स्यात्, अन्यथा[18] स्यात्तेनैवा[19]स्य हेतोर्व्यभिचारः[20] ।

नायं[21] प्रसङ्गो[22], बुद्धिमत्त्वा[23]दिति चेत्तत एव तर्हि प्रहीण[24]तनुकरणादयः प्राणिनो मा भूवन् । यथैव हि बुद्धिमानीश्वरो नाधिष्ठात्रन्तरं[25] चेतनमपेक्षते[26] तथा प्रहीणान् कुब्जादिशरीरकरणादीनपि मास्म करोत्, सातिशयं तद्विदः[27] प्रहीणस्वकार्याकरणदर्शनात् । प्रहीणतनुकरणादयः प्राणिनां कर्मणो वैचित्र्यादिति चेत्तर्हि कर्मणामपि तेषामीश्वरज्ञाननिमित्तत्वे समानप्रसङ्गः[28]—तान्यपि[29] प्रहीणतनुकरणादिकारणानि मा भूवन्[30]निति । तद[31]निमित्तत्वे तनुकरणादेरपि तन्निमित्तत्वं मा भूद्विशेषाभावात् । एवं[32] चार्थक्रियादेरपि[33] ताभ्या[34]मैकान्तिकत्वं कर्मणः स्थाणो[35]श्चार्थक्रियाकारित्व–स्थित्वाप्रवर्तनयोश्चेतनाधिष्ठानाभावेपि भावात् । ततः कर्मबन्धविशेषवशाच्चित्राः कामादयस्ततः कर्मवैचित्र्य[36]मिति स्थितम्[37] । न[38]हि भावस्वभावो[39]पालम्भः करणीयोन्यत्रा[40]पि तथैव तत्प्रसङ्गानिवृत्तेः । यथैव हि कथमचेतनः

---

१ यौगमतानुसारेण । २ अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति विश्वं न हि तस्य वेत्ता तमाहुरग्र्यं पुरुषं महान्त ॥ इति वचनम् । ३ आगमस्य । ४ युक्त्या—अनुमानेन । ५ तच्छरीरमपि आत्मान्तरशरीरवद्बुद्धिमन्निमित्तकारणकं बुद्धिमदकारणकं वेति विकल्प्य दूषयन्ति जैनाः । ६ ईश्वरशरीरस्य कार्यत्वेपि बुद्धिमत्कारणपूर्वकत्वास्वीकारेण कार्यत्वहेतोः पक्षाव्यापकत्वात् । ७ सृष्टिकर्तुरीशस्य । ८ नेतरस्य भवशरीरोत्पत्तौ निमित्तत्वमतो नानवस्था, बीजवृक्षादिवदनादित्वात्तच्छरीरप्रवाहस्य । ९ न केवलं स्वशरीरस्यैवोत्पत्तौ । १० ससारिणाम् । ११ ईशस्य । १२ विरम्य प्रवृत्ति —स्थित्वा प्रवर्तनम्, अर्थसाधकक्रिया चेति द्वयं कथ भवतीत्याह चेतनेति । १३ चेतनाधिष्ठानरहितस्य । १४ स्थित्वा प्रवर्तनादि । कुत ? ईशस्याप्यचेतनत्वात् । १५ स्थित्वा प्रवर्तनादि स्यादीशे तर्हि । १६ प्रेरिता । १७ चेतनाधिष्ठितत्वे । १८ यदि चेतनाधिष्ठितं न स्यात्तर्हि । १९ ईश्वरेण । २० स्थित्वाप्रवर्तनेपि चेतनानधिष्ठानात् २१ नैयायिकाशङ्का । २२ अनवस्थालक्षणो दोष । २३ ईश्वरस्य स्वयं चेतनत्वात् । २४ प्रहीणो निकृष्ट । २५ अपरेश्वरम् । २६ यत स स्वयं बुद्धिमानिति हेत्वर्थे पूर्वोक्तं विशेषणं ज्ञेयम् । तद्वदीश्वरत्वविशेषणदानस्य फलं प्रहीणाकरणत्वमिति मनसि हेत्वर्थं विचार्य 'ईश्वर' इत्यपि प्राग्विशेषितम् । २७ सातिशयं यो वेत्ति, यत्तद्विधौ स प्रहीणकारी न भवतीति दर्शनादिति भाव । २८ कर्मणामपि वैचित्र्यमीश्वरज्ञानगतं तत्कृतं चेति तत्रापि तथात्वं कथं जातमित्याशङ्का न निवर्तते इत्यर्थं । २९ कर्माणि । ३० अत्रापीश्वरनिमित्तत्वाविशेषात् । ३१ कर्मणामीश्वरानिमित्तत्वे । ३२ ईश्वरस्य कर्मणा च चेतनाधिष्ठितत्वाभावे च । ३३ साधनस्य । ३४ ईश्वरकर्मभ्याम् । ३५ ईश्वरस्य । ३६ बीजाङ्कुरवत् । ३७ अनुमानेन सिद्धमित्यर्थं । ३८ नन्वचेतनं कर्म प्राणिन कथं स्वर्गादिकं प्रापयतीति चेदाह । ३९ युक्त्या साधिते 'अचेतनात्कर्मबन्धात्कामादय कामादिभ्यश्च कर्मबन्धवैचित्र्यमिति स्वभाव एव वस्तुनस्ततोत्र नोपालम्भ कर्तव्यो यौगेन । ४० ईश्वरे धत्तूरादौ वा प्रत्यक्षतो विपर्यीकृते चेतनस्वीकृतत्वे ततश्चाचेतनात्ततो चेतनपारतन्त्र्यचित्रीकरणादौ ।

कर्मबन्धः कामादिवैचित्र्यं कुर्यात् कामादिर्वा चेतनस्वभावः कथमचेतनं कर्मवैचित्र्यमिति तत्स्वभावस्योपालम्भः प्रवर्त्यते तथा कथमचेतनमुन्मत्तकादिभोजनमुन्मादादिवैचित्र्यं विदधीत प्राणिनामुन्मादादिर्वा चेतनः कथमचेतनं मृदादि रू[1]पवैचित्र्यमित्यपि तत्स्वरूपोपालम्भः किमिति प्रसज्यमानो निवर्त्यते ? तथा दृष्टत्वादिति चेत्तत एव प्रकृते[2]स्वभावोपालम्भोपि निवर्त्यतां, तथा[3]नुमितत्वात् ।

न चैवमीश्वरस्याप्यनुमितत्वादुपालम्भप्रसङ्गनिवृत्तिः स्यादिति शङ्कनीयं, तदनुमानस्यानेकदोषदुष्टत्वात् । तथा हि, तनुकरणभुवनादेः कार्यत्वादिसाधनं किमेकबुद्धिमत्कारणत्वं साधयेदनेकबुद्धिमत्कारणत्वं वा ? प्रथमपक्षे प्रासादादिनानेकसूत्रधारयजमानादिहेतु[4]ना त[5]दनैकान्तिकम् । द्वितीयपक्षे सिद्धसाधनं, नानाप्राणिनिमित्तत्वात्तदुपभोग्यतन्वादीनां, तेषां[6] त[7]ददृष्टकृतत्वात् । एतेन[8] बुद्धिमत्कारणसामान्यसाधने सिद्धसाधनमुक्तं, तद[9]भिमतविशेषस्याधिकरण[10]सिद्धान्तन्याये[11]नाप्यसिद्धेः । सामान्यविशेषस्य[12] साध्यत्वाददोष[13] इति चेन्न, दृष्टादृष्ट[14]विशेषाश्रयसामान्यविकल्पद्वयानतिवृत्तेः, दृष्ट[15]विशेषाश्रयस्य सामान्यस्य साध्यत्वे स्वेष्ट[16]विघातात्, अदृष्ट[17]विशेषाश्रयस्य सामान्यस्य साध्यत्वे साध्यशून्यत्वप्रसङ्गान्निदर्शनस्य[18] । दृष्टेतर[19]विशेषाश्रयसामान्यसाधनेपि स्वाभिमतविशेषसिद्धिः कुतः स्यात्[20] ? अधिकरणसिद्धान्तन्यायादिति चेत् कोयमधिकरणसिद्धान्तो नाम ? य[21]त्सिद्धावन्य[22]प्रकरण[23]सिद्धिः सोधिकरणसिद्धान्तः । ततो दृष्टादृष्टविशेषाश्रयसामान्यमात्रस्य बुद्धिमन्निमित्तस्य जगत्सु प्रसिद्धौ प्रकरणाज्जगन्निर्माणसमर्थः समस्तकारकाणां प्रयोक्ता सर्वविदलुप्तशक्तिर्विभुरशरीरत्वादिविशेषाश्रय एव सिध्यतीति चेत्स्यादेवं, यदि सकलजगन्निर्माणसमर्थेनैकेन समस्तकारकाणां प्रयोक्तृ[24]त्वसर्वज्ञत्वादिविशेषोपेतेनाविनाभावि दृष्टेतरविशेषाधिकरणबुद्धिमत्कारणसामान्यं कुतश्चित् सिध्येत्[25] । न च सिध्यति, अनेकबुद्धिमत्कारणेनैव स्वोपभोग्यतन्वादिनिमित्तकारणविशेषेण तस्य[26] व्याप्तत्वसिद्धेः समर्थनात् । तथा[27] सर्वज्ञवीतरागकर्तृकत्वे साध्ये घटादिनानैकान्तिकं साधनं[28], साध्यविकलं च निदर्शनम्[29] । सरागासर्वज्ञकर्तृकत्वे साध्येपसिद्धान्तः । सर्वथा[30] कार्यत्वं च साधनं तन्वादावसिद्धं, तस्य कथंचित्कारणत्वात् । कथंचित्कार्यत्वं तु विरुद्धं, सर्वथा बुद्धिमन्निमित्तत्वात्साध्याद्विपरीतस्य कथंचिद्बुद्धिमन्निमित्तत्वस्य साधनात् । तथा पक्षोप्यनुमानबाधितः स्यात्, 'अकृत्रिमं जगत्, दृष्टकर्तृकविलक्षणत्वात् खादिवत्' इत्यनुमानस्य तद्बाधकस्यान्यत्र[31] समर्थितत्वात् । इति सूक्तं, नेश्वरकृतेः[32] संसार इति ।

---

१ धत्तूरे भक्षिते सर्वं पीतरूपं भाति यतः । २ कामादिकर्मबन्धयोः । ३ कामादिकर्मबन्धयोः परस्परमचेतनत्वचेतनत्वकरणरूपतया । ४ अनेककारणेन । ५ यतः स प्रासादादिः कार्यत्वे सत्यप्येकबुद्धिमत्कारणको न । ६ तन्वादीनाम् । ७ तत्तत्प्राण्यदृष्टेन । ८ प्रथमानुमानेन न एकानेकबुद्धिमत्कारणत्वमुच्यते किंतु बुद्धिमत्कारणत्वसामान्यं साध्यते इत्याशङ्कायामाह । द्वितीयपक्षे सिद्धसाधनत्वसमर्थनेन । ९ विशेषस्तूपरिष्टात्सिद्धो भविष्यतीति कथं सिद्धसाधनमिति प्रश्ने प्राह । १० यत्सिद्धावन्यप्रकरणसिद्धिः सोधिकरणसिद्धान्तः (गौ० सू० १।१।३०)। यस्यार्थस्य सिद्धौ जायमानायामेव प्रस्तुतस्य प्रकरणस्य सिद्धिर्भवति सः । यथा तद्व्यणुकादिकं पक्षीकृत्योपादानगोचरज्ञानचिकीर्षाकृतिमज्जन्यत्वे साध्यमाने सर्वज्ञत्वमीशस्य ( गौ० सू० १।१।३० )। ११ अनन्तरं निराकरिष्यमाणत्वादिति भावः । १२ बुद्धिमत्त्वमात्रेण सामान्येन सहितो विशेषस्तस्य । १३ सिद्धसाधनलक्षणो दोषो न । १४ दृष्टं विशेषाश्रयं यस्य, अदृष्टं विशेषाश्रयं यस्य चेति सामान्यं द्विधा । १५ कतिपयकारकप्रयोक्तृत्वासर्वज्ञत्वप्रतिहतशक्तित्वाविभुत्वसशरीरत्वादि दृष्टविशेषाश्रयं सामान्यम् । १६ स्वेष्ट ईशः । १७ समस्तकारकप्रयोक्तृत्वादि अदृष्टम् । १८ कुम्भादेः । १९ दृष्टादृष्टविशेषाश्रयत्वं विहाय अन्यविशेषाश्रयत्वमेव भविष्यतीत्युक्ते प्राह । २० तथा सामान्यस्यासंभवादिति भावः । २१ यस्य कर्तृत्वमात्रस्य सिद्धौ । २२ अन्यस्य कर्तृविशेषेश्वरस्य । २३ प्रकरणेन क्षित्यादिकरणप्रघट्टकेन । २४ 'प्रयोक्ता' इति कपाठः । २५ एवमीश्वरसामान्यं यदि कुतश्चित्सिध्येत्तर्हि स्यादेवमित्यन्वयः । २६ बुद्धिमत्कारणसामान्यस्य । २७ दूषणान्तरे । २८ कार्यत्वादिति । २९ घटवदिति । ३० कार्यत्वं सर्वथा कथंचिद्वा तन्वादीनामिति विकल्प्य दूषयन्ति । ३१ तत्त्वार्थालङ्कारे श्लोकवार्तिके । ३२ 'तस्मान्नायमेकस्वभावेश्वरकृतः' इत्युक्तमत्रैव कारिकाप्रारम्भे ।

ननु यदि कर्मबन्धानुरूपतः संसारः स्यान्न तर्हि केषांचिन्मुक्तिरितरेषां संसारश्च, कर्मबन्धनिमित्ताविशेषादिति चेन्न, तेषां शुद्ध्यशुद्धितः[1] प्रतिमुक्तीतरसंभवादात्मनाम् । न हि जीवाः शश्वदशुद्धित एव व्यवस्थिताः स्याद्वादिनां याज्ञिकानामिव[2], कामादिस्वभावत्वनिराकरणात्[3], तत्स्वभावत्वे[4] कदाचिदौदासीन्योपलम्भविरोधात्[5] । नापि शुद्धित एवावस्थिताः[6] कापिलानामिव, प्रकृतिसंसर्गेऽपि[7] तत्र कामाद्युपलम्भविरोधात्, प्रकृतावेव कामाद्युपलम्भे पुरुषकल्पनावैयर्थ्यात्, तदुपभोगस्यापि तत्रैव संभवात् । न ह्यन्यः[8] कामयतेऽन्यैः[9] काममनुभवतीति वक्तुं युक्तम् । नापि सर्वे संभवद्विशुद्धय एव जीवाः प्रमाणतः प्रत्येतुं शक्याः, संसारिशून्यत्वप्रसङ्गात् । किं तर्हि? शुद्ध्यशुद्धिभ्यां व्यवतिष्ठन्ते, 'जीवास्ते शुद्ध्यशुद्धितः' इति वचनात् । ततः शुद्धिभाजामात्मनां प्रतिमुक्तिरशुद्धिभाजां संसारः । केषांचित्[10] प्रतिमुक्तिः स्वकाललब्धौ[11] स्यादिति प्रतिपत्तव्यम् । के पुनः शुद्ध्यशुद्धी जीवानामित्याहुः,—

शुद्ध्यशुद्धी पुनः शक्ती ते पाक्यापाक्यशक्तिवत्[12] ।
साद्यनादी तयोर्व्यक्ती स्वभावोऽतर्कगोचरः ॥ १०० ॥

शुद्धिस्तावज्जीवानां भव्यत्वं केषांचित्सम्यग्दर्शनादियोगान्निश्चीयते[13] । अशुद्धिरभव्यत्वं तद्वैपरीत्यात्[14] सर्वदा प्रवर्तनादवगम्यते छद्मस्थैः, प्रत्यक्षतश्चातीन्द्रियार्थदर्शिभिः । इति भव्येतरस्वभावौ[15] शुद्ध्यशुद्धी जीवानां तेषां सामर्थ्यासामर्थ्ये शक्त्यशक्ती इति यावत् । ते[16] माषादिपाक्यापरशक्तिवत् संभाव्येते सुनिश्चितासंभवद्बाधकप्रमाणत्वात् । तत्र शुद्धेर्व्यक्तिः सादिस्तदभिव्यञ्जकसम्यग्दर्शनादीनां सादित्वात् । एतेनानादिः सदाशिवस्य शुद्धिरिति प्रत्युक्तं प्रमाणाभावाद्[17] दृष्टातिक्रमादिष्टविरोधाच्च[18] । अशुद्धेः पुनरभव्यत्वलक्षणाया व्यक्तिरनादिस्तदभिव्यञ्जकमिथ्यादर्शनादिसंततेरनादित्वात् । पर्यायापेक्षयापि शक्तेरनादित्वमिति[19] चेन्न, द्रव्यापेक्षयैवानादित्वसिद्धेः । इति शक्तेः प्रादुर्भावापेक्षया[20] सादित्वम् । ततः शक्तिर्व्यक्तिश्च स्यात्सादिः[21], स्यादनादिरित्यनेकान्तसिद्धिः[22] । यदि[23] वा जीवानामभिसन्धिनानात्वं[24] शुद्ध्यशुद्धी । स्वनिमित्तवशात्[25] सम्यग्दर्शनादिपरिणामात्मकोऽभिसंधिः शुद्धिः, मिथ्यादर्शनादिपरिणामात्मकोऽशुद्धिर्दोषावरण-[26]

---

१ मिथ्यादर्शनादिपरिणामात्मकाभिसंधिरशुद्धि सम्यग्दर्शनादिपरिणामात्मको भाव शुद्धिश्चेति उत्तरकारिकाद्वितीयव्याख्याने शुद्ध्यशुद्धिशब्दार्थो वक्ष्यते । २ मीमांसकानाम् । ३ बन्धकारणस्य कामादिस्वभावस्य तद्विपरीतप्रवृत्त्या निराकर्तुमर्हत्वादित्यर्थ । ४ जीवाना शश्वत्कामादिस्वभावत्वे । ५ कामादिभावे तरतमभावोपलम्भविरोधाच्च । ६ सर्वदा । ७ प्रकृतिविनाशे मुक्तावस्थाप्राप्तौ यथा कामादिर्नोपलभ्यते । ८ प्रकृति । ९ पुरुष । १० यदि शुद्धिभाजा प्रतिमुक्तिस्तदा सा सर्वदा कुतो न भवेदित्याह । ११ स्वकाललब्धिश्च का कथं चेति लब्धिसारादवलोकनीयम् । सक्षेपतस्तु सर्वार्थसिद्धौ द्वितीयाध्यायप्रारम्भेपि दर्शिता । १२ यथा माषमुद्गादौ कुत्रचित्पचनशक्तिरस्ति, ते च निमित्तसंनिधौ पचन्ति, येषु च वन्ध्येषु ( कोरडू इतिख्यातेषु ) तच्छक्तिर्नास्ति ते कदाचिदपि न पचन्ति । अत एव तयोर्व्यक्ती अपि क्रमेण साद्यनादी । तद्वज्जीवविशुद्ध्यशुद्ध्योर्ज्ञेयम् । १३ आदिना ज्ञानचारित्रसंग्रह. । १४ मिथ्यादर्शनादियोगात् । १५ योग्यताऽयोग्यते । १६ शुद्ध्यशुद्धी । १७ जीवा अशुद्धास्तु शरीरादिना पारतन्त्र्यादिहेतो प्रत्यक्षानुमानप्रमाणाभ्यामनुभूयन्ते, परतु सदा शिवरूपा ( शुद्धस्वरूपा अनादित एवेति ) न केनचित्प्रमाणेन निश्चीयन्ते, अशुद्धत शुद्धिकरणे सादिशुद्धेरनुमानगोचरत्वात् । इत्यादिविचारे कृते सति न सदा शिवरूपता कस्यचिदनुभवपथमुपढौकते । १८ शिवस्य विशुद्धिव्यक्तिः सादिर्विशुद्धिव्यक्तित्वादितरजीवशुद्धिव्यक्तिवत् पदार्थमात्रे विशुद्धिव्यक्तिवद्वा, इतीष्टविरोध । १९ शुद्ध्यशुद्धिरूपायाः । २० प्रादुर्भाव —पर्याय । २१ पर्यायापेक्षया । २२ द्रव्यस्वभावापेक्षया । २३ कारिकाया प्रकारान्तरेण व्याख्या । २४ अभिसधिरभिप्राय । २५ मूलं भावयति । तन्निमित्तं सम्यग्दर्शनादिघातकसप्तप्रकृत्युपशमादि । २६ मिथ्यादर्शनादिकर्मोदयनिमित्तवशाज्जायते । तदुदयश्च सदा संसारे इति अशुद्धिव्यक्तिरप्यनादि. ।

हानीतरलक्षणत्वात्[1]तेषां[2] शुद्ध्यशुद्धि[3]शक्त्योरिति भेदमाचार्यः प्राह[4], ततोन्यत्रापि—भव्याभव्याभ्यां भव्येष्वेव, साधनादी प्रकृतशक्त्योर्व्यक्ती सम्यग्दर्शनाद्युत्पत्तेः पूर्वमशुद्ध्यभिव्यक्तेर्मिथ्यादर्शनादिसंतति-रूपायाः कथंचिदनादित्वात्, सम्यग्दर्शनाद्युत्पत्तिरूपायाः पुनः शक्त्यभिव्यक्तेः सादित्वात् । कुतः शक्तिप्रतिनियम इति चेत्, तथास्वभावा[5]दिति ब्रूमः । नहि भावस्वभावाः पर्यनुयोक्तव्याः[6], तेषामतर्कगोचरत्वात् । ननु[7] प्रत्यक्षेण प्रतीतेर्थे स्वभावैरुत्तरं वाच्यं सति पर्यनुयोगे[8], न पुनरप्रत्यक्षे, अतिप्रसङ्गादिति चेन्न, अनुमानादिभिरपि प्रतीते वस्तुनि भावस्वभावैरुत्तरस्याविरोधात्[9] प्रत्यक्षवदनुमा-नादेरपि प्रमाणत्वनिश्चयात् । ततः परमागमात्सिद्धप्रामाण्यात् प्रकृतजीवस्वभावाः[10] प्रतीतिमनुसरन्तो न तर्कगोचरा यतः[11] पर्यनुयुज्यन्ते, तर्कगोचराणा[12]मप्यागमगोचरत्वेन पर्यनुयोगप्रसङ्गात् । तद्वत्[13]प्रत्यक्षविषयाणा-मपि[14] । इति न प्रत्यक्षागमयोः स्वातन्त्र्य[15]मुपपद्येत तर्कवत् । तदनुपपत्तौ[16] च नानुमानस्योदयः स्यात्, धर्मि-प्रत्यक्षादेः[17] प्रतिज्ञायमानागमार्थस्य च प्रमाणान्तरापेक्षत्वादित्यनवस्थानात्[18]। ततः सूक्तं, कर्मबन्धानुरूपत्वेपि कामादिप्रभवस्य भावससारस्य द्रव्यादिसंसारहेतोः प्रतिमुक्तीतरसिद्धिर्जीवानां शुद्ध्यशुद्धिवैचित्र्यादिति ।

ननु चोपेयतत्त्वस्य सर्वज्ञत्वादे[20]रुपायतत्त्वस्य ज्ञापककारकविकल्पस्य हेतुवादहैवादेः प्रमाणनयैरेव कार्त्स्न्यै-कदेशतोधिगमः कर्तव्यो नान्यथा तदधिगमो[21]पायान्तराणामत्रैवान्तर्भावात्, 'प्रमाणनयैरधिगम' इति वचनात्[22] । तत्र प्रमाणमेव तावद्वक्तव्यं, तत्स्वरूपादि[23]विप्रतिपत्तिसद्भावात् तन्निराकरणमन्तरेण तदध्यवसा-यानुपपत्तेः । इति भगवता पृष्टा इवाचार्याः प्राहुः,—

तत्त्वज्ञानं प्रमाणं ते युगपत्सर्वभासनम् ।
क्रमभावि च यज्ज्ञानं स्याद्वादनयसंस्कृतम् ॥ १०१ ॥

प्रमाणलक्षणसंख्याविषयविप्रतिपत्तिरनेन व्यवच्छिद्यते । तत्त्वज्ञानं प्रमाणमिति वचनाद[24]ज्ञानस्य निराकारदर्शनस्य[25] सन्निकर्षादेश्चाप्रमाणत्वमुक्तं, तस्य स्वार्थाकारप्रमितिं प्रति साधकतमत्वानुपपत्तेः, ज्ञान-

---

१ शुद्ध्यशुद्धी । २ जीवानाम् । ३ वक्ष्यमाणसादित्वानादित्वप्रकारेण । ४ कुत प्राह ? साधनादी प्रकृतशक्त्योर्व्यक्ती इति । ५ अशुद्धत्वमनादित एव मन्तव्यं, सादित्वे मते सति तत पूर्वं शुद्धे संभवापत्ते । शुद्धिस्तु न जीवाना पूर्वत., पूर्वत. शुद्धिस्वीकारे पुनर्बन्धासंभवापत्ते । न च बन्धो नास्तीति, प्रत्यक्षतो बन्धकृते शरीरादिपारतन्त्र्यस्यानुभवात् । इति बन्धस्याशु-द्धदशायामेव संभवादनादिरशुद्धि । शुद्धिस्तु प्रयोगजन्यत्वात्सादि । कनकपाषाणगतसुवर्णस्याशुद्धिरनादिस्तच्छुद्धिस्तु सादिरिति दृष्टान्तोत्र भावनीय.। अयमेवात्र द्वयो साधनादित्वेऽतर्कगोचर स्वभावो विभावनीय । ६ पुन पुनर्विचारणीया । ७ यौग । ८ प्रश्ने । ९ अनुमानागमैर्निश्चितेपि पदार्थे स्वभावविरोधो नास्ति यत । १० भव्याभव्यत्वरूपा । ११ अन्यथेति शेष । १२ पदार्थानाम् । १३ पर्यनुयोगप्रसङ्गवत् । १४ कथमिदमिति प्रश्नप्रसङ्ग । १५ अस्ति चानयो स्वातन्त्र्यम् । पर्यनुयोगार्हं तु केवलमनुमितं वस्तु, कुत अत इत्यादितर्कैणैव तस्य तत्र निर्धारणात् । न च तथा प्रत्यक्षागमौ, प्रत्यक्षेण गृहीते उष्णेग्नौ, कुतोग्नेरुष्णत्वं ? जलवत्पदार्थत्वाच्छैत्यमेव कुतो नेति पर्यनुयोगायोग्यत्वात्, तथैवागमेनापि निर्धारिते सूक्ष्मव्यवहितादिवस्तुनि कुत इत्थमिति पर्यनुयोगासंभवात् । अयमागम· सत्योऽसत्यो वेति सामान्यप्रश्नस्य उत्तरनिर्धारणं यावत्तदसत्यस्वीकारेण तदु-क्तवस्तुनिश्चयाभाव इत्यन्यदेतत् । १६ स्वातन्त्र्यानुपपत्तौ । १७ शब्दादिर्धर्मी, स चासौ प्रत्यक्षश्चेति । १८ तर्कागमयोरन्य-तरस्य प्राधान्याप्राधान्यनियमाभावात् । १९ अनुमाने पक्षस्तावन्निश्चित एव वाच्यस्तदनिश्चयेऽनुमानोदयासंभवादिति सिद्धान्तितं खलु । निश्चयस्तु यदि कस्यचित्स्वातन्त्र्येण स्यात्तदैव तत्रानुमानं विधिनिषेधमुखेन प्रवर्तेत । स्वातन्त्र्येण निश्चयस्तु प्रत्यक्षागमगत एव । अतस्तन्निश्चिते पक्षे विशेषधर्मनिश्चयार्थमनुमान प्रवर्तते, नत्वनुमाननिश्चिते पक्षे, तत्र प्रवृत्तौ, तत्पक्ष-स्याप्यनुमानेन, तदनुमितस्यापि पुनरनुमानेन निश्चयप्रकारेऽनवस्थाया प्रवेशात् । तद्वद्यदि प्रत्यक्षागमगृहीतावपि पदार्था-वनुमानार्हौ तर्हि तत्राप्यनवस्था दुर्निवारा स्यात् । तत कुत्रापि नानुमिति स्यादिति भाव । २० आदिना मोक्षमार्गप्रणेतृ-त्वकर्मभूभृद्भेत्तृत्वे ग्राह्ये । २१ ननु च सत्संख्यादेर्निर्देशस्वामित्वादेश्चोपायान्तरस्यापि संभवात् किमुच्यते नान्यथेति प्रश्ने सत्याह । २२ तत्त्वार्थाधिगमस्य । २३ आदिना विषयफलादिग्रह । २४ उत्तरपदविशेषणमिदम् । २५ बौद्धाभिमतस्य ।

स्यैव स्वार्थाकारव्यवसायात्मनस्तत्र साधकतमत्वात् । नहि स्वार्थाकारव्यवसायशून्यं निर्विशेषवस्तुमात्रग्रहणं[1] दर्शनं[2]मिन्द्रियादिसन्निकर्षमात्रं[3] श्रोत्रादिवृत्तिमात्रं[4] वा यथोक्तपरिच्छित्तिं प्रति साधकतमं, त[5]द्भावाभावयो-स्तस्या[6]स्तद्वत्ता[7]पायात् । यद्भावे हि प्रमितेर्भाववत्ता यदभावे चाभाववत्ता तत्तत्र साधकतमं युक्तं, भावाभा-वयो[8]र्द्वयोस्तद्वत्ता[9] साधकतमत्वमिति वचनात् । न चैतद्दर्शनादिषु संभवति, तद्भावेपि स्वार्थप्रमितेः क्वचि[10]दभा-वात्, संशयादेरन्यथानुपपद्यमानत्वात्, त[11]दभावेपि च विशेषणज्ञानाद्विशेष्यप्रमितेः सद्भावोपगमात् । ननु ज्ञानस्याप्येवं साधकतमत्वं मा भूत् संशयादिज्ञाने सत्यपि यथार्थप्रमितेरभावात् त[12]दभावेऽपि च भावादिति चेन्न, तत्त्वग्रहणात् । तत्त्वज्ञानं प्रमाणमिति हि निगद्यमाने मिथ्याज्ञानं संशयादि मत्याद्याभासं व्यवच्छिद्यते । ततोस्य साधकतमत्वं यथोक्तमुपपद्यते एव । नन्वेवमपि तत्त्वज्ञानान्तरस्य प्रमेयस्य प्रमातुश्चात्मनः स्वार्थप्रमितिं प्रति साधकतमत्वात् प्रमाणत्वं कुतो न भवेदिति चेन्न, तस्य[13] कर्मत्वेन कर्तृ-त्वेन च साधकतमत्वासिद्धेस्तत्सिद्धौ करणत्वप्रसङ्गात् । करणस्य तत्त्वज्ञानात्मनः[14] प्रमाणत्वे को विरोधः ? तदेवं सकलप्रमाणव्यक्तिव्यापि साकल्येना[15]प्रमाणव्यक्तिभ्यो व्यावृत्तं प्रतीतिसिद्धं[16] तत्त्वज्ञानं प्रमाणलक्षणं, तस्य सुनिश्चितासंभवद्बाधकत्वात्; संभव[17]द्बाधकस्य, संशयिता[18]संभवद्बाधकस्य, कदाचित्क्वचित्कस्यचिन्निश्चिता[19]-संभवद्बाधकस्य च प्रमाणत्वायोगात्, प्रवृत्तिसामर्थ्य[20]स्यार्थवत्क्रिया[21]प्राप्तेरदुष्टकारणजन्य[22]त्वस्य लोक[23]संमतत्वस्य च प्रमाणलक्षणस्य तत्त्वार्थश्लोकवार्तिके प्रपञ्चतोऽपास्तत्वात् ।

ननु च तत्त्वज्ञानस्य सर्वथा प्रमाणत्वसिद्धेरनेकान्तविरोध इति न मन्तव्यं, बुद्धेरनेकान्तात्[24], येना-कारेण तत्त्वपरिच्छेदस्तदपेक्षया प्रामाण्य[25]मिति निरूपणात् । तेन प्रत्यक्षतदाभासयोरपि प्रायशः संकीर्ण[26]प्रामाण्येतरस्थितिरुन्नेतव्या, प्रसिद्धा[27]नुपहते[28]न्द्रियदृष्टेरपि चन्द्रार्कादिषु देशप्रत्यासत्त्या[29]द्य-भूताकारावभासनात्, तथोपहताक्षादेरपि संख्यादिविसंवादेपि चन्द्रादिस्वभावतत्त्वोपलम्भात् । कथमेवं[30] क्वचित्प्रमाणव्यपदेश एव क्वचिदप्रमाणव्यपदेश एवेति नियता लोकव्यवस्थितिरिति ? उच्यते, तत्[31]प्रकर्षापेक्षया व्यपदेशव्यवस्था[32] गन्धद्रव्यादिवत् । यथा च प्रत्यक्षस्य संवादप्रकर्षात्प्रमाणव्यपदेश-व्यवस्था प्रत्यक्षाभासस्य च विसंवादप्रकर्षादप्रमाणत्वव्यपदेशव्यवस्थितिः गन्धादिगुणप्रकर्षात्कस्तूरिकादेर्ग-न्धद्रव्यादिव्यपदेशव्यवस्था[33] तद्व्यवहारिभिरभिधीयते, तथानुमानादेरपि कथंचि[34]न्मिथ्याप्रतिभासेपि

---

१ ग्राहकम् । २ बौद्धोक्त निर्विकल्पकं ज्ञानम् । ३ नैयायिकोक्तम् । ४ साङ्ख्योक्तम् । श्रोत्रादीन्द्रियाणा विषयाकारेण परिणतिर्वृत्ति । ५ उक्ताना दर्शनादीनाम् । ६ परिच्छित्ते. । ७ तद्वत्ता—भावाभाववत्ता । ८ प्रमिते । ९ भावाभाववत्ता । १० दूरदेशस्थेऽर्थे । ११ विशेष्यविषयकसन्निकर्षदर्शनादेरभावेपि । १२ ज्ञानाभावेपि सन्निकर्षसद्भावादेव पदार्थप्रमितेर्भा-वात् । १३ तत्त्वज्ञानान्तररूपस्य प्रमेयस्य, कर्तुरात्मनश्च । १४ द्वयस्यापि । १५ देहलीदीपकन्यायेनायं शब्द पूर्वत्रोत्तरत्र च सवन्धनीय. । १६ इति विशेषणत्रयेण त्रयोपि लक्षणदोषा अव्याप्त्यतिव्याप्त्यसभवनामानो व्यावर्तिता । १७ सुनि-श्चितासभवद्बाधकत्वेऽपि प्रमाणलक्षणं कुत इत्युक्ते आह । अनेनासभवद्बाधकपदसाफल्यं जातम् । १८ निश्चितपदस्य साफ-ल्यमनेन । १९ सु इत्यस्य साफल्यमनेन, । सुष्टु–सकलदेशकालपुरुषापेक्षयेति व्याख्यानात् । प्रथमपरिच्छेदे तत्त्वोपप्लव-वादिनिराकरणावसरे तथैवोक्तत्वात् । २० नैयायिकोक्तस्य । २१ सौगतीयस्य । २२ भाट्टस्य । २३ प्राभाकरस्य । २४बुद्धेः प्रामाण्यमेवेति नियमाभावात्, असद्बुद्धेरपि बुद्धित्वात् । २५ बुद्धे । २६ तिमिरादिना हि सकीर्णता—एकत्र विजातीयमे-लनम् । तच्च प्रामाण्याप्रामाण्ययोरत्र । यथा द्विचन्द्रादिज्ञाने सख्याप्रकारकबोधाशोऽप्रमाण., चन्द्रत्वप्रकारकबोधांशस्तु प्र-माणः । एवमन्यत्रापि । २७सकीर्णप्रमाणत्वं कथमित्युक्ते उदाहरणगर्भक हेतुमाह । २८ अनुपहतत्वं काचकामलादिदोषेण । २९ देशस्य–भूम्या ,प्रत्यासत्तिश्चन्द्रेण सह वर्तते इत्यादिप्रकारको ज्ञानाश कदाचित्क्वचित्कस्यचिज्जायते स अतथ्यार्थत्वादभू-ताकारावभास । ३० एवं कदाचित् प्रमाणे सकीर्णत्वेपि संभवे सति । ३१ तयो –सवादविसवादयो· । ३२ प्रमाणाप्र-माणत्वयो । ३३ 'व्यवस्थावत्' इति पाठ. सम्यक् । ३४ बौद्धापेक्षया । अथवा प्रत्यक्षवद्विशदज्ञानाभावापेक्षया ।

तत्त्वप्रतिपत्त्यैव प्रामाण्यमन्यथा चाप्रामाण्यमित्यनेकान्तसिद्धिः। एकान्तकल्पनायां तु नान्तर्बहिस्तत्त्वसंवेदनं व्यवतिष्ठेत ताथागतमते स्वयमद्वयाद्द्वैयादिप्रतिभासनाद्रूपादिस्वलक्षणानां च तथैवादर्शनाद्यथा व्यावर्ण्यन्ते। स्वसंवेदनस्य संविन्मात्रे प्रमाणत्वेपि तदद्वयक्षणिकपरमाणुरूपे विपर्ययप्रतिभासादप्रमाणत्वकल्पनायां कथमेकान्तहानिर्न स्यात् यत्प्रमाणं तत् प्रमाणमेवेति? रूपादिदर्शनस्य च रूपादिमात्रे प्रमाणत्वेपि स्थूलस्थिरसाधारणाकारप्रतिभासस्य भ्रान्तत्वादप्रमाणताया कथमेकान्तसिद्धिः? तस्माद्दृष्टस्य भावस्य दृष्ट एवाखिलो गुण इति[12][13] तद्विशेषोपलम्भाभ्युपगमेपि भ्रान्तेर्निश्चीयते[17] नेति[18] साधनं संप्रवर्तते इति वचनात् तद्व्यवसायवैकल्यं सिद्धमेव। तत्र च तद्व्यवसायवैकल्ये वौ दानहिंसादिचित्ते कचिद्धर्माधर्मसंवेदनवत् परोक्षत्वोपपत्तेस्त्रिरूपलिङ्गबलभाविनामपि विकल्पानामतत्त्वविषयत्वात् कुतस्तत्त्वप्रतिपत्तिः? 'मणिप्रदीपप्रभयोर्मणिबुद्ध्याभिधावतः। मिथ्याज्ञानाविशेषेपि विशेषोर्थक्रियां प्रति ॥१॥ यथा, तथाऽयथार्थत्वेप्यनुमानावभासयोः। अर्थक्रियानुरोधेन प्रमाणत्वं व्यवस्थितम् ॥ २ ॥' इति, मणिप्रदीपप्रभादृष्टान्तोपि स्वपक्षघाती, मणिप्रदीपप्रभादर्शनस्यापि संवादकत्वेन प्रामाण्यप्राप्त्या प्रमाणान्तर्भावविघटनात् कथं प्रमाणे एवेत्यवधारणं घटते? न हि तत्प्रत्यक्षं स्वविषये[36] विसंवादनात् शुक्तिकादर्शनवद्रजतभ्रान्तौ। तत्राप्रतिपन्नव्यभिचारस्य यदेव मया दृष्टं तदेव मया प्राप्तमित्येकत्वाध्यवसायाद्विसंवादनाभावान्मणिप्रभाया मणिदर्शनस्य प्रत्यक्षत्वे तिमिराशुभ्रमणनौयानसंक्षोभाद्याहितविभ्रमस्यापि धावद्वादितरुदर्शनस्य प्रत्यक्षत्वप्रसङ्गादभ्रान्तमिति विशेषणमध्यक्षस्य न स्यात्। धावता दर्शनादवस्थितानामगाना प्राप्तेर्विसंवादात् भ्रान्तत्वसिद्धेस्तस्याप्रत्यक्षत्वे कुञ्चिकाविवरे मणिप्रभाया मणेर्दर्शनादपवरकाभ्यन्तरेऽपरिप्राप्तेः कथमिव तस्याभ्रान्तता युज्येत? इति न प्रत्यक्षं तत्स्यात्। नापि लैङ्गिकं, लिङ्गलिङ्गिसंबन्धाप्रतिपत्तेरन्यथा दृष्टान्तेतरयोरेकत्वात् किं केन कृतं स्यात्? तदेतेन 'प्रतिपन्नव्यभिचारस्य य इत्थं प्रतिभासः स्यात् स न संस्था-

---

१ अतत्त्वप्रतिपत्तिश्चेत्तत कदाचित्तर्हीत्यर्थ। २ एतत्पद देहलीदीपकन्यायेनोभयत्र ग्राह्यम्। ३ स्वयमिति प्रतिभासनात्। ४ अद्वयत्वमन्तस्तत्त्वापेक्षया। आदिशब्देन निरंशक्षणिकपरमाणुरूपग्रह। ५ आदिना ग्राह्यग्राहकाकारादिग्रहणम्। ६ रूपादिस्वलक्षणानि च (बहिस्तत्त्वानि) यथा व्यावर्ण्यन्ते तथैव तेषामदर्शनादिति संबन्ध। ७ सौगतैः। ८ ननु चैकान्तकल्पनायामपि स्वसंवेदनस्य संविन्मात्रस्य प्रतिभासितया प्रमाणतयैवाङ्गीकरणात्कुतो नान्त संवेदन व्यवतिष्ठेत? इत्याशङ्क्याह। ९ द्वैताक्षणिकादिरूपेण। १० अर्थाना निरंशत्व सिद्ध यस्मात्तव मते। ११ स्वलक्षणस्य। १२ सति। १३ तस्य–रूपादिस्वलक्षणस्य। १४ विशेषस्य। १५ सदृशापरापरोत्पत्तिजननेनाभ्युपगमे। १६ पश्यनी। १७ स्वलक्षणम्। १८ हेतो। १९ सर्व क्षणिकं सत्त्वादित्याद्यनुमानम्। २० हे बौद्ध इति तव वचनेन तवैव दूषणमापद्यते। २१ तस्य–रूपादिविशेषस्य। २२ प्रत्यक्षस्य निर्विकल्पकत्वेन। २३ अनेकान्तसिद्धौ। २४ पुनस्तत्त्वप्रतिपत्तिरिति संबन्ध। २५ ज्ञानक्षणे। २६ निरंशादिदर्शनस्य (प्रत्यक्षस्य)। विकल्पोऽवस्तुनिर्भास इत्यादिवचनात्। २७ निरंशक्षणिकदर्शनेन तत्त्वप्रतिपत्तिर्मा भूदनुमानेन भविष्यतीत्याशङ्क्याह। २८ उभयो पृथक् पृथक् प्रभा ग्राह्या। २९ साधारम्यमणिप्रदीपप्राप्तिरूपाम्। ३० अनुमान तदाभासश्च तयो। ३१ क्षणिकत्वग्राहकत्वेनेत्यर्थ। ३२ स्वस्य–ताथ। ३३ प्रत्यक्षस्य। ३४ मणिप्रभादर्शनं तृतीय प्रमाण सिद्धमिति प्रमाणद्वयसंख्याविघटनात्। ३५ द्वे प्रत्यक्षानुमाने सौगतमते। ३६ मणिभारूपे। ३७ यतो दीपप्रभाप्रत्यक्षस्यापि दर्शनात्। ३८ रजतत्वेन ग्रहणाच्छुक्तिकादर्शन यथा न प्रत्यक्षम्। ३९ प्रत्यक्षे। ४० नु। ४१ नु। ४२ अवलोकनस्य। ४३ उच्यते तु अभ्रान्तत्वविशेषणम्। ४४ तद्दर्शनस्य। ४५ हे बौद्ध, अङ्गीक्रियमाणे। ४६ द्वारे यत् कुञ्चिकाप्रवेशविवर तत्र। ४७ मणे। ४८ अतो मणिप्रभादर्शन प्रत्यक्षे नान्तर्भवतीत्यर्थ। ४९ मणिप्रभाया मणिदर्शन लैङ्गिकेपि नान्तर्भवति। ५० तस्य लैङ्गिकत्वे। ५१ साधित। येन–दृष्टान्तेन क्षणिकत्वाद्यनुमानमपि दृष्टान्तदार्ष्टान्तिकयोरेकत्वे साधितं न स्यात्। ५२ पुन।

नर्वर्जितः, एवमन्यत्र[2] दृष्टत्वादनुमानं[3] तथा सती'ति प्रज्ञाकरमतमप्यपास्तं, स्वयमसिद्धेन दृष्टान्तेन[4] साध्य[5]-सिद्धेरकरणात् । कदाचित्संवादात् प्रत्यक्षत्वेनैव मणिप्रभायां मणिदर्शनस्य दृष्टान्तत्वमयुक्तं, कादाचि-त्कार्थप्राप्तेरारेकादेरपि संभवात् प्रत्यक्षत्वप्रसक्तेः ।

सर्वदा संवादात्तस्य[6] प्रत्यक्षत्वमुदाहरणत्वं चेत्यप्यसारं, तदसिद्धेः[7] । न हि मिथ्याज्ञानस्य संवादनै-कान्तः[8] संभवति, विरोधात् । नन्वनुमानस्य संभवत्येवावस्तुविषयत्वेन मिथ्याज्ञानस्यापि सर्वदा संवादनं लिङ्गज्ञानवत् पारम्पर्येण वस्तुनि प्रतिबन्धात् । तदुक्तं—'लिङ्गलिङ्गिधियोरेवं पारम्पर्येण वस्तुनि । प्रतिब-न्धात्तदाभासं शून्ययोरप्यवञ्चनम्[9] ॥' इति कश्चित्[10] सोप्यनालोचिताभिधायी, सर्वदा संवादिनः प्रत्यक्षवन्मि-थ्याज्ञानत्वविरोधात् । तथा[11] न लैङ्गिकं सर्वथैवा[12]विसंवादकत्वात्[13] । न हि तदालम्बनं[14] भ्रान्तं, प्राप्ये[15]पि वस्तुनि भ्रान्तत्वप्रसङ्गात् । प्राप्ये तस्या[16]विसंवादकत्वे[17] स्वालम्बने[18]प्यविसंवादकत्वम् । इति कथं न सर्वथै-वाविसंवादकत्वमनुमानस्य ? सामान्यविशेषात्मकवस्तुविषयत्वप्रसिद्धेः प्रत्यक्षवत्, अन्यथा प्रमाणत्वायो-गात् । तस्मात् सूक्तं, तत्त्व[19]ज्ञानमेव प्रमाणं कारण[20]सामग्रीभेदात् प्रतिभासभेदेपीति । न ह्यनुमानस्य वस्तुविषयत्वाद्विशदप्रतिभासनमापाद[21]यितुं शक्यं, विदूरस्थपादपादिदर्शनेनाविशदप्रतिभासेन व्यभिचारात् । पृथग्जन[22]प्रत्यक्षस्यापि योगिप्रत्यक्षवदसंभवात् सकलसमारोपत्वप्रसङ्गात् स्वलक्षणविषयत्वा[23]विशेषात् । तद-विशेषेपि योगीतरप्रत्यक्षयोः कारणसामग्रीविशेषाद्विशेषपरिकल्पनायां, तत एव प्रत्यक्षानुमानयोरपि प्रति-भासविशेषोस्तु, सर्वथा बाधकाभावात् ।

प्रमाणमेवं[24] वा तत्त्वज्ञानं नामेत्यवधारणमनुमन्तव्यं, फलज्ञानस्यापि स्वाव्यवहितफलापेक्षया प्रमाण-त्वोपयोगात्[25] । ततः स्वलक्षणदर्शनानन्तरभाविनस्तत्त्वव्यवसायस्य[26] प्रमाणत्वोपपत्तेः प्रत्यक्षमनु-मानमिति प्रमाण एवेत्याद्यवधारणं प्रत्याचष्टे[27] सौगतानां, तस्य[28] प्रत्यक्षानुमानाभ्यां प्रमाणान्तरत्वात् । नहीन्द्रियव्यवसायोऽप्रमाणमविसंवादकत्वात् । अनधिगतार्थाधिगमाभावात्तदप्रमाणत्वे लैङ्गिकस्यापि मा भूत् प्रमाणत्वं, विशेषाभावात् । अनधिगतत्वस्वलक्षणाध्यवसायादनुमितेरतिशयकल्पनायां प्रकृत[29]स्यापि न वै प्रमाणत्वं प्रतिषेध्यमनिर्णीतनिर्णया[30]त्मकत्वात् क्षणभङ्गानुमानवत् । क्षणिकत्वा-नुमानस्य ह्यनिश्चिताध्यवसाय एवानधिगतस्वलक्षणाध्यवसायः । स[31] च ध्वनिदर्शनानन्तरभाविनो व्यवसा[32]-

---

१ वर्तुलादित्वेन । २ मण्युपेते देशे । ३ ममायं प्रतिभासो मणिसंस्थानवान् एवं प्रतिभासत्वादन्यत्र संप्रतिपन्नप्रति-भासवदिति । स्यादित्यध्याहार । ४ मणिप्रभाया मणिदर्शनस्याप्रत्यक्षत्वादसिद्धदृष्टान्तता । ५ अनुमानसत्त्वस्व-सिद्धेः । ६ मणिप्रभाया मणिदर्शनस्य । ७ सर्वदा सवादासिद्धे. । ८ मिथ्याज्ञानं नहि सर्वदा विसंवादवर्जितमेक-रूपमेव भवतीति युक्तम् । ९ अविसंवादनम् । १० बौद्धविशेषः । ११ कुञ्चिकाविवरे मणिज्ञानस्यावस्तुविषयतया मिथ्याज्ञानत्वप्रकारेण । १२ आलम्बनप्रापणप्रकाराभ्याम् । १३ लैङ्गिकस्य । १४ अनुमानालम्बनं सामान्यमात्रम् । १५ स्वलक्षणे । १६ लैङ्गिकस्य । १७ अङ्गीकृते । १८ अनुमानविषये अग्न्यादिसामान्यस्वरूपे । १९ अनेनानुमानेन स्वरू-पविप्रतिपत्तिर्निराकर्तव्या । २० ननु प्रत्यक्षवदनुमानेपि यदि कथंचित्तत्त्वज्ञानत्वं तर्हि भेदः कुत इत्युक्ते प्राह । स च कारणभेद इन्द्रियलिङ्गाभ्या प्रत्यक्षानुमानयोर्यथाक्रमम् । २१ प्रत्यक्षवद्विशदप्रतिभासनमनुमाने कुतो नेति नाशङ्कनीयं, प्रत्यक्षेपि दूरत्वादिकारणभेदादविशदत्वप्रतीतेरिति भावः । २२ पृथग्जन. साधारणजन. । २३ योगीतरप्रत्यक्षयो. । २४ अनेन संख्याविप्रतिपत्तिर्निराक्रियतेऽन्यत्वावधारणेन तत्त्वव्यवसायस्य प्रत्यभिज्ञानतर्काणां प्रमाणत्वोपपत्त्या परपरिक-ल्पितद्व्यादिसंख्याविघटनात् । २५ प्रत्यक्षेणाधिगतस्यैवार्थस्यानुमानादिनाधिगमात् । २६ सविकल्पकस्य । २७ निराक-रोति । २८ व्यवसायस्य । २९ व्यवसायस्य । ३० निर्विकल्पकप्रत्यक्षेण यदनिर्णीतं नीलादिकं तन्निर्णय एवात्मा यस्य सविकल्पकस्येति । ३१ अनिश्चिताध्यवसायः । ३२ सविकल्पकस्य ।

यस्यास्तीति युक्तं प्रमाणत्वम् । ध्वने[1]रखण्डशः श्रवणादधिगमोपि प्राथम[2]कल्पिकस्तत्त्व[3]निर्णीति[4]रेव, तद्वशात् तत्त्वव्यवस्थानान्निर्णीते[5]रेव मुख्यप्रमाणत्वोपपत्तेः, [6]तदत्यये [7]दृष्टेरपि विसंवादकत्वेन प्रामाण्यानुपपत्तेरदर्शनानतिशायनात्तद्दर्शनाभावेपि तत्त्वनिश्चये [7]तदन्यसमारोपव्यवच्छेदलक्षणे प्रमाणलक्षणाङ्गीकरणात् ।

न[8]नु निश्चितार्थमात्रस्मृतेरप्येवं प्रमाणत्वापत्तेरतिप्रसङ्ग इति चेन्न, प्रमितिविशेषाभावेत[9]रपक्षानतिक्रमात् । प्रथमपक्षे क्वचित्कुतश्चि[10]द्धूमकेतुलैङ्गिकवन्निर्णीतार्थमात्रस्मृतेरधिगतार्थाधिगमात् प्रामाण्यं मा भूत्, प्रमितिविशेषाभावात् । द्वितीयपक्षे पुनरिष्टं प्रामाण्यमनुस्मृतेः, प्रमितिविशेषसद्भावात् । प्रकृतनिर्णयस्य प्रामाण्ये हि न किंचिदतिप्रसज्यते, दृष्टस्याप्य[11]निश्चितस्य निश्चया[12]त्, प्रत्यक्षतो निश्चिते धूमकेतौ ज्वालादिविशेषाद्धूमकेतुलैङ्गिकस्मृतौ तु विशेषपरिच्छित्तेरभावादप्रामाण्यनिदर्शनात् । परिच्छित्तिविशेषसद्भावेपि साकल्येन स्मृतेरप्रामाण्यकल्पनायामनुमानोत्थानायोगः, संबन्धस्मृ[13]तेरप्रमाणत्वा[14]त्, तस्या अपि लैङ्गिकत्वेन प्रामाण्ये परापरसंबन्धस्मृतीनामनुमानत्वकल्पनादनवस्थानात् संबन्धस्मृतिमन्तरेणानुमानानुदयात् । सुदूरमपि गत्वा संबन्धस्मृतेरननुमानत्वे प्रमाणत्वे च सिद्ध, स्मृतेरुपयोगविशेषात् प्रमाणत्वमविसंवादादनुमानवत् । तच्च[15] यथा प्रत्यक्षमनुमानमिति प्र[16]माणे एवेत्यवधारणं प्रत्याचष्टे, तथा त्रीण्येव[17] प्रमाणानि [18]चत्वार्येव [19]पञ्चैव [20]षडेवेत्यवधारणम[21]पि, स्मृतेरागमोपमानार्थापत्त्यभावेष्वनन्तर्भावात्, [22]तदन्तर्भावेनुमानान्त[23]र्भाववदनवस्थानानुषङ्गादागमाद्युदयविरोधात्, शब्दादिस्मृतिमन्तरेण तदनुपपत्तेः । यदि पुनरागमाद्युत्थापकसामग्रीत्वाच्छब्दादिस्मृतेरागमादिप्रमाणत्वमप्युररीक्रियते तदा शब्दादिप्रत्यक्षस्यापि तत्सामग्रीत्वादागमादित्वप्रसङ्गः । तथा च स्मृतिवन्न प्रत्यक्षं प्रमाणान्तरं स्यात् । प्रमाणान्तरत्वे वा स्मृतेरपि प्रमाणान्तरत्वं, दर्शनानन्तराध्य[24]वसायवन्निर्णीतेपि[25] कथंचिदतिशायनादनुमानव[26]त् ।

एवं प्रत्यभिज्ञानं प्रमाणं, व्यवसायातिशयोपपत्तेः प्रत्यक्षा[27]दिवत्, [28]तत्सामर्थ्याधीनत्वात्प्रमाणत्वस्थितेः, अविसंवादस्या[29]पि स्वार्थव्यवसायात्मकत्वात् । अन्यथा हि विसंवादः स्यात्संश[30]यादिवत् । न चेदं प्रत्यभिज्ञानमव्यवसायात्मकं, तदेवेदं तत्सदृशमेवेदमित्येकत्वसादृश्यविषयस्य द्विविधप्रत्यभिज्ञान-

---

१ निर्विकल्पकदर्शनानन्तरं समुद्भूतोधिगमोपि ( व्यवसायरूप ) प्राथमकल्पिको, मुख्यवृत्त्या प्रमाणभूतस्य समुदितप्राकृतननिर्णीतिरेवानधिगतलक्षणाध्यवसायवानेव । केचिदित्थमभिप्रायं वदन्ति, यन्निर्विकल्पकमन्तरेणैव विकल्पः प्रथमतः समुत्पद्यते इति हेतोरनधिगतग्राही स इति । २ आविर्भूत एव । ३ सविकल्पकस्य । ४ तस्या निर्णीते । ५ निर्विकल्पकस्य । ६ ननु निर्णीतिवशान्न तत्त्वव्यवस्थानं किंतु परम्परया दर्शनवशादेवेति शङ्कायामाहु । ७ तस्मिन्नीले, अन्यस्यानीलादे ( समारोपरूपस्य ) अनीलव्यावृत्तिर्नीलमिति शब्दार्थपरिज्ञानादेव व्यवच्छेदो भवति । ८ सौगत । ९ सा निश्चितार्थस्मृति किं प्रमितिविशेषोत्पादिका नवेति विकल्पद्वयं कृत्वा विचार्यते । १० प्रथमत प्रत्यक्षतो निश्चिते धूमकेतौ तत्संबन्धिनी या लैङ्गिकरूपा स्मृतिः सा न विशेषप्रमितिजनिका अतस्तस्या यथा न प्रामाण्यम् । ११ दृष्टोपि समारोपात्तादृगिति न्यायवचनात् । १२ स्मृतिरूपविकल्पेन । १३ व्याप्तिरूपाया । १४ तेन विशेषपरिच्छेदाभावात् । १५ स्मृतिप्रामाण्यं कर्तृभूतम् । १६ एते द्वे वैशेषिकबौद्धयो । १७ साङ्ख्याभिमतानि । १८ न्यायवादिनाम् । १९ प्राभाकराणाम् । २० जैमिनीयानाम् । २१ प्रत्याचष्टे इति पूर्वेण पदेन संबन्ध । २२ तस्या स्मृते, तत्र आगमादिष्वन्तर्भावे । २३ अनन्तरमेवोक्तमनुमानान्तर्भावनम । २४ दर्शनानन्तराध्यवसायस्य प्रामाण्यविषयं उक्तं पूर्वम् । २५ प्रत्यक्षादिना । २६ व्याप्तिप्रतिपत्तेपि विशेषतयानुमानेन ग्रहणं यथा । २७ व्यवसायातिशयोपपत्ते प्रत्यक्षं प्रमाणम् । २८ व्यवसायातिशयोपपत्तावपि प्रामाण्य कुत इत्युक्ते आह । २९ ननु व्यवसायसामर्थ्याधीनत्वं कुतः ? अविसंवादाधीनत्वात्प्रमाणत्वस्येत्याशङ्कायामाहु । ३० संशयादेरर्थव्यवसायात्मकत्वाभावेन विसंवादो यथा ।

स्याबाधितस्यारेकादिव्यवच्छेदेनावगमात्, बाध्यमानस्याप्रमाणत्वोपपत्तेस्तदाभासत्वात्। न च सर्वं प्रत्यभिज्ञानं बाध्यमानमेव, प्रत्यक्षस्य तद्विषये प्रवृत्त्यसंभवादबाधकत्वादनुमानस्यापि तद्विषयविपरीतसर्वथाक्षणिकविसदृशवस्तुव्यवस्थापकस्य निरस्तत्वात्तद्बाधकत्वायोगात्। ततः प्रत्यभिज्ञानं तत्त्वज्ञानत्वात्प्रमाणं प्रत्यक्षवत्।

एवं लिङ्गलिङ्गिसंबन्धज्ञानं[2] प्रमाणमनिश्चित[3]निश्चयादनुमानवद्। सत्त्वक्षणिकत्वयोर्धूमतत्कारणयोर्वा साकल्येन व्याप्तिप्रतिपत्तौ[4] न प्रत्यक्षमुत्सहते, सन्निहितार्थाकारानुकारित्वात् इन्द्रियजमानसस्वसंवेदनप्रत्यक्षस्य योगिप्रत्यक्षस्य अपरीक्षाक्षमत्वाच्च[5]। नानुमानम्[6] अनवस्थानुषङ्गात्[7]। सुदूरमपि गत्वा तदुभयव्यतिरिक्तं[8] व्यवस्थानिमित्त[9]मभ्युपगन्तव्यम्। तदस्माकमूहाख्यं प्रमाणमविसंवादकत्वात् समारोपव्यवच्छेदकत्वादनुमानवत्। न चोहः संबन्ध[10]ज्ञानजन्मा, यतोनवस्थानं स्यादपरापरोहानुसरणात्, तस्य[11] प्रत्यक्षानुपलम्भजन्मत्वात्[12] प्रत्यक्षवत्, स्वयोग्यतयैव स्वविषये प्रवृत्तेः[13][14]। संबन्ध[15]ज्ञानमप्रमाणमेव, प्रत्यक्षानुपलम्भपृष्ठभाविविकल्पत्वाद् गृहीतग्रहणात्, संबन्ध[16]प्रतिपत्तौ प्रत्यक्षानुपलम्भयोरेव भूयः प्रवर्तमानयोः प्रमाणत्वादित्येके, तेप्यसमीक्षितवाचः, कथंचिदपूर्वार्थविषयत्वादूहाख्यविकल्पस्य प्रमाणत्वोपपत्तेः प्रत्यक्षानुपलम्भयोः[17] सन्निहितविषयबलोत्पत्तेरविचारकत्वाच्च[18] व्याप्तौ प्रवृत्त्यसंभवात्। यदि पुनरप्रमाणमेव व्याप्तिज्ञानं संबन्धं वा व्यवस्थापयेत्तदा प्रत्यक्षमनुमानं चाप्रमाणमेव स्वविषयं व्यवस्थापयेत् किं तत्प्रमाणत्वसाधनायासेन? लिङ्गलिङ्गिसंबन्धप्रतिपत्तिरर्थापत्तेरित्यन्ये[19]। तेषामपि संबन्धज्ञानपूर्वकत्वे[20]र्थापत्तेरर्थापत्त्यन्तरानुसरणादनवस्था[21]। तदपूर्वकत्वे स्वयमनिश्चितानन्यथाभवन[22]स्यार्थापत्त्युदयत्व[23]प्रसङ्गः, परस्पराश्रयणं च, सत्यनुमानज्ञाने तदन्यथानुपपत्त्या संबन्धज्ञानं, सति च संबन्धज्ञानेनुमानज्ञानमिति[24] नैकस्याप्युदयः[25] स्यात्। न चान्यत्संबन्धा[26]र्थापत्त्युत्थापकमस्त्यनुमानज्ञानाद् येन परस्पराश्रयणं न स्यात्। एतेनोपमानादेः संबन्धप्रतिपत्तिः प्रत्युक्ता। तस्मादुपमानादिकं[27] प्रमाणान्तरमिच्छतां तत्त्व[28]निर्णयप्रत्यवमर्श[29]प्रतिबन्धाधिगम[30]प्रमाणत्वप्रतिषेधः प्रायशो वक्तुर्जडिमानमाविष्करोति।

---

१ नित्यं तत्प्रत्यभिज्ञानादिति कारिकाव्याख्याने। २ तर्कोहाद्यपरनामकम्। ३ लिङ्गलिङ्गिनो. संबन्धोऽविनाभाविरूपोऽनिश्चित, तस्य। ४ व्याप्तिप्रतिपत्तिकरणायेत्यर्थं। ५ चकारो भिन्नक्रमे। तेन 'योगिप्रत्यक्षस्य चापरीक्षाक्षमत्वात्' इति मन्तव्य पाठ। योगिप्रत्यक्षस्य तन्मतानुसार निर्विकल्पकत्वेन व्याप्त्यग्राहकत्वम्। ६ अनुमानमपि व्याप्तिग्रहणे न क्षमम्। ७ अनुमानज्ञाने व्याप्तिज्ञानं कारण सत् तेनैवानुमानेन गृह्यतेनुमानान्तरेण वा? तेनैव चेदन्योन्याश्रय। अनुमानान्तरेण चेदनवस्था, व्याप्तिग्रहणायानुमानस्य अनुमानोत्पत्तये च व्याप्तिज्ञानस्योत्तरोत्तरं कल्पनानुषङ्गात्। ८ प्रत्यक्षानुमानव्यतिरिक्तम्। ९ ऊहग्रहणनिमित्तम्। १० ऊहान्तरजन्मा। ११ ऊहस्य। १२ उपलम्भानुपलम्भरूपज्ञानेन जन्यत्वात्। १३ ऊहविषये ऊहप्रवृत्ते। १४ अनवस्थानं नेति सबन्ध। १५ सौगताशङ्का। १६ तर्हि लिङ्गलिङ्गिनो प्रतिपत्ति कथमित्याशङ्क्य स एवाह। १७ अनुपलम्भग्राहकमनुमानं, उपलम्भग्राहक तु प्रत्यक्षम्। १८ 'बौद्धमते निर्विकल्पकत्वात्प्रत्यक्षानुमानयो' इति कपुस्तकटिप्पणम्। किंतु एकविषयकत्वादुभयोर्विचारायोग्यत्वं, विचारस्यानेकविषयकानेकज्ञानोपस्थितौ सत्यामेव सभवात्। 'तत एव विचारस्तर्केणैव साध्य इति भाव इत्यस्मन्मतम्। १९ लिङ्गलिङ्गिनो सबन्धोस्ति, अनुमानान्यथानुपपत्ते.' इत्येवंरूपाया। इति मीमासका। २० अर्थापत्ति सबन्धज्ञानपूर्विका सबन्धज्ञानापूर्विका वेति विकल्प्य दूष्यते। २१ लिङ्गलिङ्गिसबन्धप्रतिपत्त्यर्थापत्त्यो परस्परम्। २२ पुंस। 'अपि'शब्दोत्राध्याहार्य। २३ लिङ्गलिङ्गिनो सबन्धविषयिकाया अर्थापत्तेरुदयोऽनिर्धारितसबन्धपूर्वस्यापि पुंस स्यात्। न च तथा संभवति। २४ देहलीदीपकन्यायेनोत्तरत्रापि योज्य 'इति'शब्द। २५ सबन्धज्ञानानुमानयो। २६ सबन्धग्राहिका यार्थापत्तिस्तस्या.। २७ अनुमानान्तरमिव विवक्षितानुमानं सबन्धयुक्तमित्युपमानात्संबन्धप्रतिपत्तौ परस्पराश्रयणं यत। २८ तत्त्वनिर्णयशब्देनेन्द्रियजो विकल्पः स्मृतिश्च गृह्यते। २९ प्रत्यवमर्शः—प्रत्यभिज्ञा। ३० प्रतिबन्धाधिगमः—तर्क।

**इति प्रत्यक्षं परोक्षमित्येतद्द्वितयं प्रमाणमभ्युपगन्तव्यम्, अर्थापत्त्यादेरनुमानव्यतिरेके[1]पि, परोक्षेन्तर्भावात्** । तदुक्त,-प्रत्यक्षं विशद ज्ञानं त्रिधा[2]श्रितमविप्लवम्[3] । परोक्ष प्रत्यभिज्ञादि प्रमाणे[4] इति संग्रहः । तत[5]: सूक्तमिदमवधारणं प्रमाण[6]मेव तत्त्वज्ञानमिति, प्रत्यक्षपरोक्षतत्त्वज्ञानव्यक्ती[7]नां साकल्येन प्रमाणत्वोपपत्तेः ।

**तत्र[8] सकलज्ञानावरणपरिक्षयविजृम्भितं केवलज्ञानं युगपत्सर्वार्थविषयम्** । करणक्रमव्यवधानातिवर्तित्वात्[9] युगपत्सर्वभासनम् । तत्त्वज्ञानत्वात्प्रमाणम् । **तथोक्तं, 'सर्वद्रव्यपर्यायेषु केवलस्य'** इति सूत्रकारैः[10] । केवलज्ञानदर्शनयोः क्रमवृत्तित्वात् चक्षुरादिज्ञानदर्शनवद्युगपत्सर्वभासनमयुक्तमिति चेन्न, तयोर्यौगपद्यात्, तदावरणक्षयस्य युगपद्भावात्, ' मोहक्षयाज्ज्ञानदर्शनावरणान्तरायक्षयाच्च केवलम् ' इति, अत्र प्रथम मोहक्षयस्ततो ज्ञानावरणादित्रयक्षयः सकृदिति व्याख्यानात् । **तज्ज्ञानदर्शनयोः क्रमवृत्तौ हि सर्वज्ञत्वं कादाचित्कं स्याद्, दर्शनकाले ज्ञानाभावात्काले च दर्शनाभावात्** । सततं च भगवतः केवलिनः सर्वज्ञत्वं सर्वदर्शित्वं च 'साध्यपर्यवसिते केवलज्ञानदर्शने' इति वचनात्[11] । कुतस्तत्सिद्धिरिति चेन्निर्लोठितमेतत् सर्वज्ञसिद्धि[12]प्रस्तावे, न पुनरिहोच्यते । केवलज्ञानदर्शनयोर्युगपद्भावः कुतः सिद्ध इति चेत्, **सामान्यविशेषविषययोर्विगतावरणयोरयुगपत्प्रतिभासायोगात् प्रतिबन्धकान्तराभावात्** । सामान्यप्रतिभासो हि दर्शनं विशेषप्रतिभासो ज्ञानम् । तत्प्रतिबन्धकं ज्ञानावरणं दर्शनावरणं च । यदुदयादस्मदादेः केवलज्ञानदर्शनानाविर्भावः । तयोश्च युगपदात्मविशुद्धिप्रकर्षविशेषात् परिक्षयसिद्धेः कथमिवायुगपत्प्रतिभासनं सामान्यविशेषयोः स्यात्[13] ? प्रक्षीणाशेषमोहान्तरायस्य[14] प्रतिबन्धान्तर[15] च कथमिव संभाव्येत[16], येन युगपत्तद्द्वितय न स्यात् ? अस्तु नाम केवलं तत्त्वज्ञानं युगपत्सर्वभासन, मतिश्रुतावधिमनःपर्यय[17]ज्ञानं तु कथमित्युच्यते, **शेषं सर्वं क्रमवृत्ति, प्रकारान्तरासंभवात्[18]** । तेन क्रमभावि च यन्मत्यादितत्त्वज्ञान तदपि प्रमाणमिति व्याख्यात भवति, 'मतिश्रुतावधिमनःपर्ययकेवलानि ज्ञानं, तत्प्रमाणे' इति सूत्रकारवचनात् । ननु[19] च मत्यादिज्ञानचतुष्टयमपि युगपदिष्यते, 'तदादीनि[20] भाज्यानि[21] युगपदेकस्मिन्[22]ना चतुर्भ्यः' इति सूत्रसद्भावादिति न शङ्कनीय, मत्यादिज्ञानानामनुपयुक्ता[23]नामेव यौगपद्यवचनात् 'सह द्वौ न स्त, उपयोगौ[24]दि'त्यार्षवचनात् । छद्म[25]स्थज्ञानदर्शनोपयोगापेक्षया तद्वचनमिति चेन्नैवं विशेषे[26]णानभिधानात् । सामान्यचोदनाश्च विशेषेष्ववतिष्ठन्ते इति न्यायात्

---

१ परमतापेक्षया व्यतिरेक । २ इन्द्रियमनोतीन्द्रियताजन्यसामर्थ्याना त्रिधात्वात् । ३ अभ्रान्तम् । ४ द्वे 'तत्प्रमाणे' इत्यनेन मोक्षशास्त्रेणोक्ते, अथवा निर्दोषतया सिद्धे । ५ प्रमाणद्वयं सिद्धं यत । ६ कारिकाप्रथमव्याख्याने तत्त्वज्ञानमेव प्रमाणमित्युक्त, तेन प्रमाणस्याज्ञानादिस्वरूपविप्रतिपत्ति· परिहृता । द्वितीयव्याख्याने तु प्रमाणमेव तत्त्वज्ञानमित्यवधारणपरं वचनमुक्तं, तेन प्रमाणसख्याया या विप्रतिपत्ति ( केचित्त्रीणि प्रमाणानि मन्यन्ते, केचिच्चत्वारि पञ्च, षड्वा, केचिच्च ( बौद्धा ) द्वे एव मन्यन्ते पर त्वन्यथा, इति ) सा परिहृता । इतोग्रे विषयविप्रतिपत्तिं निराचिकीर्षवो वक्ष्यन्ते तत्रेत्यनेन । ७ व्यक्तिर्भेद । ८ प्रत्यक्षं परोक्षं चेति द्वयोर्मध्ये प्रत्यक्षस्य भेद स्वरूप चाख्यान्ति । ९ इन्द्रियालम्बनम्, अनुक्रमस्वभाव, व्यवहितपदार्थग्रहणस्वभावं चातिक्रम्य वर्तते तत्केवलमित्यर्थ । १० तत्त्वार्थाधिगमे मोक्षशास्त्रे । ११—१२ 'सूक्ष्मान्तरितदूरार्था ' इति कारिकाव्याख्याने । १३—१४ सर्वज्ञस्य । १५ ज्ञानावरणदर्शनावरणाभ्यामन्यत् । १६ रागद्वेषादिकस्य मोहजन्यस्य ज्ञानदर्शनप्रतिरोधकस्य मोहान्तरायाशेषक्षये असभवात् । १७ क्रमवृत्तित्वप्रकारमन्तरा । १८ इत्यनेन तस्य पञ्चप्रकारकस्यापि ज्ञानस्य द्विधात्वेन विभज्य प्रमाणत्वमाख्यात यतस्तत क्रमवर्तिनो मत्यादेरपि प्रमाणत्वमिति सिद्धम् । १९ प्रकारान्तरासभवादिति भाष्यपदं विवरीतुमिच्छुराशङ्क्य समर्थयते । २० मत्यादीनि । २१ सभावनीयानि विकल्प्यानि एकं वा द्वे वा त्रीणि वा, कदाचिच्चत्वारि वा युगपदिति । २२ जीवे । २३ लब्धिरूपाणां योग्यतारूपाणा वा, न तु विषयान्परिच्छिन्दताम् । २४ उपयोजनस्यैकदा एकविषये एव सभवात् । २५—२६ छद्मस्थस्य युगपद्द्वौ उपयोगौ न स्त केवलिनस्तु स्त इति आर्षे विशिष्य नोक्तत्वात् ।

तद्विशेषगतिरिति चेन्न, अन्यथापि विशेषगतिसंभवात्—तन्नैवेति, प्रमाणाभावात्। 'क्वचिदात्मनि मत्यादिज्ञानानि सोपयोगानि युगपत्संभवन्ति सकृत्सन्निहितस्वविषयत्वात् दीर्घशष्कुलीभक्षणादौ चक्षुरादिज्ञानपञ्चकवदित्यनुमानादिष्टविशेषगतिरस्तु। न चेदमुदाहरणं साध्यविकलं चक्षुरादिज्ञानानां क्रमवृत्तौ परस्परव्यवधानाद्विच्छेदोपलक्षणप्रसङ्गात्, प्रसिद्धक्रमभाविरूपादिज्ञानव'दिति न मन्तव्यं, चक्षुरादिज्ञानपञ्चकस्यापि परस्परव्यवधानेपि विच्छेदानुपलक्षणं, क्षणक्षयवत् ताथागतस्य, स्यात्। तेषां यौगपद्ये हि संतानभेदात् परस्परपरामर्शाभावः सन्तानान्तरवत्। यौगपद्येपि संतानभेदाभावेऽक्षमनोध्यक्षयोरपि यौगपद्यमस्तु विशेषाभावात्। मानसप्रत्यक्षेपि चक्षुरादिज्ञानानन्तरप्रत्ययोद्भवेन कश्चिद्विशेषः क्रमवृत्तौ चक्षुरादिज्ञानवद् व्यवधानप्रतिभासविकल्पप्रतिपत्तेरसंभवात्। न च चक्षुरादिज्ञानपञ्चकात्सहभाविनः क्रमभुवा तदनन्तरजन्मनां मानसप्रत्यक्षाणां व्यवधानेन प्रतिभासभेदप्रतिपत्तिरस्ति। तेषां लघुवृत्तेः क्रमभावित्वेपि न व्यवधानेन प्रतिभासविकल्पानां प्रतिपत्तिरिति चेत्तत एव चक्षुरादिज्ञानानामपि विच्छेदोपलक्षणं मा भूत्, क्रमभावेपि विशेषाभावात्। यौगपद्ये हि स्पर्शादिप्रत्यवमर्शविरोधः पुरुषान्तरवत्। जैनानामपि क्रमभावश्चक्षुरादिवेदनानामुपपन्न एव। तद्वन्मत्यादिज्ञानानामपि सोपयोगानां क्रमभावो निरुपयोगानां तु यौगपद्यमविरुद्धं, विपर्ययस्यानेकान्तात्मकत्वात्। ततः सोपयोगं मतिज्ञानादि क्रमभावि स्याद्वादनयलक्षितं प्रतिपत्तव्यं, तस्य नयोपलक्षितत्वात् केवलज्ञानवत् स्याद्वादोपलक्षितत्वाच्च। कुत एतदिति चेद्विकलसकलविषयत्वात् तयोः। तत्त्वज्ञानं वा स्याद्वादनयसस्कृतं प्रतिपत्तव्यं क्रमाक्रमभावित्वे। कथम्? 'तत्त्वज्ञानं स्यादक्रमं, सकलविषयत्वात्। स्यात् क्रमभावि, विकलविषयत्वात्। स्यादुभयं, तदुभयविषयत्वात्। स्यादवक्तव्यं, युगपद्वक्तुमशक्तेः।' इत्यादि, सप्तभङ्ग्याः प्रमाणनयवशादुपपत्तेः। अथवा प्रतिपर्यायं स्याद्वादनयसंस्कृत प्रतिपत्तव्यं, स्यात्प्रमाणं स्वार्थप्रमितिं प्रति साधकतमत्वात्, स्यादप्रमाणं प्रमाणान्तरेण प्रमेयत्वात् स्वतो वा। अथवा स्यात्सत्, स्वरूपादिचतुष्टयात्, स्यादसत्, पररूपादिचतुष्टयात् इत्यादि योजनीयम्।

अथ प्रमाणफलविप्रतिपत्तिनिवृत्त्यर्थमाहुः—

**उपेक्षा फलमाद्यस्य शेषस्यादानहानधीः।**

---

१ सौगताशङ्का। २ ससारिणि। ३ व्यापारसहितानि। ४ उपलम्भन—इति पाठः सम्यक्। ५ प्रायोभावस्तु एकैकोपयोगस्यैव सर्वससारिषु अत एकैकस्य क्रमवर्तिन उपयोगस्य प्रसिद्धत्वमुक्तम्। ६ जैन। ७ कालकृते। ८ विच्छेद क्रमः। ९ चक्षुरादिज्ञानानाम्। १० रूपज्ञानरसज्ञानादीनाम्। ११ ज्ञानपञ्चकस्य। १२ हे सौगत, अङ्गीक्रियमाणे। १३ सौगतेन क्रमभावितयाभ्युपगतयो। १४ विच्छेदोपलक्षणस्य। १५ तदेव दीर्घशष्कुलीभक्षणकाले। १६ भाष्यद्वयं भावयति। १७ मानसप्रत्यक्षाणामनेकेषामपि क्रमोत्पादेपि शीघ्रशीघ्रतयोत्पादात्। १८ प्रतिभासभेदानाम्। १९ लघुवृत्तित्वेनोभयत्र। २० 'इति' इति पदमध्याहार्यमत्र। इति हेतो। २१ चक्षुरादिवेदनस्य क्रमवर्तित्ववत्। २२ मत्यादिज्ञानस्वरूपमेव तद्वर्णने विषय'। २३ लब्ध्युपयोगाद्यपेक्षया। २४ मत्यादिज्ञानस्य। २५ स्याद्वादोपलक्षितत्वम्। २६ नयस्याद्वादयोः। २७ केवलज्ञानापेक्षया। तदपि तत्त्वज्ञानमेव। २८ मत्यादिज्ञानापेक्षया। तदपि तत्त्वज्ञानमेव। २९ स्यात्क्रमावक्तव्यं, स्यादक्रमावक्तव्यं, स्यात्क्रमाक्रमावक्तव्यमिति भङ्गत्रयमादिशब्देन ग्राह्यम्। ३० षष्ठी। ३१ प्रमाणवशादक्रमत्वे नयवशात् क्रमत्वे च सति। ३२ अर्थग्रहणपरिणमनमेव ज्ञाने पर्याय। ३३ तत्त्वज्ञानम्। ३४ इत्येवंरीत्या अवक्तव्यादयोपि पञ्च भङ्गा योजने सुगमा.। ३५ अत्रापि शेषपञ्चभङ्गा योजयितु सुसाध्या। ३६ कैवल्यस्य फल( व्यवहितम् )मुपेक्षा, शेषस्य मत्यादे परंपराफलमादानहानधी। पूर्वं ( उपेक्षा ) चापि फलं मत्यादे। अज्ञाननाशस्तु सर्वस्यापि ज्ञानस्य साक्षात् फलमिति स्वानुभवगोचरमेतदिति कारिकार्थ। ३७ केवलस्य। ३८ मत्यादे.।

पूर्वा वा[1]ऽज्ञाननाशो वा सर्वस्यास्य स्वगोचरे ॥ १०२ ॥

कारिकापाठापेक्षया युगपत्सर्वभासनं केवलमाद्यं, तस्य व्यवहितं फलमुपेक्षा । कुत इति चेदुच्यते, सिद्धप्रयोजनत्वात्केवलिनां सर्वत्रो[2]पेक्षा । हेयस्य ससारतत्कारणस्य हाना-दुपादेयस्य मोक्षतत्कारणस्योपात्तत्वात् सिद्धप्रयोजनत्वं नासिद्धं भगवताम् । ननु[3] करुणावतः[4] परदुःखजिहासोः कथमुपेक्षा ? तदभावे कथं चाप्तिः[5] ? इति चेन्न, तेषा मोहविशेषात्मिकायाः करुणायाः संभवाभावात् स्वदुःखनिवर्तनवदकरुणयापि[6] वृत्तेरन्यदुःखनिराचिकीर्षायाम् । नन्वस्मदादिवद्दयालोरेवात्मदुःखनिवर्तनं युक्तम् । तथा हि[7], यो यः स्वात्मनि दुःखं निवर्तयति स स स्वात्मनि करुणावान्, यथास्मदादिः । तथा च योगी स्वात्मनि संसारदुःखं निवर्तयतीति युक्तिः । न चात्र हेतुर्विरुद्धोऽनैकान्तिको वा, विपक्षे[8] सर्वथाप्यभावात् बाधकप्रमाणसामर्थ्यात्, स्वसाध्याविनाभावसिद्धेः । तथा हि, यः स्वात्मन्यकरुणावान्न स स्वदुःखं निवर्तयति, यथा द्वेषादे[10]र्विषभक्षक [11]इति, साध्यव्या[12]वृत्तौ साधनव्यावृत्तिनिश्चयात् । भयलोभादिनात्मदुःखनिवर्तकैर्व्यभिचारी हेतुरिति चेन्न, तेषामपि करुणोत्पत्तेः । न ह्यात्मन्यकरुणावतः परतो भयं लोभो मानो वा संभवति, तस्या[13]त्मकरुणाप्रयुक्तत्वात् । इति परम्परया करुणावानेवात्मदुःखमनशनादिनिमित्तं निवर्तयति । भयादिहेतुका वा कस्यचिदात्मनि करुणोत्पद्यते । सोत्पन्ना सती स्वदुःखं निवर्तयति । इति साक्षात्करुणयात्मदुःखनिवर्तने प्रवर्तते ततो न व्यभिचारः । एतेनादृष्टविशेषवशादात्मनि दुःखनिवर्तनैः[14]परैर्व्यभिचारचोदना निरस्ता, ततः करुणोत्पत्तेरेव तन्निवर्तनात् । तन्नाकरुणस्यात्मदुःखनिवर्तनं दृष्टम् । अतोयमसमाधि[15]रिति चेन्न, स्वभावतोपि स्वपरदुःखनिवर्तननिबन्धनत्वोपपत्तेः प्रदीपवत् । न वै प्रदीपः कृपालुतयात्मानं परं वा तमसो दुःखहेतोर्निवर्तयतीति । किं तर्हि ? तथा स्वभावात् । कल्पयित्वापि कृपालुतां तत्कारणे[16]स्वभावसामर्थ्यं मृग्यम् । एवं[17] हि परम्परा[18]परिश्रमं परिहरेत् । ततो निःशेषान्तरायक्षयादभयदान स्वरूपमेवात्मनः प्रक्षीणावरणस्य परमा दया । सैव च मोहाभावाद्रागद्वेषयोरप्रणिधानादुपेक्षा । [19]तीर्थकरत्वनामोदयात्तु हितोपदेशप्रवर्तनात् परदुःखनिराकरणसिद्धिः । इति न बुद्धवत्करुणयास्य प्रवृत्तिर्भगवतो, येनोपेक्षा केवलस्य फलं न स्यात् ।

अव्यवहितं[20] तु फलमाद्यस्याज्ञाननिवृत्तिरेव, स्वविषये मत्यादिवत् । तथा हि, मत्यादेः साक्षात्[21] फलं स्वार्थव्यामोहविच्छेद[22]स्तदभावे[23] दर्शनस्या[24]पि[25] सन्निकर्षाविशेषात् क्षणपरिणामोपलम्भ-

---

१ अज्ञाननाश' साक्षात्फलम्, उपेक्षा तु परपराफलम् । २ हेये उपादेये च । ३ सौगत । ४ केवलिन । ५ च इति पक्षान्तरे । ६ यथा अकरुणोपि प्राणी स्वात्मदु ख निवर्तयति । ७ अयं प्राणी करुणावान् स्वात्मदु खनिवर्तकत्वादिति प्रतिज्ञाहेतुप्रयोगोध्याहार्य । ८ अकरुणावति । ९ अयं प्राणी स्वात्मन्यकरुणोस्ति स्वात्मदु खनिवर्तकत्वाभावात् इति बाधकेन प्रमाणेनाकरुणे विपक्षे स्वदु खनिवर्तकत्वस्य हेतोरभाव साध्यते । १० आदिना भयदु खपरिग्रह । ११ इत्येव बाधकप्रमाणम् । १२ साकल्येनैकदेशेन वा । १३ भयादे । १४ तटस्थै । १५ भगवति करुणाभावलक्षण पूर्वोक्त । १६ करुणास्तित्वं मत्त्वा तदुत्पत्तिकारणं किमिति प्रश्ने, न तदुत्पादकं केवलिनि कर्म, किंतु स्वभाव एवेति मन्यताम् । तथा च परम्परया स्वभाव एव तिष्ठति । १७ एवं कल्पनापेक्षयात साक्षात्स्वभावकल्पनमेव वर, यत्तथास्वभावोस्ति केवलिनाम् । रागद्वेषादिजनिका ससारिजनवत्करुणा मास्तु । १८ कर्मणा करुणोत्पद्यते, तेन च भगवान्स्वपरदु खं जिहासतीति परम्पराश्रम, किमर्थं क्रियते ? स्वपरदु खनिवर्तनस्वभाव एवाभिमन्यताम् । १९ उपेक्षासत्त्वे परदु खनिराकरणसिद्धिस्ततो भगवतः कथमित्युक्ते आह । तीर्थकरत्वं नाम कर्म । २० साक्षात् । २१ अव्यवहितम् । २२ स्वविषयकाज्ञाननिवृत्ति । २३ अज्ञाननिवृत्त्यभावे । २४ निर्विकल्पकप्रत्ययस्य । अथवा सामान्यावलोके सत्यपि सन्निकर्षवन्न ज्ञानोत्पत्तिरिति भाव' । २५ न केवलं मत्यादेरेव ।

वेद[1]विसंवादकत्व[2]ासंभवात्। तद[3]नेन प्रमाणाद्भिन्नमेव फलमिति[4] व्युदस्तम्। तथा परम्परया हानोपादानसंवित्तिः फलमुपेक्षा वा मत्यादेः। एतेनाभिन्नमेव प्रमाणात्फलं[5]मिति निरस्तम्। तथा हि, करणस्य[6] क्रिया[7]याश्च कथंचिदेकत्वं प्रदीपतमोविगम[8]वत्, नानात्वं च परश्वादिवत्[9]। ननु[10] च 'यथा देवदत्तः काष्ठं परशुना छिनत्तीति करणस्य क्रियायाश्च नानात्वं सिद्धं, छिदेः काष्ठस्थत्वात्परशोर्देवदत्तस्थत्वात्, तथा प्रदीपस्तमो नाशयत्युद्द्योतेनेत्यत्रापि करणस्योद्द्योतस्य क्रियायाश्च तमोविनाशात्मिकाया नानात्वमेव प्रतीयते। तद्वत्करणस्य प्रमाणस्य क्रियायाश्च फलज्ञानरूपाया नानात्वेनैव भवितव्यं, तदनानात्वे दृष्टान्ताभावात्' इति केचित् तेपि न प्रतीत्यनुसारिणः प्रदीपः स्व[11]ात्मनात्मा[12]नं प्रकाशयतीति प्रतीतेः, प्रदीपात्मनः[13] कर्तु[14]रनन्यस्य कथंचित्करणस्य, प्रकाशनक्रियायाश्च प्रदीपात्मिकायाः कथंचिदभेदसिद्धेः। तद्वत्प्रमाणफलयोः कथंचिदव्यवहितत्वे[15]सिद्धिरुदाहरणसद्भावात्। सर्वथा[16] तादात्म्ये तु प्रमाणफलयोर्न व्यवस्था, तद्भावविरोधात्। न[17] हि सारूप्य[18]मस्य[19] प्रमाणमधिगतिः फलमिति सर्वथा तादात्म्ये सिध्यति। दर्शनस्यासारूप्य[20]व्यावृत्तिः सारूप्यमनधिगतिव्यावृत्तिरधिगतिरिति व्यावृत्तिभेदादेकस्यापि प्रमाणफलव्यवस्थेति चेन्न, स्वभावभेदमन्तरेणान्यव्यावृत्तिभेदानुपपत्तेः। तस्माद्ग्राह्य[21]संविदाकारयोः प्रमाणफलव्यवस्थायामपि व्यामोहविच्छेदाभावे[22] विसंवादानिराकरणे तद[23]ज्ञस्ये[24]व विषदृष्टे[25]ः प्रमाणत्वं न प्रतिपत्तुमर्हति। तत्र[26]तैव प्रमाणत्वे[27] क्षणिकत्वाद्यनुमान[28]मधिगतार्था[29]धिगमलक्षणत्वान्न वै प्रमाणमिति निरूपितप्रायम्।

ननु च स्याद्वादनयसंस्कृतं तत्त्वज्ञानमित्युक्तं तद्वत् फलमपीति स एव तावत् स्याच्छब्दो[30]भिधीयतामित्याहुः—

वाक्येष्वनेकान्त[31]द्योती गम्यं[32] प्रति विशेषणम्[33]।
स्यान्निपातोर्थयोगित्वात्तव केवलिना[34]मपि ॥ १०३ ॥

किं पुनर्वाक्यं नामेत्युच्यतां, तत्र विप्रतिपत्तेः। तदुक्तम्, ( १ ) आख्यातशब्दः ( २ ) संघातो[35], ( ३ ) जातिः संघातवर्तिनी। ( ४ ) एकोनवयवः शब्दः ( ५ ) क्रमो ( ६—७ ) बुद्ध्यनुसंहृती ॥ १ ॥ ( ८ ) पदमाद्यं ( ९ ) पदं चान्त्यं ( १० ) पदं सापेक्षमित्यपि। वाक्यं प्रति मतिर्भिन्ना

---

१ यथा क्षणपरिणामग्राहकस्य निर्विकल्पज्ञानस्य अर्थनिश्चायकत्वं न, तद्वत्सन्निकर्षस्य दर्शनस्य मत्यादेर्वाप्यर्थनिश्चायकत्व न, इत्युभयोरप्यविसंवादकत्वं न। २ विसवादकत्वं निर्विकल्पस्य कुत ? अनुमानाश्रयान्यथानुपपत्तेः। ३ ज्ञानस्यैव साक्षात्फलमर्थाज्ञानाभाव इत्यनेन, ज्ञानस्य साक्षात्फलमर्थाज्ञानाभाव एवेत्यनेनोक्तेन भावेन वा। ५ यौगकल्पितम्। सौगतोक्तम्। ६ व्यापारज्ञानलक्षणप्रमाणस्य। ७ परिच्छित्तिलक्षणस्य फलस्य। ८ तमोविनाश एव परम्परया प्रदीप इति यथा। ९ परशुस्तत्क्रिया छिदिश्चेत्युभयं पृथक् पृथगाश्रयोपलम्भात्। १० नैयायिकाशङ्का। ११ स्वकीयरूपेण। १२ स्वरूपम्। १३ प्रदीपरूपस्य। १४ प्रदीपात्। १५ अव्यवहितत्वमेकत्वम्। १६ सौगतं प्रत्याह। १७ तद्भावविरोधं दर्शयन्ति। १८ मेयरूपता, ताद्रूप्यम्। १९ निर्विकल्पकस्य। २० असारूप्याद्व्यावृत्तिरिति। २१ न हि सारूप्यमित्यादिना पूर्वं ग्राह्यसंविदाकारयो प्रमाणफलव्यवस्था निराकृता, अधुना ता स्वीकृत्यापि दूषणान्तरमुद्भाव्यते। २२ निर्विकल्पकत्वात्। २३ निर्विकल्पकदर्शनम्। २४ इदं विषमित्यजानत। २५ विषदर्शनम्। २६ व्यामोहविच्छेदमन्तरेणापि। २७ दर्शनमात्रस्य। २८ दर्शनानन्तर यज्जातम्। २९ अधिगतत्वं हि दर्शनेन। ३० फलविषयेपि योजनीय इति प्रश्न। ३१ न पुनर्विधिविचारप्रस्तावद्योती। ३२ अर्थम्। ३३ समर्थं। ३४ केवलिशब्देन श्रुतकेवली ग्राह्योत्र, अन्यथा 'तव' शब्देनोक्तस्य भगवतोपि केवलित्वे पुनरन्येषां तथा विशेषणदानस्य पौनरुक्त्यापत्ते.। तेन श्रुतकेवलिना तवापि चेत्यर्थः कर्तव्य। ३५ यावति पदसमुदाये एकमाख्यातं वर्तते तावान्सघात इत्युच्यते। एते दशापि वाक्यशब्देनोच्यन्ते।

बहुधा न्यायवेदिनाम् ॥२॥ इति । अत्रोच्यते,–पदानां परस्परापेक्षाणां निरपेक्ष[1]: समुदायो वाक्यं, ( १ ) न पुनराख्यातशब्द[2]:, तस्य पदान्तरनिरपेक्षस्य पदत्वादन्यथाख्यातपदाभावप्रसङ्गात् । पदान्तरसापेक्षस्य[3]ापि कंचि[4]न्निरपेक्षत्वाभा[5]वे वाक्यत्वविरोधात्, प्रकृतार्थापरि[6]समाप्तेः, निराकांक्षस्य[7] तु वाक्यलक्षणयोगादुपपन्नं वाक्यत्वम् । ( २ ) सघातो[7] वाक्यमित्यत्रापि परस्परापेक्षाणां पदानामनपेक्षाणां वा ? प्रथमपक्षे निराकाङ्क्षत्वेऽस्मत्पक्षसिद्धिः, साकाङ्क्षत्वे वाक्यत्वविरोध[8]: । द्वितीयविकल्पेऽतिप्रसङ्ग[9]: । (३) जातिः सघातवर्तिनी वाक्यमित्यप्यनेन विचा[10]रितं, निराकाङ्क्षपरस्परापेक्षपदसंघातवर्तिन्याः सदृशपरिणामलक्षणाया जातेर्वाक्यत्वघटनादन्यथा [11]तद्विरोधात् । (४) एकोनवयवे[12]: शब्दो वाक्यमित्यप्ययुक्तं, तस्याप्रमाणकत्वात्, श्रोत्र[13]बुद्धौ तदप्रतिभासनात् तत्प्र[14]तिबद्धलिङ्गाभावात् । अर्थप्रतिपत्तिर्लिङ्गमिति चेन्न, अन्य[15]थापि तद्भावात्, वाक्यस्फोटस्य[16] क्रियास्फोटवत् तत्त्वार्थालङ्कारे निरस्तत्वात् । क्रमो[17] वाक्यमित्यपि न विचारक्षमं, वर्णमात्रक्रमस्य[18] वाक्यत्वप्रसङ्गात् । पदरूपतामापन्नाना वर्णविशेषाणां क्रमो वाक्यमिति चेत्, स यदि परस्परापेक्षाणा[19] निराकाङ्क्षस्तदा स[20]मुदाय एव, क्रमभुवा कालप्रत्यासत्तेरेव समुदायत्वात् सहभुवामेव देशप्रत्यासत्तेः समुदायत्व[21]व्यवस्थितेः । अथ साकाङ्क्ष[22]स्तदा न वाक्यमर्धवाक्यवत् परस्परनिरपेक्षाणां[23] तु क्रमस्य वाक्यत्वेऽतिप्रसङ्ग[24] एव । ( ६ ) बुद्धिर्वाक्यमित्यत्रापि भाववाक्यं द्रव्यवाक्यं वा ? प्रथमकल्पनायामिष्टमेव । द्वितीयकल्पनायां प्रतीतिविरोध[25]: । ( ७ ) अनुसंहृतिर्वाक्यमित्यपि नानिष्ट, भाववाक्यस्य यथोक्तपदा[26]नुसंहतिरूपस्य चेतसि परिस्फुरतोऽभीष्टत्वात् । ( ८–९–१० ) आद्यं पदमन्त्यं वाऽन्यद्वा[27] पदान्तरापेक्षं वाक्यमित्यपि नाकलङ्कोक्तवाक्ये[28] घटते, तथा परस्परापेक्षपदसमुदायस्य निराकाङ्क्षस्य वाक्यत्वसिद्धेः,तदभावे पदे[29]सिद्धेरप्यभावप्रसङ्गात्। न[30]नु यदि निराकाङ्क्षः परस्परापेक्षपदसमुदायो वाक्यं न तर्हि तदानीमिदं भवति, यथा[31] यत्सत्तत्सर्वं परिणामि, यथा घटः, संश्च शब्द इति साधनवाक्यं[32] तस्मात्परिणामीत्याकाङ्क्षणात्, सा[33]काङ्क्षस्य वाक्यत्वा[34]निष्टेरिति न शङ्क[35]नीयं, कस्यचित्प्रतिपत्तुस्त[36]दैनाकाङ्क्षत्वोपपत्तेः । निराकाङ्क्षत्वं हि नाम प्रतिपत्तुर्धर्मोऽयं वाक्येष्वध्यारोप्यते, न पुनः शब्दस्य धर्मस्तस्याचेतनत्वात् । स चेत् प्रतिपत्ता ता[37]वतार्थं प्रत्येति, [38]किमिति शेष[39]माकाङ्क्षति ? पक्षधर्मोपसंहारपर्यन्तसाधनवाक्यादर्थप्रतिपत्तावपि निगमनवचनापेक्षाया निगमनान्तपञ्चावयववाक्यादप्यर्थप्रतिपत्तौ साधनावयवान्तरवचनापेक्षाप्रसङ्गात्[40] । इति न कचिन्निराकाङ्क्षत्वसिद्धिः । तथा च वाक्याभावान्न

---

१ वाक्यान्तरगतपदनिरपेक्ष । २ आख्यातशब्दस्य । ३ वाक्यान्तरपदे । ४ सापेक्षत्वे सत्यपीत्यर्थ. । ५ परापरवाक्यान्तरगतपदापेक्षया प्रकृतापरिसमाप्ते । ६ वाक्यान्तरगतपदनिरपेक्षतया । ७ पदानाम् । ८ प्रकृतार्थापरिसमाप्ते । ९ बहुपुरुषैरुच्चरिताना पदाना वाक्यत्वापत्ते ।१० 'वारितं, विदारितम्' इति पाठान्तरे स्त । ११ तत्–वाक्यत्वम् । १२ निरश । १३ निरशशब्दस्याप्रमाणत्वं कथ, यावता श्रावणप्रत्यक्षेण तस्य प्रतीयमानत्वादित्याशङ्क्याह । १४ अनुमानं तद्ग्राहकं स्यादित्यपि नेत्याह । तच्छब्देन निरशोर्थ । १५ निरशशब्दं विनापि । १६ एकोनवयव शब्दो वाक्यस्फोट । १७ नैयायिकोक्तलक्षणमेतत् । १८ कखगघेत्यादिरूपस्य । १९–२० पदानाम् । २१ स चास्मदभ्युपगत एव । २२ पदाना क्रम । २३ पदानाम् । २४ बहुपुरुषैरुच्चारितानां मिलित्वा वाक्यत्वप्रसङ्गात् । २५ द्रव्यरूपशब्दात्मकवाक्यस्य बुद्धिरूपतया प्रतीतेरस्वीकारात् । २६ परस्परसाकाङ्क्षवाक्यान्तरपदनिराकाङ्क्षपदानामनुसरणस्य । २७ मध्यम् । २८ भाष्यकर्ताऽकलङ्कदेव । २९ वर्णाना परस्परापेक्षाणा निरपेक्ष ( पदान्तरगतवर्णे ) समुदाय पदमिति पदस्य तल्लक्षणत्वात् । ३० नैयायिक । ३१ शब्द परिणामी सत्त्वादित्यध्याहार । ३२ एतत्पर्यन्त न पूर्ण वाक्य भवतीति पूर्वेण सबन्ध । कुत इत्याह हेतुमग्रे, तस्मादिति । ३३ साकाङ्क्षत्वेपि वाक्यत्वे को दोष इत्युक्ते आह । ३४ जैनानाम् । ३५ जैना । ३६ तत्–निगमनं केचिन्नाप्याकाङ्क्षन्ति यत । ३७ साधनमात्रेण । ३८ यदि तर्हीत्यध्याहार । ३९ निगमनम् । ४० पर्वतोयमग्निमान्धूमवत्त्वादित्यादिनार्थनिश्चयेपि गिरिर्वह्निजन्मा इत्याद्यवयवान्तरापेक्षाऽनुपरमप्रसङ्गादित्यर्थ ।

वाक्यार्थप्रतिपत्तिः कस्यचित्स्यात् । ततो यस्य प्रतिपत्तुर्यावत्सु परस्परापेक्षपदेषु समुदितेषु निराकाङ्क्षत्वं तस्य तावत्सु वाक्यत्वसिद्धिरिति सर्वं सुस्थम् ।[1] प्रकरणादिना[2] वाक्यकल्पेनाप्यर्थप्रतिपत्तौ नवा प्राथमकल्पिकवाक्यलक्षणपरिहारः,[3] प्रकरणादिगम्यपदान्तरसापेक्षश्रूयमाणपदसमुदायस्य निराकाङ्क्षस्य सत्यभामादिपदवद्[4] वाक्यत्वसिद्धेः । तदेवं लक्षणेषु वाक्येषु स्यादिति शब्दोनेकान्तद्योती प्रतिपत्तव्यो, न पुनर्विधिविचारप्रश्नादिद्योती,[5] तथाविवक्षापायात् । कः पुनरनेकान्त इति चेदिमे ब्रूमहे । सदसन्नित्यानित्यादि[6]सर्वथैकान्तप्रतिक्षेपलक्षणोनेकान्तः, स च दृष्टेष्टाविरुद्ध इत्युक्तं प्राक्[7] । तत्र क्वचित्प्रयुज्यमानः स्याच्छब्दस्तद्विशेषणतया[8] प्रकृतार्थतत्त्वमवयवेन[9] सूचयति, प्रायशो निपातानां तत्स्वभावत्वा[10]देवकारादिवत् । द्योतकाश्च[11] भवन्ति निपाता इति वचनात् स्याच्छब्दस्यानेकान्तद्योतकत्वेपि न कश्चिद्दोषः,[12] सामान्योपक्रमे[13] विशेषाभिधानमिति[14] न्यायाज्जीवादिपदोपादानस्याप्यविरोधात्[15] स्याच्छब्दमात्रयोगादनेकान्तसामान्यप्रतिपत्तेरेव संभवात् । सूचकत्वपक्षे तु गम्यमर्थरूपं[16] प्रति विशेषणं स्याच्छब्दस्तस्य विशेषकं[17]त्वात् । न हि केवलज्ञानवदखिलमक्रममवगाहते किंचिद्वाक्यं, येन तदभिधेयविशेषरूपसूचकः स्यादिति[19] न प्रयुज्यते, वाचः क्रमवृत्तित्वात् तद्बुद्धेरपि[20] तथाभावात्[21] । ततस्तव भगवतः[22] केवलिनामपि स्यान्निपातोभिमत एवार्थयोगित्वादन्यथानेकान्तार्थप्रतिपत्तेरयोगात् ।

ननु च कथंचिदित्यादिशब्दादपि भवत्येवानेकान्तार्थप्रतिपत्तिः ? सत्यं भवति, तस्य[23] स्याद्वचनपर्यायत्वात् । तथा हि,—

---

१ ननु यथोक्तलक्षणमन्तरेणापि प्रकरणादिना वाक्यसदृशेनार्थप्रतिपत्तिरस्त्येव, ततस्तत्र कथमिदं वाक्यलक्षणमुपपद्यते इत्यारेकायामाह । २ आदिना लिङ्गौचित्यसामर्थ्यादिकं ग्राह्यम् । ३ भोजनसमये सैन्धवमानयेत्युक्ते यथा लवणं ज्ञात्वानीयते न त्वश्वोऽप्रकृतत्वात् । तत परस्परसापेक्षाणामित्यादि यत्प्रथमं सिद्धान्तिभिरस्माभि कल्पितं वाक्यलक्षणं, तस्य न परिहारो, यदि अपूर्णेनापि वाक्येन प्रकरणादिभिरर्थः प्रतिपद्यते इत्यर्थः । ४ सत्या इत्याद्येकदेशश्रवणेन यथार्थबोधो भवति 'सत्या' इत्याद्येकदेशोच्चारणेनापि औचित्यादिकारणवशात्सत्यभामार्थनिश्चयो यथा भवति जनाना तथान्यत्रापि वाक्यकल्पेन ( ईषद्वाक्योच्चारणेनापि ), प्रकरणादिगम्यपदान्तरस्मरणादिना सहकृतेन ( सापेक्षेण ) अर्थप्रतिपत्तिर्भवितुमर्हति, अतोर्थप्रतिपादनधर्मो यथा पूर्वलक्षिते वाक्येस्ति तथात्राप्युपलब्धे प्राथमकल्पिकमेवेदमपि वाक्यं मन्तव्यं, यत्र प्रकरणादिनार्थबोध ईषदुच्चारितपदनिमित्तको भवति, अर्थप्रतिपत्तितया सदृशत्वात् । ५ विध्यादिशब्देन विधिनिमन्त्रणादिलिङ्लकारार्थो ग्राह्य । विध्यादिष्वर्थेष्वपि लिङ्लकारस्य स्यादिति क्रियारूपं पदं सिध्यति परंतु नायं स शब्दो,निपात इति विशेष्योक्तत्वात् । निपातरूपस्य स्याच्छब्दस्यापि न केवलमनेकान्तोर्थ , संशयादिष्वपि तद्वृत्ते । अत संशयाद्यर्थव्यावृत्तये 'प्रश्नादि' इति मूलोक्त आदिपदेन संशयादिद्योती च नेति निरास कर्तव्य । ६ 'सकलैकान्त -'इति पाठान्तरम् । ७ स्वमतामृतबाह्यानामिति कारिकाव्याख्याने 'न हि किंचिद्रूपान्तरविकल'मित्यादिना ( षट्सप्ततितमपत्रस्थदशमपङ्क्तित आरभ्य ) ८ यत्र प्रयुक्तस्तस्यार्थसमुदायस्याङ्ग( अवयव )तया ( वाच्यवाचकरूपेण ) । ९ 'मनवयवेन' इति पाठान्तरम् । तत्पाठानुसारी 'साकल्येन' इत्यर्थो भवति । अवयवेन इत्यस्य त्वेकदेशेन इत्यर्थ स्यात् । १० प्रकृतार्थस्यावयवेन सूचनस्वभावत्वादिति भाव स्यात् । ११ न केवलं वाचका एव । १२ जीवादिसदादिशब्दादेरानर्थक्यलक्षण । स्याच्छब्देनैव जीवादिविवक्षितार्थवचने स्याज्जीवोस्तीत्यादिषु 'जीव , अस्ति' इत्यादिशब्दोच्चारणं व्यर्थमित्याशङ्क्योक्तमिदम् । १३ स्याच्छब्देन । १४ जीवादिपदेन । १५ अविरोध —विशेषपदोपादानसाफल्यं, स कथमित्यग्रे आह । १६ स्याज्जीव इत्युक्ते तत्प्रतिपक्षी अजीवोपि गमनीय । १७ भेदकम् । १८ गम्यार्थरूपस्याजीवस्य सकाशादुपरतबुद्धिजनकत्वात् । १९ निपात । २० तस्या—वाच । २१ क्रमवृत्तित्वभावात् । २२ अतिशयज्ञानयुक्तौ द्वावेव स्त भगवान्( केवली ) श्रुतपारगत. श्रुतकेवली च । तत्रापि द्वयोरपि वचनप्रवृत्तौ स्याच्छब्दोपेक्ष्यः वचनानुसारिबुद्धे क्रमवृत्तित्वादेव सर्वत्र । २३ स्याच्छब्दस्य ।

स्याद्वादः[1] सर्वथैकान्तत्यागात्[2] किंवृत्तचिद्विधिः[3] ।
सप्तभङ्गनयापेक्षो हेयादेयविशेषकः ॥ १०४ ॥

किमो वृत्तः किंवृत्तः । स चासौ चिद्विधिश्चेति कथंचिदित्यादिः किंवृत्तचिद्विधिः स्याद्वादपर्यायः । सोयमनेकान्तमभिप्रेत्य[4] सप्तभङ्गनयापेक्षः[5] स्वभावपरभावाभ्यां सदसदादिव्यवस्थां प्रतिपादयति ।

के पुनः सप्तभङ्गाः के वा नयाः ? सप्तभङ्गी प्रोक्ता पूर्वमेव । द्रव्यार्थिकपर्यायार्थिकप्रविभागवशान्नैगमादयः शब्दार्थनया[6] बहुविकल्पा मूलनयद्वयं[7] शुद्ध्यशुद्धिभ्यां[8], शास्त्रान्तरे[9] प्रोक्ता इति सबन्धः । द्रव्यार्थिकप्रविभागाद्धि नैगमसंग्रहव्यवहाराः पर्यायार्थिकप्रविभागादृजुसूत्रादयः[10] । तत्र[11] ऋजुसूत्रपर्यन्ताश्चत्वारोर्थनयाः, तेषामर्थप्रधानत्वात्[12] । शेषास्त्रयः शब्दनयाः शब्दप्रधानत्वात् । तत्र मूलनयस्य द्रव्यार्थिकस्य शुद्ध्या[13] संग्रहः, सकलोपाधिरहितत्वेन शुद्धस्य सन्मात्रस्य विषयीकरणात् सम्यगेकत्वेन सर्वस्य संग्रहणात्[14] । तस्यैवाशुद्ध्या[15] व्यवहारः, संग्रहगृहीतानामर्थानां विधिपूर्वकत्वव्यवहरणात्[16], द्रव्यत्वादि[17] विशेषणतया स्वतोऽशुद्धस्य स्वीकरणात्, यत्सत्तद्द्रव्यं गुणो वेत्यादिवत् । एवं नैगमोप्यशुद्ध्या प्रवर्तते, सोपाधिर्वस्तु[18] विषयत्वात् । स हि त्रेधा प्रवर्तते, द्रव्ययोः पर्याययोर्द्रव्यपर्याययोर्वा गुणप्रधानभावेन विवक्षाया नैगमत्वात्, नैकं गमो नैगम इति निर्वचनात्[19] । तत्र द्रव्यनैगमो द्वेधा—शुद्धद्रव्यनैगमोऽशुद्धद्रव्यनैगमश्चेति । पर्यायनैगमस्त्रेधा—अर्थपर्याययोर्व्यञ्जनपर्याययोरर्थव्यञ्जनपर्याययोश्च नैगम इति । अर्थपर्यायनैगमस्त्रेधा ज्ञानार्थपर्याययोर्ज्ञेयार्थपर्याययोर्ज्ञानज्ञेयार्थपर्याययोश्चेति । व्यञ्जनपर्यायनैगमः षोढा—शब्दव्यञ्जनपर्याययोः समभिरूढव्यञ्जनपर्याययोरेवंभूतव्यञ्जनपर्याययोः शब्दसमभिरूढव्यञ्जनपर्याययोः शब्दैवंभूतव्यञ्जनपर्याययोः समभिरूढैवंभूतव्यञ्जनपर्याययोश्चेति । अर्थव्यञ्जनपर्यायनैगमस्त्रेधा ऋजुसूत्रशब्दयोः, ऋजुसूत्रसमभिरूढयोः ऋजुसूत्रैवंभूतयोश्चेति । द्रव्यपर्यायनैगमोष्टधा—शुद्धद्रव्यर्जुसूत्रयोः शुद्धद्रव्यशब्दयोः शुद्धद्रव्यसमभिरूढयोः शुद्धद्रव्यैवभूतयोश्च, एवमशुद्धद्रव्यर्जुसूत्रयोरशुद्धद्रव्यशब्दयोरशुद्धद्रव्यसमभिरूढयोरशुद्धद्रव्यैवंभूतयोश्चेति । लोकसमयाविरोधेनोदाहार्यम् ।

तथा पर्यायार्थिकस्य मूलनयस्याशुद्ध्या[20] तावदृजुसूत्रः, तस्य कालकारकलिङ्गभेदेनाप्यभेदात् । शुद्ध्या[21]

---

१ स्यादिति वाद -शब्द । २ एतदर्थं स्वयमग्रे स्पष्टयन्ति । ३ किंशब्दाद्वृत्तो निष्पन्न । स एव चिद्विधि -चित् चन इत्यादिर्विधि प्रकार इति किंवृत्तचिद्विधि । किंचित् कथंचित् कथंचन इत्यादिरूप । ४ विषयीकृत्य । ५ सप्त भङ्गा- नयाश्च अपेक्ष्येत्यर्थ । ६ शब्दनयास्तत्र केचित् केचिच्चार्थनया । ७ तौ द्वौ मूलनयौ, द्रव्यपर्यायार्थिकौ । ८ द्रव्यार्थिकापेक्षया शुद्धि -अभेद इत्यर्थ, अशुद्धि —भेद । पर्यायार्थिकनयेन तु शुद्धि —भेद, अशुद्धि —अभेद इत्यर्थो ग्राह्य । ९ नयचक्रनाम्नि । १० आदिना शब्दसमभिरूढैवंभूता ग्राह्या । ११ सप्तसु मध्ये । १२ अर्थविषयकत्वात् । १३ अभेदेन । १४ इति शब्दव्युत्पत्ति । १५ जीवोऽजीवो वेत्यादिभेदेन । १६ भेदकल्पनात् । १७ आदिना गुणत्वादिग्रह । सत्त्वे सिद्धेपि द्रव्यं गुणो वा ? तत्रापि जीवोऽजीवो वा ? तत्रापि ससारी मुक्तो वा, घट कपालो वा ? इत्यादिकल्पनाभेदेनाशुद्धत्वकारणेनोपाधिना सह स्वीकारोत्र । १८ सत्त्वादिनोपाधिना ( भेदेन विशेषेण वा ) सह । १९ व्युत्पत्ते । सामान्यलक्षणं हि नैगमस्येत्थम्,—अवर्तमानार्थस्य अन्यत्र सकल्पमात्रेण ग्राही नैगम इति । यथा ओदनं कर्तुं प्रयतमानस्य 'ओदनं करोमि' इति सकल्प । न तदौदनपर्यायो निष्पन्न । तथापि तत्सामग्र्यामसावोदनसकल्पं करोति, तथा सकल्पाभावे करोमीति वर्तमानकालिकप्रयोगानुपपत्ते । प्रयुक्ते च तथा, ततस्तेन सकल्पितयौदनव्यवहार कृत इत्यनुमीयते । उत्तरभेदानामुदाहरणानि नयचक्रतो बोद्धव्यानि । २० पर्यायार्थिकस्य शुद्धविषय पर्याय एव, स च पर्यायो भेदरूपोस्ति । अतो भेदविषयस्तु शुद्ध्यात्र सग्राह्य । यावतांशेनाभेदो विषयीभवति तावानशोऽशुद्धिजनकोऽशुद्धिमूलको वा ज्ञातव्य । अत पर्यायार्थिकनयभेदा अशुद्ध्या ( अभेदेन ) भवन्तीति स्थितम् । २१ भेदेन ।

शब्दस्तस्य[1] कालादिभेदेन भेदात् । शुद्धितरया समभिरूढस्तस्य पर्याय[2]भेदेनापि भेदात् । शुद्धितमयैवं-भूतस्तस्य क्रियाभेदेनापि भेदात् । इति मूलनयद्वयशुद्ध्यशुद्धिभ्यां बहुविकल्पा नया नयचक्रतः प्रतिपत्तव्याः पूर्वपूर्वा महाविषया उत्तरोत्तरा अल्पविषयाः शब्दविकल्पपरिमाणाश्च[3] । तदेवं व्याख्यातः सप्तभङ्गनयापेक्षः स्याद्वादो हेयादेयविशेषकः[4] प्रसिद्धस्तमन्तरेण हेयस्योपादेयस्य च विशेषेण व्यवस्थानुपपत्तेः । सर्वतत्त्वप्रकाशकश्च[5] केवलज्ञानवत् । एतदेव दर्शयति, —

स्याद्वादकेवलज्ञाने सर्वतत्त्वप्रकाशने ।
भेदः साक्षादसाक्षाच्च[6] ह्यवस्त्वन्यतमं[7] भवेत् ॥ १०५ ॥

साक्षादसाक्षात् प्रतिभासिज्ञानाभ्यामन्यस्याप्रतीतेरवस्तुत्वप्रसिद्धेः[8], इत्यर्थः । **स्याद्वादकेवलज्ञाने इति निर्देशात् तयोरभ्यर्हितत्वानियमं[9] दर्शयति, परस्परहेतुकत्वात्** । नचैवमन्योन्याश्रयः पूर्वसर्वज्ञद्योतितादागमादुत्तरसर्वज्ञस्य[10] केवलोत्पत्तेः ततोप्युत्तरकालमागमद्योतनात्[11] सर्वज्ञागमसन्तानस्यानादित्वात् । **केवलज्ञानस्याभ्यर्हितत्वे वा पूर्वनिपाते व्यभिचारं सूचयति,** शिष्योपाध्यायादिवत् । ततोनवद्यो निर्देशः स्याद्वादकेवलज्ञाने सर्वतत्त्वप्रकाशने इति । **कथं पुनः स्याद्वादः सर्वतत्त्वप्रकाशनः ? यावता 'मतिश्रुतयोर्निबन्धो द्रव्येष्वसर्वपर्यायेषु'** इति श्रुतस्यासर्वपर्यायविषयत्वव्यवस्थानमिष्यते, तच्चैवं[12] विरुध्यते, इति सूत्रविरोधं मन्यते[13] तदयुक्तं, पर्यायापेक्षया तदनभिधानात्[14] । एवं हि भगवताम[15]भिप्रायोत्र **'जीवादयः सप्त पदार्थास्तत्त्वं,** 'जीवाजीवास्रवबन्धसंवरनिर्जरामोक्षास्तत्त्वमि'ति वचनात् । तत्[16]प्रतिपादनाविशेषात् स्याद्वादकेवलज्ञानयोः सर्वतत्त्वप्रकाशनत्वम्' इति, न विरोधः । यथैव ह्यागमः परस्मै जीवादितत्त्वमशेषं प्रतिपादयति तथा केवल्यपीति[17] न विशेषः, साक्षादसाक्षाच्च[18] तत्त्वपरिच्छित्तिनिबन्धनत्वात् तद्भेदस्य । **तदाह भेदः साक्षादसाक्षाच्चेति । साक्षात्कृतेरेव[19] सर्वद्रव्यपर्यायान् परिच्छिनत्ति[20] नान्यतः[21] इति यावत् ।** न हि वचनैस्तान्[22]प्रकाशयति, समुत्पन्नकेवलोपि भगवान्, तेषां[23] वचनागोचरत्वात्[24] । तदेवं स्याद्वादनयसंस्कृतं तत्त्वज्ञानं प्रमाणनयसंस्कृतमिति व्याख्याने[25], स्याद्वादः प्रमाणं सप्तभङ्गीवचनविधिर्नैगमादयो बहुविकल्पा नया इति संक्षेपतः प्रतिपादितं, विस्तरतोन्यत्र[26] तत्प्ररूपणात् ।

---

१ शब्दस्य । २ पर्यायवाचकशब्दाना परस्पर भेदेन वस्तुन्यपि भेददर्शनात् । ३ यावन्त शब्दास्तावन्तो नया भिद्यन्ते, अभिप्रायविशेपस्यैव नयरूपत्वात् प्रतिशब्दमभिप्रायभेदात् । परोपदेशापेक्षया खलु शब्दपरिमाणा नया , स्वज्ञानविकल्पापेक्षया त्वनन्ता नयभेदा. सभवन्ति अभिप्रायस्य विषयानुसारेणानन्तधात्वात् । अत एव स्वज्ञानापेक्षाया विकल्प (ज्ञानविकल्प )परिमाणा· शब्दापेक्षाया शब्दपरिमाणाश्चेति 'शब्दविकल्पपरिमाणा' इत्यस्यार्थं कर्तव्य । ४ भेदकः । ५ स्याद्वादोयम् । ६ प्रत्यक्षपरोक्षतया । ७ अनयोरेकतरेण ज्ञानेन यत्प्रतीयमानं वस्तु तदन्यतरशब्दवाच्यं स्यात्, यच्चानयोरेकतरेणापि न प्रतीतं तत् 'अन्यतम ( तृतीय )' शब्दवाच्यं स्यात्, तच्चावस्त्वेव स्यादित्यर्थ । अथवानयोरेकतरं ज्ञानमपि 'अन्यतर'शब्दवाच्यं तदितर तृतीयं त्वन्यतमवाच्यं स्यात् । तथा ज्ञानं नास्त्येव, अवस्तुत्वादित्यप्यर्थ । ८ कारिकाया हेतु । ९ तयो केवलश्रुतज्ञानयोर्मध्येऽन्यतर( यथा केवलम् ) मभ्यर्हितं स्यादिति नियमितविचार पुंसो विघटयतीत्यर्थ । कुत । परस्परमुभयोरपि हेतुरूपत्वात्कस्यचिदभ्यर्हितत्वाघटनात् । १० तेन पुनर्जातेन केवलिना । ११ एवंरीत्या । १२ भवद्वचनेन । १३ कश्चिज्जैन । १४ तत्–सर्वतत्त्वप्रकाशने इति वचनम् । द्रव्यापेक्षयागम सर्वतत्त्वप्रकाशकः–सर्वद्रव्यमात्रप्रकाशको, न तु पर्यायसर्वस्वप्रकाशक इत्यर्थ । अयमेव भावोग्रे व्यज्यते । १५ समन्तभद्रस्वामिनाम् । १६ तस्य जीवादिसप्ततत्त्वस्य । १७ 'केवलमपीति' पाठान्तरमेतत् । १८ तयोर्भेद परस्पर प्रत्यक्षत्वपरोक्षत्वकृत एव केवलम् । १९ साक्षात्करणादेव । २० केवली । २१ आगमान्न । २२ केवलेन ज्ञातान्समस्तान् । २३ केवलेन ज्ञाताना मध्ये सूक्ष्मादीनामित्यर्थं । २४ तदुक्तं गोमटसारे–"पण्णवणिज्जा भावा अणंतभागो दु अणभिलप्पाणं । पण्णवणिज्जाणं पुण अणंतभागो सुदणिवद्धो'। छाया–प्रज्ञापनीया ( भावा ) अनन्तभागस्तु अनभिलप्याना ( किंतु केवलेन ज्ञाताना सर्वेषाम्) । प्रज्ञापनीयाना पुन अनन्तभागस्तु श्रुतनिवद्ध । २५ क्रियमाणे । २६ स्वकृते श्लोकवार्तिकालङ्कारे विद्यानन्दमहोदधौ च, परकृते राजवार्तिकालङ्कारादौ च ।

संप्रत्यहेतुवा[1]दागमः स्याद्वादो, हेतुवादो नयस्ताभ्यां संस्कृतमलंकृतं तत्त्वज्ञानं प्रमाणं युक्तिशास्त्राविरुद्धं सुनिश्चितासंभवद्बाधकमिति व्याख्यानान्तरमभिप्रायन्तो भगवन्तो हि हेतुलक्षणमेव प्रकाशयन्ति, स्याद्वादस्य प्रकाशितत्वात् ।

स[2]धर्मणैव सा[3]ध्यस्य साधर्म्यादविरोधतः ।
स्याद्वादप्रवि[4]भक्तार्थविशेषव्यञ्जको नयः ॥ १०६ ॥

नीयते सा[5]ध्यते गम्यार्थोनेनेति नयो–हेतुः । स च हेतुः सधर्मणैव दृष्टान्त[6]धर्मिणा साधर्म्यात्साध्यस्य साध्यधर्माधिकरणस्य धर्मिणः परमागमप्रविभक्तस्यार्थविशेषस्य शं[7]क्यस्याभिप्रेतस्याप्रसिद्धस्य विवादगोचरत्वेन, व्यञ्जको, न पुनर्वि[8]पक्षेण साधर्म्यात्, तेन वैधर्म्यादेवाविरोधेन[9] हेतोः साध्यप्रकाशनत्वोपपत्तेः । अत्र 'सपक्षेणैव साध्यस्य साधर्म्यादि'त्यनेन[10] हेतोस्त्रैलक्षण्य'मविरोधादि'[11]त्यन्यथानुपपत्तिं च दर्शयता[12], केवलस्य त्रिलक्षणस्यासाधनत्वमुक्तं, तत्पुत्रत्वादिवत् । ए[13]कलक्षणस्य तु गमकत्वं, 'नित्यत्वैकान्तपक्षेपि विक्रिया नोपपद्यते' इ[14]ति ब[15]हुलमन्यथानुपपत्तेरेव समाश्रयणात् । नन्वत्र[16] संक्षेपात् त[17]थाभिधानेपि त्रै[18]लक्षण्यं शक्यमुपदर्शयितुं पञ्चावय[19]ववत् । स[20]त्यमेतत्, केव[21]लं, यत्रार्थक्रिया न संभवति तन्न वस्तुतत्त्वं, यथा विनाशैकान्तः । तथा च नित्यत्वेपि क्रमयौगपद्याभ्यामर्थक्रिया न संभवति, नापरं प्रकारा[22]न्तरमिति[23], त्रिलक्षणयोगेपि प्रधानमेकलक्षणं, तत्रै[24]व साधनसामर्थ्यपरिनिष्ठितेः । तदे[25]व च प्रति[26]बन्धः पूर्ववद्वीतसंयो[27]ग्यादिसकलहेतुप्रतिष्ठापकं, न पुनस्तादात्म्यतदुत्पत्ती प्रतिबन्धः संयोगादिवत्, तदभावेपि हेतोः साध्याभावासंभवनियमनिर्णयलक्षणस्य भावे गमकत्वसिद्धेः, शीतां[28]चले विद्युत्पातः, के[29]दारे कलकलायितत्वादित्यादिवत्, सत्यपि च तदुत्पत्त्यादिप्रतिबन्धेऽन्यथानुपपन्नत्वाभावे गमकत्वासंभवात्, स श्यामस्तत्पुत्रत्वादितरतत्पुत्रवदित्यादिवत्, अस्त्यत्र धूमोग्निर्महानसवदित्यादिवच्च । सकलविपक्षव्यावृत्तिनिश्चयाभावादस्या[30]गमकत्वेऽन्यथानुपपन्नत्वनिश्चयाभावादेवागमकत्वमुक्तं स्यात् । इति त[31]स्यैव लक्षणत्वमस्तु[32], सकलसम्यग्घेतुभेदेषु कार्यस्वभावानुपलम्भेष्विव पूर्ववत्–शेषवत्–सामान्यतो दृष्टे[33]षु वीतावीततदु[34]भयेषु संयोगिसमवाय्येकार्थसमवायिविरोधिषु भूतादिषु प्रवर्तमानस्य पक्षव्यापिनः सर्वस्माच्च विपक्षादसिद्धादिहेत्वाभासप्रपञ्चाद् व्यावर्तमानस्यान्यथानुपपन्नत्वस्य हेतुलक्षणत्वोपपत्तेः । तथाविधस्यापि तदलक्षणत्वे हि न किंचित्कस्यचिल्लक्षणं स्यादिति लक्ष्यलक्षणभाव एवोच्छिद्येत । सति चान्यथानुपपन्नत्वे प्रतिपाद्याशयवशात् प्रयोगपरिपा[35]टी पञ्चावयवादिरपि न निवार्यते इति तत्त्वार्थो-

---

१ आज्ञावाद । २ दृष्टान्तेन सह । नतु विपक्षेण सहेत्येवकारार्थ । ३ विषयीकृतस्य । ४ स्याद्वादेन गृहीतार्थस्य ( प्रतिज्ञातस्य ) विशेषतासूचको हेतुर्नय । ५ गम्यते साध्यार्थ इति कपाठ । ६ दृष्टान्तश्चासौ धर्मी च महानसादि । ७ शक्यमभिप्रेतमप्रसिद्धं साध्यमिति साध्यलक्षणत्वात् । ८ विपक्षेण सह न व्यञ्जक इत्यर्थ । ९ स्वसाध्येन सहाविनाभाविना । १० श्लोकांशेन । ११ 'इति' शब्देन इति अविरोधादित्यनेन तु इत्यर्थो ग्राह्य । तेन विशेषणद्वये एव सद्धेतुत्वं स्यादित्यर्थ । १२ स्वामिसमन्तभद्रेण । १३ अन्यथानुपपन्नत्वैकलक्षणस्य । १४ इत्यत्र । १५ अनेकत्र । १६ नोपपद्यते इति कारिकाव्याख्याने एव । १७ अन्यथानुपपत्तिप्रकारेण । १८ बौद्धाभिमतम् । १९ नैयायिकाभिमत पञ्चावयवलमनुमानाङ्गम् । २० दर्श्यते इत्यर्थ । २१ नित्य वस्तु न भवेदर्थक्रियाभावात् क्षणिकैकान्तवत् । २२ अर्थक्रियाया क्रमयौगपद्य विहाय । २३ एवंप्रकारेण । २४ अन्यथानुपपत्तिरूपैकलक्षणे । २५ अन्यथानुपपन्नत्वम् । २६ अविनाभाव । २७ आदिशब्दस्य प्रत्येकं परिसमाप्त्या एवं सबन्ध कर्तव्यो, यत् पूर्ववदादि–वीतादि–सयोग्यादीनि अनुक्रमेण व्याकरिष्यन्ति ग्रन्थकारा । २८ हिमाचले । २९ तीर्थे । ३० तत्पुत्रत्वादेस्त्रिविधस्य हेतो । ३१ अन्यथानुपपन्नत्वस्य । ३२ बौद्धमतेपि । न त्रैलक्षण्यम् । ३३ अनुमानस्यैते त्रयो भेदा सन्ति । ३४ सांख्यमते केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिणा त्रिप्रकाराणा हेतूना क्रमेणैता सज्ञा । ३५ अनुमानसमर्थनक्रम शिष्याशयवशान्न तु वादापेक्षया ।

लङ्कारे विद्यानन्दमहोदये च प्रपञ्चतः प्ररूपितम् । ततः स्याद्वादेत्यादिनानुमितमनेकान्तात्मकमर्थ-तत्त्वमादर्शयति । तदेव हि स्याद्वादप्रविभक्तोर्थः, प्राधान्यात्—सर्वाङ्गव्यापित्वात् । तस्य विशेषो नित्यत्वादिः पृथक् पृथक् । तस्य प्रतिपादको नयः । इति नयसामान्यलक्षणमप्यनेन दर्शितमिति व्याख्यायते । तथा चोक्तम्,—'अर्थस्यानेकरूपस्य धीः प्रमाणं, तदंशधीः । नयो धर्मान्तरापेक्षी दुर्णयस्तन्निराकृतिः' इति । तदनेकान्तप्रतिपत्तिः प्रमाणमेकधर्मप्रतिपत्तिर्नयस्तत्प्रत्यनीकप्रतिक्षेपो दुर्णयः, केवलविपक्षविरोधदर्शनेन स्वपक्षाभिनिवेशात् । किं पुनर्वस्तु स्यादित्याहुः—

नयोपनयैकान्तानां त्रिकालानां समुच्चयः ।
अविभ्राड्भावसंवन्धो द्रव्यमेकमनेकधा ॥ १०७ ॥

उक्तलक्षणो द्रव्यपर्यायस्थानः संग्रहादिर्नयः, तच्छाखाप्रशाखात्मोपनयः । तदेकान्तानां विपक्षोपेक्षालक्षणानां त्रिकालविषयाणां समितिर्द्रव्यं वस्तु, 'गुणपर्ययवद्द्रव्यम्' इति वचनात् । कः पुनस्तेषां समुच्चयो नामेति चेत्, कथंचिदविभ्राड्भावसंबन्ध इत्याचक्षते, ततोन्यस्य समुच्चयस्य संयोगादेरसंभवात् द्रव्यपर्यायविशेषाणाम् । न चैवमेकमेव द्रव्यं नयोपनयैकान्तपर्यायाणां तत्तादात्म्यादित्यारेकितव्यं, ततस्तेषां कथंचिद्भेदादनेकत्वमिति वचनात् । तर्ह्यनेकमेवास्तु तादात्म्यविरोधादनेकस्यस्येत्यपि न शङ्कितव्यं, कथंचित्तादात्म्यस्याशक्यविवेचनत्वलक्षणस्याविरोधाचथाप्रतीतेः । केवलं ततस्तेषामपोद्धाराद्गुणगुण्यादिवत् तदनेकधा । ततः सूक्तं, त्रिकालवर्तिनयोपनयविषयपर्यायविशेषसमूहो द्रव्यमेकानेकात्मकं जात्यन्तरं वस्त्विति । अत्र परारेकामुपदर्श्य परिहरन्तः सूरयः प्राहुः,—

मिथ्यासमूहो मिथ्या चेन्न मिथ्यैकान्ततास्ति नः ।
निरपेक्षा नया मिथ्या सापेक्षा वस्तु तेर्थकृत् ॥ १०८ ॥

सुनयदुर्णययोर्यथास्माभिर्लक्षणं व्याख्यातं तथा न चोद्यं नःपरिहारः, निरपेक्षाणामेव नयानां मिथ्यात्वात् तद्विषयसमूहस्य मिथ्यात्वोपगमात्, सापेक्षाणां तु सुनयत्वात्तद्विषयाणामर्थक्रियाकारित्वात्, तत्समूहस्य वस्तुत्वोपपत्तेः । तथा हि, निरपेक्षत्वं प्रत्यनीकधर्मस्य निराकृतिः, सापेक्षत्वमुपेक्षा, अन्यथा प्रमाणनयाऽविशेषप्रसङ्गात्, धर्मान्तरादानोपेक्षाहानिलक्षणत्वात् प्रमाणनयदुर्णयानां प्रकारान्त-

---

१ तदंशग्राहिका बुद्धिर्नय । २ धर्मान्तरं निराकुर्वाणा । ३ अन्यच्च सामान्यविशेषवस्तुग्रहणात्प्रमाणं, नयस्त्वेकान्तग्रहणात्, दुर्णयस्त्वितरांशविलोपादिति च । ४ यथास्तित्वस्य विपक्षो नास्तित्वं, तस्य । ५ त्रिकालवर्तिनां समुच्चय एकस्मिन्नवस्थानम् । ६ अविभ्राद् अपृथग्, भावसंवन्ध सत्तासंवन्धो यस्य स तथाभूत. । तद्द्रव्यमभेदापेक्षया एकं, भेदापेक्षयानेकम् । ७ स्याद्वादप्रविभक्तार्थ इत्यादिना । ८ द्रव्यपर्यायविषय । ९ विवक्षितादितरधर्मस्योपेक्षां कृत्वा एकान्तता साधयेन्नतु इतरधर्मत्यागं कृत्वेत्यर्थ । १० अपृथक्स्वभावसंवन्ध । ११ अतो द्रव्यदृष्ट्या ( सामान्यदृष्ट्या ) यदेवैकं तदेव पर्यायापेक्षया ( विशेषापेक्षया ) अनेकमिति सिध्यति । १२ एकत्रैव भेदाभेदतया । १३ भेदकल्पनात । १४ ( पूर्वोक्तस्यैव सारोयम् ) । १५ हे नैयायिक । १६ तव मते सापेक्षा' सन्तो वस्तुभूता प्रयोजनसाधकाश्च भवन्ति । १७ चेत्तर्हीत्यध्याहार । १८ प्रत्यनीकधर्मस्य विचारसमयेऽपेक्षाऽभावादुपेक्षा, तेन निराकरणं प्रत्यनीकस्यापि धर्मस्य न जायते, तदेव सापेक्षत्वम् । १९ यदि सापेक्षत्वं प्रत्यनीकधर्मोपेक्षारूपं न स्यात् किंतु प्रत्यनीकसहितत्वेन प्रत्यनीकरहितत्वेन वा ग्रहणरूपं भवेत् तर्हि प्रमाणनययो सकलविकलांशत्वेन मन्यमानो भेदो न सिध्येद्, द्वयोरविशेषात् । २० प्रमाणस्यासाधारणस्वभावो धर्मान्तरादानरूपो, नयस्य धर्मान्तरोपेक्षारूपो दुर्णयस्य तु धर्मान्तरपरित्यागरूप क्रमेणेत्यर्थ. ।

रासंभवाच्च, प्रमाणात्[1] तदतत्स्वभाव[2]प्रतिपत्तेर्नयात्तत्प्रतिपत्तेर्दुर्णयादन्यनिराकृतेश्च । इति विश्वोपसंहृ[3]तिः, व्यतिरिक्तप्रतिपत्तिप्रकाराणामसंभवात् ।

नन्वेवमनेकान्तात्मार्थः कथं वाक्येन नियम्यते यतः प्रतिनियते विषये प्रवृत्तिर्लोकस्य स्यादित्यारेकायामिदमभिदधते,—

नियम्यतेऽर्थो वाक्येन[4] विधिना वारणेन वा ।
तथान्यथा च सोऽवश्यम्[5]अविशेष्यत्वमन्यथा[6] ॥ १०९ ॥

यत्सत्तत्सर्वमनेकान्तात्मकमर्थक्रियाकारित्वात् स्वविषयाकारसंवित्तिवत्[7] । यद्विवादाध्यासितं वस्तु तत्सर्वं धर्मि प्रत्येयम्, अप्रसिद्धं साध्यमिति वचनात्, तस्यानेकान्तात्मकत्वेन विवादाध्यासितत्वात् साध्यत्वोपपत्तेः । अर्थक्रियाकारित्वादिति हेतुर्[8]असिद्धत्वादिदोषानाश्रयत्वात् प्रधानैक[9]लक्षणयोगाच्च । स्ववि[10]षयाकारसंवित्तिवदित्युदाहरणं, तथा[11] वादिप्रतिवादिसिद्धत्वात् ।—सौगतस्य चित्राकारैकसंवेदनोपगमात्, यौगानामीश्वरज्ञानस्य स्वार्थसंवेदिनो मेचकज्ञानत्वोपगमात्, कापिलानामपि स्वरूप[12]बुद्ध्यध्यवसितार्थसंवेदिनः स्वसंवेदनस्येष्टेः, श्रोत्रियाणाम[13]पि फलज्ञानस्य स्वसंवेदिनोर्थपरिच्छित्तिरूपस्य प्रसिद्धेः, चार्वाकस्यापि प्रत्यक्षस्य वेदनस्य स्वार्थपरिच्छेदिनोभ्युपगमनीयत्वात्[14] सम्यगिदं साधन[15]वाक्यम् । तथा[16] न किंचिदेकान्तं वस्तुतत्त्वं सर्वथा तदर्थक्रियाऽसंभवाद् गगनकुसुमादिवदिति । अत्रापि विवादापन्न वस्तुतत्त्वं धर्मि पराध्यारोपितैकान्तत्वेन प्रतिषेध्यं,[17] क्वचित् सत इत्या[18]रोपितस्यापि प्रतिषेध्यत्वसिद्धेरन्यथा कस्यचित्परमतप्रतिषेधायोगात्, सत[19] एव संज्ञिनः प्रतिषेधो नासतः इत्यस्याप्यविरोधात्, सम्यगेकान्ते[20] प्रसिद्धस्य रूपस्य सापेक्षस्य निरपेक्षत्वेनारोपितस्य क्वचित्प्रतिषेधात्, 'सर्वथा तदर्थक्रियाभावात्' इति हेतु[21]र्व्यापकानुपलब्धिरूपत्वात् । गगनकुसुमादिवदित्युदाहरणं[22] साध्यसाधनावैकल्याद्गगनकुसुमादेरत्यन्ताभावस्य परैरेकान्तवस्तुरूपत्वसर्वथार्थक्रियाकारित्वयोरनिष्टेः । इतीदमपि श्रेयः[23] साधनवाक्यम् । विशेषेण पुनर्नास्ति सदेकान्तः, सर्व[24]व्यापारविरोधप्रसङ्गादसदेकान्तवत् । एतेन[25] विशेषतोनेकान्तात्मकः[26] परिणामि[27]आत्मार्थक्रियाकारित्वात् प्रधानवदित्याद्युपदर्शितम् । इति विधिना प्रतिषेधेन वा वस्तुतत्त्वं नियम्येत तथा[28]न्यथा च तस्यावश्यंभावसमर्थनात् । अन्यथा[29] तद्विशिष्टमर्थतत्त्वं विशेष्यमेव न स्याद्विधेः

१ उपर्युक्त एव भावोऽर्थान्तरेणोच्यते । २ तदतच्छब्देन विवक्षितेतरधर्मग्रहणम् । ३ विश्वेषां प्रमाणनयदुर्णयानाम् । ४ साधनवाक्येन । ५ स अर्थस्तथान्यथा चावश्यं ( विधिप्रतिषेधसाधकवाक्येन यथाक्रमं सिद्धः ) वर्तते इति भावः । ६ एकान्ततया विचारे कृते, अर्थस्य सत्त्वासत्त्वयोर्विशेषो न स्यात् । ७ यथा तद्विषयाकारग्राहिका संवित्तिः प्रमाणनयभेदेनानेकधा तथा तद्विषयोपीत्यर्थः । ८ 'हेतो'—इति मूलपाठो न समीचीनो भाति, प्रतिज्ञावाक्यत्वेन प्रथमान्तत्वोपपत्तेः । ९ प्रधानं लक्षणमन्यथानुपपत्तिः । १० स्वं च विषयश्च तदाकारग्राहिका या संवित्तिस्तद्वदित्यर्थो, ज्ञानस्योभयविषयत्वात् । ११ तथा—अनेकधर्मात्मकत्वेन । 'तस्य' इति पाठान्तरम् । १२ स्वरूपं च बुद्ध्यध्यवसितार्थश्च तयोः संवेदिनः । १३ मीमांसकानाम् । १४ एवं सर्वेषामपि मते ज्ञानस्यानेकविषयकत्वेनानेकाकारत्वं सूचितम् । १५ उक्तमनुमानवाक्यम् । १६ विधिवाक्यमनेकान्तसाधनाय यथोक्तं तथा निषेधवाक्येनैकान्ते दूषणमप्युद्भाव्यते पुरस्तात् । १७ साध्यम् । १८ 'सदित्यारो'—इति स्वपाठः । १९ ननु चारोपितस्यापि प्रतिषेध्यत्वे 'द्रव्यान्तरभावेन निषेधः संज्ञिनः सतः' इत्यादि विरुध्येतेत्याशङ्कायामाह । २० अस्मदभिमते सुनयविषये । २१—२२ सम्यक् । २३ एकान्ततानिवारणपरं साधनम् । २४ सर्वेषां कारकाणां यो व्यापारो जन्यजनकादिलक्षणः । २५ इत उत्तरार्धव्याख्या । २६ इदं सर्वैकान्तवादिनः प्रति । २७ इदं साध्यापेक्षया । २८ विधिप्रकारेण । अन्यथा—निषेधप्रकारेण । २९ यदि विधिनिषेधप्रकारेण तस्यावश्यभावो न स्यात् । ३० तेन केवलविधिना केवलनिषेधेन च ।

प्रतिषेधरहितस्य प्रतिषेधस्य च विधिरहितस्य विशेषणत्वनिराकरणात्, तदुभयरहितस्य च विशेष्यत्वविरोधात् खपुष्पवत् । इत्यनेन विधिप्रतिषेधयोर्गुणप्रधानभावेन सदसदादिवाक्येषु वृत्तिरिति लक्षयंति । ततो न तेषां[2] पौनरुक्त्यं, येन सप्तभङ्गीविधिरनवद्यो न स्यात् ।

विधिनैव वस्तुतत्त्वं वाक्यं[3] नियमयति सर्वथेत्येकान्ते दूषणमुपदर्शयन्ति,—

तदतद्वस्तुवाग्[4]एषा तदेवेत्यनु[5]शासती ।
न सत्या स्यान्मृषावाक्यैः कथं तत्त्वार्थदेशना ॥ ११० ॥

प्रत्यक्षादिप्रमाणविषयभूतं विरुद्धधर्माध्यासलक्षणमविरुद्धं[6] वस्तु समायातं, स्वशिरस्ताडं पूत्कुर्वतोपि तदतद्रूपतयैव प्रतीतेः[7] । तदुक्तं,—'विरुद्धमपि संसिद्धं तदतद्रूपवेदनम् । यदीदं स्वयमर्थेभ्यो रोचते तत्र के वयम् ॥ १ ॥' इति । तच्च तदेवेत्येकान्तेन प्रतिपादयन्ती मिथ्यैव भारती, विध्येकान्ते प्रतिषेधै[9]कान्ताभावस्येष्टस्यानभिधानात्, तदभि[10]धाने वा विध्येकान्तप्रतिपादनविरोधात् । न च मृषावाक्यैस्तत्त्वार्थदेशना युक्तिमती । इति कथमनयार्थदेशनम् । इत्येकान्ते वाक्यार्थानुपपत्तिरालक्ष्यते ।

प्रतिषेधमुखेनैवार्थं वाक्यं नियमयतीत्येकान्तोपि न श्रेयानिति प्रतिपादयन्ति,—

वाक्स्व[11]भावोन्यवागर्थ[12]प्रतिषेधनिरङ्कुशः ।
आह च स्वार्थ[13]सामान्यं तादृग् वाच्यं खपुष्पवत् ॥ १११ ॥

वाचः[14] स्वभावोयं येन स्वार्थसामान्यं प्रतिपादयन्ती तद[15]परं निराकरोति, न पुनस्तदप्रतिपादयन्ती, स्वार्थसामान्यप्रतिपादनतदन्यनिराकरणयोरन्यतरापाये[16]ऽनुक्तानतिशायनात् । इदंतया नेदंतया वा न प्रतीयेत तद[17]र्थः कूर्मरोमादिवत् । न खलु सामान्यं विशेषपरिहारेण विशेषो वा सामान्यपरिहारेण क्वचि[18]दुपलभामहे । अनुपलभमानाश्च कथं स्वं परं वा तथा[19]भिनिवेशेन विप्रलभामहे, विध्येकान्तवदन्यापोहैकान्तस्य प्रागेव व्यासेन निरस्तत्वात् । भूयोप्यन्यापोहवादिनमाशङ्क्य निराकुर्वते,—

सामान्यवाग् विशेषे चेन्न शब्दार्थो मृषा हि सा ।
अभिप्रेतविशेषाप्तेः स्यात्कारः सत्यलाञ्छनः ॥ ११२ ॥

अस्तीति सत्सामान्यवाग्[20] केवलमभावविच्छेदाद् विशेषमपोहमाहेति चेत्, -कः पुनरपोहः ?

---

१ समन्तभद्रस्वामी । २ नयभङ्गाना द्वितीयादीनाम् । ३ कर्तृ । ४ तदतद्वस्तुषु वर्तते या वाक् सा । ५ स्वरूपेणेव पररूपेणापि सदेवेत्यनुवदन्ती वाक् सत्या न, परस्परविरुद्धधर्मद्वयस्यैकेन शब्देन प्रतिपादनासभवात् । अत एव तानि मृषावाक्यानि । ६ विरुद्धधर्माध्यासलक्षणमपि कुतोऽविरुद्धमित्युक्ते प्रत्यक्षादिप्रमाणविपयभूतमिति विशेषणं साधनतया द्रष्टव्यम् । ७ प्रत्यक्षादिना तथैवानुभूयमानत्वात् । ८ विरुद्धधर्माध्यासलक्षणम् । ९ विधिसाधने प्रतिपेधैकान्तस्य निषेध कर्तव्य , परंतु विध्येकान्तवादी विधिवचनेन प्रतिषेधं न निरोद्धुं शक्नोति, केवलविधिवाक्येन प्रतिपेधपक्षाप्रतिषेधादित्यर्थ । १० प्रतिषेधाभिधाने । ११ इमं घटमानयेति वाक्स्वभाव । १२ पटवागर्थस्य प्रतिपेधे निरङ्कुश । १३ परार्थसामान्यनिरपेक्षम् । १४ षष्ठी । १५ विवक्षितादितर सर्वम् । १६ वचनोच्चारणवैयर्थ्यात् प्रयोजनाभावात् । १७ वागर्थं । १८ वहिरन्तर्वा । १९ सामान्यमेव विशेपरहितं, विशेषो वा सामान्यशून्यो वस्तुस्वरूपमित्येवमाग्रहेण । २० क्रमार्पितद्वयाद्वैतमिति कारिकाचतुर्थपदव्याख्याने ।

किमन्यव्यावृत्तिरुत तथा[1] विकल्पः ? परतो व्यावृत्तिरभावोन्यापोह इष्यते इति चेत्, कथमेवं सत्यभावं प्रतिपादयति[2] ? भावं न प्रतिपादयतीत्यनुक्तसमं न स्यात् ? तद्विकल्पोन्यापोहोस्तु मिथ्याभिनिवेशादिति चेत्, न चैतत्[3]तस्य प्रतिपादकं मिथ्याविकल्पहेतुत्वाद्व्यलीकवचनवत् । ततो नान्यापोहः शब्दार्थः सिध्यति, येन तत्र प्रवर्तमानास्तीत्यादिसामान्यवाग् मृषैव न स्यात् । ततः स्यात्कारः सत्यलाञ्छनो मन्तव्यः स्वा[4]भिप्रेतार्थविशेषप्राप्तेः । सर्वो हि प्रवर्तमानः[5] कुतश्चिद्वचनात् क्वचित्स्वरूपादिना सन्तमभिप्रेतमर्थं प्राप्नोति, न पररूपादिनान[6]भिप्रेतं, प्रवृत्तिवैयर्थ्यात्, स्वरूपेणेव पररूपेणापि सत्त्वे सर्वस्या[7]भिप्रेतत्वप्रसङ्गात्, परात्मनेव स्वात्मनाप्यसत्त्वे सर्वस्याभिप्रेतत्वाभावात् स्वयमभिप्रेतस्याप्यनभिप्रेतत्वप्रसक्तेश्च । ततः स्याद्वाद एव सत्यलाञ्छनो न वादान्तरमित्यतिशाययति भगवान् समन्तभद्रस्वामी ।

विधेय[8]मीप्सितार्थाङ्गं[9] प्रतिषेध्या[10]विरोधि यत् ।
तथैवा[11]देयहेयत्वमिति[12] स्याद्वादसंस्थितिः ॥ ११३ ॥

अस्तीत्यादि विधेयमभिप्रेत्य[13] विधानात्, [14]सर्वत्रैतावन्मात्रलक्षणत्वात् विधेयत्वस्य । [15]न हि परिवृढभयादेरनभिप्रेतस्यापि विधाने विधेयत्वं युक्तं, वीतरागस्यापि तत्कृतबन्धप्रसङ्गाज्जनापवादानुषङ्गाच्च । नाप्यभिप्रेतस्याप्यविधानेऽविधेयत्वं, तद्योग्यतामात्रसिद्धेरन्यथा विधानानर्थक्यात् । तत एवाभिप्रायशून्यानां किंचिदप्यकुर्वतां न किंचिद्विधेयं नापि हेयमभिप्रेत्यहानाभावादुपेक्षामात्रसिद्धेः । तद्विपरीताना तु किंचिद्विधेयं, तच्च नास्तित्वादिभिरविरुद्धं, [16]प्रतिषेध्यैरीप्सितार्थाङ्गत्वात्, तस्य तद्विरोधे स्वयमीप्सितार्थहेतुत्वासंभवात्, विधिप्रतिषेधयोरन्योन्याविनाभावलक्षणत्वात् स्वार्थज्ञानवत् । न हि स्वार्थज्ञानयोरन्योन्याविनाभावोऽसिद्धः, स्वज्ञानमन्तरेणार्थज्ञानानुपपत्तेः कुटवत्[17] स्वज्ञाने एवार्थज्ञानघटनात् सर्वज्ञ[18]ज्ञानवत् । नहीश्वरस्यापि स्वज्ञानाभावः, सर्वज्ञत्वविरोधात् स्वसंविदितज्ञानाभ्युपगमस्यावश्यंभावात् । नापि विषयाकारज्ञानमन्तरेण स्वज्ञानं, स्वा[19]कारस्यार्थस्य परिच्छेद्यत्वविरोधात् स्वज्ञानाभावप्रसङ्गात् । तदनवद्यमुदाहरणं प्रकृतं साधयति । यथैव च विधेयं प्रतिषेध्याविरोधि सिद्धमीप्सितार्थाङ्गं तथैवादेयहेयत्वं वस्तुनो, नान्यथा, विधेयैकान्ते कस्यचिद्धेयत्वविरोधात् प्रतिषेध्यैकान्ते कस्यचिदादेयत्वविरोधात् । न हि सर्वथा विधेयमेव सर्वथा प्रतिषेध्यं स्याद्वादिनोभिप्रेतं, येनोभयात्मकत्वे एवादेयहेयत्व न स्यात्, कथंचिद्विधिप्रतिषेधयोस्तादात्म्योपगमात् । त[20]द्विधेयप्रतिषेध्यात्मविशेषात्[21] स्याद्वादः प्रक्रियते सप्तभङ्गीसमाश्रयात् । यथैव हि विधेयोस्तित्वादिविशेषः, स्वात्मना विधेयो न प्रतिषेध्यात्मनेति स्याद्विधेयः सिद्धः । प्रतिषेध्यात्मविशेषश्च विधेयात्मना प्रतिषेध्यो न प्रतिषेध्यात्मना इति स्यात्प्रतिषेध्यः स्यादप्रतिषेध्योन्यथा

---

१ अन्यापोहत्वेन । २ अस्तीति सत्सामान्यवाक् । ३ अस्तीति वागन्यापोहविकल्पस्योत्पादिका, न तु प्रतिपादिकेत्यर्थं । ४ सर्वप्राण्यपेक्षया । ५ जन । ६ प्रतिपत्तु स्वरूपादिना सन्नेवाभिप्रेतो भवति, न तु पररूपादिनाऽसन् । अनभिप्रेतं न प्रवर्तको जन प्राप्नोति । ७ वस्तुन । ८ अस्तीत्यादिशब्दवाच्यम् । ९ ईप्सितार्थक्रियाकारणम् । १० नास्तित्वाविनाभावि । ११ प्रतिषेध्याविरोधित्वप्रकारेण । १२ एवम् । १३ मनसिकृत्य । १४ अभिप्रेत्य विधानेपि विधेयत्व तस्य कुत इत्याह । १५ एतदेव व्यतिरेकमुखेन भावयन्ति । १६ सह । १७ कुटस्य यथा स्वज्ञानाभावादर्थज्ञानानुपपत्ति । १८ यौगापेक्षया । १९ अन्ययेति शेप । २० तत्-तस्मात् । कस्मात् ? तथैवादेयहेयत्व यस्मात् । २१ तद्विशेषमाश्रित्य ।

व्याघातात् । तथैव जीवाद्यर्थः स्याद्विधेयः स्यात्प्रतिषेध्यः । इति सप्तभङ्गीसमाश्रयात् स्याद्वादस्य प्रक्रियमाणस्य सम्यक् स्थितिः, सर्वत्र युक्तिशास्त्राविरोधात्, भावैकान्तादिष्वेव तद्विरोधसमर्थनात् । ततो भगवन्ननवद्यमध्यवसितमस्माभिः, स त्वमेवासि निर्दोषो युक्तिशास्त्राविरोधिवाक्त्वादिति । तदेवं प्रारब्धनिर्वहणमात्मनस्तत्फलं च सूरयः प्रकाशयन्ति,—

इतीयमाप्तमीमांसा विहिता हितमिच्छताम्[1] ।
सम्यग्मिथ्योपदेशार्थविशेषप्रतिपत्तये ॥ ११४ ॥

इति देवागमाख्ये स्वोक्तपरिच्छेदे शास्त्रे ( स्वेनोक्ताः परिच्छेदा दश यस्मिंस्तत् स्वोक्तपरिच्छेदमिति ग्राह्यं, तत्र ) विहितेयमाप्तमीमांसा सर्वज्ञविशेषपरीक्षा हितमिच्छतां निःश्रेयसकामिनां, मुख्यतो निःश्रेयसस्यैव हितत्वात् तत्कारणत्वेन रत्नत्रयस्य च हितत्वघटनात्, तदिच्छतामेव न पुनस्तदनिच्छतामभव्यानां, तदनुपयोगात् । तत्त्वेतरपरीक्षां प्रति भव्यानामेव नियताधिकृतिः[2], तेथा मोक्षकारणानुष्ठानात् मोक्षप्राप्त्युपपत्तेः । सम्यग्मिथ्योपदेशार्थविशेषप्रतिपत्तये युक्तात्ममीमांसा भगवतामाचार्याणां परहितसंपादनप्रवणहृदयत्वात्, दर्शनविशुद्धिप्रवचनवात्सल्यमार्गप्रभावनापरत्वाच्च । ततः परमार्हन्त्यलक्ष्मीपरिसमाप्तेः स्वार्थसंपत्तिसिद्धिः । सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग इति सम्यगुपदेशः, तदन्यतमापाये मोक्षस्यानुपपत्तेः समर्थनात् । 'ज्ञानेन चापवर्गः' इत्यादिमिथ्योपदेशस्तस्य दृष्टेष्टविरुद्धत्वसाधनात् । तयोरर्थविशेषः सत्येतरविषयभेदः सम्यग्दर्शनादिमिथ्यादर्शनादिप्रयोजनभेदो वा तद्भावनाविशेषो वा मोक्षबन्धप्रसिद्धिभेदो वा । तस्य प्रतिपत्तिरुपादेयत्वेन हेयत्वेन च श्रद्धानमध्यवसायः समाचरणं चोच्यते । तस्यै सम्यग्मिथ्योपदेशार्थविशेषप्रतिपत्तये । शास्त्रारम्भेभिष्टुतस्याप्तस्य मोक्षमार्गप्रणेतृतया कर्मभूभृद्भेत्तृतया विश्वतत्त्वानां ज्ञातृतया च भगवदर्हत्सर्वज्ञस्यैवान्ययोगव्यवच्छेदेन व्यवस्थापनपरा परीक्षेयं विहिता । इति स्वाभिप्रेतार्थनिवेदनमाचार्याणामार्यैर्विचार्य प्रतिपत्तव्यम् ।

अत्र शास्त्रपरिसमाप्तौ [3]केचिदिदं मङ्गलवचनमनुमन्यन्ते,—

जयति जगति क्लेशावेशप्रपञ्चहिमांशुमान्,
विहतविषमैकान्तध्वान्तप्रमाणनयांशुमान् ।
यतिपतिरजो यस्याधृष्यान्मताम्बुनिधेर्लवान्,
स्वमतमतयस्तीर्थ्या नाना परे[4] समुपासते ॥ १ ॥

श्रीमदकलङ्कदेवाः पुनरिदं वदन्ति,—

श्रीवर्धमानमकलङ्कमनिन्द्यवन्द्य—
पादारविन्दयुगलं प्रणिपत्य मूर्ध्ना ।
भव्यैकलोकनयनं परिपालयन्तं,
स्याद्वादवर्त्म परिणौमि समन्तभद्रम् ॥ १ ॥

---

१ मिच्छता इति पाठं मत्वा स्वामिनो भगवतो विशिंषन्ति केचन किंतु व्याख्ययाग्रेतन्या विरुद्धं तदिति चिन्त्यम् । २ भव्यत्वे सति । तेषामित्यपि क्वचित्पाठ । ३ वसुनन्दिशाचार्या केचिच्छब्देन ग्राह्या, यतस्तैरेव स्वस्य वृत्त्यन्ते लिखितोयं श्लोकः । शास्त्रपरिसमाप्तौ मङ्गलवचनमिति वाक्येन वसुनन्द्याचार्यवचनेन चायमपि श्लोक श्रीसमन्तभद्रभगवत्कृत एवेति ध्वन्यते । ततश्च भगवत्कृता कारिका पञ्चदशाधिकशतप्रमा इति सिध्यति । किंतु 'केचिन्मन्यन्ते' इति शब्देनौदासीन्याद्वयं तु नेति च ध्वन्यते । तथा च विद्यानन्दमतेन चतुर्दशाधिकशतमेव ग्रन्थप्रमाणं स्यादिति च वक्तुं शक्यते । ४ परैः ।

इति परापरगुरुप्रवाहगुणगणसंस्तवस्य मङ्गलस्य प्रसिद्धेर्वयं तु स्वभक्तिवशादेवं निवेदयामः,—

येनाशेषकुनीतिवृत्तिसरितः प्रेक्षावतां शोषिताः,
यद्वाचोप्यकलङ्कनीतिरुचिरास्तत्त्वार्थसार्थद्युतः ।
स श्रीस्वामिसमन्तभद्रयतिभृद् भूयाद्विभुर्भानुमान्,
विद्यानन्दघनप्रदोऽनघधियां स्याद्वादमार्गाग्रणीः ॥
इत्याप्तमीमांसालंकृतौ दशमः परिच्छेदः ।



श्रीमदकलङ्कशशधरकुलविद्यानन्दसंभवा भूयात् ।
गुरुमीमांसालंकृतिरष्टसहस्री सतामृद्ध्यै ॥
वीरसेनाख्यमोक्षगे चारुगुणानर्घ्यरत्नसिन्धुगिरिसततम् ।
सारतरात्मध्यानगे मारमदाम्भोदपवनगिरिगह्वरायितु ॥
कष्टसहस्रीसिद्धा साष्टसहस्रीयमत्र मे पुष्यात्
शश्वदभीष्टसहस्रीं कुमारसेनोक्तिवर्धमानार्था( नर्द्धा ) ॥
इति ग्रन्थः समाप्तः ।



१ तत्त्वार्थसमूहद्योतिका । २ अस्मिन् परिच्छेदे बन्धमोक्षकारणयो प्रमाणनययोश्च विचारोस्ति । तत्र साङ्ख्ययौगबौद्धादीना या बन्धमोक्षकारणकल्पना ता सदोषीकृत्य स्वमतानुमता सा साधिता । प्रमाणाना चान्यवादिकल्पितानां मध्ये दोषप्रदर्श्य स्वाभिमतप्रमाणविशेषभेदा साधिता । तत्र स्मरणप्रत्यभिज्ञानतर्कप्रमाणानि पृथक् साधितानि । बौद्ध प्रति सविकल्पप्रत्यक्षस्य समर्थनम् । केवलज्ञानस्य युगपत्सर्वावभासनसामर्थ्यं साधितम् । शेषाणा तु क्रमवर्तित्व समर्थितम् । सर्वप्रमाणाना प्रत्यक्षपरोक्षयोर्द्वयोर्भेदयोर्मध्येन्तर्भावोपि साधित । स्याद्वादस्य नयस्य वस्तुरूपस्य च लक्षणपुरस्सरं वर्णन वर्तते । ३ विषमच्छन्द इदं प्रतिचरण भिन्नलक्षणसभवात् । कर्णाटभाषायुक्तमिद वचनम् । तत एव 'वीरसेनाख्यमोक्षगे' इत्यस्य वीरसेनाख्यो मोक्षप्राप्तिकर्ता इत्यर्थो भवति । 'सारतरात्मध्यानगे' इत्यस्य तु सारतरात्मध्यानकर्ता इत्यर्थ । 'गिरिगह्वरायितु' इत्यस्य गिरिगुहावदस्तीति च ।